ii son of Brahmā (Nārada) द्रुहिणोऽजश्चतुर्मुखः … तत्पुत्रोऽथ नारदः NāmMā. 73 (comm. अजपुत्रः)

**अजपुर** (aja-pura) *n.*~*m.* name of a Naya (territorial subdivision of a Viṣaya) श्रीनगरमुक्तौ राजगृहविषयान्तःपाति अजपुरनयप्रतिव(ब)द्धस्वसम्ब-(म्ब)द्धाविच्छिन्नतलोपेत । नन्दिवनाक । मणिवाटक EI. xvii. 321. 26.

**अजपुरीष** (aja-purīṣa) *n.* faeces of a goat बर्बूरनिम्बकिसलाजपुरीषधूमैः। कासेक्षुराश्मवनितास्तनजेन घृष्टम् । … अक्ष्णि रुजं निहन्ति RasRaSa. 30. 53.

**अजपूर्व** (aja-pūrva) *adj.* beginning with Aries विंशतिरष्टिः सार्धा पादोनाः सप्त चाजपूर्वाणाम् PañcSi. 3. 48 (3. 10)

**अजपूर्वक** (ajapūrva-ka) *adj.* beginning with Aries रव्यादिकानामज-पूर्वकाणां बिन्दूपगस्थानफलं वदामि JātaPā. 10. 52.

**अजपृष्ठ** (aja-pṛṣṭha) *adj.* having the back like that of a goat औपम्ये … अजपृष्ठः KāśiVṛ. *on* vi. 2. 114.

**अजपेक्ष** (aj-apekṣa) *adj.* having reference to a vowel, with regard to a vowel नैतद्गुणापेक्षम् । किं तर्हि । अजपेक्षम् MahāBh. i. 208. 5 (*on* i. 2. 31); नास्त्यैचोरजपेक्षं पूर्वत्वमिति न भवति स्थानिवद्भावः Nyās. i. 105. 21 (*on* i. 1. 57); i. 137. 18 (*on* i. 1. 73); अजपेक्षमेव चान्तत्वं द्रष्टव्यम् ManuBh. i. 139. 26 (*on* 2. 125); तदेवमजपेक्षस्य पूर्वत्वस्याश्रयणात् कर्मसाधन एव विधिशब्दः PadMañ. *on* KāśiVṛ. *on* P. i. 1. 57.

**अजपेक्षा** (aj-apekṣā) *f.* reference or relation to a vowel अजपेक्षया पूर्वत्वस्येहाश्रयणात् Pradī. i. 476A. 30 (*on* i. 1. 57); Prasā. i. 791. 8.

**अजपोपसंहार** (ajapopasaṁhāra) *m.* conclusion of the Ajapā *mantra* (repeated inhalation and exhalation) यदा हंसो नादे लीनो भवति तदा तुर्या-तीतमुन्मननमजपोपसंहारमित्यभिधीयते HaṁsU. 2. 0 (*l.* 13)

**अजप्तव्य** (a-japtavya) *adj.* not to be muttered अतो मामुद्धरास्मा-त्त्वम् … । अजप्तव्यमथोपव्यं(?) तद्ददानुग्रहाद्विभो PadmP. ii. 38. 9.

**अजप्त्वा** (a-japtvā) *ger.* without muttering (the *mantra*) अस्नात्वा चाप्यहुत्वा चाप्यदत्त्वा (v. l. चाजप्त्वाऽदत्त्वा) ये तु भुञ्जते । … नरकं ते व्रजन्त्यधः DakṣaSm. 2. 62; भुङ्क्ते अजप्त्वा पूयशोणितम् BṛParāSm. 2. 224; नैव भुञ्जीत अजप्त्वा ParāSm. 12. 44.

**अजप्रजाधिपकुल** (ajaprajādhipa-kula) *n.* family of king Aja कृच्छ्रे-णेदमजप्रजाधिपकुलं शान्ताकुटुम्बी मुनिर्वीतापत्यमवर्धयत् JānaPa. 7. 28.

**अजप्रतिम** (aja-pratima) *adj.* similar to the Unborn (i. e. Viṣṇu) इन्द्रसूनुराशाततया । सायकसंतत्याजप्रतिमं द्रोणं विदार्य संतत्याज YudhiVi. 6. 47 (comm. विष्णुतुल्यम्)

**अजप्रवेश** (aja-praveśa) *m.* entrance in the sign of Aries राकाकुहू-शशिपभास्वदजप्रवेशे लग्नेश्वराः शुभखगैर्युतवीक्षिताश्चेत् । तद्वत्सरे जगति सौख्यमलं प्रकुर्युः TājiNī. iii(2). 43 (433)

**अजप्रिया** (aja-priyā) *f.* name of the plant *Zizyphus jujuba* (*lit.* pleasing to a goat) शम्यां सक्तुफला लक्ष्मीः शिवा तुङ्गाग्निपादपः । अजप्रिया भस्म-काष्ठा NighS'e. 1961; अजप्रिया कुहा कोली विषमोभयकण्टका BhāvPra.(Bhā.) 6(7). 72.

**अजप्लुत** (aja-pluta) *n.* name of one of the 108 *karaṇas* (postures of the body in dance) गृहावलीनकं लीनं विष्णुक्रान्तमजप्लुतम् । … अष्टोत्तरशतं नैव करणानां प्रकीर्तितम् ViṣṇuDhaP. iii. 20. 51.

**अजबकुमारी** (ajaba-kumārī) *f.* name of an empress पट्टमहिषीमहा-राज्ञीं[ज्ञी] अजबकुमारिदेवीसहितरक्षितत्रिवर्गं EI. xii. 246. 15.

**अजबन्धन** (aja-bandhana) *n.* tying (of) a goat गोनिकेतने । … गोनाशमाप्नोति तत्राजबन्धनाद् ध्रुवम् KṛṣiPa. 91.

**अजबन्धु** (aja-bandhu) *m.* fool [silly like a goat, APTE]

**अजबभ्रु** (ája-babhru) *adj.* brown like a goat सिलाची नाम कानी-नोऽजबभ्रु पिता तव AV. v. 5. 8.

**अजबस्त** (aja-basta) *m.* name of a pupil of Hiraṇyanābha हिरण्य-नाभस्य कृतशिष्यः … सोऽकरोच्च चतुर्विंशत्संहिता द्विपदां वरः । … गौतमश्चाजबस्तश्च …इति क्रान्तास्तु सामगाः VāyuP. i. 61. 45.

**अजबस्ति** (aja-basti) *m.* name of a person शुभ्रादिभ्यः । शुभ्र इत्येव-मादिभ्योऽपत्ये ढग् भवति । … शुभ्र … अजबस्ति CāndraVyā. ii. 4. 53; गृष्ट्यादिभ्यः । गृष्टि इत्येवमादिभ्योऽपत्ये ढञ् भवति । गृष्टि … अजबस्ति CāndraVyā. ii. 4. 77; यस्कादिभ्यः । … बहुषु विहितस्य लुग् भवति । … यस्क … अजबस्ति CāndraVyā. ii. 4. 110; KāśiVṛ. *on* ii. 4. 63; (v. l. अजवस्ति) KāśiVṛ. *on* iv. 1. 123; iv. 1. 136; GaṇRa. 1. 26 (55); 3. 219 (262); 3. 226 (268); Prasā. i. 714. 10; i. 719. 17; i. 727. 10.

**अजबाध** (aja-bādha) *m.* setting aside or sublation of a goat ननु नियतप्रयोगबलेन गोगतधानादिवाचकतया गोद्रव्येणाजबाधावश्यंभावात्कथं पूर्वः पक्षः MayūMāli. 675. 18 (*on* x. 2. 29)

**अजबिन्दु** (aja-bindu) *m.* name of a king of the Suvīras अजबिन्दुः सुवीराणाम् … शमश्च नन्दिवेगानामित्येते कुलपांसनाः MahāBhā. v. 72. 14; विननाश … लोभादैलश्चातुर्वर्ण्यमत्याहारयमाणः सौवीरश्चाजबिन्दुः ArthS'ā. i. 38. 2 (1. 6)

**अजबिल** (aja-bila) *n.* name of a *liṅga* अजेन निर्मितं दिव्यं साक्षादज-बिलं शुभम् LiṅgaP. i. 92. 153.

**अजभ** (aja-bha) *n.* 1 the asterism of Prajāpati (Rohiṇī) उत्सवभूषण-मङ्गलमजभे कार्यं सपौष्टिकं कर्म VasiS. 14. 5; 2 the sign Aries देहो मेषश्चाप-सिंहाजभानां जीवश्चापी JātaPā. 17. 26.

**अजभक्ष** (aja-bhakṣa) *m.* name of a plant [PW]

**अजभक्षा** (aja-bhakṣā) *f.* name of the plant *Acacia arabica* अन्या क्षुद्रदुरालम्भा मरुस्था मरुसंभवा । विशारदाजभक्षा स्यात् RājNi. 10. 25; विशारदा तृष्ट्रभक्षाजभक्षा मरुसंभवा KalpaK. 301. 471.

**अजभद्र** (aja-bhadra) *m.* name of the plant *Acacia arabica* कफान्त-कोऽजभद्रः स्यात् KalpaK. 284. 315.

**अजभाग** (aja-bhāga) *m.* area (at the centre in the diagramme) assigned to Aja (i. e. Brahman) स्थापयेद् ग्रामरक्षार्थं सर्वकामाभिवृद्धये । अनुक्तानां तु सर्वेषामजभागादिषु न्यसेत् S'ilpaR. i. 12. 3; MayaMa. 9. 127.

**अजभान्तम्** (ajabhāntam) *adv.* upto the zodiac sign Aries कन्यका-वदनतस्त्वजभान्तम् … स्याद्दिनं च यमदिग्ध्रुवगानाम् SiddhāTaVi. 166. 15.

**अजभू** (aja-bhū) *m.* name of one of the nine sons of Ugrasena नवोग्र-सेनस्य सुताः कंसस्तेषां तु पूर्वजः । … अजभू राष्ट्रपालश्च MatsyaP. 44. 75.

**अजभूपति** (aja-bhūpati) *m.* king Aja (son of Raghu) श्लेस आर्कि-रजभूपतिरावभ्लास इत्यनुदिशं त्वयि वादाः DvyāśraKā. 8. 47.

**अजभृङ्गिका** (aja-bhṛṅgikā) *f.* name of a root found in the Himā-layas (with a milky juice and used as one of the eight medicaments in Hindu medicine) सातला क्षीरकाकोली विभाण्डी चाजभृङ्गिका RājNi. 432. 1.

**अजभोजन** (aja-bhojana) *n.* act of eating (the flesh of) a goat पानं सुराया अजभोजनं वा (स्वप्ने प्रशस्तम्) HārīS. ii. 2. 12.

**अजमध्य** (aja-madhya) *n.* flesh from the central part of a goat पुरीषक्षये … °अजमध्ययवशाकधान्याम्लानाम् (उपयोगः स्यात्) CaraS. iv. 6. 11 (1941 Ed.) (comm अजमध्यं छागान्तराधिः)

**अजमल** (aja-mala) *m.* wheet गोधूमो यवनो (v. l. °ऽजमलो)ऽपुष्पो निस्तुषः सुमनो वृषः ParyāMu. 18. 22.

**अजमहामुख** (aja-mahāmukha) *adj.* having a large goat's face गृध्रोलूकमुखैश्चैव मेषोष्ट्राजमहामुखैः । … भूतैः … अशून्यमभवन्नित्यम् VāyuP. i. 40. 21.

**अजमानिन्** (ajamān-in) *adj.* thinking oneself to be the Unborn अविक्लवस्ते परिकर्मणि स्थितो मा मे समुन्नद्धमदोऽजमानिनः BhāgP. ii. 9. 29.

**अजमायु** (ajá-māyu) *adj.* making sound like that of a goat, shouting like a goat गोमायुरेको अजमायुरेकः ṚV. vii. 103. 6; गोमायुरदादजमायुर-दात् … नो वसूनि ṚV. vii. 103. 10.

**अजमार** (aja-māra) *m.* 1 name of a tribe or a prince [*kurvādi-gaṇa*] GaṇPā. 58. 4; CāndraVṛ. *on* ii. 4. 84; आजमारक्यः । अजमार इत्यन्यः GaṇRa. 3. 210 (254); अजमारक (v. l. अजमार) Prasā. i. 723. 22 (fn. l. 3); 2 name of a son of the companion of king Yaśomati नर्म-सचिवकुमारोऽजमारः (अवदत्) YaśasCam. ii. 260. 25; 3 perhaps proper name of a man [pw]; 4 name of a country (modern Ajmer) [APTE]; 5 a butcher [APTE]

**अजमारक** (ajamāra-ka) *m.* name of a tribe or a prince अजमारक KāśiVṛ. *on* iv. 1. 151; शालीनकर्त्रे जनितान्तवृक्षाजमारकश्यावरथाश्च वेनः GaṇRa. iii. 210 (253); (कुर्वादिभ्यः) एभ्योऽपत्ये ण्यः स्यात् … अजमारक Prasā. i. 723. 22.

**अजमारादि** (ajamārādi) *adj.* (riddle) relating to *aja* (S'iva) and *māra* (Cupid) etc. अजमारादि गूढकम् । विदग्धो दुर्विदग्धानां कुरुते दर्पशान्तये VidaMuMa. 4. 9.

**अजमारादिक** (ajamārādi-ka) *adj.* beginning with *aja* or *māra* अजमारादिकं गूढं पदपदार्थगूढकम् । … इत्युद्देशकम् VidaMuMa. 1. 16.

**अजमारी** (aja-mārī) *f.* the plant *Carpopogon pruriens*, cawach अज-मारी कोटराक्षी … । एकैकमौषधीबीजं मारयेद्रसभैरवम् Rasā. 5. 12.

**अजमित्र** (aja-mitra) *m.* name of a Brahmin अजमित्र (नडादिः) JaineVyā. 165. 27 (*on* iii. 1. 88)

**अजमिश्र** (aja-miśra) *m.* name of a poet कविप्रव(?व)र्हाग्र्यकुटुम्ब(म्ब)-पल्लीकुल्याजमिश्राङ्गभवाङ्गदस्य । पुत्रीम् … पत्नीं स लेभे कलिपञ्चनाम्नीम् EI. xiii. 291. 15.

**अजमीढ** (ajamīḍha) *m.* **1i** name of a Ṛṣi (descendant of Suhotra, seer of ṚV. iv. 43; 44) क उ श्रवत्सप्त पुरुमीळ्हाजमीळ्हौ सौहोत्रौ त्वाश्विनं हि। तं वाम् Sarvānu. 4.43; ऐक्ष्वाकी जनयामास सुहोत्रात्…। अजमीढं सुमीढं च पुरुमीढं च भारत MahāBhā. i. 89.26; i. 89.27; v. 22.6; अजमीढोऽस्त्वहार्यश्च …। एते मन्त्रकृतः सर्वे MatsyaP. 145.103; 196.47; आहार्योऽथाजमीट(? ढ)श्च VāyuP. i. 59.99; आर्ष्टिशेनो(? णोऽ)जमीट(? ढ)श्च …। क्षात्रोपेताः स्मृता ह्येते तपसा ऋषितां गताः VāyuP. ii. 29.112; BrahmāṇḍP. ii. 66.87; i. 32.109; भरतः …ख्यातोऽश्वमेधकृत्। ततो भरत[ा]द्भूमन्युः ततस्सुहोत्रः। [त]तो हस्तिः। ततो विरोचनः। तस्मा[द]जमीढः EI. iv. 231.13; हस्तिनश्चैव दायादास्त्रयः परमकीर्तयः। अजमीढो द्विमीढश्च पुरुमीढस्तथैव च MatsyaP. 49.43; VāyuP. ii. 37.162; ViṣṇuP. iv. 19.29; iv. 19.56; सुहोत्रस्यापि दायादो हस्ती नाम बभूव ह। …हस्तिनश्चापि दायादास्त्रयः …। अजमीढो द्विमीढश्च HariVaṁ. 284*(5); 23.95; 366*(18); KalkiP. iii. 4.14; सुहोत्रस्य बृहत्पुत्रो बृहतस्तनयास्त्रयः। अजमीढो द्विमीढश्च पुरुमीढश्च वीर्यवान् HariVaṁ. i. 23.73 = AgniP. 277.15; BrahmP. 13.81; अजमीढः कार्त्तवीर्यो भद्रसेनः पुरूरवाः। …प्रापुः पूर्वमहीपालाश्चिरजीवितम् S'aktiSaṁ. i. 16.6; **1ii** one belonging to the Ajamīḍha gotra अथाजमीढाः कण्वाः। तेषां त्र्यार्षेयः। आङ्गिरसाजमीढकाण्वेति ĀpaS'S. xxiv. 8.2–3; अङ्गिराश्चाजमीढश्च कट्व(? ण्व)श्चैव महातपाः। परस्परमवैवाह्याः ऋषयः परिकीर्तिताः MatsyaP. 196.47; अथाजमीढकण्वाः। तेषां त्र्यार्षेयः प्रवरः आङ्गिरसाजमीढकाण्वेति VīraMi. (Saṁskāra.) 636.12; **2** a name of Yudhiṣṭhira (*prob.* ājamīḍha) ततोऽब्रवीद्वासुदेवः … कुन्तीसुतं धर्मभृतां वरिष्ठम्।… निपीड्य पादौ युधिष्ठिरस्याजमीढस्य राज्ञः MahāBhā. i. 183.4; धर्मपुत्रोऽजमीढः TrikāS'e. ii. 8.14; AbhidhāCin. 707; ParaNā. 2312; KośaKaTa. 1.5812; KalpaK. 93.38; **3** name of a king (son of Vikuṇṭhana and Sudevā) विकुण्ठनः … उपयेमे सुदेवां नाम तस्यामस्य जज्ञे अजमीढः MahāBhā. i. 90.38; i. 90.39; **4i** name of a king (son of Sudāsa) अथ चैद्यवराद् विद्वान् सुदासस्तस्य चात्मजः। अजमीढः पुनर्जातः MatsyaP. 50.15; **4ii** name of a king (son of Bharata and Nandā) सोमवंशं शृणुष्वाथ … दुष्यन्तस्य शकुन्तलायां भरतः। भरतस्य नन्दायामजमीढः NaraP. 23.9 (60.5); 28.13 (74.14); **4iii** name of a king (son of Rantideva) भरतस्यान्वये चैवाजमीढो नाम पार्थिवः। बभूव MahāBhā. xiii. 4.2; दुष्यन्तनामाभूद्भरतस्य पिता द्विज। तत्पुत्रो रन्तिदेवोऽभूदजमीढस्ततोऽभवत् BṛDharmaP. i. 59.37; **5** name of a king of solar dynasty नृगस्य यज्ञस्त्वजमीढस्य चासीत् MahāBhā. i. 50.5; i. 70.1; [pl.] name of a people 'जनपदतदवध्योः' इत्येव।…अवृद्धाज्जनपदावधेः। अजमीढाः KāśiVṛ. *on* P. iv. 2.125.

**अजमीढपक्ष** (ajamīḍha-pakṣa) *m.* party of Ajamīḍha (i. e. Yudhiṣṭhira) यथार्हमानार्थकरा हि पार्थास्तेषां द्वेष्टा नास्त्याजमीढस्य पक्षे (v. l. अजमीढपक्षे) MahāBhā. v. 22.6.

**अजमीढमुख्य** (ajamīḍha-mukhya) *adj.* king Ajamīḍha and others इक्ष्वाकुपूरुपृथुराघवधुन्धुमारमान्धातृहैहयययात्यजमीढमुख्यैः। … संपूजिता भगवती मनुजैर्भवानी SaurP. 50.64.

**अजमीढवत्** (ajamīḍha-vat) *adv.* like *ṛṣi* Ajamīḍha, as in the case of Ajamīḍha कण्ववदजमीढवदङ्गिरोवदिति ĀpaS'S. xxiv. 8.3; मेरुण्डाः…एतेषाम् … अङ्गिरोवदजमीढवत्कण्ववत् VīraMi. (Saṁskāra.) 634.3.

**अजमीढसुत** (ajamīḍha-suta) *m.* son of king Ajamīḍha अजमीढसुतो जातः क्षीणे वंशे तु सोमकः BrahmP. 13.100.

**अजमीढाख्य** (ajamīḍhākhya) *adj.* known as Ajamīḍha हस्ती नाम सुतो जातः … राज्यं दशसहस्रं च तत्र वासं चकार सः। तत्पुत्रस्त्वजमीढाख्यः BhaviP. 418B.10 (iii(1). 3.47)

**अजमील** (aja-mila) *m.* name of a king (son of king Virocana cf. अजमीढ) ततो दुष्यन्तः ततो भ(र)तः ततो भूमन्युः ततो हस्ती ततो विरोचनः तस्मादजमीलः EI. v. 74.6; vi. 351.10; सु[हो]त्राद्धस्ती। हस्तिनो विरोचनः। विरोचनादजमीलः EI. iv. 304.11; vi. 336.5.

[1]**अजमुख** (aja-mukha) *adj.* having the face of a goat, goat-faced प्रजापतेर्दग्धशीर्ष्णो भवत्वजमुखं शिरः BhāgP. iv. 7.3; दक्षस्य यज्ञशीर्ष्णो हि भवत्वजमुखं शिरः S'ivaP. ii(2). 42.7 (121B.9); म्लेच्छास्तु शाका यवनाः … हयमुखा गजमुखास्तुरगाजमुखा अपि TriṣaS'aPuC. ii. 3.682; *m.* name of Prajāpati (Dakṣa) [Apte]

[2]**अजमुख** (a-jamukha) *adj.* (Poet.) not beginning with *jagaṇa* (Amphibrachys) अजमुखश्चान्तो नवमे ले मात्रासमकम् Chandonu. 3.65.

**अजमुखावासा** (ajamukhāvāsā) *f.* name of Gāyatrī (*lit.* residing in the mouth of the Unborn i. e. Brahman) शृणु वक्ष्यामि यत्नेन गायत्र्यष्टसहस्रकम्। … अजा चाजमुखावासाप्यरविन्दनिभानना DevīBhāP. xii. 6.14.

**अजमुखिका** (ajamukhi-kā) *f.* name of a Mātṛ (mother goddess) (created by S'iva) (पानार्थमन्धकास्रस्य सोऽसृजन्मातरस्तदा) गोकर्णिकाजमुखिका महाग्रीवा महामुखी MatsyaP. 179.24.

**अजमुखी** (aja-mukhī) *f.* name of a Rākṣasī ततस्त्वजमुखी नाम राक्षसी वाक्यमब्रवीत् Rāmā. (Gorr.) v. 25.49.

**अजमुदा** (aja-mudā) *f.* seed of the plant called Ajwaen अथ कामेश्वरो मोदकः … रम्भाकन्दशतावरी ह्यजमुदा माषास्तिला धान्यकम् … समं चूर्णयेत् RasRaSa. 27.116.

**अजमुहूर्तक** (ajamuhūrta-ka) *m.* name of an auspicious period (i. e. Brāhmamuhūrta, five Ghaṭikās prior to sunrise) मातः शृणु…अद्यतनेऽजमुहूर्तके। रात्रौ दृष्टो मया स्वप्नः S'ivaP. ii(3). 9.17 (133A.6)

**अजमूत्र** (aja-mūtra) *n.* goat's urine (बीजच्युतिविजयि) स्वजलेपादजमूत्रैः पिष्टं वा वारुणीमूलम् RatiRaha. 15.25; 15.111; S'āriṅgaPa. 3223; S'āriṅgaS. ii. 11.57.

**अजमूर्ति** (aja-mūrti) *f.* Viṣṇu's incarnation वामनस्याजमूर्तेः … आश्रमानोकहानाम्। ततिरियम् RāmāCam. 1.46.

**अजमेदस्** (aja-medas) *n.* goat's fat अजमेदः शाखादमेदसाम् (प्रधानम्) CaraS. i. 25.38 (1941 Ed.); गुडमधूच्छिष्टाजमेदःसंयुक्तेन तैलेन तलतापनं कुर्यात् Hastyāyur. 228.26 (2.29); महिषवराहाजमेदोभिरवसेचयेत् Hastyāyur. 229.1 (2.29)

**अजमेध** (aja-medha) *m.* offering of a goat इष्टं ह्यस्याग्निमेधेन पुरुषमेधेन गोमेधेनाविमेधेनाजमेधेन … भवति य एवं विद्वान् अष्टाकपालेन यजते VādhūlaS'S. iv. 19A.31; अजमेधाध्वरं कर्तुमारंभं कृतवानहम्। सोऽजो गतो गृहान्मे हि त्रोटयित्वा स्वबंधनम् S'ivaP. ii(4). 6.5 (199B.15)

**अजमेर** (ajamera) *n.* city of Ajmer चपहानिर्महीपतिः। अजमेरपुरम्… अध्यास्य सुखितोऽभवत् BhaviP. 425A.8 (iii(1). 7.3); 468A.25 (iii(3). 5.4); अजस्य ब्रह्मणो मा च लक्ष्मीस्तत्र रमा गता। तया च नगरं रम्यमजमेरमजं स्मृतम् 513A.31 (iii(4). 2.2); 465B.13 (iii(3). 2.12)

**अजमेरक** (ajamera-ka) *n.* city of Ajmer धृतराष्ट्रांश एवासौ जनिष्यत्यजमेरके। पृथिवीराज इति सः BhaviP. 464B.34 (iii(3). 1.28)

**अजमेरीय** (ajamer-īya) *adj.* hailing from Ajmer तत्र प्रासादेऽजमेरीयश्रेष्ठिवर्गो नागपुरीयो जाम्बडवर्गः समायातः PurāPraSaṁ. 31.14.

**अजमेरु** (ajameru) *m.* city of Ajmer काबुले…लाहोरे…अजमेरौ…मुलताने …कनौजे…समरकन्दे SiddhāTaVi. 33.1.

**अजमोद** (ajamoda) *m.* seeds of *Carum copticum* मृद्वीका° … °कपीतनोदुम्बराजमोदशृङ्गाटकशङ्खिनीफलासवाः षड्विंशतिः CaraS. i. 25.49 (1941 Ed); अगुरु° … °धान्यकाजमोदपृथ्वीका° … °माषाणाम् …कषायं कारयेत् CaraS. vi. 3.267 (1941 Ed.); स्विन्नं च पाययेदेनं कुष्ठं च लवणानि च। वचाहिङ्ग्वजमोदं च समभागानि सर्पिषा SuśruS. iv. 8.17; iv. 14.10; vi. 44.28; जीरकसर्षपाजमोदशतपुष्पातमालगुल्मांश्च कारयेत् KāmSū. 234.8 (4.1); अपामार्ग° … °बिल्वाजाज्यजमोदवार्ताक° … °हरेणुफलानि … इन्द्रियोपशमनानिAṣṭāSaṁ. i. 84.22 (1.14); कुष्ठाजमोदकिटिभहिंगुमूलकधान्यकम्। … गणं कटुकसंज्ञकम्। राजा संचिनुयाद्दुर्गे ViṣṇuDhaP. ii. 26.62; (दद्यात्) कौबेर्यामजमोदं च त्वगेलाश्चेशदैवते S'ivU. 6.75; अजमोदचूर्णं च मधेन सह पाययेत् BhelaS. 221.16 (6.30); 206.19 (6.26); HāriS. iii. 7.64; अजमोदः … एतेषां कार्षिका भागाः KāśyaS. 98A.16; 114A.23; (अश्मरीं भिनत्ति) क्रौंचोष्ट्रगर्दभास्थि° … °तालपत्रिकाजमोदनागरचूर्णः AṣṭāSaṁ. ii. 79.14 (4.13); i. 71.8 (1.11); ii. 60.11 (4.10); AṣṭāHṛ. i. 15.33; iv. 8.77; एलाजमोदमरिचामलकाभयानाम् … क्वाथं पिबेदिह कफप्रचुरज्वरेषु KalyāKā. 9.73; 9.94; 9.99; 9.102; ग्रन्थिक° … °हपुषाजमोदैः (कल्याणको नाम गुडः) SiddhYo. 4.38; 25.36; त्रिकटुश्चित्रकम्। … अजमोदश्च सर्वेषां द्वौ द्वौ भागौ प्रकल्पयेत् RasRaSa. 19.35; विश्वाजमोदसिन्धूत्थचिञ्चात्वग्भिः समाभया। … अतीसारनाशनी AgniP. 282.28; ओषधयो वचाबलाजमोदप्रभृतयः AbhinBhā. i. 45.16 (*on* 1.121); अजमोदः (वातरोगे) Mānaso. iii. 6.594; RasRaSa. 14.47; 19.35; MātaLi. 11.26; Hastyāyur. 93.8 (1.13); 122.9 (1.17); 124.3 (1.17)

**अजमोदक** (ajamoda-ka) *m.* the plant *Carum copticum* or its seed अजमोदकैः। … कङ्कोलत्वग्लवंगीभिः (अशोभत वनम्) PadmP.(Ra.) 42.18; इक्षुस्तम्बान् जीरकसर्षपमजमोदकं चैव KandaCū. iv. 1.10; त्र्यूषणं त्रिफला …अजमोदकः। मन्थोऽयम् … हितः CaraS. i. 23.18 (1941 Ed.); HāriS. iii. 7.49; SiddhYo. 37.4; अजमोज(? द)कजीरकाणि। … मण्डं सामातिसाररुधिरं हरति ĪśānS'iPa. i. 45.179.

**अजमोदा** (ajamodā) *f.* the plant *Carum copticum* or its seed (मेघश्यामं च तं देशम्) शृङ्गबेराजमोदाभिः कुबेरकप्रियालकैः MatsyaP. 118.40; कुष्ठाजमोदा किणिही … गणः कटुकसंज्ञितः MatsyaP. 217.63; कुष्ठाजमोदासुरसादलानि चूर्णम् (भक्षणाज्जयति … पाण्डुरोगम्) HāriS. iii. 8.31; iii. 5.27; श्वदंष्ट्रा तालपत्रिका। अजमोदाकदंबस्य मूलम् … शर्कर

मिचुः(? न्युः) AṣṭāHr. iv. 11.29; पिप्पली° ... °मरिचाजमोदाभल्लातकास्थिहिङ्गुनिर्यासा इति दशेमानि दीपनीयानि CaraS. i. 4.9 (1941Ed.); vii. 7.41 (1941 Ed.); सैन्धवाजमोदायुक्तं वा निकुम्भतैलम् । ... वातशूलेऽवचार्यम् SuśruS. iv. 14.10; v. 5.63; vi. 40.154; KāśyaS. 169B.21; अजमोदा ... वातगुल्मं निहन्ति AṣṭāHr. iv. 14.35; बिल्वाजमोदे ... तैलं वा कफवातनुत् SiddhYo. 40.26; 25.15; 25.56; 25.61; 51.70; 64.2; SārṅgaS. ii. 6.52; अजमोदं (v.l. °दां) विडङ्गं च पिष्ट्वा ... पाययेत् । कृमिकोपप्रशान्त्यर्थम् RasRaSa. 14.47; RaseCin. 8.47 (102.3); अजमोदा कटुस्तीक्ष्णा दीपनी कफवातनुत् MadaPāNi. 22.375 = BhāvPra.(Bhā.) 6(2).80 = BhāvPraNi. 10.78; Hastyāyur. 118.15 (1.16)

**अजमोदिका** (ajamod-ikā) *f.* the plant *Carum copticum* or its seed शिफाजगन्धाकारव्यौ मेथिका चाजमोदिका RājNi. 429.28; अन्तःसम्मार्जने ज्ञेया ह्यजमोदा यवानिका । बहिःसम्मार्जने सैव विज्ञातव्याजमोदिका BhāvPra.(Bhā.) 6(1).136; यवानिकोग्रगन्धा च ब्रह्मदर्भाजमोदिका । सैवोक्ता दीप्यका दीप्या BhāvPra.(Bhā.) 6(2).76 = BhāvPraNi. 9.75.

**अजमोह** (aja-moha) *m.* Creator's bewilderment हरिरजमोहं कर्तुं सवत्सगोपान् विनिर्ममे स्वस्मात् PraboSu. 207.

**अजम्भ** (a-jambha) *adj.* 1 abstaining from sexual pleasure गुम्फन्नु हारान्वचनैरजम्भः । ... लक्ष्मीं स रेखुषीमारभतेति नोतुम् DvyāśraKā. 10.76 (comm. अजम्भो मैथुनरहितो ब्रह्मचारीत्यर्थः ।); 2 toothless [PW] (न सन्ति जम्भा दन्ता यस्य सः) (सूर्ये च) भेकः । इति शब्दरत्नावली [SabdaKaDru.]; *m.* 1 sun [SabdaKaDru.]; 2 a frog [SabdaKaDru.]

**अजय** (a-jaya) *adj.* [*f.* -ā] 1 invincible, unconquerable, undefeatable हिरण्यवर्णो अजयस् सुवीरो जरामृत्युं प्रजया सं विशस्व AV.(P.) xv. 6.5; ताक्ष्यध्यानान्वितो यश्च त्रैलोक्ये ह्यजयो भवेत् AgniP. 133.24; हत्वा तं तारकं संख्ये देवानामजयं ततः SkandP. i(1). 31.5; असौ यदजयो देव त्रैलोक्येऽप्यपि सुव्रत VāmaP. 8.39; विष्णुरप्यमितौजास्तं ज्ञात्वाजयं(? य्यं) बलेः सुतम् VāmaP. 74.2; एषः ... अजैषीदजयां मायाम् BhāgP. viii. 22.28; सुरासुराणामजयः ... परमेश्वरो यस्त्वं यज्ञमूर्ति प्रणतोऽस्मि VarāP. 5.52; जिनवरततिः ... अजया । ...तनोतु मार्तिं मम CaturJiStu. 42; उत्क्षिप्य शूलमजयम् ...उरसि क्षिपति स रक्षः MahāN. 9.28; अथ कामगमं विमानमजयं मध्येसमुद्रं पुरी सर्वं निष्फलम् MahāN. 9.99; 2 one who cannot win अच् क इत्येवमन्तमशक्तौ गम्यमानायामुत्तरपदं नञः परमन्तोदात्तं भवति । अपचो यः पक्तुं न शक्नोति । अजयः । KāśiVṛ. *on* vi. 2.157.

**अजय** (a-jaya) *m.* 1 non-victory, defeat अत्र मन्ये समायत्तो जयो वाजय एव वा MahāBhā. vii. 103.4; vii. 105.15; सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ BhagGi. 2.38; इयाविदिवोऽस्पर्शनपादानाजये । इया अ्वि दिव इत्येतेभ्यः परस्य ततकारस्य नो भवत्यस्पर्शे अनपादाने अजये यथासङ्ख्यम् JaineVyā. 395.16; (*on* v. 3.65); व्यवसायो धृतिर्लाभः कामक्रोधौ जयाजयौ VāyuP. i. 30.235; जयाजयौ च समौ कृत्वा ततो युद्धाय युज्यस्व GītāBh.(Saṅ.) 48.12 (*on* 2.38); परिणाक्षशलाकासंख्यं द्यूतेऽजये SākaṭāVyā. ii. 1.17; जायते ह्यजयस्तेषामसुराणां जयस्तु सः BṛĀraUBhVā. i. 3.120; देवेतराणामजयस्त्वसिद्ध्या तुष्टिर्मेवान्याः परमेश्वरस्य LiṅgaP. i. 106.15; जयो हि न्यायकर्तॄणामजयोऽन्यायकारिणाम् SkandP. iii(2). 40.53; ii(7). 11.102; VāmaP. 47.113; अभग्नविक्रमस्यापि निश्चितौ न जयाजयौ RāmāMañ. 140.24; ततो विवदमानेषु निग्रहस्थानवत्स्विति । स्थितानामजयं ब्रूयात् Mānaso. iv. 2.203(? 403); रविः स्थायी शशी यायी तद्वशाच्च जयाजयौ VasiS. 37.56; कटका विद्रियां सर्वे पर्यायेण जयाजयौ । लेभिरे RājTa.(Ka.) 8.758; यस्तु कोऽप्यजयस्तत्रान्तरायं कर्म कारणम् PārśvC. 1.153; बभावेऽथ धराधीशो विषायचौ जयाजयौ SaṅkaDigVi.(Mā.) 1.73; 8.46; वाचा विधेयः सङ्ग्रामो वचसैव जयाजयौ SāhiSā. 6.54; 2 AI epithet of Viṣṇu कृतकार्यं कृतप्रज्ञ धर्मज्ञ विजयाजय MahāBhā. vi. 61.49; जय अजय अजित ... इति स्तुत्वा BṛKathāMañ. 15.198; 2 AII name of Bālakṛṣṇa अजयः । इत्येतत् कथितं देवि सहस्रं नाम ... विष्णोर्बालकृतस्यमुपेयुषः PāñcaRā.(Nā.) iv. 8.11; 2 AIII name of one of the eight deities belonging to Prathamāvaraṇa of Vāsitvavyūha in Jayābhiṣeka गगनो भवनश्चैव विजयो ह्यजयस्तथा । ... प्रथमावरणे प्रोक्ताः LiṅgaP. ii. 27.122; विजयः अजयः ... वशित्वप्रथमावरणम् VīraMi.(Rājanīti.) 386.4; 2 BI name of a king (a member of Yama's court) मीमजानुर्गयः पृष्ठो नयोऽनयः (v.l. नयोऽजयः) MahāBhā. ii. 8.19; 2 BII name of a king दर्भकस्ततस्तो भावी दर्भकस्याजयः स्मृतः BhāgP. xii. 1.6; विख्यात[कीर्तिर्यु]ददत्यखुमाणशालिवाहाजयप्रभृतिषु(?भू)पतिवंशरत्नम् EI. xxi. 286.39; 2 BIII name of a king in Tomara dynasty, son of Mahādeva अजयश्च ततोऽभवत् (महादेवात्) BhaviP. 543B.29 (iii(4).2.6); 2 BIV name of a lexicographer, author of Ajayakośa, [MedinīkoŚa Appendix 2]; 3 name of the first type of Prāṇāyāma called Agarbha प्राणायामः ... द्विविधः स च कथ्यते । अगर्भश्च सगर्भश्च तयोराद्योऽजयः स्मृतः SaurP. 12.21; 4 name of a river in Rāḍha राढदेशप्रसिद्धनदविशेषः [SabdaKaDru.]; 5 barber नापितस्त्वजयः स्मृतः AnekāNi. 101.

**अजयगर्ह** (ajaya-garha) *m.* name of a person [PW]

**अजयदेव** (ajaya-deva) *m.* name of a king तस्मिन् भुवं बभाराजयदेवः EI. ii. 442.16; महाप्रधानराजश्रीअजयदेवः EI. ix. 123.53; अस्मिन् अजयदेवे पूर्वजप्रासादान् विध्वंसयति सति PrabaCin. 96.8.

**अजयन** (a-jayana) *n.* defeat मूहैर्नाजयनं भावि व्यभावि पुनरात्मनः Surath. 9.75.

**अजयपाल** (ajaya-pāla) *m.* 1 name of a king (अ)जयपालदेवविजयराज्ये उत्कीर्णा EI. ii. 279.29; भूपालोऽजयपालोऽभूत्कल्पद्रुमसमस्ततः PrabaCin. 96.3; बालचन्द्रस्य ... अजयपालेन सह मैत्री PrabaK. 98.18; मूलराज° ... °कुमारपाल-अजयपाल-लघुभीम-अर्णोराजैः चौलुक्यैः सनाथीकृताः PrabaK. 101.18; 98.24; अथाजयपालेन प्रासादेषु पात्यमानेषु ... श्रीकुमारपालदेवेन प्रासादाः कारिताः PurāPraSaṁ. 47.22; 48.29; 2 name of a person त्रैकायनं गोत्रसेनापतिकील्हणपुत्रसेनापतिअजयपालस्य पद्मेकम(? म्) त्रैकायनगोत्रसेनापति-अजयपालपुत्रराउतसोमराजस्य पद्मेकम(? म्) EI. iv. 158.20; सेनापतिअजयपालपुत्रद्वि EI. iv. 164.67; 3 name of a lexicographer (cf. अजय); 4 name of a jurist [PW]

**अजयपालदेव** (ajayapāla-deva) *m.* king Ajayapāla तदनु अजयपालदेवो राज्ये निविष्टः KumāDePra. 112 (22).2; अजयपालदेवोक्तैश्चारक्षकैर्नापिता PurāPraSaṁ. 47.19.

**अजयपालनृप** (ajayapāla-nṛpa) *m.* king Ajayapāla (पुरोधाः) तां दारुणामपि रणाङ्गणजातघातमात्यथामजयपालनृपादपास्थत् Surath. 15.32.

**अजयपालाज्ञा** (ajayapālājñā) *f.* command of king Ajayapāla मयि सत्यप्यजयपालाज्ञा KumāDePra. 112(21).27.

**अजयपुर** (ajaya-pura) *n.* name of a city नवद्वीपकदेशेषु गत्वाजयपुरं ययौ KumāCaSaṁ. 7.3.

**अजयप्रिय** (ajaya-priya) *adj.* favourite of king Ajaya कीर्तिं स वर्तमानानां भट्टैर्नहे जयप्रियैः । अतीतानागतानां तु रूपकैरजयप्रियैः PṛthviVi. 5.89.

**अजयमेरु** (ajaya-meru) *m.* name of a fort सुदुष्पमदो जिग्ये मेरोरजयमेरुणा PṛthviVi. 8.69; दिनैः कतिपयैरेवाजयमेरुं सुदुर्ग्रहम् । लंकादुर्गमिवागम्यं नृपः प्राकारमासदत् PrabhāC. 197.32.

**अजयमेरुगोपुर** (ajayameru-gopura) *n.* tower-gate of the fort called Ajayameru निर्गमनं श्रियः...। अर्ह(ण)दजयमेरुगोपुरस्य प्रतिभटमूर्धभिरेव तोरणस्रक् PṛthviVi. 10.38.

**अजयमेरुत्व** (ajayameru-tva) *n.* the state of being the unconquerable Meru भवत्वजयमेरुत्वं सार्थं यस्य सुरालयैः PṛthviVi. 5.120.

**अजयमेरुदुर्ग** (ajayameru-durga) *m.* a fortress called Ajayameru तद्वास्तु तत्तद्धनवस्तुसारप्राग्भारवीक्षास्तुतधातृसर्गम् । स्वर्गश्रियां जित्वरकान्तिकान्तमतिष्ठिपत् योऽजयमेरुदुर्गम् HammīMaKā. 1.52; सिद्धराज्ञि दिवंगते गूर्जरात्राशालापतयः अजयमेरुदुर्गप्रत्यासन्ने बब्बिरापुरे गताः KumāDePra. 112(14).26.

**अजयमेरुनारी** (ajayameru-nārī) *f.* woman from Ajayameru (विषण्णहस्तश्रवणाः) समीयुर्भयं तदेवाजयमेरुनार्यः PṛthviVi. 6.1.

**अजयमेरुपुर्** (ajayameru-pur) *f.* city of Ajmer एवंविधामजयमेरुपुरः प्रतिष्ठां कृत्वा सकौतुक इवाजयराजदेवः...दिवमीक्षितुमुच्चचाल PṛthviVi. 5.192.

**अजयमेरुपुर** (ajayameru-pura) *n.* city of Ajmer शक्रः ... अजयमेरुपुरं ललौ HammīMaKā. 4.27.

**अजयमेरुमेरुभूभृत्** (ajayameru-merubhūbhṛt) *m.* Ajayameru as Mt. Meru [व्यस्]जदजयमेरुमेरुभूभृत्कुहरहरेरपि दूतमेकमग्रे PṛthviVi. 10.42.

**अजयरा** (ajaya-rā) *m.* [Prakṛtism for अजयराज] name of a king लाखणपूर्वजाः वासुदेव...अजयरा वीघरा सिंघरा PurāPraSaṁ. 102.28.

**अजयराज** (ajaya-rāja) *m.* name of a Chāhamāna prince (son of Pṛthvirāja) तस्मादजयराजोऽभूत् PṛthviVi. 5.83; 8.59; EI. ii. 61.5.

**अजयराजकीय** (ajayarājak-īya) *adj.* belonging to king Ajayarāja असि[न्रे]वं(? व) ग्रामे राजपुत्र-अजयराजकीय (F.N. अजयराजकीय) सेजायां शासं(स)नेन प्रदत्त(त्तः) EI. xiii. 210.5.

**अजयराजदेव** (ajayarāja-deva) *m.* king Ajayarāja एवंविधामजयमेरुपुरःप्रतिष्ठां कृत्वा सकौतुक इवाजयराजदेवः PṛthviVi. 5.192.

**अजयराजसूनु** (ajayarāja-sūnu) *m.* son of Ajayarāja पुण्यास्तु तस्याजयराजसूनोः को वेदितुं तत्त्वगतीरभिज्ञः PṛthviVi. 6.25.

**अजयवर्मन्** (ajaya-varman) *m.* name of a prince तस्मादजयवर्माभूज्जयश्रीविश्रुतः शु(सु)तः EI. ix. 108.9; ix. 121.10.

**अजयसागर** (ajaya-sāgara) *m.* name of a tank, tank named after Ajaya अजयसागरसंवद्धलटिआनां हलचतुष्टयावच्छिन्ना मदनपुरे भूमिः EI. iv. 158. 12.

**अजयसिंह** (ajaya-siṁha) *m.* name of a Cāhamāna king [श्री]कुमरसीह-पुत्रेण अजय सि(? सिं)हेन आदीत(दित्त) । ऊगमणियो[इ]सीक्षेत्र(त्रं) EI. xiii. 208. 3.

**अजयसीह** (ajaya-sīha) *m.* [for अजयसिंह] name of a Cāhamāna king राज॰ कुम्वरसीहपुत्रेण अजयसीहेन कोरेण्ठकस्थाने व्रा(ब्रा)ह्मणसांधीरणसुत-नारायणस्य ढीको प्रदत्तः EI. xiii. 211. 2.

**अजयहेतु** (ajaya-hetu) *adj.* cause of defeat मारुतोऽपि विजयाजयहेतुः YogYā. 5. 15.

**अजया** (ajayā) *f.* 1 name of one of the two *śaktis* of Durgā सख्यौ च विजयाजये TrikāS'e. i. 1. 53; जया च विजया चैव अजया च जयावती TantrSa. 9. 153; 2 hemp त्रायमाणाजया वीरा चोरकः कटुरोहिणी AṣṭāSaṁ. ii. 214. 9 (6. 9); दाडिमीपिप्पलीद्राक्षापिचुमंदाजयामराः ··· एते गृहांगणे वृक्षाः ··· मंगलप्रदाः VasiS. 39. 192; कपिरोमलता गुप्ता दुःस्पर्शा कच्छुराजया KalpaK. 293. 398 (न जीयते पराजीयतेऽसौ जि कर्मणि अच् स्त्रियां टाप् न जया नञ्समासः) विजया। भाङ्ग सिद्धि इति ख्याता । इति राजनिर्घण्टः [S'abdaKaDru]

**अजयाकार** (ajayākāra) *adj.* having the appearance of defeat जयोऽयमजयाकारो जयस्तस्मात्पराजयः MahāBhā. x. 10. 12; जयोऽयमजयाकारो भगवन्प्रतिभाति मे MahāBhā. xii. 1. 15.

**अजयाभिधान** (ajayābhidhāna) *adj.* called Ajaya भूसुभ्रूधवोऽभूद-जयाभिधानः VasaViKā. 3. 31.

**अजयान** (aja-yā́na) *adj.* traversed by goats उप प्रेष्यंतं पूषणं यो वहात्यजयानैः पथिभिस्तत्रं गच्छतम् AV. xviii. 2. 53 (Sāyaṇa reads अञ्जयानैः and explains अञ्जसा आर्जवेन यान्ति गच्छन्ति एभिरिति अञ्जयानाः । तैः)

**अजयावह** (ajayāvaha) *adj.* bringing about defeat तद्यायिनां नृपाणाम-भिमुखमजयावहं भवति (इन्द्रधनुः) BṛSaṁ. 35. 2.

**अजयी** (ajayī) [w. r. for अजयिन्] *m.* name of a person आंगिरश(स)-अंव(ब)रीप-यौवनास्वे(श्वे)ति त्रिप्रवराय चतुर्वेदविजयीपौत्राय चतुर्वेद-अजयीपुत्राय चतुर्वेद-अहिशर्मणे व्रा(ब्रा)ह्मणाय वंटकमेकम् EI. ix. 112. 62.

**अजयुद्ध** (aja-yuddha) *n.* ramming of goats एके श्रमणब्राह्मणाः श्रद्धादेयं परिभुज्य विविधदर्शनसमारम्भानुयोगमनुयुक्ता विहरन्ति तद् यथा···अजयुद्धे मेषयुद्धे Sphuṭā. iv. 95. 1 (*on* 4. 86)

**अजयैषिन्** (a-jayaiṣin) *adj.* not hankering for victory योधानामसुख-स्पर्शं दुर्धर्षमजयैषिणाम् । तीर्णाः स्म दुस्तरं तात द्रोणानीकमहार्णवम् MahāBhā. vii. 95. 3.

**अजयोनिभ** (ajayoni-bha) *n.* name of the asterism Pūrvā Bhādra-padā विष्णुत्रयाश्वमित्राजयोनिभान्युपनायने (शुभानि) NāraS. 24. 11.

**अजयोपपद** (ajayopapada) *adj.* (name) with the word *ajaya* as a prefix अजयोपपदं मेरुं मध्येकृत्य स कृत्यवित् (हम्मीरः)। पुष्करं तीर्थमासाद्य दुष्करं पुण्यमर्जयत् HammīMaKā. 9. 41.

**अजय्य** (a-jayyá) *adj.* [*f.* -ā] [cf. P. vi. 1. 81] A unsurpassable ते होचु संज्ञाय हन्तेदं तथा करवावहा इति यथा न इदमाप्रदिवमेवाजय्यमसदिति S'atBr.(K.) IV. v. 2. 3; अजय्यां ह वै कीर्तिमजय्यां श्रियमजय्यं स्वर्गं लोकं जयति य एवं वेद JaimiBr. 2. 133; B impossible to defeat or over-come, unconquerable, invincible ततोऽस्वरात् ··· आगतम् ··· चक्रममित्रतापनम् । ··· सुदर्शनं भीममजय्यमुत्तमम् MahāBhā. i. 17. 20; अजेयाः (v. l. अजय्याः) स्म ··· युद्धे MahāBhā. iii. 13. 119; इदं विश्वं जगत्सर्वमजय्यं चापि सर्वशः । महाभूतात्मकं ब्रह्मन्नातः परतरं भवेत् MahāBhā. iii. 201. 15 (*but* Nīlakaṇṭha अजय्यं कर्मणा न लभ्यम्); iii. 256. 28; v. 95. 3; अशक्यः स रथो जेतुं मन्ये देवासुरैरपि (v. l. अजय्यं तं रथं मन्ये देवैरपि सवासवैः) MahāBhā. vii. 9. 24; vii. 87. 65; vii. 126. 6; viii. 7. 25; viii. 872*(1); देवा ददुस्तस्मै सेनाम्···। देवशत्रुक्षयकरीमजय्यां विश्वरूपिणीम् MahāBhā. ix. 44. 25; xii. 49. 10; तेना-जय्येन मुख्येन राघवेण महात्मना । शपे ते Rāmā. ii. 200*(1); vii. 8. 26; वाट्य्योनाक्षितः (नाजय्यं नास्ति नः) किंचिद्यथाजीवन्मृते धनात् BhelaS. 26. 5 (1. 15); तेन द्विपानामिव पुण्डरीको राज्ञामजय्योऽजनि पुण्डरीकः RaghuVa. 18. 8; विकटाक्षः···। ततः प्रभृत्यजय्योऽभूच्छत्रुभिः संमुखागतैः AhirbuS. 33. 42; MatsyaP. 151. 36; BrahmāṇḍP. iii. 24. 88; आजावजय्यानजनन्दनोऽन्तः स पइ द्विपः पूर्वमसौ विजिग्ये JānaHa. 1. 14; 2. 53; 9. 46; (मगधराजः) आत्मज(? व)-लेन मानुषेणाजय्यमेव राजहंसमाकलय्य ··· श्रीगर्भं ससार AvantiKa. 113. 10; S'iśuVa. 20. 77; अभवत्तनयस्तस्य···सुरविद्याधरैः सर्वैरेकीभूयापि यत्नतः । अजय्यः ··· विनिर्मितः PadmP.(Ra.) 15. 40; 109. 132; MahāviC. 5. 47 (286. 11); ब्रह्मर्षिभिर्नूनमयम् ··· रात्रिचरक्षयाय । नराकृतिर्वानरसैन्यशाली जगत्यजय्यो विहितोऽभ्युपायः BhaṭṭiKā. 12. 57; PāraS. 13. 204; ĀścaCū. 5. 9(3); मनसिजशत्रुमजय्यमलक्ष्यं विरतिमयी शितहेतिततिस्ते । समरभरे विनिपात-यति स MahāP. 23. 127; RāmC. 23. 62; दक्ष उवाच ··· नमस्तेऽन्धकसूदन । देवेन्द्र त्वम्···अजय्यः BrahmP. 40. 62; देवी सर्वशक्तिसमन्विता । अजय्या चाक्षया DevīBhāP. v. 27. 21; तस्य राज्ञो महि(? हीं) सर्वान्(? न्) धर्मेण परिरक्षतः [।] अजय्यस्य जिताशेषरिपुभूपालसंहतेः । ···यज्जन्मभूरभूत् (? द्) भूमौ काञ्चिवायिलिति EI. xxii. 242. 95; RāmāCam. 5. 20(9); अर्ज(? ज)य्यस्येषुणा खड्गं दक्षः शत्रु-जिदच्छिनत् Rāvaṇā. 18. 41; 18. 49; हिमगिरिरजय्योऽर्कमहसान् S'rīKaC. 4. 63; बाणैरजय्यं ज्ञात्वारिं मेरकोऽस्रैगदादिभिः । ववर्ष TriṣaS'aPuC. iv. 3. 147; i. 4. 416; i. 4. 455; ii. 4. 232; ii. 6. 135; भवितारस्तरां पश्चाप्यजय्या जगतोऽप्यमी PāṇḍaC. 7. 609; 11. 148; अजय्यास्ते द्यूते सकलकितवाः किन्न विजिताः HāsyCū. 148. 15; KīrtiKau. 4. 53; SūktiMu. 22. 5; खपञ्चकेन चाजय्यम् ··· । सूरिं विजयसिंहा-ख्यमद्राक्षीदक्षतं गुणैः SamarāSaṁ. 3. 34; TīrthaKa. 63. 10; PrabaK. 71. 18; निर्जितोऽहमजितेन यत्त्वया लम्भितोन्नतिरनेन न त्रपे । न ह्यजय्यमिह किञ्चिदस्ति ते Yādavā. 17. 91; 12. 91; 23. 3; 24. 94; गुरुभट्टोदयनादिकैरजय्यम् । स हि खण्डन-कारमूढदर्पं बहुधा व्युद्य वशंवदं चकार S'aṅkaDigVi.(Mā.) 15. 157; 9. 66; RājTa.(Jo.) 957; रसगन्धकप्रयोगमन्तरेण सपरिवारोऽहमजय्य इति यक्ष्मराजस्य हृदयं विश्वसनीयया तापसीवेषया धारणया गृहीतम् Jīvān. 46. 9; Rāgh. 14. 26; वितन्वन्यत्कोणं विशिखमचिरादेव भगवाननङ्गः केनापि त्रिभुवनमजय्यं विजयते S'ṛṅgāSar. 4; C irrefutable अजय्यममितं तीर्थ्यैः अनालीढमहोदयम् ··· परं प्रवचनं सूक्तम् MahāP. 21. 138.

**अजय्य** (a-jayya) *m.* epithet of Gaṇeśa (*lit.* invincible) अप्रतर्क्योऽ-क्षयोऽजय्यः (इति वैनायकं नाम्नां सहस्रम्) GaṇeP. i. 46. 70; *n.* contest (difficult to win) गोपालानन्वशात्केलीस्तत्राजय्यं जिगाय तान् (कृष्णः) Mugdha-Bo. 5. 7 (47. 1) (Rāmatarkavāgīśa अजय्यं जेतुमशक्यं युद्धम्)

**अजय्यता** (ajayya-tā) *f.* unconquerable state, invincibility चिरेणा-जय्यतां ज्ञात्वा दुष्टदानवयोर्युधि । विष्वक्सेनस्तु देवाय न्यवेदयत् AhirbuS. 41. 35; 33. 45; अथ वा विजयाह्वं प्राइ नगरं तन्नियम्यताम् । धत्ते यदवलम्बेन सद्मभूभृद-जय्यताम् ParamāKā. 97. 17.

**अजय्यत्व** (ajayya-tva) *n.* invincibility मत्तमातङ्गसंदानदामनिर्दलितत्वचः । अजय्यत्वं वदन्तीव यस्य पर्यन्तभूरुहः (रामस्य) JānaHa. 6. 18.

**अजय्यदोर्दण्डताण्डव** (ajayya-dordaṇḍatāṇḍava) *adj.* frantic move-ment of whose mighty arms is impossible to overcome तदित्यजय्यदोर्दण्ड-ताण्डवाः खलु पाण्डवः (? वाः) PāṇḍaC. 6. 159.

**अजय्यमाहात्म्य** (ajayya-māhātmya) *adj.* of unsurpassable magna-nimity जयत्यजय्यमाहात्म्यम्··· । शासनं जैनमुद्रासि MahāP. 1. 3.

**अजय्यविक्रम** (ajayya-vikrama) *adj.* possessing unsurpassable valour शरणमुपस्थिता वयम् ··· । महाबलं गरुडमुपेत्य ··· वरदमजय्यविक्रमम् MahāBhā. i. 20. 14.

**अजय्यशक्ति** (ajayya-śakti) *adj.* possessing unsurpassable might यथाहवो हव्यवहोग्रतेजसोरजय्यशक्त्योरजयोरजायत JānaHa. 9. 38.

**अजय्यात्मन्** (ajayyātman) *adj.* of invincible spirit तेजोऽपास्तमुदस्त-भास्कररुचामाजावजय्यात्मनां राज्ञां यस्य सहस्रमास्त सविधेऽजस्रं विधेयं स्वयम् (दिल्लीश्वरस्य) ĀnandRa. 7. 56.

**अजर** (a-jára, á-jara MaiS. iv. 14. 17) *adj.* [*f.* -ā] [AltGr. II. 1. 215; DEBRU. p. 88 / P. vi. 2. 116; in ṚV. a-jára as agent noun, *later* Bv. with *jara* and *jarā* नञ उत्तरे जरमरमित्रमृता बहुव्रीहौ समासे आद्युदात्ता भवन्ति KāśiVṛ. *on* P. vi. 2. 116; न विद्यते जरा यस्य तदजरम् Prasā. i. 198. 12] 1 who does not grow old, not subject to old age (deities, living beings) हव्यवाळग्निरजरश्चनोहितः ··· विभावसुः ṚV. iii. 2. 2; आस्के सपत्नी अजरे अमृक्ते सबर्दुघे उरुगायस्य धेनू ṚV. iii. 6. 4; यजाम इन्नमसा वृद्ध-मिन्द्रं बृहन्तमृष्वमजरं युवानम् ṚV. iii. 32. 7; क्षत्रं धारयतं बृहद्दिवि सूर्यमिवाजरम् ṚV. v. 27. 6; मध्ये युवाजरः ··· हितः ṚV. v. 44. 3; रुद्रमक्तौ । बृहन्तमृष्वमजरम् ···ऋधग्घुवेम कविनेषितासः ṚV. vi. 49. 10; अयं य उर्वी महिना महिव्रतः क्रत्वा विभात्यजरो न शोचिषा ṚV. vi. 68. 9; वास्तोष्पते ··· । अजरासस्ते सख्ये स्याम ṚV. vii. 54. 2; परि पाद्यन्ते । सखा सखायमजरो जरिम्णे AV. viii. 3. 20; छन्दःपक्षे उषसा पेपिशाने ··· । सूर्यपत्नी सं चरतः ··· अजरे AV. viii. 9. 12; तमेव विद्वान्न बिभाय मृत्योरात्मानं धीरमजरं युवानम् AV. x. 8. 44; हिरण्यवर्णो अजरः सुवीरो जरामृत्युः प्रजया सं विशस्व AV. xix. 24. 8; कालो अश्वो वहति ··· अजरः AV. xix. 53. 1; xviii. 4. 88; अग्निराहितो जीर्यति संवत्सरस्य पुरस्तादाग्निपावमानीभिरुपतिष्ठते पुनर्नवमेवैनमजरं करोति TaiS. I. v. 7. 3; I. v. 4. 1; अश्याम द्युम्नमजराजरं ते TaiS. I. iii. 14. 3; IV. iii. 11. 5; रण आ यो घृणे । न ततृपाणो अजरः TaiS. IV. vi. 1. 2; VājaS. 17. 10; अस्याजरासो दमामरित्रा अर्चद्धूमासो अग्नयः VājaS. 33. 1; द्यावापृथिवी ··· अजरे VājaS. 34. 45; TaiĀ. x. 11. 2 (827. 1); SāṅkhāS'S. iii. 5. 9; KauśiSū. 6. 11;

(अश्वरत्नम्) अजरं दिव्यं सर्वलक्षणलक्षितम् MahāBhā. i. 15. 3; अजरश्चामरश्च स्यामनृतेन विनाप्यहम् MahāBhā. i. 29. 14; धातारमजरं नित्यं तमाहुः MahāBhā. i. 57. 86; यौ चक्रतुर्मां भगवन्वृन्दारकमिवाजरम् MahāBhā. iii. 124. 10; iii. 895*(1); xiii. 14. 98; xiii. 14. 191; xiii. 18. 6; अम(v. l. ज)राः ··· कथं स्याम निरामयाः Rāmā. i. 44. 15; HariVaṁ. 112. 118; अजरोऽमरसंनिभः SuśruS. iv. 13. 13; वनानि रम्याण्यजराश्च योषितः Saund. 10. 61; तैलप्रयोगादजराः ··· दैत्याधिपतयः CaraS. i. 27. 284; त्वाम् ··· । दयालुमनवस्पृष्टं पुराणमजरं विदुः RaghuVa. 10. 19; JayāS. 27. 46; भविष्यत्यजरः श्रीमान्कन्दर्प इव रूपवान् MatsyaP. 69. 15; 185. 59; स्वभाभिर्भासयन्वेश्म वृन्दारक इवाजरः MārkP. 16. 85; VāyuP. i. 46. 14; BrahmāṇḍP. i. 29. 87; Hitopa. 0. 3; SārṅgaPa. 669; SiśuVa. 19. 102; अजमजरम् ··· पशुपतिं प्रपन्नोऽन्यदेवताशून्यममन्यत त्रैलोक्यम् HarṣaC. 151. 7; अजमजरमचिन्त्यं चिन्तयित्वा भवन्तम् VeṇiSaṁ. 6. 644; अजरा चाप्रमेया च सर्वभूतनमस्कृता AṣṭāSaṁ. ii. 173. 18 (6. 1); i. 26. 12 (1. 6); MahāP. 23. 171; 25. 97; RāghPāṇ.(Dha.) 4. 32; NalaCam. 1. 62. (3); PārāSū. 31. 27; SiddhYo. 69. 5; तमादिदेवमजरं ज्ञानरूपं नतोऽस्म्यहम् BṛNāraP. 2. 47; अजरश्चामरश्चापि मत्प्रसादाद्भविष्यसि VāmaP. 8. 64; 46. 24; PadmP. ii. 53. 52; v. 16. 6; SkandP. vii(1). 282. 10; vii(3). 41. 37; SivaP. ii(5). 1. 37 (219B. 13); BrahmP. 1. 2; 36. 39; BhaviP. 177A. 24 (i. 120. 17); AdhyāRā. i. 2. 7; अजरो बहुभोक्ता च तत्र बद्धो भवेद्धयः SamarāSū. 33. 50; KathāSaSāg. vii. 6. 64; ĪśānSiPa. i. 15. 7; i. 19. 48; SamarāSaṁ. 8. 537; RaubiC. 357; DhūrtaSa. 71. 5; NītiMañ. 51; YudhiVi. 1. 4; SilpaRa. ii. 23. 39; Acyutarā. 5. 30; RasSa. 48; **2** not decaying, not diminishing, not wearing off, ever-fresh, long-lasting, imperishable (inanimate objects or abstract notions) समिद्धस्य श्रयमाणः पुरस्ताद्ब्रह्म वन्वानो अजरं सुवीरम् ṚV. iii. 8. 2; प्र वामवोचमश्विना धियंधा रथः स्वश्वो अजरो यो अस्ति ṚV. iv. 45. 7; प्रति ते ते अजरासस्तपिष्ठा अघशंसं शोशुचतो दहन्तु ṚV. x. 87. 20; x. 91. 7; i. 143. 3; viii. 23. 4; vii. 3. 3; vi. 6. 2; iii. 18. 2; अजातशत्रुमजरा स्वर्वत्यनु स्वधामिता दस्ममीयते ṚV. v. 34. 1; अस्माकमग्ने मघवत्सु धारयानामि क्षत्रमजरं सुवीर्यम् ṚV. vi. 8. 6; TaiS. I. v. 11. 2; AV. vi. 98. 2; त्रिनाभि चक्रमजरम् ṚV. i. 164. 2; i. 164. 14; कुर्मस्त आयुरजरं यदग्ने ṚV. x. 51. 7; हविष्पान्तमजरं स्वर्विदि दिविस्पृश्याहुतं जुष्टमग्नौ ṚV. x. 88. 1; दशाभीशुभ्यो अर्चताजरेभ्यः ṚV. x. 94. 7; कक्षीवान् ··· दिवि श्रवोऽजरमा ततान ṚV. i. 126. 2; ये ते शृङ्गे अजरे जातवेदः ··· ताभ्याम् ··· किमीदिनं प्रत्यञ्चमर्चिषा ··· वि निक्ष्व AV. viii. 3. 25; इन्द्रासोमा ··· युवम् ··· । तपुर्वधेभिरजरेभिरत्रिणो नि ··· विध्यतम् AV. viii. 4. 5; इमौ ते पक्षावजरौ पतत्रिणः ··· अग्ने TaiS. IV. vii. 13. 1 = VājaS. 18. 52; घृतं पिन्वन्नजरं सुवीरं ब्रह्म समिद् भवत्याहुतीनाम् TaiS. V. vii. 8. 2; दिवि ज्योतिरजरमारभेताम् TaiBr. III. vii. 5. 11; Mitā. 170. 11 (*on* 2. 52); एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति ··· अजरम् SatBr. XIV. vi. 8. 8; XIV. vii. 2. 30; स वा एष प्राण एव प्रज्ञात्मानन्तोऽजरोऽमृतः SāṅkhāĀ. 5. 8 (22. 8); तच्छान्तमजरम् PraśnaU. 5. 7; वेदाहमजरम् ··· सर्वात्मानम् SvetāU. 3. 21; अजरः ··· अहमस्मि BāṣkaU. 24; ĀrṣeU. 9. 3; ततो दिव्यमजरं प्राप्य लोकम् MahāBhā. i. 84. 15; न सत्यमजरं लोके MahāBhā. i. 122. 5; अजरां ज्याम् ···समयोजयत् MahāBhā. iii. 165. 14; ब्रह्म परमव्यक्तमजरं ध्रुवम् MahāBhā. xii. 233. 13; प्रीतिं चेच्छस्यजरां वै त्वया सः MahāBhā. xiv. 9. 14; v. 45. 5; vii. 164. 113; viii. 22. 45; xii. 175. 11; xii. 192. 123; xii. 304. 17; अजरः कम्बलः MahāBh. ii. 83. 9 (*on* iii. 1. 105); दुर्लभं शान्तमजरं परं तदमृतं पदम् BuddhaC. 12. 106; Saund. 3. 10; SatTrayī 188; SāntiS. 3. 24; Subhāṣi. 3452; VijñāS. 15; वर्षशतं वयोऽजरं तिष्ठति CaraS. vi(1). 2. 4; vi(1). 2. 7; vi(1). 2. 8; भगवान् ··· । अवस्थाय ततोऽप्येति प्रद्युम्नमजरं विभुम् AhirbuS. 4. 62; 2. 7; अजरमविनाशि चात्र धर्मः प्रतिष्ठितः SābaBh. 1646. 15 (*on* ix. 1. 3); तदभयमजरममृत्युपदं ब्रह्मक्षेमप्राप्तिरिति NyāyBh. 33. 3 (*on* i. 1. 22); अक्षय्यं नान्यदाधारममेयमजरं ध्रुवम् ViṣṇuP. i. 2. 20; v. 23. 34; v. 38. 21; MārkP. 45. 33; VāyuP. i. 37. 7; संसारचक्रमजरं स्थितिर्यस्य न विद्यते MārkP. 10. 46; ततो दिव्यमजरं प्राप्य लोकं प्रजापतेः MatsyaP. 38. 16; अजरं दिव्यम् ··· धनुः (प्रददौ भार्गवाय सः) BrahmāṇḍP. ii. 25. 41; अजरा ज्याभवच्चापि साम्बिका धनुषो दृढा MatsyaP. 133. 38; दत्तवान् ··· । क्षीरोदश्चामलं हारमजरे च तथाम्बरे MārkP. 82. 24; BṛĀraUBh. 623. 10 (*on* iv. 4. 6); AitUBh. 249. 18 (*on* 1. 1); GītāBh. (Saṅ.) 540. 13 (*on* 18. 55); उपरिष्टान्मन्त्रान् जपेत् ··· अजरं कोशं ध्यात्वा ChāndoUBh. 182. 16 (*on* iii. 15. 7); KenUBh. 29. 3 (*on* 1. 0); SvātmaNi. 105; BālaKrī. ii. 63. 17 (*on* 3. 165 ? 176); अजरं धाम जरागमे जगाम RāmC. 8. 46; NyāyMañ. ii. 76. 31; पूतोऽसंसर्गिधर्मत्वादजरोऽपरिणामवान् BṛĀraUBhVā. v. 16. 83; i. 2. 225; LakṣmīT. 10. 5; BālRā. 10. 92; (नरः यातु) अक्षय्यं चाजरं स्थानम् VarāP. 205. 31; आत्माजरोऽमरोऽभेद्यः AgniP. 380. 2; KūrmaP. 41. 4 (1. 4); 655. 3 (2. 29); मां विपाट्याजरां नावं यत्र विश्वं प्रतिष्ठितम् BhāgP. iv. 17. 21; iii. 25. 20; अजेयमजरं नित्यमतीन्द्रियमनीश्वरम् BrahmP. 242. 10; SaurP. 11. 24; DevīBhāP. v. 9. 2; YogVā. iii. 2. 36; iii. 9. 50; iii. 9. 76; iii. 10. 18; iii. 10. 36; v. 17. 33; आनन्दाजरामृतप्रज्ञात्मादीनां तदसाधारणधर्माणामस्मिन् ··· अनुगमात् BrahmSūBh.(Srī.) i. 286. 4 (*on* i. 1. 29); (अपाम् ··· पतिर्भवसि) रेतोरूपेणाजराणाम् KarmaNi. 4B. 9; AnuVyā. 30A. 2 (*on* 2. 2); तदाद्यं तत्त्वानामजरमपरिच्छेद्यमपरम् ··· परमपदमाविर्भवतु मे NīlaVi. 94. 8; SetuBa. 43. 2; **3** new, not old नवोक्तव्याजरासंधं वागितोऽन्या न वर्तते RāghPāṇ.(Dha.) 18. 64 (comm. अजरा नूतना); *m.* **1A** name of Jina बुद्धः ··· अच्युतः ··· अजरोऽजर्यः MahāP. 25. 109; **1B** name of a deity in Tantric worship related to the letter *pha* म सृपा भयसारा स्यान्मध्यमा फोऽजराय च AgniP. 146. 7; **2** God [Apte]; **3** name of a plant [Apte]; [अजर as the meaning of (i) letter *va* वकारो वरुणो बालो भेदः खड्गीश्वरोऽजरा: Tantrābhi. (1) 3. 16; (ii) letter *ṇi* णिर्वृक्षोऽजरः EkārthaNā. 1. 55]; *n.* [द्वाराग्र°···°पञ्जराजर°···°छत्राणि नपुंसके Liṅgānu.(Pā.) 107. 24; सोरमादेशे कृते संनिपातपरिभाषया न जरस्, अजरम् SiddhāKau. 75B. 11]; **1** gold मङ्गल्यसौमेरवशातकुम्भशृङ्गारचन्द्राजरजाम्बवानि ।··· नेत्राब्धिनिर्धारितनाम हेम RājNi. 206. 8; **2** courtyard अङ्गणे त्वङ्गमसलमजरं चाजिरं तथा ParyāSaRa. 2. 21; **3** indigestion cf. अजरत्रास; **4** Supreme Spirit [Apte]

**अजरक** (a-jaraka) *m. n.* indigestion योगराजः । ··· यक्ष्मविषमज्वराजरककासश्वासापस्मारहरश्च AṣṭāSaṁ. ii. 102. 25 (4. 18); पेयोऽयम् ··· । श्वित्रे कुष्ठेष्वजरके AṣṭāHṛ. iv. 15. 24; iv. 16. 19; मण्डूरवटका ह्येते ··· । कुष्ठान्यजरकं शोफम् ··· प्लीहानं नाशयन्ति च SiddhYo. 8. 27.

**अजरक्त** (aja-rakta) *n.* blood of a goat पुत्तलीमजरक्ताक्ताम् ··· । छित्वा छित्वा प्रजुहुयादजरक्तान्वितां निशि SāraTi. 22. 44; 22. 45.

**अजरक्षणजीवन** (ajarakṣaṇa-jīvana) *adj.* earning livelihood by looking after or rearing goats अजपालः अजरक्षणजीवनः VīraMi.(Āhnika.) 502. 16.

**अजरंजरीभाव** (ajarañjarī-bhāva) *m.* non-decrepit decrepitude, survival in repeated deaths अस्यैव च प्रेत्यभावस्याजरञ्जरीभाव इति वैदिकी संज्ञा Upask. 279. 5 (*on* vi. 2. 15)

**अजरठकण्ठीरव** (ajaraṭha-kaṇṭhīrava) *m.* young lion निरस्य नीलोत्पलमजरठकण्ठीरवकण्ठकेसरस्तबकमकरोत्कर्णावतंसम् (राजपत्नी) NalaCam. iv. 9(55)

**अजरठत्व** (ajaraṭha-tva) *n.* softness, delicacy (of style) (बन्धस्य) अजरठत्वं सौकुमार्यम् KāvyālaṅSū. iii. 1. 22.

**अजरठपद्मिनीपत्त्र** (ajaraṭha-padminīpattra) *n.* tender leaf of a lotus-plant न जललवमौक्तिकक्षोदतारकितान्यजठर(? रठ)पद्मिनीपत्राणि पार्श्वेऽप्यकारयत् Kād. 248. 7.

**अजरठमरठी** (ajaraṭha-maraṭhī) *f.* young Maraṭhī woman लसति ···। उन्मेषश्चम्पकानामजरठमरठीगण्डपालीविलासः KarṇaSu. 1. 42.

**अजरण** (a-jaraṇa) *n.* **1** absence of decay अजरमजरणधर्माणम् Nir. 4. 27 (89. 8); **2** indigestion (चतुःसुधरसः) हन्यात्सर्वमरुद्गदान् ··· निर्वीर्यत्वमरोचकं त्वजरणं शूलं च गुल्मादिकम् RasRaSa. 21. 110.

**अजरणधर्मन्** (ajaraṇa-dharman) *adj.* possessing characteristics of non-decaying अजरमजरणधर्माणम् Nir. 4. 27 (89. 8)

**अजरणा** (a-jaraṇā) *f.* indigestion सेवया परिहार्याणां रसस्याजरणा भवेत् RasRaSa. 30. 92.

**अजरत्** (a-jarat) *adj.* not decaying [MW] cf. **अजरन्ती**.

**अजरत्रास** (ajara-trāsa) *m.* trouble of indigestion मगधाभिख्यया ख्यातो विषयोऽस्ति समुज्ज्वलः । ··· क्षरद्भिरजरत्रासत् (? °त्रासात्) पीतक्षीरोदवत् पयः ।···गोधनैः सितकक्षपूः(? भूः) PadmP.(Ra.) 2. 11.

**अजरत्व** (ajara-tva) *n.* **A** being free from old age or decay, the state of freedom from aging तावुभावपि जरामरणयोः कुपिताविवाजरत्वस्यामरत्वस्य वा प्रीतावजरममरं मे शरीरं विधत्तामिति TantrVā. 66. 2 (*on* i. 2. 49); अयं तु अजत्वात् अजरत्वाच्च अविनाशी यतः, अत एव अमृतः BṛĀraUBh. 657. 14 (*on* iv. 4. 25); AgniP. 124. 18; Bhām. 158. 9 (*on* i. 1. 28); VedāntDī. 26. 7 (*on* i. 1. 29); आनन्दत्वम् अजरत्वम् अमृतत्वञ्च ब्रह्मपरिग्रहे युज्यते नान्यथा VedāntKau. 44. 2 (*on* i. 1. 29); NyāySiA. 220. 26; BrahmSūBh.(Srī.) i. 428. 2 (*on* i. 3. 12); **B** status of a divinity (*lit.* ageless state) (जातिः) अजरा अजरत्वं देवत्वं तत्प्राप्तिहेतुत्वात् ManvaVi. 209. 23 (*on* 2. 148); राजरे तु शशाङ्कत्वमजरत्वं च रोहणे RaseCin. 1. 15 (6. 7)

**अजरत्वादि** (ajaratvādi) *adj.* the state of non-aging etc., freedom from old age or decrepitude etc. तदर्थं शान्तत्वाजरत्वादयः किं मुख्या उतामुख्याः SrutaPra. ii. 27. 24 (*on* i. 3. 12)

**अजरन्ती** (a-járantī) *adj.* (*f.*) [Debru. p. 163] non-aging, non-

श्चतराश्च व्रजः ArthSā. i. 137. 5 (2. 6); क्षुधापरीतस्तु किंचिदेव याचेत कृतमकृतं वा क्षेत्रं गामजाविकमन्ततो हिरण्यम् VasiDS. 12. 3; GanPā. 73. 4; अजाविके तु संरुद्धे वृकैः पाले त्वनायति ManuSm. 8. 235; 9. 119; 10. 114; मापानष्टौ तु महिषी सस्यघातस्य कारिणी । दण्डनीया तदर्धं तु गौस्तदर्धमजाविकम् YājñaSm. 2. 159; 1. 267; गवाश्वादीनि च गणपाठे द्वन्द्वरूपाणि च एकवद्भवन्ति । ··· अजाविकम् JaineVyā. 78. 7 (on i. 4. 87); अजाविकं प्रौष्ठपदे विन्देद्वावां(?द्वाश्च)स्त(?त)थोत्तरे । ···श्राद्धं कुर्वंस्तथाप्नोति MārkP. 33. 15; श्राद्धं त्वभिजिता कुर्वन् विन्दतेऽजाविकं फलम् VāyuP. ii. 20. 12; कदलीभिरजाविकं (आदेइयम्) भवति BṛSaṁ. 29. 7; Kāśi-Vṛ. on ii. 4. 11; विभागकाले समसंख्यया यद्विभक्तुमजाविकं न शक्यते ManuBh. ii. 276. 29 (on 9. 119); ii. 456. 8 (on 12. 5); खरोष्ट्राश्वतराणांगाग्शकटाश्मजाविकम् । दातव्यं केशवप्रीत्यै मासि मार्गशिरे नरैः VāmaP. 95. 42; येन शिशुरेव हस्तग्रहणादजाविकं जघान JayaMa. 279. 4 (5. 4); अजाविकं प्रौष्ठपद्यां विन्देद्वाव-स्त(?द्वाश्च त)थोत्तरे ··· श्राद्धं कुर्वंस्तथाप्नोति भरणीष्वायुरुत्तमम् BrahmP. 220. 40; अभूतदुष्टे वारण्ये सदा कुर्वीत गोकुलम् । स(?सु)गुप्तमटवीवासं नित्यं कुर्यादजाविकम् BhaviP. 33B. 22 (i. 12. 45); 708B. 17 (iv. 73. 18); भवेत् । तेषां धनं च पुत्राश्च दासीदासमजाविकम् PadmP. v. 17. 76; कपिलोऽजाविकं पातु GaṇeP. ii. 85. 33; ग्रामजाः पशवः सर्वे वर्जयित्वा त्वजाविकम् । ··· न भक्ष्याः परिकीर्तिताः Mānaso. i. 4. 48; ii. 6. 641; अजा च । अविकश्च । अजाविकम् । अजश्च अविका चेति वा GanRa. 2. 129 (166); भक्षणमर्दनाभ्यां परसस्योपघातिनी महिषी महिषो वा मापानष्टौ दण्ड्यः स्यात् । गौश्चतुरो माषान् । अजाविकं द्वौ द्वौ माषौ Aparā. 769. 2 (on 2. 159); अजाविकेन जीवन्तीति आजाविकाः CaturCin. iii(i). 491. 1; गावश्च पाटलाभिः कदलीभिरजाविकं (निर्देश्यम्) भवति SārṅgaPa. 2316; Prasā. i. 632. 12; अजाविकमिति प्रत्येकं द्वयोर्नक्षत्रयोरन्वेति । अजा छागः, अविर्मेषः, स्वार्थे कः ViraMi. 328. 9 (on 1. 267); 638. 26 (on 2. 259 (?159)); स्वर्णरत्नादिवासांसि गोतुरङ्गमतङ्गजान् । अजाविकमदाच्छम्भूराजो राजसभास्तुतः ParamāKā. 102. 45; 173. 14; अजाविकमिति समाहारद्वन्द्वः BālamBha. ii. 279. 23 (on 2. 159); m. [pl.] हिरण्यं द्विरदानश्वान्महिषोष्ट्रानजाविकान्···दत्त्वा MahāBhā. i. 894*(12); कारणभृतस्य ··· कर्णलक्षणमजाविकानाम् ··· आहरेयुः ArthSā. i. 316. 3 (2. 29); मेदस्य चाग्रहणमतिसादृश्यादजाविकानां ज्वालादीनां दृष्टम् Bṛha. 333. 9 (on i. 1. 20); अजाविकानामश्वानां कुञ्जराणां तथा गवाम् । ··· मरणे समनुप्राप्ते Viṣṇu-DhaP. ii. 125. 46; परस्त्रीनिरताः सर्वे परद्रव्यपरायणाः । मत्स्यामिषेण जीवन्ति दुहन्ति चाप्यजाविकाः (v. l. अजाविकान्) BṛNāraP. 38. 41; खरोष्ट्रगर्दभमहिष्यो महान्तः गौमेष्यमा अजाविके क्षुद्राविति विभागः DaṇḍaVi. 284. 5; 2 wool (produced from goats and sheep) नृपा ददुः । दास्यो रूपसमन्विताः । अजाविकं च विविधम् Rāmā. vii. 39. 10 (Govindarāja); अष्टमराशाविशुः सैक्यं लोहान्यजाविकं चापि । नवमे तु तुरगलवणाम्बराक्षतिलधान्यमूलानि BṛSaṁ. 41. 6 (comm. अजः छागः । अविः प्रसिद्धः । तज्जातमाविकम्); 3 name of a wrestling posture जानीयान्नियुद्धस्याथ कर्म···पर्यासनविपर्यासौ पशुमारमजाविकम् ··· AgniP. 251. 25; पर्णासनं विपर्यासः पशुमारमजाविकम् ··· नियुद्धकर्म जानीयान्नियुद्धकुशलो जनः ViṣṇuDhaP. ii. 182. 22; m. 1 goat-herd or shepherd, who earns livelihood on goats and sheep अजाविको माहिषश्च तथा च वृषलीपतिः । ··· सवासा जलमाविशेत् BṛYamaSm. 3. 26; अजाविको माहिषिकस्तथा चक्रध्वजी च यः BrahmāṇḍP. iii. 2. 166; अजाविको माहिषिकः समुद्री ··· तस्करैश्च प्रपीड्यते SkandP. i(2). 41. 71; अजाविका माहिषिकाः ··· सर्वे नरकगामिनः BhaviP. 284A. 21 (i. 191. 14); अजाविको माहिषिको यः शूद्रावृषलीपतिः PadmP. ii. 67. 85; अजाविको माहिषिकस्सामुद्रः ··· नारकी स्यात् SivaP. v. 6. 38 (412B. 13); 2 one whose wife is barren शुक्रक्षयकरा वन्ध्या त्याज्येति परिकीर्तिता । तस्यास्तु यो भवेद्भर्ता तं तु विद्यादजाविकम् BṛYamaSm. 3. 24; adj. pertaining to goats and sheep हितं घृतं केवलं एव पैत्तिके त्वजाविकं यन्मधुरैर्विपाचितम् SuśruS. vi. 17. 33.

**अजाविककाम** (ajāvika-kāma) *adj.* desirous of obtaining goats and sheep स्वर्गकामः कृत्तिकासु श्राद्धं कुर्यात् । ··· अजाविककामो रेवत्याम् Aparā. 580. 15 (on 1. 267)

**अजाविकधनादि** (ajāvikadhanādi) *adj.* wealth in goats and sheep etc. मेषः समानमूर्तिश्च अजाविकधनादिषु । वृषः सदृशरूपेषु चरते गोकुलादिषु VāmaP. 5. 47.

**अजाविकवध** (ajāvika-vadha) *m.* slaughter of goats and sheep खराश्वोष्ट्रमृगेभानामजाविकवधस्तथा । संकरीकरणं ज्ञेयम् ManuSm. 11. 68.

**अजाविका** (ajāvikā) *f.* [Dv.] female goat and sheep अजा चाविका चाजाविके ManuBh. ii. 181. 21 (on 8. 235); तत्राजाविकानां पञ्च माषान्वक्ष्यति (दण्डं हिंसायाम्) ManuBh. ii. 200. 2 (on 8. 297); अजाविकान्वितागाराद्राज-कोशान्महासनात् । ···मृत्तिकाः । प्रगृह्य···। सर्वबीजैः समायोज्य स्नानकुम्भेषु निक्षिपेत् ViṣṇuDhaP. ii. 104. 90; कार्षापणः पणपर्याय एव पुराणपर्यायत्वेऽजाविकापेक्षया नकुलबिडालयोर्लघुत्वेन दण्डगौरवानुपपत्तेः DaṇḍaVi. 127. 22.

**अजाविकादि** (ajāvikādi) *adj.* male goat and sheep etc. वृषस्योक्ष्णः क्षुद्रपशूनामजाविकादीनां च पुंस्त्वप्रतिघातं वृषणमर्दनेन करोति (शतपणदण्डभाक्) Aparā. 823. 1 (on 2. 234)

**अजाविपाल** (ajāvi-pāla) *m.* rearer of goats and sheep (*fig.* illiterate or ignorant man) आत्मानात्मविवेकिनामपि पण्डितानामजाविपालानामिवाविविक्तौ शब्दप्रत्ययौ भवतः BrahmSūBh. (Śaṅ.) 32. 14 (on i. 1. 4)

**अजाविप्रभव** (ajāvi-prabhava) *adj.* prepared from (the milk of) a she-goat or ewe तक्रं त्वजाविप्रभवं न सेव्यमनिष्टगन्धं त्रिपु चाप्यपथ्यम् Bhojan-Ku. 144. 4.

**अजाविप्रभृति** (ajāvi-prabhṛti) *adj.* beginning with goats and sheep विरूपांश्च सुरूपांश्चाजाविप्रभृतीन्पशूनवरुन्धे ChāndoUBh. 109. 15 (on ii. 15. 2)

**अजाविलोमन्** (ajāvi-loman) *n.* hair of goat or sheep अजाविलोम्ना-मध्वर्योः पवित्रं भवति ĀpaŚS. xix. 6. 8.

**अजाविशेष** (ajā-viśeṣa) *m.* a particular she-goat यथा चमसविशेषो वाक्यशेषावसेयः तद्वदजाविशेषोऽपि हेत्वन्तरेण निश्चेतुं शक्यते SrutaPra. ii. 116. 17 (on i. 4. 8)

**अजावृक्ष** (ajā-vṛkṣa) *m.* the shrub *Odina wodier* अजावृक्षो मेषशृङ्गश्च-क्षुप्यो बहुशृङ्गकः SabdaRa. (Vā.) 955.

**अजावृत** (ajāvṛta) *adj.* surrounded by goats धूम्राक्षः ··· तच्च राजकुलं गतः । ददर्श च तमेकं स अजपालमजावृतम् BhaviP. 705B. 7 (iv. 71. 19)

**अजावृन्द** (ajā-vṛnda) *n.* herd of she-goats अजावृन्दमथालोक्य निविष्टं सुसुखान्वितम् SkandP. vi. 133. 6.

**अजावृष** (ajā-vṛṣa) *m.* male goat [AltGr. II. 1. 118; Hemac. on Uṇ. 518]

**अजाव्रज** (ajā-vraja) *m.* herd of she-goats कस्मिन्नप्यवसरे क्वापि ग्रामे पियासुरन्तरालेऽजाव्रजं व्रजन्तमालोक्य PrabaCin. 69. 31; अन्यदा क्वापि ग्रामेऽजा-व्रजं चरन्तं प्रेक्ष्य PurāPraSaṁ. 132. 8.

**अजाव्यादि** (ajāvy-ādi) *adj.* goat, sheep etc. क्षुद्रपशूनामजाव्यादीनां दुःखोत्पादे ··· चतुःपणादिक्रमेण दण्डो वेदितव्यः DipKa. 66. 26 (on 2. 225)

**अजाशकृत्** (ajā-śakṛt) *n.* faeces of a she-goat अजाशकृन्मूत्रपयोघृतासृङ्-मांसालयानि प्रतिसेवमानः । ··· जहाति ··· शोषम् SuśruS. vi. 41. 56; AṣṭāSaṁ. i. 193. 5 (1. 40); गवां कटुक(-मूत्रीक)मुष्णवीर्यमजाशकृत् । ग्रहणीं दीपयत्याशु Hastyāyur. 299. 24 (2. 60); RasPraSu. 4. 86; अजाशकृत्तुपाग्निं च खनयित्वा भुवि क्षिपेत् RaseCin. 3. 20 (21. 13)

**अजाशब्द** (ajā-śabda) *m.* the word *ajā* नायमजाकृतिनिमित्तोऽजाशब्दः BrahmSūBh. (Śaṅ.) 243. 9 (on i. 4. 10); 240. 17 (on i. 4. 8); 243. 5 (on i. 4. 10); अजाशब्दो यद्यपि छागायां रूढस्तथाप्यध्यात्मविद्याधिकाराच्च तत्र वर्तितुमर्हति Bhām. 290. 9 (on i. 4. 8); नायमजाशब्दस्तन्त्रसिद्धप्रधानविषयः VedautDī. 68. 4 (on i. 4. 8); PrakaVi. 340. 17; अपरप्रेर्यत्वलक्षणस्वातन्त्र्यप्रतीत्यभ्युपगमेऽपि तादृश-स्वातन्त्र्यलक्षणं कर्तृत्वं किं प्रकृत्याश्रयं उताजाशब्दवाच्यप्रकृतिशरीरकब्रह्माश्रयम् SrutaPra. ii. 116. 26 (on i. 4. 8); VedāutKau. 123. 6 (on i. 4. 8); न जायत इति योगेनाजन्ममात्रपरस्याजाशब्दस्य सांख्याभिमतप्रकृतिपरत्वे विशेषकाभावादिति सौत्रं हेतुं व्याचष्टे SivārkaMaDī. i. 522. 22 (on i. 4. 8)

**अजाशृङ्ग** (ajā-śṛṅga) *n.* horn of a she-goat अजाशृङ्गनिभं श्यामं सुपीनं शृङ्गसंभवम् । भङ्गे च शृङ्गवेरामं ख्यातं तच्छृङ्गिणां विषम् KātySm. 446; वेणु-मूलैरजाशृङ्गैर्गोमूत्रैश्चामरैः समाः(?मा) । माया तथैव जायेत चतुर्गतिवितीर्णये YaśasCam. ii. 416. 18.

[1]**अजाश्रय** (aj-āśraya) *adj.* relating to (or depending on) a vowel प्लुत्यादिष्वजाश्रयो विधिर्न सिध्यति MahāBh. i. 22. 7 (on i. 1. 0)

[2]**अजाश्रय** (ajāśraya) *adj.* resorting to *aja* (Viṣṇu) स रेमे पद्मया तत्र वर्षपूगानजाश्रयः । ···कल्किः KālkiP. ii. 6. 32.

**अजाश्रयणतत्पर** (ajāśrayaṇa-tatpara) *adj.* persisting in its resort to the zodiacal sign Aries अजाश्रयणतत्परो भवतु स द्विजाधीश्वरः YātrāPra 2. 22.

**अजाश्रुति** (ajā-śruti) *f.* the Vedic word *ajā* तयैदानीमजाश्रुतिरपि ब्रह्मणि नीयते VedāntKau. 123. 2 (on i. 4. 8)

[1]**अजाश्व** (ajā́śva) *adj.* one having goats as his horses or vehicle (epithet of Pūṣan) पूषणं न्व१जाश्वमुप स्तोषाम वाजिनम् ṚV. vi. 55. 4; i. 138. 4; vi. 55. 3; अविता नो अजाश्वः पूषा ṚV. ix. 67. 10; vi. 58. 2; अजाश्वेति पूषणमाह Nir. 4. 25 (88. 6); बृहस्पतिमजाश्वं च सतारं बभ्रुमेव च । पञ्चैनं स्तुवन्नेतान्पञ्चकामानवाप्नुयात् ViṣṇuDhaP. ii. 124. 58.

[2]**अजाश्व** (ajāśva) *m.* [Du.] goat as well as horse अजाश्वयोर्मुखं मेध्यं न गौर्न नरजा मलाः YājñaSm. 1. 194; अजाश्वयोर्मुखं संयोगाद्द्रव्यान्तरशोधकत्वेन मेध्यमुच्यते । स्पर्शमेध्यता तु तयोः सर्वाङ्गविषयैव Aparā. 276. 11 (on 1. 194);

*n.* अजाश्वं मुखतो मेध्यं गावो मेध्यास्तु पृष्ठत: S'ārṅgaPa. 605; अजश्चाश्वश्च मुखप्रदेशे मेध्य: । अजस्यापि कथञ्चित्सेनाङ्गत्वादजाश्वमित्येकवद्भाव: ViraMi. 270. 11 (*on* I. 194)

**अजासन** ( ajāsana ) *adj.* whose seat is a goat विभावयेत् ··· सप्तार्चिषं च विभ्राणमक्षमालां कमण्डलुम् । ज्वालामालाकुलं रक्तं शक्तिहस्तमजासनम् AgniP. 96. 27.

**अजासमजतस्** ( ajāsamaja-tas ) *adv.* from a herd of she-goats अजासमजतो मध्यात्काचिदेका च बर्करी । भ्रान्ता सती समायाता प्रदेशे तत्र दुश्चरे SkandP. i(2). 39. 72.

**अजासर्पिस्** ( ajā-sarpis ) *n.* clarified butter obtained from (the milk of) a she-goat अजासर्पिषा क्षीरेण जीवनीयैश्च संस्कृतां यवागूं पिबेत् AṣṭāSaṁ. i. 215. 21 (2. 4); एतै: सिद्धमजासर्पिरूपकादिगणेन च । भिनत्ति कफसंभूतामश्मरीं क्षिप्रमेव च SiddhYo. 34. 19.

**अजासादृश्यकल्पना** ( ajāsādṛśya-kalpanā ) *f.* idea of similarity with a she-goat ईश्वरादुत्पन्नायामपि चराचरप्रकृतावजासादृश्यकल्पनयोपदेशादविरोध: BrahmSūBh.( Bhā.) 75. 20 (*on* i. 4. 10)

**अजासुत** ( ajā-suta ) *m.* young one of a she-goat, a kid अजासुतस्य बालस्य मांसं लघुतरं स्मृतम् BhāvPra.( Bhā.) 6( 11). 77.

**अजास्तन** ( ajā-stana ) *m.*, *n.* the udder or teat of a she-goat अजास्तनाभकन्दा तु सक्षीरा क्षुपरूपिणी । अजा महौषधी ज्ञेया शङ्खकुन्देन्दुपाण्डुरा SuśruS. iv. 30. 17.

**अजास्तनंधय** ( ajā-stanandhaya ) *m.* unweaned young one of a she-goat, a kid साधु भवत्ययमजास्तनंधय: खलु यज्ञकर्मणे YaśasCam. ii. 131. 7; ii. 132. 2.

**अजास्थिमज्जा** ( ajāsthimajjā ) *f.* marrow of the bone(s) of a goat हरेणुमगधाजास्थिमज्जैलायकृदन्वितम् । यकृद्रसेनाञ्जनं वा श्लेष्मोपहतदृष्टये SuśruS. vi. 17. 23 ( comm. मगधाजास्थिमज्जा पिप्पलीवितुषत्रीजानि )

**अजास्पृश्या** ( ajāspṛśyā ) *f.* name of the plant *Adhatoda vasica* अजास्पृश्या तथाज्येन पीता सर्वविषापहा ĪśānS'iPa. i. 40. 62.

**अजास्य** ( ajāsya ) *n.* mouth of a goat किं याति कूष्माण्डफलं ह्यजास्ये SkandP. iv. 5. 15.

**अजास्वरूप** ( ajā-svarūpa ) *n.* characteristic feature or nature of Primordial Matter तैत्तिरीयोपनिषदि अजास्वरूपमुक्त्वा तदितरत्वमीश्वरस्य दर्शितम् S'aṅkaVi.( Ā.) 124. 12.

**अजास्वामिन्** ( ajā-svāmin ) *m.* owner of a she-goat तस्यास्तत्र ( ? तस्य तत्र ) द्विज: कश्चिदजास्वाम्यच्छिनद्रुषा । ···वृषणम् BhāgP. ix. 19. 10.

**अजाहित्वा** ( a-jāhitvā ) *ger.* not leaving out or not abandoning (i. e. taking) अन्येद्यु: ··· । अभूज्जहित्वा समयं स्वसामग्निकामजाहित्व ऋतुर्धनानाम् DvyāśraKā. 10. 15 ( comm. अजाहित्वा गृहीत्वा । ··· हित्वा इत्यत्र 'हाको हि: क्त्वि' इति हि: । यङ्लुपि । जहित्वा । द्वित्वे पूर्वदीर्घत्वमपीच्छन्त्येके । अजाहित्वा । उभयत्रेटि- आतो लुक् )

**अजाह्वय** ( ajāhvaya ) *adj.* called *ajā* ( a plant ) नैम्बैर्गुडाजाह्वयहिङ्गुविश्वारसोनका: पूर्ववदेष हिङ्गु: । अजाक्षीरपेषणधान्यराशिस्थापनयेत्यर्थ: ĪśānS'iPa. i. 50. 13.

[1]**अजि** ( aji ) (Gr.) verbal root *aj* अजेर्व्यघञपो: P. ii. 4. 56; PrakriKau. ii. 479. 10; अजेर्वी Kātan. iii. 4. 91; अजेर्व्ययुघञप्क्येषु CāndraVyā. v. 4. 84; अजिव्रज्योश्च P. vii. 3. 60; अजिव्रजो: CāndraVyā. vi. 1. 91; अक्षोऽजेरश्चतेस्त AhirbuS. 59. 10; वातशर्धयोरजिजहातिभ्याम् SaraKaṇṭhā.(Gr.) i. 4. 46; अजिवृरीभ्यो नित् SaraKaṇṭhā.(Gr.) ii. 1. 56; अयञ्क्यवलच्यजेर्वी SiddhaHe. iv. 4. 2; तद्धि रूपमजेर्वीभावेनेति PariVṛ(Sī.) 190. 6; *f.* going, motion [Apte]; throwing etc. [Apte]; *adj.* going, moving (as in पदाजि, walking on foot) [Apte]

[2]**अजि** ( aji ) (Gr.) grammatical suffix ( =*aj* ) पारेरजि: SaraKaṇṭhā. (Gr.) ii. 1. 248 ( Vṛtti : पारेरजिप्रत्ययो भवति । पारक् प्राकार: शाकविशेषश्च )

[3]**अजि** ( aji ) *m.* [ from *añj-* Uṇā. 4. 139 ] lustre अज्यते अजिस्तेज: Prasā. ii. 608. 3.

**अजिक** ( ajika ) *m.* name of a demon (one of the thirteen sons of Siṁhikā and Vipracitti) सैंहिकेया इति ख्यातास्त्रयोदश ··· अजिको नरकश्चैव S'ivaP. v. 32. 36 (443A. 13)

**अजिकर** ( ajikara ) *m.* name of a *gandharva* [*w. r.* for अजगर cf. ViṣṇuDhaP. i. 210. 4] प्रभद्रकेण शिबिना तथैवाजिकरो रणे । -- संगत: ViṣṇuDhaP. i. 261. 9.

**अजिका** ( aj-ikā ) *f.* young she-goat [cf. P. vii. 3. 47] भस्त्रैषाजाज्ञाद्वास्वानां नञ्पूर्वाणामपि (?) ... भस्त्रानां नञ्सेऽपि । भस्त्रा एषा अजा ··· इत्येषां नञ्से असेऽपि आत: स्थाने यो आकार: तस्य वा इद् भवति । ··· अजका । अजिका JaineVyā. 367. 17 ( *on* v. 2. 52 ); भस्त्रादीनामाप: स्थानेऽत: के परत आप्यसुप इत्वं वा भवति । ··· अजिका, अजका CāndraVṛ. *on* vi. 1. 72; ( अतियाकुच्छी ) अजिकाया इवोन्नतत्वात् कुक्षी यस्य स तथा JñātāDhaṬ. 66B. 6; PrakriKau. i. 332. 3; SiddhāKau. 115B. 10.

**अजिकागतितुल्यत्व** ( ajikāgatitulya-tva ) *n.* being similar to the gait of a young she-goat उत्प्लुत्या किंचिदेक: सक्थिगुल्फदेशेभ्य: पुनरुत्प्लुति: अङ्गान्तरेणैवमिति पर्यायश: पतनं यत्र चार्या सा अजिकागतितुल्यत्वादेडकाक्रीडिता AbhinBhā. ii. 98. 14 (*on* 10. 20)

**अजिकाचर्मन्** ( ajikā-carman ) *n.* skin of an unspecified she-goat अजिकाचर्मपर्याणारिं हन्तुमजकामिव । तत्वरेऽश्वचमू: सेपुभस्त्रिका DvyāśraKā. 5. 10 ( comm. अश्वचमू: ··· अज्ञाता छाग्यजिका तस्याश्चर्मणा पर्याणं पल्ययनं यस्या: सा )

**अजिगमिषत्** ( a-jigamiṣat ) *adj.* not desiring to go यथाविवक्षत्यजिगमिषति मयि वचनगमनप्रतिभासा: प्रत्ययाश्चेतनसंतानान्तरसापेक्षा: Bhām. 441. 18 (*on* ii. 2. 28); SarvaDaSaṁ. 2. 254.

**अजिगर्त** ( ajigarta ) *m.* name of a Brahmin cf. **अजीगर्त**, तथाजिगर्तस्य सुतो वरिष्ठो नाम्ना शुन:शेप इति प्रसिद्ध: । क्रीतस्तु पित्रा DeviBhāP. ii. 5. 40.

**अजिगव** ( ajigava ) *n.* S'iva's bow cf. **अजीगव**, भवेदजागवमजिगवं चाजगवं तथा DvirūK.( Ha.) 180.

**अजिगीष** ( a-jigīṣa ) *adj.* not desirous of conquests तत्सर्वमजिगीषेण त्यक्तमेतेन भूभृता KathāSaSāg. iii. 1. 7; क्षत्रियस्याजिगीषस्य धिग्बाहू धिक्च यौवनम् KathāSaSāg. vii. 8. 80.

**अजिगीषा** ( a-jigīṣā ) *f.* absence of a desire to win (in gambling) पूदिव्यञ्चेनीशाजिगीषापादाने S'ākaṭāVyā. iv. 1. 248 ( Vṛtti पू दिवि अञ्चि इत्येतेभ्यो यथासंख्यं नाशे अजिगीषायामपादाने च वाच्ये क्तयोर्नकारो भवति । पूना: यवा: । आद्यूनो देवदत्त: । परिद्यूनं वस्त्रम् । ); दिव्यञ्चयोऽजिगीषास्पर्शे न तस्तयो: MugdhaBo. 8. 90 (160. 2) ( Vṛtti दिवेरजिगीषायाम् अञ्चतेर् अजे श्यायतेर् अस्पर्शेऽर्थे तयोस् तस्य न: स्यात् । आद्यून: ) (cf. P. viii. 2. 49)

**अजिगीषु** ( a-jigīṣu ) *adj.* not desirous of conquest अजिगीषु: पतिर्भूमेर्निन्द्य: क्लीब इव स्त्रिया: KathāSaSāg. ix. 2. 370.

**अजिगीषुता** ( ajigīṣu-tā ) *f.* the nature of not being desirous of conquest, absence of desire for victory तात न क्षत्रियस्यैष धर्मो यदजिगीषुता KathāSaSāg. x. 3. 70.

**अजिघांसत्** ( a-jighāṁsat ) *adj.* not desiring to strike or kill युगानीषा वरूथानि यन्त्राणि विविधानि च । अजिघांसन्परात्पार्थश्चिच्छेद निशितै: शरै: MahāBhā. i. App. I. 114. 427; जयार्थमेव योद्धव्यं न क्रुध्येदजिघांसत: MahāBhā. xii. 96. 11.

**अजिघांसा** ( a-jighāṁsā ) *f.* absence of desire to kill प्राणी···आचरति । ···शरीरेण प्रशस्तानि दानपरपरित्राणादीनि । वाचा हितसत्यादीनि । मनसा अजिघांसादीनि । सेयं पुण्यरूपा प्रवृत्तिर्धर्म: SarvaDaSaṁ. 11. 86.

**अजिघांसु** ( a-jighāṁsu ) *adj.* who is not inclined to kill or hurt सोऽजिघांसुर्गुरुं संख्ये ··· चकार MahāBhā. vii. 122. 6; परत्राजिघांसुमनसां व्रतरिक्तमपि चित्तं स्वर्गाय जायते NitiVā. 1. 6; सर्वथाप्यजिघांसूनां गुरुदेवहितैषिणाम् । अदीर्घमत्सराणां च मुक्तिरासन्नवर्तिनी ṢaḍdarSa.( Rā.) 178.

**अजिघृक्षण** ( a-jighṛkṣaṇa ) *n.* absence of desire for perception भावांशो ननु लिङ्गं स्यात्तदानीं नाजिघृक्षणात् S'lokaVār. 5( 8). 29 (484. 2)

**अजिघृक्षित** ( a-jighṛkṣita ) *adj.* not intended to be perceived अभावावगतेर्जन्म भावांशे ह्यजिघृक्षिते S'lokaVār. 5( 8). 30 (484. 3)

**अजिघृक्षितत्व** ( ajighṛkṣita-tva ) *n.* the state of not being intended to be perceived भूप्रदेशप्रतिपत्तिवेलायां देवदत्तविषयं दृश्यादर्शनमासीत् । न च तदा 'नास्ति' इति विज्ञानमुत्पन्नम्, अजिघृक्षितत्वेन सहकारिकारणाभावेन च TātpṬ.( U.) 417. 10 (*on* 5( 9). 28)

**अजिघ्रता** ( ajighra-tā ) *f.* absence of the sense or faculty of smell बाधिर्यकुष्ठितान्धत्वजडताजिघ्रतामूकताकौण्यपङ्गुत्वक्लैब्योदावर्तमत्तताख्यैकादशेन्द्रिय-वध° ··· °भेदात् अष्टाविंशतिधा शक्ति: SyādvāMañ. 15 (160); SāṁkhyaPraBh. 97. 27 (*on* 3. 38)

**अजिघ्रत्व** ( ajighra-tva ) *n.* absence of the faculty of smell उच्चै: संभाषणाद्वायु: शिरस्यापादयेद्रुजम् । आन्ध्यं जाड्यमजिघ्रत्वम् ··· लभते दन्तचालं च SuśruS. iv. 39. 30.

**अजिघ्राण** ( a-jighrāṇa ) *adj.* not smelling, who has not got the faculty of smell घ्राणात्पश्चाद्विनिष्क्रान्तौ नासत्यौ ··· । अजिघ्राणमनुं प्राहुर्न देह: पतितस्तदा SkandP. ii(7). 19. 43 ( comm. गन्धग्रहणमकुर्वन्तम् )

**अजिज्ञासन** ( a-jijñāsana ) *n.* absence of the desire to know प्रसिद्धस्य ज्ञातुं शक्यस्याप्यजिज्ञासनाद् अप्रसिद्धस्येच्छाया अविषयत्वाद् अशक्यज्ञानत्वाच्च न

ब्रह्म जिज्ञास्यमित्याक्षेपः Bhām. 60. 3 (*on* i. 1. 1)

**अजिज्ञासमान** (a-jijñāsamāna) *adj.* who is not desirous of knowing बालः ··· यथा(? दा) शब्दं शृणोति तदा तस्याजिज्ञासमानस्यैवार्थेषु स्मृतिरुपजायते NītiMā. 58. 16.

**अजिज्ञासा** (a-jijñāsā) *f.* absence of the desire to know अवते भवते बाहुर्महीमर्णवशक्करीम् । महाराजन्नजिज्ञासा नास्तीत्यासां गिरां रसः Kāvyād. 3. 149.

**अजिज्ञासित** (a-jijñāsita) *adj.* not desired or intended to be known अजिज्ञासितानामर्थानां प्रत्यक्षादिगोचरत्वदर्शनात् TātpaṬ.(Vā.) 42. 1 (*on* i. 1. 1); अजिज्ञासितस्य चिरातिवृत्तस्याज्ञानानुसंधानानुपपत्तिः NyāyKu. 79. 9; न च ज्ञानानां जिज्ञासासमुत्पाद्यत्वं घटते । अजिज्ञासितेष्वपि योग्यदेशेषु विषयेषु तदुत्पादप्रतीतेः SyādvāMañ. 12(93); नापि (अनुव्यवसायः) मानसं प्रत्यक्षम्, अजिज्ञासितस्य मानसत्वे ज्ञानाविरामादनवस्थानात् विषयान्तरासञ्चाराच्च TattvCin. i. 789. 6; न ह्यजिज्ञासितेऽर्थे प्रवृत्तिसहस्रदर्शनेऽपि व्युत्पद्यन्ते NyāySu.(Ja.) 72A. 7 (*on* i. 1. 1); परमाण्वादौ(? दिषु) कदाप्यनुपलब्धत्वात् ··· अजिज्ञासितेपूपलब्धस्थूलकार्यानुपपत्तिपरिहारार्थं प्रमाणप्रवृत्तिदर्शनेन MīmāKau. i. 21. 3 (*on* i. 3. 4); अजिज्ञासितस्यापि वह्नेरनुमित्युदयात् BhāṭṭCin. ii. 21. 7 (*on* i. 3. 2)

**अजिज्ञासितत्व** (ajijñāsita-tva) *n.* the state of not being what is desired to be known (not being an object of desire to know) जिज्ञासितधर्मणो धर्मिणः प्रक्ष्यमाणत्वेन पक्षत्वं न पुनः प्रत्यक्षावधृतसाध्यधर्मविरुद्धस्य । तस्याजिज्ञासितत्वेनापक्षतया तद्धर्मस्यापक्षधर्मत्वम् TātpaṬ.(Vā.) 43. 11 (*on* i. 1. 1); अजिज्ञासितत्वाद्धि नापिपासुं प्रति जलाशयोपदेशः क्रियते NyāySu.(Ja.) 70B. 2 (*on* i. 1. 1); 105A. 1 (*on* i. 1. 2)

**अजिज्ञासितपूर्व** (a-jijñāsitapūrva) *adj.* not desired to be known before (i. e. unheard of) (औषधम्) अजिज्ञासितपूर्वं च गुणैश्चोक्तैर्विवर्जितम् ···तच्च वर्ज्यं विजानता KāśyaS. 245A. 16.

**अजिज्ञासितप्रतिपादकता** (ajijñāsitapratipādaka-tā) *f.* presentation or teaching of what is not desired to be known न ह्यजिज्ञासितप्रतिपादकतया शास्त्रारम्भः संभवति NyāyRa. 42. 13 (*on* 1. 124)

**अजिज्ञासितबोधन** (ajijñāsita-bodhana) *n.* instruction of what is not desired to be known अजिज्ञासितबोधनं च कथं प्रयोजनं स्यादिति NyāySu.(Ja.) 105A. 2 (*on* i. 1. 2)

**अजिज्ञासिताभिधान** (ajijñāsitābhidhāna) *n.* statement of what is not desired to be known अजिज्ञासिताभिधानापत्तेस्तस्याप्रक्रान्तत्वात् GuruCandr. ii. 303. 17.

**अजिज्ञासु** (a-jijñāsu) *adj.* not desirous of knowing, not interested in knowing कस्यचिदाध्यात्मिकेन दुःखेनाभिभूतस्यापि संसारेऽनुद्वेगादजिज्ञासोर्न ज्ञानं तत्प्रमादम् TattvSa. (13) 133. 9; आत्मरूपविजिज्ञासोरजिज्ञासोर्वृथैव तत् BrahmSi. iii. 152. 8; PārāSū. 91. 10; न चाजिज्ञासोस्तत्त्वज्ञानम् NyāyKa. 282. 12; NyāyKuA. ii(1). 211. 1 = Kiraṇā. 312. 9; Kāśi. iii. 131. 15 (*on* 5(5). 91)

**अजिज्ञास्य** (a-jijñāsya) *adj.* not to be investigated or inquired into जिज्ञास्यः संशयाद्धर्मः ··· असंदिग्धो ह्यजिज्ञास्यः S'lokaVār. 1. 125 (42. 4); आत्मा संशयाभावादजिज्ञास्य इति सिद्धम् Bhām. 3. 6 (*on* i. 1. 1); विमतमजिज्ञास्यमसंदिग्धत्वात् SarvaDaSaṁ. 16. 114.

**अजिज्ञास्यत्व** (ajijñāsya-tva) *n.* the state of being unfit for investigation ततो (ब्रह्म) ज्ञातमेवेत्यजिज्ञास्यत्वं पुनरापन्नम् BrahmSūBh.(S'aṅ.) 8. 19 (*on* i. 1. 1); धर्मस्याजिज्ञास्यत्वात् NyāyRa. 42. 13 (*on* 1. 124); VedāntKa. 24. 16 (*on* i. 1. 1); नैतावता प्रधानादीनामजिज्ञास्यत्वम् S'rutaPra. i(B.) 171. 15 (*on* i. 1. 4); TattvPrakā. 8B. 10 (*on* i. 1. 2); AṇuBh. 8. 10 (*on* i. 1. 1)

**अजित्** (a-jit) *adj.* having no conqueror, invincible गर्भे च वायुना पूर्णे निर्लिप्तो भगवानजित् । हृत्पद्मकोशे देवक्या अधिष्ठानं चकार ह BrahmVaiP. iv. 7. 45.

**अजित** (a-jita) *adj.* [*f.* -ā] **A i** unconquered, undefeated, not vanquished (mostly in battle) अस्य मदे जरितरिन्द्रः ··· अजितः ṚV. (Khila) v. 5. 11; अजितस्य वाजिती ĀrṣeBr. ii. 6. 7; अजितस्य जितिः ĀrṣeBr. vi(3). 5. 4; यमग्निर्ब्राह्मणो भूत्वा समागच्छत् ··· महाबलं महाबाहुमजितं कुरुनन्दनम् MahāBhā. iv. 2. 10; iv. 53. 12; xii. 94. 5; VasiDS. 20. 28; अजितोऽहमस्मि VṛGautaSm. 519. 20(4); कुण्डोदरोऽहमजितो रणचण्डकर्मा BālC. 2. 21; अजितो जिष्णुरत्यन्तम् RaghuVa. 10. 18; अजितो देवदैत्याद्यैर्महापुरुषपूर्वजः AhirbuS. 53. 75; यो मन्येताजितोऽस्मीति न्यायेनापि पराजितः MatsyaP. 227. 205; अजितो रिपुरात्मैव तं मूढ न जिगीषसि RāmC. 21. 122; धेनुकः । ···अजितस्त्रिदशैः सर्वैः BrahmVaiP. iv. 22. 10; VāmaP. 60. 46; BrahmP. 58. 12; चणतंदुलहोमेनाजितो भवेत् BhaviP. 63A. 1 (i. 29. 21); BṛKathāS'loSaṁ. 23. 113; Kāvyānu.(He.) 259. 3; जिता अप्यजिता एव शत्रवः TriṣaS'aPuC. ii. 1. 224; अजितोऽपीन्द्रियै रेमे रामाभिः TriṣaS'aPuC. ii. 3. 76; सपत्नैरजितो राजा SamarāSaṁ. 7. 492; PrabaK. 10. 5; Subhāṣi. 1462; VīraBhā. 6. 43; S'ilpaRa. ii. 23. 39; Vīrami.(Bhakti) 31. 20; **A ii** invincible तस्य तत् ··· चक्रं प्रावर्तत ···दिव्यमजितम् MahāBhā. i. 69. 45; अनेन सत्येन निहन्त्वयं शरः सुदंशितः कर्णमरिं ममाजितः MahāBhā. viii. 67. 20; अजितं पुण्यमूर्जस्वि ककुत्स्थस्येव ते महः । श्रेयसे शाश्वतो देवो वराहः परिकल्पताम् UttaRāC. 5 27; PadmP. ii. 31. 66; KathāSaSāg. viii. 6. 184; **B** not won, not attained इन्द्र एतां ससृजे ··· स्वधाम् अजिताम् AV.(P.) i. 13. 4; अभिजिता वै देवा अभ्यजयंस्तदु हान्विवैव ससञ्ज यदजितं पर्यशिष्यत KauṣīBr. 24. 1 (107. 21); यद् ब्रवीषि जितां कृष्णामजितेति MahāBhā. ii. 61. 30; तेनासौ कर्मणा भीष्म (v. 1. तेनाप्नोत्यजिताल्लोँकान्) MahāBhā. iii. 80. 49 = PadmP. i. 11. 28; येषां पक्षधरो रामः ···मन्त्री जनार्दनः । किं नु तैरजितं संख्ये MahāBhā. i. 197. 20; iii. 203. 48; vii. 53. 50; ब्राह्मणैनैधितं क्षत्त्रं मन्त्रिमन्त्राभिमन्त्रितम् । जयत्यजितमत्यन्तं शास्त्रानुगमशस्त्रितम् ArthS'ā. i. 47. 4 (1. 9); राजेव देशानजिताञ्जिगीषुः Saund. 17. 56; BṛĀraUBh. 193. 17 (*on* i. 5. 17); तदेकस्मिन्नजिते । किं जितं त्वया TriṣaS'aPuC. i. 5. 10; अजितं भूमिहिरण्यादि जेतुमिच्छेत् ManvaMu. 265. 8 (*on* 7. 99); अजितायां (भूम्याम्) तु सैव पुनरभ्यसनीया JīvanVi. 112. 21; **C** not cured योगशतैरप्यजितान् महाविकारान् (हन्यात्) CaraS. vi. 7. 147 (1922 Ed.); SiddhYo. 51. 92; **D** unsurpassed वीरः श्रीपरमारः ··· वर्द्धते[ऽ]यमहिमांशुचन्द्रमःसंततिप्रतिकृतिर्यदन्वयवराजरामराजितो[ऽ]नलोद्भवः सभारतः । ग्रहेन्द्रचन्द्रयोरिव व्यजायतायमन्वयः EI. ii. 183. 9; **E** uncontrolled इन्द्रियैरजितैर्नद्धा दुकूलेनापि संवृताः BrahmāṇḍP. i. 27. 119; LiṅgaP. i. 34. 14; AgniP. 392. 12; कायस्थैरजितैर्जिते क्षितिपतौ ··· दीनो जनः पीड्यते DaśāvaC. 7. 280.

**अजित** (a-jita) *m.* [in *kṛśāśvādigaṇa* acc. to Prasā. on PrakriKau. i. 160. 21 (*on* P. iv. 2. 80)] **1 A** name of a son of Dhṛtarāṣṭra **B** name of a king **C** name of a disciple of a Bodhisattva **D** name of a minister of Dhṛtisena **E** name of a person (father of Vatsa) **F** name of a friend of Kṛṣṇa **G** name of an Upāsaka (lay follower) of the ninth Jain prophet **H** name of an author **2 A** name of S'iva **B** name of one of the Pṛthuka gods **C i** name of Viṣṇu or Kṛṣṇa **ii** name of the third *vyūha* (Pradyumna) of Viṣṇu **D** epithet of Sūrya **E** the Supreme Self **3 A** name of one of the Saptarṣis in the epoch of Bhautya Manu **B** in the epoch of Satya Manu **4 A** name of a group of attendants of Brahmā **B** of the sons of Brahmā **C** of the twelve sons of Ajita and Ruci **D** of twelve gods **5 A** name of a Bodhisattva **B** one of the six teachers (contemporaries of the Buddha) **C** the second Jain prophet **6** kind of a rat **7** unfailing antidote to poison **8** the letter *j* **9** a Tantric diagram **10** name of a *mantra* **1 A** name of a son of Dhṛtarāṣṭra नामधेयानि ···धृतराष्ट्रस्य पुत्राणाम् ···अजितश्च जयन्तश्च MahāBhā. i. 1153*; **1 B** name of a king श्रुतवानसि वै राज्ञः महोत्साहान्महाबलान् । ···शर्यातिमजितं जितम् MahāBhā. i. 1. 167; **1 C** name of a disciple of a Bodhisattva अथ कदाचित् स महात्मा ···तत्कालशिष्येणाजितेनानुगम्यमानः ···विचचार JātaMā. 3. 4; **1 D** name of a minister of Dhṛtisena श्रुत्वा ततोऽनन्तवचोऽजितस्तु जगाद वाक्यं पुनरन्यदेव VarāṅgaC. 2. 21; 20. 21; 21. 57; **1 E** name of a person (father of Vatsa and grandfather of Yaśobhaṭa) वालेनाजितपौत्रेण स्फुटा वत्सस्य सूनुना[।] यशोभटेन EI. iv. 32. 11; **1 F** name of a friend of Kṛṣṇa कोटिसंख्याः सखीयन्ते तेषां मुख्या हरेः प्रियाः । ··· सञ्जयोऽजितसंज्ञश्च कृष्णस्यासन्सखिप्रियाः ĀdiP. 12. 44; **1 G** name of an Upāsaka (lay follower) of the ninth Jain prophet विजयोऽजितः ··· अर्हदुपासकाः AbhidhāCin. 42; **1 H** name of an author यदप्यत्राजितभवदेवादिभिः परिहृतं लिङ्गसंख्यादेः लक्षितद्रव्य एवान्वयः MīmāKau. ii. 164. 5 (*on* iii. 1. 12); **2 A** name of S'iva नमोऽस्तु ···ब्रह्मण्यायाजिताय च MahāBhā. vii. 57. 54; अष्टोत्तरसहस्रं तु नाम्नां शर्वस्य मे शृणु ··· अजितश्च MahāBhā. xiii. 17. 87; देवा ऊचुः ··· नमः पवनवेगाय विरूपायाजिताय च BrahmP. 37. 2; LiṅgaP. i. 27. 34; नम तं शिवं हरमजितम् SaṁgīRa. i. 279. 21 (1(8). 14); NānārthaMa. 743; **2 B** name of one of the Pṛthuka gods विष्णुश्च विजयस्तथा । अजितश्च महाभागः पृथुकास्ते दिवौकसः VāyuP. ii. 1. 62; BrahmāṇḍP. i. 36. 74; **2 C i** name of Viṣṇu or Kṛṣṇa. यमाहुर्वेदविद्वांसो वराहमजितं हरिम् MahāBhā. iii. 294. 28; तुषितायां समुत्पन्नो ह्यजितस्तुषितैः सह । औत्तमे ह्यन्तरे वापि अजितस्तु पुनः प्रभुः BrahmāṇḍP. ii. 3. 114 = ViṣṇuP. iii. 1. 37; Amak. 2458; स्वाङ्गोऽजितः (इति केशवस्य नाम्नां सहस्रम्) ViṣṇuSaBh. 88. 72; अहमजितस्य ··· प्रणतिमुपगतः पादपङ्केरुहाभ्याम् ViṣṇuPādāSt. 13; इमं पुष्पाञ्जलिमजित ते मूर्ध्नि निदधे BhagaMāPū. 8; AcyutA. 4; रुद्धा गुहाः किमजितोऽवति नोपसन्नान् BhāgP. ii. 2. 5; (जपन् वै पञ्चपञ्चाशद् विष्णुनामानि) विशाखयूपे ह्यजितं नेपाले लोकभावनम् AgniP. 304. 8; VāmaP. 90. 6; (हरिः) स्वायम्भुवे मानसोऽभूदजितस्तदनन्तरे AgniP. 150. 10; BṛKathāMañ. xv.

1. 198(1); नमाम्यहम् ··· योगीशमजितं प्रियम् PadmP. ii. 87. 19; ii. 88. 42; अजितम् ··· चिन्तयेत् KrsnaKa. 3. 100; Yādavā. 15. 9; NānārthaMa. 743; रेखा दक्षिणवाममध्यरचिता ब्रह्माजितानङ्गजिद्देवत्या: TantrSa. 2. 131; RasiRañ. 19; StavMā. 153. 7; Nāray. iii. 12. 5; S'ilpaRa. ii. 3. 10; VīraMi. (Bhakti.) 6. 9; **2 C** name of the third *vyūha* form (Pradyumna) of Viṣṇu सर्वाः सख्यः ··· निरीक्षमाणा वदनं जयाया अजितस्य च JayāS. 27. 108; **2 D** epithet of Sūrya इति ह्रुष्टा रविन् ··· स्तुतिं चक्रार ··· नमः ··· अजिताय ते SaurP. 1. 31; **2 E** (L.) Supreme Self अजितः। अपराजितविष्णवीशपरमात्मसु कथ्यते NānārthaMa. 743; **3 A** name of one of the Saptarṣis in the epoch of Bhautya Manu (भौत्यस्य मनोः मन्वन्तरे) अग्नीध्रः ··· शुक्रोऽजितश्च सप्तैते तदा सप्तर्षयः स्मृताः MārkP. 100. 31; **3 B** name of one of the Saptarṣis in the epoch of Satya Manu चतुर्दशे तु पर्याये सत्यस्यैवान्तरे मनोः ···अजितः पुलहश्चैव ह्येत्यासप्तर्षयश्च ते S'ivaP. v. 34. 65 (446A. 3); **4 A** [pl.] name of a group of attendants (*gaṇa*) of Brahmā अजिताश्चैव शुक्राश्च गणौ द्वौ ब्रह्मणः स्मृतौ VāyuP. i. 10. 21; BrahmāṇḍP. i. 9. 46; **4 B** [pl.] name of a group of sons of Brahmā अजिता ब्रह्मणः पुत्राः VāyuP. i. 31. 4; **4 C** [pl.] name of the twelve sons of Ruci and Ajitā अजितायां रुचेः पुत्रा अजिता द्वादशात्मकाः VāyuP. ii. 6. 33. 34; **4 D** [pl.] name of a group of twelve gods ततस्तेन रुपा शप्तास्तेऽभवन् द्वादशाजिताः BrahmāṇḍP. ii. 4. 27; चत्वारो देवता गणाः। ··· अजिताख्याश्च ViṣṇuDhaP. i. 21. 2; **5 A** name of a Bodhisattva or future Buddha समन्तभद्राजितमञ्जुघोषलोकेश्वरादीनपि मण्डयामि BodhiCa. 2. 13; AnekāSaṁ. 3. 229; TrikāS'e. i. 1. 24; **5 B** name of one of the six teachers (contemporaries of Buddha) आदिशब्देन षट् शास्तारो गृह्यन्ते। तद् यथा ··· अजितः केशकम्बलः Sphuṭā. 86. 22 (*on* IV. 80); **5 C** name of the second Jain Prophet (son of Jitaśatru and Vijayā) प्रणमामि ···अजितं विजिताशेषबाह्यशरीरशात्रवम् PadmP. (Ra.) 1. 4; 5. 212; 9. 184; नाभेय आद्योऽजितशंभवौ च VarāṅgaC. 27. 37; अजितो जितकामारिः MahāP. 25. 169; जिनपतिमजितं प्राप्तसत्प्रातिहार्यं नत्वा KalyāKā. 10. 1; तमजितमभिनौमि CaturJiStu. 5; TilaMañ. 226. 14; AnekāSaṁ. 3. 229; अर्हन्तमजितम् ··· स्तुवे TriṣaS'aPuC. i. 1. 4; iii. 7. 138; NemiNir. 1. 2; ViviTīKa. 2. 10; अत्रैवाजितशान्तिजिनौ वर्षाकालमवस्थितौ KumāPraPra. 105. 9; **6** name of a kind of rat with venomous semen पूर्वं शुक्रविषा उक्ता मूषिकाः ··· कुलिङ्गश्चाजितश्चैव SuśruS. v. 7. 5; **7** unfailing antidote to poison एषोऽगदः स्थावरजङ्गमानां जेता विषाणामजितो हि नाम्ना SuśruS. v. 5. 65; **8** letter *j* अजितो जन्महन्ता च जकारः AbirbuS. 17. 15 = JayāS. 6. 44; अजितश्चानलस्थं च ओदनेन समन्वितम् JayāS. 6. 137; जन्महन्ताजितश्चैव जकारश्चैव शाश्वतः LakṣmīT. 25. 14; **9** a kind of Tantric diagram in the form of a wheel with thirty-two spokes अक्षं कृत्वा चक्रमेतद्द्वात्रिंशदरमालिखेत्। अजिताख्यमिदं चक्रं सुरासुरनमस्कृतम् AbirbuS. 23. 15; **10** name of a *mantra* cf. **अजितसंज्ञ**

**अजित** (a-jita) *n.* **1** unconquered position, the unconquered सत्रासाहीयं कुर्वीत यस्य त्वदिवाजितं स्यात् JaimiBr. i. 182; **2** name of a missile मानवं चास्त्रमजितं दैत्यं दानवमेव च ··· ददामि Rāmā. i. 700*(39); पैशाचमस्त्रमजितं शोषदं शामनं तथा। ··· एतान्यस्त्राणि दिव्यानि हिरण्यकशिपुस्तदा। असृजत् MatsyaP. 162. 27; **3 A** unfailing antidote to poison विषाणि हन्ति सर्वाणि शीघ्रमेवाजितं क्वचित् SuśruS. v. 2. 49; **3 B** name of a specially prepared medicinal ghee कल्पोक्तं चाजितं सर्पिः सेव्यमानं ज्वरं जयेत् SuśruS. vi. 39. 264; **3 C** name of a compound drug for treating dysentery (Atisāra) (अथातोऽतिसारचिकित्सितम्) तक्रदाडिमतैलाजसैंधवोपेतमजिताख्यम् AṣṭāSaṁ. ii. 67. 17 (4. 11); **4** name of a Text (Ajitāgama) (अष्टाविंशतिः शैवागमाः) शैवानाम् ··· अजितम् MṛgendraT. iv. 1. 44; अत्राजिते ĪśānS'iPa. i. 6. 50(1); इत्यजिते ĪśānS'iPa. ii. 8. 52(2); **5** a kind of one-roomed house using six timbers शालाविभागं ज्ञात्वैषां तिर्यक् षड् दारु विन्यसेत्। ··· संज्ञाश्चैषामनुक्रमात्। ···उद्योतं भीषणं शून्यमजितं कुलनन्दनम् SamarāSū. 23. 23.

**अजितकरणता** (ajitakaraṇa-tā) *f.* the state of not having conquered the senses प्रत्यक्षं हि एतदजितकरणतया ··· न हार्दे ब्रह्मणि मनस्तिष्ठति ChāndoUBh. 169. 8 (*on* iii. 13. 6)

**अजितकीर्तिमाला** (ajita-kīrtimālā) *f.* garland (in the form of songs) of the glories of Kṛṣṇa इहाजितकीर्तिमालां पदे पदे नूतनयस्यभीक्ष्णम् BhāgP. iii. 8. 1 (Vīrarāghava अजितः परमपुरुषः)

**अजितकेशकम्बल** (ajitakeśakambala) *m.* **i** name of one of the six heretical teachers mentioned in the Buddhist and Jain texts [DBHS]; **ii** name of a Brahmin [PW]

**अजितक्रोध** (ajita-krodha) *adj.* who has not conquered anger यः ··· ज्ञातीन् मोहाल्लोभाद्विक्षते। सोऽजितात्माजितक्रोधो न चिरं तिष्ठति श्रियम् MahāBhā. v. 89. 30.

**अजितचक्र** (ajita-cakra) *n.* name of a mystic wheel-diagram विद्यादजितचक्रस्य सम्यगक्षमिदं बुधः AbirbuS. 23. 19; 24. 11; *m.* name of a former Buddha [DBHS]

**अजितजय** (ajita-jaya) *m.* conquest of the unconquered आशुगत्वात्यजनक्रमणात् अजितजयजिताध्ववसनादुत्पतननिपतनाच्च AbhidhKoBh. 371. 7 (*on* 6. 54)

**अजितजिन** (ajita-jina) *m.* name of the second prophet of the Jains अवतारो द्वितीयस्य युगस्यातः प्रचक्ष्यते। ··· विजयां सुतान्। जितशत्रोः समायोज्य प्रव्रज्यखिदशंजयः। निर्वाणं च परिप्राप्तः ···। अथाजितजिनो जातस्तयोः PadmP. (Ra.) 5. 63.

**अजितजिनेन्द्र** (ajita-jinendra) *m.* Ajita, the excellent Jina विनीताख्यमहादेशे विनीता विद्यते पुरी। तीर्थेऽजितजिनेन्द्रस्य सगरोऽस्या महीश्वरः BṛKathāK. 119. 1.

**अजितजिनेश्वर** (ajita-jineśvara) *m.* Ajita, the sovereign Jina अथ साकेतनगरोद्याने ऽजितजिनेश्वरः। भगवान् समवासार्षीत् TriṣaS'aPuC. ii. 5. 1.

**अजितज्ञेयविनिर्जय** (ajitajñeya-vinirjaya) *m.* mastering the objects of knowledge which are not known (*lit.* conquering the unconquered objects of knowledge) अजितज्ञेयविनिर्जयाय। यथा चक्रवर्तिनश्चक्ररत्नमजितदेशविनिर्जयाय MaYānaSū. 144. 9 (18. 58)

**अजितंजय** (ajitañ-jaya) *m.* [AltGr. II. i. N. 62] **i** name of a king of Ayodhyā in the Gandhila region गन्धिले विषयेऽयोध्यानगरे जयवर्मणः। सुप्रभायाश्च पुत्रोऽभूत् अजितंजय इत्यसौ। जयवर्मापि निक्षिप्य स्वं राज्यमजितंजये MahāP. 7. 41; **ii** king of Vatsakāvatī region विषये वत्सकावत्यां नृपोऽस्यामजितंजयः। तद्भार्या च महादेवी BṛKathāK. 66. 3; **iii** king of Kauśāmbī in the Vatsa region वच्छ(त्स)देशे कौशाम्बी पुरी। राजाजितंजयः। तस्य राज्ञी सुप्रभा SamyaKau. 56. 4; 67. 15; **iv** name of a Bodhisattva [DBHS]; **v** name of a locality [DBHS]

**अजिततेजस्** (ajita-tejas) *n.* Viṣṇu's lustre or prowess देवं विरिञ्चं समगाद्विधातस्त्वात्मयोनेऽजिततेजसो माम् BhāgP. ix. 4. 52.

**अजितत्व** (ajita-tva) *n.* invincibility, state of being unconquered अजितत्वं नृपः सर्वेदेहि मे BhaviP. 473A. 9 (iii(3). 8. 3)

**अजितदेव** (ajita-deva) *m.* Lord Ajita (the second prophet of the Jains) अर्हतोऽजितदेवस्य धर्मचक्रमदृश्यत SamarāSaṁ. 3. 50; अथादर्शि मया श्रीमान् सुरासुरनरस्तुतः। अर्हन्नजितदेवाख्यः SamarāSaṁ. 3. 52.

**अजितदेवगुरु** (ajitadeva-guru) *m.* name of a Jain teacher तस्मादभूदजितदेवगुरुर्गरीयान् Gurvā. 73.

**अजितदेवसूरि** (ajitadeva-sūri) *m.* name of a Jain pontiff तयोर्बभूवाजितदेवसूरिः शिष्यो बृहद्गच्छनभःशशाङ्कः। ··· विशारदशिरोमणेरजितदेवसूरेरभूत् क्रमाम्बुजमधुव्रतो विजयसिंहसूरिः प्रभुः KumāCaSaṁ. 135. 6.

**अजितदेवाचार्य** (ajitadevācārya) *m.* name of a Jain teacher अमजदजितदेवाचार्यपट्टोदयाद्रिद्युमणिविजयसिंहाचार्यपादारविन्दे। मधुकरसमतां यः SindūPra. 100.

**अजितदेशविनिर्जय** (ajitadeśa-vinirjaya) *m.* conquest of the unconquered country or territory अजितज्ञेयविनिर्जयाय। यथा चक्रवर्तिनश्चक्ररत्नमजितदेशविनिर्जयाय MaYānaSū. 144. 9 (18. 58)

**अजितनाथ** (ajita-nātha) *m.* name of the second prophet of the Jains जयन्त्यजितनाथस्य जितशोणमणिश्रियः।··· पादपद्मद्वयीनखाः TriṣaS'aPuC. ii. 1. 1; ii. 3. 89; चरितमजितनाथस्यैहिकामुष्मिकाणि प्रवितरतु सुखानि श्रोतृसामाजिकानाम् TriṣaS'aPuC. ii. 6. 702; iv. 2. 97; PrabaCin. 96. 14.

**अजितनेमि** (ajita-nemi) *m.* name of a sacred fig-tree called Āśvattha आश्वत्थस्त्वजितनेमिरौडुंबर उलूखलः Vaija. 84. 19.

**अजितपदवी** (ajita-padavī) *f.* status or abode of Ajita (i. e. Viṣṇu) त्वमजितपदवीमुपागतोऽन्तः ··· व्रज परमास्पदमच्युतं महात्मन् YogVā. v. 40. 25.

**अजितपावक** (ajita-pāvaka) *m.* Vaishṇavite sacred fire प्रासादं परितोऽष्टदिक्षु सिकताकुम्भेष्वथ स्थण्डिलेष्वाधायाजितपावकं शिखिमुखं कृत्वा सकुम्भार्चनम् TantrSa. 6. 29 (comm. अजितपावकं वैष्णवाग्निम्)

**अजितपुष्य** (ajita-puṣya) *m.* name of a former Buddha [DBHS]

**अजितपूर्व** (ajita-pūrva) *adj.* not already conquered दण्डश्च दुर्गदेशस्थे तस्मिन्नविलाधिके (कर्मसेने राज्ञि) नृपैरजितपूर्वैऽन्यैः प्रयुक्तः संशयावहः KathāSaSāg. xii. 35. 125.

**अजितप्रत्यनीक** (ajita-pratyanīka) *adj.* who has not vanquished his enemy अजितप्रत्यनीकस्य विटाक्रान्तावलस्य च (निद्रा पलायते) PadmP.

(Ra.) 33. 156.

**अजितप्रभु** (ajita-prabhu) *m.* Lord Ajita (the second prophet of the Jains) धात्रीभिः पञ्चभिः शक्रादिष्टाभिरजितप्रभुः। अपाल्यत TriṣaS'aPuC. ii. 3. 1; ii. 3. 72; प्रविवेश तदुद्यानं भगवानजितप्रभुः TriṣaS'aPuC. ii. 3. 254; ii. 3. 399; द्वासप्ततिपूर्वलक्षसंख्यायुरजितप्रभुः TriṣaS'aPuC. ii. 6. 672.

**अजितप्रिय** (ajita-priya) *m.* one of the thousand names of S'iva (*lit.* dear to Viṣṇu) जितकामोऽजितप्रियः LiṅgaP. i. 98. 58 = S'ivaP. iv. 35. 32 (391B. 7)

**अजितप्रिया** (ajita-priyā) *adj.* (*f.*) dear to Viṣṇu, Viṣṇu's beloved गदेऽशनिस्पर्शनविस्फुलिङ्गे निष्पिण्ढि निष्पिण्ढ्यजितप्रियासि BhāgP. vi. 8. 24.

**अजितबल** (ajita-bala) *m.* *1* name of a king तुष्टाजितबला देवी ददौ राज्यं सुतं च मे। तेनाजितबलः पुत्रो विदधेऽभिधया मया SamarāSaṁ. 5. 475; विशाखवर्धनाभिख्ये पुरेऽजितबलो नृपः SamarāSaṁ. 7. 336; *ii* name of a former Buddha [DBHS]

**अजितबला** (ajita-balā) *f.* **1** name of a goddess in the Jain mythology देवताजितबला च ··· तदोत्पन्ना सुवर्णरुक् TriṣaS'aPuC. ii. 3. 845; पूजयित्वाजितबलामूर्तिं च स्थण्डिलस्थिताम् SamarāSaṁ. 5. 373; अजितबलादेवी ततः प्रत्यक्षतामिता SamarāSaṁ. 5. 380; AbhidhāCin. 44; S'abdaRa.(Su.) 1. 9; **2** name of a mystic power (*lit.* having unsurpassed power) विद्याजितबला नाम साधिता खेचरत्वदा SamarāSaṁ. 5. 351.

**अजितबाह्याभ्यन्तःकरण** (ajita-bāhyābhyantaḥkaraṇa) *adj.* who has not conquered or subdued the external and internal (sense-)organs अजितबाह्याभ्यन्तःकरण आत्मज्ञानाय प्रवृत्तः (मिथ्याचारः) GītāBh.(Rā.) 172. 8 (*on* 3. 6)

**अजितबाह्याभ्यन्तरकरण** (ajita-bāhyābhyantarakaraṇa) *adj.* who has not subdued the external and internal (sense-)organs अजितबाह्याभ्यन्तरकरणैरस्य परमपुरुषस्य दुर्दर्शत्वमभिधाय ··· इन्द्रियाणां वशीकरणप्रकारोऽयमुच्यते यच्छेद्वाङ्मनसी इति BrahmSūBh.(Rā.) 342. 15 (*on* i. 4. 1)

**अजितभुजाचतुष्टय** (ajita-bhujācatuṣṭaya) *n.* group of four arms of Viṣṇu आवर्तः स्मरयति···प्रत्युद्यन्नजितभुजाचतुष्टयस्य Rāgh. 12. 12.

**अजितभुजान्तर** (ajita-bhujāntara) *n.* chest (space between the arms) of Kṛṣṇa अजितभुजान्तरं भजत KṛṣṇaKa. 3. 45.

**अजितभूत** (ajita-bhūta) *adj.* one who has not grasped the material objects अजितभूतस्य हि विवक्षोः···निरभिधेया वाक् भवति NyāyVārPari. 8. 1.

**अजितभृत्य** (ajita-bhṛtya) *adj.* who is not able to control his servants [pw]

**अजितभृत्यता** (ajitabhṛtya-tā) *f.* the state of having uncontrolled servants अपरे···अजितभृत्यता सुखोपसेव्यत्वमिति···प्रतार्यमाणाः Kād. 108. 2.

**अजितमनस्** (ajita-manas) *adj.* who has not conquered his mind अजितमनसश्च प्रमादोन्मादवतो (वचनसंदर्भः) निष्प्रयोजनः NyāyVārPari. 8. 4; अनात्मनोऽजितमनसः स्वकीयमेव मनः शत्रुवच्छत्रुत्वे वर्तेत GītāBh.(Rā.) 326. 2 (*on* 6. 6)

**अजितमन्युरंहस्** (ajita-manyuraṁhas) *adj.* who has not been able to curb the vehemence of his wrath न यस्य मायागुणचित्तवृत्तिभिर्निरीक्षतो ह्यण्वपि दृष्टिरज्यते। ईशे यथा नोऽजितमन्युरंहसाम् BhāgP. v. 17. 19.

**अजितमान** (ajita-māna) *m.* name of a king प्रचण्डसुभटाटोप[ख]ण्डितामित्रमण्डलः। अभूदजितमानोऽपि छिङ्गलायां महीपतिः EI. ii. 347. 11.

**अजितयशस्** (ajita-yaśas) *m.* name of a Jain teacher पराभवात् पुरं त्यक्त्वा जगाम वलभीं प्रभुः (जिनानन्दः) ··· तत्र दुर्लभदेवीति गुरोरस्ति सहोदरी। तस्याः पुत्रास्त्रयः सन्ति ज्येष्ठोऽजितयशोऽभिधः PrabhāC. 77. 12; अन्यदा श्रीजिनानन्दप्रभुस्तत्रागमच्चिरात्। ···तथाजितयशोनामा प्रमाणग्रन्थमादधे PrabhāC. 78. 11.

**अजितलक्ष्मन्** (ajita-lakṣman) *adj.* not hitting the target शरवर्षाभिवृष्टेषु योधेष्वजितलक्ष्मसु। न हि स्वचित्ततां लेभे कश्चिदाहतलक्षणः MahāBhā. vii. 19. 63.

**अजितलपन** (ajita-lapana) *n.* face of Ajita अजितलपनं वस्तदेनस्तृणेढु JinaS'. 3. 12.

**अजितवत्** (a-jitava(n)t) *adj.* one who has not conquered कामक्रोधावजितवान्सखा ते MahāBhā. 1. 604*(4)

**अजितवतिगन्ध** (ajitavati-gandha) *m.* a (mythical ?) kind of jewel [DBHS]

**अजितवादसत्कथा** (ajitavāda-satkathā) *f.* sacred story dealing with Ajita (i. e. Viṣṇu) इमां तु कौषारविणोपवर्णितां क्षत्ता निशम्याजितवादसत्कथाम्। ···मुनेर्दधार मूर्ध्ना चरणं हृदा हरेः BhāgP. iv. 31. 28.

**अजितविक्रम** (ajita-vikrama) *m.* name of king Candragupta II [PW]

**अजितवीर्य** (ajita-vīrya) *adj.* possessing invincible power अथ लिखितमिवैतत् सैन्यमस्पन्दमास्ते नियतमजितवीर्यं जृम्भते जृम्भकास्त्रम् UttaRāC. 5. 13; VakroJi. 227. 11.

**अजितशस्त्रवह्नि** (ajitaśastra-vahni) *m.* the fire of the weapon of Viṣṇu (i. e. *cakra*) संदह्यमानोऽजितशस्त्रवह्निना तत्पादमूले पतितः सवेपथुः (दुर्वासाः) BhāgP. ix. 4. 61.

**अजितषड्वर्ग** (ajita-ṣaḍvarga) *adj.* who has not conquered the group of six passions देह्यज्ञोऽजितषड्वर्गो नेच्छन्कर्माणि कार्यते BhāgP. vi. 1. 52.

**अजितसंज्ञ** (ajita-saṁjña) *adj.* called Ajita अमलश्चातिसुखस्तथा। सञ्जयोऽजितसंज्ञश्च कृष्णस्यासन्सखिप्रियाः ĀdiP. 12. 44; षष्ठेऽन्तरे तु भगवान् द्विजशापखिन्नदेहान्सुरानवनतानवलोक्य सन्नः। वैराजविप्रतनयोऽजितसंज्ञ ईशो देवासुरैरमथयत्सहसा पयोधिम् SātvaT. 2. 24; आह्लादाजितसंज्ञौ द्वौ शताख्यवरुणस्थितौ। विसर्गानन्दसंयुक्तौ ज्ञेयौ पाशध्वजाभिधौ (मन्त्रौ) JayāS. 7. 82.

**अजितसिंह** (ajita-siṁha) *m.* name of a Jain teacher तदनु विदितो विश्वे गच्छः स राजपदोत्तरः। सुगुरुरजितसिंहस्तत्पदाम्भोजभानुः समजनि PrabhāC. 214. 5.

**अजितसिंहक** (ajitasiṁha-ka) *m.* name of a Jain teacher बभूवुः श्रीमहावीरपट्टानुक्रमभूषणाः। ···श्रीसिंहप्रभसूरीशाः सूरयोऽजितसिंहकाः EI. ii. 64. 7.

**अजितसेन** (ajita-sena) *m.* *i* name of a Jain teacher वन्दे वन्दितमादरादहरहस्याद्वादविद्याविदाम् ··· भ[क्तय]ा त्वाजितसेनम् EI. iii. 195. 156; iii. 195. 162; सकल[भुवन]पालानम्रमूर्धावबद्धस्फुरितमकुटचूडालीढपादारविन्दः। मदवदखिलवादीभेन्द्रकुम्भप्रभेदीगणभृदजितसेनो भाति वादीभसिंहः EI. iii. 195. 164; iii. 197. 209; *ii* name of a king अस्ति कोशाभिधं पुरम्। तत्रास्त्यजितसेनाख्यः ···नृपः SamarāSaṁ. 3. 2; तत्रास्त्यजितसेनाख्यो नृपतिः सार्थकाह्वयः (तामालिनीपुर्याम्) RatnaCūKa. 10; *iii* name of a householder [DBHS]

**अजितस्त्रीक** (ajitastrī-ka) *adj.* [? जितस्त्रीकः] who is not ruled over by women, यः संस्कृताशी विधिवच्छुचिरन्तस्तथा बहिः। अलोलुपोऽजितस्त्रीकस्तद्गेहमपवर्जय MārkP. 50. 63.

**अजितस्य जिति** (ajitasya jiti) (*f.*) name of a Sāman, ĀrṣeBr. vi(3). 5. 4 (comm. जेतुमशक्यस्यापि जयसाधनमेतन्नामधेयम्)

**अजितस्वामिदेव** (ajitasvāmi-deva) *m.* Tīrthaṅkara called Ajitasvāmin अजितस्वामिदेवस्य चरितं प्रस्तवीम्यतः TriṣaS'aPuC. ii. 1. 2.

**अजितस्वामिन्** (ajita-svāmin) *m.* name of a Tīrthaṅkara स्वपाणिपङ्कजाङ्गुष्ठे सुरसङ्क्रमितां सुधाम्। ···पिबति साजितस्वामी TriṣaS'aPuCa. ii. 3. 2; ii. 3. 22; श्रीपुरमिति नाम्नासीत् पुरा पुरं सकलपुरमुकुटः। तस्य च बहिरुद्याने समवासार्षीद् द्वितीयजिननाथः। श्रीमानजितस्वामी PrabhāC. 41. 7; 202. 20.

**अजितस्वामिनिर्वाण** (ajitasvāmi-nirvāṇa) *n.* liberation of Ajitasvāmin अजितस्वामिनिर्वाणात् कोटिलक्षेषु त्रिंशति। सागराणां गतेष्वासीन्निर्वाणं संभवप्रभोः TriṣaS'aPuC. iii. 1. 405.

**अजितस्वामिनृप** (ajitasvāmi-nṛpa) *m.* king Ajitasvāmin गुणगणेष्वेव लोभः स्वदोषेष्वेव चाक्षमा। ···समभूदजितस्वामिनृपे शासति मेदिनीम् TriṣaS'aPuC. ii. 3. 109.

**अजितस्वामिपाद** (ajitasvāmi-pāda) *m.* the revered Ajitasvāmin (a Tīrthaṅkara) अजितस्वामिपादान् नत्वा च ते तदा। ब्रह्मलोकं ययुः TriṣaS'aPuC. ii. 3. 140.

**अजितसिंहाख्य** (ajitasiṁhākhya) *adj.* called Ajitasiṁha अन्यदाजितसिंहाख्याः सूरयः पुरमाययुः PrabhāC. 113. 5.

**अजितस्वामिशासन** (ajitasvāmi-śāsana) *n.* command of Ajitasvāmin अजितस्वामिशासनात्। राज्याभिषेको विधिवत् सगरस्य व्यधीयत TriṣaS'aPuC. i.. 3. 174.

**अजितस्वामिसंस्तव** (ajitasvāmi-saṁstava) *m.* praise of Ajitasvāmin अन्यदा भूपतिं श्रीमदजितस्वामिसंस्तवम्। कुर्वन्तम् PrabhāC. 207. 16.

**अजितस्वाम्यागम** (ajitasvāmy-āgama) arrival of Ajitasvāmin पौत्रराज्याभिषेकेणाजितस्वाम्यागमेन च। तदानीं चक्रिणो जज्ञे हर्षोत्कर्षो यथोत्तरम् TriṣaS'aPuC. ii. 6. 617.

**अजिता** (a-jitā) *f.* **1** name of Durgā **2** name of Pārvatī **3** name of a divine Mother **4** name of various subsidiary female deities **5** name of a queen **6** name of the seventh knot of the sacred thread **7** name of a S'ilā **8** name of a mātrā **9** name of Gaṅgā **10** name of a commentary on the Tantravārttika **11** mineral alum **12** dūrvā grass **13** name of one of the four *kumārīs* **1** name of Durgā यां दृष्ट्वैव विनाशमाप सहसा शुम्भः समायोऽजिताम्।···सा हेतुर्भवतां(? तात्) त्रिलोचनवधूरश्रीविनाशस्य ते DevīS'. 38; जय दुर्गे···अजितायै नमस्तुभ्यम् S'ivaP. v. 47. 7 (463A. 9); **2** name

व्याधितस्य पुत्रीं दातुं तव न युज्यते KathāK. 136. 31.

**अज्ञातकुलता** (ajñātakula-tā) *f.* the state of one whose family is unknown, belonging to unknown family विष्णुरिदं प्राह ··· अज्ञातकुलतां तस्य (हरस्य) पृच्छयतामयमेव च SkandP. i(2). 26. 72.

**अज्ञातकुलनामन्** (ajñāta-kulanāman) *adj.* of unknown family and name अज्ञातकुलनामानं तत्कालसमुपस्थितम् ··· प्राहुरतिथिं स पूज्यः MārkP. 29. 27; VisṇuP. iii. 11. 61; SkandP. iii(3). 8. 75; हराय त्वं स्वसुतां दातुमिच्छसि···अज्ञातकुलनाम्ने S'ivaP. ii(3). 31. 45 (160A. 2); Mānaso. i. 15. 114.

**अज्ञातकुलशील** (ajñata-kulaśīla) *adj.* of unknown family and character अज्ञातकुलशीलाभ्यामावाभ्यां त्वं ततोऽन्यथा । पलायनमिदं कुर्वन् कथं न त्रपसेऽधुना PadmP.(Ra.) 101. 56; अज्ञातकुलशीलस्य प्रवेशो नात्र सर्वथा DeviBhāP. i. 17. 20; अज्ञातकुलशीलस्य वासो देयो न कस्यचित् Hitopa. 1. 42; 1. 52(7); KaumuMi. 1. 19(30); PrabaCin. 108. 22; PālaGoKa. 130; अज्ञातकुलशीलेन पुरुषेण···सह न गच्छेत् ManvaMu. 170. 26 (*on* 4. 140)

**अज्ञातकुलशीलक** (ajñātakulaśīla-ka) *adj.* of unknown family and character एतौ तावागतावावामज्ञातकुलशीलकौ PadmP.(Ra.) 101. 55.

**अज्ञातकुलशीलिन्** (ajñāta-kulaśīlin) *adj.* having an unknown lineage and character अकिञ्चनमसम्बन्धमज्ञातकुलशीलिनम् । असंपूज्यातिथिं भुक्त्वा भोक्तुकामं व्रजत्यधः VisṇuP. iii. 11. 62; PadmP.(Ra.) 24. 96; मया ज्ञातं शंकराय सुतां दातुं त्वमिच्छसि । इमां पद्मासमां दिव्यामज्ञातकुलशीलिने BrahmVaiP. iv. 41. 19; S'ivaP. iii. 35. 26 (339A. 10)

**अज्ञातकुलसंभवा** (ajñātakula-sambhavā) *adj.* (*f.*) born in an unknown family अधमास्तमसश्चांशा अज्ञातकुलसंभवाः । दुर्मुखाः कुलटा धूर्ताः BrahmVaiP. ii. 1. 148.

**अज्ञातकेत** (ájñāta-keta) *adj.* [DEBRU. p. 100] having unknown intention स्तेना अदृश्रन् रिपवो जनासोऽज्ञातकेता वृजिना अभूवन् ṚV. v. 3. 11.

**अज्ञातकेशावसन** (ajñāta-keśāvasana) *adj.* unconscious of the (condition of one's) hair and clothes(?) अत्रान्तरे कापि कापालिकलिङ्गधारिणी··· प्रविश्य देव्या वामभागे करतलगलितकर्पूरलिकुचफलमवनितलपतितमज्ञातकेशावसनमतिकम्मले महति बाष्पपूरे प्लवमानमवलोक्य···मामप्राक्षीत् VasaTi. 26. 12.

**अज्ञातकैतवकथागन्ध** (ajñāta-kaitavakathāgandha) *adj.* ignorant (i. e. innocent) of even the slightest talk or speech of deceit अथ तावत्··· अज्ञातकैतवकथागन्धं सिन्धुमिव जडाशयम् ··· कमपि कज्जलमेचकं पाचकमपश्यम् Mukundā. 218(1)

**अज्ञातकैतवा** (ajñāta-kaitavā) *adj.* (*f.*) ignorant of deceitful behaviour, straightforward, innocent अज्ञातकैतवा साथ भार्या साध्वी महामुनेः । ···स्वभर्तारमवैक्षत RāmāMañ. 459. 7.

**अज्ञातकोष्ठ** (ajñāta-koṣṭha) *n.* undiagnosed (condition of the) bowels अज्ञातकोष्ठे हि बहुः कुर्याज्जीवितसंशयम् AṣṭāSam. i. 129. 3 (1. 25)

**अज्ञातकौलिक** (ajñāta-kaulika) *m.* an unknown Kaula teacher अज्ञातकौलिके प्राप्ते पौर्वापर्यं तु चिन्तयेत् । स्मृत्वा स्वस्य गुरुं देवि स्वस्य मार्गेण तर्पयेत् KulārT. 11. 7.

**अज्ञातक्रम** (ajñāta-krama) *adj.* not knowing the (proper) order (of prescribed rites) अज्ञातक्रमपुरुषाधिकारिकं चेदं वचनं ज्ञेयम् TristhaSe. 368. 21.

**अज्ञातक्रियाकर्तृसंबन्ध** (ajñāta-kriyākartṛsambandha) *m.* unknown connection between action and agent ननु अध्यवसायः आकूतम्···अज्ञातक्रियाकर्तृसंबन्ध इति विधिविदो विधिं व्याचक्षते BrahmSi. 117. 4.

**अज्ञातक्लेशसंपर्क** (ajñāta-kleśasamparka) *adj.* who has not known (i. e. experienced) any association with hardships अज्ञातक्लेशसंपर्कः कमलक्रोडकोमलः । कथं भूमितलेऽरण्ये निशां व्यालिनि नेष्यसि PadmP.(Ra.) 107. 5.

**अज्ञातक्षयक** (ajñātakṣaya-ka) *adj.* (Math.) that (proportion of a thing) which is related to the unknown negative quantity (to be subtracted) चतुर्दशैव वर्णानि सप्त स्वर्णानि तत्क्षये । चतुस्स्वर्णे दशोत्पन्नमज्ञातक्षयकं वद (वर्णम्) GaṇiSāSam. 5. 179.

**अज्ञातखेट** (ajñāta-kheṭa) *m.* (Astron.) unknown (position of a) planet अज्ञातखेटः स्वनृणं कृतश्चेदज्ञातचक्राणि भवन्ति तानि Golā. 252. 4 (31. 9)

**अज्ञातगति** (ajñāta-gati) *adj.* whose course is unknown अथोदीचीं दिशं यातु स्वैरज्ञातगतिर्भवान् BhāgP. i. 13. 26.

**अज्ञातगमन** (ajñāta-gamana) *n.* sexual union with one (whose relationship is) not known असवर्णासु तु (पितृभार्यासु जननीव्यतिरेकेण) सकृदविज्ञातगमने (v. l. सकृदज्ञातगमने) 'चान्द्रायणं वा त्रीन् मासानभ्यसेद् वेदसंहितान्' इति BālaKrī. ii. 127. 12 (*on* 3. 260)

**अज्ञातगर्भा** (ajñāta-garbhā) *adj.* (*f.*) whose pregnancy is not known (i. e. undetected) यदा त्वेकस्यां भार्यायामज्ञातगर्भायां भर्ता मृतः ···तदा विभागमाह ManvaVi. 1199. 20 (*on* 9. 164); या गर्भवती अज्ञातगर्भा ज्ञातगर्भा वा परिणीयते, स गर्भस्तस्यां जातः परिणेतुः पुत्रो भवति ManvaMu. 396. 3 (*on* 9. 173)

**अज्ञातगवय** (ajñāta-gavaya) *adj.* who does not know what a *gavaya* (Gayal or *Bos gavaeus*) is, who has not seen a Gayal आप्तेन वनेचरेण विदितगवयेनाप्रसिद्धगवयस्याज्ञातगवयस्य नागरिकस्य कीदृग्गवय इति पृच्छतो गवा गोसारूप्येण गवयस्य प्रतिपादनादुपमानम् NyāyKa. 220. 21; आप्तेन ··· अज्ञातगवयस्य···गवा गोसादृश्येन गवयशब्दवाच्यस्य प्रतिपादनात् 'यथा गौस्तथा गवय' इति आप्तवचनमेवातिदेशवाक्यमेवोपमानम् Kiraṇā. 321. 18.

**अज्ञातगाध** (ajñāta-gādha) *adj.* whose depth is not known यत्तावत्प्रथमसमागमे रतं तदप्यलब्धविस्रम्भायां कामिन्यामज्ञातगाधमिव सरः शङ्कावगाहं भवति DhūrtaViSam. 20. 2.

**अज्ञातगाम्भीर्य** (ajñāta-gāmbhīrya) *adj* whose depth is not known प्रविशेज्जलम् । तथा नाज्ञातगाम्भीर्यं न हिंस्रप्राणिसेवितम् BhāvPra.(Bhā.) 5. 254.

**अज्ञातगुडमण्डक** (ajñāta-guḍamaṇḍaka) *adj.* unfamiliar with (wheat) cakes made with molasses पप्रच्छ च ततो ज्ञातीनज्ञातगुडमण्डकः PariPar. 2. 363.

**अज्ञातगुण** (ajñāta-guṇa) *m.* unknown multiplier यः कश्चिदज्ञातगुणोऽस्ति येन भाज्यो हतः क्षेपयुतोनितश्च । हरोद्धृतः शुद्धिमुपैति तत्र SiddhāTaVi. 385. 7.

**अज्ञातगुणदूषण** (ajñāta-guṇadūṣaṇa) *adj.* ignorant of (the difference between) virtue and vice बालस्वभावचपलावज्ञातगुणदूषणौ । नयनानन्दनिःष्यन्दौ कृष्टयुद्धौ जिघांसति (कंसः) KamVa. 6. 36.

**अज्ञातगुरुपारंपर्या** (ajñāta-gurupāramparyā) *adj.* (*f.*) whose traditional line of preceptors is not known अथ प्रासङ्गिकः अज्ञातगुरुपारम्पर्याणाम् (विद्यानाम्) गुरुक्रमः NityoNi. 50. 2.

**अज्ञातगृह** (ajñāta-gṛha) *n.* an unknown house or house of an unknown person वासोऽज्ञातगृहे नैव कुर्याद् निद्रां घनां न च । विश्वासो नैव कस्यापि कर्तव्यो हितमिच्छता RatnaCūKa. 105.

**अज्ञातगोत्र** (ajñāta-gotra) *adj.* whose lineage is not known अज्ञातगोत्रा विदितात्मतत्त्वा लोकस्य दृष्ट्या जडवद्विभान्तः । ··· सन्तः S'aṅkaDigVi. (Mā.) 14. 88.

**अज्ञातगोत्रजन्मन्** (ajñātagotra-janman) *adj.* born in an unknown family or clan चतुर्दश्याममावास्यां तथा च पितृतर्पणम् । अज्ञातगोत्रजन्मानस्तेभ्यः पिण्डांस्तु निर्वपेत् SkandP. iii(2). 29. 64.

**अज्ञातगोत्रनामन्** (ajñāta-gotranāman) *adj.* whose *gotra* and name are not known अज्ञातगोत्रनाम्ना(? म्नां) तु पिण्डमन्त्रमिमं शृणु SkandP. iii(2). 29. 56; अज्ञातगोत्रनामानमन्यग्रामादुपागतम् । विपश्चितोऽतिथिं प्राहुः BṛNāraP. 25. 35.

**अज्ञातगोत्वक** (ajñātagotva-ka) *adj.* whose bovine nature is not grasped (understood) गौः सास्नादिमान्धर्मी स्वरूपेण अज्ञातगोत्वकेन धर्मिस्वरूपमात्रेण न गौः न गोव्यवहारनिर्वाहकः । नाप्यगौः RasGaṅ. 183. 8.

**अज्ञातगोव्यक्ति** (ajñāta-govyakti) *adj.* one who has not seen a bovive animal who does not know what a bovive animal is (अज्ञातगोव्यक्तेः जिज्ञासोः पुरुषस्य) अज्ञातगोव्यक्तेः प्रत्यक्षेणादृश्यमानगोव्यक्तेरित्यर्थः S'rutaPra. iB. 109. 21 (*on* i. 1. 2)

**अज्ञातग्रहभगण** (ajñātagraha-bhagaṇa) *m.* number of revolutions of an unknown planet अज्ञातग्रहभगणा ज्ञातस्येष्टैर्हता भगणमानैः ĀryaSi. 17. 2 (195) (comm. अज्ञातग्रहस्य कल्पभगणाः)

**अज्ञातघट** (ajñāta-ghaṭa) *m.* unknown jar अधीकर्मणः सिद्धिरप्यज्ञातघटादिसद्भाववत् ··· समर्थिता NyāySiA 239. 5; अज्ञातत्वांशे तदसंभवेन अज्ञातघटसंयोगानुकूलव्यापारे प्रवृत्त्यसंभवात् GuruCandr. ii. 92. 13; 'घटोऽज्ञातो न वे'ति संशयोत्तरं चौचित्यावर्जितः अज्ञातघटेन्द्रियसंयोगादेः संशय एव स्यात्, न तु निश्चय इति भावः LaCandr. 469. 15.

**अज्ञातघटादिक** (ajñātaghaṭādi-ka) *adj.* beginning with an unknown jar ननु प्रमोत्पत्तेः पूर्वमप्रतीतमप्यज्ञातघटादिकं पश्चादनुमानादिना ज्ञेयत्वात् नासत् LaCandr. 469. 39.

**अज्ञातघटासिद्धि** (ajñātaghaṭāsiddhi) *f.* non-determination of an unknown jar ज्ञाते घटे अयं पूर्वं न ज्ञात इति घटेऽज्ञानं सिध्यतीति चेत् - तन्न, अज्ञातघटासिद्धेः । न ह्यज्ञातरूपो घटः प्रमाणात्सिध्यति, प्रमाणप्रवृत्तेः प्रागेव तस्येष्टत्वात् IṣṭaSi. 196. 21.

**अज्ञातघटोत्पत्तिकाल** (ajñāta-ghaṭotpattikāla) *adj.* who is not aware of the time of origin (production) of a jar प्रत्यक्षेणैव चान्यथात्वमभिनवपुराणावस्थयोरज्ञातघटोत्पत्तिकालैरपि पुरुषैरुपलभ्यते SāstrDi. 144. 11 (*on* i. 1. 6)

**अज्ञातघातवत्** (ajñātaghāta-va(n)t) *adj.* unaware of (one's) injury or wound सैन्ययोरुभयोः शौर्यविशादज्ञातघातवान् । तस्मिन्नुदयनोऽपि स्वस्वामिनः पुरतः स्थितः । प्रजह्रे प्रहृतश्चासौ व्यपतद् भूमिमण्डले PrabhāC. 198. 18.

**अज्ञातचक्र** (ajñāta-cakra) *n.* (Astron.) unknown (number of) revolutions (of a planet), revolution of an unknown planet अज्ञातखेटः स्वमृणं कृतश्चेदज्ञातचक्राणि भवन्ति तानि Golā. 252. 4 (31. 9)

**अज्ञातचन्द्रज्ञापक** (ajñātacandra-jñāpaka) *adj.* indicator of the moon which is not known प्रकृष्टत्वे सति प्रकाशत्वमज्ञातचन्द्रज्ञापकम् VedāntKa. 55. 13 (*on* i. 1. 2)

**अज्ञातचर** (ajñāta-cara) *adj.* who moves without being known or seen (i. e. coming secretly) धन्या सा रजनी तदेव सुदिनं पुण्यः स एव क्षणो यत्राज्ञातचरः प्रियानयनयोः सीमानमेति प्रियः KaviKaṇṭhā. 5. 1 (56) = SubhāRaK. 49. 12 = SaduktiKa. 294. 11.

**अज्ञातचरित** (ajñāta-carita) *adj.* whose behaviour or activities are not known तस्मिन् काले जरासंधः ··· । अज्ञातचरितं शत्रुं श्रीवधूहरणोद्यतम् । विरित्सन् ··अतप्यत RāghPāṇ.(Dha.) 9. 4.

**अज्ञातचरित** (ajñāta-carita) *n.* [Inst.] incognito, so as not to make their activities known पश्चापि पाण्डवाः । अज्ञातचरितैर्नैते विराटस्य गृहे स्थिताः BṛKathāK. 83. 92.

**अज्ञातचरितम्** (a-jñātacaritam) *adv.* so as to keep the performance unknown गूढधर्माश्रितो विद्वानज्ञातचरितं चरेत् MahāBhā. xiv. 46. 49.

**अज्ञातचर्य** (ajñāta-carya) *adj.* acting incognito क नु स्युः पाण्डवा गताः । अल्पावशिष्टं कालस्य···तेषामज्ञातचर्यायाम् (v. l. अज्ञातचर्याणाम्) अस्मिन् वर्षे त्रयोदशे MāhāBhā. iv. 25. 3.

**अज्ञातचर्या** (ajñāta-caryā) *f.* **i** activity incognito, living in concealment अज्ञातचर्या पाण्डूनां वासो ब्राह्मणवेश्मनि MahāBhā. i. 2. 85; iii. 36. 23; अल्पावशिष्टं कालस्य ··· तेषामज्ञातचर्यायामस्मिन्वर्षे त्रयोदशे MahāBhā. iv. 25. 3; xii. 16. 19; हंसाः संप्रति पाण्डवा इव वनादज्ञातचर्यां गताः Mṛcch. 5. 6; अज्ञातचर्या गूढचर्या मे मम कर्तव्या SanatBh. 225. 17 (*on* 1. 31); वर्षाणि द्वादशारण्ये सह तिष्ठन्तु निष्ठया । अज्ञातचर्यया वर्षम् BālBhā. 2. 36; **ii** activity (meditation) directed towards the Unknown (i. e. Brahman) नित्यमज्ञातचर्या मे अज्ञाते चक्षुराद्यविषयभूते वाचामगोचरे ··· प्रत्यग्भूते ब्रह्मणि चर्या निष्ठा समाधिलक्षणा SanatBh. 226. 11 (*on* 1. 31)

**अज्ञातचाण्डाल** (ajñāta-cāṇḍāla) *m.* *cāṇḍāla* (one belonging to the lowest caste) incognito वेश्मन्यज्ञातचाण्डालो द्विजातेर्यदि तिष्ठति । ब्रह्मकूर्चं चरेन्मासं त्रिःस्नायी नियतेन्द्रियः BṛParāSm. 8. 203.

**अज्ञातचारित्र** (ajñāta-cāritra) *adj.* whose conduct or way of life remains unknown सर्वभावविशेषज्ञौ धृतिमन्तौ मनस्विनौ । परैरज्ञातचारित्रौ (पराशक्तिः नीललोहितश्च) BrahmāṇḍP. iii. 14. 25.

**अज्ञातचितिवत्** (ajñātaciti-vat) *adv.* like the unknown consciousness अज्ञायमानो मात्रादिर्न यस्मादनुभूयते । अज्ञातचितिवत्तस्मादज्ञातोऽनुभवः स्मृतः BṛĀraUBhVā. iv. 4. 900.

**अज्ञातचित्त** (ajñāta-citta) *adj.* whose mind (i. e. thought) is not known सर्वत्रानुचरः शोपकारी छायाग्रहाभिधः । अज्ञातचित्तः स्तब्धाख्यो भूतसंज्ञो विचेतनः SamaMā. 5. 47.

**अज्ञातचित्तवृत्ति** (ajñāta-cittavṛtti) *adj.* whose mental disposition is not known प्रवासादिभिरज्ञातचित्तवृत्तौ प्रिये जने । इतरक्लेशकारी यः स प्रौढः स्नेह उच्यते RasāSu. 152. 2 (2. 114); UjjvaNīMa. 420. 3.

**अज्ञातचोलदुरुपद्रव** (ajñāta-coladurupadrava) *adj.* having no idea of pain caused by the bodice (i. e. not accustomed to breastwear) कूर्पासगूढकुचपङ्कजकुड्मलानां को नाम शंसति रतिं भुवि गुर्जरीणाम् । अज्ञातचोलदुरुपद्रवचोलनारीपीनस्तनस्तबकमण्डलदत्तहस्तः Mukundā. 79.

**अज्ञातचौरवृत्ति** (ajñāta-cauravṛtti) *f.* stealthy behaviour of a thief (i. e. ambush) त्रिभिः कुमारैः ··· स्वसैन्यं सज्जीकृत्याज्ञातचौरवृत्त्या तत्सर्वमाच्छिद्य स्वपितुरुपनिन्ये PrabaCin. 14. 11.

**अज्ञातज** (ajñāta-ja) *adj.* produced or caused by (something) unknown सापत्नं वास्तुजं स्त्रीजं वाग्जातम् (v. l. वाज्ञातजम्) अपराधजम् । ··· वैरं पञ्चविधं स्मृतम् NītiSā. 10. 16 (MITRA's Ed.)

**अज्ञातजडसिद्धि** (ajñātajaḍa-siddhi) *f.* establishment of an inanimate (object) which is not cognised or perceived तत्सर्वं ज्ञातमेवेति नाज्ञातजडसिद्धिर्मानात् IṣṭaSi. 200. 3.

**अज्ञातजन्तुवध** (ajñāta-jantuvadha) *m.* act of killing living beings unknowingly or unintentionally अज्ञातजन्तुवधादिकर्मजनितपापानि च प्राणायामादिना नाशयन्नियतेन्द्रियः ··· सुखं वसेत् ManvaMu. 246. 23 (*on* 6. 95)

**अज्ञातजन्मन्** (ajñāta-janman) *adj.* **A** whose origin or birth (i. e. mother or father) is unknown तौ त्वद्भर्तुः ··· अज्ञातजन्मनः । दासमभ्युपगच्छेताम् BṛKathāS'loSaṁ. 28. 68; अज्ञातजन्मा स्वगृहे उत्पन्नो गूढजोऽस्य सः BṛDharmaP. ii. 6. 71; **B** whose (time of) birth is not known अज्ञातजन्मनां नृणां नामभं परिकल्पयेत् VasiS. 32. 196.

**अज्ञातजन्मसमय** (ajñāta-janmasamaya) *adj.* whose time of birth is not known वक्ष्यामि भूपमधिकृत्य ··· । अज्ञातसूतिमथवा (v. l. अज्ञातजन्मसमयम्) विदितैष्यभाग्यम् YogVā. 1. 2.

**अज्ञातजलाशय** (ajñāta-jalāśaya) *m.* reservoir of water which is not known (i. e. not familiar) (नृपः) न गाहेज्जनसंबाधं न चाज्ञातजलाशयम् MastyaP. 215. 73.

**अज्ञातजातक** (ajñāta-jātaka) *adj.* whose horoscope is not known अज्ञातजातकानामपि यात्रां प्रवदेन्निमित्तशकुनाद्यैः VasiS. 37. 2.

**अज्ञातजाति** (ajñāta-jāti) *adj.* whose caste is not known प्रासादप्रतिमापीठे ··· । मूर्खैरज्ञातजातिभिः ··· । दूषिते सति (संप्रोक्षणविधिर्भवेत्) PāraS. 22. 4.

**अज्ञातजातिविशेष** (ajñāta-jātiviśeṣa) *adj.* not knowing to which species one belongs एवं ते त्रयोऽपि शिशवः परस्परं अज्ञातजातिविशेषाः ··· बालकालं निर्वाहयांचक्रुः Pañcā. 242. 11.

**अज्ञातजैनगिर्** (ajñāta-jainagir) *adj.* who does not understand the words of the Jina गुरुराह महासत्त्वाज्ञातजैनगिरामयम् । आलापं(पः) PrabhāC. 104. 29.

**अज्ञातज्ञप्ति** (ajñāta-jñapti) *f.* knowledge of the unknown आत्मनस्तु स्वरूपसत्ताविनिश्चितिरज्ञातज्ञप्तिर्विधेयतेति न विरोधः VedāntKa. 65. 5 (*on* i. 1. 4)

**अज्ञातज्ञाततस्** (ajñātajñāta-tas) *adv.* **i** from the knowledge of what is not known अज्ञातज्ञाततोऽन्यत्वान्निर्देश्यं न तदक्षरम् BṛĀraUBhVā. iii. 8. 53; **ii** because of (the senses) being known as unknown मात्वमक्षादयो यान्ति नाज्ञातज्ञाततोऽन्यथा BṛĀraUBhVā. (Sambandha.) 1003.

**अज्ञातज्ञान** (ajñūta-jñāna) *n.* knowledge of the unknown यद्यपि प्रतिपन्नं प्रत्यनुमानस्य न संशयविपर्ययनिवृत्तिरज्ञातज्ञानं वोपयोगः NyāyVārPari. 747. 6; अज्ञातज्ञापकमेव प्रमाणम् । अज्ञातज्ञानमेव वा NyāySu.(Ja.) 253A. 8 (*on* ii. 1. 2); SarvaDaKau. 76. 2.

**अज्ञातज्ञानाभाव** (ajñātajñānābhāva) *m.* absence of knowledge of the unknown अस्मदादीनाम् ··· अज्ञातज्ञानाभावेऽपि अज्ञानज्ञानम् Nyāyāmṛ. 362B. 5.

**अज्ञातज्ञापक** (ajñāta-jñāpaka) *adj.* conveying or making known what is not known अज्ञातज्ञापकं शास्त्रमेवं स्वाभाव्यतो मितेः BṛĀraUBhVā. ii. 1. 493; मन्त्राः ··· कर्मतत्साधनाभिधानार्थाः नाज्ञातज्ञापकाः इत्याचक्षते मीमांसकाः PrakaVi. 296. 21; 'विधिः' अज्ञातज्ञापको वेदभागः CaturCin. ii(1). 17. 9; TarkSaṁ.(Ā.) 85. 10; तत्र प्रमाणं नाज्ञातज्ञापकम् GuruCandr. iii. 8. 17; 'विधौ' विधायके अज्ञातज्ञापके वाक्ये LaCandr. 374. 34; अज्ञातज्ञापकमेव प्रमाणम् NyāySu.(Ja.) 253A. 8 (*on* ii. 1. 2)

**अज्ञातज्ञापकता** (ajñātajñāpaka-tā) *f.* nature of teaching or conveying what is not known अतश्च श्रुत्याद्यविरुद्धविपयात्मतुष्टे धर्मे अज्ञातज्ञापकतयापि प्रामाण्यम् MīmāKau. i. 46. 10 (*on* i. 3. 7)

**अज्ञातज्ञापकत्व** (ajñātajñāpaka-tva) *n.* the state of conveying what is not known अज्ञातज्ञापकत्वेन वेदस्य स्वतःप्रामाण्याभ्युपगमात् LalitāTriBh. 350. 7 (*on* 57); 328. 14 (*on* 43); नन्विदमितिप्रमाणवृत्तेरज्ञानानिवर्तकत्वे अज्ञातज्ञापकत्वरूपप्रमात्वेन व्यवहारो न स्यात् AdvaiSi. 562. 7; 701. 12; तस्मादज्ञातज्ञापकत्वात् सप्रयोजनत्वाच्चात्मतत्त्वप्रतिपादनं न व्यर्थम् SiddhāBi. 3. 3; 52. 5; प्रयोजनवदज्ञातज्ञापकत्वं च मानता BhaktiRa. 3. 28; तच्च (वेदान्तवाक्यम्) अज्ञातज्ञापकत्वेऽप्यनुष्ठानाप्रतिपादकत्वान्न विधिः PrasthāBhe. 6. 2; 6. 7; शाखान्तराधिकरणे तेषां (विधीनाम्) तत्तच्छाखाध्यायिनं प्रति स्वशाखाध्ययनप्राथम्येन अज्ञातज्ञापकत्वं समर्थितम् VidhiRa. 8(37. 20); 8(38. 10); तम् (विधिम्) आदाय सर्ववाक्यानामज्ञातज्ञापकत्वानुपपत्तेः MīmāKau. ii. 115. 6 (*on* ii. 4. 8); अत एव धारावाहिज्ञानस्थले ज्ञानानां स्वस्वाधिकरणक्षणविशिष्टतया स्वस्वविपयग्राहित्वेनाज्ञातज्ञापकत्वमिति मीमांसकाः LaCandr. 319. 22; 397. 42; 427. 38.

**अज्ञातज्ञापन** (ajñāta-jñāpana) *n.* teaching or conveying what is not (already) known केचिदाहुः अज्ञातज्ञापनं विधिः KāśiVṛ. *on* P. iii. 3. 163; अज्ञातज्ञापनमतोऽथाप्रवृत्तप्रवर्तनम् । विधिमाचक्षते धीराः BrahmSi. 114. 1; विधिरज्ञातज्ञापनम् KātanVṛ. *on* iii. 1. 20; DurgaSiṁha. *on* KātanVṛ. *on* i. 1. 21; अज्ञातज्ञापनं चातो विधिरत्राभिधीयते BṛĀraUBhVā. ii. 4. 115; iv. 4. 924; Bhām. 589. 13 (*on* iii. 3. 4); 754. 22 (*on* iv. 4. 5); NyāyRaMā. 144. 20; अज्ञातज्ञापनं ज्ञातस्य स्थिरीकरणं संशयनिवर्तनमिति त्रिविधस्तत्त्व-

निर्णय: TārkiRa. 211. 5; औदुम्बरताया: साधनतया विधिरज्ञातज्ञापनमित्यर्थ: NyāySu.(So.) 74. 19 (*on* i. 2. 19); अप्रतिपन्नार्थविषयं शास्त्रमज्ञातज्ञापनरूपप्रयोजनवत् S'rutaPra. iB. 57. 27 (*on* i. 1. 1); Ekāva. 6. 1(2) 151. 4); अनेकशाखाबोधिते चैकस्मिन् कर्मणि प्रथमेनाज्ञातज्ञापने सिद्धे द्वितीयादेरनुवादकत्वेन तत्र प्रामाण्यम् SarvaDaKau. 97. 23; SiddhāSi. i. 32. 14; (विधि:) प्रमाणत्वाच्चाज्ञातज्ञापनफल: MīmāKau. ii. 78. 5 (*on* ii. 3. 24); विधिफलस्य हि अज्ञातज्ञापनस्यैकविषयत्वमेव सर्वत्र क्लृप्तम् BhāṭṭDi. i. 114. 7 (*on* ii. 2. 3); विधानमत्राज्ञातज्ञापनमेव न तु प्रवर्तनाविषयत्वम् LaS'abdeS'e. i. 307. 6.

**अज्ञातज्ञापनरूपविधि** (ajñātajñāpanarūpa-vidhi) *m.* injunction which consists in conveying what is not known यच्छब्दस्य प्राप्तिद्योतकत्वेन स्वविषये अज्ञातज्ञापनरूपविधिप्रतिबन्धकत्वं स्पष्टम् BhāṭṭDi. i. 98. 18 (*on* ii. 1. 7); तस्य च विशेष्यांशे अज्ञातज्ञापनरूपविधिफलाभावेऽपि विशेषणांशे तत्फललाभेन सार्थक्योपपत्ति: MīmāKau. iii(2). 198. 13 (*on* ii. 2. 16)

**अज्ञातज्ञापनविषयत्व** (ajñātajñāpanaviṣaya-tva) *n.* the state of being the object of making known what is not known यागस्याज्ञातज्ञापनविषयत्वाख्यं विधेयत्वम् MīmāKau. i. 223. 17 (*on* i. 4. 8); ii. 78. 6 (*on* ii. 3. 24); iii(2). 164. 15 (*on* ii. 2. 3)

**अज्ञातज्ञापनाभिप्राय** (ajñātajñāpanābhiprāya) *adj.* which purports to making known what was (hitherto) unknown अज्ञातज्ञापनाभिप्रायं विधीयमानतयेति व्याख्येयम् NyāySu.(So.) 73. 15 (*on* i. 2. 19)

**अज्ञातज्ञापनार्थत्व** (ajñātajñāpanārtha-tva) *n.* purpose of making known what is not known उत्पत्तिविधेरज्ञातज्ञापनार्थत्वात् Bhām. 76. 11 (*on* i. 1. 4)

**अज्ञातज्ञापनावलम्बन** (ajñātajñāpanāvalambana) *n.* dependence on the act of making known what is unknown अज्ञातज्ञापनावलम्बनेनोदाहृतो नियम: AlaṅkāRa. 83(41)

**अज्ञातज्ञापनैकस्वभाव** (ajñātajñāpanaikasvabhāva) *adj.* whose only nature is making known what is unknown गोद्रव्यक्रयागदानादेरनूद्यमानस्याज्ञातज्ञापनैकस्वभावविधिविषयत्वायोगस्स्पष्ट एव MīmāKau. iii(2). 104. 5 (*on* ii. 1. 32)

**अज्ञातज्ञाप्यता** (ajñātajñāpya-tā) *f.* the state of becoming knowable of (something) not (already) known यद्यसौ साधनांशोऽज्ञातज्ञाप्यतयापूर्वेण साधनांशप्रतिपादकेनौदुम्बरो यूपो भवतीत्यनेन वाक्यभागेनावगत: NyāySu.(So.) 73. 16 (*on* i. 2. 19)

**अज्ञातज्ञाप्यत्व** (ajñātajñāpya-tva) *n.* the state of being fit to be made known what is not (already) known अज्ञातज्ञाप्यत्वरूपस्य चात्र विधेयत्वस्य…अभिप्रेतत्वात् NyāySu.(So.) 83. 23 (*on* i. 2. 26); अज्ञातज्ञाप्यत्वाख्यं विधेयत्वं च प्रमेयम् BhāṭṭDi. i. 161. 2 (*on* ii. 3. 11); अज्ञातज्ञाप्यत्वरूपविधेयत्वस्य…वाच्यत्वात् GuruCandr. i. 448. 19.

**अज्ञातज्ञेय** (ajñāta-jñeya) *adj.* knowable (object which was hitherto) unknown अस्मिन्नपवरके शतं हस्तिनो धावन्ति तान्विजानीहीत्युक्तो विज्ञाता मयेत्याह अज्ञातज्ञेयाभावं विवक्षन् IṣṭaSi. 370. 19.

**अज्ञाततत्त्व** (ajñāta-tattva) *adj.* **i** who does not know the (Supreme) Reality लोकानज्ञाततत्त्वांस्तु समाह्लादय नागरान् PāraS. 15. 371; ज्ञानमज्ञाततत्त्वाय यो दद्यात्सत्पथेऽमृतम् BhāgP. iv. 12. 51; तस्मादज्ञाततत्त्वानां पुंसां कुर्वतामकुर्वतां च कर्तृता YogVā. iv. 38. 5; शृण्वन्त्वज्ञाततत्त्वास्ते PañcDa. 7. 260; AvadhūU₁. 16; **ii** who does not know the truth कथमेनामज्ञा(त)तत्त्वोऽहं यन्त्रपुत्रिकामिव रुदन्तीं(? °तीं) निवारयामि UdaySuKa. 90. 6; अज्ञाततत्त्वस्य न तव दोष: KathāK. 105. 13; **iii** who has not known the real sense (of a word or expression) संशयोऽज्ञाततत्त्वस्य वाक्ये स्याद्यदनिश्चय: SāhiDa. 336. 9; तैरज्ञाततत्त्वै: किमिति पृष्ट: PrabaCin. 89. 27; **iv** whose real nature is not known (i. e. the unknown) अज्ञाततत्त्व: स परो न मुनक्ति ह्यतद्विदम् BṛĀraUBhVā. i. 4. 1676.

**अज्ञाततत्त्वक** (ajñātatattva-ka) *adj.* **i** who has not known or realized the ultimate truth नरा: … । प्रावर्तन्त ततो भीता: कर्मस्वज्ञाततत्त्वका: BṛĀraUBhVā. iii. 5. 144; iv. 4. 299; **ii** whose real nature is not known अज्ञानं च तदुत्थं च ह्यात्मैवाज्ञाततत्त्वक: BṛĀraUBhVā. ii. 1. 174.

**अज्ञाततत्त्वचेतस्** (ajñātatattva-cetas) *adj.* whose mind has not grasped the truth or not known the facts अज्ञाततत्त्वचेतोभिर्दुराग्रहमलीमसै: । युद्धमेव भवेद्गोष्ठ्यां दण्डादण्डि कचाकचि YaśasCam. ii. 406. 15.

**अज्ञाततत्त्वता** (ajñātatattva-tā) *f.* the state of not knowing the facts अज्ञाततत्त्वतया तस्मिन् स्तब्धतां भजमाने PrabaCin. 45. 20; 82. 16.

**अज्ञाततत्त्वम्पदार्थ** (ajñāta-tattvampadārtha) *m.* the unknown senses of the words *tat* and *tvam* (in the Upaniṣadic statement *tat tvam asi*) अज्ञाततत्त्वंपदार्थयोरैक्यं वेदान्तस्य विषय: SarvaDaKau. 114. 18.

**अज्ञाततत्त्ववित्त्व** (ajñātatattvavit-tva) *n.* the state of being one who knows the unknown Supreme Reality अज्ञाततत्त्ववित्त्वेन … कल्पितस्य उपदेष्टृत्वसंभवेन उदाहृतवाक्याविरोधात् AdvaiSi. 541. 14.

**अज्ञाततत्त्वार्थज्ञान** (ajñātatattvārtha-jñāna) *n.* knowledge of the real thing which was (hitherto) unknown प्रमा चाज्ञाततत्त्वार्थज्ञानम् MānaMe. 2. 2; 7. 5.

**अज्ञाततत्त्वावगम** (ajñātatattvāvagama) *m.* knowledge of the reality (hitherto) unknown अज्ञाततत्त्वावगमरूपाया: प्रमाया: MānaMe. 5. 6.

**अज्ञाततत्पद** (ajñāta-tatpada) *adj.* who does not know that word अव्युत्पन्नमना यावद् भवानज्ञाततत्पद: । गुरुशास्त्रप्रमाणैस्तु निर्णीतं तावदाचर MuktiU. 2. 30.

**अज्ञाततत्प्रभाव** (ajñāta-tatprabhāva) *adj.* not knowing its power अज्ञाततत्प्रभावानाम्…। अथैषामभवद्वादवज्ञा त्रिदशान्प्रति SamarāSū. 6. 16.

**अज्ञाततत्स्वरूप** (ajñāta-tatsvarūpa) *adj.* who has not known its nature अज्ञाततत्स्वरूपो यस्तत्र याति कदाचन । सर्वस्वं तस्य गृह्णन्ति तत्रत्या विविधा जना: RatnaCūKa. 125.

**अज्ञाततदर्थ** (ajñāta-tadartha) *adj.* who does not know its sense or import सर्वैरपि विद्वद्भिरज्ञाततदर्थैर्विमृशद्भिर्नृपेण पृष्टा हेमाचार्या इत्थं व्याचख्यु: PrabaCin. 64. 17.

**अज्ञाततद्गुण** (ajñāta-tadguṇa) *adj.* who does not know its merit वज्रश्चिरमवज्ञातोऽस्माभिरज्ञाततद्गुणै: PariPar. 12. 198.

**अज्ञाततद्योग** (ajñāta-tadyoga) *adj.* not knowing whose union (she had) अज्ञाततद्योगाद्गोगादाधानमभूत् PrabaCin. 106. 26.

**अज्ञाततद्वृत्त** (ajñāta-tadvṛtta) *adj.* who does not know the incident अहमज्ञाततद्वृत्त: शोकशङ्कुसमाकुल: SamarāSam. 2. 279.

**अज्ञाततन्मनस्** (ajñāta-tanmanas) *adj.* who has not known her mind चकार परमं दुःखं वायुरज्ञाततन्मना: PadmP.(Ra.) 16. 1.

**अज्ञाततस्** (ajñāta-tas) *adv.* from the unknown ज्ञातस्याज्ञाततोऽन्यत्वात्तत्र स्यात्कि न मानता BṛĀraUBhVā.(Sambandha.) 689.

**अज्ञातता** (ajñāta-tā) *f.* the state of being unknown अज्ञाततया … ब्रह्मविदनुरूपमकुर्वन् … यो जन: स: … श्रेयान् SanatBh. 224. 13 (*on* 1. 29); अज्ञातताप्यनवबोधनिबन्धनैव SaṁkṣeS'ā. 1. 51 (i. 54. 15); 1. 113 (i. 98. 5); 1. 316 (i. 235. 15); 2. 18 (ii. 11. 3); ज्ञाततया अज्ञाततया वा ज्ञानान्तरसापेक्षं तन्निरपेक्षं वा S'rutaPra. iB. 10. 8 (*on* i. 1. 1); विश्वस्यापि ज्ञाततयाज्ञाततया वा साक्षिवेद्यत्वस्य भवदभिमतत्वात् S'atDū. 69. 7; 169. 9; विषयगतामज्ञाततां निराकर्तुं स्वदेशगतेति SarvaDaSaṁ. 16. 757; अज्ञातताया: कञ्चित्कालं ज्ञाततया निवृत्ते: VivaPraSaṁ. 23. 15; अस्माकं तु सर्वं वस्तु ज्ञाततयाज्ञाततया वा साक्षिचैतन्यविषय एवेति Vādā. 32. 1; सर्वं वस्तु ज्ञाततयाज्ञाततया वा साक्षिविषय इति प्रसिद्धम् SiddhāTa. 54. 17.

**अज्ञाततकाल** (ajñātatā-kāla) *m.* the time of the unknown state (of something) अज्ञातताकालेऽपि घटादिकं योगिना प्रमीयते GuruCandr. ii. 96. 8; अज्ञातताकाले … कारणताग्राहकान्वयव्यतिरेकज्ञानसंभव: LaCandr. 469. 41.

**अज्ञातताकालीन** (ajñātatākāl-īna) *adj.* pertaining to the time of the unknown state (of something) हेतुताग्राहकान्वयव्यतिरेकज्ञानमज्ञातताकालीनघटान्वयज्ञानं विना न संभवति GuruCandr. ii. 95. 19.

**अज्ञाततादशा** (ajñātatā-daśā) *f.* the state of unknownness अयं तद्वेदीयशाखान्तरस्थवाक्यरूपो वाद: पुर: पूर्वं अज्ञाततादशायामग्निहोत्रादेर्ज्ञापक: LaCandr. 425. 18.

**अज्ञाततानुभवन** (ajñātatānubhavana) *n.* experience of unknownness अज्ञाततानुभवनं न च वास्तवं तदज्ञाततोद्भवति कल्पितता हि तस्या: SaṁkṣeS'ā. 1. 316 (i. 235. 17)

**अज्ञाततावगति** (ajñātatāvagati) *f.* knowledge of unknownness नाज्ञाततावगतिरस्ति जडेषु पूर्वम् SaṁkṣeS'ā. 2. 16 (ii. 10. 5); नाज्ञाततावगतये स्वयमेव वाद्यं मेयं समर्थम् SaṁkṣeS'ā. 2. 17 (ii. 10. 13)

**अज्ञातताविरोधित्व** (ajñātatāvirodhi-tva) *n.* the state of being opposed to the state of being not known 'अज्ञातो घट' इत्याकारा प्रमाणवृत्तिर्न संभवति, प्रमाणवृत्तेरज्ञातताविरोधित्वेन स्वसमानकालीनाज्ञाततविषयत्वासंभवात् LaCandr. 469. 11.

**अज्ञाततासत्त्व** (ajñātatā-sattva) *n.* existence of the state of being not known यत्तु भास्वररूपादौ व्यभिचार इति, तन्न; दुःखादाविव तत्राप्याद्यक्षणावच्छेदेनाप्रकाशात्, सन्निकर्षाद्यधीनवृत्त्यभावकाले अज्ञाततासत्त्वाच्च LaCandr. 781. 31.

**अज्ञाततासिद्धि** (ajñātatā-siddhi) *f.* establishment of the state of

being not known सिद्धेऽनवगते यस्मात्पुरस्तात् व्यावृत्तिनिर्मितेः। मानादज्ञाततासिद्धौ स्यादन्योन्यसमाश्रयः BrĀraUBhVā.(Sambandha.) 570.

**अज्ञातत्व** (ajñāta-tva) *n.* 1 the state of being not known विरुद्धौ सदसद्भावौ न स्यातामेकवस्तुनि। ननु तुल्यं विरोधित्वं ज्ञाताज्ञातत्वयोरपि SlokaVār. 5 (15). 34 (617. 12); यद् ज्ञायते तदेव गतिः तदन्यस्याज्ञातत्वात् गतित्वानुपपत्तेः LalitāTriBh. 330. 11 (on 41); (ज्ञातत्वं) तदव्याप्यत्वोपाधिकं चाज्ञातत्वं नाम Sarka. 119. 7; (प्रमाणप्रवृत्तेः) ऊर्ध्वं चेदज्ञातत्वं स्यात्, अज्ञातत्वमेव मानात्स्यात्र तु ज्ञातत्वम् IṣtaSi. 196. 23; 204. 21; अज्ञातत्वापमार्ष्ट्यर्थमुपादित्सन्ति मानिनः। मानानि मानसंबन्धादज्ञातत्वं च नश्यति BrĀraUBhVā. i. 2. 101; (Sambandha.) 686; अज्ञातत्वे यानवोचाम दोषान् मायावित्वे ब्रह्मणस्तानवेहि SaṁkṣeSā. 2. 142 (ii. 90. 13); विषयाश्रयं चेदज्ञानं निवर्तते तर्ह्येकेन ज्ञातस्य घटस्यान्यैरज्ञातत्वं न स्यात् Tattvodyo. 2B. 3; अज्ञातत्वस्य च ज्ञानाभावादुपपत्तेः VedāntKa. 173. 12 (on i. 3. 30); CaturCin. iii(1). 98. 14; एतेन अज्ञातकरणं इन्द्रियं इति प्रत्युक्तं अज्ञातत्वस्य दुर्ज्ञानत्वात् TarkSaṁ.(Ā.) 34. 21; 106. 7; अज्ञातत्वं नाम अज्ञानविषयत्वम् VivaPraSaṁ. 23. 17; संनिहितेऽपि धर्मिणि व्यवहितप्रतियोगिज्ञानमन्तरेण भेदस्याज्ञातत्वेनान्वयव्यतिरेकाभ्यां कार्यकारणभावावगमात् SarvaDaSaṁ. 5. 23; विषयगतमज्ञातत्वं व्युदसितुं साध्यविशेषणानि Nyāyāmr. 298A. 6; प्रमेयत्वेन सकलप्रमेयज्ञाने जातेऽपि विशिष्य सकलपदार्थानामज्ञातत्वेन सार्वज्ञ्याभावात् SiddhāMu. 35. 4 (on 65); तत्र त्रिविधं तात्पर्यलिङ्गम् प्रामाण्यशरीरघटकमर्थनिष्ठमज्ञातत्वमबाधितत्वं प्रयोजनवत्त्वं च AdvaiSi. 425. 6; अद्वितीयात्मतत्त्वं हि प्रधानं फलवत्त्वादज्ञातत्वाच्च प्रमेयं शास्त्रस्य SiddhāBi. 51. 7; ननु कार्यस्य घटत्वावस्थाविशेषविशिष्टत्वेन बुद्ध्यभिलापविशेषविषयत्वाज्ञातत्वासत्त्वादिकमुपपद्यताम् SivārkMaDī. ii. 24. 5 (on ii. 1. 16); न च प्रत्यक्षादिविषयस्य घटादेरज्ञातत्वमस्ति SiddhāLeSaṁ. 234. 3; न चाज्ञातत्वमेवाप्राप्तशब्दार्थः VidhiRa. 8 (38. 1); 10 (76. 1); अथिनि मृते तत्पुत्रादिना अज्ञातत्वादनुपन्यस्तेऽर्थे क्वासौ साक्षी स्यादिति मृतान्तरोऽसाक्षी ViraMi. 500. 24 (on ii. 68. 72); पूर्वमज्ञातत्वेनाकामितत्वान्मयैव पूर्वं कामितम् LaCandr. 8. 18; 80. 22; (इष्टिम्) अविहितां विदधाति, विहितां चातिदिशतीत्युक्तम्। ज्ञातत्वाज्ञातत्वयोर्विरोधात् MayūMāli. 651. 13 (on x. 1. 4); (भक्तमानसहंसिका) ... पैरैरज्ञातत्वात् कप्रत्ययः LalitāSaBh. 100. 29 (on 132)

**अज्ञातत्वक्षति** (ajñātatva-kṣati) *f.* loss of the state of being not known अज्ञातत्वक्षतिं कुर्वन्मानं मानत्वमश्नुते BrĀraUBhVā.(Sambandha.) 989.

**अज्ञातत्वज्ञापक** (ajñātatva-jñāpaka) *adj.* indicative of the state of being not known अर्थस्याज्ञातत्वज्ञापकमपि मानं तद्विषयमेव उत अन्यविषयम् IṣtaSi. 198. 3.

**अज्ञातत्वदोष** (ajñātatva-doṣa) *m.* defect of the state of being not known सवित्रादिदेवताविशेषविज्ञानसद्भावेनाज्ञातत्वदोषः परिहृतो भवति MayūMāli. 38. 29 (on i. 3. 7)

**अज्ञातत्वधर्म** (ajñātatva-dharma) *m.* quality of the state of being not known अज्ञानमज्ञातत्वधर्मं स्वविषये संपाद्य तस्य साक्षिणा संबन्धं घटयति VivaPraSaṁ. 20. 21; 20. 10.

**अज्ञातत्वनिवेश** (ajñātatva-niveśa) *m.* inclusion or insertion of the state of being not known अन्यथा स्वरूपेणाज्ञातत्वनिवेशे व्यवहारकालबाध्यप्रातीतिकबुद्धेः संवादिप्रवृत्तिप्रयोजकप्रमात्वाभावापत्तेः GuruCandr. i. 247. 12.

**अज्ञातत्वनिह्नुति** (ajñātatva-nihnuti) *f.* dissimulation of the state of being unknown प्रमाणाच्च न तत्सिद्धिस्तस्य मानविरोधतः। मानैश्चेद्विरोधः स्यात्कुतोऽज्ञातत्वनिह्नुतिः BrĀraUBhVā. iv. 3. 548.

**अज्ञातत्वबोधन** (ajñātatva-bodhana) *n.* conveying or making known the state of being unknown अत्राज्ञातत्वबोधने प्रयोजनाभावेन ... साकल्यार्थकत्वस्यैव ग्राह्यत्वात् VidhiRa. 10 (76. 6)

**अज्ञातत्वभाव** (ajñātatva-bhāva) *m.* existence of the state of being unknown न च संदिग्धस्यैव साध्यत्वम्, अन्यथाज्ञातस्य अज्ञातत्वभावाभ्युपगमात् TarkSaṁ.(Ā.) 94. 21.

**अज्ञातत्वरूप** (ajñātatva-rūpa) *adj.* having the form of the state of being unknown अज्ञातत्वरूपापूर्वत्वं फलं अबाधितत्वरूपोपपत्तिश्च GuruCandr. i. 313. 20; LaCandr. 374. 35.

**अज्ञातत्वविघातिन्** (ajñātatva-vighātin) *adj.* destroyer of the state of being unknown तेनागमस्य तत्र स्यादज्ञातत्वविघातिनः। प्रमाणत्वम् BrĀraUBhVā. (Sambandha.) 1007.

**अज्ञातत्वविशिष्टघटादि** (ajñātatvaviśiṣṭa-ghaṭādi) *adj.* jar etc. qualified by the state of being unknown तस्याज्ञातत्वविशिष्टघटादौ कारणत्वादिग्रहेऽनुपयोगः LaCandr. 469. 12.

**अज्ञातत्वविशेषित** (ajñātatva-viśeṣita) *adj.* qualified by the state of being unknown प्रमाणज्ञानोदयात्प्रागज्ञातत्वविशेषितोऽर्थः साक्षिसिद्धोऽनुवादगोचरो भवति च प्रश्नार्हः Vādā. 32. 2.

**अज्ञातत्वव्याघात** (ajñātatva-vyāghāta) *m.* contradiction of the state of being unknown न च सामान्येन ज्ञाने विशेषतो अज्ञातम्। ... प्रमितत्वे चाज्ञातत्वव्याघातात् VedāntKa. 173. 26 (on i. 3. 30)

**अज्ञातत्वसंसिद्धि** (ajñātatva-saṁsiddhi) *f.* determination of the state of being unknown यतोऽज्ञातत्वसंसिद्धिर्ज्ञातत्वस्यापि चाञ्जसा। तत एव च मानत्वम् BrĀraUBhVā. i. 4. 287.

**अज्ञातत्वसंभव** (ajñātatva-sambhava) *m.* possibility of being not known or not cognised चिदात्मनि अज्ञातत्वसंभवेऽपि कर्मकाण्डे लक्षणस्य अव्याप्ति(?प्त)त्वं प्रागुक्तरीत्या स्थितम् TarkSaṁ.(Ā.) 106. 10; अज्ञातत्वसंभवेनाज्ञातविषयकत्वसंभवात् LaCandr. 70. 4.

**अज्ञातत्वसिद्धि** (ajñātatva-siddhi) *f.* establishment of unknownness (of something) शुक्तीदमंशावच्छिन्नचैतन्यगतमज्ञानं रजताध्यासमुत्पाद्य तद्वभासाख्यमतिशयं शुक्तौ करोतीति शुक्तेरज्ञातत्वसिद्धिः VivaPraSaṁ. 23. 20.

**अज्ञातत्वादि** (ajñātatvādi) *adj.* unknownness and others अपि सर्वप्रमाणानामज्ञातत्वादिसिद्धये। नेक्ष्यतेऽन्यतमं मानम् BrĀraUBhVā. i. 4. 258; iv. 3. 183; अज्ञातत्वादिरूपेण चिद्रेवत्वं तु चित्यपि Nyāyāmr. 68B. 5; AdvaiSi. 488. 1.

**अज्ञातत्वादित्रय** (ajñātatvādi-traya) *n.* triad of features of unknownness and others (i. e. unsublatedness and purposefulness) अज्ञातत्वादित्रयविशिष्टार्थप्रमापकत्वरूपं तात्पर्यम् GuruCandr. i. 456. 10.

**अज्ञातत्वापनुद्** (ajñātatvāpanud) *adj.* remover of unknownness or the state of being unknown अज्ञातत्वापनुन्मानातिक्रमन्यदिति कथ्यताम् BrĀraUBhVā. i. 4. 248.

**अज्ञातत्वापनोदकृत्** (ajñātatvāpanoda-kṛt) *adj.* causing removal of unknownness संभाव्यतेऽपरं रूपमज्ञातत्वापनोदकृत् BrĀraUBhVā. ii. 4. 190.

**अज्ञातत्वापमार्ष्टि** (ajñātatvāpamārṣṭi) *f.* wiping out of unknownness अज्ञातत्वापमार्ष्ट्यर्थमुपादित्सन्ति मानिनः BrĀraUBhVā. i. 2. 101.

**अज्ञातत्वाभाव** (ajñātatvābhāva) *m.* absence of unknownness, absence of the state of being unknown ब्रह्मणोऽज्ञत्वाज्ञातत्वाभावात् ज्ञातृत्वज्ञेयत्वासिद्धेः IṣtaSi. 324. 18; अथवा अज्ञातो विषयोऽनुभव एव जडे अज्ञातत्वाभावात् GuruCandr. i. 172. 20; ii. 411. 9; iii. 36. 13; अविद्यादेरज्ञातत्वाभावेनैव तदवच्छिन्ना चित् न प्रमा LaCandr. 311. 19; 318. 41; 494. 22; विषयगतोऽज्ञातत्वाभावस्तु वृत्त्यनवच्छेदकदेशेनाप्यवच्छिद्यते LaCandr. 563. 36; 588. 43.

**अज्ञातत्वाभिनय** (ajñātatvābhinaya) *m.* expression pertaining to unknownness कस्यायमिति। अज्ञातत्वाभिनयोऽयम् LaSabdeSe. ii. 376. 2.

**अज्ञातत्वावच्छेदक** (ajñātatvāvacchedaka) *adj.* delimiting the state of being unknown अज्ञातत्वावच्छेदकघटाद्यस्वीकारे ... ऐक्यप्रत्यभिज्ञादेश्चानुपपत्तिः GuruCandr. i. 203. 22; LaCandr. 332. 14.

**अज्ञातत्वावच्छेदकत्व** (ajñātatvāvacchedaka-tva) *n.* the state of delimiting the unknownness चैतन्यस्यैवाज्ञातत्वान्मुख्यं प्रमाविषयत्वमज्ञातत्वावच्छेदकत्वाद्घटादेः GuruCandr. ii. 158. 15.

**अज्ञातत्वाविशेष** (ajñātatvāviśeṣa) *m.* absence of distinction in regard to the unknownness अज्ञातत्वाविशेषेऽपि मानानां यदि मानता BrĀraUBhVā.(Sambandha.) 689.

**अज्ञातत्वासिद्धि** (ajñātatvāsiddhi) *f.* want or absence of establishment of unknownness अज्ञातत्वासिद्धौ च ज्ञातत्वासिद्धिः IṣtaSi. 197. 6; 197. 12; अज्ञातत्वासिद्धौ ज्ञातत्वासिद्धेः IṣtaSi. 326. 19.

**अज्ञातत्वाहान** (ajñātatvāhāna) *n.* non-disappearance of unknownness अन्यथा मानादज्ञातत्वाहानात् IṣtaSi. 369. 9.

**अज्ञातत्वोपपत्ति** (ajñātatvopapatti) *f.* propriety of unknownness सविशेषत्वेन ज्ञाताज्ञातत्वोपपत्तेः NyāySu.(Ja.) 382B. 5 (on ii. 2. 6)

**अज्ञातत्वोपहितरूप** (ajñātatvopahita-rūpa) *n.* form delimited by unknownness अज्ञानद्वारा अज्ञातत्वोपहितरूपेण LaCandr. 495. 41.

**अज्ञातत्वोपाधिक** (ajñātatvopādhika) *adj.* having the unknownness as a condition अज्ञान(?त)त्वोपाधिकेऽर्थे वर्तमानात् प्रातिपदिकात्तिङन्ताच्च स्वार्थे यथाविहितं प्रत्ययो भवति KāśiVṛ. on v. 3. 73.

**अज्ञातदशा** (ajñāta-daśā) *f.* unknown state, the state in which (the object) is not realised यत्काल्पनिकं न तदज्ञातदशायामस्ति VedāntKa. 224. 2 (on i. 4. 19)

**अज्ञातदुःख** (ajñāta-duḥkha) *adj.* who has not experienced sorrow, to whom sorrow is not known स्वयमज्ञातदुःखो यः स दुनोति न विस्मयः Sūkti-Mu. 40. 2; Subhāṣi. 1109.

**अज्ञातदेवतत्व** (ajñātadevata-tva) *n.* the state of having an unknown deity तत्पक्षे तत्पूर्वयोः कर्मणोरज्ञातदेवतत्वान्न मन्त्रापेक्षा TantrVā.

467. 11 (*on* ii. 2. 3)

**अज्ञातदेशकाल** (ajñāta-deśakāla) *adj.* not unknowing the place and time अज्ञातदेशकालाः ··· मुग्धा भक्ष्यन्ते धूर्तमार्जारैः KalāVi. 1. 19.

**अज्ञातदेशगत** (ajñātadeśa-gata) *adj.* gone to an unknown place यस्य तु अज्ञातदेशगतस्य जीवनमरणान्यतरानिर्धारणात् पञ्चदशवर्षाणि प्रतीक्ष्य पश्चात् प्रतिकृतिदाहाद्यौर्ध्वदेहिकं क्रियते ViraMi. (Samaya.) 191. 26.

**अज्ञातदैववृत्तान्त** (ajñāta-daivavṛttānta) *adj.* who had not known the way of fate or destiny अज्ञातदैववृत्तान्तो ययौ लोकेषु हास्यताम् RājTa. (S'rī.) 4. 304.

**अज्ञातदोष** (ajñāta-doṣa) *adj.* [*f.* -ā] whose fault or offence is not known अज्ञातदोषेणोढा या निर्दोषा नान्यमाश्रिता NāraSm. 1ś6. 96; अज्ञातदोषैर्दोषज्ञैरुदूष्य···भेद्याः शत्रोः··· सामवायिकाः S'iśuVa. 2. 113; दैवादज्ञातदोषस्य शान्ति मे कर्तुमर्हसि BrahmVaiP. iii. 2. 10; अज्ञातदोषा ताडकं मदृक्षा(? ध्या)-लिङ्गितप्रिया। धत्ते निश्चलमा(? या)पि प्रीत्या मदनुवृत्तये EL viii. 111. 55; ViraMi. 1069. 10 (*on* 3. 300); *m.* unknown defect or fault पुंसामज्ञातदोषेण ··· कश्चिद् दुःखेन तिष्ठति SkandP. i(2). 42. 68.

**अज्ञातदोषक** (ajñātadoṣa-ka) *adj.* whose fault or offence is not known अदृष्टदोषेऽपीति । अज्ञातदोषकेऽपीत्यर्थः BālamBha. i. 454. 29 (*on* 1. 191)

**अज्ञातदोषत्व** (ajñātadoṣa-tva) *n.* the state of one whose discrepancy or fault is unknown तृतीयेन तु द्वितीये बाधिते सति अज्ञातदोषत्वान्निरपवादं भवति NyāyRa. 64. 7 (*on* 2. 60)

**अज्ञातद्रव्यदेवत** (ajñāta-dravyadevata) *adj.* (rite) of unknown (sacrificial) material and deity न च तत्र प्रवृत्तिः स्यादज्ञातद्रव्यदेवते TantrVā. 466. 1 (*on* ii. 2. 3)

**अज्ञातद्रव्यदैवत** (ajñāta-dravyadaivata) *adj.* (rite) of unknown (sacrificial) material and deity देवताद्रव्ययाथात्म्यज्ञानं कर्माङ्गतां गतम्। तावदेव हि तत्कर्म नाज्ञातद्रव्यदैवतम् BrĀraUBhVā.(Sambandha.) 360.

**अज्ञातद्विपभक्ष** (ajñāta-dvipabhakṣa) *adj.* to whom the food or diet of the elephant is not known (who is ignorant about the food or diet of the elephant) अज्ञातद्विपभक्षभिक्षुभवनावस्थानदुःस्थाशया वेपन्ते नवदन्तिनः PadyāTa. 56.

**अज्ञातधर्मशासना** (ajñāta-dharmaśāsanā) *adj.* (*f.*) to whom the code of law (pertaining to women's conduct) is not known नोद्वाहयेत् पिता बालामज्ञातधर्मशासनाम् MahNirvāT. 8. 107.

**अज्ञातधर्मसद्भाव** (ajñāta-dharmasadbhāva) *adj.* to whom the true nature of righteousness (*dharma*) is not known अज्ञातधर्मसद्भावः ···जातोऽसौ दीर्घसंसृतिः BṛKathāK. 46. 181.

**अज्ञातधातुलिङ्ग** (ajñāta-dhātuliṅga) *adj.* **1** in which verbal root and gender are not known अज्ञातधातुलिङ्गम् ··· अज्वरमिव वमति कविः श्लोकं कृच्छ्रात्सह प्राणैः Deśopa. 8. 18; **2** in which the bodily humour and symptom are not known or diagnosed, Deśopa. 8. 18.

**अज्ञातनयागमक्रम** (ajñāta-nayāgamakrama) *adj.* to whom the way of the science of the polity is not known (who is ignorant of the way of the science of polity) युवानमज्ञातनयागमक्रमम् ··· नृपम् ··· । ··· क्षिणोति चन्द्रं क्षणदेव तामसी MadhuVi. 3. 26.

**अज्ञातनानात्व** (ajñātanānā-tva) *adj.* to whom the difference (of the soul from the body) is not known ये चेहाज्ञातनानात्वास्तेषां देहेष्वहंमतिः S'lokaVār. 5(17). 132 (722. 7)

**अज्ञातनामगोत्र** (ajñāta-nāmagotra) *adj.* whose name and family are not known अज्ञातनामगोत्राय प्रेताय सतिलोदकम्। प्रदद्यात् SātāSm. 6. 27; मया तु जातु नाज्ञातनामगोत्रो हतः परः PāṇḍaC. 17. 251.

**अज्ञातनामत्व** (ajñātanāma-tva) *n.* the state of one whose name is unknown अज्ञातनामत्वे न सगोत्रत्वदोषस्तथापि नेदं कलौ प्रवर्तते NirṇaSi. 218. 25.

**अज्ञातनामन्** (ajñāta-nāman) *adj.* whose name is not known एते ··· नैव भक्ष्या न चेष्टा ये चान्येऽप्यज्ञातनामाण्डजाश्च HāriS. i. 22. 11; लवः (प्रविश्य) अज्ञातनामक्रमाभिजनान् पूज्यानपि नः स्वतः कथमभिवादयिष्ये UttaRāC. iv. 24 (1); अज्ञातनाम्ना सा तेन प्रार्थितेत्यसकृद्ग्रहः SkandP. iv. 59. 89; iv. 28. 17; तीर्थेष्वशिवेष्वज्ञातनामकमैमर्मस्वदृष्टपूर्वेषूदकेषु हस्तिनम् ··· पाययन्ति ··· हस्तिजीविनः Hastyāyur. 66. 8 (1. 9)

**अज्ञातनामवर्ण** (ajñāta-nāmavarṇa) *adj.* whose name and caste are not known अज्ञातनामवर्णेष्वात्मापि ययार्प्यते धनांशेन। तस्या अपि सद्भावं मृगयन्ते मोघसंकल्पाः KalāVi. 4. 12; SūktiRa. 114. 17.

**अज्ञातनामानोकह** (ajñātanāmānokaha) *m.* a tree whose name is not known अज्ञातनामानोकहपरित्यागेन व्यतिक्रान्तकिंपाकफलादितापत्तिः YaśasCam. ii. 284. 13.

**अज्ञातनिजपुण्या** (ajñāta-nijapuṇyā) *adj.* (*f.*) to whom her own merit is not known (who is ignorant of her own merit) गणिका कापि तत्रस्था···। अज्ञातनिजपुण्या सा किंचिदुत्सृष्टवल्कभृत् PadmP. vi. 171. 41.

**अज्ञातनिधातृक** (ajñātanidhātṛ-ka) *adj.* whose depositor is not known संपदयेत् स्वपुरुषैरन्येन चोद्धृ(? द्धृ)तम्। पुराणमज्ञातनिधातृकम् ManvaVi. 894. 17 (*on* 8. 38)

**अज्ञातनिर्माणका** (ajñātanirmāṇa-kā) *adj.* (*f.*) of unknown creation एकैवास्त्यमरावती ननु पुरी साज्ञातनिर्माणका RājTa (S'rī.) 1 (5). 3.

**अज्ञातनिलय** (ajñāta-nilaya) *adj.* whose home is not known, homeless अज्ञातनिलयस्यास्य कीदृशो दारसंग्रहः PadmP. (Ra.) 33. 319.

**अज्ञातनिवृत्ति** (ajñāta-nivṛtti) *f.* expiation for the unknown (fault) जुहुयात् ··· । अनाज्ञातमिति द्वाभ्यां ज्ञाताज्ञातनिवृत्तये LaghvāśvaSm. 2. 64.

**अज्ञातनिश्चय** (ajñāta-niścaya) *adj.* whose decision was not known (by others) (महीपतिः) अज्ञातनिश्चयासिद्धे(? यः सिद्धे)र्विनान्तःकरणं परैः। अथ प्रासादपदवीं सामात्यं तारमूलकम् RājTa. (Ka.) 8. 3097 (Hoshiarpur Ed. अज्ञातनिश्चयः)

**अज्ञातनिषेध** (ajñāta-niṣedha) *m.* unknown negation उक्तानुवादस्याज्ञातनिषेधज्ञापनार्थत्वादेव GuruCandr. i. 479. 14.

**अज्ञातनिष्ठ** (ajñāta-niṣṭha) *adj.* present in the unknown कृतिविषयत्वेन ज्ञाप्यत्वमज्ञातनिष्ठज्ञाप्यत्वं च विधिवाक्यमात्रस्यावश्यं वाच्यम् LaCandr. 826. 32.

**अज्ञातनिष्पतित** (ajñāta-niṣpatita) *adj.* fallen or discharged imperceptibly अज्ञातनिष्पतितरामशरावलीकम् । आलोक्य ··· उरस्तदीयं दूराद्दुःप्लुवगवीरवलानि पृष्ठम् RāmC. 36. 16.

**अज्ञातनृपविक्रम** (ajñāta-nṛpavikrama) *adj.* not aware of the valour of the king आयाताः केन विश्वस्ता अज्ञातनृपविक्रमाः RājTa. (Prā.) 448.

**अज्ञातन्यायवर्त्मन्** (ajñāta-nyāyavartman) *adj.* ignorant of the ways of reasoning or logic श्रोत्रियाणां त्वकम्पोऽयमज्ञातन्यायवर्त्मनाम् TattvSaṁ. 1509.

**अज्ञातपतिमर्यादा** (ajñāta-patimaryādā) *adj.* (*f.*) not knowing the rule of behaviour towards the husband अज्ञातपतिमर्यादामज्ञातपतिसेवनाम्। नोद्वाहयेत् पिता बालाम् MahNirvāT. 8. 107.

**अज्ञातपतिसेवना** (ajñāta-patisevanā) *adj.* (*f.*) not knowing how to serve the husband अज्ञातपतिसेवनाम्। नोद्वाहयेत् पिता बालाम् MahNirvāT. 8. 107.

**अज्ञातपदसमन्वय** (ajñāta-padasamanvaya) *adj.* who does not understand the syntactical relation between words तथा चात्र तथापि तत्र सुरतव्यापारलीलाविधौ रेवारोधसि वेतसीतरुतले चेतःसमुत्कण्ठानुपपत्तेरेव साक्षाच्छब्देनावगमाद् विभावनैव निश्चितेति कः संदेहमभिदधीत अन्यत्र तथापीत्यत्राज्ञातपदसमन्वयमात्रात् सहृदयमानिनः AlaṅkāRa. 112 (73)

**अज्ञातपदार्थ** (ajñāta-padārtha) *adj.* not knowing the meaning of individual words पदार्थसङ्गतेऽर्थे चेद्वाक्यं साक्षात् प्रवर्तते। पदार्थसंविदस्तत्र न स्याद् दृष्टोपकारिता। तेनाज्ञातपदार्थोऽपि बुध्येतैव स्वभावतः S'lokaVār. 7. 106 (875. 6); YuktiSneha. 152. 23 (*on* i. 1. 7)

**अज्ञातपद्धति** (ajñāta-paddhati) *adj.* whose footprint or movement has not been known पराजितस्ततो राजा विवेश गिरिगह्वरे।···अज्ञातपद्धतिश्चान्यैः SkandP. ii(7). 15. 10; मुनीन्द्रो ··· राजा ···। ननाम शिरसा भक्त्या प्रवासेनातिपीडितः। राजचिह्नविहीनश्च केनाप्यज्ञातपद्धतिः SkandP. ii(7). 15. 17.

**अज्ञातपद्मप्रयोग** (ajñāta-padmaprayoga) *adj.* not knowing the usage of the word *padma* तथैवाज्ञातपद्मप्रयोगस्य कुमुदसाधारणबोधो न स्यात् TattvCin. iv(2). 612. 3.

**अज्ञातपरचक्रविप्लवा** (ajñāta-paracakraviplavā) *adj.* (*f.*) unaware of the disaster caused by the army of enemy समाश्वासय श्वा(? स्वा)मिविरहविह्वलाः प्रतिग्रामनगरमज्ञातपरचक्रविप्लवा(? वाः) पौरजनता(? ताः) TilaMañ. 402. 13.

**अज्ञातपरमार्थ** (ajñāta-paramārtha) *adj.* not knowing the truth माया तवेयमज्ञातपरमार्थातिमोहिनी ViṣṇuP. v. 30. 14; अज्ञातपरमार्थेन क्रियामात्रे च तिष्ठता। फलकार्पण्ययुक्तेन मनसा सोऽकरोन्मखम् YogVā. iv. 51. 3; अज्ञातपरमार्थैस्तैः क्षुधादिपरिपीडितैः। फलाद्याहारसंतुष्टैः प्रणीतास्तापसादयः PadmP. (Ra.) 11. 291; (वसिष्ठोऽशिष्टभावनः) अज्ञातपरमार्थोऽसौ तिष्ठति प्रीतमानसः BṛKathāK. 106. 13; अज्ञातपरमार्थानामेवमन्येऽपि दुर्णयाः। मिथ्यादृशां न गण्यन्ते जात्यन्धा-

**अञ्जनकोश** (añjana-kośa) *m.* receptacle of collyrium चित्तिरा उपबर्हणमित्यञ्जनकोशमादत्ते KauṣiGS. i. 8. 4.

**अञ्जनकोशी** (añjanakośī) *f.* a kind of plant (*nīlinī*) नीलिनी … स्थिररङ्गाञ्जनकोशी राजनील्यपरा पुनः KalpaK. 303. 482; cf. अञ्जनकेशी.

**अञ्जनक्रिया** (añjana-kriyā) *f.* A application of collyrium (to the eye) यः कुर्यात्परिषेकाञ्जनादिकम् । नस्याञ्जनक्रियां वैद्यः स श्रो(स्रो)तोऽन्धं निवर्तयेत् Hastāyur. 147. 6 (1. 18); B act of anointing (of gravel) उपक्रमेऽञ्जनक्रियाक्षिप्तद्रवद्रव्यसामान्यनिश्चयात् UpaPara. 7. 10; अञ्जनक्रियथैव तत्साधनत्वेन स्नेहद्रव्यसामान्यमाक्षिप्यत इति भावः MayūMāli. 91. 3 (*on* i. 4. 19); 92. 1 (*on* i. 4. 19)

**अञ्जनक्लेद** (añjana-kleda) *m.* wetness (on account of applying) collyrium तदञ्जनक्लेदसमाकुलाक्षम् …वधूमुखं बभूव RaghuVa. 7. 21.

**अञ्जनक्षय** (añjana-kṣaya) *m.* being exhausted or used up like collyrium अवर्धमानश्चार्थः कालेन स्वल्पव्ययोऽप्यञ्जनक्षयमेति Hitopa. 2. 8(3)

**अञ्जनक्षितीन्द्र** (añjana-kṣitīndra) *m.* mountain called Añjana यत्र …अपर इवाञ्जनक्षितीन्द्रः शेते स स्वपनरतः स कुम्भकर्णः Rāgh. 18. 48.

**अञ्जनक्षोद** (añjana-kṣoda) *m.* powder of collyrium त्रिशिखमुखविभेदादञ्जनक्षोदपुञ्जच्छविरवनिममुञ्चद् व्योमसीम्न्यर्धमानः HarVi. 50. 87; सौवर्णमञ्जनक्षोदभाजनं पुंमृगाकृति…भवेत् VīraMi. (Lakṣaṇa.) 656. 23.

**अञ्जनक्ष्माधर** (añjana-kṣmādhara) *m.* the mountain Añjana ते प्रकृतिमेचका वसुः नूतनाम्बुधररञ्जिताञ्जनक्ष्माधरभ्रमविधानबन्धवः S'rīKaC. 22. 17.

**अञ्जनक्ष्मापति** (añjana-kṣmāpati) *m.* the mountain Añjana पार्श्वेऽप्यत्राञ्जनक्ष्मापतिरिव शनकैः सञ्चरिष्णुः कनीयान् रक्षोनाथः MahāviC. App. A (283. 8)

**अञ्जनखण्डाभा** (añjanakhaṇḍābhā) *adj.* (*f.*) resembling a mass of collyrium (शबरीमापतुः) क्षामामञ्जनपिण्डाभां (v. l. अञ्जनखण्डाभां) दण्डिनीमजिनास्तराम् Bhaṭṭi. 6. 61.

**अञ्जनगिरि** (añjana-giri) *m.* I name of a mountain इन्द्रं वै वृत्रं जघ्निवांसं रक्षांस्यसचन्त । तान्यञ्जनगिरिणान्तरधत्त KāṭhS. 23. 1; KapiKaS. 35. 7; अञ्जनगिरिः CāndraVyā. v. 2. 132; अञ्जनगिरिमलमलिनाभिः कुञ्जरघटाभिरन्धकारितदिङ्मुखतया जलधरदिवसायमानं राजद्वारमासाद्य तुरंगमादवततार Kād. 86. 16; एष खलु…अञ्जनगिरिरिव ण(? न)लगिरी(रिः) दृश्यते TāpaVa. 5. 27. (8); शिलाकलापो लुठितः किमञ्जनगिरेरयम् KathāSaSāg. xii. 35. 77; अञ्जनस्य गिरिः । अञ्जनगिरिः GaṇRa. 2. 143 (179); शाश्वतान्यर्हच्चैत्यानि सन्त्यञ्जनगिरिष्विव TriṣaS'aPuC. ii. 3. 729; TīrthaKa. 48. 31; अञ्जनगिरिं कृष्णवर्णपर्वतविशेषम्…उद्गिरत् JñātāDhaṬ. 138A. 9; II name of an elephant मदभावस्थो ह्यञ्जनगिरिः Avimā. 1. 1(14); सत्कुञ्जरोऽञ्जनगिरिर्जयवर्धनस्य मत्तद्विपो रणभटस्य च कालमेघः KathāSaSāg. xviii. 2. 276.

**अञ्जनगिरिगुहा** (añjanagiri-guhā) *f.* cave of the mountain Añjana तरुणतमालकाननमिवाञ्जनगिरिगुहागर्भमिव … विशति सकलजीवलोके स लोकश्रेष्ठः NalaCam. 2. 30 (48)

**अञ्जनगिरिच्छाय** (añjanagiri-cchāya) *adj.* of the shade or colour of the mountain Añjana अथाञ्जनगिरिच्छायः प्रगलद्दाननिर्भरः । आजगाम गजस्तासां स्त्रीणामभिमुखो बलात् PadmP.(Ra.) 8. 324.

**अञ्जनगिरिशिखर** (añjanagiri-śikhara) *m. n.* peak of the mountain Añjana नश्यन्ति … अञ्जनगिरिशिखरेष्विव निशासु चन्द्रांशवः पतिताः Tantrākhyā. 30. 4 = PañcT. 1. 101 (105. 8) = Pañcā. 60. 17.

**अञ्जनगिरिशिला** (añjanagiri-śilā) *f.* rock from the mountain Añjana अञ्जनगिरिशिलास्तम्भैरिवोपजातहस्तपादैः …निषादाधिपैः संरक्षितानि TilaMañ. 134. 15.

**अञ्जनगिरीश्वर** (añjanagiriśvara) *m.* lord of the mountain Añjana विद्याधराणामधिपः …षष्ठश्च धूर्तवहनो नाम्नाञ्जनगिरीश्वरः KathāSaSāg. viii. 5. 53.

**अञ्जनग्रहण** (añjana-grahaṇa) *n.* mention of collyrium अञ्जनग्रहणं त्वलङ्कारलक्षणार्थम् BālaKrī. i. 48. 12 (*on* 1. 32)

**अञ्जनघनश्यामा** (añjanaghana-śyāmā) *adj.* (*f.*) dark like a solid mass of collyrium दृष्ट्वा कुन्तलराजिमञ्जनघनश्यामां किमुत्ताम्यसि S'ṛṅgāVaiTa. 38.

**अञ्जनचयप्रख्य** (añjanacaya-prakhya) *adj.* appearing like a mass of collyrium तमञ्जनचयप्रख्यं द्रौणिर्दृष्ट्वा महीधरम् । …न चुक्षुभे MahāBhā. vii. 131. 69; vii. 150. 68.

**अञ्जनचूर्ण** (añjana-cūrṇa) *n.* powder of antimony निमेषादपि कौन्तेय यस्यायुरपचीयते । सूच्येवाञ्जनचूर्णस्य MahāBhā. iii. 36. 3; मेघावलीमञ्जनचूर्णवर्णां संपश्यामः MahāBhā. vii. 154. 24; सूक्ष्मेणाञ्जनचूर्णेन नभः कृत्स्नमिवाञ्जितम् Rāmā. i. 796*(1); अञ्जनचूर्णवर्णाः … कृष्णाः (जलायुकाः) SuśruS. i. 13. 11; ViṣṇuP. v. 9. 5; BṛSaṁ. 30. 15; AṣṭāSaṁ i. 177. 14 (1. 36); LiṅgaP. i. 92. 30; अञ्जनचूर्णपूर्णसमुद्गकन्यायेन सर्वलोक एवेति TattvPradī.(A.) 193. 2 (*on* 2. 44); SaraKaṇṭhā. 154. 6; KumāCaSaṁ. 83. 27.

**अञ्जनचोर** (añjana-cora) *m.* name of a thief (because of possessing a magic salve to become invisible and visible) अदृश्याञ्जनावर्जितोर्जितप्रज्ञः प्रतीताञ्जनचोरापरसंज्ञः YaśasCam. ii. 289. 26.

**अञ्जनचौर** (añjana-caura) *m.* name of a thief cf. अञ्जनचोर, संपत्यासन्नशिवाचारोऽञ्जनचौरः YaśasCam. ii. 290. 19.

**अञ्जनच्छवि** (añjana-cchavi) *adj.* having the hue or colour of collyrium अञ्जनच्छविभिर्वनयन् हृदयान्धकारमम्भोधरैः (विवेश अम्भोमुचां कालः) UdaySuKa. 103. 10.

**अञ्जनच्छाय** (añjana-cchāya) *adj.* possessing (dark) colour of collyrium or antimony संक्रान्तयाञ्जनच्छायदेहप्रतिमयाथ सः । प्रविशन्स्फटिकागारानैन्द्रनीलानिवाकरोत् HarVi. 32. 28; UdaySuKa. 20. 11.

**अञ्जनजुष्** (añjana-juṣ) *adj.* containing collyrium व्यलीके पार्वत्याः परिलघुलवैरञ्जनजुषः । पतद्भिर्बाष्पस्य क्रमलिखितलक्ष्मा विजयते । लसल्लीलाचन्द्रश्चरणगतमौलेः स्मरजितः SaduktiKa. 9. 30 = SūktiMu. 1. 18.

**अञ्जनडब्बडक** (añjana-ḍabbaḍaka) *m.* vessel of collyrium सुमित्रेणाप्यञ्जनडब्बडकौ गृहीतौ । ते स्त्रियौ मानुष्यौ कृत्वा…पुनरपि करभ्यौ कृतौ KathāK. 98. 24.

**अञ्जनतन्तु** (añjana-tantu) *m.* a line (*lit.* thread) of collyrium हरति हृदयं शलाकानिहितोऽञ्जनतन्तुरेष सखि मुग्धे ĀryāSaS'a. 687.

**अञ्जनतस्** (añjana-tas) *adv.* by application, by anointing कर्पूरजं रजः क्षिप्रमञ्जनतो हन्ति शुक्रम् SiddhYo. 61. 97.

**अञ्जनतस्कर** (añjana-taskara) *m.* name of a thief cf. अञ्जनचोर, अन्तरिक्षगतिं प्राप निःशङ्कोऽञ्जनतस्करः YaśasCam. ii. 291. 5.

**अञ्जनता** (añjana-tā) *f.* the state of being collyrium मिथ्यावचनदक्षश्च धृष्टोऽयं खलु कथ्यते । यथा … श्रियं धत्से चित्रं वत मृगमदेऽप्यञ्जनतया UjjvaNī. 40. 1.

**अञ्जनत्रय** (añjana-traya) *n.* three types of collyrium कालाञ्जनसमायुक्ते पुष्पाञ्जनरसाञ्जने । अञ्जनत्रितयं प्राहुस्त्र्यञ्जनं चाञ्जनत्रयम् RājNi. 419. 20.

**अञ्जनत्रितय** (añjana-tritaya) *n.* three types of collyrium, RājNi. 419. 19.

**अञ्जनत्वच्** (añjana-tvac) *f.* bark of the Añjana tree लोध्राङ्कोलाञ्जनत्वचः ĪśānS'iPa. i. 45. 121.

**अञ्जनत्विष्** (añjana-tviṣ) *adj.* of complexion like that of collyrium विसृज्यमानं तमसा नभस्तलं जहाति निर्मोकमिवाञ्जनत्विषा JānaHa. 3. 68; राजा …अञ्जनत्विषा निजशरीरच्छायापुरुषेण … अनुगम्यमानं विद्याधरमुनिमपश्यत् TilaMañ. 24. 9; BhāgP. viii. 22. 13.

**अञ्जनदर्शन** (añjana-darśana) *n.* (extraordinary) vision acquired through (magical) ointment निधिनिक्षेपाञ्जनदर्शनमोहनस्तम्भनवश्यवादिस्तम्भनादिविद्याविशेषैः S'aṅkaVi.(Ā.) 224. 8.

**अञ्जनदान** (añjana-dāna) *n.* offering of ointment or collyrium अथवा 'अञ्जस्व' इति अञ्जनदानम् VīraMi. (Saṁskāra.) 942. 14; यद्यप्यन्यस्मृतावञ्जनदानमादावुक्तम् BālamBha. i. 530. 14 (*on* 1. 242)

**अञ्जनदिग्ध** (añjana-digdha) *adj.* mixed with collyrium पाणौ … कपोलस्थलं विन्यस्याञ्जनदिग्धलोचनजलैः किं म्लानिमानीयते SubhāRaK. 21. 17 = SaduktiKa. 101. 8.

**अञ्जनदूषिका** (añjana-dūṣikā) *f.* a disease of the eye lid तथैवाञ्जनदूषिका । … एकविंशतिरित्येते विकारा वर्त्मसंश्रयाः BhāvPra.(Bhā.) S. 62(? 63). 76.

**अञ्जनदृष्टि** (añjana-dṛṣṭi) *f.* eyes anointed with (magical) collyrium कृतौशनसमार्गेषु गन्तुमान्ध्यं भजन्त्यहो । दुर्लभे दोषमार्गे तु यावदञ्जनदृष्टिभिः Ḍamaru. 45.

**अञ्जनद्युति** (añjana-dyuti) *adj.* of the colour of collyrium वसानमेणाजिनमञ्जनद्युति (नारदं ददर्श) S'iśuVa. 1. 6; SkandP. iii(1). 38. 18; *m.* a tree (having the lustre of collyrium) महानीलोऽञ्जनद्युतौ NānārthaMa. 1984.

**अञ्जनद्रव्य** (añjana-dravya) *n.* A besmearing or anointing substance अञ्जनद्रव्ये घृततैलवसादिभेदेन संदिह्यमाने … घृतेनाक्ताः शर्करा उपधेयाः NyāyMañ. i. 260. 31; DaṇḍaVi. 203. 11; B collyrium तुदति तुत्थमञ्जनद्रव्यम् Prasā. ii. 625. 20.

**अञ्जनद्रुमकुसुम** (añjanadruma-kusuma) *n.* flower of the Añjana-tree अञ्जनपुष्पम् अञ्जनद्रुमकुसुमम् VīraMi. (S'rāddha.) 40. 21.

**अञ्जनद्विरद** (añjana-dvirada) *m.* name of one of the mythological

elephants guarding the quarters पपोऽञ्जनद्विरदम् … आरुह्य संयुगरसान्मरुद्‌भ्युपेत: HarVi. 39. 18.

**अञ्जनध्वज** (añjana-dhvaja) *m.* lamp (*lit.* with soot as the banner) दशेन्धनः प्रदीपोऽपि दशाकर्पाञ्जनध्वजौ ParaNā. 2292.

**अञ्जननाडिका** (añjana-nāḍikā) *f.* tube for collyrium वर्तिशलाकया अञ्जननाडिकावर्तिकया न्यूनादीनां पूरणम् AbhinBhā. ii. 52. 15 (*on* 9. 113)

**अञ्जननामिका** (añjana-nāmikā) *f.* (a pustule on the eye-lid) called Añjana तथाऽऽर्त्तवर्त्मशुष्काशस्तथैवाञ्जननामिका SuśruS. vi. 3. 5; उत्सङ्गपिटिकामञ्जननामिकां च भित्त्वा AṣṭāSaṁ. ii. 223. 8 (6. 12); सदाहताम्रा पिटकातिकोमला। विवेदना साञ्जननामिका भवेत् KalyāKā. 15. 183; RugVi. 59. 82; SiddhYo. 61. 234; वर्त्मगदा: … लगणोऽञ्जननामिका SārṅgaS. i. 7. 156; iii. 11. 49; iii. 13. 37.

**अञ्जननिकर** (añjana-nikara) *m.* mass of collyrium अञ्जननिकरस्तु दृशोस्तव कुचयोश्च पत्त्रभङ्गकं च वृथा SŕṅgāTi.(Ru.) 1. 98.

**अञ्जननिभ** (añjana-nibha) *adj.* [*f.* -ā] resembling collyrium (i. e. black) नीलोत्पलाञ्जननिभा भयदा: श्वपाक्य: BālC. 2. 2; वपु: संदर्शयामास दिव्यं कृष्णवपुर्हरि: । बलाहकाञ्जननिभम् MatsyaP. 172. 21; VāyuP. ii. 9. 43; तिस्र: सुनीलाञ्जननिभगरेखा: समाभान्ति यस्याम् … विलसतु कन्धरा व: SivaKePāSt. 14; VāmaP. 6. 31; देवोऽथ भैरववपु: किल निर्जगाम । व्याघ्राम्बरोऽञ्जननिभश्च KathāSaSāg. xiv. 2. 182; अथाश्रीयं व्याचक्ष्महे । यदञ्जननिभं क्षिप्तं सद्रह्मौ विकृतिं व्रजेत् RaseCin. 4. 1.

**अञ्जननिमित्त** (añjana-nimitta) *adj.* resulting from anointing यूपस्य … अञ्जननिमित्तं तेजस्वित्वम् TantrVā. 325. 18 (*on* i. 4. 22); SāstrDī. 87. 1 (*on* i. 4. 15)

**अञ्जननिष्पन्न** (añjana-niṣpanna) *adj.* fashioned of Añjana-wood विश्राणयामासुर्वाजिनोऽलङ्कर्वाजिन: । केचिदञ्जननिष्पन्नान् रथान् देवरथोपमान् TriṣaŚaPuC. i. 4. 278.

**अञ्जननील** (añjana-nīla) *adj.* **i** black or dark like collyrium अञ्जननीलमावयो: खम् … उत्पततो: ĀścaCū. 7. 2; अञ्जननीलभास: … जलदा बभूवु: HarVi. 30. 9; इदमञ्जननीलमाहतम् (तम:) NavaSāC. 12. 55; **ii** black or dark with or due to collyrium अपवर्गवाञ्छा । यावन्न वक्रगतिरञ्जननीलरोचिरेणीदृशां दशति लोचनदन्दशूक: SubhāRaK. 17. 35.

**अञ्जनपङ्क** (añjana-paṅka) *m.* collyrium-paste विस्पष्टमेव पुनरञ्जनपङ्कदिग्धपर्यन्तता रुदितमाह तयो: (चक्षुषो:) स तस्या: HarVi. 25. 66.

**अञ्जनपत्त्र** (añjana-pattra) *n.* leaf of the Añjana-tree योगी … सर्वाञ्जनपत्राभाम् …त्वचं सरन् । शक्नैरपि न मासेन हन्तुं शक्यो भविष्यति MāliniT. 15. 30; कर्णेलग्नमिन्दीवरं मृदुलमञ्जनपत्त्ररम्यम् Hāsyārṇa. 2. 3.

**अञ्जनपत्त्रिका** (añjana-pattrikā) *f.* hemp, *Canabis sativa* चित्रकं त्रिफला भृङ्गी हरिद्राञ्जनपत्त्रिका । रस: … जरावैरूप्यनाशन: RasRaSa. 30. 78; गान्धारी विजया भङ्गी भृङ्गी चाञ्जनपत्त्रिका ṢaḍrasaNi. 21. 17.

**अञ्जनपराग** (añjana-parāga) *m.* particle of collyrium नेत्रैरिवाञ्जनपरागकणावकीर्णैर्तूलीविनिर्गमनमार्गनिबद्धरेखै: । वातायनै: … विवसुर्गृहाणि HarVi. 19. 65.

**अञ्जनपर्वत** (añjana-parvata) *m.* the Añjana mountain सोऽवतीर्य पुनस्तस्थौ रथे हेमपरिष्कृते । महीधर इवात्युच्च: श्रीमानञ्जनपर्वत: MahāBhā. vii. 131. 52; संगताविव राजेन्द्र कैलासाञ्जनपर्वतौ MahāBhā. ix. 353*(1); एहि क्षिपामि धरणीतलमभ्युपेहि वज्राहतस्तट इवाञ्जनपर्वतस्य BālC. 3. 14; न यावदेताबुदपद्यदुत्थितौ जनस्तुपाराञ्जनपर्वताविव SiśuVa. 1. 15; (गुह्यक:) दुःखशोकसमायुक्तो जगामाञ्जनपर्वतम् VāmaP. 64. 17; किं स्यादञ्जनपर्वत: स्फटिकयोर्द्वन्द्वं दधद्दीर्घयो: NalaCam. 1. 44 = SūktiMu. 109. 9; वपुर्महावराहस्य शुशुभे … । पतद्भिरिव खद्योतै: प्रांशुतरामञ्जनपर्वत: SivaP. vii. 11. 33 (513B. 15); रेजेतरामञ्जनपर्वतस्य लग्नेव तिग्मांशुमयूखमाला NavaSāC. 17. 58; अस्य मध्यप्रदेशे तु क्रमात् पूर्वादिदिक्षु च । अञ्जनवर्णाश्चत्वारस्तिष्ठन्त्यञ्जनपर्वता: TriṣaŚaPuC. ii. 3. 706 = TīrthaKa. 48. 6.

**अञ्जनपर्वतशिखर** (añjanaparvata-śikhara) *n.* summit of the mountain Añjana महानञ्जनपर्वतशिखराकार: क्रोड: समासादित: PañcT. 2. 28 (221. 3 F. N.)

**अञ्जनपर्वताकार** (añjanaparvatākāra) *adj.* having the size of the mountain Añjana अरण्यमध्ये कश्चिदञ्जनपर्वताकारो महान् वराह: समागतोऽस्ति SiṁhāDvā. 147. 0 (17)

**अञ्जनपर्वन्** (añjana-parvan) *m.* name of the son of Ghaṭotkaca पौत्रेण भीमसेनस्य शरै: सोऽञ्जनपर्वणा । बभौ मेघेन धाराभिर्गिरिर्मेरुरिवार्दित: MahāBhā. vii. 131. 45; ध्वजमेकेन बाणेन चिच्छेदाञ्जनपर्वण: MahāBhā. vii. 131. 46.

**अञ्जनपिण्डाभा** (añjanapiṇḍābhā) *adj.* (*f.*) resembling a lump or mass of collyrium (दाशरथी शबरीमापतुर्वने) क्षामाञ्जनपिण्डाभां दण्डिनीम् Bhaṭṭi. 6. 61.

**अञ्जनपुञ्ज** (añjana-puñja) *m.* heap or mass of collyrium भित्त्वा शनैस्तिमिरमञ्जनपुञ्जनीलमानञ्जुरिन्दुकिरणा जगदञ्जसारात् HarVi. 20. 52; ज्ञार्वरं तमोऽञ्जनपुञ्ज इव श्याममिति ज्ञानमत्यन्ततेजोऽभावे सति NyāyKa. 179. 16; आदावञ्जनपुञ्जलिप्तवपुषाम् … दृशाम् ।…चेतोमुवो भल्लीनामिव पानकर्म कुरुते कामं कुरङ्गेक्षणा KāvyPra. 321. 1; कालिन्द्या: … जले मग्नस्याञ्जनपुञ्जसंचयनिभस्याहे: कुतोऽन्वेषणा SubhāRaK. 40. 1; Pañcā. 75. 2; (क्षेत्रपाल:) पायादञ्जनपुञ्जकुञ्जरघटानीलाञ्जनाम्भोदवत् ĪśānSiPa. i. 32. 52; अद्रिष्वञ्जनपुञ्जकान्ति … उद्गच्छति … तम: SaduktiKa. 164. 11; SāhiDa. 543. 12; (हे भगवन्) कुर्वन्नञ्जनपुञ्जगञ्जनमतिश्यामाङ्गकान्तिश्रिया … मां हन्त संतर्पय StavMā. 138. 14.

**अञ्जनपुञ्जगौरी** (añjanapuñja-gaurī) *adj.* (*f.*) fair like a mass of collyrium (i. e. very dark) अञ्जनपुञ्ज(? ज्ञ)गौरी … कामिनी सा Hāsyārṇa. 1. 43.

**अञ्जनपुञ्जतेजस्** (añjanapuñja-tejas) *adj.* having the lustre or shine of a mass of collyrium सद्यो विभिन्नाञ्जनपुञ्जतेजसो मुखैर्विषाग्निं विकिरन्त उच्चकै: ।… महाभुजंगमा: … भृशं ययु: KumāSaṁ. 15. 16.

**अञ्जनपुञ्जभास्** (añjanapuñja-bhās) *adj.* shining like a mass of collyrium अञ्जनपुञ्जभास: … गजानसंश्च । व्यापारयन्ति स्म रयेण वीरा: … वैरिवरूथिनीषु NavaSāC. 17. 8.

**अञ्जनपुञ्जसंनिभ** (añjanapuñja-sannibha) *adj.* resembling a mass of collyrium गिरयोऽञ्जनपुञ्जसंनिभा: … वृष्टिदा: BṛSaṁ. 28. 6.

**अञ्जनपुञ्जाभ** (añjanapuñjābha) *adj.* [*f.* -ā] resembling a mass of collyrium कश्चिदञ्जनपुञ्जाभं हिमवन्तमुपागमत् MahāBhā. iii. 107. 12; केचिदञ्जनपुञ्जाभा: केचिच्छ्वेताचलप्रभा: । सप्तमातृगणाश्चैव MahāBhā. ix. 43. 28; इत्युक्त्वाञ्जनपुञ्जाभं विमलं खड्गमाददे MārkP. 2. 22; कश्चिदञ्जनपुञ्जाभ: … सोऽसृजद् रत्नपांसुभि: MahāP. 22. 84; उत्तिष्ठन्ति … दिविचरा घना: । केचिदञ्जनपुञ्जाभा: केचित्कुन्दकुलोपमा: ViṣṇuDhaP. i. 76. 7; दशकन्यास्ततो दिक्षु आगताश्च महार्णवे । …काश्चिदञ्जनपुञ्जाभा काश्चिद्रक्तोत्पलप्रभा SkandP. v(3). 8. 15.

**अञ्जनपुद्गल** (añjana-pudgala) *m.* particle of collyrium परिनिबद्धमिवाञ्जनपुद्गलै: ।… प्रसृमवपु: फलिनीद्युति दिद्युते NemiC. 8. 2.

**अञ्जनपुर** (añjana-pura) *n.* name of a city [pw]

**अञ्जनपुलक** (añjana-pulaka) *m.* mass of collyrium वैक्रियसमुद्घातो वैक्रियकरणार्थो जीवव्यापारविशेष: … तत्स्वरूपमेवाह … विविधपुद्गलानादत्ते … अञ्जनपुलकानाम् …ततो वैक्रियं करोति JñātāDhaṬ. 35A. 1.

**अञ्जनपुष्प** (añjana-puṣpa) *n.* flower of the Añjana-tree अञ्जनपुष्पम् अञ्जनकुसुमम् ViraMi.(Srāddha.) 40. 21.

**अञ्जनपूरण** (añjana-pūraṇa) *n.* application of collyrium प्रयोक्तृव्योऽग्रसंदंश: …। वृन्तात्पुष्पोद्धृतौ वर्तिशलाकाञ्जनपूरणे SaṁgīRa. iv. 50. 9 (7. 178)

**अञ्जनप्रख्य** (añjana-prakhya) *adj.* [*f.* -ā] (dark) like collyrium प्राकारं तेन कुर्वीत मन्त्रेण मनुवित्तम: । सितरक्ताञ्जनप्रख्यं तारं मूर्धनि विन्यसेत् SāraTi. 16. 73; शाकिनी त्वञ्जनप्रख्या मार्जारास्या सुशोभना । कुलिशञ्च तथा दण्डं धारयन्ती KulārT. 10. 142; आ नाभेरञ्जनप्रख्यमुदितार्कामभा गलात् । … स्वैक्यं ध्यायञ्जपेन्मनुम् ĪśānSiPa. i. 39. 135.

**अञ्जनप्रतीति** (añjana-pratīti) *f.* knowledge about the (means of) anointing तत्र विधेरुपक्रमस्थत्वात्, तेन चाञ्जनसाधनीभूतद्रव्यमात्राक्षेपादेव केनचिदञ्जनप्रतीते: MīmāKau. i. 294. 1 (*on* i. 4. 29)

**अञ्जनप्रभ** (añjana-prabha) *adj.* [*f.* -ā] (dark) like collyrium बाला भूत्वाञ्जनप्रभा: । आविशध्वं हयं क्षिप्रं दासी न स्यामहं यथा MahāBhā. i. 18. 6; कद्रू कर्कोटकोऽब्रवीत् …आविश्य वाजिनं मुख्यं वालो भूत्वाञ्जनप्रभ: । दर्शयिष्यामि तत्राहमात्मानम् MahāBhā. i. 286*(4); xiii. App. I. 1A. 123; स तदा राक्षसो बली । तं नर्मदाह्रदम् … आजगामाञ्जनप्रभ: Rāmā. vii. 32. 24; (मन्त्रराट्) ध्यात्वाथ विभवं सर्वं व्योमाख्यं विग्रहाद्बहि: । नानाशब्दसमाकीर्णं नीरूपं चाञ्जनप्रभम् JayāS. 10. 49; PāraS. 3. 170; ब्रह्मा कमलगर्भाभ: कालो जात्याञ्जनप्रभ: VāyuP. i. 5. 29; केशिनी ह्यञ्जनप्रभा PāraS. 3. 101; KulārT. 4. 55; कर्कोटक: … कद्रूं वचनमब्रवीत् । अहमुच्चै:श्रवोवालं विधास्याम्यञ्जनप्रभम् SkandP. iii(1). 38. 16; तस्य कृत्ति विदार्यांशु करिणस्त्वञ्जनप्रभाम् VarāP. 27. 17; सारङ्ग[:] श्रृङ्गहीनोऽञ्जनप्रभ: । जानासि तृषित: कस्मात् GopāKeCan. 136. 25; ध्यात्वा तद्रूपं चाञ्जनप्रभम् … पूर्णम् BṛBrahmaS. iv. 1. 43; *m. Moringa pterygosperma guertu* [pw]

**अञ्जनप्रभृति** (añjana-prabhṛti) *adj.* **1** collyrium etc. यथा … सिकताशर्करागैरिकाञ्जनप्रभृतय: पुरुषार्थक्रियाकारित्वादुपादीयन्ते तथा शरीरसर्गोऽपीति NyāyVār. 443. 3 (*on* iii. 2. 62); **2** the Añjana mountain and the like

उदपद्यन्तैरावतसुप्रतीककुमुदवामनाञ्जनप्रभृतयोऽष्टौ दिग्गजेन्द्राः NalaCam. 6. 59 (7)

**अञ्जनप्रयुक्त** (añjana-prayukta) *adj.* 1 employed or used with collyrium (धातकीपुष्पचूर्णं) अञ्जनप्रयुक्तेऽक्षुदूषिकोपदेहदाहरागवेदनादृष्टिविभ्रमा भवन्त्यान्ध्यं च AṣṭāSaṁ. i. 47. 19 (1. 8); 2 meant for smearing (of the axle) (i. e. employed in smearing) किं तु संस्कारकमात्रमुपादानम् अञ्जनप्रयुक्तमेव TantrRa. 86. 8.

**अञ्जनप्रयोग** (añjana-prayoga) *m.* application of collyrium एषोऽञ्जनप्रयोगस्तेन राक्षसेन कृतः KathāK. 98. 9.

**अञ्जनप्राथम्य** (añjana-prāthamya) *n.* priority of collyrium अञ्जनप्राथम्यमापस्तम्बादिविषयम् NirṇaSi. 323. 10.

**अञ्जनबल** (añjana-bala) *n.* [Abl.] on the strength of collyrium तदेते मानुषिण्यौ अञ्जनकप्रयोगात् करभ्यौ सञ्जाते।…ततश्चाञ्जनबलादप्रतिमरूपे मानुष्यौ जाते KathāK. 94. 27.

**अञ्जनबाष्पबिन्दु** (añjana-bāṣpabindu) *m.* tear-drop mixed with collyrium सा पद्मिनी…विससर्ज भृङ्गान्।…स्थूलानिवोढाञ्जनबाष्पबिन्दून् JānaHa. 3. 58.

**अञ्जनबिन्दु** (añjana-bindu) *m.* dot of collyrium उद्भासते ह्यञ्जनबिन्दुवत्त्वच्छुके वक्त्रे यद्वत्केकिवयं वः MahāBhā. v. 25. 6; अलिभिरञ्जनबिन्दुमनोहरैः … अङ्कितः। … शोभयति स्म वनस्थलीम् … तिलकः RaghuVa. 9. 41 = VyaktiVi. 91. 8 = 105. 14; अलिभिरञ्जनबिन्दुमलीमसैः स्मरत्रलैरिव कङ्कटितैर्वृते। मरुति…नाभवन् सरति के रतिकेलिसाकुलाः HarVi. 3. 25.

**अञ्जनभक्ति** (añjana-bhakti) *f.* decoration of collyrium लग्नद्विरेफाञ्जनभक्तिचित्रं मुखे मधुश्रीस्तिलकं प्रकाश्य KumāSaṁ. 3. 30.

**अञ्जनभा** (añjana-bhā) *f.* lustre or colour of collyrium तं नेमिं नमः … चक्रे यदूनां च यो दक्षामञ्जनभासमानमहसं राजीमतीतापदम् CaturJiStu. 85.

**अञ्जनभाजन** (añjana-bhājana) *n.* collyrium-container सिद्धेनाञ्जनेन यथोक्तानामेवाञ्जनभाजनद्रव्याणामन्यतमया शलाकया … अक्षि दक्षिणमञ्जयेत् AṣṭāSaṁ. i. 52. 6 (1. 8)

**अञ्जनभावना** (añjana-bhāvanā) *f.* volitional effort in respect of the anointing or smearing साक्षादेवाञ्जनभावनाविशेषणसमर्पकत्वानुपपत्तेः MīmāKau. i. 296. 4 (on i. 4. 29); द्वतस्य विधेयत्वावगतेः तस्य चाञ्जनभावनासाधनत्वं तद्वाचकपदकल्पनया अवसीयते MīmāKau i. 297. 9 (on i. 4. 29)

**अञ्जनभूभृत्** (añjana-bhūbhṛt) *m.* the mountain Añjana आस्थामञ्जनभूभृतो निजतनुच्छाया … लर्थयन् कोऽप्यास्ते मणिरिन्दिराकुचतटीशाणोपलोत्तेजितः YātrāPra. 6. 92; तस्य सुवर्णमेखलं कटिस्थलम् …। व्यञ्मयवृत्तनधातुपट्टिकापरिष्कृताममञ्जनभूभृतस्तटीम् MadhuVi. 3. 8; उपरि …परिवर्मा …अञ्जनभूभृतो विततशारदनीरदमम्बरम् Rāgh. 19. 3.

**अञ्जनमञ्जुता** (añjana-mañjutā) *f.* beauty or charm (of the eyes) on account of ointment or collyrium पद्मोल्लासितसन्तताश्रुसरितामेषां द्विपत्राविकानेत्रेष्वञ्जनमञ्जुतामलिनतां मार्ष्टु क्रियानुद्यमः SūktiMu. 97. 12.

**अञ्जनमय** (añjana-maya) *adj.* [*f.* –ī] made of or consisting of collyrium कुशद्वीपस्य तु कुमुदः…ककुद्मानिति…वर्षपर्वताः। (हरिता)लमय उन्नतो वराहश्चोऽञ्जनमयः AvantiKa. 212. 14; त्रियामावामायाः…। तदक्षः सीम्नेयं यदुरसि मनागञ्जनमयी मृगच्छाया दैवादघटि न कलङ्कः पुनरयम् SubhāRaK. 29. 58.

**अञ्जनमलीमस** (añjana-malīmasa) *adj.* [*f.* –ā] I black like collyrium हिमशैलकन्यां कुर्वन्तमञ्जनमलीमसकालकूटकण्ठप्रभाभिरभितः पुनरेव कालीम् HarVi. 2. 14; II darkened due to collyrium (put in the eyes) अञ्जनमलीमसैरश्रुभिर्लिप्तं क्षालयितुमिवात्मानमम्भोधिमनुप्रासे प्रतापे UdaySuKa. 7. 23; कृतारिवध्ने दृष्टियेनाञ्जनमलीमसा AuciViCa. 1.

**अञ्जनमहाशैल** (añjana-mahāśaila) *m.* the great mountain called Añjana (कर्कटी नाम राक्षसी चिन्तयामास) कदा स्यामञ्जनमहाशैलपुत्रकरूपिणी YogVā. iii. 71. 22.

**अञ्जनमहीध्र** (añjana-mahīdhra) *m.* Añjana mountain स्फटिकसुभगं कैलासमिवाञ्जनमहीध्रमेखलया गाढालिङ्गितम् (प्रासादमद्राक्षीत्) UdaySuKa. 14. 3.

**अञ्जनमुख्य** (añjana-mukhya) *adj.* I the best type of ointment (i. e. sulphate of Antimony) मेचकमञ्जनमुख्यम् AbhidhāMañ. 58. 12; II (the supernatural power) headed by (the one obtained by) a magical ointment गुटिकांशुकखड्गपादुकारसलेपाञ्जनमुख्यसिद्धयः। तमनुसरतां शरीरिणां स्वयमेव प्रचकाशिरे तदा S'ivLī. 15. 52.

**अञ्जनमूलक** (añjanamūla-ka) *adj.* a variety or minor type of gem (i. e. dark-blue in colour) विमलकः … अञ्जनमूलकः … इत्यन्तरजातयः ArthS'ā. i. 185. 1 (2. 11) (comm. अञ्जनमूलकः नीलश्यामः)

**अञ्जनमेचक** (añjana-mecaka) *adj.* [*f.* –ā] dark like collyrium, shining like collyrium कुर्वन्नञ्जनमेचका इव दिशो मेघः समुत्तिष्ठते Mṛcch. 5. 23; नमोऽर्कपुत्राय शनैश्चराय नीहारवर्णाञ्जनमेचकाय BhaviP. 770B. 10 (iv. 114. 41); (स मारुतिः … भवनं दशकण्ठस्य ददर्श) रक्षितं राक्षसैरात्तशस्त्रैरञ्जनमेचकैः Rāma. Mañ. 238. 5; वपुषि मञ्जुलमञ्जनमेचके वयसि बालमहो मधुरं महः KṛṣṇaKa. 3. 64; अङ्गविषामञ्जनमेचकानां व्याजेन विस्तारयति स्फुटं यः।… लक्ष्म्याः नवेन्दीवरपत्रशय्याम् YātrāPra. 3. 200.

**अञ्जनमेचकप्रभ** (añjanamecaka-prabha) *adj.* having a dark lustre like collyrium शिरोरुहैरञ्जनमेचकत्रयैः (? प्रभैः) … नरो वर्षशतं च जीवति Rasa-Cin. 9. 345 (266. 8)

**अञ्जनयोग** (añjana-yoga) *m.* application of collyrium or ointment अञ्जनयोगैश्च …। स चिकित्स्यः स्याच्च उन्मार्गेण गच्छति MahāBhā. xii. 14. 34; दक्षाण्डवल्कशिलाशङ्खकाचचन्दनगैरिकैः। तुल्यैरञ्जनयोगोऽयं पुष्पार्मादिविलेखनः SiddhYo. 61. 88; निर्मलं चक्षुर्भवत्यञ्जनयोगतः SiddhYo. 81. 77.

**अञ्जनयोजन** (añjana-yojana) *n.* application of collyrium प्रागेव मोहनमथाञ्जनयोजनेन चक्रे तथा मृगदृशो नयनं सखीभिः BhikṣāKā. 2. 21.

**अञ्जनरजस्** (añjana-rajas) *n.* particle of collyrium अञ्जनरजोलेखाश्यामलां रोमराजिमुदरेण तनीयसीं बिभ्राणम् … मुनिकुमारकमपश्यम् Kād. 140. 3; दीर्घिकायाम्। विस्पष्टमञ्जनरजश्छटया द्विरेफपङ्क्त्येव पक्ष्मलदृशो दृशि संनिपेते HarVi. 23. 33; अञ्जनरजोरागमिव निवितुरक्षाल्यत्तरङ्गायतापाङ्गमक्षियुगलमानन्दवाष्पः TilaMañ. 347. 14; (दीपिकाः) सान्द्रतां निन्युरञ्जनरजोभरैस्तमः S'rīKaC. 10. 24.

**अञ्जनरञ्जित** (añjana-rañjita) *adj.* coloured with collyrium नेत्रे चाञ्जनरञ्जिते वितनुयाद् भूयः समिद्धोऽधुना (मन्त्रेण) TantrSa. 4. 87.

**अञ्जनराशिवर्ण** (añjanarāśi-varṇa) *adj.* having the colour of (i. e. black like) a heap of collyrium कोऽयं विनिष्पतति गर्भगृहं विगाह्य उल्कां प्रगृह्य सहसाञ्जनराशिवर्णः BālC. 2. 4.

**अञ्जनरुच्** (añjana-ruc) *adj.* whose lustre is like that of collyrium (अभिचिन्तयेत्…अच्युतम्) कलिन्दसुतया…संपरिरब्धमञ्जनरुचा PañcaRā.(Nā.) v. 4. 24.

**अञ्जनरुचि** (añjana-ruci) *adj.* of dark or black colour like collyrium यन्नीडप्रभवो यदञ्जनरुचिः…तेन त्वं स्वजनः किलेति करटैर्यत्कैरुपब्रूयसे SubhāRaK. 33. 19; त्वयि न सुव्रत कच्छपलाञ्छनोऽञ्जनरुचिर्हरिवंशविभूषणः। शिवसुखाय CaturJiSta. 20; यावद्वर्षति वीरसिंहतनयो वृष्टीरिमाः काञ्चनीर्धीराः प्रावृषि तावदञ्जनरुचिर्धारा न धाराधरः PadyaVe. 102; ViraMi.(Paribhāṣā.) 3. 18; *f.* lustre due to (the application of) collyrium न माल्यं धम्मिल्ले न च नयनयोरञ्जनरुचिः…तदपि तरलाक्ष्यः शुशुभिरे Rāṣṭrau. 17. 23.

**अञ्जनरुचिर** (añjana-rucira) *adj.* with lustre dark like collyrium सीमदंष्ट्रोऽञ्जनरुचिरतनुर्भीतिदश्चाप्यघोरः S'ilpaRa. ii. 22. 202.

**अञ्जनरुज्** (añjana-ruj) *f.* disease caused by an ointment (applied to the eyes) नारीपयश्चाञ्जनरुग्विदारि BhojanKu. 209. 26.

**अञ्जनरूप** (añjana-rūpa) *adj.* dark in appearance (i. e. full of darkness inside) (वृत्तचतुष्कोणः षोडशाष्टस्रियः) चत्वारोऽञ्जनरूपाः (प्रासादाः) BṛSaṁ. 56. 28.

**अञ्जनरेखा** (añjana-rekhā) *f.* line or streak of collyrium निर्गते … कन्ये … मनोज्ञधवलापाङ्गे तनीयोऽञ्जनरेखया RājTa.(Ka.) 1. 208; 7. 929; दृशौ कर्णाभ्यर्णेऽञ्जनरेखामिषात् PrabaCin. 46. 5; आयामिनोस्तदक्ष्णोरञ्जनरेखाविधिं वितन्वन्त्याः। पाणिः प्रसाधिकायाः प्रापदपाङ्गं चिरेण विश्रम्य PārvPa. 5. 19; अक्ष्णोरञ्जनरेखया…मुञ्चामि नाहं तथा S'ṛṅgāTi.(Rā.) 84.

**अञ्जनरेणु** (añjana-reṇu) *m.* dust or particle of collyrium लाक्षारसैरञ्जनरेणुभिश्च विक्षेप गात्रेषु परस्परस्य VarāṅgaCa. 23. 101.

**अञ्जनरोचिस्** (añjana-rocis) *adj.* collyrium-coloured, as dark as collyrium केशवाचाः…। काश्मीरमेघाञ्जनरोचिषश्च S'ilpaRa. ii. 23. 42.

**अञ्जनलिप्त** (añjana-lipta) *adj.* besmeared with collyrium अत्र संभाव्यमानैरिन्द्राद्दिगतैरञ्जनलिप्तत्वादिभिः कार्यरूपैः … वदनादिगतः सौन्दर्यातिशयः कारणरूपः…प्रतीयते AlaṅkāSa. 105. 19.

**अञ्जनलेप** (añjana-lepa) *m.* besmearing with lamp-black or collyrium इन्द्रादिप्रकृतेषु अञ्जनलेपादिनिकर्षसंभावना क्रियते CitraMī. 75. 19.

**अञ्जनलेश** (añjana-leśa) *m.* particle of dirt or dust (*lit.* collyrium) श्रीच्छिदेऽञ्जनलेशोऽपि धौतस्य श्वेतवाससः TriṣaS'aPuC. iv. 1. 636.

**अञ्जनलोप** (añjana-lopa) *m.* removal or disappearance of collyrium कालतः स्नानेन वा सर्वतोऽञ्जनलोपः स्यात् CitraMī. 3. 9.

**अञ्जनवंश** (añjana-vaṁśa) *m.* family or race of Añjana (a *diggaja*) ते कुञ्जराश्चाञ्जनवंशजाताः YuktiKa. 199. 17.

**अञ्जनवत्** (añjana-vat) *adv.* like collyrium (put in the eye) अवर्थमानश्चार्थः शनैरप्युपयुज्यमानोऽञ्जनवत्क्षीयते PañcT. 1. 2 (8. 9); Hitop. 2. 8 (3); चतुरस्रं प्रवक्ष्यामि मञ्जनवत्तथा ViṣṇuDhaP. ii. 109. 41; अञ्जनवच्चाक्षिगतस्य

तद्गतकृष्णिमादिवच्चाद्दृश्यत्वात् BrahmSi. 140. 11.

**अञ्जनवती** (añjana-vatī) *adj.* who has applied collyrium (to the eyes) अञ्जनवती…वेश्या युक्ता सिद्धगुणैरिव Deśopa. 3. 47.

**अञ्जनवपुस्** (añjana-vapus) *adj.* having the appearance of collyrium अञ्जनवपुश्च(विसर्पः) भवेदसाध्यः RugVi. 52. 25.

**अञ्जनवर्ण** (añjana-varṇa) *adj.* collyrium-coloured (i. e. as black as collyrium) षट्त्रिंशदङ्गुलमञ्जनवर्णं सामूरम् ArthŚā. i. 192. 3 (2. 11); वायुराश्रयतो धत्ते गन्धवर्णादिकं यतः । तस्मादञ्जनवर्णस्तु गमनस्य समाश्रयात् Viṣṇu-DhaP. iii. 58. 4; अञ्जनवर्णाश्चत्वारस्तिष्ठन्त्यञ्जनपर्वताः TriṣaŚaPuC. ii. 3. 706 = TīrthaKa. 48. 6; यं अः अञ्जनवर्णाय दामोदराय लज्जायै विष्णवे नम इति ककुदि VīraMi.(Bhakti.) 93. 1.

**अञ्जनवर्णक** (añjanavarṇa-ka) *n.* colour of collyrium (i. e. black colour) भृङ्गस्याञ्जनवर्णकम् । नृशस्य धूम्रवर्णं च MānaSā. 7. 115.

**अञ्जनवर्णाभ** (añjanavarṇābha) *adj.* rsembling the colour of collyrium or antimony, collyrium-coloured कचिदञ्जनवर्णाभाः कचित् काञ्चनसंनिभाः । धातवः MahāBhā. iii. 155. 80.

**अञ्जनवर्ति** (añjana-varti) *f.* preparation (antidote against phlegm) in stick or globule form सिन्धूत्थहिङ्गुत्रिफलामधूकप्रपौण्डरीकाञ्जनतुत्थताम्रैः । पिष्टैर्जलेनाञ्जनवर्तयः स्युः SuśruS. vi. 11. 7.

**अञ्जनवर्तिका** (añjana-vartikā) *f.* collyrium stick or globule (as an antidote against eye-disease) हरिद्रात्वचमाहृत्य पिप्पलीं चाथ भागशः । वरप्रसन्नया मण्डं कुर्यादञ्जनवर्तिकाम् । पिल्लिका चोपलेपश्च नेत्रयोस्तेन शाम्यति KāśyaS. 320B. 15; 321A. 28; 321B. 10; 321B. 31.

**अञ्जनवर्मन्** (añjana-varman) *m.* name of the son of Ghaṭotkaca ववर्षाञ्जनपर्वा (v. l. °वर्मा) स द्रुमवर्षं नभस्तलात् MahāBhā. vii. 131. 50; cf. अञ्जनवर्षन्, °वर्ष्मन्.

**अञ्जनवर्षण** (añjana-varṣaṇa) *n.* shower of collyrium (वर्षतीवाञ्जनं नभः) अञ्जनवर्षणस्य तमःसंपातः (विषयः) SāhiDa. 544. 1; नभसो भूपर्यन्तं गाढनीलिमव्याप्तत्वेन निमित्तेनाञ्जनवर्षणकर्तृतादात्म्योत्प्रेक्षा Kuval. 35 (14)

**अञ्जनवर्षन्** (añjana-varṣan) *m.* name of the son of Ghaṭotkaca ववर्षाञ्जनपर्वा (v. l. °वर्षा) स द्रुमवर्षं नभस्तलात् MahāBhā. vii. 131. 50 cf. अञ्जनवर्ष्मन्.

**अञ्जनवर्षुक** (añjana-varṣuka) *adj.* showering or raining collyrium (वर्षतीवाञ्जनं नभः) नभसो भूपर्यन्तगामिनीलिमव्याप्तत्वमञ्जनवर्षुकसाधारणनिमित्तम् CitraMī. 82. 6.

**अञ्जनवर्ष्मन्** (añjana-varṣman) *m.* name of the son of Ghaṭotkaca ववर्षाञ्जनपर्वा (v. l. °वर्ष्मा) स द्रुमवर्षं नभस्तलात् MahāBhā. vii. 131. 50; cf. अञ्जनवर्षन्.

**अञ्जनवल्लिका** (añjana-vallikā) *f.* the plant *Rabia munjita* जिंग्यां समंगा विकसा मंजिष्ठांजनवल्लिका Vaija. 56. 135.

**अञ्जनवश** (añjana-vaśa) *m.* [Abl.] due to the power of the (magical) ointment स्फारान्धकारविततेऽपि जगत्यञ्जनवशात् परमाणुप्रायमपि वस्तु सर्वत्र पश्यामि BhojaPra. 20. 26.

**अञ्जनवाक्य** (añjana-vākya) *n.* (Vedic) passage or statement for anointing (a sacrificial victim, implement etc.) अथ त्वञ्जनवाक्यवदिहाप्येवं श्रूयेत TantrVā. 329. 14 (*on* i. 4. 23); अञ्जनवाक्येनैव तत्साधनत्वमात्रेणावगतस्य स्वरोरर्थप्राप्तमादानम् TantrRa. 115. 10.

**अञ्जनवारि** (añjana-vāri) *n.* liquid collyrium (*lit.* collyrium-water) अङ्गनानां तनुरोमराजिः । शलाकयोन्मीलयतो विधातुर्मुखाच्च्युतेवाञ्जनवारिरेखा NemiNir. 1. 49.

**अञ्जनविधि** (añjana-vidhi) *m.* A rule or method of applying collyrium or ointment to the eyes (for medical treatment) अथात आश्चोतनाञ्जनविधिमध्यायं व्याख्यास्यामः AṣṭāSaṁ. i. 163. 3 (1. 32); (for magical or supernatural effects) यदप्यञ्जनविधौ कालिकापुराणे – 'कपालसंपुटे कृत्वा महातैलघृते तथा । चन्द्रसूर्योपरागे च कज्जलं गृह्य बुद्धिमान् । अञ्जयेदक्षिणी तेन वशीकुर्यात् पुरंदरम्' इत्यादि तत् … अधर्म एव Aparā. 15. 16 (*on* 1. 7); अथाञ्जनविधिः । महाष्टमीदिने यत् तु श्मशाने नरमस्तके । पातितं कज्जलं विश्वं मोहयेन्नयनाञ्जनात् AnaṅgaRa. 7. 9; **B** act of applying collyrium (as cosmetic) क्षोणीचन्द्र दिगङ्गनास्तव … पुञ्जाकीर्तिमषीभिरञ्जनविधिं नेत्रद्वये तन्वते Ḍamaru. 26; **C** injunction for anointing (a sacrificial victim or implement) अत एव चात्र … अञ्जनविध्यर्थाक्षेपसंकोचोऽपि नाशङ्क्यः MīmāKau. i. 296. 23 (*on* i. 4. 29); स चाञ्जनविधिरेव घृतेनेत्यध्याहृतपदसहितो भिन्नो वा BhāṭṭCin. ii. 75. 11 (*on* i. 4. 18); ii. 74. 16 (*on* i. 4. 18); MayūMāli. 521. 3 (*on* vi. 8. 10)

**अञ्जनविशेष** (añjana-viśeṣa) *m.* special kind of collyrium or eye-ointment दिवाभीतादिव्यतिरिक्तलोचनानाम् अञ्जनविशेषादिशून्यानां तिमिराद्यतिरिक्तविषयप्रत्ययोत्पादने प्रभूतरूपमाप्यायकातिरिक्तं तदवश्यापेक्षितम् NyāySiA. 200. 10.

**अञ्जनविशेषपुष्** (añjanaviśeṣa-puṣ) *adj.* **i** possessing a special kind of eye-ointment नमतामिरान्ध्यहरणाय नृणां नवरोचिषाञ्जनविशेषपुषम् । (अजम्) अभिवन्द्य कामफलदं धरणेरधिभूः समारभत वर्णयितुम् Acyutarā. 5. 28; **ii** having the complexion of the best kind of collyrium, Acyutarā. 5. 28.

**अञ्जनविस्तर** (añjana-vistara) *m.* detailed account of collyrium or ointment पुनश्च कल्येऽञ्जनविस्तरः शुभः प्रवक्ष्यते SuśruS. vi. 17. 47.

**अञ्जनवृक्ष** (añjana-vṛkṣa) *m.* a species of tree (= Areca nut or catechu) तत्रैकस्य शिल्पिनोऽर्धपाटितोऽञ्जनवृक्षदारुमयस्तम्भः खदिरकीलकेन मध्यनिहितेन तिष्ठति PañcT. 1. 26 (10. 7) [Kosegarten's Ed.]

**अञ्जनवृत** (añjana-vṛta) *adj.* mixed with collyrium प्रस्थाने तव भूमिपाल वसुधा जाता रजोदोषला त(? त्व)द्विड्दारपयोधरोऽञ्जनवृतं वर्षत्यधोऽश्रूदकम् SūktiSu. 154.

**अञ्जनव्यञ्जना** (añjana-vyañjanā) *adj.* (*f.*) displaying or marked by (the application of) collyrium or cosmetic paint करे बद्धा पाटलपट्टकेन सरलस्थूलाञ्जनव्यञ्जना । … विद्याधरी केयं नूतननिर्गतेति विदधे सा मुग्धसंमोहनम् SamaMā. 2. 54.

**अञ्जनव्यापार** (añjana-vyāpāra) *m.* power of suggestion (of a word), suggestive meaning न च लक्षणात्मकमेव ध्वननम् … न च शब्दानुसारेणैव अशब्दात्मकनेत्रत्रिभागावलोकनादिगतत्वेनापि तस्य सिद्धेः । इत्यभिधातात्पर्यलक्षणात्मकव्यापारत्रयातिवर्ती अञ्जनव्यापारोऽनपह्नवीय एवेति सिद्धमेव निषेधस्य व्यङ्ग्यत्वम् Kāvyānu.(He.) 35. 12 (comm.)

**अञ्जनशलाका** (añjana-śalākā) *f.* pencil for applying collyrium (to the eyes) अज्ञानान्धस्य लोकस्य ज्ञानाञ्जनशलाकया । चक्षुरुन्मीलितं येन तस्मै पाणिनये नमः PāṇiŚi. 59; अथ कस्मादञ्जनशलाकादि नोपलभ्यते । … न चाञ्जनशलाकादीन्द्रियेण सम्बद्धम् NyāyVār. 388. 5 (*on* iii. 1. 50); न रश्मिनाञ्जनशलाका सम्बद्धा NyāyVār. 388. 8 (*on* iii. 1. 50); NyāyMañ. ii. 51. 24; सौवर्णीं मालिकाञ्जनशलाकोदपात्रमश्वः … एतेष्वन्यतमम् … शिष्याय दद्यात् PāraSū. 60. 11.

**अञ्जनशलाकाकृति** (añjanaśalākākṛti) *adj.* (*f.*) shaped like a pencil for applying collyrium (to the eyes) एषणी दशाङ्गुला विंशत्यङ्गुला त्रिंशदङ्गुला यथायोगमञ्जनशलाकाकृति(ः) मुखतः श्लक्ष्णा Hastyāyur. 531. 16 (3. 30)

**अञ्जनशारित** (añjana-śārita) *adj.* speckled with collyrium सखीजनं प्रेमगुरूकृतादरं निरीक्षमाणा इव नम्रमूर्तयः । स्थिरद्विरेफाञ्जनशारितोदरैर्विसारिभिः पुष्पविलोचनैर्लताः Kirātā. 8. 11.

**अञ्जनशिला** (añjana-śilā) *f.* antimony-rock, solid (mass of) collyrium व्याघ्रकेतुः … अञ्जनशिलाच्छेदमिव चलन्तम् … शबरयुवानमादायाजगाम HarṣaC. 311. 10; अञ्जनशिलास्तम्भसंभारमिव … शबरसैन्यमद्राक्षम् Kād. 29. 10; अञ्जनशिलाघटितैरिव … खुरपुटैर्जर्जरितवसुन्धरैर्मुरजवाद्यमिवाभ्यस्यन्तम् … इन्द्रायुधमद्राक्षीत् Kād. 79. 15; तमोभिरञ्जनशिलापुञ्जैरिव पुरस्कृतम् । अपश्यम् … जगत् BṛKathāMañ. ix. 1. 80.

**अञ्जनशैल** (añjana-śaila) *m.* mountain Añjana अथवाञ्जनशैलशिलानिचयप्रतिरूपधरैः स्थगितं गगनम् । … अम्बुधरैः BṛSaṁ. 24. 16; कैलासाञ्जनशैलावेतौ तुल्योन्नतत्वपरिणाहौ MahāviC. 7. 24; शराली । लग्ना दृढं द्विरदकुम्भतटे रराज दावाग्निसंहतिरिवाञ्जनशैलशृङ्गे HarVi. 44. 3; NalaCam. 1. 45; सशिखिशिखेव धूमनिचिताञ्जनशैलगुहा SuvṛTi. 2. 26 (7); छायेवाञ्जनशैलस्य कालियाहेरिवाग्रजा Surath. 10. 14; चत्वारोऽञ्जनशैलेषु … जिनालयाः PārśvC. 6. 887; TīrthaKa. 49. 13; पुरतः फणिनं समलोकयथा बहुशृङ्गिणमञ्जनशैलमिव Nāráy. x. 55. 5.

**अञ्जनशैलकल्प** (añjanaśaila-kalpa) *adj.* resembling (in complexion) the mountain of collyrium तुषारशैलाञ्जनशैलकल्पयोरभेदभागीश्वरविश्वरूपयोः ।… वपुर्धिनोतु वः SubhāRaK. 49. 1.

**अञ्जनशैलस्थलाधिदेवता** (añjanaśailasthalādhidevatā) *f.* presiding deity of a region of the Añjana mountain अञ्जनशैलाधिदेवता इव तीर्थावगाहनानुरागिण्यः … दृष्टिपथमवतेरुः … तरुणकिरातकामिन्यः NalaCam. 5. 56 (31)

**अञ्जनशैलाभ** (añjanaśailābha) *adj.* resembling (in complexion or size) a mountain of collyrium or the Añjana mountain नागैरञ्जनशैलाभैः प्रक्षरद्गण्डभित्तिभिः PadmP.(Ra.) 33. 161; तावदञ्जनशैलाभाः प्लावयन्तो महीतलम् । अकस्मादुन्नता मेघाः PadmP.(Ra.) 109. 58; दशाननः । पपाताञ्जनशैलाभः RāmāMañ. 460. 22; 147. 5; क किलाञ्जनशैलाभं वपुर्भैरतिरिक्तटम् । क प्राचिकाखुरसमं सूचित्वं तृणपेलवम् YogVā. iii. 71. 32; ii. 1. 7.

**अञ्जनश्याम** (añjana-śyāma) *adj.* black like collyrium अन्वये चास्य जायन्ते … वामदेवोऽञ्जनश्यामः VāyuP. ii. 8. 217; तटेऽञ्जनश्यामतनौ महाद्रेः

NavaSāC. 17.35; 16.72; तिमिरैञ्जनश्यामैः ··· चक्रवाकीवियोगाग्निधूमाभैरुत्थितं
ततः BṛKathāMañ. ix. 2.830; (सूर्यः) रूक्षोऽञ्जनश्यामो ह्रस्वमण्डल इत्यपरम्
(अनावृष्टेः निमित्तम्) AdbhuSāg. 21.26; अम्भोधय इवोत्पत्य भुवोऽम्भोदा
नभस्तलम्। व्याप्नुवन्तोऽञ्जनश्यामरुचः संजज्ञिरे क्षणात् TriṣaSaPuC. i. 4.419.

**अञ्जनश्यामल** (añjana-śyāmala) *adj.* as black as collyrium यस्या-
ञ्जनश्यामलखड्गपट्टजातानि जाने धवलत्वमापुः।···यशांसि VikraDeC. 1.71.

**अञ्जनश्री** (añjana-śrī) *f.* beauty due to collyrium or beauty of collyrium नयनयोर्नाञ्जनश्रीः (कामिनीनां रतान्ते) YaśasCam. i. 620.3; दीर्घापाङ्गं नयनयुगलं भूषयत्यञ्जनश्रीः SaraKaṇṭhā. 140.2 = SaduktiKa. 140.6.

**अञ्जनसंयोग** (añjana-saṁyoga) *m.* application of collyrium नेत्रमञ्जनसंयोगाद्भवेच्चामलतारकम् SuśruS. iv. 24.67 = SiddhYo. 81.75; त्रिधैवाञ्जनसंयोगो गुटिकारसचूर्णतः SiddhYo. 61.164; तत् च तमः···योगजधर्मेणापसार्यते अञ्जनसंयोगेन नयनमालिन्यवत् SāṁkhyaPraBh. 46.11 (*on* 1.91)

**अञ्जनसंस्कार** (añjana-saṁskāra) *m.* application of collyrium न च प्राग्विवाहाद् भार्या सिद्धास्ति यस्या विवाहसंस्कारः क्रियेत, चक्षुप इवाञ्जनसंस्कारः ManuBh. i. 206.22 (*on* 3.4)

**अञ्जनसंस्थान** (añjana-saṁsthāna) *adj.* having the shape of the mountain Añjana रम्यं तालवनं तद्धि ··· कुमुदाञ्जनसंस्थानैः परिवृत्तैर्महाफलैः VāyuP. i. 37.24.

**अञ्जनसंकाश** (añjana-saṅkāśa) *adj.* [*f.* -ā] resembling collyrium (in colour) आययुः ··· ततस्तेऽञ्जनसंकाशाः (वानराः) Rāmā. iv. 36.20; उत्तिष्ठन्ति महामेघाः नभस्यद्भुतदर्शनाः।··· केचिदञ्जनसंकाशाः MahāBhā. iii. 186.68; अमरेशविरूपाक्षौ ··· कुङ्कुमाञ्जनसंकाशौ PāraS. 11.210; असावञ्जनसंकाशस्त्वं तु चामीकरद्युतिः Kāvyāda. 2.183; भवान् ··· ज्ञाननिर्मलः। ··· स चाप्यञ्जनसंकाशः कथं तेनेह युज्यते VāmaP. 67.32; 85.21; BrahmP. 53.4; ददर्शाञ्जनसङ्काशां रावणस्तु प्रतिमां वासुदेवस्य BrahmP. 176.22; SivaP. v. 7.54 (414B.7); SaraKaṇṭhā. 357.24; भूमिरञ्जनसंकाशा धारा चास्य सिता भवेत्। अञ्जनाख्यमिदं प्रायः सर्वदैवोपलभ्यते YuktiKa. 147.22; योगी ··· आत्मानं परिभावयेत्। रूक्षमञ्जनसंकाशम् MāliniT. 14.29; Rasā. 18.17; चूर्णमभ्रकसत्वस्य···यावदञ्जनसंकाशं वस्त्रच्छन्नं विशोष्य।··· मधुना लिह्यात् RaseCin. 4.7 (39.27); *m.* name of Viṣṇu (महीपालः संस्तोतुमुपचक्रमे) वासुदेव ··· नमस्तेऽञ्जनसंकाश नमस्ते भक्तवत्सल BrahmP. 49.4.

**अञ्जनसंनिभ** (añjana-sannibha) *adj.* having the appearance of collyrium, resembling collyrium रावणोऽञ्जनसंनिभः। ··· निःशब्दपदमव्रजत् Rāmā. vii. 34.13; नानारजतधातवः ···कचिदञ्जनसंनिभाः MahāBhā. iii. 155.80; iv. 44.100; मण्डूरं द्विगुणं चूर्णाच्छुद्धमञ्जनसंनिभम् CaraS. vi. 16.74 (1941 Ed.); नित्यं योऽञ्जनसंनिभः कलियुगे वः पातु दामोदरः BālC. 1.1; नीलरक्तसितापीतपावकाञ्जनसंनिभैः। ···माल्याङ्गरागवसनैः ··· समलङ्कृताः PāraS. 11.131; 11.191; वायुतत्त्वं भ्रुवोर्मध्ये वृत्तमञ्जनसंनिभम्। ··· ध्यायन्वायुं जयेत् SkandP. iv(1). 41.116; SiddhYo. 8.24; (सर्पाः) ये चाञ्जनसंनिभाः। ··· ते शूद्राः परिकीर्तिताः BhaviP. 75B.31 (i. 36.41); 299B.19 (i. 206.42); (योगी) भ्रुवोर्मध्ये स्मरेद्रूपमात्मनोऽञ्जनसंनिभम् MāliniT. 13.39.

**अञ्जनसप्रभ** (añjana-saprabha) *adj.* having the lustre of collyrium, resembling collyrium (यमदूताः) क्रूराश्चाञ्जनसप्रभाः BrahmP. 215.53; भ्रमराञ्जनसप्रभाः। कचा यस्य तु दृश्यन्ते स भवेत्पृथिवीपतिः BhaviP. 59B.23 (i. 26.85)

**अञ्जनसब्रह्मचारिन्** (añjana-sabrahmacārin) *m.* companion of collyrium (i. e. having the same features as those of collyrium) नीरन्ध्रेणान्धकारेणाञ्जनसब्रह्मचारिणा। तदाभूद्रोदसीरन्ध्रं पातालविवरोपमम् PariPar. 7.8.

**अञ्जनसमद्युति** (añjanasama-dyuti) *adj.* having the complexion similar to collyrium स्थिरो जयन्तः सततं श्यामाञ्जनसमद्युती PāraS. 11.251.

**अञ्जनसमर्थ** (añjana-samartha) *adj.* fit for anointing स्वरुणा पशुमनक्तीत्युच्चरितेऽञ्जनसमर्थं द्रव्यं प्रतीयते ṬupṬ. 20.5 (*on* iv. 2.3); विधेश्च··· तेन बाधितो घृतशब्दोऽर्थवादस्थोऽञ्जनसमर्थद्रव्यमात्रलक्षणार्थो भविष्यति SāstrDi. 91.7 (*on* i. 4.19)

**अञ्जनसम्बन्धिन्** (añjana-sambandhin) *adj.* connected with collyrium आञ्जन एव च। त्रिपु त्वञ्जनसम्बन्धिनि NānārthāSaṁ. ii. 65.210.

**अञ्जनसवर्ण** (añjana-savarṇa) *adj.* having the same colour as that of collyrium तत्राञ्जनसवर्णानाम्··· । दृष्टास्तेन प्रवृत्तानां तिस्रः कोट्यः प्रभावताम् RāmāMañ. 461.1; गुग्गुलोः पञ्च जातयः। भृंगाञ्जनसवर्णस्तु महिषाक्ष इति स्मृतः BhāvPra.(Bhā.) 6(3). 34.

**अञ्जनसाधन** (añjana-sādhana) *n.* means of smearing or anointing (material or instrument) अत्र ह्यञ्जनसाधनं सर्पिस्तैलादि यत्किञ्चिद्विधिनापेक्षितम् ManuBh. i. 61.14 (*on* 2.6); विधेश्च यत्किञ्चिदञ्जनसाधनं गम्यते SāstrDi. 91.6 (*on* i. 4.19); 366.13 (*on* iv. 2.6); (अञ्जनः) त्रिपु त्वञ्जनसाधने NānārthāSaṁ. ii. 53.73; विधिवाक्येन किमञ्जनसाधनसामान्यं विधीयते तद्विशेषो वा NyāyMāVi. 59.16 (*on* i. 4.19); घृततैलवसादीनामन्यतमं अञ्जनसाधनं भविष्यति UpaParā. 20.4; ननु अक्ता इति विधावञ्जनकर्मत्वमात्रं शर्कराणां प्रतीयते न त्वञ्जनसाधनं स्नेहद्रव्यम् MayūMāli. 97.2 (*on* i. 4.19); अञ्जनसाधनशकलविशेषः स्वरुशब्दार्थः MayūMāli. 366.10 (*on* iv. 2.1)

**अञ्जनसाधनत्व** (añjanasādhana-tva) *n.* the state of being the means of smearing or anointing (material or instrument) अञ्जनसाधनत्वेनावगतस्य हि स्वरोरर्थप्राप्तमादानमनूद्य यूपादिति विधौ वाक्यार्थविधानम् SāstrDi. 366.15 (*on* iv. 2.1); ग्रहणकर्माहेंष्वञ्जनसाधनत्वेन निरूढेपु TattvCin. iv(2). 724.2; किं त्वञ्जनसाधनत्वेन कीदृशं द्रव्यमुपादेयमिति संशये MayūMāli. 32.17 (*on* i. 3.5); 366.10 (*on* iv. 2.1)

**अञ्जनसाधनद्रव्य** (añjanasādhana-dravya) *n.* substance used for smearing or anointing अक्ताः शर्करा उपदधाति इत्यादिवेदवाक्यानामञ्जनसाधनद्रव्यविशेषानुपस्थापनेन संदेहलक्षणाप्रामाण्ये···उक्ते SrutaPra. ii. 70.20 (*on* i. 3.29); तत्राञ्जनसाधनद्रव्यविशेपोपादानसन्देहे वाक्यशेपेण निर्णयः MīmāKau. i. 58.2 (*on* i. 3.9); ननु विधावप्याक्षेपादञ्जनसाधनद्रव्यप्रतीतिर्वाच्या MayūMāli. 91.10 (*on* i. 4.19); 91.24 (*on* i. 4.19)

**अञ्जनसाधनीभूत** (añjana-sādhanībhūta) *adj.* which has become a means of smearing तेन चाञ्जनसाधनीभूतस्नेहद्रव्यमात्राक्षेपात् MīmāKau. i. 293.21 (*on* i. 4.29)

**अञ्जनसामान्य** (añjana-sāmānya) *n.* material in general for smearing अञ्जनसामान्येन वाक्यस्योपक्रमः SābaBh. 365.10 (*on* i. 4.24); शर्कराः। ताश्च घृततैलवसादीनामन्यतमेन द्रव्येणाञ्जनीयाः। कुतः। अञ्जनसामान्यबोधकस्य विधिवाक्यस्य घृतविशेषबोधकादर्थवादात्प्रबलत्वात् NyāyMāVi. 59.11 (*on* i. 4.19)

**अञ्जनसिद्ध** (añjana-siddha) *adj.* possessed of miraculous powers due to the use of a salve इत्यञ्जनसिद्धोऽभून्मन्त्रीशः RauhiC. 453.

**अञ्जनसिद्धि** (añjana-siddhi) *f.* 1 miraculous power due to the use of collyrium गुटिकासिद्धिदा काचित्काचिदञ्जनसिद्धिदा SkandP. iv(1). 45.14; 2 accomplishment of smearing अक्ता इत्यत्रैकेनैवाञ्जनसिद्धेः MayūMāli. 437.23 (*on* v. 3.15)

**अञ्जनसिद्धिक** (añjanasiddhi-ka) *m.* miraculous power due to the use of collyrium रससिद्धिः ··· अञ्जनसिद्धिकः। ··· एता अष्टौ सिद्धयः BrahmāṇḍP. iii. 36.52.

**अञ्जनसुन्दरी** (añjana-sundarī) *f.* i name of a daughter of Mahendra and Hṛdayavegā (हृदयवेगायां महेन्द्रतः) उदयाद्यनुजास्तेषां कीर्तिताञ्जनसुन्दरी PadmP.(Ra.) 15.16; 16.231; ii name of a woman निष्कारणकलिकार्याञ्जनसुन्दर्यां···प्रतीताञ्जनचोरापरसंज्ञः किलैवमुक्तः YaśasCam. ii. 289.22.

**अञ्जनसोदरद्युति** (añjanasodara-dyuti) *adj.* having a lustre resembling that of collyrium (black like collyrium) सद्योनिकृत्ताञ्जनसोदरद्युतिं फणामणिप्रज्वलदंशुमण्डलम् KumāSaṁ. 15.30.

**अञ्जनस्तम्भ** (añjana-stambha) *m.* log of the Añjana tree अथैकस्य शिल्पिनः ··· अञ्जनस्तम्भः शिरसि निखातखदिरकीलकोऽवतिष्ठते Pañcā. 5.22.

**अञ्जनस्निग्ध** (ajñana-snigdha) *adj.* i lovely due to collyrium चलकुवलयधाम्नोरञ्जनस्निग्धमक्ष्णोर्भयचलधृति युग्मं केयमालोलयन्ती SubhaDha. 1.12; ii lovely like collyrium अथाञ्जनस्निग्धनभःप्रकाशाः ··· दीनाम्बुवाहा दिवसा बभूवुः Yādavā. 5.49.

**अञ्जनस्नेहशून्य** (añjanasneha-śūnya) *adj.* devoid of the anointment of collyrium अञ्जनस्नेहशून्यम् ··· नयनम् ··· मीनक्षोभाच्चलकुवलयश्रीतुलामेष्यतीति MeghaDū. 92; SaraKaṇṭhā. 345.13.

**अञ्जनस्पर्शाभाव** (añjanasparśābhāva) *m.* absence of the application of collyrium अत्र···अञ्जनस्पर्शाभावरूपस्य कार्यस्य वाच्यस्य···समं प्राधान्यम् Ekāva. 4.5 (141.6)

**अञ्जनहेतु** (añjana-hetu) *m.* purpose of applying collyrium पराञ्जयित्वा नयनाम्बुजातमेकं परस्याञ्जनहेतवेऽथ। शलाकया कज्जलमाददाना शीघ्रं गवाक्षं प्रति निर्जगाम NemiC. 18.18.

**अञ्जना** (añjanā) *f.* 1 wife of Kesarin and mother of Hanumat अप्सराप्सरसां श्रेष्ठा ··· अञ्जनेति परिख्याता पत्नी केसरिणो हरेः Rāmā. iv. 65.8; iv. 65.17; vii. 35.20 जानीते हि ··· । कामार्तं जनमञ्जनां प्रति भवानालक्षितप्रार्थनः Vikramo. 2.19; केसरी कुञ्जरस्याथ सुतां भार्यामविन्दत। अञ्जना नाम सुभगा ··· । पर्युपास्ते च तां वायुः ··· तस्यां जातस्तु हनुमान् BrahmāṇḍP. ii. 7.224; AnekāSa. 152; ततो वायुरुवाचेदं शृणु मित्राञ्जना मया। न कदाचित्कृतप्रीतिः PadmP.(Ra.) 16.134; स्तनकलशमपात्र जातु पीतत्रिदशवरामृतरञ्जनोऽञ्जनायाः (हनूमान्) RāmC. 6.79; 15.55; 19.37;

(in size) न चैवं सति द्व्यणुकस्याप्यणुत्वप्रसक्तिः NyāyKa. 133.23.

**अणुत्वप्रसङ्ग** (aṇutva-prasaṅga) *m.* contingency of being atomic (in size) पारिमाण्डल्यादेरारंभकत्वे सर्वकार्याणामणुत्वप्रसङ्गः TattvPrakā. 98A.6 (*on* ii. 2.11)

**अणुत्वमत** (aṇutva-mata) *n.* view that (something) is of atomic size मनसोऽणुत्वमते विषये संक्षेपः ··· न सम्भवति GuruCandr. ii. 131.15.

**अणुत्वमात्र** (aṇutva-mātra) *n.* mere minuteness आश्चर्यं त्विदमेव शाहमनसा सच्छास्त्रसंसेवनैः संप्राप्तं तु मनुत्वमेव हि कथं नाणुत्वमात्रं जहौ ParamāKā. 3.16

**अणुत्वलिङ्ग** (aṇutva-liṅga) *n.* probans (in the form of) being atomic (in size) मनसः प्राणानां चाणुत्वलिङ्गोपस्थापितजीवाश्रयत्वप्रतिपादनात् SivārkaMaDī. i. 403.8 (*on* i. 3.3)

**अणुत्ववचन** (aṇutva-vacana) *n.* statement of smallness or minuteness दुर्ज्ञानत्वाभिप्रायमिदमणुत्ववचनम् BrahmSūBh.(S'aṅ.) 461.9 (*on* ii. 3.29)

**अणुत्ववत्** (aṇutva-vat) *adv.* like minuteness अणुत्ववत् तस्यापि (ह्रस्वत्वस्य) परमाण्वादौ अनित्यत्वात् TarkSaṁ.(Ā.) 66.9.

**अणुत्ववाचिन्** (aṇutvavāc-in) *adj.* expressing minuteness or atomic size साक्षादेवास्याणुत्ववाची शब्दः श्रूयते BrahmSūBh.(S'aṅ.) 454.14 (*on* ii. 3.22); GoviBh. 154.2 (*on* ii. 3.21)

**अणुत्ववाद** (aṇutva-vāda) *m.* opinion that (something) is of atomic size ये चोपनिषत्स्वणुत्ववादाः ··· ते सूक्ष्मग्रहणगोचरत्वाभिप्रायाः S'āstrDī. 124.21 (*on* i. 1.5)

**अणुत्वविनिश्चय** (aṇutva-viniścaya) *m.* ascertainment of minuteness तत्किल तावति हृदि स्थितैरेव तु तावत्स्वरूपतया···तस्याणुत्वविनिश्चयात् GoviBh. 50.11 (*on* i. 3.25)

**अणुत्वविपरीत** (aṇutva-viparīta) *adj.* contrary to atomic size नाणुरयमात्मा, कस्मात् । अतच्छ्रुतेः अणुत्वविपरीतपरिमाणश्रवणात् BrahmSūBh.(S'aṅ.) 454.1 (*on* ii. 3.21); जीवो नाणुर्भवितुमर्हति । कुतः । अतच्छ्रुतेः । अणुत्वविपरीतव्यापकत्वश्रुतेः AṇuBh. 147.17 (*on* ii. 3.21)

**अणुत्वविवक्षा** (aṇutva-vivakṣā) *f.* desire to convey the sense of being atomic न चाद्यशब्देनाणुत्वविवक्षोपपन्ना S'rutaPra. ii. 311.14 (*on* ii. 2.34)

**अणुत्वविशेष** (aṇutva-viśeṣa) *m.* a kind of smallness or minuteness अणुत्वविशेष एव ह्रस्वत्वम् NyāyKa. 137.16.

**अणुत्वविश्रान्ति** (aṇutva-viśrānti) *f.* limit of atomic size अतो नाणुत्वविश्रान्तिर्न महत्त्वस्य च क्वचित् AnuVyā. 25A.9 (*on* 2.2)

**अणुत्ववैशिष्ट्य** (aṇutva-vaiśiṣṭya) *n.* the characteristic of being atomic निरुपाधिकस्वरूपस्याणुत्ववैशिष्ट्यावगमाच्च तदवगमः S'rutaPra. ii. 368.26 (*on* ii. 3.32)

**अणुत्वव्यपदेश** (aṇutva-vyapadeśa) *m.* mention of (something) being atomic अणुत्वव्यपदेशः कथमिति चेत्तद्गुणसारत्वात् BrahmSūBh.(Bhā.) 137.10 (*on* ii. 3.29); SiddhāBi. 84.2.

**अणुत्वव्यवहार** (aṇutva-vyavahāra) *m.* usage that (something) is atomic कुवलयामलकबिल्वादिषु महत्स्वपि तत्प्रकर्षभावाभावमपेक्ष्य भाक्तोऽणुत्वव्यवहारः PadārthaSaṁ. 131.1; Upask. 295.7 (*on* viii. 1.8)

**अणुत्वश्रवण** (aṇutva-śravaṇa) *n.* Vedic authority of (something) being atomic (in size) अणुत्वश्रवणाच्च संशयः S'ivārkaMaDī. ii. 493.23 (*on* iv. 4.15); SiddhāLeSaṁ. 336.3; 344.3.

**अणुत्वश्रुति** (aṇutva-śruti) *f.* Vedic authority of (something) being atomic (in size) 'एषोऽणुरात्मा चेतसा वेदितव्यः ···' इति साक्षादणुत्वश्रुतेः NītiMā. 51.9; S'rutaPra. ii. 367.28 (*on* ii. 3.32); ii. 369.3 (*on* ii. 3.32); न चाणुत्वश्रुतिविरोधः TattvPrakā. 115B.13 (*on* ii. 3.20); 128B.11 (*on* ii. 4.8); 129A.2 (*on* ii. 4.8); अणोरणीयान् इति ब्रह्मणोऽणुत्वश्रुतेः SiddhāBi. 82.5; S'ivārkaMaDī. ii. 144.15 (*on* ii. 3.20); ii. 145.33 (*on* ii. 3.23)

**अणुत्वसमानाधिकरण** (aṇutva-samānādhikaraṇa) *adj.* co-existent with atomic size केचित्तु अणुत्वसमानाधिकरणं ह्रस्वत्वं तद्वदेव द्विविधम् ··· इत्याहुः SarvaDaKau. 26.12.

**अणुत्वसाधन** (aṇutva-sādhana) *n.* establishment of (something) being atomic उत्क्रान्तिरपि सापादानाणुत्वसाधनम् Bhām. 486.5 (*on* ii. 3.20); VedāntKa. 320.18 (*on* ii. 3.19)

**अणुत्वसामान्य** (aṇutva-sāmānya) *n.* the genus of atomic size समुदायेऽपीष्यमाणेऽणुत्वसामान्यमभ्युपगन्तव्यमापद्येत Kāśi. iii. 97.16 (*on* 5(4).180)

**अणुत्वसिद्धि** (aṇutva-siddhi) *f.* establishment of minuteness or atomic size अतः पारिशेष्यादणुत्वसिद्धिः Bhām. 485.21 (*on* ii. 3.20); SāṁkhyaPraBh. 136.5 (*on* 5.87); TattvPrakā. 129A.13 (*on* ii. 4.8); Upask. 308.4 (*on* vii. 1.23); खगशरीरवदित्याद्यनुमानैश्च···अणुत्वसिद्धेः Nyāyāmṛ. 610B.8.

**अणुत्वस्वीकार** (aṇutva-svīkāra) *m.* acceptance of (something) being atomic उपाधेश्चाणुत्वस्वीकारेण शिरःपाण्याद्यवयवैर्युगपदसंबन्धतया तद्गतसुखादीनां युगपदनुसंधानाभावापत्तेश्च VedāntRaMañ. 1.1 (17.7)

**अणुत्वहेतु** (aṇutva-hetu) *m.* [Abl.] by reason of minuteness स्थूलत्वाणुत्वहेतोर्यत्पूर्वाचार्यैः स्वकल्पितम् । उक्तं तत्र मतं मेऽस्ति गोलयुक्तिविरोधतः SiddhāTaVi. 209.3.

**अणुत्वाक्षेपक** (aṇutvākṣepa-ka) *adj.* indicative of (something) being atomic (in size) स्वशब्दः अणुशब्दः । न त्वणुत्वाक्षेपकशब्दः S'rutaPra. ii. 363.26 (*on* ii. 3.23)

**अणुत्वाद्यारम्भक** (aṇutvādy-ārambhaka) *adj.* productive of atomic size etc. पारिमाण्डल्यादेरेव त्वराविशेषादणुत्वाद्यारम्भकत्वम् VedāntKa. 262.5 (*on* ii. 2.11)

**अणुत्वाद्यभिधान** (aṇutvādy-abhidhāna) *n.* statement that (something) is atomic etc. अस्थूलादिर्हि (? अस्थूलादिपदैर्हि) स्थूलत्वादिविपरीतमणुत्वाद्यभिधानं वा स्यात् NyāySu.(Ja.) 173B.4 (*on* i. 3.3)

**अणुत्वाद्यभिधायक** (aṇutvādy-abhidhāyaka) *adj.* expressive of (something) being atomic etc. अस्थूलादिपदानामणुत्वाद्यभिधायकत्वपक्षमुपादाय NyāySu.(Ja.) 174B.9 (*on* i. 3.3)

**अणुत्वानुपपत्ति** (aṇutvānupapatti) *f.* impossibility of being of atomic size न तावदविद्या, तस्या अणुत्वाभावेन तदवच्छिन्नस्याप्यणुत्वानुपपत्तेः S'rutaPra. ii. 368.3 (*on* ii. 3.32)

**अणुत्वानुमान** (aṇutvānumāna) *n.* inference of (something) being of atomic size न च हरिचन्दनबिन्दुदृष्टान्तेनाणुत्वानुमानं जीवस्य Bhām. 487.14 (*on* ii. 3.24)

**अणुत्वापत्ति** (aṇutvāpatti) *f.* contingency of (something) being of atomic size परमाणुकार्यस्य द्व्यणुकवदणुत्वापत्तेश्च SarvaDaKau. 13.5.

**अणुत्वापादन** (aṇutvāpādana) *n.* production of the fragmentary or limited nature (of the individual soul) स एव च संसारः अपूर्णाभिमानेन स्वात्मनि अणुत्वापादनात् आणवमलस्य ParāTri. 41.1.

**अणुत्वाभाव** (aṇutvābhāva) *m.* absence of atomic size उत्क्रान्त्यादिकं तु अणुत्वाभावेऽप्यौपाधिकपरिच्छेदादुपपद्यते GuruCandr. i. 347.20.

**अणुत्वायोग** (aṇutvāyoga) *m.* incompatibility with atomic size परिमाणस्य अणुत्वायोगात् TarkSaṁ.(Ā.) 29.26.

**अणुत्वावगमकत्व** (aṇutvāvagamaka-tva) *n.* the state of being one which conveys the characteristic of atomic size अणुत्वावगमकत्वाभावे तदानन्त्यश्रवणस्योपासनार्थत्वाभावात् (सर्वगतानि इन्द्रियाणि) S'rutaPra. ii. 393.20 (*on* ii. 4.6)

**अणुत्वावच्छिन्न** (aṇutvāvacchinna) *adj.* delimited by atomic size अणुत्वावच्छिन्नः कथं स्थूलप्रतिभाससंवेद्यः TātpaṬ.(U.) 347.21 (*on* 5(5).180)

**अणुत्वाश्रयण** (aṇutvāśrayaṇa) *n.* taking recourse to the atomic size (of something) अणुत्वाश्रयणे तु ··· उपपद्यत एव वेदनायास्तत्तदधिकरणत्वप्रतीतिः MānaMe. 215.3.

**अणुत्वोत्पत्ति** (aṇutvotpatti) *f.* origination of atomic size or measure द्व्यणुकैर्बहुभिरारभ्यते इत्यपि नियमो न द्वाभ्यां तस्याणुपरिमाणोत्पत्तौ कारणसद्भावेनाणुत्वोत्पत्तावारम्भवैयर्थ्यात् NyāyKa. 32.7; ह्रस्वत्वपारिमाण्डल्याभ्यां महत्त्वाणुत्वोत्पत्तेर्वैशेषिकैरनङ्गीकृतत्वात् S'ivārkaMaDī. ii. 65.16 (*on* ii. 2.11)

**अणुत्वोत्पादक** (aṇutvotpādaka) *adj.* productive of atomic size or measure अणुत्वोत्पादकमेव ह्रस्वत्वोत्पादकम् Upask. 302.8 (*on* viii. 1.17)

**अणुत्वोपगम** (aṇutvopagama) *m.* acceptance of atomic size जीवस्याणुत्वोपगमेन व्यवस्थोपपादनं न युक्तम् SiddhāLeSaṁ. 344.1.

**अणुत्वोपपत्ति** (aṇutvopapatti) *f.* justification of atomic size प्रत्यगात्मनः ··· नाणुत्वोपपत्तिरिति चेन्न VedāntRaMañ. 1.1 (15.24)

**अणुत्वोपाधि** (aṇutvopādhi) *m.* limiting adjunct of atomic size मनोव्यतिरिक्ता बुद्धिरणुत्वोपाधिरिति चेत् S'rutaPra. ii. 368.20 (*on* ii. 3.32); अणुत्वोपाधेरनपगमादेव । न हि देहान्तरावस्थितिदशायामणुत्वोपाध्यपगमो भवतामिष्टः S'rutaPra. ii. 369.20 (*on* ii. 3.32)

**अणुदायादवलग्ना** (aṇudāyāda-valagnā) *adj.* (*f.*) whose waist is extremely slender (*lit.* kinsman of atom) अणुदायादवलग्नाम्···अन्तःकलयामि सुन्दरीमनिशम् LalitāStaRa. 166.

**अणुदेश** (aṇu-deśa) *m.* atomic region अणुदेशावच्छिन्नायालोकसंयोगात् न चाक्षुषम् GuruCandr. i. 222. 19.

**अणुदेशत्व** (aṇudeśa-tva) *n.* the state of having an atomic (i. e. extremely small) region अन्यथाणुत्वपक्षे प्रयत्नस्याणुदेशत्वं शरीरमात्रदेशत्वं वा स्यात् TattvCin. i. 768. 6; मनसोऽणुत्वे तत्संयोगस्याप्यणुदेशत्वात् सुखादेरणुदेशापत्तिः SarvaDaKau. 23. 23.

**अणुदेशापत्ति** (aṇudeśāpatti) *f.* contingency of occupying atomic region सुखादीनामणुदेशापत्तिः Upask. 166. 15 (*on* iii. 2. 1); मनसोऽणुत्वे ... सुखादेरणुदेशापत्तिः SarvaDaKau. 23. 24.

**अणुदेह** (aṇu-deha) *m.* tiny body अणुदेहस्य जीवस्य गजत्वे विकृतिर्हि या AnuVyā. 32A. 1 (*on* 2. 2) (NyāySu.(Ja.) 416B. 2 पिपीलिकादिदेहस्य ... यद्वा ...हस्तवितस्त्यादिपरिमितदेहस्य)

**अणुद्रव्य** (aṇu-dravya) *n.* substance in atomic form अणुद्रव्यसामान्यात् सामान्यप्रत्ययविषयत्वं मन्दता NyāyVār. 249. 12 (*on* ii. 1. 34); क्व वा दृष्टमणुद्रव्यारभ्यं द्रव्यम् NyāyKuA. ii(2). 38. 3.

**अणुद्वय** (aṇu-dvaya) *n.* a pair of atoms द्वयणुकमणुद्वयात् NayaVi. 146. 5 (*on* i. 3. 5); 191. 4 (*on* i. 3. 5); अणुद्वयसंयोगे तदनुपपत्तेश्च NyāySiA. 191. 1.

**अणुद्वार** (aṇu-dvāra) *adj.* having a very fine (*lit.* atomic) opening पूयगर्भानणुद्वारान् व्रणान् ... परिपीडयेत् SuśruS. iv. 1. 46; AṣṭāSaṁ. ii. 293. 2 (6. 30)

**अणुधन** (aṇu-dhana) *adj.* **i** having very little wealth पङ्कजन् ... अणुधनः ... इत्यादौ पङ्कादिभिरन्यपदार्थस्यासेदान्वयापत्तेश्च VaiyāBhū. 148. 17 (*on* 30); **ii** having *Panicum miliaceum* for wealth, VaiyāBhū. 148. 17 (*on* 30)

**अणुधर्म** (aṇu-dharma) *m.* A minute (i. e. small) rite, ritual detail अणुह्रो नाम तस्यासीत् पुत्रः परमधार्मिकः । अणुधर्मरतिर्नित्यमणुह्रोऽध्यगमत्पदम् HariVaṁ. 18. 4; B minor vow (to be observed by the householder) (called Aṇuvrata) अणुधर्मोऽग्रधर्मश्च श्रेयसः पदवी द्वयी । ... गृहाश्रमविधिः पूर्वः PadmP. (Ra.) 85. 18 (अणुधर्मः बृहत्साधुधर्मापेक्षया अल्पो धर्मः AbhidhānaRājendra. P. 385)

**अणुधान्य** (aṇu-dhānya) *n.* **i** non-bearded grain प्रवद गणक खार्यः किंमिताः सन्ति तस्मिन्नथ पृथगणुधान्यैः शूकधान्यैश्च शीघ्रम् Lilā. 234; **ii** grain of *Panicum miliaceum*, Lilā. 234.

**अणुधी** (aṇu-dhī) *f.* perceiving (something) as of atomic size कुर्यान्मेरावणुधियमणौ मेरुधियं तथा BrĀraUBhVā. i. 3. 313.

**अणुनित्यता** (aṇu-nityatā) *f.* eternality of atom नाणुनित्यता तत्कार्यत्वश्रुतेः SāṁkhyaPraSū. 5. 87 (comm. पृथिव्याद्यणूनां नित्यता नास्ति)

**अणुनित्यत्व** (aṇu-nityatva) *n.* eternality of atom नाणुनित्यत्वात् NyāySū. ii. 2. 24; यथा सत्यणुनित्यत्वे घटे तद्रचनात्मके । न नित्यतैवं वर्णेषु नित्येषु पदनाशिता ŚlokaVār. 6. 281 (*on* 800. 9)

**अणुनिराकरण** (aṇu-nirākaraṇa) *n.* refutation of atom (as a separate category) न चैतदधिकमणुत्वमस्तीत्यणुनिराकरणादपि सिद्धम् NyāySiA. 261. 30.

**अणुनिरोधिन्** (aṇu-nirodhin) *adj.* that which binds the individual soul इति यदणुनिरोधि ध्वान्तबीजाद्यदृष्टं पशुमतसतदृग्भिः पाशजालं सुभूयः MṛgendraT. i. 13. 198.

**अणुनिविष्ट** (aṇu-niviṣṭa) *adj.* occupied by an atom आकाशम् अणुनिविष्टम् । पुद्गलपरमाण्व्यत्राम् TātpaVṛ. 198. 14 (*on* 2. 48)

**अणुनिष्ठ** (aṇu-niṣṭha) *adj.* found in an atom अणुपरिमाणशब्देनाणुनिष्ठपरिमाणविवक्षायाम् TattvPradī.(Ci.) 290. 3; केचित्तु आत्मत्वमणुनिष्ठम् द्रव्यत्वसाक्षाद्व्याप्यजातित्वात् पृथिवीत्ववत् Nyāyāmṛ. 611B. 9 (*on* 2. 33)

**अणुप** (aṇu-pa) *m.* (pl.) name of a tribe (residing in the Vindhyas) अनुपास्तुण्डिकेराश्च वीतिहोत्रा ह्यवन्तयः । एते जनपदाः सर्वे विन्ध्यपृष्ठनिवासिनः VāyuP. 1. 45. 134 (ASS. Ed. अणुपाः)

**अणुपदवाच्यत्व** (aṇupadavācya-tva) *n.* the state of being denoted by the term *aṇu* तन्नाज्ञानमणुः । ... अणुपदवाच्यत्वं चास्यापरिच्छिन्नस्याप्यात्मनः परिच्छेदकत्वात् LalitaSaBh. 95. 11 (*on* 129)

**अणुपदार्थ** (aṇu-padārtha) *m.* minute or subtle thing कुर्वाणाणुपदार्थदर्शनवशाद्भास्वत्प्रभायात्पाम् CaturJiStu. 87 (comm. अणवः सूक्ष्माः पदार्थाः जीवाजीवादयः)

**अणुपरत्व** (aṇupara-tva) *n.* the state of conveying the atomic size भवद्भिरुदाहृतश्रुतेरणुपरत्वेनासदिष्टत्वात् युष्मदनिष्टत्वाच्च VedāntRaMañ. 16. 9 (*on* 1. 1)

**अणुपरिच्छिन्न** (aṇu-paricchinna) *adj.* delimited by the atomic size अप्रत्यक्षोऽणुपरिच्छिन्नपरिमाणः परमाणुः SiddhāTaVi. 58. 7.

**अणुपरिणाम** (aṇu-pariṇāma) *m.* modification of an atom (स्निग्धा वा रूक्षा वा अणुपरिणामाः समा वा विषमा वा) अणुपरिणामशब्देनात्र परिणामपरिणता अणवो गृह्यन्ते TātpaVṛ. 226. 6 (*on* 2. 73)

**अणुपरिमाण** (aṇu-parimāṇa) *adj.* [*f.* -ā] having the size of an atom (i. e. very small) (सप्तदशकं लिङ्गम्) अणुपरिमाणं तत्कृतिश्रुतेः SāṁkhyaPraSū. 3. 14; अल्पपरिमाणेन (v. l. अणुपरिमाणेन) महापरिमाणस्याव्यासेः NyāyVār. 507. 16 (*on* iv. 2. 7); BrahmSi. i. 7. 2; गमनक्षणाश्चाणुपरिमाणदेशातिक्रमक्रमेण... प्रभवन्ति SphoṭSi. 41. 2; (जीवः) किमणुपरिमाणः उत मध्यमपरिमाणः आहोस्वित् महापरिमाणः BrahmSūBh.(Śaṅ.) 452. 5 (*on* ii. 3. 19); BrahmSūBh.(Bhā.) 135. 13 (*on* ii. 3. 19); (आत्मा) अणुपरिमाणः ...इत्यादिवादिनो विवदन्ते PrakaPañ. 316 1; अणुपरिमाणस्य (वायोः) तृणादिप्रेरणसामर्थ्याभावात् NyāyKa. 47. 21; 92. 20; ĀtmaSi. 3. 13; तत्रिद्वं द्वयणुकं नाम कार्यद्रव्यमणुपरिमाणम् PratyabhiVi. i. 225. 1 (*on* i. 5. 6); TātpaṬ.(Vā.) 514. 5 (*on* iii. 1. 17); न चैतदणुपरिमाणम् (चित्तम्) TattvVai. 190. 20 (*on* 4. 10); अणुपरिमाणश्रवणस्य चाविरोधार्थमिदमधिकरणम् Bhām. 485. 10 (*on* ii. 3. 19); AbhinBhā. i. 51. 8 (*on* 2. 13); अणुपरिमाणा तु (मही) नोपलभ्यते Kiraṇā. 50. 11; स चायमात्माणुपरिमाणः BrahmSūBh.(Rā.) 531. 15 (*on* ii. 3. 31); अणुपरिमाणस्य मनसः TattvPradi.(Ci.) 380. 2; ŚrutaPra. i. 314. 17 (*on* i. 2. 18); आत्मनः पुनरणुपरिमाणान्तःकरणोपहितस्याणोरिन्द्रियसंचारो युज्यते Aparā. 1014. 1 (*on* 3. 176); TarkBhā.(Ke.) 60. 2; JīvanVi. 59. 2; NyāySu.(Ja.) 173B. 5 (*on* i. 3. 3); अणुपरिमाणो जीवः VedāntKau. 94. 15 (*on* i. 3. 21); SarvaDaKau. 23. 18; सर्वे प्राणा अणुपरिमाणाः AṇuBh. 160. 7 (*on* ii. 4. 7); LaCandr. 853. 39; BhāṭṭCin. 16. 6 (*on* i. 1. 4); GoviBh. 319. 13 (*on* v. 4. 11)

**अणुपरिमाण** (aṇu-parimāṇa) *n.* atomic size or measure or dimension अणुपरिमाणं कचित्रिरतिशयम् NyāyKa. 31. 24; तस्याणुपरिमाणोत्पत्तौ कारणसद्भावेन NyāyKa. 32. 7; 133. 20; 134. 17; परमाणुद्वयारब्धे तु द्वयणुकेऽणुपरिमाणमस्तु AbhinBhā. i. 51. 10 (*on* 2. 14); अणुपरिमाणतरतमादिभावः कचिद्विश्रान्तः KhaṇḍanKhā. 914. 9; परमाणवः ... न तु अणुपरिमाणयुक्ताः BrahmSūBh. (Śrī.) ii. 65. 3 (*on* ii. 2. 10); द्वाभ्यां परमाणुभ्यामणुपरिमाणरहिताभ्यामणुपरिमाणोपेतं द्वयणुकमुत्पद्यते BrahmSūBh.(Śrī.) ii. 65. 4 (*on* ii. 2. 10); अणुपरिमाणे स्थिते न जीवानां ब्रह्मभावो घटते । नष्टे वा नात्रह्मभावोऽपि घटते PrakaVi. 170. 16; 'यतः' इति अणुपरिमाणग्रहणात्र इति चेन्न TarkSaṁ.(Ā.) 30. 1; NyāySu.(Ja.) 352A. 3 (*on* ii. 2. 6); प्रत्यक्षसिद्धान्महतः परिमाणाद् यद्विपरीतं तदणुपरिमाणम् Upask. 297. 5 (*on* vii. 1. 10); पारिमाण्डल्यम् अणुपरिमाणम् SiddhāMu. 3. 12 (*on* 15); तत्रासन्नत्वेऽणुपरिमाणम् ... भूतेन्द्रियाणां मूलकारणेषु सत्त्वादिगुणेषु मन्तव्यम् SāṁkhyaPraBh. 136. 35 (*on* 5. 90)

**अणुपरिमाणक** (aṇuparimāṇa-ka) *adj.* of the size of an atom अणुपरिमाणकः प्रतिशरीरं भिन्नः ... नित्यपदार्थः VedāntKau. 7. 12 (*on* i. 1. 1); अयमात्मा ... आहोस्विदणुपरिमाणकः VedāntKau. 224. 15 (*on* ii. 3. 19); किमिन्द्रियाणि सर्वगतानि ? उताणुपरिमाणकानि ? ŚrutaPra. ii. 393. 19 (*on* ii. 4. 6)

**अणुपरिमाणकत्व** (aṇuparimāṇaka-tva) *n.* the state of having atomic size आत्मनोऽणुपरिमाणकत्वे कृत्स्नदेहव्यापिसुखाद्यनुभवः कथमुपपद्यते VedāntKau. 226. 3 (*on* ii. 3. 23)

**अणुपरिमाणतारतम्य** (aṇuparimāṇa-tāratamya) *n.* gradation of the atomic dimension अणुपरिमाणतारतम्यं कचिद्विश्रान्तम् NyāyKa. 31. 16 = Kiraṇā. 52. 6 = TārkiRa. 229. 5 = TattvPradī.(Ci.) 290. 1 = NyāySiA. 191. 27 = SarvaMaSaṁ. 17. 1; अणुपरिमाणतारतम्यस्यापि कचिद्विश्रान्तत्वमस्ति SiddhāMu. 16. 15 (*on* 37)

**अणुपरिमाणत्व** (aṇuparimāṇa-tva) *n.* the state of having atomic size अणीयानित्युक्तेऽणुपरिमाणत्वं प्राप्तमाशङ्क्य ChāndoUBh. 177. 6 (*on* iii. 14. 3); BrahmSūBh.(Bhā.) 238. 27 (*on* iv. 3. 13); अणुपरिमाणत्वे स्थूलोऽहं दीर्घ इति च न स्यात् Bhām. 7. 9 (*on* i. 1. 1); NyāyKuA. ii. 64. 2; तत्राणुपरिमाणत्वे युगपच्छिरःपादयोर्वेदनानुपपत्तिः ŚāstrDi. 124. 15 (*on* i. 1. 5); VedāntDi. 123. 16 (*on* ii. 3. 24); अन्तर्यानमदृश्यशरीरत्वम् तच्चाणुपरिमाणत्वे तस्य भवति Aparā. 1028. 7 (*on* 3. 203); हृदयायतनमणुपरिमाणत्वं चाप्यात्मनोऽभिधाय AṇuBh. 149. 2 (*on* ii. 3. 27); SarvaMaSaṁ. 18. 8.

**अणुपरिमाणपक्ष** (aṇuparimāṇa-pakṣa) *m.* the view (that individual soul is) of an atomic size अपि चाणुपरिमाणपक्षे निखिलशरीरव्यापि वेदनासंधानानुपपत्तेः NyāyMa. 26. 3.

**अणुपरिमित** (aṇu-parimita) *adj.* measured by the size of an atom तत्र स्वेच्छयाणुपरिमितशरीरो भवतीत्यणिमा YogSā. 58. 5(3)

**अणुपरिमितत्व** (aṇuparimita-tva) *n.* the state of being of the size of an atom अविद्याया अणुत्वाभावादणुपरिमितत्वं जीवस्य आमोक्षस्थायि न भवेत्

S'rutaPra. ii. 370. 12 (*on* ii. 3. 32)

**अणुपर्यन्त** (aṇu-paryanta) *adj.* A extending upto the shortest duration वर्णानां गुरूणां विशेषेणाणुपर्यन्तं त्रिमात्रचतुर्मात्रतया प्रकृष्टं तदर्थं कर्तव्यम् AbhinBhā. i. 195. 3 (*on* 4. 299); B extending upto an atom महदाद्यणुपर्यन्तम् …त्वदधीनमिदं जगत् MahNirvāT. 4. 11.

**अणुपुद्गल** (aṇu-pudgala) *m.* particle of matter मणीनां स्थूलपुद्गलान् । पतितः शातयामासुर्गृह्णुश्चाणुपुद्गलान् TriṣaS'aPuC. ii. 2. 171.

**अणुपुष्पिका** (aṇupuṣpi-kā) *adj.* (*f.*) bearing tiny flowers (symbol for human body) तथा हि अणु अल्पमायूरूपं पुष्पं यस्याः सा अणुपुष्पिका मानुषतनुः तस्याः पुष्पाणि आयुःखण्डानि मा त्रोटयत PrabhāC. 57. 15.

**अणुपुष्पी** (aṇu-puṣpī) *adj.* (*f.*) bearing flowers of a kind of food grain (symbol for human body) अथवाणुर्नामाल्पधान्यं तस्य पुष्पाणि अल्पविश्वत्वान्मानवतनोः सा अणुपुष्पी PrabhāC. 57. 20.

**अणुप्रकाश** (aṇu-prakāśa) *adj.* having very little (i. e. faint) lustre विराज वक्त्रम् । सौधाकरं बिम्बमणुप्रकाशं प्रगे यथा मञ्जुतमालपत्रम् Ānand-Ra. 3. 3.

**अणुप्रकाशक** (aṇu-prakāśaka) *adj.* which manifests things of minute dimensions बुद्धिरिति नाभौतिकं महदणुप्रकाशकमस्ति NyāyVār. 377. 2 (*on* iii. 1. 31)

**अणुप्रकाशकत्व** (aṇuprakāśaka-tva) *n.* the characteristic of illuminating things of minute dimensions प्रदीपाद्यनभ्युपगमे वा महदणुप्रकाशकत्वं चक्षुष एवेत्यसाधारणत्वादहेतुः भौतिकाभौतिकयोर्निवृत्तेः NyāyVār. 376. 18 (*on* iii. 1. 31)

**अणुप्रतियोगित्व** (aṇupratiyogi-tva) *n.* the characteristic of being the correlative of a thing of atomic size नन्वणोरणीयानिति श्रुतौ सर्वस्मात्स्थूलात्स्थूलत्वमेवोच्यते न महत्तत्त्वपरत्वम् । स्थूलस्यैवाणुप्रतियोगित्वात् TattvPrakā. 68A. 6 (*on* i. 4. 5)

**अणुप्रतियोग्यपेक्षत्व** (aṇupratiyogyapekṣa-tva) *n.* characteristic of requiring an entity of atomic dimension as a correlative न हि महत्त्वप्रतीतिर्दैर्घ्यप्रतीतिवद्ध्रस्वमपेक्ष्य जायते तत्प्रतीतेरणुप्रतियोग्यपेक्षत्वात् TattvPradī. (Ci.) 309. 5.

**अणुप्रत्यय** (aṇu-pratyaya) *m.* perception of minute or subtle one अथ मन्यसे महान् शब्दोऽणुः शब्द इति शब्दे दृष्टो महदणुप्रत्ययः प्रधानम् NyāyVār. 248. 7 (*on* ii. 1. 34)

**अणुप्रमाण** (aṇu-pramāṇa) *adj.* which is of atomic dimensions, subtle अणीयान् ह्यतर्क्यमणुप्रमाणात् KaṭhU. 2. 8; KāṭhUBh. 126. 19 (*on* 2. 8); अशक्यमन्तान्तरवह्निभक्तुमणुप्रमाणं करणं यदन्तः SivLī. 1. 2.

**अणुप्रमाणम्** (aṇu-pramāṇam) *adv.* in a small measure अणुप्रमाणमपि या मध्येकाशि विकासिनी । मही महीयसी ज्ञेया सा सिद्ध्यै न मुधा क्वचित् SkandP. iv. 35. 6.

**अणुप्रमुखश्रुतिवाक्य** (aṇupramukha-śrutivākya) *n.* scriptural passage in which atoms etc. (are stated to be the material cause of the world) ब्रह्म यदि प्रकृतिर्जगतोऽस्य श्रौतमृदादिनिदर्शनतः स्यात् । नैवमणुप्रमुखश्रुतिवाक्यव्रातनिदर्शनतः किमिति स्युः NayaMañ. I. iv. 8. 15.

**अणुप्रवणभाव** (aṇupravaṇa-bhāva) *m.* characteristic of being minute and having a propensity to flow out अणुप्रवणभावाच्च द्रुतत्वान्मारुतस्य च । अष्टाभ्य एभ्यो हेतुभ्यः शुक्रं देहात्प्रसिच्यते CaraS. vi. 2(4). 48 (1941 Ed.) (comm. अनु(? णु)प्रवणभावः अणुत्वे सति बहिर्निर्गमनस्वभावः); स (शरीरगतदोषसंघातः) विच्छिन्नः परिप्लुवन्, स्नेहभाविते काये स्नेहाक्तभाजनस्थमिव क्षौद्रमसज्जन्नणुप्रवणभावादामाशयमागम्योदानप्रणुन्नः … ऊर्ध्वमुत्क्षिप्यते CaraS. vii. 1. 5 (1941 Ed.)

**अणुप्रवेश** (aṇu-praveśa) *m.* entering (of fire) into atoms (composing the earthen pot) न च कार्यद्रव्य एव रूपाद्युत्पत्तिर्विनाशो वा संभवति सर्वावयवेष्वन्तर्बहिश्च वर्तमानस्याग्निना व्याप्त्यभावादणुप्रवेशादपि च व्याप्तिर्न संभवति कार्यद्रव्यविनाशादिति PadārthaSaṁ. 107. 8; द्रव्यारम्भकसंयोगविनाशादवश्यं द्रव्यविनाश इति कुतस्तस्याणुप्रवेशादभिव्यक्तिः NyāyKa. 109. 14.

**अणुप्राणिन्** (aṇu-prāṇin) *m.* small living being (like a worm) अणुप्राण्युपपन्नां च हलोत्खातां च पार्थिव । परित्यजेन्मृदो श्वेतास्सकलाश्शौचकर्मणि ViṣṇuP. iii. 11. 17.

**अणुप्राय** (aṇu-prāya) *adj.* consisting mostly of *Panicum miliaceum* अणुप्रायाणि धान्यानि अजाप्रायं तथा पयः । भविष्यति कलौ प्राप्ते ViṣṇuP. vi. 1. 51; BrahmP. 229. 53.

**अणुफल** (aṇu-phala) *n.* tiny fruit, immature fruit आम्रस्याणुफले भवन्ति युगपन्मांसास्थिमज्जादयः लक्ष्यन्ते न पृथक्पृथक्तनुतया पुष्टास्त एव स्फुटाः BhāvPra.(Bhā.) 3. 315; *m.* (*lit.* having minute fruit) millet [DBHS]

**अणुबन्धवृत्ति** (aṇubandha-vṛtti) *adj.* having the function of binding the individual soul इयमन्तरङ्गबहिरङ्गरूपतां दधती कलापरिणतिर्द्विधा स्थिता । अणुबन्धवृत्तिरनुलोमवर्तिनी प्रतिलोमतः पुनरपोह्यते त्वया HarVi. 6. 139 (comm. अणुबन्धवृत्तिरात्मतत्त्वस्य बन्धिनी)

**अणुबहुविदारित** (aṇubahu-vidārita) *adj.* in which there are many small cracks (काण्डमग्नमत ऊर्ध्वं वक्ष्यामः) पाटितमणुबहुविदारितं वेदनावच्च SuśruS. ii. 15. 10.

**अणुबहुविधतृण** (aṇubahuvidha-tṛṇa) *n.* small grass of many varieties क्वचिदणुबहुविधतृणपरिनिचितम् । … इदं तद्दण्डकारण्यं प्रसिद्धं दयिते वनम् PadmP.(Ra.) 42. 47.

**अणुबिन्दु** (aṇu-bindu) *m.* 1 tiny drop (of water) त्वयि नाथ धर्मजलदत्वमीयुषि… । स्फुटशक्तिशुक्तिकृतसंस्कृतिः क्रमादणुबिन्दुरेति शुचिमौक्तिकात्मताम् HarVi. 6. 134; 2 drop in the form of the individual soul, HarVi. 6. 134.

**अणुबिम्ब** (aṇu-bimba) *adj.* having a small disc उच्चस्थितो व्योमचरः सुदूरे नीचस्थितः स्यान्निकटे धरित्र्याः । अतोऽणुबिम्बः पृथुलश्च भाति भानोस्तथासन्नसुदूरवर्ती Golā. 201. 28 (23. 22)

**अणुबिम्बत्व** (aṇubimba-tva) *n.* characteristic of having a small disc स्थूलत्वं चाणुबिम्बत्वं दृश्यते यच्च तच्छृणु SiddhāTaVi. 208. 10.

**अणुबीज** (aṇu-bīja) *n.* tiny seed पेष्यां यथाणुबी(? बी)जं स्यादङ्कुरस्तद्वदुच्यते MarkP. 11. 3.

**अणुभा** (aṇu-bhā) *f.* lightning (having short-lived (*lit.* atomic) brilliance) सौदाम्नी त्वशनिर्विद्युदणुभा वाचिरद्युतिः TrikāS'e. i. 3. 3.

**अणुभाव** (aṇu-bhāva) *m.* 1 essence, subtle nature दध्नः सोम्य मथ्यमानस्य योऽणिमा अणुभावः सः … संभूयोर्ध्वं नवनीतभावेन गच्छति ChāndoUBh. 366. 4 (*on* vi. 6. 1); स यः सदाख्यः एषः उक्तः अणिमा अणुभावः जगतो मूलम् ChāndoUBh. 384. 18 (*on* vi. 8. 7); 2 the state of an atom अणुभावात् कार्यभावात् तेजोऽपि द्विविधमिति NyāyKa. 39. 22; 3 smallness, minuteness, atomic size (सरमाम्) तां विभेद घनपीवरकायां वायुसूनुरणुभावगुणेन RāmC. 16. 55; तत्राणिमा अणुभावः यतः शिलामपि प्रविशति Sāṁkhya-TaKau. 344. 2 (*on* 23); स एव (अर्थः) चेदणुभावेनापि वर्तते, कथं तदानीं प्रत्यक्षो भवेत् NyāyKu. 145. 19.

**अणुभावापादक** (aṇubhāvāpādaka) *adj.* producing limited powers (in the individual soul) इदमाणवमलं कर्तृ अपरिमितस्य प्रमातुः अणुभावापादकं मलम् Bhāsk. ii. 249. 11 (*on* iii. 2. 5)

**अणुभावाभिन्नत्व** (aṇubhāvābhinna-tva) *n.* identity with (*lit.* non-distinction from) the atomic nature एकस्याप्यणुभावोपहितस्यैवोपादानता (ब्रह्मणः), न तु स्थूलरूपेण विकृतस्येति ज्ञापनायाणुभावाभिन्नत्वेन धानानिर्देशः LaCandr. 838. 22.

**अणुभावोपहित** (aṇubhāvopahita) *adj.* conditioned by the state of being atomic (in size) एकस्याप्यणुभावोपहितस्यैवोपादानता (ब्रह्मणः) LaCandr. 837. 43.

**अणुभिन्न** (aṇu-bhinna) *adj.* different from or other than an atom तदेवं षड्मी पदार्थाः … । तेषु चाणुभिन्नानि पञ्च द्रव्याण्यस्तिकाया इत्याख्यायन्ते GoviBh. 134. 3 (*on* ii. 2. 33)

**अणुभूत** (aṇu-bhūta) *adj.* which has become minute in size अथवा जीवो दहर इति अल्पपरिमाणत्वात् तस्याणुभूतेऽस्मिन् (दहरपुंडरीके) संभवात्, न व्यापी परमेश्वरो दहरः BrahmSūBh.(S'ri.) i. 432. 1 (*on* i. 3. 13)

**अणुभेद** (aṇu-bheda) *m.* (Trika) distinction (of body) from the individual soul (= *aṇu*) विग्रहः स्वाणुभेदाच्च द्विधा भिन्नोऽप्यनेकधा MāliniT. 12. 12.

**अणुभेदपर** (aṇubheda-para) *adj.* purporting to indicate varieties of ignorance (अनादिमलसंछन्नो मायाकर्मावृतो विभुः) अत्र मलमायाशब्दावणुभेदपरौ LalitāSaBh. 96. 3 (*on* 129)

**अणुभ्रू** (aṇu-bhrū) *adj.* having thin eye-brows क्व कीदृक् शस्यते रेखा तवाणुभ्रू(? भ्रु) सुविभ्रमे MahāP. 12. 220.

**अणुम्** (aṇum) *adv.* slightly सर्वे स्वस्वस्थानविशेषादणुमुत्थाय GopāKe-Can. 77. 5.

**अणुमण्डल** (aṇu-maṇḍala) *n.* group of individual souls अणुमण्डलस्य भवतानुगृह्णता क्रियते सुरेश सदृशत्वमात्मनः HarVi. 6. 109; 6. 65.

**अणुमण्डली** (aṇu-maṇḍalī) *f.* group of individual souls अणुमण्डलीमनुजिघृक्षतो विभोस्तरणेरिवाकलुषतां प्रभा गता HarVi. 6. 148.

**अणुमत्स्य** (aṇu-matsya) *m.* a small fish सदा सेवितैर्वास्तुकैश्चाणुमत्स्यैः (कफस्य प्रकोपः) HāriS. i. 5. 62.

**अणुमध्यबीज** (aṇumadhyavīja) *n.* name of a hymn [PW]

**अणुमध्या** (aṇu-madhyā) *adj.* (*f.*) having a thin waist महतोऽपि महीयांसमणीयांसमणोरपि। त्वत्प्रतीकं विदुर्नूनमणुमध्ये नगस्तनि AlaṅkāSe. 13.10 (16); SṛṅgāSar. 106.

**अणुमत्** (aṇu-ma(n)t) *adj.* an epithet of S'iva स्रुवेण जुहुयाद्विद्वान् शिवायाणुमते मनाक् MṛgendraT. ii. 7.49 (comm. अणुमत इति हृदादिपरिवारयुक्ताय)

**अणुमनःसंयोग** (aṇumanaḥ-saṃyoga) *m.* contact or conjunction with mind which is atomic (in dimension) येऽप्यजं संयोगं नेच्छन्ति तेषामप्यणुमनःसंयोगोपपत्तेरस्ति संबन्धः NyāyVār. 470.19 (*on* iv. 1.21); द्वितीये अणुमनःसंयोगेऽपि स्वावच्छिन्ने अधिकदेशे च (असमवायिकारणं विमुकार्ये) जन्येत्रियामकाभावात् TattvCin. i(1). 765.1.

**अणुमनोगुणत्व** (aṇumanoguṇa-tva) *n.* characteristic of being a quality of the mind which is atomic भूजलतेजोवायुगुणानां गुणिना सह ग्रहणम्, शब्दस्य न तथेति न तद्गुणता। अणुमनोगुणत्वमशक्यम् NayaVi. 205.4 (*on* i. 1.5)

**अणुमात्र** (aṇu-mātra) *adj.* **A i** very small or minute (in size), tiny (*lit.* atomic in size) तमाचष्ट बृहस्पतेः। अणुमात्रेण वपुषा पद्मतन्त्वाश्रितं प्रभुम् MahāBhā. v. 16.12; SūktiRa. 196.19; अङ्कुरावस्थायामणुमात्रस्य महावृक्षावस्थायां च महतो विकारित्वं विकारित्वादनित्यत्वं च प्रसज्येत NyāySu.(Ja.) 416A.6 (*on* ii. 2.10); माधुर्यं गुडपिण्डे यत्तत्तस्यांशकेऽणुमात्रेऽपि PraboSu. 158; **A ii** of the size of a single atom, having atomic dimension सर्वं हि क्षणिकं कर्म गमनमात्रसमुत्पन्नं स्वाश्रयस्योर्ध्वमधस्तिर्यग्वाप्यणुमात्रैः प्रदेशैः संयोगविभागान् करोति PadārthaSaṃ. 292.12; NyāyVi. 2.87; यदा ह्यणुमात्र आत्मा भवति तदा यावानेव प्रदेशविशेषस्तेनाधिष्ठितः तन्मात्रगतानामेव सुखदुःखादीनामुपलब्धिः(ब्धि ?) प्राप्नोति TantrVā. 378.24 (*on* ii. 1.5); KalyāKā. 7.5; उपर्यधःपार्श्वस्थाः पडपि परमाणवः समानदेशा इति प्रथिमानुपपत्तेरणुमात्रः पिण्डः प्रसज्येत Bhām. 370.20 (*on* ii. 1.29); S'rutaPra. ii. 159.8 (*on* i. 4.22); आत्मा विभुः स्यादथवाणुमात्रः संयोगिता नोभयथापि युक्ता S'aṅkaDigVi.(Mā.) 8.97; **B** small in measure or degree, very little, slight तस्माचारित्रसंपन्नो ब्रह्मचर्यमिदं चर। अणुमात्रेष्ववद्येषु भयदर्शी दृढव्रतः Saund. 13.20; अणुमात्रेऽपि वैधर्म्ये जायमानेऽपि पश्चितः। असंगता सदा नास्ति GauḍKā. 4.97; SarvaVeSāSaṃ. 462; तस्मादणुमात्रमपि विशेषमनाश्रित्य न स्वत एव प्रियशिरस्त्वादि ब्रह्मण उपपद्यते BrahmSūBh.(S'aṅ.) 62.12 (*on* i. 1.19); 3.4 (*on* i. 1.0); ChāndoUBh. 77.18 (*on* i. 12.5); अणुमात्रमपि अविकलानुत्तरस्वरूपापरिज्ञानमेव चित्तवृत्तीनां वैषम्यम् ParāTri. 40.11; BṛĀraUBhVā. iii. 3.80; अतोऽणुमात्रेऽपि ज्ञाने (अंशे) नाज्ञानं ते किंचित्स्यात् IṣṭaSi. 318.21; 127.9; आदेया(?यां)शे नाणुमात्रोऽपि भेदः SaṃkṣeS'ā. 1.161 (i. 131.22); Stotrā. 13.9; नास्ति पुण्यं चाणुमात्रं नरके परिपच्यताम् PadmP. iii. 16.19; GaṇeP. ii. 45.28; S'ivaP. v. 23.59 (433A.16); तस्मात् प्रकाशः प्रकाश एव, अणुमात्रमपि न रूपान्तरमस्यास्ति PratyabhiVi. i. 211.3 (*on* i. 5.4); S'aṅkaDigVi.(Mā.) 3.74; अणुमात्रमपि नात्र मया मिथ्या वचः कथ्यते Mukundā. 37 (4); **C** very minute (for perception), imperceptible, subtle यदा चाणुकल्पा ध्वनयस्तदा न तैस्तादृक्कार्यनिर्माणं संभवति यत्रानापदवर्णरूपेण क्रमशोऽभिव्यक्तिस्तेनाणुमात्रस्य शब्दस्य ग्रहणं स्यात् NyāyRa. 884.20 (*on* 7.136); **D** very small (in importance), insignificant योषिता स्वातन्त्र्येण ··· भर्त्राननुज्ञया किंचिदणुमात्रमपि न कार्यं कार्यम् ManvaVi. 685.25 (*on* 5.147)

**अणुमात्र** (aṇu-mātra) *n.* (sometimes *m.*) **1 A** a small part or particle, a bit, an iota त्रीणि रूपाणीत्येव सत्यम्, नाणुमात्रमपि रूपत्रयव्यतिरेकेण सत्यमस्ति ChāndoUBh. 358.6 (*on* vi. 4.1); KāṭhUBh. 156.13 (*on* 4.11); KhaṇḍanKhā. 1333.24; PrakaVi. 568.6; शुक्तित्वस्यावयवसंघातविशेषवृत्तित्वाभावादणुमात्रेऽपि शुक्तित्वं पुष्कलम् S'rutaPra. iB. 33.15 (*on* i. 1.1); अपि चैकैकं (वस्तु) सर्वमोहजं चेत्–नैकमोहक्षयादेकोऽपि मोहजोऽणुमात्रोऽपि नश्येत्, तद्धेतुसर्वमोहाक्षयात् IṣṭaSi. 339.1; लेशः उपपदं गन्धः अनुबन्धः ईषत्करः इति पञ्च लेशस्य, अणुमात्रस्य च (नामानि) comm. *on* TrikāS'e. iii. 2.9; **1 B** atoms in general अणुमात्रमिति वक्तव्ये समुदायग्रहणमेको महानिति प्रत्यक्षप्रत्ययविरोधपरिहारार्थम् NyāySu.(Ja.) 389B.1 (*on* ii. 2.7); पीलुः··· । अणुमात्रेऽपि Vis'vaLoK. 335.34; **2** a small measure or degree वेदोक्तादणुमात्रेऽपि विपरीतं तु यद्भवेत्। तादृशं वा स्वतन्त्रं चेदुभयं मूल्वतो मृषा AṇuBh. 137.20 (*on* ii. 2.37); **3** nescience alone तत्राणुर्नामाज्ञानं तच्च द्विविधम् ··· अणुमात्रेण बद्धः (पशुः) शुद्धः SetuBa. 250.26.

**अणुमात्रक** (aṇumātra-ka) *adj.* **i** of the duration of a quarter-mora अणुमात्रक इत्येके स्वरमन्यं प्रचक्षते KauhaSi. 9; **ii** of the size of an atom, of very minute size षट्केन युगपद्योगात्परमाणोः षडंशता। षण्णां समानदेशत्वात्पिण्डः स्यादणुमात्रकः Viṃśa. 12; SarvaSiSaṃ. 4(1).13; **iii** very little कथ्यतां गुह्यकाधीश किंचिदप्यणुमात्रकम् PadmP.(Ra.) 70.88; यत्किंचित्कुरुते कर्म श्रद्धयाप्यणुमात्रकम् BṛNāraP. 4.10; Stotrā. 12.18; दानं पात्रे प्रदातव्यं नापात्रेऽप्यणुमात्रकम् SaurP. 10.1; शिवद्रव्यापहरणं गुरोरप्यणुमात्रकम् (पापान्येतानि सर्वाणि ब्रह्महत्यासमानि वै) SaurP. 52.56; *m.* or *n.* an atom सूक्ष्मः पुंस्यणुमात्रके Vis'vaLoK. 247.38.

**अणुमात्रकपिण्ड** (aṇumātraka-piṇḍa) *m.* substance of the size of an atom न चैतदस्ति अणुमात्रकपिण्डप्रतिभासाभावात् DharmoPra. 43.6.

**अणुमात्रकाल** (aṇumātra-kāla) *m.* very short time साधवः ··· अणुमात्रकालमपि कल्पसहस्रं मन्वानाः GītāBh.(Ra.) 240.3 (*on* 4.8)

**अणुमात्रत्व** (aṇumātra-tva) *n.* the state of being of the size of an atom जीवावयवानां त्वमूर्तत्वात् सर्वेषां समानदेशत्वाविघातानित्यमणुमात्रत्वप्रसङ्गः स्यात् TantrVā. 38.8 (*on* ii. 1.5); प्रथिमानुपपत्तेरणुमात्रत्वप्रसङ्गः BrahmSūBh.(S'aṅ.) 338.3 (*on* ii. 1.29); 370.4 (*on* ii. 2.12); पिण्डस्याणुमात्रत्वप्रसङ्ग इति परोक्तमनुवदति TātpaT.(Vā.) 651.11 (*on* iv. 2.24); SarvaDaKau. 24.7.

**अणुमात्रदर्शन** (aṇumātra-darśana) *n.* observation of the (first) small part (of the sun when it rises) अणुमात्रदर्शनात्प्राग्विभागः PañcSi. 15.12.

**अणुमात्रदृश्** (aṇumātra-dṛś) *f.* the knowledge of a very small part (of the object) मेयांशस्यस्तदंशश्चेत्फलं स्यादणुमात्रदृक् IṣṭaSi. 310.21.

**अणुमात्रदेश** (aṇumātra-deśa) *adj.* (the effort) arising from a space of atomic size एवं त्रिशरीरक्रियाचिकीर्षाजन्यादणुमात्रदेशादपि प्रयत्नाद्विशतिक्रिया युगपदुत्पद्यन्ते TattvCin. i(1). 782.13.

**अणुमात्रदेशता** (aṇumātradeśa-tā) *f.* the state of having a space of the dimension of an atom only अन्त्ये तवापि सुखादेरणुमात्रदेशतापत्तिः TattvCin. i(1). 765.2; अव्यवहितसमवायिकारणनियमादेव ··· अणुमात्रदेशता दुर्वारैव AdvaiSi. 853.10.

**अणुमात्रप्रमाण** (aṇumātra-pramāṇa) *n.* the measure of a mere atom (लिङ्गम्) अणुमात्रप्रमाणेन प्रत्यहं समवर्धत SkandP. iii(2). 27.28.

**अणुमात्रभेद** (aṇumātra-bheda) *m.* little or minute difference (*lit.* of the demension or size of an atom) यदा कदा वापि विपश्चिदेष ब्रह्मण्यनन्तेऽप्यणुमात्रभेदम्। पश्यत्यथामुष्य भयं तदैव ViveCū. 332.

**अणुमात्रवृत्तित्व** (aṇumātravṛtti-tva) *n.* the state of existing in a mere atom ननु मनो विभु ··· अणुत्वे हि सुखदुःखादेरणुमात्रवृत्तित्वं स्यात् SarvaDaKau. 23.21.

**अणुमात्रशब्दांश** (aṇumātra-śabdāṃśa) *m.* a very small or minute (i. e. imperceptible) part of a sound न च कायन्तरारम्भस्तैस्ताद्रुगुपपद्यते। तेनाणुमात्रशब्दांशगृहीतिः केवला भवेत् S'lokaVār. 7.136 (884.4)

**अणुमात्रशेषा** (aṇumātra-śeṣā) *adj.* (*f.*) having a very little part left behind (*lit.* remaining) उद्बुद्धमेकमपि तेषु किल व्यनक्ति संसारमोहरजनीमणुमात्रशेषाम् NīlaVi. 117.12.

**अणुमात्रा** (aṇu-mātrā) *f.* a quarter-mora (i. e. one-fourth of a mora or time required for a short vowel) पूर्वाभिरणुमात्राभिः कण्ठ्यं संसेव्यतेऽक्षरम् AVPari. 47(2).7; द्वियम एके द्वियमपरे ता अणुमात्राः TaiPrāti. 19.3; व्यञ्जनमर्धमात्रा, तदर्धमणु, परमाण्वर्धाणुमात्रा VājaPrāti. 1.61; अभिनिहित°···"स्वरितोदयानामणुमात्रा निपाता CaturA.(Sau.) 3.65; अर्धमात्रा तु पूर्वस्य रज्यते त्वणुमात्रया NāraSi. ii. 4.6; तस्य(रङ्गस्य)मात्रा तु हृदये अणुमात्रा तु मूर्धनि LomS'i. 1.7.

**अणुमात्राक्षर** (aṇumātrākṣara) *n.* speech sound uttered in one-fourth of a mora घ्राणादनुप्रयातेन श्वासेनैकेन जन्तवः। हन्यन्ते शतशो ब्रह्मन्नणुमात्राक्षरवादिना ṢaḍDarSa.(Rā.) 36.

**अणुमात्रात्मक** (aṇumātrātma-ka) *adj.* (body) of a small size or dimension अणुमात्रात्मकं देहम् BhaviP. 15A.1 (i. 4.46)

**अणुमात्रिक** (aṇumātr-ika) *adj.* [*f.* -ā] **i** of the length of one-fourth mora चतसृणां विवृत्तीनामन्तरं मात्रिकं भवेत्। अर्धमात्रिकमन्येषामन्येषामणुमात्रिकम् NāraS'i. ii. 4.3; कम्पेषु प्रथमः स्वारोऽणुमात्रिक इष्यते KauhaS'i. 18; व्यञ्जनं त्वणुमात्रिकम् KauhaS'i. 74; **ii** of a minute size, of the size of an atom (दुर्योधनः) उवाच भीष्मम् ··· नहीं न दद्याद(?म)णुमात्रिकान्(?म)पि MahāBhā. iv. App. 60.44 (16); यदाणुमात्रिको भूत्वा बीजं स्थास्नु चरिष्णु च। समाविशति संसृष्टस्तदा मूर्तिं विमुञ्चति ManuSm. 1.56 (ManvaMu. अणवो मात्रा पुर्यष्टकरूपा यस्य सोऽणुमात्रिकः)

**अणुमार्ग** (aṇu-mārga) *adj.* having a very small opening or passage (in case of surgical operation) नष्टं कथंचिदणुमार्गमुदीरितेषु स्थानेषु शल्यमचिरेण गतिं करोति BhāvPra.(Bhā.) 8.(48?49).7 (comm. अणुमार्गगत पत्राद्युदयमानम्)

**अणुमिश्र** (aṇu-miśra) *adj.* mixed with particles (of parched barley grains) पुरोडाशपिण्डानणुमिश्रान् ··· उपास्यन्ति MānSS. 87.19.

**अणुमुख** (aṇu-mukha) *adj.* [*f.* -ī] **i** with a very small or minute opening (a wound or sore) छिद्रैरणुमुखैर्वस्तु चितं यस्य समन्ततः। वातशोणितजो व्याधिर्विज्ञेयः शतपोनकः SuśruS. ii. 14.12; AṣṭāHṛ. vi. 28.12; (व्रणाः) क्षीणमांसानां च सर्वतोगतयस्त्वणुमुखा मांसबुद्बुदवन्तः AṣṭāSaṁ. ii. 290.14 (6.29); RugVi. 48.9; **ii** having a very small mouth (जलायुका) गोवृषणवदधोभागे द्विधाभूताकृतिरणुमुखी गोचन्दनेति SuśruS. i. 13.11; **iii** beginning with a small measure आरेभे च व्ययमणुमुखं बाणधारावलीना(? नां) प्रावृड्व्यक्तातिशयविषमं मेघवन्मेघनादः RāmC. 30.82.

**अणुमुष्टिक** (aṇumuṣṭi-ka) *m.* a kind of shrub possessing medicinal properties (commonly called *Bishdori*) विषमुष्टिः…अणुमुष्टिकः RājNi. 338.11.

**अणुमेहन** (aṇu-mehana) *adj.* (an elephant) having a small penis (शुद्धः संजायते जात्या मृगनामा मतङ्गजः) ह्रस्वरोमाणुमेहनः Hastyāyur. 418.4 (3.8)

**अणुरजःपथा** (aṇu-rajaḥpathā) *adj.* [*f.* -ā] (a woman) with a very narrow path of mentrual discharge स्त्रीव्यवायनिवृत्तस्य सहसा भजतोऽथ वा। दोषाध्युषितसंकीर्णमलिनाणुरजःपथाम्।… दोषा दुष्टा गता गुह्यं त्रयोविंशतिमामयान्। जनयन्ति AṣṭāSaṁ. ii. 319.15 (6.38) (F.N. अणुः सूक्ष्मः रजोमार्गः यस्यास्तथाविधां स्त्रियम्)

**अणुरन्ध्र** (aṇu-randhra) *n.* small hole, narrow passage आधिभौतिकदेहोऽहमिति यस्य मतिभ्रमः। तस्यासावणुरन्ध्रेण गन्तुं शक्नोति नानघ YogVā. iii. 40.8.

**अणुराजि** (aṇu-rāji) *f.* a mark on sword हरकस्तरवारिः स्त्री पुलकास्त्वणुराजयः (v. l. पुलाकस्त्व°) NāmaMāli. 514; Vaij. 117.163.

**अणुरूप** (aṇu-rūpa) *adj.* [*f.* -ā] **1** possessing the form of an atom, having a very small size or form जीवा ज्ञानवन्तोऽणुरूपाः कर्तारो योगफलभोक्तार आ मुक्तेः PārāSū. 25.29; गौरि तेऽयं सुतः … अणुरूपः स्थूलरूपः GaṇeP. ii. 85.12; ii. 97.43; तत्राणुरूपोऽर्थः सर्वथा घटते SyādvāMañ. 16 (206); कालस्तु चिरक्षिप्रभूतादिव्यवहारहेतुरणुरूपो द्रव्यविशेषः VedāntKau. 204.2 (*on* ii. 2.33); कालोऽभूद्भवतिभविष्यतीतिव्यवहारहेतुरप्यणुरूपः NyāySu.(Ja.) 411B.3 (*on* ii. 2.10); वागादयश्चाणुरूपा नित्याः AṇuBh. 162.11 (*on* ii. 4.14); कैतस्य राज्ञः सुमहच्चरित्रं क्वैषा पुनर्मे धिषणाणुरूपा HammīMaKā. 1.11; (नासीत्) व्योमकारणमणुरूपम् S'aṅkaVi.(Ā.) 30.8; अणुरूपे तस्मिन् किंचिदवच्छेदेन तिरोधानं किंचिदवच्छेदेन प्रकाश इति कल्पयितुमशक्यत्वात् S'ivārkaMaDī. ii. 481.27; (*on* iv. 4.1); को हि सिंहार्भकं सत्रेऽणुरूपमपि लङ्घयेत् PrabhāC. 30.3; *m.* **1** name of S'iva (देवं महेश्वरं तुष्टाव) नमः स्थूलाय सूक्ष्माय अणुरूपाय वै नमः SkandP. iii(2). 4.45; **2** name of Viṣṇu (विष्णोर्नामसहस्रं शृणु) अणुरूपो बृहद्रूपः SkandP. v(1). 63.149.

**अणुरूपतस्** (aṇurūpa-tas) *adv.* in a very minute or subtle form धरित्री सर्वबीजानाम् …। धत्तेऽङ्कुराणि …। कालकर्मेच्छया विष्णोः स्वाश्रितान्यणुरूपतः BṛBrahmaS. i. 13.91.

**अणुरूपता** (aṇurūpa-tā) *f.* the state of being of very minute or atomic form नावयव्यात्मता तेषाम् (महाभूतानाम्) नापि युक्ताणुरूपता TattvSaṁ. 1889; जीवानामणुरूपतया स्वाभाविकांशाभावेन काल्पनिकांशस्यैव वक्तव्यत्वात् AdvaiSi. 745.14.

**अणुरूपत्व** (aṇurūpa-tva) *n.* the state of being of the form of an atom अर्थसारूप्यं च यत् व्यवस्थाकारणमुक्तम्। तदसिद्धम्। अणुरूपत्वाच्चार्थस्य PrakaPañ. 143.9.

**अणुरूपिन्** (aṇu-rūpin) *adj.* [*f.* -iṇī] of very subtle or minute size अमा नाम कलेन्दोर्या वसत्यर्केऽणुरूपिणी BṛDharmaP. i. 20.50; तेषां निखातैर्ध्रुवनुत्तमैर्गुणैः सतां प्रपूर्णानि मनांस्यहो तथा। यथो(? था)त्र केषामपि तेषु तेऽध्युनावकाशमायान्त्यणुरूपिणोऽपि न Gurvā. 342.

**अणुरेणु** (aṇu-reṇu) *m. f.* minute dust (as seen in sun-beams) [MW]

**अणुरेणुजाल** (aṇureṇu-jāla) *n.* aggregate of atomic dust [MW]

**अणुरेवती** (aṇu-revatī) *f.* a medicinal plant *Croton polyandrum* (yielding pungent oil) दन्ती … उदुम्बरदला चैव तरुणी चाणुरेवती RājNi. 53.19; चित्रा दन्ती निकुम्भः स्यादुपचित्रामकूलकः (v. l. °त्राणुरेवती) ParyāMu. 15.9.

**अणुलक्षण** (aṇu-lakṣaṇa) *adj.* [*f.* -ā] of the nature of an atom न घटादितया सिद्धः सोऽर्थितापरिपूर्वकः। न चेश्वरोऽनीश्वरो वा प्रकृतोऽत्राणुलक्षणः ĪśvaSi.(U.) 2.35; (पृथिवी) नित्या स्यादणुलक्षणा BhāṣāPa. 36.

**अणुवंशक** (aṇuvaṁśa-ka) *adj.* **1** of a family of low birth (शत्रुभिः) संक्षिप्तैरणुवंशकैर्मृगसमं प्रायः समाचर्यते YaśasCam. i. 494.2 (comm. जातिकुलहीनैः); **2** having a thin back-bone, YaśasCam. i. 494.2 (comm. अविस्तीर्णपृथु(? ष्ठ ?)प्रदेशैः)

**अणुवचन** (aṇu-vacana) *n.* statement that (something) is atomic स्थूलार्थासंभवे तु स्यान्नैव वृक्षादिदर्शनम्। अतीन्द्रियतयाणूनां न चाणुवचनं भवेत् TattvSaṁ. 562.

**अणुवत्** (aṇu-vat) *adv.* like an atom गतियोगेऽप्याद्यकारणताहानिरणुवत् SāṁkhyaPraSū. 6.37; 1.74; 6.35; यदनित्यं तु तन्मूर्तमणुवद् बुद्धिवत्खवत् S'lokaVār. 5(4). 128 (386.9); न च तदणुवत्संमतं तद्वदेतत् SaṁkṣeS'ā. 2.71 (ii. 44.5); मूर्धन्यर्पितमणुवत्सहस्रमूर्ध्नो भूगोलं सगिरिसरित्समुद्रसत्त्वम् DevīBhāP. viii. 21.5.

**अणुवर्ग** (aṇu-varga) *m.* group of individual souls जय जय जनिमार्गलग्नाणुवर्गापवर्गप्रदे NīlaVi. 56.8.

**अणुवर्ण** (aṇu-varṇa) *m.* letter or sound of a basic mantra (in Tantra) नादः शिवे क्षादिकपश्चिमानि शेषेषु बीजान्यथवाणुवर्णैः TantrSa. 5.51 (comm. अणुवर्णैः पञ्चाक्षराक्षरैः, स्वमूलाक्षरैः)

**अणुवाचक** (aṇu-vācaka) *adj.* (a letter) expressive of the individual soul यावन्तः कीर्तिता भेदैः शंभुशक्त्यणुवाचकाः MālinīT. 8.47.

**अणुवातेरित** (aṇuvāterita) *adj.* shaken by a gentle breeze अंशुधारय इवाणुवातेरितः MaiU. 6.35.

**अणुवाद** (aṇu-vāda) *m.* theory of atoms, (that the world is produced from the *paramāṇus* through the process of forming *dvyaṇuka* etc.) 'अणोरणीयान्' इत्यणुवादस्य…लिङ्गमापाततो भाति PrakaVi. 381.23; अत्र न किंचनेति शून्यस्वभाववादावणिम्न इत्यदृश्यमानाणुनिर्देशादणुवादश्च भान्ति दार्ष्टान्तिका इति VedāntKa. 228.11 (*on* i. 4.28)

**अणुवादनिराकरण** (aṇuvāda-nirākaraṇa) *n.* refutation of the theory of atomism समवायभ्युपगमाच्च – तदभाव इति – प्रकृतेनाणुवादनिराकरणेन संबध्यते BrahmSūBh.(S'aṅ.) 371.1 (*on* ii. 2.13)

**अणुवादिन्** (aṇuvād-in) *adj.* (one) who believes in the theory of atoms (as the material cause of the world) तथा अणुवादिनोऽप्यणुरण्वन्तरेण संयुज्यमानो निरवयवत्वाद्यदि कार्त्स्न्येन संयुज्येत BrahmSūBh.(S'aṅ.) 338.1 (*on* ii. 1.29); 364.2 (*on* ii. 2.10); सर्वगतत्वश्रुतिविरोधमाशङ्क्याणुवादी परमात्मविषयताभिधानेन परिहरति PrakaVi. 619.21; उर्वीनगाद्याः। सूक्ष्मैरारब्धा इति यदणुवाद्युक्तमेतदुरुक्तम् NayaMañ. II. ii. 3.5.

**अणुवाम** (aṇu-vāma) *m.* name of one of the three types of the S'āktas or S'akti worshippers (also called आणव) शाक्ताश्च त्रिविधाः। महावामा मध्यवामा अणुवामाश्चेति। एत एव क्वचिच्छाक्तशांभवाणवशब्दैरुच्यन्ते NyāySu.(Ja.) 423A.4 (*on* ii. 2.12)

**अणुविनिःसृत** (aṇu-vinissṛta) *adj.* discharged or released from an atom उदकं शोषयामास यत्तेजोऽणुविनिःसृतम् VāmaP. 43.33.

**अणुवीक्षण** (aṇu-vīkṣaṇa) *n.* **1** minute observation, observation of very minute parts [APTE]; **2** an instrument like the microscope enabling one to discern the smallest objects [APTE]

**अणुवीर्य** (aṇu-vīrya) *m.* (an ironical) name of Ativīrya (*lit.* of negligible valour) पश्य स्वो(? श्वो) निहतं पापमणुवीर्यं मया रणे PadmP.(Ra.) 37.69.

**अणुवेददारिन्** (aṇuveda-dārin) *adj.* having a crack like a thin grass-blade called Veda असंधिभग्नं पुनर्द्वादशविधम्। अणुवेददारि वेदनावच्च दारितम् AṣṭāSaṁ. ii. 301.15 (6.32)

**अणुवेदन** (aṇu-vedana) *adj.* causing little or slight pain गुल्मः … अनियतविपुलाणुवेदनश्च भवति चलत्वाद्वायोः CaraS. ii. 3.7 (1922 Ed.)

**अणुव्यतिरिक्त** (aṇu-vyatirikta) *adj.* different from the atom पुद्गलो रूपरसगंधस्पर्शवद्द्रव्यम्। … परमाणुरूपं संघातरूपं च। कालः …। आकाशः …। एतेभ्वणुव्यतिरिक्तान्यस्तिकायशब्दानि NyāySu.(Ja.) 411B.4 (*on* ii. 2.10); पक्षाव्यापकविपर्ययः, यथा-क्षित्यादिकं सकर्तृकं कार्यत्वादित्यत्राणुव्यतिरिक्तत्वम् TattvCin ii(1). 399.2; ii(1). 399.3.

**अणुव्यतिरेक** (aṇu-vyatireka) *m.* elimination of the atom अणुव्यतिरेकेणाणुसङ्घातवादः VedāntKa. 101.10 (*on* i. 1.5)

**अणुव्यपदेश** (aṇu-vyapadeśa) *m.* designation as *aṇu* तथा च बुद्ध्याद्युपाधिकृतमस्य जीवत्वमिति बुद्धेरन्तःकरणस्याणुतया सोऽप्यणुव्यपदेशभाग्भवति नभ इव करकोपहितं करकपरिमाणम् Bhām. 490.12 (*on* ii. 3.29); ब्रह्मणश्च सूक्ष्मत्वाभिप्रायेणाणुव्यपदेशात् SiddhāBi. 84.2.

**अणुव्यवहार** (aṇu-vyavahāra) *m.* use of the word *aṇu* (atom), calling (something) *aṇu* अनित्यमणुपरिमाणं द्व्यणुक एवेत्युक्तम् कुवलयामलकबिल्वादिषु परस्परोपक्षयाणुव्यवहारदर्शनात् NyāyKa. 134.2; अणुव्यवहारस्तु तेषु भाक्तः Upask. 298.9 (*on* vii. 1.11); अणुव्यवहारश्च अपकृष्टपरिमाणनिबन्धनो महत्यपि महत्तमादणुव्यवहारात् PadārthaTaNi. 15.1–3 (L1)

**अतिक्रान्तबाल्य** (atikrānta-bālya) *adj.* whose childhood is over चारपुरुषैरतिक्रान्तबाल्यैः ··· हिरण्यानि तत्त्वेन तत्र निक्षेपयित्वा तैरेव ··· सः निक्षेपधारी प्राड्विवाकेन चारपुरुषनिक्षिप्तसुवर्णं याच्यः ManvaMu. 322. 22 (*on* 8. 182)

**अतिक्रान्तभय** (atikrānta-bhaya) *adj.* who has overcome fear अतिक्रान्तभये तत्र जातहासेऽखिले जने। आययौ श्रुतवृत्तान्ता तत्र रूपणिकाथ सा KathāSaSāg. ii. 4. 186.

**अतिक्रान्तभव** (atikrānta-bhava) *m.* previous birth नातिक्रान्तभवे त्वासीद्रक्षाविधा प्रजापतेः BṛĀraUBhVā. i. 4. 89; इतो भवात्तृतीयस्मिन्नतिक्रान्तभवे प्रभोः। पिताऽभवद् वज्रसेनः TriṣaS'aPuC. i. 3. 322.

**अतिक्रान्तभावनीय** (atikrānta-bhāvanīya) *m.* fourth (and the highest) of the four kinds of Yogins in the *saṃprajñātasamādhi* (who has exceeded all objects of contemplation) चत्वारः खल्वमी योगिनः प्रथमकल्पिको मधुभूमिकः प्रज्ञाज्योतिरतिक्रान्तभावनीयश्चेति ··· चतुर्थो यस्त्वतिक्रान्तभावनीयः YogBh. 174. 6 (*on* 3. 51); संप्रत्यतिक्रान्तभावनीयस्य ध्यायिनश्चतुर्थस्य चित्तावस्थामाह TattvVai. 6. 4 (*on* 1. 2); चत्वारो योगिनो भवन्ति तत्र ··· अतिक्रान्तभावनीयश्चतुर्थः RājMār. 62. 9; संप्रज्ञातयोगिनश्चतुर्भूमिका भवन्ति। तद्यथा प्रथमकल्पिको मधुभूमिकः प्रज्ञाज्योतिरतिक्रान्तभावनीयश्चेति YogSū. 16. 5(1)

**अतिक्रान्तमद्य** (atikrānta-madya) *n.* liquor which is overfermented मन्दकातिक्रान्तमद्यपानात् ··· प्रकुपितो वायुरपानः CaraS. vi. 14. 9 (1941 Ed.)

**अतिक्रान्तमनस्कार** (atikrānta-manaskāra) *m.* one who has transcended mental activity अतिक्रान्तमनस्कारो भ्रूमध्ये चित्तधारणात् AbhidhK. 6. 11 (Sphuṭā जितमनस्कारत्वादतिक्रान्तवादित्यर्थः)

**अतिक्रान्तमर्याद** (atikrānta-maryāda) *adj.* [*f.* –ā] **i** who has violated or transgressed the limits of proper conduct (in general) तानतिक्रान्तमर्यादान्नान्यो संहर्तुमर्हति MahāBhā. viii. 24. 55; xii. 28. 9; तमतिक्रान्तमर्यादमाददानमसांप्रतम्। ऊचुर्महर्षयः सर्वे मरीचिप्रमुखास्तदा HariVaṃ. 5. 8= VāyuP. ii. 1. 113; BrahmP. 4. 35; तमतिक्रान्तमर्यादमवदानसुसंश्रतम्। ऊचुर्महर्षयः सर्वे BrahmāṇḍP. i. 36. 133; एवमतिक्रान्तमर्यादे त्वयि निमित्तमात्रेण पाण्डवक्रोधेन भवितव्यम् VeṇiSaṃ. 1. 256; तमतिक्रान्तमर्यादं प्रजापीडनतत्परम्। ऊचुर्महर्षयः क्रुद्धाः SkandP. vii(1). 336. 79; **ii** (a woman) who has violated the limit (of good behaviour or chastity) अतिक्रान्तमर्यादाया बहुपुरुषसंपर्क उच्यते S'ivārkaMaDī. i. 491. 23 (*on* i. 3. 31)

**अतिक्रान्तमहाध्वन्** (atikrānta-mahādhvan) *adj.* who has traversed a long way अतिक्राममन्ति सहसा तं ग्रन्थिं दुरतिक्रमम्। अतिक्रान्तमहाध्वानो यद्दृभूमिमिवाध्वगाः TriṣaS'aPuC. i. 3. 592.

**अतिक्रान्तमानुष** (atikrānta-mānuṣa) *adj.* which has surpassed human (power) न केवलमतिक्रान्तमानुषेण प्रभावेण आकारेणापि शक्यत एव निश्चेतुम् (राम इति) KundaMā. 3. 14(1)

**अतिक्रान्तयाग** (atikrānta-yāga) *adj.* by whom sacrifices have already been performed यदि यागस्य विनाशित्वादन्येन तत्सम्बन्धिना फलं साध्यमानं यागेन साधितं भवति ततो लाघवादतिक्रान्तयागेनात्मनैव वरं साधयितव्यम्। यद्वा कर्मविनाशोऽयं फलं नः साधयिष्यति TantrVā. 362. 15 (*on* ii. 1. 5); न चातिक्रान्तयागेभ्यः पुरुषेभ्यः फलोद्गतिः TantrVā. 368. 18 (*on* ii. 1. 5)

**अतिक्रान्तयामिनीवृत्तान्त** (atikrāntayāminī-vṛttānta) *m.* incident of the previous night पत्युरतिक्रान्तयामिनीवृत्तान्तमाकर्णयन्तीम् ··· मदिरावतीमद्राक्षीत् (नृपतिः) TilaMañ. 72. 6.

**अतिक्रान्तयुग** (atikrānta-yuga) *adj.* crossing over from one aeon to another मन्वन्तराणां संताने संतानाश्च श्रुतौ स्मृताः। अतिक्रान्तयुगाश्चैव ब्रह्मक्षत्रस्य संभवाः MatsyaP. 273. 63.

**अतिक्रान्तयोगक्षेमा** (atikrānta-yogakṣemā) *adj.* (*f.*) beyond security or welfare (i. e. having no security) अतिक्रान्तयोगक्षेमा रात्रिः PratiYau. 3. 1(95)

**अतिक्रान्तयोगिन्** (atikrāntayog-in) *adj.* (the constellation) the conjunction of which (with the moon) is over (नक्षत्राणि) षड् अनागतयोगीनि स्थितयोगीनि द्वादश। नवातिक्रान्तयोगीनि तथा योगः प्रदृश्यते AVPari. i(5). 7.

**अतिक्रान्तयौवना** (atikrānta-yauvanā) *adj.* (*f.*) (a woman) who is past her youth अतिक्रान्तयौवना वर्षाणां पञ्चपञ्चाशतः पञ्चाशतो वा आर्तवाभावादेव SthānT. 313B. 4.

**अतिक्रान्तरस** (atikrānta-rasa) *adj.* over-ripe, overmatured संपद्विरुद्धं तद्वियादसंजातरसं तु यत्। अतिक्रान्तरसं वापि विपन्नरसमेव वा CaraS. i. 26. 101 (1941 Ed.)

**अतिक्रान्तर्तुलिङ्ग** (atikrāntartu-liṅga) *n.* characteristic of (peculiar to) the previous season अतिक्रान्तर्तुलिङ्गं यत्कुसुमाद्यनुवर्तते। लिङ्गानुवृत्तिं तामाहुः सा ज्ञेया काव्यलोकतः। वर्णासु ग्रीष्मलिङ्गाम्बुजविकासानुवृत्तिः KāvyMī. 109. 6.

**अतिक्रान्तवचन** (atikrānta-vacana) *adj.* expressive of the past event भूतशब्दोऽयमतिक्रान्तवचनः Nyās i. 625. 4 (*on* iii. 2. 84)

**अतिक्रान्तवत्** (atikrānta-va(n)t) *adj.* **Ai** who has erred (who has gone beyond propriety) कालियः — भगवन् अज्ञानादतिक्रान्तवान् सान्तःपुरः शरणागतोऽस्मि BālC. 4. 11(1); **Aii** who has transcended or overcome स यः कश्चित् ··· अतिक्रान्तवानुपाधिधर्मं हृदयाद्यात्मत्वम् BṛĀraUBh. 480. 11 (*on* iii. 9. 26); **Aiii** who has transgressed or violated न सत्यमतिक्रान्तवानसि Bhām. 272. 1 (*on* i. 3. 3); **B** who has crossed over अहन् ··· धावन् भूयसीं भूमिमतिक्रान्तवान् UdaySuKa. 30. 20.

**अतिक्रान्तवयस्** (atikrānta-vayas) *adj.* advanced in age अतिक्रान्तवया राजा मा स्म्रैनं व्यवरोरुधः Rāmā. ii. 1263*(1)

**अतिक्रान्तवयस्त्व** (atikrāntavayas-tva) *n.* advancement in age, agedness तत्र व्यावर्तनकारणानि ··· अतिक्रान्तवयस्त्वम् KāmSū. 258. 8 (5. 1); JayaMa. 258. 22 (*on* 5. 1)

**अतिक्रान्तवर्ण** (atikrānta-varṇa) *m.* sound already pronounced तां च बुद्धिम् ··· अतिक्रान्तवर्णग्रहणरूपां सदसद्वर्णगोचरां केचिद्विचित्रामिच्छन्ति Tātpa-Ṭ.(U.) 468. 15 (*on* 5(10). 111)

**अतिक्रान्तवस्तु** (atikrānta-vastu) *f.* past thing or event कृतमतिक्रान्तवस्तुचिन्तया TilaMañ. 338. 3.

**अतिक्रान्तवाचिन्** (atikrāntavāc-in) *adj.* expressing what is past (i. e. past event) भूतपूर्वशब्दोऽतिक्रान्तवाची Prasā. i. 916. 21.

**अतिक्रान्तवार्ता** (atikrānta-vārtā) *f.* news of what is past or over अतिक्रान्तवार्ताप्रकाशनपुरःसरं पितुरादेशमभिलिखितमीक्षितवान् TilaMañ. 321. 19.

**अतिक्रान्तविग्रह** (atikrānta-vigraha) *m.* past battle or fight अतिक्रान्तविग्रहाश्रिताः कथा न कथयितव्याः PratiYau. 2. 13(19)

**अतिक्रान्तविधिनिषेध** (atikrānta-vidhiniṣedha) *adj.* who is beyond (i. e. who does not observe) injunction or prohibition सत्यासत्यौ व्यवहारे जानन्नपि यो नराधमोऽतिक्रान्तविधिनिषेधः ··· सत्यवचनं न ददाति Aparā. 677. 6 (*on* 2. 77)

**अतिक्रान्तविवाह** (atikrānta-vivāha) *m.* marriage already accomplished यत्त्वस्याः स्वादितिवत् लक्षणायास्तुल्यत्वेऽपि अतिक्रान्तविवाहसंबन्धेनेदानीं सा इति जघन्यायास्तस्या अनौचित्यात् BālamBha. ii. 264. 10 (*on* 2. 145)

**अतिक्रान्तविषय** (atikrānta-viṣaya) *adj.* relating to (the ritual or rite) which is over (i. e. already performed) अत एव च अतिक्रान्तविषयमेतत्कार्यैकत्वाभिधानम् BrahmSūBh.(S'an.) 729. 13 (*on* iv. 1. 16)

**अतिक्रान्तवेतन** (atikrānta-vetana) *adj.* (payment of) whose wages is delayed न कुप्यवेतनी कश्चिन्न चातिक्रान्तवेतनी (v. l. °वेतनः) MahāBhā. iii. 16. 22.

**अतिक्रान्तवेतनिन्** (atikrānta-vetanin) *adj.* payment of whose wages is delayed न कुप्यवेतनी कश्चिन्न चातिक्रान्तवेतनी MahāBhā. iii. 16. 22.

**अतिक्रान्तवेल** (atikrānta-vela) *adj.* who has crossed the (usual) time शिशुमारोऽपि वलीवदनप्रीत्यातिक्रान्तवेलो गृहमागतः Tantrākhyā. 124. 21.

**अतिक्रान्तवेला** (atikrānta-velā) *f.* time beyond limit, late hour तेनोक्तं किमतिक्रान्तवेलायां त्वं समागता SamarāSam. 4. 279.

**अतिक्रान्तवैभव** (atikrānta-vaibhava) *n.* past glory or prowess प्रयत्नरुद्धोऽपि ··· अतिक्रान्तवैभवस्मरणयोनिमन्युः ··· ईक्षणयुगमपूर्यत विस्तारिणा बाष्पनीरेण TilaMañ. 258. 18.

**अतिक्रान्तव्रत** (atikrānta-vrata) *n.* religious vow not done in time इति प्रायश्चित्तान्मानादतिक्रान्तव्रतानुष्ठानं नास्तीति गम्यते NirṇaSi. 19. 20.

**अतिक्रान्तशब्दार्था** (atikrānta-s'abdārthā) *adj.* (*f.*) violating the meaning of the words एवमतिक्रान्तशब्दार्था तन्मतिर्भाति AṇuBh. 31. 3 (*on* i. 1. 11)

**अतिक्रान्तशासना** (atikrānta-s'āsanā) *adj.* (*f.*) who has transgressed the law अतिक्रान्तशासनाश्च प्रजाः सर्वाः स्थिताः संक्लिश्युः DaśKuC. 130. 8.

**अतिक्रान्तशास्त्र** (atikrānta-s'āstra) *adj.* who has transgressed (the rules of) scriptures लुब्धस्य सति धने व्ययमकुर्वाणस्योच्छास्त्रवर्तिनो अतिक्रान्तशास्त्रस्य च राज्ञो धनं न प्रतिगृह्णीयात् Aparā. 184. 8 (*on* 1. 140)

**अतिक्रान्तशास्त्रमर्याद** (atikrānta-s'āstramaryāda) *adj.* who has transgressed the limits (rules) of the scriptures उच्छास्त्रवर्तिनः अतिक्रान्तशास्त्रमर्यादस्य (राज्ञः धनं न प्रतिगृह्णीयात्) ViraMi. 224. 27 (*on* 1. 140)

**अतिक्रान्तशुद्धकाल** (atikrānta-s'uddhakāla) *adj.* (rite) whose

proper time is over तान्यालस्यादिनातिक्रान्तशुद्धकालप्रारम्भविषयाणि NirṇaSi. 38. 21.

**अतिक्रान्तश्राद्ध** (atikrānta-śrāddha) *n.* S'rāddha ceremony for which the proper time is over पूर्वमासे मृतितिथिमुल्लङ्घ्योत्तरमासे मृतितिथौ अतिक्रान्तश्राद्धं प्राप्तकालं च श्राद्धं चेति द्वयं तत्र कार्यम् ViraMi.(Samaya.) 214. 18.

**अतिक्रान्तषोडशवर्ष** (atikrānta-ṣoḍaśavarṣa) *adj.* beyond the age of sixteen, who is more than sixteen years of age इदं चातिक्रान्तषोडशवर्षस्य सप्तदशे वर्षे उपनयनं द्रष्टव्यम् ViraMi. (Saṁskāra.) 350. 4.

**अतिक्रान्तसंवत्सर** (atikrānta-saṁvatsara) *m.* previous year अतः समयादतिक्रान्तसंवत्सरे त्रिकालदर्शी मुनिर्महायशो नाम ⋯ काश्यामुपाययौ TilaMañ. 272. 9; *adj.* [*f.* –ā] which is for a period beyond a year अर्वागपि संवत्सराद्या (वृद्धिः) दीयते साप्यतिक्रान्तसंवत्सरैव ManuBh. ii. 145. 17 (*on* 8. 153)

**अतिक्रान्तसंस्कार** (atikrānta-saṁskāra) *m.* sacrament which is not performed or is neglected पुनःसंस्कारमतिक्रान्तसंस्कारमित्यर्थः ViraMi. (Saṁskāra) 177. 22.

**अतिक्रान्तसप्तति** (atikrānta-saptati) *adj.* who has crossed seventy years of life न शुद्धिरूनदशमे न चातिक्रान्तसप्ततौ AṣṭāSaṁ. i. 157. 25 (1. 29)

**अतिक्रान्तसमुद्रक्षोभ** (atikrānta-samudrakṣobha) *m.* past agitation of the sea देशकालनियमश्च । ⋯ क्वचिदभिन्नदेशतया च । यथा दिवानिशाक्रास्तगमनातिक्रान्तसमुद्रक्षोभयोरिति NyāyPari. 101. 3.

**अतिक्रान्तसमुद्रवृद्धि** (atikrānta-samudravṛddhi) *f.* past high-tide of the sea चन्द्रनभोमध्यस्थितेरतिक्रान्तसमुद्रवृद्धेश्च एककालताभावात् YuktiSneha. 65. 28 (*on* i. 1. 5)

**अतिक्रान्तसंभव** (atikrānta-sambhava) *adj.* whose birth was earlier (by a specific period) ते षष्ट्यातिक्रान्तसंभवम् । ⋯ ददृशुः स्थविरं नरम् KumāCaSaṁ. 12. 27.

**अतिक्रान्तसर्गादि** (atikrānta-sargādi) *adj.* past or earlier creations etc. यथास्य सर्गस्यादौ प्रकर्षगत्या सिद्धस्तथातिक्रान्तसर्गादिष्वपि प्रत्येतव्यः YogBh. 32. 9 (*on* 1. 26)

**अतिक्रान्तसुख** (atikrānta-sukha) *adj.* (times) in which happiness is a thing of the past अतिक्रान्तसुखाः कालाः MahāBhā. i. 119. 6.

**अतिक्रान्तस्थित** (atikrānta-sthita) *adj.* being in the *atikrāntacārī* pose गच्छेत्सललितैः पादैरतिक्रान्तस्थितैः सदा NāṭyaS'ā. 12. 43.

**अतिक्रान्तस्वकाल** (atikrānta-svakāla) *adj.* which is past its proper time असाद्वचनान्नित्यं स्नानं कथंचिदतिक्रान्तस्वकालं महानिशावर्जं रात्रावपि कर्तव्यम् CaturCin. iii(2). 108. 14.

**अतिक्रान्ता** (ati-krāntā) *f.* name of one of the 16 varieties of aerial (*ākāśa*–) *cāris* or steps in a dance (wherein one bent leg is raised up, brought forward and then placed on the ground); आकाशिकीनां चारीणां संप्रवक्ष्यामि लक्षणम् । कुञ्चितं पादमुत्क्षिप्य पुरतः संप्रसारयेत् । उत्क्षिप्य पातयेच्चैनमतिक्रान्ता तु सा स्मृता NāṭyaS'ā. 10. 30 (comm. गन्तव्यातिक्रमादतिक्रान्ता); 10. 11; गुल्फक्षेत्रेऽन्यपादस्योद्वृत्याङ्घ्रिं कुञ्चितं पुरः । किंचित् प्रसार्य चोत्क्षिप्य यथाप्रकृति लोकवत् । चतुस्तालाद्यन्तरेण ततोऽग्रेण निपातयेत् । यत्र चारीमतिक्रान्तां निःशङ्कस्तामकीर्तयत् SaṁgiRa. iv. 290. 7 (7. 944); अग्निजे (आवेगे) धूतिरङ्गानां धूमाकुलितनेत्रता । चार्यातिक्रान्तया चापक्रान्तया चरणं भवेत् SaṁgiRa. iv. 862. 15 (7. 1623); NṛtyaRa. 3. 40; अङ्घ्रेरेकस्य गुल्फे चेदन्यमुद्धृत्य कुञ्चितम् । प्रसार्य पुरतः किंचिदथोत्क्षिप्य निपातयेत् । अग्रे लोकानुसारेण चतुस्तालान्तरादितः । अतिक्रान्ता तदा चारी Nṛtyā. 1017; NṛtyaK. ii. 2. 42.

**अतिक्रान्तातिक्रान्त** (atikrāntātikrānta) *adj.* surpassing those who have surpassed प्रतिष्ठिता वयं देवमनुष्येषु अतिक्रान्तातिक्रान्ताः Divyāva. 29. 6.

**अतिक्रान्ताध्यायद्वय** (atikrāntādhyāya-dvaya) *n.* previous two Adhyāyas (chapters) अतिक्रान्ताध्यायद्वयेन परं ब्रह्म वेदान्ताः प्रतिपादयन्ति S'riBh. 564. 5 (*on* iii. 1. 1)

**अतिक्रान्तानतिक्रान्तविशेष** (atikrāntānatikrānta-viśeṣa) *m.* difference between (a sacrifice) which is over and (a sacrifice) which is not yet over अतिक्रान्तानतिक्रान्तविशेषस्तत्र नास्ति TantrVā. 368. 19 (*on* iii. 1. 5)

**अतिक्रान्तानुकार्य** (atikrāntānukārya) *m.* (dramatic) role of a person of the earlier age नातिक्रान्तानुकार्यस्य रसभावनया कविः । करोति काव्यम् BhāvPra. (S'ā.) 6. 153(7)

**अतिक्रान्ताभिगमन** (atikrāntābhigamana) *n.* movement with the *Atikrāntacārī* style अतिक्रान्ताभिगमने पादमेतत् प्रयोजयेत् ViṣṇuDhaP. iii. 24. 63.

**अतिक्रान्ताभिधेयम्** (atikrāntābhidheyam) *adj.* beyond expression, inexpressible अत्यर्थमतिक्रान्ताभिधेयं प्रियत्वं वाचामगोचरमित्यर्थः S'rutaPraiA. 61. 3 (i. 1. 1)

**अतिक्रान्तार्थ** (atikrāntārtha) *m.* meaning 'surpassing or excelling' अस्य चातिक्रान्तार्थे प्रत्युपसर्जनत्वेऽपि राजकुमारीत्येतदर्थं प्रत्यनुपसर्जनत्वमेव LaS'abdeS'e. i. 530. 16.

**अतिक्रान्तायुक्तकशत** (atikrāntāyuktaka-śata) *n.* hundred past officials (भूपालः स्कन्धावारम्) अतिक्रान्तायुक्तकशतानि च शंसद्भिः ⋯ कटकं जगाम HarṣaC. 286. 7.

**अतिक्रान्तानेकजन्मकृत** (atikrāntānekajanma-kṛta) *adj.* done in several past births यानि चातिक्रान्तानेकजन्मकृतानि तेषां च फलमदत्वा नाशो न युक्तः GitāBh.(S'aṅ.) 395. 16 (*on* 13. 23); 552. 5 (*on* 18. 66)

**अतिक्रान्तार्थविधान** (atikrāntārtha-vidhāna) *n.* injunction of an object which is past न च विधेयान्तरोपादाने सत्यतिक्रान्तार्थविधानमवकल्पते TantrVā. 549. 18 (*on* ii. 2. 26)

**अतिक्रान्तार्थवृत्ति** (atikrāntārtha-vṛtti) *adj.* signifying the meaning 'surpassing or excelling' वृत्तिविषयेऽतिशब्दोऽतिक्रान्तार्थवृत्तिः PadMañ. *on* KāśiVṛ. *on* P. vi. 2. 191.

**अतिक्रान्तालोचन** (atikrāntālocana) *n.* consideration of what has gone before or passed न त्वेतदतिक्रान्तालोचनेन⋯अभिहितम् TantrVā. 628. 6 (*on* ii. 3. 29)

**अतिक्रान्तावधि** (atikrāntāvadhī) *adj.* who has transgressed the (prescribed) time-limit अथेत्यतिक्रान्तावधेः स्वामिनः समागमनानन्तर्यमुच्यते SmṛtiCan. iii. 313. 3.

**अतिक्रान्तावधिक** (atikrāntāvadhi-ka) *adj.* who has transgressed the (prescribed) time-limit तदतिक्रान्तावधिकस्य स्वामिनो नाशनिश्चयविषये द्रष्टव्यम् SmṛtiCan. iii. 313. 6.

**अतिक्रान्तावस्थ** (atikrāntāvastha) *adj.* who has passed the stage (of intoxication) अतिक्रान्तावस्थो गजपतिरिदम् ⋯ जगत्सर्वं हन्तुं समभिलषति क्रोधकलुषः MātaLi. 9. 17.

**अतिक्रान्तावेक्षण** (atikrāntāvekṣaṇa) *n.* consideration of what has gone before (in a book) (i. e. reference to a previous point) पुरस्तादेवं विहितमित्यतिक्रान्तावेक्षणम् ArthS'ā. iii. 246. 1 (15. 1); यत्पूर्वमुक्तं तदतिक्रान्तावेक्षणम् SuśruS. vi. 65. 31; अथ तन्त्रयुक्तयो भवन्ति ⋯ अतिक्रान्तावेक्षणम् ViṣṇuDhaP. iii. 6. 0.

**अतिक्रान्ताशौच** (atikrāntāśauca) *n.* (period of) impurity that has passed अतिक्रान्ताशौचेऽप्ययमेवार्थः स्मृत्यन्तरे दर्शितः Mitā. 334. 34 (*on* 3. 17); एवमुक्तमतिक्रान्ताशौचं मातापितृव्यतिरिक्तसपिण्डविषयम् SmṛtiCan. vi. 54. 13; NirṇaSi. 377. 26; BālamBha. iii. 27. 4 (*on* 3. 14); iii. 59. 7 (*on* 3. 18)

**अतिक्रान्ति** (ati-krānti) *f.* **1** stepping over, going from one step to another प्रजापतिष्पष्ठादह्नः सप्तममहरभ्यत्यक्रामत् । अतिक्रान्तिः एवैषा JaimiBr. 3. 174; 3. 204; **2A** overcoming ननु मृत्योरतिक्रान्तेरुद्गीथज्ञानकर्मणोः । फलस्य संभवात् BṛĀraUBhVā. i. 3. 8; **2B** surpassing समानवीर्यान्वयपौरुषेषु यः करोत्यतिक्रान्तिमसौ तिरस्क्रिया Kirātā. 14. 23; S'abdaRa.(Vā.) 4533; **3** transgression, neglect, omission अतिक्रान्तिरतस्तेषां लोकद्वयविरोधिनी MahāP. 6. 152; S'abdaRaSaK. 151. 12.

**अतिक्रान्तुम्** (atikrān-tum) *inf.* **1** to overcome नाशकत्तानतिक्रान्तुं मृत्युर्ब्रह्मविदो यथा MahāBhā. viii. 33. 9; **2** to transgress, to disobey तामाज्ञां क्षणमप्यहं नातिक्रान्तुमिहेच्छामि MārkP. 23. 90; न हि शक्नोम्यतिक्रान्तुं सत्यमाबाल्यसेवितम् KathāSaSāg. xii. 17. 38; **3** to cross, to overstep नातिक्रान्तुमलं ब्रह्मंस्तदद्यापि महोदधिः ViṣṇuP. v. 38. 10.

**अतिक्रान्तोत्पत्ति** (atikrāntotpatti) *f.* reappearance (of a past thing) or rebirth भूतप्रादुर्भावः अतिक्रान्तोत्पत्तिः SiddhāKau. 417A. 9.

**अतिक्रान्तोपनयनकाल** (atikrāntopanayanakāla) *adj.* whose (prescribed) time for thread-ceremony has elapsed अतिक्रान्तोपनयनकालानां यद्भवति तदाह Aparā. 68. 5 (*on* 1. 38); प्रागुपनयनादिति वदता अतिक्रान्तोपनयनकालस्यापि यावदुपनयनमेते धर्मा भवन्तीत्युक्तं भवति ViraMi.(Saṁskāra.) 328. 11.

**अतिक्रान्तोपवर्णन** (atikrāntopavarṇana) *n.* description or statement of what has already taken place, narrating the past किमिदानीमतिक्रान्तोपवर्णनेन PañcT. 2. 53 (241. 1); किमि(? म)तिक्रान्तोपवर्णनेन AnarghRā. 4. 12 (1)

**अतिक्रान्तोपवर्णित** (atikrāntopavarṇita) *n.* description or statement of the past किमिदानीमि(? म)तिक्रान्तोपवर्णितेन AnarghRā. 4. 12 (1)

**अतिक्रान्तोपवासा** (atikrāntopavāsā) *adj.* (*f.*) wherein the prescribed fasting has been missed, passed without fasting (with reference

to Ekādaśī) विप्लुता केनापि हेतुनातिक्रान्तोपवासा (एकादशी) Aparā. 202.18 (*on* 1.154)

**अतिक्रान्तोपालम्भ** (atikrāntopālambha) *m.* cursing the past किमतिक्रान्तोपालम्भेन Hitopa. 1.126 (1)

**अतिक्राम** (ati-krāma) *m.* name of a group of formulas (TaiS. III. v. 3) अथातिक्रामातीमोक्षैश्चरत्यग्निना देवेन BaudhS'S. i. 242.2; अथातोऽतिक्रामाणामेव…संवत्सरमेतैः क्रमैः क्रमेत BaudhS'S. ii. 187.15.

**अतिक्रामक** (ati-krāmaka) *adj.* exceeding, transgressing [MW]

**अतिक्रामण** (ati-krāmaṇa) *n.* past case, earlier fact (प्रकृतस्य) साधनं प्रदेशोऽतिक्रामणेन सति(? सोऽति)देशः VisnuDhaP. iii. 6.0.

**अतिक्रामत्** (ati-krā́mat) *adj.* [*f.* -ntī] **A i** going across, crossing, stepping over, traversing अ॒ति॒क्राम॑न्तो दु॒रि॒ता प॒दानि॑ AV. xii. 2.28; अ॒ति॒क्रा॒म॒न्तोऽव॑रा॒न्परैभिः AV. xii. 2.29; अपरेणाहवनीयं दक्षिणातिक्रामन् … ब्रह्माणमीक्षते ĀpaS'S. xv. 10.11; मत्स्यबन्धैरेतत्सरःसमीपेन अतिक्रामद्भिरभिहितम् Tantrākhyā. 19.2=PañcT. 1.61 (67.6); चित्रग्रीवः…नभस्यतिक्रामन् Tantrākhyā. 54.13; अपसरापसरेति क्रोशतः प्राजकस्य पथो नातिक्रामन्यदि हिंस्यान्न दोषः ManuBh. ii. 198.16 (*on* 8.292); एवमसौ … अटवीश्चातिक्रामन् NalaCam. 5.32; PadmP. iv. 44.42; KathāSaSāg. xii. 35.41; अतिक्रामत्यरे तत्र त्वायुःसंहननादिकम् TrisaS'aPuC. i. 2.128; मदीक्षणार्पितदृशः कृच्छ्रादतिक्रामतः किं व्रीडाहतया मया भुजलतापाशो न कण्ठेऽर्पितः S'ārṅgaPa. 3437; **A ii** skipping, jumping over स्थानान्यतिक्रामतः…(चन्द्रार्धचूडामणेः) जयन्ति…केलयः KarpūC. 2; **B i** elapsing, passing (of time) अतिक्रामति कालेऽस्मिन्सर्वभूतक्षयावहे MahāBhā. xii. 169.1; HarsaC. 64.4; AnargharRā. 4.50; NalaCam. 3.23; 4.9; क्रमादतिक्रामति च यौवने TilaMañ. 20.13; RājTa.(Ka.) 3.82; BhojPra. 10.2; **B ii** letting (fixed) time lapse दोहकालमतिक्रामतस्तत्फलहानं दण्डः ArthS'ā. i. 317.1 (2.29); **B iii** crossing over, going beyond (a specific period) वयसा पञ्चपञ्चाशतं वर्षाण्यतिक्रामन्तम् … भैरवाचार्यं ददर्श HarsaC. 155.3; क्रमेण शैशवमतिक्रामतोऽस्य NalaCam. 4.14 (1); वर्षाकालमतिक्रामन् …नवरात्राणि प्रारेभे PrabaCin. 17.1; **C** ignoring, setting aside, transgressing, violating, not abiding by, failing को हि संबन्धकम्…ईप्सितम्। अतिक्रामन्न तप्येत MahāBhā. i. 94.70; अतिक्रामन्केशवस्य तथ्यं वचनमर्थवत् MahāBhā. v. 123.7; चक्रवृद्धिं समारूढो देशकालव्यवस्थितः। अतिक्रामन्देशकालौ न तत्फलमवाप्नुयात् ManuSm. 8.156; शास्त्रोपदेशमतिक्रामतः BrahmSi. 43.23; तीर्थमतिक्रामन् वञ्चितः स्याम् PādaTā. 12.12; PadmPrā. 12.15; BṛĀraUBh.(S'aṅ.) 267.19; अतिक्रामन्निदं वाक्यं प्रायश्चित्तं च सोऽर्हति BṛKathāK. 59.69; स्वधर्ममतिक्रामतां सर्वेषां पार्थिवो गुरुः NītiVā. 7.22 (comm. निषेधयिता); TātpaṬ. 529.12 (*on* iii. 1.56); वाक्यार्थं प्रतिपद्यमानोऽपि…विधिमतिक्रामन्दृश्यते NītiMā. 58.8; प्रतिषेधशास्त्रमतिक्रामन्त्या अयमनुगमनोपदेशः Mitā. 28.24 (*on* 1.86); एते च साक्षिधर्ममतिक्रामन्तः प्रथमसाहसं दण्डनीयाः Aparā. 763.19 (*on* 2.153); KaṁVa. 6.37; राजाह्वानमतिक्रामतो दण्डः बृहस्पतिनोक्तः VīraMi.(Vyavahāra.) 40.25; **D** encroaching, covering (for sexual intercourse) aggressively जातस्मरस्मयस्तामेवाजामतिक्रामन् YaśasCam. ii. 219.2.

**अतिक्रामम्** (ati-krāmam) *adv.* stepping forward ज्योतिष्मत्याज्यभागौ यजति … अग्रेणाघारसंभेदमतिक्रामम् VārāS'S. I. iii. 4.28; उदङ्ङतिक्रामं सोमाय पितृमतेऽनु स्वधेत्यनुवाचयति VārāS'S. I. vii. 4.39.

**अतिक्रामयत्** (ati-krāmayat) *adj.* causing to pass, letting cross over or transcend (खेलनैः) पञ्चातिक्रामयन्वर्षाण्ययमेकाहलीलया PāṇḍaC. 1.127; सत्त्वभावान् अतिनेनीयमानः संसारं भृशमतिक्रामयन् NyāySu.(Ja.) 585B.10 (*on* iii. 4.5)

**अतिक्रामयितव्य** (ati-krāmayitavya) *adj.* which is to be necessarily transgressed or violated अयमपि नारदीयः प्रतिषेधोऽतिक्रामयितव्यः BālaKrī. i. 228.12 (*on* 2.74)

**अतिक्रामयित्वा** (atikrāmayi-tvā) *ger.* having deceived or disregarded वलेन येन वै सीताम् …। मामतिक्रामयित्वा त्वं हृतवांस्तद्विदर्शय Rāmā. vi. 31.55.

**अतिक्रामित** (ati-krāmita) *adj.* [*f.* -ā] caused to pass or lapse तत्किमिति कालोऽतिक्रामितः इत्यादिभिरालापैः JayaMa. 50.13 (*on* 1.4); पारणलङ्घिता अतिक्रामिता द्वादशी धर्महरणं करोति CaturCin. iii (2). 283.8.

**अतिक्रामिन्** (atikrām-in) *adj.* rapist, ravisher धात्वर्थालोचनात् अपहारीत्यतिक्रामिणमित्यभिगामिनमित्यमीषामपि तत्परत्वात् DaṇḍaVi. 237.9.

**अतिक्रिमिगतोदर** (atikrimigatodara) *adj.* having severe infection of worms in the stomach अतिक्रिमिगतोदरान् … सितत्रिकटुचूर्णकैः … मृदुविरेचनैर्योजयेत् KalyāKā. 8.44.

**अतिक्रिय** (ati-kriya) *adj.* having severe action or effect अत्यर्थमतिदृष्टमतिक्रियम्। एवं द्विविधमाख्यातम् Hastyāyur. 504.29 (3.21)

**अतिक्रिया** (ati-kriyā) *f.* **A** extra effort नास्ति त्वतिक्रिया तस्य रणेऽरीणां प्रतिक्रिया MahāBhā. iii. 84.14; **B** unjustifiable excess in action, overdoing मूलान्तरं निरस्तं च सामान्येनैव यत्पुरा। तदनुप्राप्यते पश्चाद्विरोधेनेत्यतिक्रिया TantrVā. 84.18 (*on* i. 3.3); (NyāySu. उचितां क्रियामतिक्रम्य क्रिया); **C** excessive or over treatment वालक्षाणीं प्रसाधयेत्। कालातीतः क्रियाभिर्वातिक्रियाभिरतोऽपि वा Hastyāyur. 209.20 (2.16)

**अतिक्रियात्मक** (atikriyātma-ka) *adj.* having over-active nature तत्राभिमानी भगवान्वायुश्चातिक्रियात्मकः VāyuP. i. 2.40.

**अतिक्री** (ati-krī) *f.* variety of the Sadyaskrī (a kind of Soma sacrifice) अतिक्रिया यक्ष्यमाणस्तिलेषु दीक्षते BaudhS'S. ii. 371.1.

**अतिक्रीडन** (ati-krīḍana) *n.* excessive sport or play भजत्यरि(v. l. ति)क्रीडनमर्भकैः समम्…चित्रकः PadmP.(Ra.) 42.44.

**अतिक्रीडा** (ati-krīḍā) *f.* overplaying, excessive sport अतिक्रीडां सर्वदा परिवर्जय SkandP. iii(3). 11.27.

**अतिक्रुद्ध** (ati-kruddha) *adj.* [*f.* -ā] excessively angry इति श्रुत्वा पुलोमाया भृगुः परममन्युमान्। शशापाग्निमभि(v. l. ति)क्रुद्धः सर्वभक्षो भविष्यसि MahāBhā. i. 6.13; ii. 39.18; iii. 12.42; viii. 39.14; HariVaṁ. 22.30; अतिक्रुद्धापि तु न द्वारदेशाद्भूयो गच्छेत् KāmSū. 186.7 (2.10) (comm. न भूयो न बहिः); NītiVā. 25.80; YaśasCam. ii. 327.22; BrahmP. 12.33; PadmP. v. 49.94; रूपाण्यभिद्रवति वा योऽतिक्रुद्धो मतङ्गजः Hastyāyur. 341.26 (2.71); YudhiVi. 8.36; Bhāsk. i. 258.5 (*on* i. 5.14); TantrRā. 6.67; पशुपतिरतिक्रुद्धो दृश्यते Manmatho. 4.23 (648.2); *m.* *mantra* having twenty-eight or thirty-one syllables अष्टाविंशत्यक्षरो वा एकत्रिंशदथापि वा। अतिक्रुद्धः स कथितो निन्दितः सर्वकर्मसु SāraTi. 2.101; 2.69.

**अतिक्रुध्** (ati-krudh-) IV. P. to be extremely angry नातिक्रुध्यति … गजः श्लैष्मिकः MātaLi. 11.40.

**अतिक्रुध्** (ati-krudh) *adj.* excessively angry व्यतर्कयज्ज्वरमिव रौद्रमुद्धतम्। … अतिक्रुधं निषधम् … जनः S'iśuVa. 17.7; *f.* excessive anger, great anger विधुरीकृतमप्यतिक्रुधाग्रे मम राधावदनं मनो धिनोति VidaMā. 7.50; तं दृष्ट्वातिक्रुधा क्षिप्तः कुठारो हि मया ततः BrahmāṇḍP. ii. 44.27; KathāSaSāg. i. 1.56; S'āliC. i. 136.

**अतिक्रुश्** (ati-kruś-) I. P. to cry or call out loudly सा गृहीतातिचुक्रोश रावणेन यशस्विनी।… रामं दूरगतं वने Rāmā. iii. 47.20.

**अतिक्रुष्ट** (áti-kruṣṭa) *n.* excessive lamentation (deified) अति॑क्रुष्टाय माग॒धम् VājaS. 30.5; TaiBr. III. iv. 1.1 (Bhāskara अतिक्षिप्ताय); (आलभेत) पुंश्चलमतिक्रुष्टाय YaśasCam. ii. 358.2.

**अतिक्रूर** (ati-krūra) *adj.* [*f.* -ā] **A** very cruel शापमेनं तु शुश्राव स्वयमेव पितामहः। अतिक्रूरं समुद्दिष्टं कद्र्वा दैवादतीव हि MahāBhā. i. 18.9; PāraS. 19.576; BrahmāṇḍP. iii. 23.65; PadmP.(Ra.) 26.19; ChāndoUBh. 451.16 (*on* vii. 15.3); BṛĀraUBh. 340.19 (*on* ii. 5.16); क्षुधितमतिक्रूरं च न भुक्तिसमये संनिधापयेत् NītiVā. 25.40; TantrRā. 29.70; व्यर्थतां जग्मुः … यथातिक्रूरचित्तानामार्ये कृत्यशतान्यपि SkandP. i(2). 21.144; ii(1). 14.39; vi. 100.50; BrahmVaiP. iv. 85.162; BhaviP. 733B.10 (iv. 89.36); अतिक्रूरेऽप्यहिः स्मृतः DharK. 2780; हिंस्रा अतिक्रूरा SmṛtiCan. iv. 573.1; अतिक्रूरार्थसहितं परुषं परिकीर्त्यते PratāYaBhū. 316.6; CaitaCa. 32.10 (2); AnyāS.(Nī.) 64; **B** very hard न त्वक्तवमनमन्यत्रातिक्रूरकोष्ठात् (विरेचयेत्) AstāSaṁ. i. 141.10 (1.27); *m.* *mantra* having 30 or 33 syllables त्रिंशदक्षरको मन्त्रस्त्रयस्त्रिंशदथापि वा। अतिक्रूरः स कथितो निन्दितः सर्वकर्मसु S'āraTi. 2.102.

**अतिक्रूरत्व** (atikrūra-tva) *n.* excessive cruelty निर्घृणत्वमतिक्रूरत्वम् … प्रसज्येत BrahmSūBh.(S'aṅ.) 342.2 (*on* ii. 1.34)

**अतिक्रूरमनस्** (atikrūra-manas) *adj.* very cruel-minded अतिक्रूरमनाः पापा एवमादीनुपद्रवान्। चक्रे सा तस्य निर्वेदरहिता सततं परान् PadmP.(Ra.) 104.114; PāṇḍaC. 9.206.

**अतिक्रूरवध** (atikrūra-vadha) *m.* extremely cruel murder उग्रता भवेत्। तत्रानुभावोऽतिक्रूरवधबन्धनताडनैः BhāvPra.(S'ā.) 23.17(1)

**अतिक्रोध** (ati-krodha) *m.* excessive anger, great anger चकर्ष दोर्भ्यामुत्पाट्य भीमो मल्लममित्रहा। विनदन्तमभिक्रोशन् (v. l. अतिक्रोधात्) शार्दूल इव वारणम् MahāBhā. iv. 12.21; KāmSū. 352.15 (6.6); ParāSm. 4.1; BṛParāSm. 8.50; सर्वे दानवपुंगवाः। वाचमूचुरतिक्रोधाज्ज्वलन्तो ललितां प्रति BrahmāṇḍP. iii. 27.18; PadmP.(Ra.) 41.74; RugVi. 63.1; SkandP. iii(3). 11.26; अतिक्रोधादुपाध्यायो विरुद्धमकरोन्मयि KathāSaSāg. iii. 6.129; NāraS. 31.14; TrisaS'aPuC. iv. 7.280; असिः … अतिक्रोधाद्विवेश द्विषः Sadukti-

Ka. 206. 9; *adj.* extremely angry अतिक्रोधा योधाः ··· उदग्रं जयमापेदिरे ĀnandRa. 7. 39(40) (7)

**अतिक्रोधताम्राक्ष** ( atikrodha-tāmrākṣa ) *adj.* red-eyed with extreme anger कालनेमिर्महासुरः । ततोऽतिक्रोधताम्राक्षः शक्तिमुद्यम्य वेगवान् । स्वशक्त्या ताडयामास वसुम् HariVaṁ. 37. 518*(8)

**अतिक्रोधदुर्धर** ( atikrodha-durdhara ) *adj.* irresistible due to excessive anger उर्वीरुहमतिक्रोधदुर्धरो निशाचरः क्षिपति UdaySuKa. 80. 2.

**अतिक्रोधन** ( ati-krodhana ) *adj.* full of excessive anger न चाप्यतिक्रोधनस्तु परिहासः NāṭyaŚā. 22. 276; NītiVā. 10. 137; MātaLī. 1. 29.

**अतिक्रोधवश** ( atikrodha-vaśa ) *m.* control or influence of excessive anger जगामातिक्रोधवशं त्रिपुरारिर्महायशाः PadmP. v. 5. 2.

**अतिक्रोधान्धा** ( atikrodhāndhā ) ( *f.* ) blind due to excessive anger अतिक्रोधान्धापि सरभसमासुमहदया पयोधेः पुत्रीयं पितृजनितदर्पेव वलते Caita-Ca. 262. 22 (10)

**अतिक्रोधान्वित** ( atikrodhānvita ) *adj.* full of excessive anger भक्तहेतोरहं देवि ··· अतिक्रोधान्वितः शूलं गृहीत्वान्वजयं पुरा SivaP. ii(2). 23. 43 (97B. 13)

**अतिक्रोधिन्** ( ati-krodhin ) *adj.* extremely angry त्वम् ··· रसं जानासि मतिमानतिक्रोधी भविष्यसि PadmP. iv. 106. 94.

**अतिक्रोशत्** ( ati-krośat ) *adj.* A shouting, roaring भीमः ··· विनदन्तमभिक्रोशन् ( v. l. अतिक्रोशन् ) शार्दूल इव वारणम् MahāBhā. iv. 12. 21; B lamenting greatly, weeping exceedingly देवाः ··· रुरुदुर्विह्वलाश्चातिक्रोशन्तः SivaP. ii(3). 19. 18 (143B. 16)

**अतिक्रौर्य** ( ati-kraurya ) *n.* excessive cruelty अतिक्रौर्यमतिक्षान्तिरत्यन्ताभीतिपातनम् । ··· सदोषताः BhaviP. 28B. 1 (i. 8. 24); नातिक्रौर्यं नातिशाठ्यं धारयेन्नातिमार्दवम् SukraNī. 3. 218.

**अतिक्लान्त** ( ati-klānta ) *adj.* [ *f.* -ā ] excessively tired वारणः ···अतिमात्रम्···अस्नेहमतिक्लान्तो भोज्यते हन्यते Hastyāyur. 64. 20 (1. 9); प्राप्ता तानवमुर्वशी रतिरतिक्लान्ता हता रोहिणी RājeKaPū. 23=Subhāṣi. 2616.

**अतिक्लिन्न** ( ati-klinna ) *adj.* very much softened, sticky अतिक्लिन्नं ग्लानिकरं युक्तियुक्तं हि भोजनम् BhāvPra.(Bhā.) 5. 140 = BhojanKu. 216. 19.

**अतिक्लिश्** ( ati-kliś- ) IX. P. A to torment excessively भक्तं मां मातिक्लिश्नाः Bhaṭṭi. 6. 17; IV. Ā. B to give trouble, to be inconvenient कुमारयतीस्य सिद्धये बहुलवचनं नातिक्लिश्यते PariVṛ.(Sī.) 60. 3.

**अतिक्लिश्य** ( ati-kliśya ) *ger.* becoming greatly troubled or distressed ( कस्यचित् ) समस्तेष्वैतिश्चेषु परीक्षेपक्षेपादतिक्लिश्य निःशेषदुराशाविनाशाविनाशनांशुमन्मरीचिश्चिरेण तत्त्वेषु रुचिः संजायते YaśasCam. ii. 322. 18.

**अतिक्लिष्ट** ( ati-kliṣṭa ) *adj.* [ *f.* -ā ] 1 greatly afflicted, extremely distressed, pressed hard नातिक्लिष्टपयोधरः — प्रथमोपगूहनविधिः पुष्णातु वो मङ्गलम् SubhaDha. 1. 1; निराहारमतिक्लिष्टं दृष्ट्वा वैदर्भं कृपामयी रुरोद BrahmVaiP. ii. 63. 9; iv. 56. 32; 2 far-fetched, difficult to establish, to be acquired or desired with great difficulty, complicated, laborious (idea, argument, indication etc.) न द्रव्याश्रयवचनः शब्दो भवेदाकृतिवादिन इत्याह । तदतिक्लिष्टम् ··· इत्युपेक्षितव्यम् TantrVā. 257. 23 (on i. 3. 26); वाक्येषु पुनरतिचिरतरतिरोहिताक्षरपरम्परानुसन्धानमतिक्लिष्टमदृष्टपूर्वमिति NyāyMañ. i. 356. 16; भोग्यत्वेन हि आयतनत्वमतिक्लिष्टम् Bhām. 197. 2 (on i. 3. 4); अतिक्लिष्टलाक्षणिकस्तुत्यर्थत्वाङ्गीकारकारणं विधिनैकवाक्यत्वादित्यनेनोक्तम् NyāySu. ( So. ) 51. 28 (on i. 2. 7); ज्ञानस्वरूप इत्यर्थस्त्वतिक्लिष्टः SrutaPra. iB. 292. 20 (on i. 2. 2); तण्डुलशब्दस्य दार्शिकहविः सामान्यलक्षकत्वकल्पनया तद्विभागप्रतियोगिनीनां शब्दानुपात्तानां देवतानां कथंचिद्बुद्धिस्थिरीकरणेन चातिक्लिष्टं कल्पनीयम् VidhiRa. 41(204. 11); अत्र शेषभाजां लोप इत्यध्याहारः । अयमतिक्लिष्टः SivārkaMaDī. i. 7. 4 (on i. 1. 0); i. 12. 8 (on i. 1. 0); यदुक्तं साध्यसादृश्यमूला गौण्यतिक्लिष्टा PūrvottaVāNaMā. 10. 4; 8. 17; 9. 2; अतिक्लिष्टलक्षणाश्रयणायोगात्तत्राव्याप्तिर्वज्रलेपायते CitraMī. 47. 7; यत्तु वैयटेनोक्तं तत्त्वतिक्लिष्टम् LaŚabdeŚe. ii. 475. 2.

**अतिक्लीब** ( ati-klība ) *adj.* A extremely impotent अतिभीरुमतिक्लीबम् ··· न भजन्ति नृपं श्रियः MahāBhā. iii. 239. 4; B extremely negligible साक्के अतिक्लीबमभिहितं भवता SubhaDha. 4. 16(4)

**अतिक्लीबम्** ( ati-klībam ) *adv.* with excessive delay, drawlingly नातिद्रुतं न विलम्बितं नातिक्लीबं नात्युच्चैर्नातिनीचैः स्वरैरध्ययनमभ्यस्येत् CaraS. i. 8. 24 ( comm. अतिविलम्बितोच्चारणम् )

**अतिक्लेद** ( ati-kleda ) *m.* excessive moistening अतिक्लेदोऽग्निनाशनः AṣṭāSam. i. 22. 21 (1. 6)

**अतिक्लेश** ( ati-kleśa ) *m.* A great affliction, great trouble or worry, extreme distress अतिक्लेशेन येऽर्थाः स्युः ··· मां स तेषु मनः कृथाः MahāBhā. v. 39. 61; योषित् ··· तद्विता शुभमाप्नोति तत्सालोक्यम् ··· नातिक्लेशेन ViṣṇuP. vi. 2. 29; अतिक्लेशेन ये ह्यर्थाः धर्मस्यातिक्रमेण तु । ··· ते ह्यर्थाः मा भवन्तु मे CāṇaNīDa. 16. 11; भवतस्तु···अतिक्लेशः स्यादित्यसमानम् TantrVā. 48. 4 (on i. 2. 29); पतिं विनातिक्लेशेन कालो याति मुधावले ĀdiP. 18. 44; अतिक्लेशेन लब्धोऽसि तान्क्लेशान्वेत्ति चेश्वरः GaṇeP. ii. 21. 40; ii. 91. 33; अतिक्लेशविवर्जितम् । पञ्चाक्षरेण जप्तं च तोयमन्नं विदुः सुखम् SivaP. i. 18. 154 (24B. 14); उच्चं कृत्वा चारितोऽतिक्लेशेन सम्पादितः स्वरः AbhinBhā. i. 52. 21 (on 2. 19); किञ्च ···अतिक्लेशेन समारब्धा वा वृत्तिः ··· शोभते NyāyRa. 3. 14 (on 0. 8); भावयन्ति क्वचित्तत्र नातिक्लेशो भविष्यति NyāyKu. 10. 7; B great or excessive pain अतिक्लेशान्सहामीह नाहं बुध्याम्यबुद्धिमान् MahāBhā. xii. 171. 41; (*fig.*) निपीय ··· जलम् ··· विषण्णोऽतिक्लेशात् ··· वमति जलभारं जलधरः SaduktiKa. 175. 2; C great distortion, far-fetchedness, great strain लक्षणात्तद्विदुक्तेर्वा नातिक्लेशो भविष्यति SlokaVār. 7. 216 (905. 8); वृत्तिं कल्पयतोऽतिक्लेशः इत्युपसंहरति NyāyRa. 832. 20 (on 6. 401); प्ररोचनाकल्पनमप्यतिक्लेशेन निर्वोढव्यम् NyāySu. (So.) 76. 24 (on i. 2. 22); *adj.* very painful or severe विरम्यतामतिक्लेशात्तपसोऽस्मान्मदाज्ञया MatsyaP. 157. 8.

**अतिक्लेशकर** ( atikleśa-kara ) *adj.* [ *f.* -ī ] causing excessive pain, causing great distress, exceedingly troublesome अतिक्लेशकरं तपस्तथाप्याचारहीनस्य न फलतीति श्रुतिः ManuBh. i. 48. 11 (on 1. 110); i. 365. 1 (on 4. 92); अतिक्लेशकरीं परेषाम् । मायन्ति ते सम्पदमुग्रभावाः ··· लब्ध्वा Vidvanmo. 7. 10.

**अतिक्लेशतस्** ( atikleśa-tas ) *adv.* taking a lot of trouble इति मां व्यास उक्तवान् । आगतश्च ततश्चात्र वाहीकेभ्योऽतिक्लेशतः SkandP. i(2). 46. 135.

**अतिक्लेशयुक्तत्व** ( atikleśayukta-tva ) *n.* the state of having excessive trouble तस्मादागमनादावतिक्लेशयुक्तत्वेन स्वर्गफलेऽपि विरक्तेन भवितव्यम् TattvPrakā. 141B. 5 (on iii. 1. 9)

**अतिक्लेशरूप** ( atikleśa-rūpa ) *adj.* having the form of excessive trouble महाव्यापारोऽतिक्लेशरूपः क्रीडार्थः NyāyRa. 653. 21 (on 5(15). 56)

**अतिक्लेशवश** ( atikleśa-vaśa ) *m.* [Abl.] due to or because of extreme trouble नीलाम्बुदश्यामोऽतिक्लेशवशाद् हृदयादपगच्छतु AṇuBh. 325. 14 (on iv. 2. 13)

**अतिक्लेशसह** ( atikleśa-saha ) *adj.* who tolerates excessive pain or trouble नातिक्लेशसहो विप्र सोऽभवत्कोपनो भृशम् MārkP. 99. 7; नातिवृद्धविकारिणाम् । नातिक्लेशसहानां च शमनं हितमुच्यते KāśyaS. 238A. 37.

**अतिक्लेशसाध्य** ( atikleśa-sādhya ) *adj.* which can be accomplished with great effort, achievable with great strain अध्ययनं तावत् ··· अतिक्लेशसाध्यम् SivārkaMaDī. i. 27. 11 (on i. 1. 1); PūrvottaVāNaMā. 304. 14.

**अतिक्लेशसाध्यत्व** ( atikleśasādhya-tva ) *n.* the state of being accomplished with great effort उत्तरवेद्यपेक्षया तस्यानेकद्रव्याङ्गकपालयुक्तस्यातिक्लेशसाध्यत्वात् SivārkaMaDī. ii. 366. 12 (on iii. 3. 45)

**अतिक्लेशानुषङ्ग** ( atikleśānuṣaṅga ) *m.* connection with excessive trouble अतः स्वर्गफलस्यातिक्लेशानुषङ्गाभावात् न तत्र वैराग्यमापादनीयम् TattvPrakā. 141B. 1 (on iii. 1. 9)

**अतिक्लेशाभाव** ( atikleśābhāva ) *m.* absence of excessive effort or strain संबन्धग्रहणसंभवेनातिक्लेशाभावात् YuktiSneha. 156. 31 (on i. 1. 7)

**अतिक्वाण** ( ati-kvāṇa ) *m.* loud sound (especially of a musical instrument or lute) एतेष्विति किम् ? अतिक्वाणः JaineVyā. 125. 22 (on ii. 3. 68); अतिक्वाणो वर्तते KāśiVṛ. on iii. 3. 65; Prasā. ii. 657. 19.

**अतिक्वाथ** ( ati-kvātha ) *m.* excessive boiling अतिक्वाथादूर्ध्वं तरलयति च क्षीरजलधिं विना कल्पापायं प्रसरतितरां कोऽयमनलः SamudraMa. 2. 13.

**अतिक्षण्** ( ati-kṣaṇ- ) VIII. P. to injure or to hurt severely रक्तस्रावं न कुर्वीत न चातिक्षणुयात्तलम् Hastyāyur. 112. 9 (1. 15)

**अतिक्षम्** ( ati-kṣam- ) I. P. to forgive fully विश्वा क्षार्मद् देवोऽति दुरितान्यग्निः AV. vii. 63(65). 1.

**अतिक्षमा** ( ati-kṣamā ) *f.* extreme forbearance आनन्दरङ्गस्य···प्रशासतः क्षमामतिक्षमामतिप्रभावतः । यशो जनाः समन्ततः समं ततः श्रिया जगुः ĀnandRa. 8. 35.

**अतिक्षमिता** ( atikṣami-tā ) *f.* the state of having excessive forbearance नातिसहिष्णुता च नखक्षतादीनां प्रयुज्यमानानां नातिक्षमिता JayaMa. 82. 13 (on 2. 1)

**अतिक्षय** ( ati-kṣaya ) *m.* i great destruction भवितातिक्षयो घोरो नूनं स्वायंभुवेऽन्तरे VarāP. 24. 17; अवृष्टेरन्यदा तत्राभूद्दुर्भिक्षमतिक्षयम् । सचराचरजीवानां कुर्वद्दुर्वीतलेऽधिकम् PrabhāC. 7. 2; ii complete loss (of a lunar day) वसादतिक्षये तिथीनां यस्मिन्नेवाहोरात्रे चन्द्रस्यादर्शनं पूर्णोदयो वा भवति तदाद्वय-

-माने चन्द्रमस्यमावास्योपवासः Aparā. 218. 3 (*on* 1. 154)

**अतिक्षयादि** (atikṣayādi) *adj.* complete loss (of a lunar day) etc. चतुर्थी द्वादशीमध्ये यदतिक्षयादि न तवैदमनुष्ठेयम् BālamBha. iii. 191. 9 (*on* 3. 325)

**अतिक्षयिष्णु** (ati-kṣayiṣṇu) *adj.* greatly thinning, very slender तथा हृतं तस्य तथा पृथुत्वं यथाभवन्मध्यमतिक्षयिष्णु JānaHa. 1. 30.

**अतिक्षर्** (ati-kṣar-) I. P. I to pass through, to overflow, to flow across सोमा॑सो दध्या॑शिरः । पुवित्रमत्य॑क्षरन् RV. ix. 63. 15; छन्दांसि वै यो रसोऽत्यक्षरत् सोऽतिच्छन्दसमभ्यत्यक्षरत् AitBr. 16. 3 (440); तदत्यक्षरत् । तत्क्षीरमभवत् JaimiBr. 2. 228; 3. 18; तेषां यो रसोऽत्यक्षरत् । तानि शुक्रयजूंष्यभवन् TaiĀ. v. 10. 1 (636. 14); (caus.) to allow to flow over पान्थामपः ··· नातिक्षारयति BhārS'S. i. 26. 3; II to go beyond, to surpass, to overtake न युस्तावान्वरं पूर्व्यस्ति क्षरन्ति यामभिः RV. v. 66. 5; सर्वाणि भूतानि··· न चैनमतिक्षरन्ति AitĀ. II. ii. 2. 20.

**अतिक्षरितृ** (ati-kṣaritṛ) *adj.* slipping down too much प्रक्षरं क्ली तुरङ्गादेः सन्नाहे प्रखराह्वये । त्रिषु त्वतिक्षरितरि NānārthaSam. ii. 143. 1093.

**अतिक्षान्ति** (ati-kṣānti) *f.* extreme forbearance अतिक्रौर्यमतिक्षान्तिः ···तास्ताः सदोषताः BhaviP. 28B. 1 (i. 8. 24)

**अतिक्षाम** (ati-kṣāma) *adj.* I very weak आदिराजः ··· ददर्श मुनिमासीनम् ··· नातिक्षामं भगवतः स्निग्धापाङ्गावलोकनात् BhāgP. iii. 21. 46; II very thin राजन्तीमुदरेणातिक्षामेण ··· देवीम् ··· ददर्श श्रीप्रभप्रभुः TriṣaS'aPuC. i. 1. 502.

**अतिक्षामतस्** (atikṣāma-tas) *adv.* due to excessive weakness मनुजः ···खादंस्ताम्यति चोर्ध्वदृष्टिरथवा मूर्च्छत्यतिक्षामतः KalyāKā. 22. 83.

**अतिक्षामता** (atikṣāma-tā) *f.* extreme reduction अग्निसंयोगाः ··· तेजोधातुं प्रभावन्तो वर्धयन्ति यस्य प्रभावादपां संवातः क्षामक्षामो जायते यावदतिक्षामतां गतोऽन्ते न पुनः सन्तानं सन्तनोति AbhidhKoBh. 194. 10 (*on* 4. 3)

**अतिक्षारत्व** (atikṣāra-tva) *n.* excessiee causticity औषधस्य ··· अतिक्षारत्वात् ··· दुर्योगातियोगायुत्पद्येते KāśyaS. 156A. 36.

**अतिक्षारद्रव्य** (atikṣāra-dravya) *n.* excessively alkaline substance क्षारस्यापि विनष्टवीर्यसमये ··· अतिक्षारद्रव्यगणैश्च तद्दहनतः शक्तिः समाप्याययेत् KalyāKā. 21. 10.

**अतिक्षारसेवन** (atikṣāra-sevana) *n.* consuming extremely caustic (substance) °शोकातिक्षारसेवनातिसार° °प्रभृतिभिर्विशेषैर्वन्ध्यनान्मुच्यते गर्भः SuśruS. ii. 8. 3.

**अतिक्षिप्** (ati-kṣip-) VI. P. [अति इत्येवंपूर्वात्क्षिपो मन् ··· अतिक्षिपति JainoVyā. 32. 22 (*on* i. 2. 77); CāndraVṛ. *on* i. 4. 132; KāśiVṛ. *on* P. i. 3. 80; KātanVṛ. *on* iii. 2. 47; MugdhaBo. 134. 19 (22. 1); कर्तृगेऽपि फले परस्मैपदम् ···अभिक्षिपति एवं प्रति अति PrakriKau. ii. 392. 7; KośaKaTa. 2. 1470] to extend beyond, to throw excessively.

**अतिक्षिपत्** (ati-kṣipat) *adj.* excessively setting in motion प्रास्थितेन्द्रे पराकुर्वंत्ननुकुर्वंस्च पूर्वजान् । सानुजोऽतिक्षिपन्सेनाम् DvyāśraKā. 7. 67.

**अतिक्षिप्त** (ati-kṣipta) *adj.* I greatly extended अतिक्षिप्तान्यतिक्षिप्तान् ···उपन्यासान्कृत्वा वेश्मानुसारिणः MahāBhā. xii. 101. 25; नास्येन्द्रियमनेकाग्रं नातिक्षिप्तमनोरथः । ··· ईदृक्सांख्यो विमुच्यते MahāBhā. xii. 228. 36; II being away (from homeland) वलव्यसनानि ··· अतिक्षिप्तमुपनिविष्टम्···अन्धमिति ArthS'ā. iii. 35. 4 (8. 5); iii. 37. 3 (8. 5); NītiS'ā. 14. 69; 14. 81; आन्छेदतिक्षिप्तमधोगतं चोपरि वर्तयेत् SuśruS. iv. 3. 18; *n.* upwards dislocation (of a bone) अतिक्षिप्ते द्वयोः सन्ध्यस्थ्नोरतिक्रान्तता वेदना च SuśruS. ii. 15. 7; ii. 15. 5; तत्र सन्धिमुक्तं (भग्नं) षड्विधम् – उत्पिष्टम्···अतिक्षिप्तम् AṣṭāSam. ii. 300. 23 (6. 32); SiddhYo. 46. 2; *m.* instruction (to an elephant) in which (the prick of the elephant goad) is extended ahead सृणिः प्रसार्यतेऽग्रे यदातिक्षिप्तः स कथ्यते Mānaso. iv. 3. 589.

**अतिक्षिप्तसन्धि** (atikṣipta-sandhi) *adj.* with protruding joints अथ द्वापरे···शरीरमुत्पद्यते ··· अतिक्षिप्तसन्धि KāśyaS. 65B. 37.

**अतिक्षिप्र** (áti-kṣipra) *adj.* [*f.* -ā] very swift भवत्येवातिक्षिप्रा देवतेत्याहुः TaiS. II. i. 1. 1; लवणांकुरौ । अतिक्षिप्रपरावर्तौ तावुदारस्पाविव । आरेभाते परिक्रीडां परसैन्यमहाह्रदे PadmP.(Ra.) 101. 47.

**अतिक्षिप्र** (ati-kṣipra) *adv.* (in cpd.) very rapidly अतिक्षिप्रचिरोत्पन्नं कृशद्रव्यमपाहितम् । अप्रतिष्ठितसंस्थानं गृहं नमति पञ्चधा SamarāSū. 48. 108.

**अतिक्षिप्रत्व** (atiksipra-tva) *n.* the state of being very swift क्षेपिष्ठेत्येति । अतिक्षिप्रत्वेत्यर्थः LaCandr. 511. 19.

**अतिक्षीण** (ati-kṣīṇa) *adj.* [*f.* -ā] very weak, very much reduced अतिक्षीणबलमांसशोणितम् ··· अचिकित्स्यं विद्यात् CaraS. vi. 19. 9 (1941 Ed.); काले भगवतस्तस्य अतिक्षीणः पिता तदा ।··· श्वशुरं पर्यपृच्छत VarāP. 162. 21; नाडी ···अतिक्षीणा च शीता च जीवितं हन्त्यसंशयम् SārṅgaS. i. 3. 5; सोऽयं संप्रति शीतदीधितिरतिक्षीणाङ्गकान्तिः श्रियम् ··· समीहते MohaRāPa. 5. 23; यस्मिन्नहनि चन्द्रमाः सोमः न दृश्येत आगमादिना अतिक्षीण इत्युपलभ्यते तामनावास्यामुपवसेत् ViraMi.(Saṁskāra.) 882. 18.

**अतिक्षीणतर** (atikṣīṇa-tara) *adj.* very lean (गजः) अतिक्षीणतरः ···। दीनास्यः कुरुते दीनं भूमुजम् YuktiKa. 202. 14.

**अतिक्षीबता** (atikṣība-tā) *f.* excessive intoxication क्षणदाचरः प्रतिक्षणमतिक्षीबतया प्रतिपक्षबलमिव स्वबलमपि भक्षयन्···आजगाम RāmāCam. 6. 57(4)

**अतिक्षीबत्व** (atikṣība-tva) *n.* excessive intoxication अतिक्षीबत्वसंक्षोभक्षुत्(?त्)क्षामक्षमामयैः ।···समीपस्थापदः समाः BhaviP. 84A. 29 (i. 43. 23)

**अतिक्षुण्ण** (ati-kṣuṇṇa) *adj.* thoroughly discussed or investigated अर्धश्लायमतिक्षुण्ण ऋजुविमलादिषु PrakaPañ. 487. 9; साक्षुत्वम् ··· प्रमितत्वस्वार्थप्रत्यायकत्वं चेति कौस्तुभ एवातिक्षुण्णम् BhāṭṭDi. i. 52. 4 (*on* i. 3. 8)

**अतिक्षुत्परीत** (atikṣut-parīta) *adj.* overcome with excessive hunger मृगान्हत्वा श्रान्तोऽतिक्षुत्परीतो विकुक्षिरेकं शशमभक्षयत् ViṣṇuP. iv. 2. 16.

**अतिक्षुद्र** (ati-kṣudra) *adj.* [*f.* -ā] A I extremely mean इदं तु यदतिक्षुद्रं वार्ष्णेयार्थे कृतं त्वया । ··· नैतत्त्वय्युपपद्यते MahāBhā. vii. 118. 13; शोकम् ···अतिक्षुद्रम् ··· परित्यज्य युद्धायोपतिष्ठ GitāBh.(Rā.) 46. 2 (*on* 2. 13); अतिक्षुद्रं रौद्रं शिरसि करदानेन निधनं जगन्नाथाद् वव्रे Nārāy. x. 89. 4; A II very small अतिक्षुद्रं द्विचक्रं च नवीनजलदप्रभम् । दधिवामनाभिधम् (गृहम्) BrahmVaiP. ii. 21. 63; तस्यामतिक्षुद्रसभासरस्यामक्रूरदंष्ट्रावलिना मुखेन । जग्राह वीरः स विविच्य शुद्धां वाणीं मृणालीमिव राजहंसः RāmC. 23. 58; मुख्याः मुखजाः विप्रुषो द्रप्सविन्दवोऽतिक्षुद्राः बाह्यदृश्येषु पतिता अपि नोच्छिष्टतां जनयन्ति ManvaVi. 681. 27 (*on* 5. 141); A III of a very short duration शरज्ज्योत्स्नी रासे विधिरजनिरूपापि निमिषादतिक्षुद्रा तासां यदजनि न तद्विस्मयपदम् UjjvaNiMa. 467. 5; B very insignificant, of no worth or value का नाम सन्ध्याचन्दनस्यातिक्षुद्रस्यावस्थानसंभावना PrakaVi. 950. 15; यत्तु कैश्चिज्जल्पितम् ··· तदतिक्षुद्रम् S'rutaPra. ii. 197. 4 (*on* i. 4. 8); किं गतमेतैरतिक्षुद्रैः ··· वयम् ··· अपहरिष्यामः सुधाम् NilaVi. 119. 14; C very low, extremely wicked ऊर्जे न भक्षयेत् क्षौद्रमतिक्षुद्रगतिप्रदम् SkandP. iv. 6. 99; रक्षोजातिस्त्वतिक्षुद्रा हन्तुं शक्या नोजेस्वलैरपि PāṇḍaC. 9. 212.

**अतिक्षुद्रधन्धना** (atikṣudra-dhandhanā) *f.* extremely unimportant discussion घटश्चेत्यत्राप्याप्तेरित्यास्तामतिक्षुद्रधन्धनयेति VaiyāBhū. 216. 16 (*on* 47)

**अतिक्षुध्** (ati-kṣudh) *f.* excessive hunger यच्चातिक्षुद्व्यानुगः मुङ्क्ते ··· तच्च क्रमविरुद्धं स्यात् CaraS. i. 26. 99; मरीचिः ··· अत्यन्ततृष्णयावृष्टी अजीर्णातिक्षुधाविव । प्रभावेनागदेनेव जगतोऽप्यपसारयन् TriṣaS'aPuC. i. 6. 57; अतिरयौल्यादतिक्षुत्तृट्प्रस्वेदश्वासनिद्रताः (भवेयुः) AṣṭāSam. i. 125. 13 (1. 24)

**अतिक्षुधार्त** (atikṣudhārta) *adj.* [*f.* -ā] overcome with excessive hunger, extremely hungry निदाघतैक्ष्ण्यादिह दुष्टसत्त्वाः क्षोभं गवां कुर्युरतिक्षुधार्ताः Yādavā. 5. 13; अतिक्षुधार्तो सततं काकसत्त्वेति सोच्यते AnaṅgaRa. 4. 17.

**अतिक्षुधित** (ati-kṣudhita) *adj.* very hungry अतिक्षुधितस्य चिरकालाद् भक्तं समागतम् KathāK. 44. 5; *n.* excessive hunger अतिक्षुधिते नाभ्यासः क्रियते बुधैः S'ivS. 3. 44.

**अतिक्षुभित** (ati-kṣubhita) *adj.* very much agitated, very much enraged अक्षिपदतिक्षुभितः स जवाच्चतुर्दश निशाटभटान् Rāgh. 8. 62.

**अतिक्षुल्लसर्ग** (atikṣulla-sarga) *adj.* created as very small अतिक्षुल्लसर्गश्चायं मार्गो यथा न देवोऽपि ग्रहीतुं शक्नोति महिलानां हृदयम् YaśasCam. ii. 63. 1.

**अतिक्षेपीयस्ता** (atikṣepīyas-tā) *f.* the state of being excessively speedy अतिक्षेपीयस्तया तु युगपत्ता दृष्टविरुद्धा न कल्प्यते (रश्मीनाम्) NayaVi. 72. 4 (*on* i. 1. 4)

**अतिक्षेम** (ati-kṣema) *n.* great safety, great happiness तस्मिन् यातुरतिक्षेमं गमनागमनं सदा VasiS. 37. 214; यदि क्षेमं निजं वाञ्छसि (v. l. अतिक्षेमं निजं वाञ्छति) BhāmiVi. 4. 6.

**अतिक्षोद** (ati-kṣoda) *m.* excessive scrutiny, too much investigation अलमतिक्षोदेन NyāyMañ. i. 289. 19; PadMañ. *on* KāśiVṛ. *on* P. ii. 3. 65.

**अतिक्षोभन** (ati-kṣobhana) *n.* heavy stirring धूमप्रायः प्रविसृमुरतिक्षोभनोद्वान्ततेजाः कारीषाग्निः···घोषवह्निभिः···भाति निर्विद्यमानः SubhāRaK. 12. 10.

**अतिक्षोभम्** (ati-kṣobham) *adv.* very harshly भगवानपि सर्वात्मा नातिक्षोभं प्रवायति Rāmā. v. 11. 63.

**अतिक्षोभित** (ati-kṣobhita) *adj.* very much agitated अतिक्षोभितश्चाग्निरुद्रेको जायते BrahmP. 209. 8.

**अतिखञ्जत्** (ati-khañjat) *adj.* excessively limping तेनातिखञ्जतोऽश्वस्य

चण्डयोः स्युः RatiRaha. 8.2.

**अतिचण्डतुण्ड** (aticaṇḍa-tuṇḍa) *n.* very fierce beak मम (जटायोः) पुनरतिचण्डतुण्डलीढस्त्रुटनुपैष्यति ते (रावणस्य) स चन्द्रहासः Rāgh. 9.79.

**अतिचण्डत्व** (aticaṇḍa-tva) *n.* **i** excessive cruelty अतिचण्डत्वमालम्ब्य निदाघस्य इवार्यमा। त्वं दुःसहकराक्रान्तां पृथिवीं जातु मा कृथाः TriṣaS'aPuC. ii. 1.221; **ii** excessive or unbearable heat, TriṣaS'aPuC. ii. 1.221.

**अतिचण्डवेग** (aticaṇḍa-vega) *adj.* [*f.* -ā] **i** possessed of very violent speed or velocity (शक्तिः) विभिद्य वक्षःस्थलमीश्वरस्य ममज्ज भूमावतिचण्डवेगा VarāṅgaC. 18.62; स एष लोकानतिचण्डवेगो विकर्षसि त्वं (रुद्रः) खलु कालनाथः BhāgP. iv. 24.65; **ii** possessing a very powerful sexual urge प्रियोपभोगा अतिचण्डवेगाः। मनोरमाः पुष्पपुरप्रसूताः AnaṅgaRa. 5.15.

**अतिचण्डा** (ati-caṇḍā) *f.* name of one of the eight Nāyikā deities अष्टनायिकादेवीः···परिपूजयेत्।··· अतिचण्डाम् ··· चण्डवतीं तथा BrahmVaiP. ii. 64.82.

**अतिचण्डिका** (ati-caṇḍikā) *f.* name of one of the nine forms of goddess Durgā रुद्रचण्डादयो नव। रुद्रचण्डा ··· अतिचण्डिका AgniP. 50.11; 185.5.

**अतिचतुर्** (ati-catur) *adj.* **i** beyond four (i. e. the fifth) (चुलुक्य) धुर्योऽस्यनड्वानिव मेऽतिचत्वा हरेर्भुजस्त्वं तव के सखायः DvyāśraKā. 2.3; **ii** superior to or surpassing four (men) अ(?)प्रधानादेव अतिचतुरान् KātanVṛ. on ii. 1.74.

**अतिचतुर** (ati-catura) *adj.* [*f.* -ā] **i** very clever, exceedingly skilful स्फटिकान्सोऽतिचतुरश्चतुरो व्यकरोद् वृपान् TriṣaS'aPuC. ii. 2.488; तदातिचतुरा ललिता तयोः···गान्धर्वेण विधिना विवाहं नाटयति GopāKeCan. 130.29; 136.16; न दीनं नार्थवन्तं च न चातिचतुरं जडम्। दूतम् ··· संदिशेत् BhāvPra. (S'ā.) 94.9 (4); (पट्टराज्ञी) अतिचतुरा MādhavāĀ. 3; 23; अतिचतुराभिर्वेष्टितालीघटाभिः प्रियसखि पुरतस्ते दुस्तरा बाहुदासि UjjvaNīMa. 150.13; अतिचतुरसानन्दवन्दिमागधजनवृन्द° ··· °ध्वनिभिः मुखरीकृतम् ··· तिरुवेङ्कटक्षितिपतिः ··· आत्मानं धन्यतमं मन्यते स ĀnandaRa. 3.11 (6); **ii** very quick नायं राजा महाप्रश्ने वेत्त्यस्मिन् दातुमुत्तरम्। तेन तूष्णीं व्रजत्येष हृष्टोऽतिचतुरैः पदैः KathāSaSāg. xii. 31.62; **iii** quickly pronounced (i. e. short syllable) मध्यपट्टेऽतिचतुरे मन्दाक्रान्ता विराजते SuvṛTi. 2.34.

**अतिचतुरश्र** (ati-caturaśra) *adj.* very fitting, quite proper तदिदं भेदेनैव भेदप्रसाधनं नातिचतुरश्रम् BrahmSi. 50.20; अपारतन्त्र्यं परिमितप्रकारत्वं चेति नातिचतुरश्रम् VakroJī. 86.2; 135.2; सर्व एवाभावः सर्वत्र कारणमिति वचनमतिचतुरश्रम् NyāyKu. 165.5.

**अतिचतुरसखी** (aticatura-sakhī) *f.* very clever female friend अतिचतुरसखीवचःक्रमेण···प्रियमभिरमयांचकार Nalābhyu. 6.20.

**अतिचतुर्मुख** (ati-caturmukha) *adj.* surpassing the four-faced god, having more than four faces(?) ते इष्टकाकारकरालमतिचतुर्मुखम्। चतुर्विधैस्तु रूपं ध्यानम् AVPari. 36 (1). 3.

**अतिचन्द्र** (ati-candra) *m.* proper name of a *daitya* [pw]

**अतिचन्द्रामृत** (ati-candrāmṛta) *adj.* surpassing the nectar of the moon अतिचन्द्रामृतः कोऽपि परिरम्भो मृगीदृशाम् BṛKathāMañ. xviii. 1.124.

**अतिचन्द्रार्क** (ati-candrārka) *adj.* surpassing the sun and the moon (in lustre) अतिचन्द्रार्कभास्वरैः।··· बभासे भवनह्रदैः HariVaṁ. 93.34.

**अतिचपल** (ati-capala) *adj.* [*f.* -ā] **i** very unsteady, very agile, constantly moving अतिचपलानामिन्द्रियाश्वानामन्तःसंयमनरज्जुभिरिव ··· कण्ठनाडीभिर्निरन्तरसंबद्धकन्धरम् ···जाबालिमपश्यम् Kād. 42.12; अतिचपलकपिकम्पितकक्षोलच्युतपल्लवफलशबलैः ··· विराजिता लतामण्डपैः Kād. 19.7; शाखामृगमतिचपलम् ··· विचिन्तयतः।··· फलबीजं पुरुषस्य जातु न गलति RatiRaha. 5.4; अतिचपलकपिकुलान्दोलिततरुशिखर° NalaCam. 6.42 (8); अयमतिचपलो निसर्गरक्तां स्थलनलिनीमवधीर्य देव यातः (पतगः) NavaSāC. 3.35; यथा चाति(च)पलानां (हस्तिनाम्) यत्र विधिरनुष्ठीयते Hastyāyur. 619.5 (4.7); क्षुद्रस्य क्षतिकारिणोऽतिचपलस्याह्लादविच्छेदिनः। येयं निम्बफलेषु काक भवतः ··· प्रीतिः S'āriṅgaPa. 884; *adv.* (in Cpd.) very quickly अतिचपलफालविस्फारिभिः स्फुलिङ्गैः फुल्लन् ··· निर्जगाम ··· राक्षसः UdaySuKa. 81.10; **ii** very fickle, very fickle-minded, very much inconstant (in behaviour) शक्त्या पाणितलेऽङ्कितोऽतिचपलस्तोये च भीरुः क्रिये Bṛhajjā. 17.1; राज्यलक्ष्मीः ··· पवनगतिरिवातिचपला Pañcā. 227.3; निर्लज्जाः ··· अतिचपलाः ··· साध्याः सुखेनाङ्गनाः AnaṅgaRa. 8.17; सुभगपरिचयं जहाति चेत्त्वमतिचपला मम चित्तचेतनेयम् AmṛUda. 4.79; अतिचपला ··· सा चित्रिणीति स्मृता S'ṛṅgāDī. 2.10; कष्टमतिचपलायास्तावदस्याः कृते शिवदासहितोपदेशं अवधीरितवानहम् MadaKeC. 92 (1); एषोऽतिचपलो बालो दैत्यान् हन्ति बहूनपि GaṇeP. ii. 85.16; खला इवातिचपलाः ··· यौवनवासराः SamaMā. 1.47; एकदा दधिमथनं कुर्वत्यतिचपलेन पुत्रेण प्रक्षोभिताह (यशोदा) GopāKeCan. 141.7; अत्यासन्नोऽतिचपलः को न दह्येत वह्निना BṛKathāS'loSaṁ. 4.5; क्षामक्षामामिमां त्वां तनुमतिचपल प्रेक्षसे किं स्वयं नः Subhāṣi. 1412; **iii** very inconstant, changing quickly धिगतिचपलं मानुषसुखम् PadmP. (Ra.) 12.375; क्षरमतिचपलं नो मनः S'atS'lo. 92; अतिचपलो हीन्द्रियसंघातः ManuBh. i. 186.22 (*on* 2.215); अतिचपलचञ्चलमनोवाक्कायव्यापाररहितत्वेन स्वस्वरूपे निश्चलं स्थिरम् TātpaVṛ. 257.17 (*on* 2.100); तनुसरसि शुष्केऽतिचपलः···मनोमीनो लीनो भवतु मम पीनो ननु शिवे PadyaVe. 813; **iv** having very quick movements, moving very fast, greatly or constantly shaking अतिचपलवीचिप्रचयतया ताण्डवोद्दण्डदोर्दण्डखण्डपरशुविडम्बनापण्डितम् ··· जलनिधिमपश्यत् VāsaDa. 266.6; अतिचपलाः सरसस्तरङ्गाः AvantiKa. 27.7; अतिचपले दीर्घे दृगम्भोरुहे ··· इदं दिग्धाञ्जनं दीयताम् TripuMāPūSt. (S'aṅ.) 44; नारदो विश्ववन्दितः। कस्मादेषोऽतिचपलो वायुवद्भ्रमते जगत् SkandP. i(2). 54.20; अतिचपलम् ··· जघनतटम् ··· निरीक्षमाणो न तृप्यामि ĀryāSaS'a. 64; पवनाहतलवलीदलपटलैरतिचपलैः। ··· सुरभिर्ध्रुवमिह गायति···मुदितः ChandaśCū. 2.316 (4); अतिचपलोऽयं (वायुः) Pañcā. 215.13; अतिचपलाः अनियतचेष्टाः···कल्लोलाः VedāntKa. 384.7 (*on* iii. 2.32)

**अतिचपलचित्ता** (aticapala-cittā) *adj.* (*f.*) very fickle-minded अतिचपलचित्तात्र स्यन्दने केयमारोपिता ViṣṇuP. iv. 12.26.

**अतिचपलजलकपि** (aticapala-jalakapi) *m.* quick-moving or very agile water-monkey अतिचपलजलकपिकुल° ··· °शिशिरतरम् ··· पुलिनजलम् VāsaDa. 277.5.

**अतिचपलता** (aticapala-tā) *f.* extreme fickleness दैवान्मालिन्ययोगेऽप्यतिचपलतया योऽवदातानुयातः JinaS'. 3.18.

**अतिचपलत्व** (aticapala-tva) *n.* extreme unsteadiness, extreme fickleness अलमतिचपलत्वात् स्वप्नमायोपमत्वात् परिणतिविरसत्वात् संगमेन प्रियायाः S'atTrayī. 839 = SubhāRaK. 17.13; अलमतिचपलत्वात् ··· सङ्गमेनाङ्गनायाः KāvyPra. 319.2 = S'āriṅgaPa. 566.

**अतिचपलभाव** (aticapala-bhāva) *adj.* extremely unsteady in nature कथमतिचपलभावानाम् ··· नानाविधलिङ्गवेदना विकाराः सम्भवन्ति Hastyāyur. 618.25 (4.6)

**अतिचपलमाल** (aticapala-māla) *adj.* having a very unsteady garland सुन्दरि माधवमव कलयालम्। मित्रकरलोलया रत्नमयदोलया चलितवपुरतिचपलमालम् StavMā. 262.30.

**अतिचपलराजलक्ष्मी** (aticapala-rājalakṣmī) *f.* very unsteady royal glory (sovereignty) (मातङ्गकुमारी) अतिचपलराजलक्ष्मीबन्धनिगडकटकशङ्कामुपजनयतेन्द्रनीलकेयूरयुगलेन ··· वेष्टितबाहुशिखरम् ··· राजानमद्राक्षीत् Kād. 9.12.

**अतिचपला** (ati-capalā) *f.* a kind of metre भवति हि खलु गतिरतिचपला (अतिजगती) NāṭyaS'ā. 32.220; अतिचपला न चतुर्गुः(? र्गाः) AbhinBhā. iv. 336.27 (*on* 28.218)

**अतिचमत्कार** (ati-camatkāra) *m.* abundant charm एकवृत्तादरः प्रायः पूर्वेषामपि दृश्यते। तत्रैवातिचमत्कारात् SuvṛTi. 3.28.

**अतिचमत्कारिन्** (aticamatkār-in) *adj.* highly relishable, tasty विचित्रसंस्कारमतिचमत्कारिबहुप्रकारवेसव(?वा)रसारम्···अन्नं निष्पादयेत् CaturCin. iii(1). 1163.8.

**अतिचमत्कृत** (ati-camatkṛta) *adj.* extremely pleased or charmed कविराजं नृपः प्राह तद्वाचातिचमत्कृतः PrabhāC. 189.24.

**अतिचमू** (ati-camū) *adj.* victorious over an army चमूमतिक्रान्तोऽतिचमूः Prasā. i. 171.18; हे अतिचमु SiddhāKau. 66A.7.

**अतिचय** (ati-cayá) *m.* piling up in excess मा ते अग्नेऽचयेन मातिचयेनायुरावृक्षि TaiBr. III. x. 3.1.

**अतिचर्** (ati-car-) I. U. [DhātuPā. 1.591 P. with the *upasarga* *ati*; संपृच ··· अतिचरापचरामुपाभ्याहनश्च P. iii. 2.142] **Ai** to transgress, to offend सह वै देवाश्च मनुष्याश्चौदनपचन आसंस्ते मनुष्या देवानत्यचरन् KāṭhS. 8.7; तमपि देवकरम् ··· परम्। अतिचरन्ति अपराधपरा जनाः PadmP. iii. 25.10; तत्र विराधदनुकबन्धप्रभृतयः केऽप्यभिचरन्तीति (v. l. अतिचरन्ति) श्रुतम् MahāviC. 2.9 (9); **Aii** to counteract क्रियासु वः कास्वपि धर्मबाधाः कच्चिन्मुने नातिचरन्ति केचित् Rāgh. 2.15; **Bi** to violate, to be unfaithful to यथाव्रश्चनमास्कन्देत्पत्न्येनमतिचरिष्यतीति विद्यात् ĀpaS'S. ix. 20.3; नातिचरेद्भर्तारम् GautDS. ii. 9.2; यथा चाहं नातिचरे कथंचित् पतीन् MahāBhā. iii. 252.20; पतिं या नातिचरति ··· सा भर्तृलोकानाप्नोति BṛhaspaSm. 193.8; VṛHāriSm. 11.198; नातिचरेद्भर्तारं दृष्टादृष्टफललोभेन ManuBh. i. 494.15 (*on* 5.162); ii. 271.20 (*on* 9.102); त्वं भर्तृशासनमतिचरसि BhāgP. v. 10.7; न प्रेषयेन्नातिचरेद्दण्ड्या(न्) अपि न दण्डयेत्।··· एष हि ब्रह्मबन्धूनां बन्धः BṛDha-

rmaP. ii. 2. 54; ( रामे राज्यं प्रशासति ) नार्यो नात्यचरन्भर्तॄन् BrahmP. 213. 149; SmṛtiCan. iv. 582. 1; ( चरिः ) अतेरुल्लङ्घनानोऽयो: KośaKaTa. 2. 841; **Bii** to wander beyond (the time limit for alms) नित्यं नातिचरेल्लाभे ( v. l. अतिचरेत् ) MahāBhā. i. 110. 13; **C** to cross तं हेमास्तिस्रो दिशोऽतिचेरुः JaimiBr. 2. 62; अन्ये भगणांश्चापि दीपिता अतिचेरुः BhāgP. iii. 17. 14.

**अतिचर** ( ati-cara ) *adj.* transcending विदितवेदितव्यस्य···मनोगोचरातिचरैः···तपःप्रारम्भैः···सातुपरमेष्ठिनोऽप्यतयीमिष्टिं करोमि YaśasCam. ii. 376. 6.

**अतिचरण** ( ati-caraṇa ) *n.* **1** excessive sexual intercourse बहुशश्चातिचरणादन्या बीजं न विन्दति SuśruS. vi. 38. 16; अतिचरणादिषु सर्वास्विलजास्वयमेव क्रमः AṣṭāSaṁ. ii. 325. 14 (6. 39); **2** inconstancy (of the probans) इन्द्रियाद्दिष्वतिचरणमसिद्धयादि च स्याद् विकल्पे TattvMu. 3. 37; अतिचरणं तद्बहिष्कारपक्षे TattvMu. 3. 49; हेतुधर्मस्वधेता चेदतिचरणम् TattvMu. 5. 67 ( comm. अनैकान्तिकत्वम् )

**अतिचरणा** ( aticaraṇā ) *f.* disease of vulva caused by excessive intercourse पवनोऽतिव्यवायेन शोफसुप्तिरुजः स्त्रियाः । करोति कुपितो योनौ सा चातिचरणा मता CaraS. vi. 30. 17 (1941 Ed.); सैवातिचरणा शोफसंयुक्तातिव्यवायतः AṣṭāHr. vi. 33. 31; योनिरोगाः ··· स्याचन्दा चातिचरणा योनिरोगा इतीरिताः SārṅgaS. i. 7. 179; *adj.* ( *f.* ) indulging in sex excessively मैथुनेऽचरणा पूर्वं पुरुषादतिरिच्यते । बहुशश्चातिचरणा तयोर्बीजं न विन्दति RugVi. 62. 9; BhāvPra.( Bhā. ) viii. 69. 12.

**अतिचरत्** ( ati-carat ) *adj.* [ *f.* ati-cárantī ] **i** disregarding अति वै तोः प्रजापतिमचरंस्ता अतिचरन्तीर्वरुणेनाग्राहयत् MaiS. i. 10. 10; KāṭhS. 13. 12; 36. 5; **ii** going too far अल्पमल्पं यथाभोज्यं पूर्वलाभेन जातुचित् । नित्यं नातिचरल्लाभे MahāBhā. i. 110. 13; **iii** using in excess ( कुष्ठनिदानम् ) स्नेहांश्चातिचरतः युगपत् त्रयो दोषाः प्रकोपमापद्यन्ते CaraS. ii. 5. 7.

**अतिचरा** ( aticarā ) *f.* name of a plant *Hibiscus mutabilis* अव्यथातिचरा पद्मा चारटी पद्मचारिणी AmaK. 940; रम्या पद्मवती चातिचरा स्थलरुहा स्मृता RājNi. 152. 7; पद्मचारिण्यतिचरा पद्मा पद्मवतीति च DhanvNi. 152. 2; अव्यथातिचरा पद्मा Vaija. 130. 89; पद्मचारिण्यतिचरा MadaPāNi. 28. 77; SabdaRa.( Vā. ) 1245; पद्मचारिण्यतिचरा व्यथा पद्मा ··· च शारदी BhāvPraNi. 82. 15; KośaKaTa. 1. 2449; अतिचरा पद्मतरौ SabdaRaSaK. 285. 8; सुपुष्करा चातिचरा KalpaK. 312. 562.

**अतिचरित** ( ati-carita ) *adj.* [ *f.* –ā ] **1** transgressed धर्मे विचरतः ( v. l. धर्मोऽतिचरितः ) पीडा सापि द्वाभ्यां नियच्छति MahāBhā. i. App. 81. 141; **2** overstayed ( लग्नस्थे धनपे ) अतिचरिते बहुदिवसं हरणं नो कार्यसिद्धिरीदपि TājiNi. iii(1) (5). 107 (359); *n.* act of going astray, breaking of the rule of conduct, misbehaviour न यदतिचरितं जनेषु केनाप्यपरिमितं ननु भाग्यमेतस्याः SivLi. 7. 62; कथं तेष्वतिचरितं वीरमानिना राघवबटुना JānaPa. 4. 37 (8)

**अतिचरितवै** ( áti-caritavái ) *inf.* to ignore, to show indifference तस्मात् पिता नातिचरितवा इति MaiS. i. 10. 10.

**अतिचर्चा** ( ati-carcā ) *f.* unnecessary or excessive discussion अलमतिचर्चया SyādvāMañ. 11 (167)

**अतिचर्मन्** ( ati-carman ) *n.* thick leather सद्यो व्रणे यथोक्ताभिः क्रियाभिः समुपाचरेत् । कुर्यात्संवरणं चास्य मृदितेनातिचर्मणा Hastyāyur. 209. 16 (2. 16)

**अतिचर्वणा** ( ati-carvaṇā ) *f.* excessive relish ( सात्त्विकाः ) ते च ··· विभावेन रत्यादिगतेनैवातिचर्वणागोचरेणाहता अनुभावैश्च गम्यमाना भावा भवन्ति Kāvyānu.( He. ) 119. 2.

**अतिचर्वितचर्वण** ( aticarvita-carvaṇa ) *n.* chewing of what is already chewed (i. e. repetition) अलमतिशुष्क ( v. l. °चर्वित ) चर्वणेन LaṭaMe. 2. 17 (10)

**अतिचल** ( ati-cala ) *adj.* [ *f.* –ā ] **i** moving very fast, very unsteady, very quick तत्र वातमेवंविधमनारोग्यकरं विद्यात् ··· अतिचलमतिपरुषम् CaraS. iii. 3. 7; समीरणं चातिचलं विलोकयन् RāmC. 5. 39; मध्याह्नपवनदोलितानामतिचला ··· वेल्लतीव शाखिनां छाया UdaySuKa. 45. 28; NaiṣC. 14. 28; **ii** very fickle, very inconstant वदयता परमा तेन जायतेऽतिचलात्मनाम् । इन्द्रियाणाम् ViṣṇuP. vi. 7. 44; ĀdiP. 26. 27.

**अतिचलत्** ( ati-calat ) *adj.* excessively moving अतिचलज्जलदोत्थसुपप्लवम् ··· परिषस्वजे ।··· शरत् Kapphiṇā. 8. 47.

**अतिचलता** ( aticala-tā ) *f.* excessive fickleness तदिदतिचलतां ते किं इगन्तादपाठीत् UjjvaNiMa. 80. 2.

**अतिचलाचला** ( ati-calācalā ) *adj.* ( *f.* ) excessively fickle तदलं राज्यभोगेन लक्ष्मीरतिचलाचला MahāP. 4. 150.

**अतिचाण्डाल** ( ati-cāṇḍāla ) *m.* lower than a cāṇḍāla आरूढपतितोत्पन्नो ब्राह्मणो वृषलेन च । उभौ तावतिचाण्डालौ सगोत्रायां तु जायते LaSātāSm. 59.

**अतिचातुर** ( ati-cātura ) *adj.* very skilled छित्त्वा शीर्षम् ·· कबन्धाख्यातिनो हरेः । कबन्धे योजयामास विश्वकर्मातिचातुरः SkandP. iii(2). 15. 10.

**अतिचातुर्य** ( ati-cāturya ) *n.* great skill अङ्गाद्यु ··· ते ·· अतिचातुर्यपर्यवस्थापितानुश्रवता°···°जनालंकृतसप्तमकक्ष्यम् ···स्वार्यमुर्व भवनम् NīlaVi. 40. 11.

**अतिचापल** ( ati-cāpala ) *n.* great unsteadiness or great fickleness योषितां चातिचापलम् TattvSaṁ. 3579; YogVā. iii. 26. 37; अत्यमतिचापलेन वाचाम् NyāyMa. 254. 3; KāvyPra. 289. 2; अतिचापलं वितन्वन् ···। गुञ्जरयति स्वयमेनाम् ··· शङ्करिव घण्टाम् ĀryāSaSa. 6.

**अतिचापलशालिन्** ( aticāpalaśāl-in ) *adj.* possessed of great fickleness or unsteadiness अतिचापलशालित्वेतिसंदानैकसदनं क्षणमप्ययुक्ता । या सर्वदैव भवता तदुदन्तचिन्ता तान्ति तनोति तव KāvyPra. 289. 2.

**अतिचापल्य** ( ati-cāpalya ) *n.* excessive quickness अत्रान्तरे स मत्कुणोऽतिचापल्यात् खट्वान्तं प्रविष्टः PañcT. 62. 12 (Kosegarten's Ed.)

**अतिचार** ( ati-cāra ) *m.* **A** (moral) transgression, unfaithfulness, violation (of vows) अतिचारं वृष्टां पत्नीम् ··· मार्जयति VaitāSS. 4. 8; मनसा भर्तुरतिचारे त्रिरात्रं यावकम् ··· क्षीरोदनं वा भुञ्जानाधः शयीत VasiDS. 21. 6; अगस्त्यस्याभि( v. l. ति )चारेण युष्माकं वै वपा हुता MahāBhā. i. 109. 15; VāyuP. i. 59. 64; राजद्विद्वातिचाराभ्याम् ···अन्नाम्यं जायते स्त्रियाः ArthŚā. ii. 23. 5 (3. 3); ii. 177. 1 (4. 13); ii. 182. 4 (4. 13); GobhiSm. 3. 4; शङ्का च काङ्क्षा मतिवि(? चि)प्लुता च परस्य दृष्टेरपि च प्रशंसा । भूयः सदानायतनस्य सेवा पञ्चातिचाराः खलु दर्शनस्य VarāṅgaC. 31. 70; अतिचारोऽतिक्रमः धर्मार्थकामेष्वसद्भावः ManuBh. ii. 271. 27 (*on* 9. 102); BṛKathāK. 17. 12; YaśasCam. ii. 417. 13; अतिचारा जिनैः पञ्च गदिताः ··· तीव्रमन्यथामिनिवेशनम् ।··· अतिचारा मताः पञ्च चतुर्थव्रतसंभवाः । हिरण्यस्वर्णयोर्वास्तुक्षेत्रयोर्धनधान्ययोः । कुप्यस्य दासदास्योश्च प्रमाणेऽतिक्रमाद्द्विधा(? भिधाः) SubhāRaSaṁ. 848–51; BṛKathāMañ. ix. 1. 258; अतिचारास्ततो हेयाः ···।क्रोधाद्वन्धच्छविच्छेदोऽधिकभाराधिरोपणम् । प्रहारोऽन्नादिरोधश्च अहिंसायां प्रकीर्तिताः । धनधान्यस्य कुप्यस्य गवादेः क्षेत्रवास्तुनः । हिरण्यहेम्नश्च संख्यातिक्रमः YogŚā. 3. 94; ज्ञानाद्यतिचारशुद्ध्यर्थं यदालोचनादि ज्ञानादीनां वा योऽतिचारस्तत् ज्ञानप्रायश्चित्तादि तत्राकालविनयाध्ययनादयोऽष्टावतिचारा ज्ञानस्य SthānT. 163A. 2; ( शोधिता ) सकृदतिचारालोचनेन ··· सकलातिचारकचवरविरहेण SthānT. 277A. 1; 323B. 14; अतिचारविशुद्धिः ··· भिक्षाचर्यायतिचारजातं तदालोचनार्हम् ··· तपोविशेषेणैवातिचारपारगमनम् AupaSūT. 78. 11; JñātāDhaT. 73B. 5; न रागवन्नो भजसेऽतिचारं नालम्बसे वक्रगतिं कदाचित् ।··· तथापि पृथ्वीतनयोऽसि रूढः GotaSt. 10; स्खलत्येवा ··· अतिचारैः समेष्यति Gurvā. 373; 4. 14; ' ऋत्विगाचार्यौ नातिचरितव्यौ ' इति वचन( ? ने )नातिचारनिषेधात् BhāṭṭDī. iv. 186. 23 (*on* xi. 3. 12); MayūMāli. 826. 6 (*on* xi. 3. 12); **B** excessiveness, superiority अतिचाराद्भृशं भीता भर्तुः सा (गान्धारी) MahāBhā. i. 1112*; तस्यातिचारप्ररूढप्रणयसहकारमञ्जरी सुमञ्जरी नामाग्रमहादेवी YaśasCam. ii. 360. 21; **C** overtaking (of planets), crossing अतिचारे त्रिपक्षं स्याद्वक्रे मासचतुष्टयम् । व्रतोद्वाहौ न कुर्वीत गुरोर्वक्रातिचारयोः AgniP. 121. 6; अतिचारगतो मन्दः पुनर्वक्राध्वसंस्थितः SkandP. iv. 56. 23 ( comm. राशिमुल्लङ्घ्य गतः ); ( शुक्रस्य ) अतिचारोऽष्टवासरान् BhaviP. 321B. 18 (ii (1). 4. 40); GotaSt. 10; दशदिवसपञ्चदिनात्रिपक्षमतिचारवक्रयोर्दद्युः । भौमाद्याः VasiS. 18. 14; TājiNi. iii. 5. 20 (334); सितः···ज्ञः···एषां गुणागुणैः···उदितास्तमितवक्रातिचारु( ? र )रूपैः ViraMi. (Samaya.) 265. 19; 12. 15; 96. 33; NirṇaSi. 223. 2; **D** overlapping or inconstancy मैवं बाधातिचारस्वव्यवहतिमिः स्वोक्तहान्यन्तरोस्त्यात् TattvMu. 4. 95; 4. 24; गर्भदासादौ तथानियमनयोग्येऽतिचारात् SiddhāSi. ii. 101. 3; **E** name of one of the four forms of Kṣetrapāla ( क्षेत्रपालाः ) अतिचारश्च राजा च कपालाख्यो महामनाः । ते दयामाः ĪśānŚiPa. i. 32. 61; cf. अतीचार.

**अतिचारय्** ( ati-cāray ) [ *caus.* ] to mix and administer अस्य ···गन्धोदकावसेकेन वा रसमतिचारयेत् पुष्पचूर्णोपहारेण वा ArthŚā. iii. 173. 8 (12. 5)

**अतिचारिता** ( aticāri-tā ) *f.* **i** (moral) transgression वृद्धतां पतिर्न भजसेऽतिचारिताम् PṛthviVi. 9. 4; **ii** overtaking of planets, PṛthviVi. 9. 4.

**अतिचारिन्** ( aticār-in ) *adj.* [ *f.* –iṇī ] [ Daṇḍu. p. 344; P. iii. 2. 142; JaineVyā. ii. 2. 123; CāndraVyā. i. 2. 96; SaraKaṇṭhā.( Gr. ) i. 4. 207; SiddhaHe. v. 2. 62] **i** transgressing moral laws स्त्री यातिचारिणी गुरुत पिण्डं तु लभेत GautDS. iii. 4. 35; इत्यादिनस्ते दधिरेऽतिचार्यव्यभिचारिसंचार्यपचारिणोऽखम् DvyāśraKā. 12. 35; **ii** surpassing, excelling कुण्डले त्वतिचारिणी । ईदृशी ··· सुरत्ने भवतः कुतः PadmP.( Ra. ) 28. 140; YaśasCam. i. 71. 12.

**अतिचारु** (ati-cāru) *adj.* [*f.* -ī] very charming, very beautiful, very attractive ते चित्रकूटस्य निरीक्ष्य नितिचारुगु । क्रोडन्तः PadmP.(Ra.) 33. 34; कुङ्कुमेनातिचारुणा । लिम्पति स गुरोः पादौ स्वयमेव क्षितीश्वरः BṛKathāK. 22. 31; अतिचारुचन्दनैः ... अलंकृताम् ... विन्ध्याटवीम् NalaCam. 6. 11 (23); स्मरामि तस्यातिचारुचन्द्रोद्गतेः ... अनङ्गोत्सवदिनप्रदोषस्य TilaMañ. 338. 14; 73. 16; विचारेणातिचारुणा । देवमालोकयेत् YogVā. v. 24. 44; वारस्त्रीभिर्वीज्यमानं चामरैरतिचारुभिः (ददर्श बाहुबलिनं सः) TriṣaŚaPuC. i. 5. 74; i. 4. 429; भिक्षा माधुकरी वरम् । अतिचारुर्गौऽप्यनाचारदूताहूता न तु श्रियः PāṇḍaC. 8. 217; VasaViKā. 3. 25; सत्यप्रतिज्ञत्वमतिचारु च सौगते PrabhāC. 124. 25; CaitaCa. 182. 14 (S); अतिचारुचन्द्ररोचिः ... सुरभिः कदानुयास्यति RasiRañ. 107; BhojaڈKu. 65. 21; निधाय पाणौ खनित्रमतिचारु चितार्थम् Hāsyārṇa. 1. 31 (Cappeller's Ed.)

**अतिचारुता** (aticāru-tā) *f.* great charm इहस्पतिमिन्दुं च कुमारस्यातिचारुतया सामिलायौ दृष्ट्वा ViṣṇuP. iv. 6. 24; TilaMañ. 285. 2.

**अतिचार्वङ्गी** (aticārv-aṅgī) *adj.* (*f.*) whose limbs are very charming विलासिन्योऽतिचार्वङ्ग्यो नतुर्लास्यमुत्तमम् MārkP. 129. 9; 85. 45; (माधवी) स्त्रीत्वमतिचार्वङ्गी रत्नभूषणभूषिता BrahmVaiP. ii. 15. 3 = DeviBhāP. ix. 17. 3; अतिचार्वङ्ग्यपि मे...दुनोति गात्रं विरहे प्रियासौ Pañcā. 47. 6.

**अतिचाषि** (ati-cāṣi) *adj.* (*f.*) surpassing (the lustre of) the *cāṣa* bird भुवः ... प्रभां बिभ्रद्भिरतिचाषि वा दीप्राङ्कुर्भानुदासयत् DvyāśraKā. 15. 74.

**अतिचिक्क** (ati-cikka) *adj.* having excessively flat nose अतिचिक्क तेप्यचिकिना युवासिनो निबिडं ममाजिमवलोक्य भाविनः DvyāśraKā. 18. 36.

**अतिचिक्कण** (ati-cikkaṇa) *adj.* [*f.* -ā] I very smooth, very sticky अत्र मृच्छब्देनातिचिक्कणाया भाण्डादिनिर्माणयोग्यायाः कुम्भकारसंस्कृताया मृदः पिण्डोऽभिधीयते comm. *on* KātyŚS xxvi. 1. 4; II very sticky, very stingy तीक्ष्णम् ... व्यसनिनम् ... अतिव्ययशीलमन्यदेशायातमतिचिक्कणं चामात्यं न कुर्वीत NītiVā. 18. 13; *n.* extreme unctuousness शरीरसुस्निग्धतयातिचिक्कणम् ... प्रमेहरूपाणि KalyāKā. 11. 7; *adv.* (ati-cikkaṇam) very smoothly or finely हिङ्गुलम्...प्रत्येकं पलिकं भागं चूर्णयेदतिचिक्कणम् RaseCin. 9. 318 (254. 23)

**अतिचिक्कणचित्त** (aticikkaṇa-citta) *adj.* whose mind is very covetous भद्रमित्रः ... तं न्यासार्पणेऽतिचिक्कणचित्तं निश्चित्य YaśasCam. ii. 347. 3.

**अतिचिक्रमिषत्** (ati-cikramiṣat) *adj.* wishing to cross over cf. अनतिचिक्रमिषत् NidāSū. 178. 1 (10. 4)

**अतिचिगचिगापित** (ati-cigacigāpita) *adj.* extremely clumsy तेनोक्तम् —अतिचिगचिगापितम् (इदं पद्यम्) PurāPraSaṁ. 104. 4.

**अतिचित्** (ati-cit-) I. P. to distinguish, to prefer, to mark out ब्रह्मणा वा चितयेमा जनाँ अति ṚV. ii. 2. 10; iv. 36. 9.

**अतिचित** (ati-cita) *adj.* very much accumulated सबालपाषाणतृणावरोधात् सदान्त्र एवातिचितं मलं यत् । महोदरम् ... करोति KalyāKā. 11. 134.

**अतिचित्र** (ati-citra) *adj.* [*f.* -ā] I very strange, extremely peculiar, very incongruous अर्थोष्मणा विरहितः पुरुषः स एव चान्यः क्षणेन भवतीत्यतिचित्रमेतत् PañcT. 2. 35 (233. 4) = Pāñcā. 144. 24; अन्यस्य स्वरूपसंवेदनमन्यस्य ग्राह्यतेत्यतिचित्रमेतत् NyāyKa. 123. 5; क्षीणे विधौ हरिविलुलकरोऽतिचित्रं गृह्णाति तं द्युमणिमभ्रपिशाच एकः Subhāṣi. 569; अभिरोपयतीन्दुवंशरत्ने...शरासने ज्याम् । अतिचित्रममित्रपार्थिवानामवरूढाजनि सेयमंसकूटात् Acyutarā. 2. 48; II very surprising, extremely marvellous, most wonderful तत्राप्यन्यजन्मोपात्तसंस्कारानुबन्धेन वा पुरुषप्रयत्नेन वा संस्कारातिशयः उपजायत इति नातिचित्रम् Kād. 13. 13; एकविषयोपसंहाराच्चित्तस्यातिचित्रमैकाग्र्यम् DaśKuC. 135. 22; अतिचित्रमिदं महीपतिर्यदकृष्णामवनीं करिष्यति ŚiśuVa. 16. 79; नाममात्रकथा नातिचित्रं हि तपसः फलम् BṛKathāŚloSaṁ. 18. 524; अहोऽतिचित्रं नृपतेश्चरित्रं परं पवित्रं तव किं वदामि DeviBhāP. iii. 22. 24; उपविश पुत्र ममाङ्के नियमेन महीयसातिचित्रेण । अहोऽसि गुणगणोद्गतगौरवसंवादिनानेन KalāVi. 1. 80; कथाभिरतिचित्राभिर्मोदयन्सभ्यमण्डलम् RājTa.(Ka.) 6. 32; सखे नातिचित्रमेतत् Dūtāṅg. 49(1); एकस्यैवातिचित्रस्य वस्तुनः करणेन हि । तत्सामान्यान्यवस्तूनां करणं स भवेत्त्रिधा । विशेषः AlaṅkāKau.(Ka.) 338. 9; मोः स्वामिनेदमतिचित्रम् CaitaCa. 179. 2(8); विश्वत्रय्यां विश्रुतं वस्तुजातं संक्षिप्य प्रायशः सर्वशक्त्या । नेत्रा वाण्या नैपुणात्रिमैनुष्यं शिल्पं साक्षात्कल्पितं वातिचित्रम् Raghunā. 10. 53; III variegated, variously decorated, manifold, various, of different types स्वयमहमतिचित्रैर्नृत्तवादित्रगीतैर्भगवति भवदीयं मानसं रञ्जयामि DeviCatūSt. 58; गृहम् ... विधातव्यम् । प्राग्ग्रीवैरतिचित्रैः शार्दूलजालैर्विभूषितं विविधैः SamarāSū. 31. 125; 66. 31; अतिचित्रैः सुमनोभिः सुमनोभिर्योगिनामिवोपचितम् KamVa. 4. 47; आपीडैरतिचित्रैर्भूषणदानैरदोष(? वै)श्च...धात्रेयिकाम् ... आह्वयेत् KandaCū. add. 23 after iii. 3. 7; *adv.* (ati-citram) in a very wonderful manner, marvellously अतिचित्रं पर्यक्रीडत राजकन्या DaśKuC. 105. 6.

**अतिचित्रकृत्** (aticitra-kṛt) *adj.* causing great wonder (i. e. deliverance) एतानि यानि प्रोक्तानि काशीप्रासिकराणि च । प्राप्य काशीं भवेन्मुक्तो जन्तुर्नान्यत्र कुत्रचित् । अत एव हि तत्क्षेत्रं पवित्रमतिचित्रकृत् SkandP. iv. 25. 43 (comm. अतिचित्रं कैवल्यम्)

**अतिचित्रतर** (ati-citratara) *m.* one of the six varieties of Mārgatāla in which the *kalā* has the duration of two *mātrās* of the *druta* type अतिचित्रतरो मार्ग(? र्गः) कलाश्च द्रुतसंज्ञिकः (? काः) SaṁgīMa. ii. 3. 59.

**अतिचित्रता** (aticitra-tā) *f.* I the state of being very marvellous or wonderful (incongruity) अन्येनान्यस्य कल्नासंभवादतिचित्रता SīvDṛ. 4. 45; II being odd or strange एवं मूढस्य मूढत्वं स्वार्थान्धस्यातिचित्रता KathāSaSāg. x. 5. 247.

**अतिचित्रतेजस्** (aticitra-tejas) *adj.* possessing a very strange or marvellous splendour तत्र कंचिदतिचित्रतेजसं सादिनम् ... । पदयति स ... नृपः SīvLī. 21. 44.

**अतिचित्रधृक्** (aticitra-dhṛk) *adj.* having many pictures (वास्तुः) नाचित्रो नातिचित्रधृक् YuktiKa. 45. 5.

**अतिचित्रपद** (aticitra-pada) *adj.* possessing very wonderful words तत्रातिचित्रपदमत्रभवान् ... सुधीन्द्रान् । ... अग्राह्यत्कृतम् ŚaṅkaDigVi.(Mā.) 10. 114.

**अतिचित्रयोधिन्** (aticitrayodh-in) *adj.* fighting very marvellously अतिचित्रयोधी ... । सुदर्शनः सात्यकिमापतन्तं न्यवारयद्राजवरः प्रसह्य MahāBhā. vii. 94. 6.

**अतिचित्ररूप** (aticitra-rūpa) *adj.* having variegated colours सिंहासनं तत्र सभान्तराले ... नानाविधाभिर्युतिभिर्मणीनाम् नानाविधानामतिचित्ररूपम् । ... भाति Vidvanmo. 8. 75.

**अतिचित्रशब्दशय्या** (aticitra-śabdaśayyā) *f.* very wonderful style अनयोरतिचित्रशब्दशय्यां दधतोः ... । पटुवादमृषेऽन्तरं तटस्थाः न किंचनान्वविन्दन् ŚaṅkaDigVi.(Mā.) 15. 91.

**अतिचित्रशील** (aticitra-śīla) *adj.* whose conduct is very peculiar कृतान्तविजयितिचित्रशीलं त्वां मन्महे न सुलभं च न दुर्लभं च YātrāPra. 6. 109.

**अतिचित्राकृति** (aticitrākṛti) *adj.* of various kinds शुण्वानस्याद्वितीयं निरवधिसहजानन्दसंवित्स्वरूपं मन्वानस्यातिचित्राकृतिप्रतिपिपणाशक्तिरूपोपपत्त्या । विश्वं कृष्णाद्वितीयं भयचकितधिया ध्यायतश्चान्तकाले ज्योतिर्ज्योतिःस्वरूपे भगवति विशति ब्रह्मरन्ध्रं विभिद्य KamVa. 6. 45.

**अतिचित्राङ्ग** (aticitrāṅga) *adj.* having a very much variegated body, having an amazing form सोऽथ हेममृगो भूत्वा सीतादृष्टिपथं गतः । मायावी चातिचित्राङ्गः DeviBhāP. iii. 28. 28.

**अतिचित्राभिधान** (aticitrābhidhāna) *n.* very peculiar statement दुर्विवेकत्वाच्चातिचित्राभिधानमिति SaṅkarKāBh. 198. 1 (*on* iv. 2. 33)

**अतिचित्रार्थ** (aticitrārtha) *adj.* having very wonderful meanings अनेकार्थविशेषैर्यत्सूक्तैः सौष्ठवसंयुतैः । उपेतमतिचित्रार्थैरुदात्तं तच्च कीर्त्यते Nāṭya-Śā. 16. 111.

**अतिचित्रित** (ati-citrita) *adj.* I very marvellous, very wonderful, very strange इमं चन्द्रगतेः श्रुत्वा वृत्तान्तमतिचित्रितम् । लोकधर्मतरं वध्यं विदित्वा भवबन्धनम् PadmP.(Ra.) 30. 55; II very much variegated, greatly decorated पद्मोवाच । ब्रूहि तन्मम किं कुत्र जातः कीर ... तव । पतत्रं कुङ्कुमेन ... अतिचित्रितम् । करोमि KalkiP. ii. 1. 18.

**अतिचित्रीय** (ati-citrīya-) [Denom.] to be the object of great wonder सद्यः संगतानां च सैनिकानां तदयचित्रीयताकारान्तरग्रहणम् DaśKuC. 127. 7; त्रिभुवनसुकृतमयानां पार्थिवानामुत्पत्तौ नातिचित्रीयते ... उपकरणानां सामग्री AvantiKa. 165. 13.

**अतिचिन्त** (ati-cinta) *adj.* full of anxiety, very anxious अतीव चिन्ता यस्मिंस्तत् अतिचिन्तम् JñātāDhaṬ. 36B. 7.

**अतिचिन्तन** (ati-cintana) *n.* excessive anxiety ग्लानिः किं नातिचिन्तनात् DaśRū. 4. 57.

**अतिचिन्ता** (ati-cintā) *f.* great worry or anxiety अश्रुजलनिपतनस्थानगाश्चातिचिन्ताम् (पिटका जनयन्ति) BṛSaṁ. 52. 2; वसुदेवोऽपि दुःखार्तो विललापातिचिन्तया PadmP. iii. 13. 36; शुष्कवादं जलक्रीडामतिचिन्तां च वर्जयेत् Rasā. 18. 119 = RaseCin. 3. 87 (37. 6); तच्छोच्यते दिनकृतेत्यतिचिन्तयेव शोकानतं कलमशालि वनं विपाण्डु Subhāṣi. 1822.

**अतिचिन्ताकर** (aticintā-kara) *adj.* causing much anxiety शौर्यं जनयत्यादीनामतिचिन्ताकरम् AlaṅkāMañ. 188. 7.

**अतिचिन्ताकुल** (aticintākula) *adj.* troubled with excessive anxiety अतिचिन्ताकुलो राजा च्छायायामप्यविश्वसन् । ... श्रद्दधे न स्वजीवितम् RājTa.

(S'ri.) I(7). 182.

**अतिचिन्तामणि** (ati-cintāmaṇi) *adj.* surpassing a wish-yielding jewel बिम्बं श्रीपार्श्वनाथस्य ··· । प्रातिष्ठिपत् शुभे लग्ने मन्त्री श्रीहेमसूरिभिः । अतिचिन्तामणिं प्राणिवाञ्छितातीतवस्तुदम् PrabhāC. 206. 3.

**अतिचिन्तिया** (ati-cintiyā) *f.* great anxiety इच्यासस्त्वतिचिन्तिया । स्याचिन्ता चिन्तया TrikāS'e. i. 7. 6 (comm. इच्यासः अतिचिन्तिया चिन्ता चिन्तया इति चत्वारि चिन्तायाः)

**अतिचिन्वत्** (ati-cinvat) *adj.* searching thoroughly (ढूँढ़येपु) अतिचिन्वत्सु विप्राणां भवनानि:सृतं बहु (धनम्) DevīBhāP. vi. 16. 23.

**अतिचिपिटमुखी** (aticipiṭa-mukhī) *adj.* (*f.*) having a very flat mouth काचवटीं नातिचिपिटमुखीं नात्युच्चमुखीं मसीभाजनप्रायाम् ··· विधाय करीषैरुपरि पुटो देयः RasaCin. 2. 6.

**अतिचिपिटलौहपात्री** (aticipiṭa-lauhapātrī) *f.* very shallow iron container सविडं सप्रासमीशङ्गं (? जं) पात्रे । अतिचिपिटलौहपात्र्या पिधाय संलिप्य वह्निना योज्यम् RasaCin. 3. 23.

**अतिचिर** (ati-cira) *adj.* A much older रोमकसिद्धान्तोऽयं नातिचिरे पौलिशेऽप्येवम् PañcSi. 1. 10; B of a very long duration अतिचिरं कालमहो खलु वयम् ··· नानाविधानि तपांसि वृथा चकृम NīlaVi. 41. 10.

**अतिचिर** (ati-cira) *n.* a very long period (of time); **अतिचिरस्य** (ati-cirasya) [Gen.] for a very long time मनो मन्दस्पन्दं बहिरतिचिरस्यापि विमृशन् न जाने कस्यैषा परिणतिरुदारस्य तपसः S'atTrayi. 308; **अतिचिरात्** (ati-cirāt) [Abl.] A after a very long time शरदि हंसगणस्य ··· । समवगाढुमधौतविनिर्मलं नवसरोऽवसरोऽतिचिरादभूत् HarVi. 3. 74; TilaMañ. 243. 16; तस्यावलेपस्तिमितादस्य पुरः पुरस्कारविवर्जिताभ्यान् । उद्योगमावेद्य रिपोस्तुरङ्गं तूर्णं बभूवेऽतिचिराचराभ्याम् RāmC. 27. 2; तदपि नातिचिरादेव स्फुटीभावमुपैष्यति KāmVa. 2. 14(1); लब्धोमाया इयमतिचिरादर्चिताया: प्रसादात् MayūSam. 2. 36; उत्तान्यतोरतिचिरादपि मन्मथश्रेयावयोर्घटनमत्र कथंचिदासीत् Mukundā. 23; B very late सा लीनगर्भा करिणी प्रसूतेऽतिचिरादपि Hastyāyur. 414. 27 (3. 8); द्वितीयरात्रावतिचिराद् द्वारमागतः स कटकं खटखटापयति PrabaK. 25. 24; C at last, finally [nt, MW]; **अतिचिराय** (ati-cirāya) [Dat.] for a very long time धात्री – तैस्तैः परचित्ताकर्षणमनैर्वचनैः ··· अतिचिरायाचरितोपचारा ··· पुष्पकान्तामुद्दिश्य श्लोकमुदाहार्षीत् YaśasCam. ii. 362. 8; तेजस्ततोऽकरोद्दक्षस्य । नातिचिरायास्तोकं शोणितमुदरस्थमुत्तरायास्तोकम् YudhiVi. 8. 88; **अतिचिरेण** (ati-cireṇa) [Inst.] A for too long a time नातिचिरेण विशेषात् BrahmSū. iii. 1. 23; आशु नात्वतिचिरेण ManvaVi. 1424. 13 (*on* 11. 160); तथ इह ··· योनिमापद्यन्त इति विशेषान्नातिचिरेण BrahmSūBh.(Ma.) 129A. 6 (*on* iii. 1. 25); तद्रूपता च नातिचिरेण AṇuBh. 180. 15 (*on* iii. 1. 23); B with much delay, very late अतिचिरेणागमनस्यैव निषेधात् TattvPrakā. 146A. 9 (*on* iii. 1. 25); द्वितीयरात्रावतिचिराद् (v. l. अतिचिरेण) द्वारमागतः स कटकं खटखटापयति PrabaK. 25. 24.

**अतिचिरकाल** (aticira-kāla) *adj.* lasting for a very long period of time गव्यं क्षीरं सुखोष्णं हितमतिचिरकालातिसारज्वरोन्माद ··· 'कासप्लिहासु KalyāKā. 9. 101; कः खलु महाप्रयासमतिचिरकालं तावद् द्वादशवार्षिकं व्रतचरणमाद्रियेत ManuBh. i. 199. 22 (*on* 3. 1); कण्डूतैर्थः प्रतीकारः प्रतिक्रिया दीर्घकाल इत्यतिचिरकालः JayaMa. 80. 7 (*on* 2. 1); *m.* [in Cpd.] a long period of time अतिचिरकालमनतिक्रान्तकुनृपतिसहस्रसंपर्ककलङ्कमिव क्षालयन्ती यस्य विमले कृपाणधाराजले चिरमुवास राजलक्ष्मीः Kād. 5. 21; केवलमतिचिरकालोपचिता बलवती मे प्रेमप्रवृत्तिरस्याम् Kād. 101. 23; देव्यपि तिलकमञ्जरी जातविस्मया निरीक्ष्य तम् ··· अतिचिरकालदृष्टमिवाप्तमिव हारमीरितानन्दाश्रुवर्षा ··· हृदि समारोपितवती TilaMañ. 405. 4; अतिचिरकालप्रार्थितमनियतकथनीयमात्मसंवेदनम् । सुरतसुखमन्वभूत(? व)म् VasaTi. 31. 1.

**अतिचिरकालजीविता** (aticirakālajīvi-tā) *f.* life for a very long period; longevity कालविद्भिर्विनिर्णीता यस्यातिचिरजीविता । स चेज्जीवति संछिन्नशिरास्तदैवमुत्तमम् YogVā. ii. 8. 18.

**अतिचिरकालम्** (ati-cirakālam) *adv.* for a very long period of time TilaMañ. 248. 11; 225. 13; 263. 23; (पितृगृहे) नातिचिरकालमवस्थानं श्वशुरकोपभयात् JayaMa. 241. 10 (*on* 4. 1); अतिचिरकालमेवं विप्रविविधकष्टभावनायां प्रकृतिविपर्ययादुन्मादः NāṭaLaRaK. 2484.

**अतिचिरतरतिरोहित** (aticiratara-tirohita) *adj.* which has disappeared long ago पदेषु पूर्ववर्णेषु नातिदूरमतिक्रान्तेषु बुद्धयोपसंहर्तुं शक्येषु घटमानमन्त्यवर्णवेलायामनुसंधानं वाक्येषु पुनरतिचिरतरतिरोहिताक्षरपरम्परानुसन्धानमतिक्लिष्टमदृष्टपूर्वमिति NyāyMañ. i. 356. 15.

**अतिचिरदर्शन** (aticira-darśana) *n.* sight (of someone or something) after a very long gap (of time) महीपतिः ··· अतिचिरदर्शनादपरिचितमिव ··· पश्चाद् व्रजता पुरुषेणानुगम्यमानं विजयवेगमपश्यत् TilaMañ. 80. 23.

**अतिचिरदर्शनोत्कण्ठित** (aticira-darśanotkaṇṭhita) *adj.* eager to see (someone) since a very long time पश्यतु त्वां जनः । व्रजन्तु सफलतामतिचिरदर्शनोत्कण्ठितानि लोकलोचनानि Kād. 77. 17.

**अतिचिरदुःखिता** (aticira-duḥkhitā) *adj.* (*f.*) unhappy since a very long time राज्यस्थं त्वां हि बुद्ध्वा सा कथं तेनासि विस्मृता । इति क्रुद्धा शपेज्जातु पुत्रातिचिरदुःखिता KathāSaSāg. ix. 6. 138.

**अतिचिरनिबद्ध** (aticira-nibaddha) *adj.* kept under control or restricted for a very long period of time सत्यमिदमकुशलं यदतिचिरनिबद्धवोढब्रह्मचारिणस्तव कामिनीरत्नं करतललग्नम् Mukundā. 125(9)

**अतिचिरप्रणयिन्** (aticira-praṇayin) *adj.* who has been affetionate for a very long period of time क्षितितलोपसर्पिणा च शिरसा प्रदर्शितादरः कृत्वा प्रणाममतिचिरप्रणयीव स्पष्टगौरवारया गिरा सप्रगल्भमुवाच (कैवर्तनायकः) TilaMañ. 130. 19.

**अतिचिरप्रवृद्ध** (aticira-pravṛddha) *adj.* intensified over a very long period of time अतिचिरप्रवृद्धामर्षोद्दीपितस्य भीमस्य वचनाद् विज्ञापय राजानम् VeṇīSam. 1. 101.

**अतिचिरप्रार्थिता** (aticira-prārthitā) *adj.* (*f.*) sought after for a very long time वक्त्रे मन्दानिलपरिमलं पादयोः पल्लवाभाम् ···न्यस्य यस्यां वधूनाम् लेभे मैत्रीं मधुरतिचिरप्रार्थितां मन्मथेन HamsDū.(Vā.) 73.

**अतिचिरप्रोषित** (aticira-proṣita) *adj.* who has lived away for a very long period of time नगरप्रोषितः ··· अवनिपतिं सबलवाहनमतिचिरप्रोषितपरावृत्तं गोपुरेण निविशमानमवलोकयन्ति TātpaṬ.(Vā.) 115. 5 (*on* i. 1. 3)

**अतिचिरब्रह्मचर्यचरण** (aticira-brahmacaryacaraṇa) *n.* practice of celibacy over a long period of time आवामतिचिरब्रह्मचर्यचरणसमुपजातायतनखलोमादिमन्तौ Bhām. 217. 8 (*on* i. 3. 19)

**अतिचिरम्** (ati-ciram) *adv.* for a very long period of time अतिचिरमेवं दुग्ध ~ साधार्यं तिष्ठेदिति शाण्डिल्यायनः LāṭyāS'S. x. 16. 11; KāśyaS. 318A. 13; तिष्ठेच्चातिचिरं तत्र नैव किंचिदुदीरयेत् ViṣṇuP. iii. 11. 15; MārkP. 26. 6; सर्वः प्रहृष्टो जनः । कश्चिन्नातिचिरं विलम्बयति मां कार्यात्ययाशङ्कया DhūrtaViSam. 6. 21; नातिचिरं गतायां च तस्यामनन्तरमेवेमां भूमिमनुप्राप्तो महाभागः Kād. 178. 6; 7. 12; 102. 2; अतिचिरमुपरि विश्राम्यद्भिरिव वलनविकटं पतद्भिः खुरैः खण्डितभुवि···वाजिनि महति समारूढम् (युवानमद्राक्षीत्) HarṣaC. 36. 9; 165. 4; 264. 17; 330. 12; मत्तनृत्तमिव समीकवीर्थ्यामाचरन्तौ वैरमयाविवातिचिरमयुध्येताम् (तौ) AvantiKa. 108. 7; PadmP.(Ra.) 41. 97; MahāvīC. 6. 61 (185. 8); मा पुनरतिचिरमेवं प्रविधास्यसि कन्दुकक्रीडाम् KuṭṭaMa. 362; AnargharRā. 2. 39(2); विक्रंसोर्यस्य दृष्ट्वा चरणमतिचिरं सप्तयो नैव पूष्णो जग्मुः क्षोभादिवोच्चैर्नभसि EI. i. 156. 1; PrakaPañ. 101. 2; अस्याः । स्मितमतिस मधुजिद्धतु वः कल्मषाणि EI. i. 156. 1; ··· स्मितमतिचिरम्···मां दिदृक्षोः स्मरामि ViddhaS'ā. 3. 3 = SubhāRaK. 17. 59; NalaCam. 4. 9(43); (नरपतिः) आराध्य भगवन्तमतिचिरमादिदेवमागत्य निजसदनम्···निषसाद TilaMañ. 45. 15; 34. 23; 109. 1; 107. 17; 161. 21; 341. 12; 'स्वर्गपुत्रादिवैषयिकसुखमनेकदुःखसंभिन्नं न चातिचिरमनुवर्तते ĀgaPrā. 46. 5; तैस्तैर्विलासैः मदनमदविनोदमुद्यानमतिचिरमनुभूय (मध्याह्नसमयानतिवाहयामास) YaśasCam. i. 527. 7; ii. 315. 20; ii. 418. 2; देवकी कंसेन रुद्धातिचिरं शुचार्पिता BhāgP. i. 8. 23; KalkiP. iii. 12. 28; विधाय च विचित्रमतिचिरं युद्धम् ··· धरायामचेतनः पपात हरिकुलपतिः RāmāCam. 6. 56(3); KaumuMi. 4. 1(4); S'ivārkaMaDi. i. 360. 22 (*on* i. 2. 16); आकाशादिष्वमीयां वसतिरतिचिरं (जीवानाम्) NayaMañ. III. i. 5. 9; KathāK. 124. 26; Rāgh. 2. 62; 3. 67; अतिचिरं पतिगृहकारानिरुद्धतया कदाप्यविज्ञातबहिरङ्गणाः कुलाङ्गनाः SṛṅgāSar. 140(1); अतिचिरमजनि रजनिरिति कालि । सहमविन्दत न हि वनमाली StavMā. 276. 16.

**अतिचिरविपन्न** (aticira-vipanna) *adj.* dead very long ago विलोक्य ···अतिचिरविपन्नपन्नगस्याखिन्ने शिरसि विघोतमानं दिव्यरत्नम् UdaySuKa. 60. 30.

**अतिचिरविप्रयुक्त** (aticira-viprayukta) *adj.* separated for a very long time तत्र महति समरोत्सवे वत्समतिचिरविप्रयुक्ता देवपादा इति ··· नियुज्य ··· उपलब्धवानसि देवपादान् AdbhuDa. 4. 6(1)

**अतिचिरस्थायिन्** (aticirasthāy-in) *adj.* lasting for a very long period of time अतिचिरस्थायी वैरानुबन्धः स्थावराणामपि VasaTi. 6. 6.

**अतिचिरायमाण** (aticirāya-māṇa) *adj.* becoming (apparently) too long (in time), passing very slowly युगमिव निगमय्य कथंचिदतिचिरायमाणानि वासराणि यावदेवं प्रलपितुं प्रवृत्तोऽसि SṛṅgāSar. 116(4)

**अतिचिरायुस्** (ati-cirāyus) *adj.* possessing a very long life अतिचिरायुषं तपोराशिं ददर्श AvantiKa. 144. 11.

**अतिचिरावस्थान** (ati-cirāvasthāna) *n.* staying for a very long time

अतिचिरावस्थाननिर्वेदप्रसुप्ताघोरणाभिः ··· करणिभिराकीर्णं शुकनासगृहद्वारमासाद्य तुरङ्गादवततार Kād. 95. 3.

**अतिचिरेप्सितार्थ** ( aticirepsitārtha ) *m.* object desired for a very long time तं त्वां वयं नाथ···अतिचिरेप्सितार्थम् । दृष्ट्वा गता निर्वृतिमद्य सर्वे BhāgP. viii. 6. 13.

**अतिचिरोपरोध** ( ati-ciroparodha ) *m.* obstruction for a very long time अतिचिरोपरोधसंवर्धितप्रतिघानलब्धतिकरविशेषभीषणज्वालाकलापदुरापमपि परिवृत्य जातवेदसम् NīlaVi. 21. 16.

**अतिचिरोद्धृत** ( ati-ciroddhṛta ) *adj.* picked up long ago नातिचिरोद्धृतानां च धातुविषां धातकीकुसुमानां गौणीरपुणिता: ··· लोकेनादाय व्रजता ··· व्याप्तदिगन्तरम् ··· वनग्रामकं ददर्श HarṣaC. 305. 12.

**अतिचिरोपभोग** ( ati-ciropabhoga ) *m.* enjoyment for an excessively long time अतिचिरोपभोगपरिश्रान्तिगरिमविश्रान्ततनुलतां विभावरीं दधानः Yātrā-Pra. 4. 147(4)

**अतिचिरोपरुद्ध** ( ati-ciroparuddha ) *adj.* obstructed for an excessively long time कतिचिदतिचिरोपरुद्धकण्डूलदोर्मण्डलतया ··· पर्यवसाययितुमिव भूधरानकुलिस्फोटेन NīlaVi. 15. 18.

**अतिचिरोषिता** ( ati-ciroṣitā ) *adj.* ( *f.* ) staying for an excessively long time ततस्तां प्राह चार्वङ्गीं पिता नातिचिरोषिताम् MārkP. 77. 17.

**अतिचूर्ण** ( ati-cūrṇa ) *n.* 1 fine powder पिबेत्तथा नागबलातिपूर्ववलातिचूर्णं पयसा प्रभाते KalyāKā. 6. 51; 2 very short word ( i. e. uncompounded ) नातिचूर्णपदैर्युक्ता···समत्वात् समता मता NāṭyaS'ā. 19. 100.

**अतिचूर्णित** ( ati-cūrṇita ) *adj.* very much crushed ( i. e. destroyed ) बिभीषण: । पादेनाधर्षयद्विप्रं स विप्रोऽप्यतिचूर्णितः PadmP. iv. 100. 145.

**अतिचृत्** ( ati-cṛt- ) VI. P. to stick on, to fasten अर्हज्जातस्य यन्नाम तेन त्वाति चृतामसि AV. v. 28. 12.

**अतिचेष्ट्** ( ati-ceṣṭ- ) I. A. to make excessive effort वृत्त्यर्थं नातिचेष्टेत Hitopa. 1. 139.

**अतिचेष्टित** ( ati-ceṣṭita ) *n.* extra-ordinary deed or action विचित्रमतिचेष्टितं श्रयति संसृतौ जन्मवान् SubhāRaSaṁ. 224; यानपानातिचेष्टितैः । ··· प्लीहा च्युतः स्थानाद्विवर्धते AṣṭāSaṁ. i. 291. 17 (3. 12); यज्ञैर्दानैस्तपोभिर्वा संग्रामे चातिचेष्टितैः MārkP. 19. 29; *adj.* possessing extra-ordinary deeds श्रोतुमिच्छामि चरितं श्रूयते सोऽतिचेष्टित: MārkP. 130. 2; अलघावतिचेष्टिता: ··· मुनिलोका: समुपासते स सन्ध्याम् Rāvaṇā. 5. 21.

**अतिचोदित** ( ati-codita ) *adj.* greatly impelled स तथेति ब्रुवन्नेव दैवैरप्यतिचोदितः BrahmP. 11. 17.

**अतिचोर** ( ati-cora ) *m.* super-thief न चातिचोरा न च दुष्टदुर्गगा: KalyāKā. 2. 36.

**अतिचौर** ( ati-caura ) *m.* super-thief शिष्य: । ··· चौरस्याप्यतिचौरश्चरति सदा वञ्चकस्य गुरो: Deśopa. 8. 27.

**अतिचौर्य** ( ati-caurya ) *n.* big or excessive theft तेपाममूनि च फलानि वै । ··· अतिचौर्यमतिक्रोध: NāraS. 31. 14; [ Abl. ] very secretly शिशुम् ··· अनयत्तगराद्वहिर्निशायामतिचौर्यात् Raghunā. 8. 29.

**अतिच्छत्र** ( ati-cchatra ) *m.* 1 mushroom, a kind of vegetable छत्रातिच्छत्रक्षीराकैः ··· । दत्तेन मासं प्रीयन्ते पितरः ViṣṇuDhaP. i. 141. 41; 2 *Barleria longifolia* छत्रातिच्छत्रवीरणा: ( एवमादीनि विज्ञेयो मधुरो गण: ) MatsyaP. 217. 47; छत्रातिच्छत्रपालघ्नौ मालातृणकभूस्तृणे AmaK. 982; 3 a species of water plant जलतृणविशेष: [ S'abdaKaDru. ]

**अतिच्छत्रक** ( ati-cchatraka ) *m.* *Petrospermum suberifolium*, tree with an umbrella shape छत्रवृक्ष: छातारियाविष इति ख्यात: S'abdaKaDru.; 2 *Andropogon schoenauthus, Pfychotic ajowan*, a kind of sweet grass पालघ्नो गोमयप्रेइं छत्रातिच्छत्रकावपि भूतृणं च वियन्मूलम् KoṣaKaTa. 1. 4337; अतिच्छत्रको भूतीके ApūNā. 11B. 1.

**अतिच्छत्रका** (ati-cchatrakā) *f.* name of the plant *Barleria longifolia* सहचरी शतपुष्पा सितच्छत्रातिच्छत्रका S'abdaRa.(Su.) 4. 220; छत्रातिच्छत्रके विचाद्रक्षोघ्ने कन्दसम्भवे KalpaK. 316. 594.

**अतिच्छत्रा** ( ati-cchatrā ) *f.* 1 *Anise* ( *Aisum* or *Anethum sowa* ) अतिच्छत्रां पलङ्कषाम् CaraS. vi. 9. 46 (1941 Ed.); काचन महौषधी सोमसमवीर्यां ··· छत्रातिच्छत्राकरेणु: SuśruS. iv. 30. 5; शतपुष्पा सितच्छत्रातिच्छत्रा मधुरा मिसि: AgniP. 362. 66; 2 the plant *Baleria longifolia* छत्रातिच्छत्रा श्रावणी महाश्रावणी CaraS. iii. 8. 139; छत्रा अतिच्छत्रा मेदा महामेदा CaraS. vi. 14. 6; वचां छत्रामतिच्छत्राम् AṣṭāSaṁ. i. 186. 17 (1. 38); 3 sesamum seed छत्रामतिच्छत्रां सकर्कटीम् ··· एतत्सर्वं समाहृत्य प्रदेहं तस्य कारयेत् Hastyāyur. 256. 21 (2. 47)

**अतिच्छन्द** ( ati-cchanda ) *adj.* 1 who has surpassed or overcome desires अतिक्रान्तं यतश्छन्दमतिच्छन्दमिदं ततः BṛĀraUBhVā. iv. 3. 1297; अतिच्छन्दमिच्छावर्जितम् S'ivārkaMaDī. ii. 240. 20 (*on* iii. 2. 9); 2 violation of Vedic principles अतिच्छेदा( v. l. च्छन्दा )तिवादाभ्यां स्मयोऽयं समुपागतः MahāBhā. xiii. 121. 9; *m.* name of a metre ऋषिर्यमोऽस्यातिच्छन्दो विष्णुरेवास्य देवतम् ĪśānS'iPa. i. 35. 132; तदधिकोनक्षराणां त्वतिच्छन्दः कृतिच्छन्दः पदादिनैव व्यवहार: BhaṭṭCan. 107. 14 (*on* xvi. 2. 2)

**अतिच्छन्दस्** ( áti-cchandas ) *f.* 1A name of a type of Vedic metre which is longer than the normal metres ( i. e. having more than twelve syllables in a foot ) रेवत्सामातिच्छन्दा उ छन्दोऽजातशत्रुः स्योना नो अस्तु TaiS. IV. iv. 12. 4; वर्ष्म वा एषा छन्दसां यदतिच्छन्दाः TaiS. V. ii. 1. 5; V. iii. 8. 3; VI. i. 9. 4; अतिच्छन्दा वै सर्वाणि छन्दांसि TaiS. VI. i. 9. 4 = TaiBr. I. vii. 9. 6; अतिच्छन्दा इन्द्रियं बृहदृषभो गौर्वयो दधुः VājaS. 21. 22; धेनवोऽतिच्छन्दसे VājaS. 24. 13; अतिच्छन्दसं छन्द इन्द्रियं बृहत् ··· दधत् VājaS. 28. 34; अतिच्छन्दाइछन्दः AitBr. 22. 7 (584); मरुतश्च त्वाङ्गिरसश्च देवा अतिच्छन्दसा ··· आरोहन्तु AitBr. 38. 1 ( 930 ); अथो खो वै ज्येष्ठश्च देवानामतिच्छन्दाइछन्दसाम् KauṣīBr. 25. 13 (118. 20); तद्वा अतिच्छन्द:सु भवति ṢaḍviBr. iii. 1. 16; एषा वै सर्वाणि छन्दांसि यदतिच्छन्दाः S'atBr. V. iv. 3. 22 = XIV. iii. 1. 11; अतिच्छन्दा वै छदिश्छन्दः सा हि सर्वाणि छन्दांसि S'atBr. VIII. ii. 4. 5; साध्याश्चाप्त्याश्चातिच्छन्दसं समभरन् । तां ते प्राविशन् JaimiBr. 1. 283; अथ गायत्री एकपदाम् ··· विराजमतिच्छन्दसम् ··· इत्येतानि मृगच्छन्दसानि प्राजायत JaimiBr. 3. 324; प्राजापत्या अतिच्छन्दस: DevaBr. 2. 9; अतिच्छन्दाइछन्देदेर्थ DevaBr. 3. 19; अतिच्छन्दाइछन्दस: ĀpaS'S. xiv. 4. 16; MānS'S. 90. 7; शिशिरोऽतिच्छन्दास्त्रयस्त्रिंशस्तोमो रैवतं साम Nir. 7. 11 (138. 3); द्वावतिच्छन्दसां वर्गा उत्तरौ चतुरुत्तरौ ṚPrāti. 16. 53; प्राजापत्या त्वतिच्छन्दा: ṚPrāti. 17. 7; अनुष्टुभमतिच्छन्द:स्ववदध्यात् KarmaNi. 9A. 11; 1B verse in *aticchandas* metre अभि त्यं देव सवितारमित्यतिच्छन्दसर्चा मिमीते TaiS. VI. i. 9. 4; अतिच्छन्दसः शंसति AitBr. 16. 3 (440); अतिच्छन्दसाहवनीयमुपतिष्ठते PañcBr. iv. 9. 1; v. 2. 10; तां ते संपदं मोहयन्ति येऽतिच्छन्दोभिर्यजन्ति KauṣīBr. 23. 4 (105. 11); अभि त्यं देवम् ··· इत्यतिच्छन्दसा वैश्वदेवं प्रतिपद्यते KauṣīBr. 23. 8 (106. 22); ता उ एव द्वानवतिरतिच्छन्दस: JaimiBr. 2. 48; अतिच्छन्दा: प्रथमा ( ऋच् ) S'āṅkhāĀ. 2. 5 (6. 27); पट् सप्तेन्यतिच्छन्दसाम् S'āṅkhāS'S. vii. 27. 13; अथैनमतिच्छन्दसर्चा मिमीते BaudhS'S. i. 171. 9; ĀpaS'S. x. 24. 8; xxi. 9. 15; 2 name of an altar brick placed with recitation of a *mantra* in *aticchandas* metre अतिच्छन्दसमुपदधाति TaiS. V. iii. 8. 3; उष्णिहः पुरस्तादुपदधाति ··· अतिच्छन्दसमुत्तरतः BaudhS'S. ii. 43. 13; अतिच्छन्दसं मध्ये ĀpaS'S. xvii. 4. 10; पुरीपवत्या: पूर्वामतिच्छन्दसम् KātyS'S. xvii. 12. 16; *n.* name of a type of Vedic metre which is longer than the normal metres चौर्वं देवता ··· अतिच्छन्दश्छन्द: GopaBr. ii. 6. 11; त्रयोदशादीन्यतिच्छन्दांसि चाहुः MahāBhā. iii. 134. 20; इदानीमतिजगती ··· अतिधृतिश्चेति सप्त अतिच्छन्दांसि एकैकपादाक्षरवृद्धया क्रमेणोद्दीयन्ते MṛtaSaṁ. 194. 7 (*on* 7. 1); मन्त्रोऽयं वज्रगान्धारी ··· अतिच्छन्दस्तथा विष्णुर्दुर्गा चास्याधिदैवतम् ĪśānS'iPa. i. 43. 73 (309. 2); *adj.* 1 beyond the normal metres अतिच्छन्दा वै प्रजापति: KauṣīBr. 23. 4 (104. 22); तेन तेऽतिच्छन्दसो भवन्ति KauṣīBr. 23. 4 (105. 8); ĀśvaS'S. I. iv. 12. 1; 2 beyond or free from worldly desires, exceeding thought or will तद्वा अस्यैतत् । अतिच्छन्दोऽपहतपाप्माभयम् रूपम् S'atBr. XIV. vii. 1. 22; BṛĀraU. iv. 3. 21; अतिच्छन्दा अतिच्छन्दमित्यर्थ: रूपपरत्वात् । छन्द: काम: अतिगत: छन्द: यस्माद्रूपात् तदतिच्छन्दं रूपम् BṛĀraUBh. 568. 18 (*on* iv. 3. 21); 3 beyond enclosure or cover ( of veins ) नाड्याच्छादनाभावोऽतिच्छन्द: AṇuBh. 98. 23 (*on* i. 3. 42); 4 violating Vedic traditions or injunctions [ APTE ]

**अतिच्छन्दस्त्व** ( aticchandas-tva ) *n.* the real significance of the name Aticchandas ( longer than the usual metres ) छन्दसां वै यो रसोऽत्यक्षरत्सोऽतिच्छन्दसमभ्यत्यक्षरत्तदतिच्छन्दसोऽतिच्छन्दस्त्वम् AitBr. 16. 3 (440)

**अतिच्छन्दादिलक्षण** ( aticchandādi-lakṣaṇa ) *adj.* having the characteristic of transcending desires and so on यत एवमिदं वस्तु अतिच्छन्दादिलक्षणम् BṛĀraUBhVā. iv. 3. 1355.

**अतिच्छन्दोक्तिबाध** ( aticchandokti-bādha ) *m.* contradiction of the statement of *aticchanda* अतिच्छन्दोक्तिबाध: स्याद्रस्तुतन्त्रत्वहेतुत: BṛĀraUBhVā. iv. 4. 451.

**अतिच्छन्ना** ( aticchannā ) *f.* a kind of plant यवगोधूमचूर्णानि ··· अतिच्छन्नामित्येतानि समाहरेत् Hastyāyur. 606. 22 (4. 5)

**अतिच्छातत्वगावृत** ( aticchātatvag-āvṛta ) *adj.* covered over with very thin skin धिगलन्ताशुचिं देहम् ··· अतिच्छातत्वगावृतम् PadmP. (Ra.) 39. 118.

**अतिच्छान्दस** ( aticchāndasa ) *adj.* expert in *aticchandas* metres i. e. metres beyond (i. e. longer than) the *jagatī* metre श्यामान्यतिच्छन्दांसि रोचनाभाः कृतय इत्येवमधीयतेऽतिच्छान्दसाः MṛtaSaṁ. 38. 12 (*on* 3. 66)

**अतिच्छिद्र** ( ati-cchidra ) *adj.* having big holes अतिच्छिद्रेऽधिके रूपाद्‌वतीर्णप्रवाहणात् AṣṭāSaṁ. ii. 66. 4 (4. 10)

**अतिच्छिद्रदशना** ( aticchidra-daśanā ) *adj.* ( *f.* ) whose teeth are far apart न चातिच्छिद्रदशनाम् ( कन्यामुद्वहेत् ) ViṣṇuP. iii. 10. 22.

**अतिच्छिद्रयुत** ( aticchidra-yuta ) *adj.* having a very large hole प्रवृत्त्यतिच्छिद्रयुते द्रवं द्रुतम् KalyāKā. 22. 97.

**अतिच्छिन्न** ( ati-cchinna ) *adj.* extremely impoverished, completely broken, greatly injured जीवितं ह्यप्यतिच्छिन्नः संत्यजत्येकदा नरः MahāBhā. xii. 97. 14.

**अतिच्छिन्ना** ( aticchinnā ) *f.* a kind of Guḍūcī (*Cocculus cordifolius*) पिण्डामृता त्वतिच्छिन्ना शत्याभा कन्दरोहिणी KośaKaTa. 1. 3713.

**अतिच्छेका** ( ati-cchekā ) *adj.* ( *f.* ) very skilful भर्तुर्विपदमाच्छेत्तुमतिच्छेकाः कुलस्त्रियः PāṇḍaC. 7. 464.

**अतिच्छेद** ( ati-ccheda ) *m.* incongruity अतिच्छेदातिवादाभ्यां स्मयोऽयं समुपागतः MahāBhā. xiii. 121. 9.

**अतिच्छेद्य** ( ati-cchedya ) *adj.* to be greatly injured or harmed नामित्रो विनिकर्तव्यो नातिच्छेद्यः कथंचन MahāBhā. xii. 97. 14.

**अतिछत्र** ( ati-chatra ) *m.* kind of grass, kind of plant (kṣuraka) Vaija. 64. 234; ParyāMu. 1045; mushroom, kind of water-plant, SabdaRa. (Su.) 4. 266; [PW, MW]

**अतिछत्रक** ( atichatra-ka ) *m.* kind of plant, ParyāMu. 16. 10; ParyāRaMā. 401 (v. l.); AbhidhāMañ. 190. 3.

**अतिछत्रा** ( atichatrā ) *f.* Anise (*Anisum* or *Anethum sowa*) or the plant *Barleria Longifolia* ApūNā. 42B. 2.

**अतिजगति** ( ati-jagati ) *adj.* thirteen अतिजगतिभिर्धार्कानस्तमेति⋯सौरः PañcSi. 18. 81 (comm. अतिजगतिभिस्त्रयोदशदिनैः)

**अतिजगती** ( ati-jagatī ) *f.* **1 A** name of a class of Vedic metres consisting of four lines, each containing thirteen syllables (thus constituting the *aticchandas* class of metres (*lit.* beyond Jagati) यदेषा चतुर्थेऽह्न्यतिजगती क्रियतेऽनपभ्रंशाय PañcBr. xii. 10. 3 = xxi. 9. 14; प्रथमातिजगत्यासां सा द्विपञ्चाशदक्षरा ṚPrāti. 16. 53; अतिजगती नाम द्विपञ्चाशदक्षरं छन्दः Jānāśra. 4. 59 (1); 1. 2(5); द्वापञ्चाशदक्षरम्, अतिजगती (छन्दः) MṛtaSaṁ. 41. 7 (*on* 4. 7); सर्गबन्धो महाकाव्यम् ⋯ शक्वर्यातिजगत्यातिशक्वर्या त्रिष्टुभा तथा AgniP. 336. 26; त्रिष्टुभं जगती चैव तथातिजगती मता । ⋯ DevīBhāP. xii. 1. 17; तु(?त्रि)ष्टुप् च जगती तद्वत्ततोऽतिजगती मता ।⋯एतासां छन्दसां संख्या ĪśānŚiPa. i. 1. 85; भवेदतिजगत्यां तु सा ध्रुवा परिवर्तनी NāṭyaŚā. 5. 92; 14. 49; अतिजगती त्रयोदशाक्षरा AbhinBhā. i. 234. 18 (*on* 5. 88); VṛttaRa. 1. 19; तथातिजगती शक्वर्यैन्या स्यादतिशक्वरी Mānaso. iv. 2. 219; Liṅgānu. (Ha.) 12. 11; Chandonu. 2. 4; 2. 194; जगत्यतिजगत्योस्तत् संकृत्या वापि तद्भवेत् BhāvPra.(Śā.) 273. 15(9); ChandoMa. 2. 158; KalpaK. 78. 90; KośaKaTa. 1. 1405; **1 B** verse in *atijagati* metre अतिजगतीषु स्तुवन्त्यह उत्क्रान्त्यै PañcBr. xii. 10. 21; त्रैशोकं नाम साम अतिजगत्यामुत्पन्नम् ŚābaBh. 1712. 12 (*on* ix. 2. 21); त्रैशोकस्य सप्तकृत्वोऽभ्यासः । तस्मिन्नभ्यस्यमाने सप्तातिजगत्यो भवन्ति ṬupṬ. 209. 6 (*on* ix. 2. 24); ŚāstrDī. 605. 3 (*on* ix. 2. 5); NyāyMāVi. 439. 19 (*on* ix. 2. 5); BhāṭṭDī. iii. 103. 14 (*on* ix. 2. 5); **1 C** (term) denoting the number *thirteen* तु(त्रि)ष्टुप् च जगती तद्वत्ततोऽतिजगती मता ।⋯ एतासां छन्दसां संख्या कथिदत्र विधीयते ĪśānŚiPa. i. 1. 85; **2** *adj.* ( *f.* ) excelling the world (by its merit or beauty) भावस्थैः ⋯ शुभापितैस्त्वम् ⋯ हरसि मनांसि कामुकानां सुव्यक्तं ह्यतिजगती प्रहर्षिणी च NāṭyaŚā. 15. 84.

**अतिजगतीकर** ( atijagatī-kara ) *adj.* measuring thirteen cubits रामेषुमुनिनन्देश्च रुद्रातिजगतीकराः । अतिशक्वरिकात्यष्टिकैः ĪśānŚiPa. ii. 50. 9.

**अतिजगतीच्छन्दोवृत्त** ( atijagatīcchandovṛtta ) *n. atijagati* metre अतिजगतीछन्दोवृत्तानि शतमष्टौ सहस्राणि द्व्यधिका नवतिः पुनः (S192) [Bharatakośa]

**अतिजगतीतुङ्गशूल** ( atijagatītuṅga-śūla ) *n.* spike of thirteen cubits' height नन्दरुद्रातिजगतीतुङ्गशूलान्यनुक्रमात् ĪśānŚiPa. ii. 45. 35.

**अतिजगतीबहुत्व** ( atijagatībahu-tva ) *n.* manifoldness of *atijagati* verses अतिजगतीबहुत्वं दर्शयति ŚābaBh. 1713. 12 ( *on* ix. 2. 24 ); अतिजगतीबहुत्वादनुवादस्वरूपस्य वर्तमाननिर्देशस्योपपत्तेः ŚāstrDī. 605. 8 (*on* ix. 2. 5); 605. 6 (*on* ix. 2. 5); श्रूयमाणमतिजगतीबहुत्वमन्यथा नोपपद्येत NyāyMāVi. 439. 22 (*on* ix. 2. 5); त्रैशोकातिजगतीबहुत्वयोर्विधाने वाक्यभेदः BhāṭṭDī. iii. 103. 21 (*on* ix. 2. 5); गौणत्वातिजगतीबहुत्वस्य ग्रहणेऽपीह न गौणम् MayūMāli. 606. 4 (*on* ix. 2. 6)

**अतिजगतीसंख्य** ( atijagatī-saṅkhya ) *adj.* numbering thirteen रुद्रातिजगतीसंख्यैर्हस्तैः स्याद् द्वितलं पुनः ĪśānŚiPa. ii. 30. 50.

**अतिजगतीहस्त** ( atijagatī-hasta ) *m.* thirteen cubits नन्दरुद्रातिजगतीहस्तैर्हारा भवन्ति हि ĪśānŚiPa. ii. 35. 48.

**अतिजगत्यंश** ( atijagaty-aṁśa ) *m.* thirteen *aṅgulas* स्तनाद्योऽतिजगत्यंशैर्नन्दांशैः स्यात्प्रतिस्तनम् ĪśānŚiPa. ii. 42. 12.

**अतिजगत्यन्त** ( atijagaty-anta ) *adj.* ending in the Atijagati metre बार्हतो बृहतीमुखः । जगत्यतिजगत्यन्तः ṚPrāti. 18. 8.

**अतिजगत्यपेक्षा** ( atijagaty-apekṣā ) *f.* [Inst.] as compared to the Atijagati metre बृहत्योरतिजगत्यपेक्षया न्यूनत्वेन विलेशस्यासंभवादिति ध्येयम् MayūMāli. 605. 8 (*on* ix. 2. 5)

**अतिजघन** ( ati-jaghana ) *adj.* [ *f.* -ā ] **1** (woman) with large hips न त्वया सदृशी लोके कामिनी विद्यते क्वचित् । मध्यक्षामातिजघना MatsyaP. 20. 30; PadmP. v. 10. 75; **2** middle part of which is excessively big or great तिरश्चेङ्कुरनुपरिष्टः ⋯ अतिजघनैः तरिनिकरैः अविगतबहुघनसंतोषितहृष्णपरिवृहगाढपरप्रेमास्पदीभूतः ⋯ मुखेन कञ्चन समयमनैषीत् ĀnandRa. 3. 24(10)

**अतिजघन्य** ( ati-jaghanya ) *adj.* lowest, vilest तस्मान्यदतिजघन्यमपि हृदयमवतरेदित्यलमसन्दग्धगोष्ठ्या NyāyMañ. ii. 198. 21.

**अतिजघन्यत्व** ( atijaghanya-tva ) *n.* the state of being most insignificant अर्धजरतीन्यायस्यातिजघन्यत्वादित्युपरम्यते SiddhāTa. 12. 4; VaiyāSiMañ. 143. 11; नूपुरोपोत्सर्गकालादौ कर्णोपवीतधारणादि न काम्यं फलश्रवणात् विश्वजिन्न्यायस्यातिजघन्यत्वात् ViraMi. 36. 10 (*on* 1. 17)

**अतिजङ्घाल** ( ati-jaṅghāla ) *adj.* very swift अतिजङ्घालमुत्तालफालग्रस्तनभस्तलम् । तेरश्चीयमनल्पीयः प्रेक्षांचक्रे समन्ततः PāṇḍaC. 9. 228.

**अतिजटाधर** ( atijaṭā-dhara ) *adj.* bearing a huge matted hair (*on* the head) कृशः कृष्णतनुर्व्यासः पिङ्गलोऽतिजटाधरः CaturCin. ii(1). 121. 12.

**अतिजठरा** ( ati-jaṭharā ) *adj.* ( *f.* ) [ v. l. for **अतिजरठा**, ŚiśuVa. 4. 29]; **1** very hard [nt]; **2** very old [nt]

**अतिजड** ( ati-jaḍa ) *adj.* **1 A** exceedingly or extremely foolish or stupid, extremely dull, अवनीभृतां त्वमपहाय गणमतिजडः समुन्नतम् । नीचनियतमिह यच्चपलो निरतः स्फुटं भवसि निम्नगासुतः ŚiśuVa. 15. 21; ViṣṇuDhaP. ii. 131. 14; दुर्गन्धिरप्यतिजडोऽपि गृहीतवाक्यः । पूर्वानुभावजयिनो भवति प्रभावाद् यस्य स्तुमस्तमतिसंस्तवमप्रतवर्ग्यम् RājTa.(Ka.) 8. 2356; अमीषवाचनो वज्रो बभूवातिजडेष्वपि PariPar. 12. 188; 2. 680; SiddhāTaVi. 396. 20; तिरश्चोऽपि तन्मध्येऽतिजडस्य पशोरपि Bhāsk. ii. 131. 18 (*on* ii. 3. 14); **1 B** extremely sluggish श्रुवा द्राडं दुहित्रा निहतमतिजडोऽप्यागतोऽद्य हर्षात् ⋯ हिमाद्रिः CaṇḍiŚ. 58; Acyutarā. 10. 3; **2** most insentient अतिजडोऽपि चन्द्रोद्यानप्रभृतिस्त्वविश्रान्तोऽपि ( v. l. स्वविश्रान्तोऽपि ) वर्ण्यमानोऽवश्यं चित्तवृत्तिविभावतां त्यक्त्वा काव्येऽनास्थेय एव स्यात् Loc. 78. 13 (*on* 2. 6); **3** extremely cool, ŚiśuVa. 15. 21; **4** very heavy to digest हृदकुल्याजलनिर्झरतडागवापीजलेषु ये मत्स्याः । तेऽतिजडा नादेया यथोत्तरं लघुतरास्तु नादेयाः BhojanKu. 175. 6.

**अतिजडता** ( atijaḍa-tā ) *f.* extreme dullness त्रिरभिधानमेवमप्यप्रतिपद्यमानस्यातिजडतया न वादेऽधिकार इत्यभिसंधिमत इति TātpaṬ.(Vā.) 720. 1 (*on* v. 2. 16)

**अतिजडत्व** ( atijaḍa-tva ) *n.* absolute stupidity अतिजडत्वेन पुरुषो हि बाह्यवस्त्वपि स्वात्मत्वेनाभिमन्यते Bhāsk. ii. 235. 10 (*on* iii. 1. 8)

**अतिजडनेत्रमरीचि** ( atijaḍa-netramarīci ) *adj.* rays of whose eyes have become extremely dull ज्वलद्दवतिमिरातपावलैरतिजडनेत्रमरीचिरंशुमद्भिः । ⋯ उदकमथानभिमन्यसे मरीचीन् SubhaDha. 1. 10.

**अतिजडमानस** ( atijaḍa-mānasa ) *adj.* of a very dull mind अनेको मृत्युमायाति नरोऽतिजडमानसः PadmP.(Ra.) 32. 144.

**अतिजत्रूर्ध्वगत** ( atijatrūrdhvagata ) *adj.* (disease) existing in the region well above the collar bone धूमः ⋯ अतिनिद्राकथनातिजत्रूर्ध्वगतवातकफव्याधिप्रशमाय प्रयुज्यते AṣṭāSaṁ. i. 158. 12 (1. 30)

**अतिजन** ( ati-janá ) *adj.* **1** (a region or place) which lies beyond human inhabitation, what is devoid of men यदिमं लोकं पुनरेनाप्यवरोहेदतिजनं॰ वा गछेद्वा मायेव MaiS. iv. 4. 9 = iv. 4. 10; PañcBr. xviii. 10. 10; तं ततोऽतिजने विसृजेत् ChāndoU. vi. 14. 1; सदसत्कर्मचक्रके । भ्रमति स्विरक्षदात्मसंस्थानोऽतिजनेऽपि सन् PārśvC. 4. 139; Ekāva. 3. 1(73) (95. 1)

**अतिजन्यवयस्या** ( atijanya-vayasyā ) *adj.* ( *f.* ) surpassing the friends (of the bridegroom) escorting the bride अतिजन्यवयस्यास्ये चक्रे हाला मृगीदृशाम् DvyāśraKā. 17. 115 (comm. अतिजन्यवयस्या जनीं वधूं वहन्ति जन्या

जामातुः स्निग्धा वयस्याः सख्यो द्वन्द्वे ता अतिक्रान्ता तत्तुल्येत्यर्थः । जामातृवयस्याः स्वसख्योऽपि हि वधूमुखेषु कस्तूरीलेखां कुर्वन्ति )

**अतिजप** (ati-japa) *m.* additional murmuring of a spell कृच्छ्रेऽतिजपे च संख्यां वैशम्पायन आह (शतमष्टशतं वापि सहस्रमपि वा परम्) Aparā. 1246. 13 (*on* 3. 325)

**अतिजप्या** (ati-japyā) *adj.* (*f.*) fit to be recited as additional ऋचस्तत्र तत्रातिजप्या बुधेन । ··· ताः PañcaRā.(Nā.) iii. 7. 21.

**अतिजर** (ati-jara) *adj.* [P. vii. 2. 101] **i** surpassing old age (i. e. very old) गोनर्दीय आह । इष्टमेवैतत्संगृहीतं भवति । अतिजरम् अतिजरैरिति भवितव्यं सत्यामेतस्यां परिभाषायां सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति MahāBh. iii. 309. 11; प्रथमैकवचने तृतीयाबहुवचने च अतिजरं ब्राह्मणकुलं तिष्ठति अतिजरैरिति च भवितव्यमिति गोनर्दीयमतम् KāśiVṛ. *on* P. vii. 2. 101; अतिजरं तिष्ठति JaineVyā. 357. 24 (*on* v. 1. 160); KātanVṛ. (*on* ii. 2. 7); LaŚabdeŚe. i. 225. 24; **ii** overcoming old age (i. e. ever young) महात्मभिः । भात्यद्रोऽतिजरैः सिद्धैरत्रेति जगदुर्जनाः DvyāśraKā. 1. 131 (comm. महात्मभिरतिजरैर्योगप्रभावेण जरामतिक्रान्तैः)

**अतिजरठ** (ati-jaraṭha) *adj.* [*f.* -ā] **1** very hard अयमतिजरठाः प्रकामगुर्वीरलघुविलम्बिपयोधरोपरुद्धाः । सततमसुमतामगम्यरूपाः परिणतदिक्करिकास्तटीर्बिभर्ति ŚiśuVa. 4. 29 = Kuval. 65(26); छित्वा ··· अतिजरठं कण्ठं कुठाराञ्चलैः । ··· बाहोः सहस्रम् ··· अखण्डयत् (अर्जुनस्य) MahāN. 2. 5; **2** very old, ŚiśuVa. 4. 29 = Kuval. 65(26)

**अतिजरठकिसलय** (atijaraṭha-kisalaya) *n.* fully grown leaf अनवरतवेत्रलताग्रहणप्रसङ्गातिजरठकिसलयानुकारिकरतलकरेण ··· ··· परिजनेनानुगम्यमानः Kād. 17. 2.

**अतिजरण्ड** (ati-jaraṇḍa) *adj.* very old अतिजरण्डशिखण्डमण्डलीगतिस्खलितकलुषप्रसरम्···तोयमादाय पीत्वा YaśasCam. ii. 178. 8.

**अतिजरत्** (ati-jarat) *adj.* [*f.* -ī] **A** very old, very ancient इच्छामि किमपि पुण्यम् ···। उद्द्योतकरगवीनामतिजरतीनां समुद्धरणात् TātpaṬ.(Vā.) 1. 10 (*on* i. 1. 0); 726. 4 (*on* v. 2. 24); ज्यायान् ज्येष्ठे चातिशये प्रशस्येऽतिजरत्यपि NānārthSaṁ. 40. 10; **B** surpassing the old (person) (i. e. highly experienced) स क्ष्मां पयोधिपरिखां धरणीं वराहः खातां जयादतिजरन्मखयज्वसुत्वा दोष्णोन्नतेन धृतवान् DvyāśraKā. 11. 118.

**अतिजरद्गव** (atijarad-gava) *m.* very old ox वृद्धोक्ष उक्तोऽतिजरद्गवोऽथ KośaKaTa. 1. 6732.

**अतिजरस्** (ati-jaras) *adj.* surpassing old age इहोभयं प्राप्नोति । अतिजरांसि ब्राह्मणकुलानि MahāBh. iii. 309. 5; अतिजरसैः जरामतिक्रान्तैरिति विगृह्य समासे कृते ··· जरसादेशः KāśiVṛ. *on* P. vii. 1. 9; *on* P. vii. 2. 101; अतिजरांसि ब्राह्मणकुलानीत्यत्रोभयप्रसङ्गे विप्रतिषेधेन परो जरसादेशो भवति Nyās. ii. 761. 1 (*on* vii. 2. 101); अन्ये त्वनित्यत्वादस्याः परिभाषायाः ··· अतिजरसैरिति भवितव्यमित्याहुः Nyās. i. 625. 5 (*on* iii. 1. 33); भिसोऽत ऐस् ··· एसिति सिद्धे ऐसग्रहणं किम्? अतिजरसैः JaineVyā. 338. 7 (*on* v. 1. 8); नुमः परत्वादसङ्। अतिजरांसि तपांसीति JaineVyā. 357. 22 (*on* v. 1. 160); नागवल्लीदले पक्के रसो रङ्गश्च चर्विते । यादृशस्तादृशो धर्मः पुंसोऽतिजरसो व्रते PārśvC. 3. 1083; अरे मूर्ख कुशिष्य, कुतोऽतिजरसं स्वगुरुं पिट्टयसि Bharaṭ. 14B. 2.

**अतिजरस** (ati-jarasa) *adj.* who has gone beyond old age, very old ङसिरात्···दीर्घोच्चारणादतिजरसात् KātanVṛ. *on* ii. 1. 21; *on* ii. 1. 18; 'कथमतिजरसस्य भिक्षुस्य कन्था वर्षशतं गता' इति DurghVṛ. vii. 1. 12; मुक्तये चातिजरसैर्योगिभिः प्रणिधीयते DvyāśraKā. 1. 130.

**अतिजरातुर** (atijarātura) *adj.* [*f.* -ā] distressed or feeble due to excessive old age धर्ममर्थं च कामं वा मोक्षं वातिजरातुरः । अशक्तः साधितुं तस्माद्युवा धर्मं समाचरेत् ŚivaP. v. 23. 65 (433B. 4); कमललोचनः ··· ददर्श पथि कुब्जां तां वृद्धामतिजरातुराम् BrahmVaiP. iv. 72. 15; SkandP. iv. 30. 30.

**अतिजर्जर** (ati-jarjara) *adj.* **i** very weary, extremely fatigued मेने कृतार्थमात्मानं स ध्यानात् ··· तेन सोऽप्यतिजर्जरः PrabhāC. 198. 15; **ii** very heavy निःश्वासैरतिजर्जरैर्बुषकणाजालं खले विक्षिपन्नुक्षा गोष्ठतटीषु···गोवृन्दमास्कन्दति SaduktiKa. 279. 32.

**अतिजर्झरा** (ati-jarjharā) *adj.* (*f.*) extremely weak हीनस्वरा चातिरूक्षा वृद्धा त्याज्याऽतिजर्झरा ।··· चण्डाली सा च वर्दिता ĪśānŚiPa. ii. 36. 75.

**अतिजला** (ati-jalā) *adj.* (*f.*) full of water सा गङ्गा सा चतुर्भागा सा चाप्यतिजला शुभा Rāmā. iv. 44. 64 (Gorr.)

**अतिजलाकीर्ण** (atijalākīrṇa) *adj.* filled with abundant water गभीरेऽतिजलाकीर्णे भग्नपोते विषादने ।··· सर्वतो मुच्यते स्तुत्वा शंकरस्य प्रसादतः BrahmVaiP. iv. 38. 77.

**अतिजल्पक** (ati-jalpaka) *adj.* very talkative पाठशीलोऽतिजल्पकः ··· रौद्रब्राह्मणपीडितः HāriS. iii. 2. 225.

**अतिजल्पन** (ati-jalpana) *adj.* very talkative जपेदुदकशीलः स्यात्पेशलो नातिजल्पनः MahāBhā. xii. 132. 13.

**अतिजव** (ati-java) *m.* high speed, great velocity पश्चाद्व्रजन्तोऽतिजवान्नक्षत्रैः सततं ग्रहाः । जीयमानास्तु लम्बन्ते SūryaSi. 1. 25; अतिजवेन दूरमतिक्रान्तः स चपलः कथं दृश्यते UttaRāC. 4. 26 (9); (अहम्) अतिजवेन निजमण्डलेभ्यः प्रधावितैरनीकपतिभिः सामन्तैश्च भयसंभ्रान्तैरनवरतमनुसृतगतिर्गत्वा TilaMañ. 133. 6; 132. 13; 85. 8; ततः प्रहृष्टोऽतिजवादशोकवनिकां पुनः । गत्वा दृष्ट्वा च वैदेहीं (मारुतिः)···आरुरोह गिरेः शृङ्गम् RāmāMañ. 279. 23; सोऽश्वः ··· जगाम क्वाप्यतिजवादलक्ष्यो लोकलोचनैः KathāSaSāg. iii. 4. 92; व्याधानां शरगोचरादतिजवेनोत्प्लुत्य धावन्मृगः ··· कूपान्तः पतितः Pañcā. 141. 21; SaduktiKa. 257. 19; ŚārṅgaPa. 940; अनुलोमप्रतिलोमशब्दा यथा - अतिजव जवन KāvyKaVṛ. 100. 1 (3. 5); अन्या···तयोः परीक्ष्यातिजवं स देयो जेतुः पुरस्तादिति जानतीव Acyutarā. 12. 6; गतमतिजवाद्भ्रान्तं भ्रान्तं समुत्कपिता च भूः Subhāṣi. 944; प्रसरोऽतिजवश्चैव ParaNā. 1958.

**अतिजव** (ati-java) *adj.* [*f.* -ā] swift, running very fast पवन इवातिजवो जलागमम् ।··· कथयति पूर्वनिदर्शनोदयः HarṣaC. 180. 10; अतिजवं पादुकाद्वितयमधिरुह्य निर्गतास्मि UdaySuKa. 109. 24; 126. 26; क्रमेण दवीयसि संजायमानेऽप्यतिजवे जवनेऽधिरूढस्तदानुपदिकः सचिवः PrabaCin. 111. 12; AmaK. 1613; ParaNā. 1955; Vaija. 116. 150; NāmaMāli. 505; AbhidhāCin. 494; तावदतिजवा नौकाः श्वान इव वराहमस्मत्पोतं पर्यरुत्सत DaśKuC. 107. 3.

**अतिजवता** (ati-javatā) *f.* great speed गजवधूरतिजव(न)तया गत्यन्तरमारूढवती MudrāRā. 2. 15 (45)

**अतिजवत्रुटनभय** (atijava-truṭanabhaya) *n.* fear of being cut into pieces on account of great speed अतिजवत्रुटनभयादनिर्मितान्त्राणीवोदराणि वृत्तानि धारयद्भिः···तुरङ्गैरारचितां मन्दुरां विलोकयन् HarṣaC. 100. 6.

**अतिजवन** (ati-javana) *adj.* of high speed अतिजवन इत्यर्थः CāndraVṛ. *on* iv. 4. 81; DaśKuC. ii. 107. 11 (Calcutta 1868 Ed.); अतिजवनपवनविधुतजलधिजलपटलविनटननिपातितमणिगणपरिगतपरिसरम् ··· पुलिनजलमाससाद (कन्दर्पकेतुः) VāsaDa. 279. 3–4.

**अतिजवनता** (atijavana-tā) *f.* cf. **अतिजवता**. MudrāRā. 2. 15 (92)

**अतिजवम्** (ati-javam) *adv.* very speedily अतिजवमिह काले सिन्धवः संप्रवृत्ताः PadmP. (Ra.) 42. 101; पुरस्तादाधावत्यतिजवमुदस्ताग्रचरणः ··· हरिणः UnmaRā.(Vi.) 16. 1.

**अतिजवापीत** (atijavāpīta) *adj.* (absorbed) drunk with high speed अतिजवापीतमनिलमिव नासिकाविवरेणोद्वमन्तं ··· इन्द्रायुधमद्राक्षीत् Kād. 79. 2.

**अतिजविन्** (ati-javin) *adj.* having great speed, very swift रविं सः स्पन्दनेनातिजविना प्रणनाम SkandP. iv. 9. 32; गुरुताभूत्त्वद्गन्तस्य राधे वरमतिजविनां मे येन जिग्ये मनोऽपि UjjvaNīMa. 80. 5; सार्धं तेन प्रतीचीं दिशमतिजविना स्यन्दनेनाभियातः ··· त्वं प्राददर्शः ··· पदं ते Nārāy. x. 48. 7.

**अतिजागत** (ati-jāgata) *adj.* having the metre Atijagatī, connected with Atijagatī स जागतो वा सर्वं वा इदं जागतं वातिजागतं वा AitBr. 30. 4 (773)

**अतिजागर** (ati-jāgara) *m.* **1** keeping awake for a long time अतिस्वप्नातिजागरम् ।··· नित्यं योगी विवर्जयेत् AmṛNāU. 28; अतिनिद्रातिजागरम् ··· विवर्जयेत् Rasā. 18. 118; आचामाम्लतपःकष्टान्निशायामतिजागरात् । अत्यायासात्प्रभोर्जज्ञे रक्तदोषः PrabhāC. 165. 6; **2** black curlew नीलक्रौञ्चस्तु नीलाङ्गो दीर्घग्रीवोऽतिजागरः RājNi. = DhanvNi. 298. 6; KalpaK. 329. 109.

**अतिजागरण** (ati-jāgaraṇa) *n.* keeping awake for a long time (सेवेत ··· वशी) नातिजागरणं निद्राम् SiddhYo. 81. 87; श्वश्रूस्नुषे अतिनिर्विण्णे अतिजागरणात् PrabaK. 25. 20.

**अतिजाग्रत्** (ati-jāgrat) *adj.* keeping awake for a long time योगी··· नातिजाग्रत्सिद्धिमेति GaṇeP. ii. 142. 12.

**अतिजाज्वल्यमान** (ati-jājvalyamāna) *adj.* exceedingly shining ततः प्रभृत्यक्रूरः प्रकटेनैव तेनातिजाज्वल्यमानेनात्मकण्ठावसक्तेन (मणिना) आदित्य इवांशुमाली चचार ViṣṇuP. iv. 13. 161.

**अतिजाड्य** (ati-jāḍya) *n.* **1** extreme heaviness स्निग्धोऽतिजाड्यं (बस्तिः करोति) AṣṭāSaṁ. i. 150. 20 (1. 28); **2** excessive insensibility शून्यं सर्वदा तन्मयमेव किन्तु स्तोकं जाड्येन व्याप्तं देहमपि अतिजाड्येन स्पृष्टं तादृशमेवेति Bhāsk. i. 240. 12 (*on* i. 5. 10)

**अतिजाड्यकृत्** (atijāḍya-kṛt) *adj.* causing excessive heaviness स्निग्धोऽतिजाड्यकृत् (बस्तिः) SuśruS. iv. 36. 22.

**अतिजात** (ati-jāta) *adj.* **1** becoming superior to (one's father or his wealth) पितुः सम्पदमतिक्रम्य जातः ··· संवृत्तोऽतिक्रम्य वा तां यातः प्राप्तो

विशिष्टतरसंपदं समृद्धतर इत्यर्थः इत्यतिजात: SthānT. 185A. 5; अतिजातोऽस्तु दूरेण सुजातोऽपि कथं सुत: SāliC. 5. 64; **ii** formed in excess आध्मातं शोणितमेहनमतिजातं कृच्छ्रमूत्रिणं चैतेन योगेन चिकित्सयेत् Hastyāyur. 61. 17 (1. 9)

**अतिजि** (ati–ji–) I. P. to conquer completely, to win over विराड्डियं सुप्रजा अत्यजैषीत् AV. xiv. 2. 74; गन्धर्वलोकतां ह त्वाव नातिजयति, गन्धर्वलोकताम् इवैव जयति JaimiBr. 1. 155.

**अतिजिगांस** (ati–jigāṃsa–) I. P. [desid.] to wish to go beyond तदेनत्सृष्टं पराङ्त्यजिगांसत् AitĀ. ii. 4. 3.

**अतिजिघ्रत्** (ati–jighrat) *adj.* inhaling excessively तीक्ष्णोपयोगादतिजिघ्रतो वा···अन्य: क्षवथुर्निरेति SuśruS. vi. 22. 12; सुतीक्ष्णचूर्णान्यतिजिघ्रतोऽपि वा ··प्रजायमानः क्षवथुर्विनश्यति KalyāKā. 15. 35.

**अतिजित** (ati–jita) *adj.* defeated fully, conquered entirely अयम् ··· राक्षस:···लोके ह्यतिजितं कृत्वा ह्यावां हन्तुमिहेच्छति Rāmā. iii. 1271*(2)

**अतिजितकाशिता** (atijitakāśi–tā) *f.* elation due to absolute victory चाणक्योऽप्यतिजितकाशितयासहमानश्चन्द्रगुप्तम् MudrāRā. 2. 22 (52)

**अतिजितकाशित्व** (atijitakāśi–tva) *n.* the state of elation due to a great conqueror स्थैर्यं धैर्यवत् । ···अतिजितकाशित्वम् । सदा मानशौर्याभ्यामवस्थानम् NāṭaLaRaK. 1410–11.

**अतिजितकाशिन्** (ati–jitakāśin) *adj.* elated with great success चाणक्यमतिजितकाशिनमसहमना: (? मान:) स साचिव्यादवरोपयेत् MudrāRā. 4. 7 (16)

**अतिजितेन्द्रिय** (ati–jitendriya) *adj.* who has completely conquered the senses ध्यानस्वाध्याययुक्तात्मा निर्ममोऽतिजितेन्द्रियः PadmP.(Ra.) 106. 115.

**अतिजित्वर** (ati–jitvara) *adj.* victorious par excellence आगते सभिक्तां सितयुतौ द्यूतकारिभिरिवातिजित्वरैः । अक्षनिर्जितवतंसवारिजश्रीरगृह्यत नितम्बिनीमुखैः Surath. 6. 66.

**अतिजिह्म** (ati–jihma) *adj.* [*f.* –ā] **i** very much bent low, very much squint (eye) अतिजिह्मां व्रीडया नववधूमिव लोकः (रजनीमपश्यत्) Kirātā. 9. 24; तस्य चेच्चक्षुषी ··· अत्युरिपण्डिते ··· अतिजिह्मे (स परासुरिति विन्यात्(? विद्यात्)) AdbhuSāg. 536. 15 (comm. अतिजिह्मे अतिकुटिले); **ii** very crooked, extremely tortuous अतिजिह्मा: । द्विवीकसां मूलवधे प्रवृत्ता दैत्या: सुधां जहुः DaśāvaC. 2. 27.

**अतिजीर्ण** (ati–jīrṇa) *adj.* [*f.* –ā] **1** much worn out, extremely old अचलां विन्यसेद्गेहे अतिजीर्णां परित्यजेत् AgniP. 67. 1; संसारवृक्षमतिजीर्णम् ··· तं चाधिरूढपतितं भगवन् हि रक्ष PadmP. ii. 21. 23; अतिजीर्णशीर्णकर्पटमिवावरीतुं न शक्यते NalaCam. 4. 20(3); अतिजीर्णे गोस्थाने···नाम्यसेद्योगविद्योगम् GaṇeP. ii. 142. 8; (चापम्) अतिजीर्णमपक्वं च···न कर्तव्यं बाह्याभ्यन्तरहस्तकम् SārṅgaPa. 1751; अतिजीर्णं तु कर्कशम् SārṅgaPa. 1753; अतिजीर्णं लिङ्गं स्याच्चेत्तदा तज्जले निक्षिप्य तत्रान्यलिङ्गं स्थापयेत् ViraMi. (Lakṣaṇa.) 629. 6; (समित्) निर्वीर्या अतिजीर्णा ViraMi.(Paribhāṣā.) 103. 25; वसुन्धरे । त्वमतिजीर्णा अकार्यकुशला च तन्नियोजय स्वपुत्रीं यज्ञसामग्रीकरणाय Hāsyārṇa. 2. 16(1); **2** much cooked, very insipid अतिजीर्णमसात्म्यं च नाद्यादन्नं न चाविलम् YaśasCam. i. 511. 6 (but comm. भूमिनिष्कासितम्); अतिजीर्णमसाम्यं(? सात्म्यं) च नाद्यादन्नं न चाविलम् BhojanKu. 223. 6.

**अतिजीर्णता** (atijīrṇa–tā) *f.* the state of being very old सोऽतिजीर्णतयाहारमन्वेष्टुमक्षम: Hitopa. 4. 65 (2)

**अतिजीर्णवस्त्रा** (atijīrṇa–vastrā) *adj.* (*f.*) wearing quite worn out clothes तप:कृशां जह्नुभरातिजीर्णवस्त्रां विमुञ्चाशु मम स्वसारम् KālikāKa. 16.

**अतिजीव्** (ati–jīv–) I. P. **i** to outlive, to survive तां वै स आयुषार्तिमत्यजीवत् PañcBr. vi. 5. 1 (comm. तामार्तिम् ··· अतिक्रम्य चिरकालं जीवितवान्); **ii** to excel, to surpass in the mode of living गुरून्मात्यांश्च नातिजीवेत् ĀpaDS. ii(10). 25. 10 (comm. गुरव: पित्रादय: । अमात्या मन्त्रिण: । तान्नातिजीवेत् भक्ष्यभोजनाच्छादनादिषु नातिशयीत); यस्य सीता भवेद्भार्या ··· अतिजीवेत्स सर्वेषु लोकेष्वपि पुरन्दरात् Rāmā. iii. 32. 16; तन्मुखं···पिबन्नत्यजीवदमरालकेश्वरौ RaghuVa. 19. 15; **iii** to live neglecting (others) नातिजीवेत् अतिक्रम्य न जीवेत् । गुरूणाममात्यानां च जीविकां क्लृवेव स्वजीविकां कुर्यादित्यर्थ: ViraMi. (Rājanīti.) 140. 18; वनस्थमपि राज्यस्थ: पाण्डवं कोऽतिजीवति MahāBhā. v. 137. 13; **iv** to live beyond नातिजीवति वै कश्चित्कलौ वर्षाणि विंशति: ViṣṇuP. vi. 1. 42.

**अतिजीव** (ati–jīvá) *adj.* outliving, surviving, living long अर्मन्निर्भवा मृतोऽतिजीव: AV. viii. 2. 26; *m.* [with *lā–*] to take life in the hand आर्व आर्व सिंहनादान् भटानां भीताश्रुकु: सारसीं यामिभेन्द्रा: । तामाकर्ण्य त्रासवन्तोऽतिजीवं लात्वा क्वापि क्वापि नेशुस्तुरङ्गा: HammīMaKā. 10. 45.

**अतिजीवन** (ati–jīvana) *n.* surviving, outliving [APTE]

**अतिजीवन्मृतक** (ati–jīvanmṛtaka) *adj.* more dead than alive [pw]

**अतिजीविन्** (atijīv–in) *adj.* living long भौम: सोमजसहितो जनयति दशमे नरम्···अतिजीविनम् Sārā. 33. 19; दीर्घायु: शाल्मली काके मार्कण्डेयेऽतिजीविनि ViśvaPra. 178. 58.

**अतिजीव्या** (ati–jīvyā) *adj.* (*f.*) to be outlived, to be survived ये मृत्यव एकशतं या नाष्ट्रा अतिजीव्या: । मुञ्चन्तु तस्मात् त्वा देवा: AV(P.) xvi. 5. 8.

**अतिजुगुप्सित** (ati–jugupsita) *adj.* very much despised ईश्वरो जीववदेहकारागृहेऽतिजुगुप्सितेऽवतिष्ठते SivārkaMaDi. ii. 244. 36 (on iii. 2. 11); बीभत्साचारवेश्यान्कुष्ठाख्योऽतिजुगुप्सित: SamaMā. 5. 53.

**अतिजुगुप्सितत्व** (atijugupsita–tva) *n.* the state of being much abhorred हास्यरसस्य बीभत्सरसाधिवासितस्य लशुनलिप्तस्येव कुसुमस्येवरस्यातिजुगुप्सितत्वादनीप्सितस्य परमानीप्सितत्वेन चमत्कारस्तिरोहित: AuciViCa. 16(43)

**अतिजृम्भ्** (ati–jṛmbh–) I. Ā. to increase considerably, to manifest strongly रागस्तु सुभ्रुवि तथाप्यतिजृम्भते मे MadaKeC. 23; सुमुख लक्ष्मण पुत्रि विदेहजे सुचरितं भवतोरतिजृम्भते Rāgh. 6. 32.

**अतिजृम्भा** (ati–jṛmbhā) *f.* excessive yawning वातजा रोगा: ··· मूकत्वमतिजृम्भा स्यात् RugVi. App. 411. 29 = SārṅgaS. i. 7. 111.

**अतिजॄ** (ati–jṝ–) X. P. to wear out अतिजरयति कुं कुञ्जर: पादतोदात् MātaLī. 1. 31.

**अतिज्ञ** (ati–jña) *adj.* one who knows much more, wiser अतिशयातिक्रमयोश्च । सूक्त: अतिज्ञ: PrakriKau. i. 522. 6; यच्छिरोमणिकृता निजतन्त्रे ब्रह्मणो दिनमुखं प्रहसद्भि: । वक्तृमुक्तमिदमार्यविरोधात् तत्तु तुच्छतरमूह्यमतिज्ञै: SiddhāTaVi. 6. 24; 41. 15

**अतिज्ञानवहा** (atijñāna–vahā) *adj.* (*f.*) conveying more knowledge नातिज्ञानवहा यस्मिन्नाड्य: ···। शब्दादिलोभि यत्तस्मै तुभ्यं यक्षात्मने नम: ViṣṇuP. iii. 17. 19.

**अतिज्योतिस्** (ati–jyotis) *n.* super-light चत्वार्यु ह वै देवानामाविष्टमानाव(? म)तिज्योतींष्यग्नि: पृथिव्याम् JaimiBr. 2. 333.

**अतिज्वलत्** (ati–jvalat) *adj.* burning excessively अत्युग्रोऽतिवीर: ··· अतिज्वलन् ··· स्वे महिम्नि सदा समास्ते NṛsiṃhaTāU. 7.

**अतिज्वलन** (ati–jvalana) *adj.* excessively radiant, extremely shining सरणोऽसि तमिज्वनैर्दैरित्यभिधाय सोऽतिज्वलनोऽभ्युदस्थात् DvyāśraKā. 12. 24.

**अतिज्वलन्ती** (ati–jvalantī) *adj.* (*f.*) blazing forth ज्वलन्तीमिव (v.l. अतिज्वलन्तीम्) कौन्तेये विवर्णकरणीं मम MahāBhā. ii. 45. 15.

**अतिज्वलित** (ati–jvalita) *adj.* extremely bright तत्रस्थां ददृशुर्देवीम् ··· वह्निशुद्धांशुकेनातिज्वलितेन समुज्ज्वलाम् BrahmVaiP. iv. 6. 114.

**अतिज्वालाकर** (atijvālā–kara) *adj.* causing excessive flames अतिज्वालाकरे नीकरे निक्षिप्तं गरलं गले न गिलितम् SivaL. 33. 31.

**अतिडीन** (ati–ḍīna) *n.* extra-ordinary flight प्रजगादोत्तरं काक: ··· अतिडीनम्···कर्तासि MahāBhā. viii. 26. 25.

**अतितक्ष्य** (atitakṣ–ya) *ger.* having severely chiselled (reducing greatly) सरेण वार्णैरतितक्ष्य तीक्ष्णैर्लून: स्वभावोऽपि कियान्क्रिमस्य NaiṣC. 3. 110.

**अतितत** (ati–tata) *adj.* [*f.* –ā] stretched far, considerably spread out धीदोर्दले अतितते उचितानुवृत्ती आतन्वती विजयसम्पदमेव भात: KāvyPra. 332. 2; त्वमिन संसतिवह्नरिकामिमामतितताम्···उदपीपद: MahāP. 23. 125.

**अतिततकुथ** (atitata–kutha) *m.n.* thickly woven painted cloth (for elephants) आस्तीर्णन्तामतिततकुथै: कुञ्जरा: पृष्ठिवर्षा: Manmatho. 3. 2 (630. 2)

**अतिततातितुद्** (atitatātitud) *adj.* **i** severely harassing those who are very arrogant तं ततोऽतिततातितुद् ··· आरारि: SiśuVa. 19. 3 (comm. अतिततानत्युद्धतान् अतितुदति अतिव्यथयतीति); **ii** punishing those that are growing (large) and advancing अतिततान् चतुरङ्गबलेन प्राप्तविस्तारान् आतिन: सततगमनशीलान् तुदतीति क्विप् SaraKaṇṭhā. 266. 4.

**अतिततान्तर** (atitatāntara) *adj.* with extreme inward expansion तत्पदालम्बनं चेत: स्फारमाभासमागतम् । नास्तमेति न चोदेति खमिवातिततान्तरम् YogVā. ii. 14. 31.

**अतितत्पर** (ati–tatpara) *adj.* extremely devoted to, very eager for that (नृप:) दृष्ट्वा ··· गजान् दुद्यान् ··· देवीसूक्तेन जुहुयादयुतं वातितत्पर: YuktiKa. 206. 4 [अतितत्पर is also given as one of the meanings of अभियुक्त ViśvaPra. 72. 196; ViśvaLoK. 152. 196]

**अतितथाभूत** (ati–tathābhūta) *adj.* becoming extremely similar यत्रातितथाभूते संभाव्येत क्रियाद्यसम्भाव्यम् । ··· विज्ञेया सेयमुत्प्रेक्षा Kāvyālaṅ. (Ru.) 9. 11.

**अतितद्** (ati–tad) *adj.* [AltGr. III p. 439] what has surpassed that

अतिक्रान्तोऽयं ब्राह्मणस्तम् अतितद् ब्राह्मण इति MahāBh. i. 87.21 (on i. 1.27); यद्येवमतितद् अतितदौ अतितद इत्यत्वं प्राप्नोति MahāBh. i. 88.6 (on i. 1.27); उपसर्जने तु तच्छब्दार्थेऽतितदिति भवति Pradī. i. 578B.4 (on i. 1.72); अतिक्रान्तस्तमतितद् अतितदौ अतितदः PadMañ. on KāśiVr. on P. i. 1.27; अतिकृतरं कुलम् । अतितत् SiddhāKau. 52B.3 Pron. that good one यद्येवमतिसः अत्वं न प्राप्नोति MahāBh. i. 88.16 (on i. 1.27); शोभनः सः इति प्रादिसमासः Pradī. i. 328B.16 (on i. 1.27); सः अतिसः MahāBh. i. 188.4 (on i. 1.72); अतिसः। परमसः JaineVyā. 357.32 (on v. 1.161)

**अतितन्** (ati-tan-) VIII. U. to increase to a great extent गौः ··· श्रीसुखमतितनुतात्सा जितोत्सेकमूर्तेः JinaS. 4.14.

**अतितनीयस्** (ati-tanīyas) adj. (comp.) [f. -ī] very thin, extremely slender घट्यसि चटुलक्रमावलग्ने किमतितनीयसि तान्ततं श्लथत्वात्। इदमिव सुतनोर्गौ गलन्ती मणिरशना पटुपादयोः पतित्वा Kapphiṇā. 10.9; (त्वया) अतितनीयस्यपि नितरां तनिमानम् ··· उपनीता तनुः Kād. 173.15.

**अतितनीयस्ता** (atitanīyas-tā) f. the state of being very small, excessive thinness सकलनिपीतनिशातिमिरमतितनीयस्तया वोढुमसमर्थेष्विव कज्जलव्याजाद्वमत्स्विव (प्रदीपेषु) VāsaDa. 46.1.

**अतितनु** (ati-tanu) adj. very small, extremely thin, lean, inferior अहं ह्यतितनुश्चैव वानरश्च विशेषतः Rāmā. v. 21.17; (न शुभदा गावः) गुल्फैरतितनुभिः (युक्ताः) BṛSaṁ. 61.4; SārṅgaPa. 2829; अतितनुरतिघनोऽतिपिच्छिलः (दश क्षारदोषाः) AṣṭāSaṁ. i. 191.15 (1.39); अतितनुर्जलूकसदृशः ··· पूज्यो न चायं गजः MātaLī. 3.1; धान्यांशेऽतितनौ कणः KośaKaTa. 2.4809.

**अतितनुतनु** (atitanu-tanu) adj. of very slender body स्वस्थः शैले पश्यास्तेऽसौ रुरुः ··· अतितनुतनु SaraKaṇṭhā. 209.17 (comm. अतिकृशा तनुर्यस्याः इति संबोधनह्रस्वः)

**अतितनुता** (atitanu-tā) f. extreme thinness दद्यात् प्रलेपं निपुणः शुष्कं कुड्ये(? डयं) विमृद्य तु । ···न चातितनुतां गतम् ViṣṇuDhaP. iii. 40.6.

**अतितनुत्व** (atitanu-tva) n. extreme thinness यदा पुनरतितनुत्वान्नियोजनस्याप्ययोग्या खदिरलता भवति SāstrDī. 480.4 (on vi. 3.20); BālamBha. ii. 241.6 (on 2.135)

**अतितनूभूत** (atitanū-bhūta) adj. being much reduced or very thin असिन्धुपल्लवन्धुरित्यतितनूभूतेऽपि भूतेशितुः प्रीतिं चिन्तय NīlaVi. 113.3.

**अतितन्त्रमुचुकुन्द** (atitantra-mucukunda) adj. having innumerable *mucukunda* trees नवकुसुमनिचयमवचिचीषुरयमवतरति स···अतितन्त्रमुचुकुन्दम्··· उद्यानम् YātrāPra. 4.13(20)

**अतितन्त्री** (ati-tantrī) adj. who has disposed of or gone without a lute अतितन्त्रीः अतिश्रीः MahāBh. i. 224.1 (on i. 2.48); अतितन्त्र्यै ब्राह्मणाय MahāBh. i. 314.5 (on i. 4.3); स्वरितत्वं किम्। अतितन्त्रीः KāśiVr. on P. i. 2.48; समासः अतितन्त्र्यै ब्राह्मणाय PadMañ. on KāśiVr. on P. i. 4.3; ङीप्रत्ययान्तत्वाभावात् अतितन्त्रीः PrakriKau. i. 525.2.

**अतितन्त्रीबन्धु** (atitantrī-bandhu) adj. (one) having a close relative who has disposed of a lute अतितन्त्रीबन्धुः इत्यत्रापि 'नदी बन्धुनि' इति स्वरः सिद्धः PadMañ. on KāśiVr. on P. i. 4.3.

**अतितन्द्रा** (ati-tandrā) f. excessive lassitude क्षवथुश्चातितन्द्रा च ··· । धूमपानात् प्रशाम्यन्ति CaraS. i. 5.27 (1922 Ed.)

**अतितन्द्राण** (ati-tandrāṇa) n. excessive laziness or lassitude यन्द्रवो (यत्रोत्पन्नानाम्) न जरातङ्का ··· । न निद्रा नातितन्द्राणम् MahāP. 9.74.

**अतितन्वङ्गी** (atitanv-aṅgī) adj. (f.) having extremely slender body अतितन्वङ्गी मुमूर्षुरपि बालिका। देहत्यागाय सा चक्रे बुद्धिम् MārkP. 125.51; सुकुमारातितन्वङ्गी सद्यःप्रकटयौवना । ···असौ बाला DevīBhāP. v. 31.23.

**अतितप्** (ati-tap-) I. P. to heat excessively रोहिदोऽस्त्यतपद्दिवम् AV. xiii. 2.40; मार्तिं तपो अग्ने AV. xviii. 2.36; अविषह्यांशुरादित्यो यावन्नातितपत्यसौ Rāmā. iii. 110*(1); अये ··· अतितपत्यादित्यः DūtaVā. 52(1); (caus.) to heat excessively तेनातितापयामास त्रीँल्लोकान् सचराचरान् MārkP. 106.5; BrahmP. 6.6.

**अतितपत्** (ati-tapa(n)t) adj. i excessively burning or scorching पश्य कस्यापि न द्वेष्यस्तपनोऽतितपन्नपि PāṇḍaC. 2.218; ii performing severe or intense penance पुनस्ततोऽतितपतामाविरासीत्तथा प्रभुः ĀdiP. 9.49.

**अतितपन** (ati-tapana) n. extreme heat or glow तापः स्वातपचते(? ने) तथातितपने KośaKaTa. 2.6793.

**अतितपस्** (ati-tapas) n. severe penance, great austerity तस्यातितपसः शक्रो बिभेति सततं विभो MahāBhā. ix. 50.6; तवानेनातितपसा··· । प्रसन्नोऽस्मि SkandP. iv. 15.52; मातर्मयातितपसा परितोषिता त्वं प्राग्जन्मनि प्रसुमनादिभिरर्चितासि DevīBhāP. iv. 24.48; adj. performing severe penance, DevīBhāP. iv. 24.48; अतितपसम् ··· पप्रच्छ रोमपादः पालकाप्यम् Hastyāyur. 618.24(4.7)

**अतितपस्विता** (atitapsvi-tā) f. the state of being a great ascetic चन्द्रापीडस्तु ··· तस्याः (महाश्वेतायाः) ··· अतितपस्वितया ··· उपारूढगौरवोऽभूत् Kād. 173.5.

**अतितपस्विन्** (ati-tapasvin) adj. [f. -ī] performing severe penance दुर्वासतां विदित्वा च भर्तुस्तेऽतितपस्विनः । ··· कदाचिद्धि शपेत्स माम् MahāBhā. i. 44.7; सन्ति वैषामतिशठास्तथान्येऽतितपस्विनः MahāBhā. xiii. 33.10; xiii. 85.47; अतितपस्विनम् ··· भैरवाचार्यं ददर्श HarṣaC. 157.2; अल्पोदरी मलच्छन्ना जाता सातितपस्विनी PadmP.(Ra.) 21.127; BṛKathāK. 135.25; तत्साक्षसाङ्ख्यमुक्तानि तपांस्यतितपस्विभिः SkandP. iv. 71.6; अतितपस्वी कश्चिच्छक्रेण भवद्द्वारोच्चाटयितव्यः Manmatho. 1.9(421.23)

**अतितपस्विनी** (atitapasvinī) f. name of the medicinal plant *Sphaerantus hirtus* (मुण्डी) स्वादन्यथातितपस्विनी BhāvPraNi. 69.216 = BhāvPra.(Bhā.) 6(4).215.

**अतितप्त** (ati-tapta) adj. i extremely heated तथातितप्तं सवितुर्गभस्तिभिर्मुखं तदीयं कमलश्रियं दधौ KumāSaṁ. 5.21; शक्रस्य च मुखादग्निः प्रबलो निर्गतो बहिः । अतितप्ते यथा तैले जलपातायथा भवेत् GaṇeP. ii. 3.22; अतितप्तेन चान्नेन ज्वलन्तीमिव तां मुनिः । मन्वा हस्तग्रहायोग्यां कुन्त्या (?:) पृष्ठे ददौ KathāSaSāg. iii. 2.40; निक्षेप्योऽयोमयः शङ्कुर्ज्वलन्नास्ये दशाङ्गुलः । ज्वलन्नतितप्तः ManvaVi. 1038.27 (on 8.271); भुजयोरतितप्तशङ्खचक्राकृतिलोहाहतसंभृतव्रणाङ्काः···पाञ्चरात्राः ··· प्रभग्नाः SaṅkaDigVi.(Mā.) 15.74; अतितप्तमयोऽपि मार्दवं भजते SāhiDa. 605.9; भृशार्थातिशये त्वतिः । (भृशार्था) अतितप्तम् Prasā. i. 37.8; ii excessively afflicted अयमात्मा संसारदशायामाध्यात्मिकादिदुःखैरतितप्तः ··· मोक्षसाधनमन्वतिष्ठत् NītiMā. 74.7.

**अतितप्तता** (atitapta-tā) f. i the state of being very hot प्रस्नावोष्णत्ववैवर्ण्ये ललाटस्यातितप्तता । ···ज्वरे स्युः पूर्ववेदनाः KāśyaS. 33B.39; [अतितप्तता च] जडतां च परपुष्टैर्न विशस्सनातनमभ्रूत्सवा इव PṛthviVi. 9.84; ii excessive harassment, PṛthviVi. 9.84.

**अतितप्ततैल** (atitapta-taila) n. extremely hot oil (भजति) सचन्दनस्य हिमतामतितप्ततैलम् PārśvC. (Praśasti.) 26; अतितप्ततैलादौ कदाचिदुद्भूतरूपावयवप्रवेशाद् वह्न्यारम्भः TattvCin. i. 727.6; न चातितप्ततैलादौ कथमद्दहनोत्पत्तिरिति वाच्यम् SiddhāMu. 16.5 (on 37); अतितप्ततैलोद्भूतवह्निज्वालावच्च किंचित्तेजोऽनुभूयते PūrvottaVāNaMā. 82.3.

**अतितप्तदेहिन्** (atitapta-dehin) adj. with a scorched body जलप्रवेशादतितप्तदेहिनः ··· । ··· भवन्ति नेत्रे विविधाः स्वदोषजाः KalyāKā. 15.125.

**अतितप्ताज्य** (atitaptājya) n. very hot clarified butter (i. e. ghee) अतितप्ताज्यहोमेन स्वयं ज्वलति पावकः IśānŚiPa. i. 51.64.

**अतितमस्** (ati-tamas) n. dense, thick or intense darkness नीहारे च समुत्पन्ने तटेऽतितमसा युते । कामिनी तं मुनिं प्राह मृदुपूर्वमिदं वचः DevīBhāP. ii. 2.24.

**अतितमाम्** (ati-tamām) ind. i to a very large extent, most excessively मुग्धे दुष्करमेतदित्यतितमामुद्दामहास्यं बलादाक्लिष्य AmaŚ. 46; समस्तसंध्यब्रह्मस्वरूपं तत्पाठपृष्ठे प्रदर्शयमानमतितमां ग्रन्थगौरवमावहति Loc. 150.9 (on 3.14); विबुधाः प्रथयन्ति तामतितमां संवादमेदस्विनीम् SyādvāMañ. 32(72); ममाशु हरतु श्रमानतितमां तमालद्रुमः BhāmiVi. 4.4; अतितमां तन्वी तनुस्ताम्यति RasGaṅ. 90.20; 280.2; 562.17; ii excessive अस्ति हम्वीरराजस्य ··· । तदप्यतितमां पक्षपातस्त्वयि महाभुजे ParamāKā. 34.14; 39.40; 47.74; 52.17.

**अतितमोमयी** (atitamo-mayī) adj. (f.) i of a very dark complexion गिरिजाप्यसितापाङ्गी नीलोत्पलदलच्छविः । विभावर्या च संयुक्ता बभूवातितमोमयी MatsyaP. 154.588; ii excessively consisting of the Tamas quality देव यैषा त्वया माया दर्शितातितमोमयी YogVā. v. 48.44.

**अतितर** (ati-tara) adj. of greater value, of greater importance पितृयज्ञेति निर्दिष्टो धर्मोऽयं ब्रह्मणा स्वयम् । ततोऽप्यतितरो धर्मः क्रतुरेकः प्रतिष्ठितः VarāP. 187.71.

**अतितरङ्गिता** (atitaraṅgi-tā) f. the state of being extremely wavy or ruffled गच्छतो निस्तरङ्गस्य जलस्यातितरङ्गिताम् । आरम्भे दृष्टिमापात्य तदौर्नुरुर्यं हि गम्यते SivDṛ. 1.13.

**अतितरण** (ati-taraṇa) n. i surmounting, passing through प्रपञ्चकरुणात्मजम् । दुर्गातितरणं वीरो रामः ViṣṇuDhaP. ii. 122.5; ii crossing over, transcending मृत्युः आदित्यः ··· । तस्यातितरणायेदं सामोपासनमुपदिश्यते ChāndoUBh. 101.3 (on ii. 10.0)

**अतितरम्** (atitaram) adv. excessively, extremely क्षत्रं नाम विक्रान्तमतितरं निष्प्रयोजनं तिलं हि मानुष्यमानशून्यः पुरुषः AvantiKa. 74.6; धनगृह-

मतिवुङ्गं दुर्निरीक्ष्यं त्रिशङ्कोरतितरमुरुतुङ्गं दक्षिणागारमिष्टम् MayaMa. 27. 124.

**अतितरल** (ati-tarala) *adj.* [*f.* -ā] extremely fickle, greatly unsteady, तत्र का गणनेतरासु·तपस्विनीष्वतितरलासु तरुणीषु HarṣaC. 59. 2; न हि कुलशैलनिवहवाहिनो वायव: संनह्यन्त्यतितरले तूलराशौ HarṣaC. 253. 17; 332. 3; स्फटिकभित्तिभागेषु सकलमिव दिवसमतितरलं भ्रमन्ति(? ति) प्रतिबिम्बपतङ्गमण्डलम् AvantiKa. 6. 17; VāsaDa. 277. 3: नलिनीदलगतजलमतितरलं तद्वज्जीवितमतिशयचपलम् MohMu. 4; तव दीनं रिपुनिवहमतितरलकातरमुपेक्ष्य··· भवन्तम्···अभिसरति वीर जयलक्ष्मी: ChandaśCū. 2. 272(3); तारुण्यं चातितरलं बाल्यं जडतया हृतम् YogVā. i. 26. 9.

**अतितरलमति** (atitarala-mati) *adj.* extremely fickle-minded अतितरलमति: पुरोहितोऽभून्नृपविदितो हरिभद्रनामवित्त: PrabhāC. 62. 17.

**अतितरस्** (ati-taras) *n.* great force or might [Inst.] with great might or high speed उन्मूल्यालानभूमीरुहमतितरसोत्खण्डितान्दूवितानान्याकर्षन्क्षेपपादैर्मदजलकलुष: क्षिप्तनक्षत्रमाल: । ··· धावति ··· करीन्द्र: KaṁVa. 6. 11 = PadyaVe. 120.

**अतितरसुरभि** (atitara-surabhi) *adj.* [DEBRU. p. 608] extremely fragrant नीत्वोच्चैर्विक्षिपन्त: ··· परागान् ··· अतितरसुरभीन् भूरिशो दिङ्मुखेषु । ··· वान्ति वाता: AmaŚ. 119.

**अतितरसुलभ** (atitara-sulabha) *adj.* very easily attainable अन्तरात्मा···याति निद्राम् । विश्रामाय स्वरूपे त्वतितरसुलभं तेन चातीन्द्रियं हि सुखम् SatŚlo. 67.

**अतितरस्नेह** (atitara-sneha) *m.* profound affection तौ दम्पती अतिसुभगावतितरस्नेहसंपन्नौ SāmaraU. 289. 4.

**अतितरस्विन्** (ati-tarasvin) *adj.* very quick तेषां विनर्दतां शब्द: संयुगेऽतितरस्विनाम् । शुश्रुवे Rāmā. vi. 43. 14; अयमुल्लङ्घयते वप्र: ··· प्रसमरारम्भसा । रभसादश्ववारेणाश्व इवातितरस्विना TriṣaŚaPuC. ii. 6. 353.

**अतितराम्** (ati-tarām) *ind.* [P. v. 4. 11] **A** better than, greater than (Abl.) स यथा च ह पुर आसातितरां ह तत आस JaimiBr. 2. 157; अतितरां ह वै स इतरस्मादग्नेस्तपति ŚatBr. I. iv. 3. 1; **B** superior to, greater than (Acc.) तस्माद्वा इन्द्रोऽतितरामिवान्यान् देवान् JaimiBr. 4. 21; तस्माद्वा एते देवा अतितरामिवान्यान् देवान् KenU. 4. 2 (Śaṅ. अन्यान् देवानतितरामतिशेरत इव एते देवा:); **CI** excessively, greatly, very much [with verbs] तथागतं सोऽतितरां बभासे सधातुनिष्यन्द इवाद्रिराज: RaghuVa. 16. 70; उत्कण्ठयत्यतितरां पवन: प्रभाते ṚtuSaṁ. 3. 15; आधिव्याधिशतैर्वयस्यतितरामारोग्यमुन्मूल्यते ŚatTrayī. 198; द्वेषानुबन्धमतितरां चकार ViṣṇuP. iv. 14. 51; MārkP. 68. 11; ततापातितरां शिव: BrahmāṇḍP. iii. 30. 83; मामतितरां तरलीकरोति KundaMā. 5. 15; दानं ददावतितराम् ŚiśuVa. 5. 48; इयमेव वदनकान्ती रतिकान्ताकूतमतितरां कुरुते KuṭṭaMa. 46; EI. vii. 156. 2; BṛĀraUBhVā. v. 1. 54; ये स्तुतिभिरतितरां प्रवर्तन्ते ManuBh. ii. 201. 12 (*on* 8. 302); SubhaDha. 5. 13 (2); TilaMañ. 99. 9; प्रणमत तं जिनव्रजम् ···। यमतितरां सुरेन्द्रवरयोषित् ··· ननाम CaturJiStu. 78; BhāgP. v. 4. 1; इयं प्रतिज्ञातितरां सततं बाधते हि माम् SkandP. iii(1). 16. 37; GaṇeP. ii. 120. 51; YogVā. iii. 70. 74; AbhinBhā. ii. 339. 11 (*on* 16. 102); KaumuMi. 3. 2 (3); सुखनाशाद्धि बिभेत्यतितरां जन: AnuVyā. 70B. 3 (*on* 4. 2); EI. iii. 75. 1; स्फारैर्भीषय गर्जितैरतितराम् SūktiMu. 21. 5 = ŚārṅgaPa. 786; RasāSu. 5. 11 (1. 31); ŚaṅkaDigVi.(Mā.) 5. 112; HammīMaKā. 7. 35; श्वसिस्य(? ष्य)तितराम् Subhāṣi. 1439; देव: ··· अतितरां न: कृपयतु StavMā. 7. 2; ṢaṭCakraNi. 43; पतत्यतितरां भानु: समुद्रे मुहु: SūktiSu. 115 = PadyaVe. 70; MayūMāli. 414. 6 (*on* v. 1. 9); Rāgh. 6. 24; **CII** excessively [with *adj.*] भरतो न्यपतत् क्षितौ । रुदन्नतितरामार्त: Rāmā. ii. App. I. 30 (8); काले दाता ह्यवमानितोऽपि न क्रोधमतितरामेति NāṭyaŚā. 23. 58; विभावसु:···। बभूव तेनातितरां सुदु:सह: RaghuVa. 3. 37; अभूत्कृतार्थोऽतितरां महेन्द्र: KumāSaṁ. 12. 24; नृत्तादस्या: स्थितमतितरां कान्तम् Mālavikā. 2. 6; Nalābhyu. 6. 35; चकारातितरां क्रुद्ध: प्रतिज्ञाम् BrahmāṇḍP. ii. 34. 31; HarṣaC. 65. 11; ŚiśuVa. 10. 90; किं वापेक्ष्यमिहापि मय्यतितरां मिथ्याविचारादिकम् Prauḍhā. 11; भागीरथ्यास्तटमतितरां रम्यमासाद्य PadmP.(Ra.) 11. 382; BṛĀraUBhVā. ii. 1. 61; PañcPā. 64. 8 (*on* i. 1. 1); आयुधदण्डहस्त: ··· दूतो भवेदतितरां यमदूतकल्प: KalyāKā. 1. 33; भवतां प्रमाणत्वेनातितरामिष्टा श्रुति: IṣṭaSi. 160. 17; Stotrā. 13. 2; शब्दालंकारोऽप्यतितरां रमणीय: VakroJi. 11. 8; SkandP. iv. 89. 133; विष्णुरप्यतितरां विवशोऽथ शेते DevīBhāP. i. 7. 38; PadmP. i. 62. 26; एकादशी शुभा (कार्त्तिकी) । हरेरतितरां प्रेष्ठा BṛDharmaP. i. 15. 27; GaṇeP. i. 59. 9; YogVā. ii. 12. 14; MālinīT. 14. 38; ते भक्ता अतितरां मे प्रिया: GītāBh.(Rā.) 567. 12 (*on* 12. 20); व्यसनैरसावतितरां मलिनै: ··· तुरगैरिव PṛthvīVi. 3. 23; HammīMaMa. 4. 18; VasaViKā. 10. 54; पूर्यमाणो हि गर्तोऽयं भवत्यतितरां महान् SamarāSaṁ. 5. 520; KaṁVa. 5. 25; प्रत्यभिज्ञया ··· आत्मस्थैर्यसिद्धिरतितरामप्रत्यूहा ŚivārkaMaDī. ii. 90. 31 (*on* ii. 2. 24); RasGāṅ. 273. 1; BhāmiVi. 2. 54; MūkaPañ. 2. 3; SiṁhāDvā. 16. 5; ParamāKā. 6. 43; VaiyāBhū. 2. 3 (*on* 1); [with *adv.*] हंसैरुज्झितपङ्कजैरतितरां सोद्वेगमुद्वीक्षित: ··· मेघ: Mṛcch. 5. 23; **D** excessive, much, very much [with nouns] येन श्यामं वपुरतितरां कान्तिमापत्स्यते ते MeghDū. 15; आययावतितरामिव वध्वा: सान्द्रतामधरपल्लवराग: Kirātā. 9. 62; अस्मिन् भ्रमज्ञाने तेषामतितरां भ्रम: NyāyMañ. i. 163. 25; अद्य त्वतितरां ब्रह्मन्मम भाग्यविपर्ययात् YogVā. i. 8. 10; अतितरां सहजोदितेन प्रेम्णा परस्परमनोहरणाभिरामौ EI. ii. 334. 8; सुखे स्वर्गादौ चेद्रतिरतितराम् BhartṛNi. 5. 23; तन्मूलभूतभ्रान्त्यादेश्च कल्पनेऽतितरां गौरवापत्ते: MīmāKau. i. 87. 11 (*on* i. 3. 12); प्रियेक्षणचकोरयोरतितरां सुधापारणा ।··· ते स्मितश्रीरियम् ŚṛṅgāMañ.(A.) 43. 10; तालोच्चैस्तिरयंस्तरन्नतितरां तारुण्यलीलां वहन् ।··· मन्दं मण्डयति स्म मण्डलमथो देवो मृडानीपति: ParamāKā. 7. 43 (?45); [with tmesis) अपां पृषन्ति ।···आतन्वन्त्यति हि तरामनभ्रवृष्टिम् Rāgh. 12. 9.

**अतितरार्ति** (atitarārti) *f.* excessive distress or pain तस्या यदस्त्य(? स्य)तितरार्तिगतो विशेष: BhikṣāKā. 23. 15.

**अतितरुण** (ati-taruṇa) *adj.* very young, recent दोष: प्रत्येति कोपाच्च विद्धो(v. l. वृद्धो)ऽतितरुणश्च य: SuśruS. vi. 17. 81 (comm. लिङ्गनाशमप्राप्त:)

**अतितरुणाय** (ati-taruṇāya-) [denom.] to behave like a very young person, to become rejuvenated मैथुनाद्बलहानि: स्यान्निद्रातितरुणायते PadmP. i. 61. 32.

**अतितर्क** (ati-tarka) *m.* over-reasoning इत्यलमतितर्करसावसेकेन NyāyMa. 30. 7.

**अतितर्जित** (ati-tarjita) *adj.* very much threatened तै: ··· लज्जाभिरतितर्जितै: । सारसर्वाभिसारेण प्रहर्तुमुपचक्रमे PāṇḍaC. 13. 984.

**अतितर्पण** (ati-tarpaṇa) *n.* **A** over-satisfaction अतितर्पणादरुचिमातिवाचरत्यचलेषु नोष्मसमये भयं शिखी PṛthvīVi. 9. 17; **B** over-eating, over-nourishment अतितर्पणम् । अतिभोजनादि BālamBha. iii. 104. 32 (*on* 3. 79); गर्भिणी ··· । व्यवायं च न सेवेत न कुर्यादतितर्पणम् BhāvPra.(Bhā.) 3. 332.

**अतितर्पित** (ati-tarpita) *adj.* **I** over-satiated भगवद्गुणग्रामयशोऽतितर्पितश्रुतिप्रतिस्पर्धितया विलोचने । विषीदत: स Vidvanmo. 8. 126; **II** over-filled (with oil) अथ साश्रु गुरु स्निग्धं नेत्रं स्यादतितर्पितम् ŚārṅgaS. iii. 13. 51.

**अतितर्ष** (ati-tarṣa) *m.* excessive desire (स:) सकरुणमतितर्षेण ··· अनुशोचन् ··· होवाच BhāgP. v. 8. 15.

**अतितर्षित** (ati-tarṣita) *adj.* excessively thirsty तज्जलं पीतमात्रं तु त्वरया चातितर्षित: SkandP. v(3). 103. 153.

**अतितव** (ati-tava) cf. **अतियुष्मद्**, KāśiVṛ. *on* P. vii. 2. 92 and *on* P. vii. 2. 96.

**अतितस्** (ati-tas) *adv.* after or from the word *ati* द्वितीयं द्वितीयमतित: Chandonu. 4. 7 (comm. अत्र द्वितीयं द्वितीयं शब्दरूपमतिशब्दात् परत: प्रयोक्तव्यम्); जगतीशक्वर्यष्टिधृतीनां पृथक् परा परातित: JayaChand. 4. 4.

**अतितस्करव्यवहार** (atitaskara-vyavahāra) *m.* general usage of the term *thief* प्रकाशस्त(? त)स्कराणां नातितस्करव्यवहारो यथा लोकेऽन्येषामटवीचराणाम् ManuBh. ii. 312. 5 (*on* 9. 256)

**अतिताडन** (ati-tāḍana) *n.* excessive beating अतिताडनैश्चौरे विपन्नेऽथ कृपाकुल: । त्यक्त्वा तमप्यधीकारं विषण्णो जाह्नवीमगात् RājTa.(Ka.) 7. 602; यथासंभवमतिताडनं क्रोशनं चात्र प्रतिषिध्यते ManuBh. i. 155. 27 (*on* 2. 159)

**अतिताडनशीला** (atitāḍana-śīlā) *adj.* (*f.*) used or habituated to excessive beating हिंस्रा नाकुलशङ्कया स्यादेवातिताडनशीला ManuBh. ii. 266. 6 (*on* 9. 80)

**अतिताडित** (ati-tāḍita) *adj.* struck or beaten excessively नृपेण दण्डितोऽत्यर्थं शत्रुणा ह्यतिताडित: SkandP. ii(9). 25. 12; धन्योऽसि कन्दुक···यत् कामिनीकरतलैरतिताडितोऽपि ।··· वक्षोजमाश्लिषसि PadyaVe. 532.

**अतितान** (ati-tāna) *n.* name of a musical composition गन्धर्वाभ्यामतितानं नाम···गान्धर्वमगीयत ViṣṇuP. iv. 1. 68.

**अतितानव** (ati-tānava) *n.* excessive slimness अङ्गानामतितानवं कुत इदम् ··· इति प्राणेश्वरे पृच्छति AmaŚ. 50.

**अतिताप** (ati-tāpa) *m.* **A** excessive heat (भूते:) तस्याश्रमे ···। नातितापं रविश्चक्रे MārkP. 99. 9; त्वमेव शरणम् ···। शीतातितापहिमवृष्टिनिपीडितानाम् KalyāKā. 1. 5; रसविशेषमात्रापेक्षं हि तदतितापेन सान्द्रीभूतेऽपि पयसि पयस्त्वप्रतीते: ŚāstrDī. 357. 1 (*on* iv. 1. 9); **B** excessive pain or affliction अन्तर्निमग्नचरपुष्पशरोऽतितापात्किं किं चकार तरुणो न यदीक्षणाभि: AlaṅkāSa. 90. 3; सखि चन्द्रमसं वाडवानलादतितापकरं मन्ये DaśKuC. 29. 13; किमेभिश्चिन्तनैर्व्यर्थैरतितापकरैर्मम SkandP. iv. 7. 124; **C** excessive inflammation सितया सक्षयेत्कर्षमतितापप्रशुत्तये RasRaSa. 20. 153; तेभ्य: क्षीरं प्रदापयेत् । शमयत्यजि(ति)-

तापं च Hastyāyur. 674. 16 (4. 23)

**अतितापव्यतिकर** (atitāpa-vyatikara) *m.* occasion of excessive heat नभः शून्यं भून्मा प्रसभमतितापव्यतिकरे कुलायान्ते विश्राम्यति (झ)गिति-वृन्दे छद्मभृताम् MahāvīC. 5. 73 (285. 19)

**अतितापार्जन** (atitāpārjana) *n.* I acquiring excessive grief अहो नापत्रपाकं ते जातरूपमिदं मुखम् । नातितापार्जनेऽपि स्यादितो दुर्वर्णनिर्गमः NaiṣC. 20. 141; II acquiring intense heat, NaiṣC. 20. 141.

**अतितापित** (ati-tāpita) *adj.* excessively troubled तस्मान्न शीते नात्युष्णे न खिन्ने नातितापिते । पीत्वा यवागूं तृप्तस्य स्रावयेच्छोणितं बुधः SārṅgaS. iii. 12. 29; बाह्यत्वादतितापितौ । क्षुत्क्षामौ पेततुर्दुःखैः सचिवौ जम्बुकौ हरेः BṛKathāMañ. 16. 281.

**अतितापिन्** (ati-tāpin) *adj.* excessively inflammatory जन्तुः···। अत्यम्ल-कटुतीक्ष्णोष्णलवणैर्मातृभोजनैः । अतितापिभिरत्यर्थं बाध्यमानः (आस्ते) BrahmP. 233. 11.

**अतितामस** (ati-tāmasa) *adj.* [*f.* -ī] greatly affected by the quality of *tamas* (ignorance), an extremely malevolent person एतेषु शून्यवादिनोऽ-तितामसाः NyāySu.(Ja.) 629A. 2 (*on* 4. 2); आश्रित्य प्रतिभामाह जिनस्तत्राति-तामसीम् AnuVyā. 63A. 1 (*on* 4. 2); अतितामसोऽजगन्धिः काकरवो ह्रस्वकूर्चकः पापः । भीरुः कुधीः पिशाचो रासभलिङ्गस्तु विज्ञेयः SārṅgaPa. 3120.

**अतिताम्बूलचर्वण** (ati-tāmbūlacarvaṇa) *n.* excessive chewing of betel leaf शोषः पित्तानिलास्रं स्यादतिताम्बूलचर्वणात् BhāvPra.(Bhā.) 5. 195.

**अतिताम्र** (ati-tāmra) *adj.* [*f.* -ā] extremely red (áti-tāmrá) अतिता-म्राणि वासांसि । अष्टिवज्रिशतघ्नि च । विश्वे देवा विप्रहरन्ति TaiĀ. i. 5. 1 (29. 4); वक्त्रेण ···। दीप्ताक्षेणातिताम्रेण लिहन्तं सृक्किणी मुहुः MahāBhā. iii. 175. 14; भर-तर्षभः । नेत्राभ्यामतिताम्राभ्यां कैतव्यं समुदैक्षत MahāBhā. v. 160. 1; करोऽति-ताम्रो रामाणाम् Kāvyāda. 3. 21; अतिताम्रद्युति कालदन्तिना । रविवारिरुहं निरस्यते NavaSāC. 12. 25; आलुलोके ··· गौतमम् ··· जटाभिरतिताम्राभिः SkandP. i(3A.) 5. 3.

**अतिताम्रता** (atitāmra-tā) *f.* the state of being deep red बाह्यं तु लिङ्गमस्याहुः ··· नेत्रयोश्चातिताम्रताम् MahāP. 21. 53.

**अतिताम्रनख** (atitāmra-nakha) *adj.* possessing very red nails अनु-कृतपक्षिणम् ··· अतिताम्रनखम् (वन्देमहि ··· त्वाम्) StavMā. 48. 29.

**अतिताम्राक्ष** (atitāmrākṣa) *adj.* possessing exessively red eyes पश्यामीवातिताम्राक्षमापतन्तं वृकोदरम् MahāBhā. v. 50. 43; हलायुधः ।··· उवाच चातिताम्राक्षो भृकुटीकुटिलाननः ViṣṇuP. v. 35. 22; हिरण्याक्षो महाबलः । सरो-षश्चातिताम्राक्षो ह्यसुरानादिदेश ह PadmP. v. 65. 1.

**[1]अतितार** (ati-tāra) *adj.* A excessively high or loud सहसैवोच्च-रन्तमतितारम् ··· अश्ववृन्दस्य श्रवणपरुषहेषाध्वनिमश्रौषीत् । TilaMañ. 208. 3; तत्र तत्रातितारेऽत्र···तरेत्तातारतीरेतातते त्रातरि ते रतिः Yādavā. 6. 83; विरलाश्चा-तितारत्वाद्दंशा पञ्चाङ्गुलादधः SaṁgīRa. iii. 323. 1 (6. 440); B shining, very radiant अद्राक्षीत्···प्रभावर्षिणमतितारं हारम् Kād. 202. 7.

**[2]अतितार** (ati-tāra) *adj.* surpassing the stars रत्नाक्षसूत्रवलयं परिवर्त-यन्ती नक्षत्रमण्डलमिव क्षणदातितारम् । ···एषा शिवात्र शिबिरे कृतसंनिधिर्वः Har-Vi. 39. 42.

**अतितारक** (ati-tāraka) *adj.* surpassing the stars अत्यर्कमत्यग्नि तच्चे तेजो व्योम्न्यतितारकम् SkandP. iv. 16. 120.

**अतितारतान** (atitāra-tāna) *m.* tone of high pitch अतितारतानवर्ति-नीनां वर्णा(? वीणा)तन्त्रीणामिव झंकारमेकतानं नारीणां रुदितम्···आकर्णितवानसि HarṣaC. 321. 21.

**अतितारम्** (ati-tāram) *adv.* exceedingly loud पुष्पादिना हन्ति तथाति-तारं संकासयेत् (अनुरक्ता स्त्री) AnaṅgaRa. 8. 22.

**अतितारस्वना** (atitāra-svanā) *adj.* (*f.*) crying aloud (*lit.* with a very loud voice) तयातितारस्वनया गतं मा (comm. उच्चैराक्रोशमानया) Rām-KṛViKā. 21.

**अतितारस्वर** (atitāra-svara) *m.* exceedingly high voice एवमविश्रान्त-मतितारस्वरेण उद्दण्डयतो दण्डपासिकस्य ··· प्रतीहारः सविनयमुक्तवान् NalaCam. 7. 0(1)

**अतितारिणी** (ati-tāriṇī) *adj.* (*f.*) ferrying over, carrying across स (पुत्रः) इरावत्यतितारिणी AitBr. 33. 1 (836)

**अतितार्या** (ati-tāryā) *adj.* (*f.*) to be overcome ये मृत्यव एकशतं या नाष्ट्रा अतितार्याः । मुञ्चन्तु तस्मात्त्वां देवाः अग्नेर्वैश्वानरादधि AV. viii. 2. 27.

**अतितालिन्** (atitālin) *m.* name of a soldier in Skanda's army येऽन्ये स्कन्दस्य सैनिकाः ··· वैताली चातिताली च MahāBhā. ix. 44. 62.

**अतितिक्त** (ati-tikta) *adj.* of a very bitter faste लवणकटुकषायाति-तिक्तोष्णतोयैः ···कफशमनमवाप्नोति मर्त्यः KalyāKā. 10. 4; *n.* fragrant grass कत्तृणमतितिक्ताह्वः AbhidhāMañ. 66. 11.

**अतितिक्तक** (atitikta-ka) *adj.* of a very bitter taste यदा प्रमेही विशदातितिक्तकं सरूक्षसक्षारकदुष्णमूत्रकम् । कदाचिदल्पं विसृजेत् KalyāKā. 11. 56.

**अतितिक्षमाण** (á-titikṣamāṇa) *adj.* unable to endure, not bearing सोऽतितिक्षमाणः पुरुषमेत्राभ्येयाय SatBr. II. iii- 3. 1; श्रीभूतिराघनयं दण्डद्वयं क्रमेणातितिक्षमाणः YaśasCam. ii. 348. 26.

**अतितिक्षा** (a-titikṣā) *f.* impatience, non-endurance अतिवादोऽतितिक्षा च ··· तामसं वृत्तमिष्यते MahāBhā. xiv. 36. 20; ViṣṇuP. iii. 17. 23; MahāP. 34. 120.

**अतितिक्षु** (a-titikṣu) *adj.* not forbearing, impatient तितिक्षुरतितिक्षो-र्विशिष्टः MahāBhā. i. 82. 6; MatsyaP. 36. 6; AvantiKa. 73. 10; अथातितिक्षो-रिव राजराजमन्यं तदाशां प्रति यस्य यातुः । द्विधापि भीत्युज्झितवित्तपाशैर्भूपैः प्रती-पैर्विभयैर्बभूवे EI. ii. 188. 37; NīlaVi. 20. 19.

**अतितिग्म** (ati-tigma) *adj.* very sharp or fierce भीष्मम् ··· तपन्तं मम सैन्यसंवान् । शरौघजालैरतितिग्मतेजैः कालं यथा मृत्युकृतं क्षणेन MahāBhā. vi. 81. 20; BhāgP. v. 2. 8; AvantiKa. 93. 7; SilpaRa. i. 11. 6.

**अतितितिर्वस्** (áti-titirvás) *adj.* crossing over, overcoming होत्राभिरग्नि मनुषः समिन्धते तितिर्वांसो अति स्रिधः ṚV. i. 36. 7.

**अतितितीर्षत्** (ati-titīrṣat) *adj.* seeking to cross over or to overcome यः स्वानुभावमखिलश्रुतिसारमेकमध्यात्मदीपमतितितीर्षतां तमोऽन्धम् । संसा-रिणां करुणयाह ··· तं व्याससूनुमुपयामि BhāgP. i. 2. 3.

**अतितितीर्षु** (ati-titīrṣu) *adj.* desirous of crossing over कथमन्योऽन्य-संत्यागो मुमुक्षोरतितितीर्षोः BhāgP. xi. 13. 17.

**अतितिन्दूत्पथ** (atitindūtpatha) *m.* palmyra tree अतितिन्दूत्पथः कृष्णा-तिन्दुकोऽसिततिन्दुकः AbhidhāMañ. 116. 5.

**अतितिरस्कार** (ati-tiraskāra) *m.* extreme contempt or neglect वरं चातितिरस्कारो बालानां नातिलालना BṛKathāSloSaṁ. 20. 89.

**अतितिरस्कृता** (ati-tiraskṛtā) *adj.* (*f.*) extremely despised भर्त्रा चातितिरस्कृताम्···सम्यगाश्वास्य तेनैतामनुकूलयेत् BhaviP. 35A. 9 (i. 13. 27)

**अतितिर्यग्दृष्टि** (ati-tiryagdṛṣṭi) *adv.* keeping the eye straight कनीन-कादपाङ्गं यावदञ्जनं नयेदनल्पम् ··· अति(? अ)तिर्यग्दृष्ट्यकम्पितम् AṣṭāSaṁ. i. 165. 3 (1. 32)

**अतितिलपीडनि** (ati-tilapīḍani) *adj.* surpassing the sesamum grinder; above or beyond sesamum-crusher 'त्यग्रहणे यस्मात्स तदादेः' इतीयं परिभाषा स्त्रीत्यग्रहणान्नेष्यते । तेन—अतितिलपीडनिः JaineVyā. 4. 16 (*on* i. 1. 8)

**अतितिष्टिघिषत्** (ati-tiṣṭighiṣat) *adj.* desirous of overpowering, desiring to attack तां अतितिष्टिघिषन्नतिष्टिघं नाशक्नोत् MaiS. i. 6. 3.

**अतितिष्ठत्** (ati-tíṣṭhat) *adj.* going beyond, overcoming मूलं वा अतितिष्ठद्रक्षांस्यनूत्पिपते TaiBr. III. ii. 9. 10.

**अतितिसृ** (ati-tisṛ) *adj.* (*f.*) surpassing three, going beyond three उपसमस्तार्थमेके जसो ग्रहणमिच्छन्ति । अतितिस्रौ । अतितिस्रः MahāBh. iii. 104. 22 (*on* vi. 1. 166); iii. 222. 5 (*on* vi. 4. 130)

**अतितीक्ष्ण** (ati-tīkṣṇa) *adj.* [*f.* -ā] i very harsh प्रब्रूयान्नातितीक्ष्णेन कण्ठेन मृदुनादिना MāṇḍūŚi. 4. 5; वाचः ··· अतितीक्ष्णा मया क्षान्ताः MahāBhā. iii. 296. 3; v. 21. 4; ii very strong अतितीक्ष्णोग्राभिष्यन्दिनां गन्धा-नामतिमात्रं घ्राणमतियोगः CaraS. i. 11. 37; BrahmāṇḍP. iii. 28. 100; नाति-तीक्ष्णमृदुस्वच्छघनं व्यापन्नमेव वा (मद्यं पेयम्) AṣṭāSaṁ. i. 27. 14 (1. 6); i. 123. 12 (1. 23); i. 163. 13 (1. 32); क्षारस्य ··· दशैव दोषाः ··· अत्युष्णोऽतिशी-तोऽतितीक्ष्णः AṣṭāSaṁ. i. 191. 15 (1. 39); AṣṭāHṛ. i. 3. 26; न विकार-शतानि नातितीक्ष्णा मदिरा दर्शयति स Kapphiṇā. 13. 33; RugVi. 26. 6; GītāBh.(Śaṅ.) 475. 9 (*on* 17. 9); GītāBh.(Rā.) 617. 25 (*on* 17. 9); BṛKathāK. 123. 11; NītiVā. 30. 11; SiddhYo. 75. 15; GaṇeP. ii. 95. 54; ii. 115. 35; AśvaVai. 6. 11; RājTa.(Jo.) 821; (मूत्रम्) औष्ट्र-मतितीक्ष्णं कृमिकोष्ठविशोधनार्थं दद्यात् Hastyāyur. 687. 3 (4. 27); iii very severe, very cruel अतितीक्ष्णः ··· सर्वे ब्रह्महणैः समाः MahāBhā. v. 35. 40; viii. App. 1. 8(11); xiii. 72. 37; तस्याः ···सौम्यप्रकारमतितीक्ष्णमवेक्ष्य वक्त्रम् Avimā. 2. 7; BṛSaṁ. 68. 110; दुर्वाससातितीक्ष्णेन ··· अन्यैर्महर्षिभिः ··· प्रत्यवेक्ष्यसे SkandP. i(3B). 3. 12; ii(2). 30. 12; ii(8). 7. 127; Hastyāyur. 612. 2 (4. 5); सिंहासनमशिश्रियत् । अतितीक्ष्णो नवो राजा RājTa.(Śrī.) 2. 6; ŚukraNī. 4(7). 123; iv very sharp (means) नृपस्त्वां हन्तुमुद्यतः । अद्य श्वो वातितीक्ष्णैश्च किंचिन्नाद्यापि बुध्यसे Manaso. ii. 18. 990; अतितीक्ष्णेन शस्त्रेण छिन्नमांसं च कर्तयेत् AśvaVai. 39. 25; *m.* red Moringa pterygosperma अती(? ति)तीक्ष्णो रक्तशिग्रौ ApūNā. 20B. 4.

**अतितीक्ष्णक** ( atitīkṣṇa-ka ) *m.* name of a plant श्वेतोऽतितीक्ष्णकः KośaKaTa. 1. 3375.

**अतितीक्ष्णकर** ( atitīkṣṇa-kara ) *adj.* doing very cruel (acts) ( भत्रेज्जात: ) भौमे···पञ्चमेऽतितीक्ष्णकरः HorāSā. 21. 19.

**अतितीक्ष्णकाग्र** ( ati-tīkṣṇakāgra ) *n.* very sharp point, extremely sharp awn शूकोऽपि धान्याद्यतितीक्ष्णकाग्रे KośaKaTa. 2. 3337.

**अतितीक्ष्णकील** ( atitīkṣṇa-kīla ) *m.* very sharp nail or spike सुभगस्तारकोत्तमः। विद्धोऽतितीक्ष्णकीलेन शूलप्रोत इवाजनि MalliC. 7. 251.

**अतितीक्ष्णकोटि** ( atitīkṣṇa-koṭi ) *adj.* having very sharp point, very sharp-tipped अतितीक्ष्णकोटिभिष्टङ्किकाभिस्तक्ष्यमाणाभ्यः शिखरमणिशिलाभ्यः समन्ततः समुच्छलितानि···स्थूलशकलानि TilaMañ. 156. 8.

**अतितीक्ष्णचञ्चु** ( atitīkṣṇa-cañcu ) *f.* very sharp beak शुककुलम् ···अतितीक्ष्णचञ्चुचरणैरुपद्रुतां मां करिष्यति प्रसभम् S'ṛṅgāMañ.( A. ) 10. 9.

**अतितीक्ष्णतरा** ( atitīkṣṇa-tarā ) *adj.* ( *f.* ) extremely sharp अतितीक्ष्णतरे जिह्वे मुखे कुर्यात्तु लोचने S'ilpaRa. ii. 16. 52.

**अतितीक्ष्णता** ( atitīkṣṇa-tā ) *f.* excessive sharpness अतितीक्ष्णता अतिमृदुता ··· अतिस्निग्धता ··· द्रव्यदोषा: SuśruS. iv. 35. 32; HarṣaC. 160. 9; KalyāKā. 2. 12; शस्त्राणां चातितीक्ष्णताम् ··· अनुगच्छन्ति योषित: SūktiRa. 54. 3; RājTa.(S'rī.) 2. 114.

**अतितीक्ष्णधार** ( atitīkṣṇa-dhāra ) *adj.* having a very sharp edge अतितीक्ष्णधारोऽपि ··· मन्दमपि पूर्वच्छेदतः परेण प्रसर्तुं न शशाक निस्त्रिंशः TilaMañ. 53. 14.

**अतितीक्ष्णधी** ( atitīkṣṇa-dhī ) *adj.* having an extremely sharp intellect अतितीक्ष्णधीः ···तस्या जारोऽप्यासीज्जयाकरः RājTa.( Ka. ) 7. 125.

**अतितीक्ष्णप्रज्ञ** ( atitīkṣṇa-prajña ) *adj.* having a very sharp intellect ततोऽतितीक्ष्णप्रज्ञेन नोनकाख्येन मन्त्रिणा। अभ्यूह्य शिक्षितकलो विलक्षोऽगाद्यथागतम् RājTa.( Ka. ) 7. 530.

**अतितीक्ष्णमहादंष्ट्र** ( atitīkṣṇa-mahādaṁṣṭra ) *adj.* having very sharp and large teeth स ( शरभाख्यो हरः ) मृगार्धशरीरेण ··· अतितीक्ष्णमहादंष्ट्रः LiṅgaP. i. 96. 67.

**अतितीक्ष्णवेग** ( atitīkṣṇa-vega ) *adj.* having very sharp (i. e. high) speed ततः समेतावतितीक्ष्णवेगौ महाबलौ तौ रणनिर्विशङ्कौ। कपिश्च रक्षोऽधिपतेश्च पुत्रः Rāmā. v. 46. 24.

**अतितीक्ष्णा** ( ati-tīkṣṇā ) *f.* red mustard आसुरी राजिका राजी कृष्णका रक्तसर्षपः। तीक्ष्णगन्धा चातितीक्ष्णा DhanvNi. 146. 9; ApūNā. 20B. 4.

**अतितीक्ष्णांशु** ( atitīkṣṇāṁśu ) *adj.* ( the sun ) whose rays are very hot or scorching तीक्ष्णांशुरतितीक्ष्णांशुर्ग्रीष्मे संक्षिपतीव यत् AṣṭāHṛ. i. 3. 26.

**अतितीक्ष्णाग्निसाध्य** ( atitīkṣṇāgni-sādhya ) *adj.* curable by highly strong fire अतितीक्ष्णाग्निसाध्यांस्तु शिलाभिः साधयेद्भिषक् Hastyāyur. 112. 1 (1. 15)

**अतितीक्ष्णाग्र** ( atitīkṣṇāgra ) *adj.* which has a very piercing or sharp tip तच्छूलमतितीक्ष्णाग्रं सुभीमं लोमहर्षणम् MahāBhā. xiii. 14. 135; अलावीदतितीक्ष्णाग्राण्यविकारं कुशानि सा SkandP. i(3B). 18. 54.

**अतितीक्ष्णाङ्ग** ( ati-tīkṣṇāṅga ) *adj.* having very sharp limbs (in outlines) अनुरूपप्रमाणेन नातितीक्ष्णाङ्गमेव च। ···गण्डपरावृत्तं स्थानम् ViṣṇuDhaP. iii. 39. 22.

**अतितीक्ष्णानन** ( atitīkṣṇānana ) *adj.* [ *f.* –ā ] possessing an extremely sharp beak or mouth यन्त्रम् काकमुखं तदेव यदपि ध्वाङ्क्षातितीक्ष्णाननम् Jīvān. 282. 5; या शीघ्रं पिबतीह शीघ्रगमना दीर्घातितीक्ष्णानना। सा स्याच्छङ्कुमुखी KalyāKā. 21. 41.

**अतितीक्ष्णाभिधेयसूचि** ( atitīkṣṇābhidheya-sūci ) *adj.* consisting of needles in the form of very sharp ideas पशुजनहृदयकुशेशये न असदीयैर्वचनशतैरपि अतितीक्ष्णाभिधेयसूचिभिरपि संभेदोऽथ विकासोऽथ वितरीतुं शक्यः ParāTri. 137. 1.

**अतितीक्ष्णास्त्र** ( atitīkṣṇāstra ) *n.* very sharp missile पापिनो जनान्। निहन्त्याद्यातितीक्ष्णास्त्रैः BrahmāṇḍP. iii. 39. 26.

**अतितीर्थ** ( atitīrtha ) *n.* name of a *tīrtha* (a holy place) [PW]

**अतितीव्र** ( ati-tīvra ) *adj.* [ *f.* –ā ] A very intense, very poignant अतितीव्राणि दुःखानि ···। तवाहं संजयाश्रौषं पुत्राणां मम संक्षयम् MahāBhā. viii. 20. 1; भयेऽतितीव्रे विषयेषु सज्जसे BuddhaC. 4. 97; आविर्बभूव शक्तीनामतितीव्रस्तृषाज्वरः BrahmāṇḍP. iii. 28. 47; यातनास्वतितीव्रासु वाहीके संस्थिते तदा।··· पतितं तद्धि गृध्रास्यात् SkandP. iv. 28. 80; करचरणपार्श्वपृष्ठप्रभृतिष्वनिलस्य कोपमतितीव्रम् ( कुरुते ) AṣṭāSaṁ. i. 98. 8 (1. 18); व्याधीनामतितीव्राणां शमनं पादपांशुना PadmP.(Ra.) 14. 124; तस्मिन् असत्यार्थेऽतितीव्रे जिह्वाच्छेदः DaṇḍaVi. 202. 23; इत्थमुत्थितमतर्कितमतितीव्रम्···प्रसोढुम् ĀnandRa. 3. 20 (1); **B** very austere, very fierce, very harsh अतितीव्रोऽयमारम्भस्त्वयारब्धः MahāBhā. iii. 280. 5; अतितीव्रमभूद्युद्धं नरराक्षसयोर्मृधे MahāBhā. vii. 142. 38; अतितीव्रमभूद्युद्धं तयोः पुरुषसिंहयोः MahāBhā. vii. 131. 110; अतितीव्रं तपो मया कृतम् ManuBh. i. 409. 23 (*on* 4. 236); अतितीव्रेण तपसा स्वशरीरमशोषयत् VarāP. 6. 7; अहो ममातितीव्राणि तेजांसि च तपांसि च। व्यर्थीभूतानि RāmāMañ. 347. 3; **C** very severe, very strict जटिलः कर्कशः पिङ्गो ह्यतितीव्रो महाप्रभुः PadmP. ii. 12. 74; मोक्षितोऽहं त्वया शापात्। प्रदत्तादतितीव्रेण ब्रह्ममित्रेण MārkP. 63. 36; अतितीव्रं स्तवैः ··· कुर्याद्वशम् S'ārṅgaPa. 1594; नातितीव्रो न वा मन्दः सर्वस्यैव महीपतिः RājTa.( Jo. ) 541; **D** very fierce, very hot, very strong योगी ··· अतितीव्रेण नाग्निनाप्येष दह्यते MālinīT. 15. 31; कः शमयेत्। अतितीव्रदुःसहभवोष्णकरप्रचुरातपप्रभवतापमिमम् S'aṅkaDigVi.( Mā. ) 9. 34; **E** very terrible, very formidable बिभ्रतस्तव यद्रूपमतितीव्रं नतास्मि तत् BrahmP. 32. 14; **F** very pungent, acid [ MW, Apte ]

**अतितीव्रतपस्** ( atitīvra-tapas ) *adj.* who practises very severe penance अतितीव्रतपा नित्यं तत्त्वार्थगतमानसः PadmP.( Ra. ) 13. 63; अतितीव्रतपोबलान्नरीश्वयमाशंसति पाकशासनः RāmC. 13. 7; *n.* very severe penance अतितीव्रतपस्तप्त्वा सूर्योऽलभत तां द्युतिम् BrahmāṇḍP. iii. 35. 43; तपनः···अतितीव्रतपसा जज्वाल नितरां मुने SkandP. iv. 49. 29.

**अतितीव्रतर** ( atitīvra-tara ) *adj.* excessively severe वह्निरतितीव्रतरावेगावेशेन सर्वाङ्गे प्रकम्पनेनावधूतः Kāvyānu.( He. ) 139. 5.

**अतितीव्रता** ( atitīvra-tā ) *f.* great severity अतितीव्रतान्वितं छाययैव सुरराजमण्डलम्। यश्चकार परिहीनमोजसा HarVi. 14. 19.

**अतितीव्रताप** ( atitīvra-tāpa ) *m.* excessive distress अतत न बहिरेव तापशान्ति व्यथित मनोऽप्यतितीव्रतापवन्ध्यम् Kapphiṇā. 10. 5.

**अतितीव्रत्व** ( atitīvra-tva ) *n.* great severity भगवद्विरहभावे नातितीव्रत्वेन सर्वोपमर्दिना AṇuBh. 32. 4 (*on* i. 1. 11); भगवदाविर्भावे सत्यपि पूर्वभावस्यातितीव्रत्वेन AṇuBh. 33. 8 (*on* i. 1. 11)

**अतितीव्रनियम** ( atitīvra-niyama ) *m.* very austere observance तस्यातितीव्रनियमाद्रुस्तेऽगस्त्ये KalāVi. 1. 75.

**अतितीव्रप्रकृति** ( atitīvra-prakṛti ) *f.* very fierce nature अतितीव्रप्रकृतिकोपनो नरपतिः ··· त्वामस्मांश्च ··· हनिष्यति KāmVa. 5. 35 (3)

**अतितीव्रप्ररोचित** ( atitīvra-prarocita ) *adj.* excessively allured अधिकारिणः प्रतिपत्तिमात्रादतितीव्रप्ररोचितात् प्रथमप्रवृत्तादनन्तरम् ··· प्रतिपत्तिस्तथैव AbhinBhā. i. 278. 22 (*on* 6. 32)

**अतितीव्रबल** ( atitīvra-bala ) *adj.* having excessive power or strength योगः सः ···। प्रयोज्यः कफसंसृष्टे नातितीव्रबलेऽनिले KāśyaS. 277B. 30.

**अतितीव्रम्** ( ati-tīvram ) *adv.* **A** very intensely संहारकालसविक्षेपरुचोऽतितीव्रमुष्णत्विषो दिनमिव HarVi. 8. 49; **B** excessively, very bitterly अनुदिनमतितीव्रं रोदिषीति त्वमुच्चैः Subhāṣi. 1117; **C** very quickly अतितीव्रमतिकौतुकतः समेत्य ··· अदिशत् ··· रत्नानि ( भूमिपालः ) ĀnandRa. 3. 11.

**अतितीव्रमदा** ( atitīvra-madā ) *adj.* ( *f.* ) causing severe intoxication नातितीव्रमदा लघ्वी पथ्या वैभीतकी सुरा AṣṭāSaṁ. i. 27. 19 (1. 6) = AṣṭāHṛ. i. 5. 69.

**अतितीव्ररुज्** ( atitīvra-ruj ) *adj.* causing very severe pain मन्दस्रावोऽतितीव्ररुक्।··· व्रणो मारुतसंभवः CaraS. vi. 25. 11 (1941 Ed.)

**अतितीव्ररुजा** ( atitīvra-rūjā ) *f.* excessively severe pain अतितीव्ररुजारागदाहश्वयथुपीडितम्। पाकात्ययेन तच्चुक्रं वर्जयेत्तीव्रवेदनम् AṣṭāSaṁ. ii. 227. 4 (6. 13); AṣṭāHṛ. v. 10. 29.

**अतितीव्रविवृत्त** ( atitīvra-vivṛtta ) *adj.* turned or rolled with excessive intensity ज्वलयामास च कोपवह्निना सः। अतितीव्रविवृत्तभीष्मनेत्रद्युतिरुद्धाभ्रविभिन्नमेघजालः SkandP. i(3). 10. 107.

**अतितीव्रविष** ( atitīvra-viṣa ) *n.* very strong poison तत्र चातितीव्रविषदाहवेदनोपशमाय शनकैर्निधाय ताम् TilaMañ. 380. 12; *adj.* greatly poisonous क्वातितीव्रविषाः सर्पाः क्वासौ चन्दनभूरुहः Candrā. 5. 80.

**अतितीव्रवेग** ( atitīvra-vega ) *adj.* moving extremely fast बाणैः सुमुक्तैरतितीव्रवेगैर्यैराहतो मृत्युरपि व्यथेत् MahāBhā. viii. 12. 53; स मुमोच बाणानतितीव्रवेगान् DevīBhāP. iv. 9. 28.

**अतितीव्रवेदन** ( atitīvra-vedana ) *adj.* causing excessively severe pain नरकेष्वतितीव्रवेदनेषु ··· जीवाः।··· परिपत्यानुभवन्ति घोरदुःखम् VarāṅgaC. 24. 65.

**अतितीव्रवेदना** ( atitīvra-vedanā ) *f.* very severe pain ( नरकान् प्राप्य ) घोरानतितीव्रवेदनापादकत्वेनातिभयंकरान् Mitā. 400. 20 (*on* 3. 206)

**अतितीव्रशक्तिपात** (atitīvraśakti-pāta) *m.* advent (i. e. favour) of very strong energy (of S'iva) परमार्थमार्गमेनं झटिति यदा गुरुमुखात् समभ्येति। अतितीव्रशक्तिपातात् तदैव निर्विघ्नमेव शिवः ParamāSā. 96; भक्तानाम् – अतितीव्रशक्तिपाताघ्रातहृदयत्वेन समावेशरूपभजनशालिनाम् Bhāsk. ii. 280. 12 (*on* iv. 1. 1)

**अतितीव्रसुरता** (atitīvra-suratā) *adj.* (*f.*) performing intercourse with extreme intensity अतितीव्रसुरता…सा हस्तिनीति श्रुता S'ṛṅgāDī. 2. 6.

**अतितीव्रस्वभावा** (atitīvra-svabhāvā) *adj.* (*f.*) having an excessively strong nature अतितीव्रस्वभावाश्च आज्ञाशक्तय एवैताः BrahmāṇḍP. iii. 19. 29.

**अतितीव्रा** (ati-tīvrā) *f.* Dūrvā grass गण्डाली स्याद्गण्डदूर्वातितीव्रा RājNi. 164. 2

**अतितुङ्ग** (ati-tuṅga) *adj.* [*f.* -ā] **1A** very tall, very high अतितुङ्गो हीरशालः BrahmāṇḍP. iii. 33. 14; (नारकाः) उल्लङ्घयन्तेऽतितुङ्गेषु पादपेष्वन्धकारिषु PadmP.(Ra.) 26. 89; 25. 14; 33. 53; अतितुङ्गः…। भगवति कलितोऽयं वाहनार्थं मया ते … तुरङ्गः DevīCatuSta. 47; LalitāStaRa. 93; उत्कन्धरानेव रणाङ्गणेषु यस्यातितुङ्गस्य हठात् प्रहर्तुः। न नम्रभावादपरो नृपाणामासीत् कृपाणप्रतिषेधमार्गः VikraDeC. 3. 69; तदवेक्षितुं गगनमध्यतलं रविरध्यरोहदतितुङ्गमिव S'ivLī. 17. 80; योधाः … समधिरुह्य तुरङ्गान् … अतितुङ्गान् ĀnandRa. 7. 39 (8); **1B** very prominent अतितुङ्गघोरघोणम् … शवरसेनापतिमपश्यम् Kād. 30. 2; नौमि मतङ्गाननमतितुङ्गामलकरजवरहेलम् PadyāTa. 5; PadyaVe. 7; **2** very great, very noble विभूतिमतितुङ्गांश्च वाध(? वान्ध)वांश्च सुमानसान्। परित्यज्य मयि प्रीत्या विदेशमपि संगता PadmP.(Ra.) 30. 102; प्रस्थितस्य मया साकमेवं धृत्यातितुङ्गया। प्राप्ता जनपरीवादवार्ता PadmP.(Ra.) 98. 68.

**अतितुङ्गता** (atituṅga-tā) *f.* excessive tallness अपश्यंस्ते वनषण्डम् …। अतितुङ्गतया व्योम आवृण्वानं नरोत्तम VāmaP. 89. 12.

**अतितुङ्गद्रुम** (atituṅga-druma) *m.* very tall tree सा…। अटवीमतिभीषणामगादतितुङ्गद्रुमलम्बिताम्बराम् Nalābhyu. 7. 67.

**अतितुङ्गपद** (atituṅga-pada) *n.* very high position (i. e. heaven) (श्रयामि सेतुम्) अतितुङ्गपदलिप्सुतनुभृदधिरोहिणीम् … दुर्ललितयातुधानसमाजधूमकेतुरामसेतुम् YātrāPra. 5. 45 (2)

**अतितुङ्गभाग** (atituṅga-bhāga) *m.* very high position of a planet नित्याङ्गनाहरिमयामनुसारनीरसंख्या दिवाकरसुखादतितुङ्गभागाः JātaPā. 1. 29.

**अतितुङ्गवत्** (atituṅga-va(n)t) *adj.* very high सेनावेशनहर्म्यं तु यमभागेऽतितुङ्गवत् MayaMa. 29. 32.

**अतितुङ्गशिखर** (atituṅga-śikhara) *n.* very high peak अस्यातितुङ्गशिखरोन्नमितम् … नितम्बतटमम्बरमालम्बे HarVi. 5. 81; स राजा … अतितुङ्गशिखरतोरणप्राकारं शक्रावतारं नाम सिद्धायतनमगमत् TilaMañ. 35. 16.

**अतितुङ्गशृङ्ग** (atituṅga-śṛṅga) *n.* **1** very high peak अतितुङ्गशृङ्गोच्छ्रायप्रांशुपृथुशिलाशालपरिगतम् … कामदेवायतनमायातवती TilaMañ. 303. 19; **2** very long horn(s) अतितुङ्गशृङ्गभासुरम् … महोक्षाधिराजमद्राक्षीत् YātrāPra. 1. 53 (3)

**अतितुङ्गसुरनिकेतन** (atituṅga-suraniketana) *n.* very lofty abode of the gods अतितुङ्गसुरनिकेतनशिखरसमुत्क्षिप्तपवनचलिताभिः। मञ्जरितमिव विराजति यत्र नभो वैजयन्तीभिः KuṭṭaMa. 6.

**अतितुच्छ** (ati-tuccha) *adj.* **A** extremely insignificant, absolutely empty (argument) तव स्ववस्तुरूपाणामपोहानां सर्वप्रकारशून्यानां भिन्नत्वव्यपदेशोऽतितुच्छ एव S'arka. 39. 11; अतितुच्छश्चायमिन्द्रियचैतन्यपक्षः NyāyMañ. ii. 14. 5; शब्दैकप्रमाणकत्वपक्षोऽतितुच्छ एव Kāśi. ii. 176. 20 (*on* 5 (3). 213); अतितुच्छश्चायं सर्वज्ञवादः NyāyRa. 85. 14 (*on* 2. 131); तस्मान्न निषेध्यत्वमिति। तदिदमतितुच्छं न निराकरणमपि प्रयोजयति NyāyRaMā. 112. 18; Nyāyāmṛ. 68A. 6; 289A. 9; UpaParā. 14. 17; यदस्य संसृष्टिनस्तु संसृष्टी इत्यादिवचनस्य भवताभिहितं तत्त्वतितुच्छम् VīraMi.(Vyavahāra) 513. 2; **B** very inferior इन्द्रत्वं च…चिरजीवित्वमेव वा। जलबुद्बुदवद्बुद्ध्या चातितुच्छं न गण्यते BrahmVaiP. i. 14. 54; ज्ञानमात्रमिदमतितुच्छमिति तत्सृष्टौ (? अ)लौकिक्य एव विप्रतिपत्तयः Loc. 200. 26 (*on* 3. 33); दृश्यते हि म्लेच्छप्रायैरतितुच्छैर्नास्तिकैरास्तिकमार्गे परिभूते … स्वच्छधियाम् … संरम्भेण प्रवृत्तिः TarkSaṁ.(Ā.) 102. 13; **C** very small उदरेणातितुच्छेन…योषिद्भवति भोगाढ्या SkandP. iv. 37. 50.

**अतितुच्छक** (atituccha-ka) *adj.* very trifling त्रैलोक्यमिदमैश्वर्यं कियदेवातितुच्छकम् DevīBhāP. viii. 19. 25.

**अतितुच्छता** (atituccha-tā) *f.* **A** the state of being extremely insignificant or empty तस्य कथमतितुच्छता कारणाभावेन तथाविधज्ञानाभावात् TātpaṬ.(U.) 73. 18 (*on* 2. 112); किं परप्रत्ययाश्रयणेनेत्युपालभमानोऽतितुच्छतया नायं पक्षो निराकरणं प्रयोजयति इति दर्शयति Kāśi. i. 119. 13 (*on* 2. 112); **B** the state of being of a very low cadre न किञ्चिद्व्यसनमतिरिच्यते अतितुच्छताजातिचारानर्हत्वं भवतीत्यर्थः ManvaVi. 1260. 8 (*on* 9. 296); **C** extreme meagreness भ्रातुरेकत्वे भगिनीनां च सप्ताष्टत्वे भ्रातृभागस्यैकनिष्ठत्वे तच्चतुर्थभागस्य स्वल्पत्वेन तत्राप्यंशकल्पनायामतितुच्छता स्यात्तदंशस्य S'ubodhi. 54. 22 (*on* 2. 124)

**अतितुच्छत्व** (atituccha-tva) *n.* **A i** extreme insignificance or emptiness (of an argument) नापि … सोऽनेन निषिध्यते, अतितुच्छत्वेनानिराकार्यत्वात् TātpaṬ.(U.) 73. 18 (*on* 2. 112); NyāyMañ. ii. 198. 14; सोऽतितुच्छत्वादेव न निराकार्यः NyāyRaMā. 80. 9 (*on* 2. 112); चार्वाकसमयस्यातिविरोधित्वेऽप्यतितुच्छत्वेन प्रथमं निषेध्यतायोगात् TattvPrakā. 94A. 9 (*on* ii. 2. 1); असदुत्तरमेव पूर्वपक्षस्यातितुच्छत्वज्ञापनाय उक्तमिति समाहितम् MīmāKau. ii. 118. 21 (*on* ii. 4. 11); i. 230. 5 (*on* i. 4. 9); अत्र च पूर्वपक्षस्यातितुच्छत्वात्सुहृद्भूत्वोपदेशः BhāṭṭaDī. ii. 246. 6 (*on* vi. 2. 8); लोकायतिकादिमतानि त्वतितुच्छत्वात् … नोट्टङ्कितानि GoviBh. 133. 9 (*on* ii. 2. 32); **A ii** excessive inferiority चन्द्रस्य जलेनोपमानतया सम्भावितस्य वराकतोक्त्यातितुच्छत्वान्मुखेन सह दूरापास्तं साम्यम् AlaṅkāRa. 22(41); **B** nothingness, state of a non-entity अस्तु तर्ह्यनित्यमेवोपलब्ध्यर्थक्रियारहितत्वेन गगनारविन्दवदतितुच्छत्वादित्यत आह TattvVai. 129. 16 (*on* 3. 13)

**अतितुच्छप्राय** (atituccha-prāya) *adj.* almost nothing, absolutely insignificant or subordinate अवयवैरिति। अतितुच्छप्रायैरित्यर्थः Loc. 218. 24 (*on* 3. 41) = Kāvyānu.(He.) 310. 12 (comm.)

**अतितुद्** (ati-tud) *adj.* excessively pricking जजौजोजाजिजिज्जाजी तं ततोऽतितताततुत् S'iśuVa. 19. 3.

**अतितुन्दिल** (ati-tundila) *adj.* having an excessively protuberant belly अतितुन्दिलस्य…घोणासृजा…अस्य…स्वर्वासिनो हासिताः BālRā. 10. 21.

**अतितुभ्यम्** (ati-tubhyam) cf. **अतियुष्मद्** KāśiVṛ. *on* P. vii. 2. 93; vii. 2. 95; KātanVṛ. *on* ii. 3. 12; Pradī. vi. 163. 7 (*on* vii. 2. 98); PrakriKau. i. 254. 5.

**अतितुमुला** (ati-tumulā) *adj.* (*f.*) very tumultuous, excessively noisy आक्रन्दः … चक्रेऽतितुमुला दिशः PāṇḍaC. 7. 513.

**अतितुम्बरु** (ati-tumbaru) *adj.* surpassing Tumbasu तस्मिन्नतितुम्बरौ मधुरतरं गायति सति श्रुतं तत्स्वरूपं महादेव्या TīrthaKa. 62. 6 = PrabaK. 70. 3.

**अतितुम्बुरु** (ati-tumburu) *adj.* who has surpassed Tumburu (in musical achievements) सः … प्रेयान्बभूव लोकस्य गान्धर्वेणातितुम्बुरुः PariPar. 9. 38;

**अतितुरङ्गम्** (ati-turaṅgam) *adv.* surpassing a horse (in speed) त्वरितमतितुरङ्गं संभ्रमादीयिवांसं नरपतिः …भल्लमादाय दोर्भ्याम् Rāvaṇā. 3. 52.

**अतितुष्** (ati-tuṣ-) IV. P. to be very much pleased लोकातीत इवात्यर्थमध्यारोप्य विवक्षितः। योऽर्थस्तेनातितुष्यन्ति विदग्धा नेतरे जनाः Kāvyāda. 1. 89.

**अतितुष्ट** (ati-tuṣṭa) *adj.* [*f.* -ā] very much pleased, very much delighted मृडान्यापि तथेत्युक्ता राज्ञी भक्त्यातितुष्टया SkandP. iv. 83. 23; तदातितुष्टा सुरसत्तमा सा अट्टाट्टहासं मुमुचे त्रिनेत्रा VāmaP. 18. 18; 62. 48; ज्ञानिनां गुरुः। ज्ञानं कथितुमारेभे ह्यतितुष्टः सनातनः BrahmVaiP. ii. 36. 63; GaṇeP. i. 92. 5; BrahmP. 114. 16; द्रम्मं स चार्जयित्वातितुष्टः श्रीवृषभप्रभुम् … पूजयामास भक्तितः PrabhāC. 204. 12; PrabaCin. 50. 12; इति मुनिरतितुष्टोऽध्युष्य सर्वज्ञपीठम्…बदरीं स प्राप S'aṅkaDigVi(Mā.) 16. 93.

**अतितुष्टात्मन्** (atituṣṭātman) *adj.* whose mind is greatly pleased शक्रेण…°प्रशमनं दृष्ट्वातितुष्टात्मना निःशङ्कं निदधे शचीकुचतटे चेतश्चिरेण ध्रुवम् EI. ii. 441. 10.

**अतितुष्टि** (ati-tuṣṭi) *f.* great satisfaction, great pleasure ज्योत्स्नाभिसारविधये बिसकङ्कणानि मुक्तागुणा मलयजं च तवातितुष्टयै S'rīKaC. 11. 33.

**अतितुष्टिद** (atituṣṭi-da) *adj.* causing great satisfaction, giving great pleasure पवित्रकं कृतं विष्णोरन्तस्थस्यातितुष्टिदम् PauṣkS. 30. 226; PāraS. 12. 28.

**अतितुष्ट्यर्थ** (atituṣṭy-artha) *adj.* intended for great satisfaction इमानि त्वतितुष्ट्यर्थानि खड्गामिषं महाशल्कम् BālaKrī. i. 169. 7 (*on* 1. 256–257)

**अतितूर्ण** (ati-tūrṇa) *adj.* very swift अतितूर्णमतिविलम्बितमुल्बणनादं च नादहीनं च। … परुषं च (पाठं) निन्दन्ति KāvyMī. 33. 11; तावत्सोऽपि नृपकुमारः …शीर्णतरुरिवातितूर्णवातापनीतजीर्णपर्णनिवहः सहसैव विच्छायतामगच्छत TilaMañ. 290. 6.

**अतितूर्णम्** (ati-tūrṇam) *adv.* very speedily, very quickly, in great haste बाहू प्रसार्याभिमुखोऽतितूर्णं स धर्मराजस्य समीपमद्र(? द्रि)राट् MahāBhā. ix. 94*. (1); नातितूर्णम् (अध्वानं प्रपद्येत) ViṣṇuSm. 63. 11; क्रोधादधावदपभीरतितूर्णमन्यनागाभियुक्त इव युक्तमहो महेभः S'iśuVa. 5. 32; नातितूर्णं न सन्ततम्

(व्रजेत्) AṣṭāSaṁ. i. 9. 19 (1. 3); VarāṅgaC. 12. 58; अतितृर्गं न चेत्प्राप्तो मयि जीवति विह्वले RājTa.(S'rī.) i. 3. 89; Raghunā. 8. 13; NīlaVi. 80. 20; MahāN. 9. 23.

**अतितृट्परीत** (atitṛṭ-parīta) *adj.* overcome by excessive thirst, ViṣṇuP. iv. 2. 14 [nt.] cf. अतिक्षुत्परीत.

**अतितृण्ण** (ati-tṛṇṇa) *adj.* excessively injured or pierced यन्मे छिद्रं चक्षुषो हृदयस्य मनसो वातितृण्णं बृहस्पतिर्मे तद् दधातु VājaS. 36. 2

**अतितृद्** (ati-tṛd-) VII. P. to pierce through तिस्रो दिवो अत्यतृणत् तिस्र इमाः पृथिवीरुत AV. xix. 32. 4.

**अतितृप्** (ati-tṛp-) VI. P. to thoroughly or fully satisfy, to satiate यं त्वा (द्रोणकलशं) सोमेनातीतृपाम VājaS. 7. 29.

**अतितृप्** (ati-tṛp-) IV. P. to be satiated [MW]

**अतितृप्त** (ati-tṛpta) *adj.* [*f.* -ā] fully satiated, fully satisfied नातितृप्तः (v. l. नातितृप्त्या) स्वयं भुक्त्वा ... परिचरेत् पतिम् VedavyāSm. 2. 31; 3. 75; नातितृप्तः क्षुधार्तो न...योगं युञ्जीत योगवित् SkandP. iv. 41. 68; पुनः स पप्रच्छ न चातितृप्तो विदुरः BhāgP. iii. 14. 1; एष वै भक्षयित्वा तां जानकीं शुभदर्शनाम्। शेते विविक्तेऽतितृप्तः AdhyāRā. iii. 8. 25; अतितुष्टिहेतोऽतितृप्त इत्यर्थः SmṛtiCan. ii. 614. 12; अर्थिनामतितृप्तानां श्रीशंकरपुरे नृपः। अपेक्ष्य विदधे छायां न फलानि महीरुहाम् RājTa.(S'rī.) i. 5. 18; ManvaMu. 156. 6 (*on* 4. 62); Bhāsk. i. 411. 21 (*on* i. 8. 6)

**अतितृप्तता** (atitṛpta-tā) *f.* full satisfaction तदिदं विशदं वचोमृतं परिपीयाभ्युदितं द्विजाधिपात्। अतितृप्ततया विनिर्ममे स तदुद्गारमिव स्मितं सितम् NaiṣC. 2. 49; तृप्तातृप्तातितृप्तलिङ्गानि तु क्रमात् स्वास्थ्यवातपित्तकफविकारैरादिशेत् AṣṭāSaṁ. i. 166. 16 (1. 33)

**अतितृप्ताक्ष** (atitṛptākṣa) *adj.* having very swollen [?] eyes उन्मादी चातितृप्ताक्षो रतेषु विकलेन्द्रियः HāriS. iii. 2. 233.

**अतितृप्ति** (ati-tṛpti) *f.* satiety, great satisfaction भृत्यैः परिवृतो भुक्त्वा नातितृप्त्याथ संविशेत् YājñaSm. 1. 114; स्तैमित्यं गुरुताङ्गस्य निद्रातन्द्रातितृप्तयः KāśyaS. 44B. 1; BālaKrī. i. 99. 10 (*on* 1. 114); नातितृप्तः स्वयं भुक्त्वा (v. l. नातितृप्त्या) VedavyāSm. 2. 31; तेष्वेव कालेषु जलादीनि यावता नातितृप्तिर्भवति ManuBh. ii. 438. 8 (*on* 11. 213); फलानीमानि गृह्णीध्वम्...एभिः ... अतितृप्तिर्भविष्यति SkandP. iii(2). 37. 20; iv. 80. 30; ManvaMu. 156. 3 (*on* 4. 62); अतितृप्त्यादिजनिते त्वालस्ये श्रमाद्रिक्तविषयत्वं बोध्यम् RasGaṅ. 115. 4; 114. 10.

**अतितृप्तिकारण** (atitṛpti-kāraṇa) *n.* cause of great satisfaction दर्शनं स्तवनं पूजा...ममातितृप्तिकारणम् SkandP. i(2). 41. 182.

**अतितृप्तिकृत्** (atitṛpti-kṛt) *adj.* causing great satisfaction पवित्रमतितृप्तिकृत् किमिह (पयः) VidaMuMa. 3. 42.

**अतितृप्तिरूपा** (atitṛpti-rūpā) *adj.* (*f.*) of the nature of great satisfaction अर्थक्रियाम् अतितृप्तिरूपाम् Bhāsk. i. 58. 22 (*on* i. 1. 2)

**अतितृप्तिशून्य** (atitṛpti-śūnya) *adj.* not feeling satiety भृत्यैः पुत्रादिभिः परिवृतः सहितो भुक्त्वा नातितृप्तः अतितृप्तिशून्यः संविशेत् शयीत ViraMi. 204. 28 (*on* 1. 114)

**अतितृप्तिहेतु** (atitṛpti-hetu) *m.* [Abl.] for the sake of great satisfaction (पितरः) ये देवपूर्वाण्यतितृप्तिहेतोरश्नन्ति कव्यानि शुभाहुतानि MārkP. 96. 38.

**अतितृष्** (ati-tṛṣ) *f.* excessive thirst इह चातितृषा क्षुधा च तप्ताः फलहेतोर्गणनाथवृक्षमेतत्। अधिरुह्य फलत्वमेव याताः KathāSaSāg. xii. 34. 390; AṣṭāSaṁ. i. 23. 22 (1. 6) (v. l. अधितृष्)

**अतितृषा** (ati-tṛṣā) *f.* excessive thirst गुर्वन्नमेवातितृषां करोति SuśruS. vi. 48. 15; KalyāKā. 9. 2.

**अतितृषाक्रान्त** (atitṛṣākrānta) *adj.* overcome by excessive thirst मध्याह्नेऽतितृषाक्रान्तौ हयौ पद्मवनमापतुः KathāSaSāg. vii. 8. 98.

**अतितृषित** (ati-tṛṣita) *adj.* eagerly longing for इयमतितृषितम् ... मम वरतनुराचकर्ष चित्तम् VidaMā. 6. 15.

**अतितृष्ण** (ati-tṛṣṇa) *adj.* 1 extremely greedy or desirous अहं तु नाभिवृष्णोमि (v. l. नातितृष्णोऽस्मि) यत्कृतं न मया पुरा MahāBhā. i. 88. 11; 2 exceedingly thirsty तीक्ष्णज्वरोऽतितृष्णश्च रक्तमूत्रं च मूत्र्यते HāriS. iii. 2. 227; स नन्दिनीस्तन्यमनिन्दितात्मा ... पपौ वसिष्ठेन कृताभ्यनुज्ञः। शुभ्रं यशो मूर्तमिवातितृष्णः RaghuVa. 2. 69.

**अतितृष्णा** (ati-tṛṣṇā) *f.* 1 excessive greed or desire नोच्छिन्द्यादात्मनो मूलं परेषां चातितृष्णया ManuSm. 7. 139 (अतितृष्णया चातिकरग्रहणेन ManvaVi.); अतितृष्णा न कर्तव्या तृष्णां नैव परित्यजेत् PañcT. 2. 28 (220. 3); अतितृष्णा न कर्तव्या वित्तशाठ्यं विवर्जयेत् PadmP. vi. 44. 49; Pañcā. 138. 6; एषातितृष्णा कृष्णाहिर्भुजा हृद्विलेशया KamVa. 6. 2; अपि चैकभागमविजगुषी विभोरतितृष्णयेव परभागमाश्रिता YātrāPra. 3. 106; हा जन्तवो ब्रह्मपदान्तमन्तर्न शान्तिमायान्त्यतितृष्णयैव Vidvanmo. 7. 45; 2 great desire or longing देहि मे हरिभक्तिञ्च ... अतितृष्णा गुणाख्याने नित्यमस्तु ममेश्वर PañcaRā.(Nā.) i. 8. 27; 3 excessive thirst स पण्डितः ... अरण्यानीमवगाहमानोऽतितृष्णातरलितः ... जलं याचितवान् PrabaCin. 4. 6; [अतितृष्णा is given as the meaning of आशा, आशा दिगतितृष्णयोः Vaija. 220. 3]

**अतितृष्णाकुलित** (atitṛṣṇākulita) *adj.* troubled or overpowered with great greed 'अलोलुपान्' अतितृष्णाकुलितहृदयेभ्योऽन्यान् (ब्राह्मणान्) CaturCin. iii(1). 1137. 8.

**अतितृष्णाभिभूत** (atitṛṣṇābhibhūta) *adj.* overpowered with excessive greed अतितृष्णाभिभूतस्य शिखा भवति मस्तके Pañcā. 138. 7.

**अतितृष्यत्** (ati-tṛṣyat) *adj.* 1 who is very thirsty देहमायम्य वेगेन घोषयत्यतितृष्यतः। महाहिक्केति सा ज्ञेया SuśruS. vi. 50. 14; कम्पयन्ती शिरो ग्रीवामाध्मातस्यातितृष्यतः ... यमला वेगिनी हिध्मा परिणामवती च सा AṣṭāHṛ. iii. 4. 24; आघ्राय क्षणमतितृष्यतापि शेषात् ... नाचेमे हिममपि वारि वारणेन Kirātā. 7. 34; मरुषु पथिकस्येव मनोविभ्रमहेतुषु कथास्वतितृष्यतः (मारिदत्तस्य) कतिचित्संवत्सरा व्यतिचक्रमुः YaśasCam. i. 43. 1; 2 who is hankering after, YaśasCam. i. 43. 1.

**अतितृह्** (ati-tṛh-) VII. P. to crush completely, to destroy thoroughly किं ब्रवीति प्रतिबलवलं वीरो विलोकयन्। अतितृणढानि KavīndraKa. ii. 10. 8.

**अतितॄ** (ati-tṝ-) I. P. III. P. 1 A to cross, to go to the other side of (waters, ocean), to go to the end of (the world); (caus) to enable one to cross त्वयां वयम्...अपोऽति शूर तरामसि ṚV. vii. 32. 27; viii. 19. 14 आकाशेऽपि विचरन्ति अम्बुनाथमप्यतितरन्ति ... नियतमुपायग्रहोपमा मनुष्याः AvantiKa. 39. 1; संसारसागरं विद्या कथंचिदतितारयति BrahmSūBh.(Bhā.) 217. 9 (*on* iii. 4. 49); त्वमपि ह्यध्वनोऽस्य संन्यस्तदण्डः ... ज्ञानासिमादाय तराति पारम् BhāgP. v. 13. 20; बालिशः श्लाङ्कुलेनातितितर्ति सिन्धुम् BhāgP. vi. 9. 22; (वसुदेवः) अतिततार दिनाधिपतेः सुतामनवद्योगमना इव संसृतिम् Yādavā. 3. 41; 1 B to get over (hateful persons, narrowness, difficulties, illusion) येन् विश्वा अति द्विषो अतारिम ṚV. viii. 13. 21; अति द्वेषांसि तरेम ṚV. iii. 27. 3; अया धिया तुर्यामात्यंहः ṚV. v. 45. 11; दिवाकरोऽति द्युम्नैस्तमांसि विश्वातारीद् दुरितानि शुक्रः AV. xiii. 2. 34; ययाति विश्वा दुरिता तरेम TaiS. I. ii. 3. 2; त्वां भक्ता ये हृषीकेश दुर्गाण्यतितरन्ति ते MahāBhā. vii. 124. 15; xiii. 32. 27; Hitopa. 4. 89; ते दुस्तरामतितरन्ति च देवमायाम् BhāgP. ii. 7. 42; ii. 7. 46; विद्याम्...वितरिष्ये। यया चासौ भयं चातितरिष्यति BhāgP. iii. 24. 40; VāmaP. 94. 52; स धर्मनावमारुह्य दुर्गाण्यतितरिष्यति PadmP. v. 19. 356; 2 to excel विश्वेत्स धीभिः सुभगो जनाँ अति द्युम्नैरुद्र इव तारिषत् ṚV. viii. 19. 14; 3 to overcome (death) तेनौदनेनाति तराणि मृत्युम् AV. iv. 35. 1; येनातरन् भूतकृतोऽति मृत्युम् AV. iv. 35. 2; उभयोर्लोकयोर्ऋद्ध्वा। अति मृत्युं तराम्यहम् TaiBr. I. ii. 1. 15; स्तोमेनैव मृत्योरात्मं अपिधायैतं मृत्युमतितरति JaimiBr. 1. 332; JaimiUBr. iii. 35. 8; तेन विद्यामुपाय मृत्युं काममतिरति AitUBh. 249. 4 (*on* 1. 0); GītāBh. (Śaṅ.) 13. 25; तव नामानि शाम्भवि। प्रजपन्नेति मायान्तमति मृत्युं तराम्यहम् TripuVePāSt. 171. 35; 4 to get away from, to escape ग्राह्याम्यां रक्षो नुदते मूलेन यातुधान्यः। मध्येन यक्ष्मं बाधते नैनं पाप्मातितरति AV. xix. 36. 2; 5 to transcend तान् (अग्निं, वायुं, आदित्यं) एवैतेनातितरति JaimiBr. 2. 318; 6 to overpower, to subdue तेन पवित्रेण शुद्धेन (चरणेन) पूता अति पाप्मानम्-राति तरेम TaiĀ. x. 1. 11 (776. 6)

**अतितेजन** (ati-tejana) *adj.* very sharp गाढविद्धानरीन् कृत्वा मार्गणैः सोऽतितेजनैः MahāBhā. vii. 96. 33.

**अतितेजना** (ati-tejanā) *adj.* (*f.*) very spirited देव्याः प्रतीहारी जयाख्या अतितेजना। वाक्यमुवाच VarāP. 95. 23.

**अतितेजनी** (ati-tejanī) *f.* I name of the plant Tejavalā अतितेजनी तेजवला ApūNā. 30B. 3; II name of the plant Triparṇī [PW]

**अतितेजस्** (ati-tejas) *adj.* I very spirited, very vigorous अमर्षः शौर्यं च शीघ्रत्वमिति तेजसः (v. l. अतितेजसः) गुणाः MahāBhā. iii. 30. 20; महोत्साहा भविष्यन्ति पाण्डवा ह्यतितेजसः MahāBhā. iv. 28. 7; अग्निश्च सिंहश्च कुलपुत्रश्च...सर्वे ते ह्यतितेजसः MahāBhā. v. 37. 55; तव पित्रातितेजसा। पुनर्नं शक्तिता नेतुं गङ्गां प्रार्थयतानघ Rāmā. i. 43. 11; ख्यातो महोयमवलार्थयुतोऽतितेजाः Bṛhajjā. 21. 4; नातिशीतम् ... चकार नीत्या वै तस्य कोपनस्यातितेजसः MārkP. 99. 4; संज्ञा...भार्या भगवतो मार्तण्डस्यातितेजसः BrahmāṇḍP. ii. 59. 34; अग्न्यादयोऽतितेजसोऽपि ह्येनैव ब्रह्म विदितवन्तः KenUBh. 50. 15 (*on* 3. 1); पतगिराजमारूढः सुपर्णमतितेजसम् KūrmaP. 264. 9 (1. 25); स्तुतो महादेवो भार्गवेणातितेजसा SivaP. ii(5). 50. 34 (282A. 3); पावकायातितेजसे ... नमः LiṅgaP. i. 41. 31; II very bright or powerful (रामः) वरयामास परस्तुं

चातितेजसम् MahāBhā. xii. 105*(2); एकं चक्रं द्वादशारं रथस्यास्यातितेजसः SkandP. ii(9). 27. 39; ब्रह्मा ददाति संतुष्टो विमानमतितेजसम् BhaviP. 40B. 6 (i. 16. 53); *n.* **i** great lustre or power युवाभ्याम् ... तेजसा धार्यते जगत् (v. l. जगद्व्याप्यातितेजसा) MahāBhā. iii. 41. 2; तवातितेजसा विष्टमिदं रूपं न शोभते HariVaṁ. 8. 31; BrahmāṇḍP. ii. 59. 66; BhaviP. 134A. 21 (i. 79. 47); BrahmP. 32. 77; न सेहे देवकीं द्रष्टुं कश्चिदप्यतितेजसा । जाज्वल्यमानाम् ViṣṇuP. v. 2. 5; BhavāBhu. 1; अतितेजःसमुत्थाय ... कृष्णाय ते नमः BrahmVaiP. iv. 42. 28; नमः । अतितेजःस्वरूपाय PadmP. ii. 18. 54; को गृह्णाति फणमणिं ज्वलन्तमतितेजसा भुजङ्गस्य Pañcā. 84. 1; **ii** lightning अतितेजसा दग्धे सिद्धिर्नास्ति SuśruS. i. 12. 39 [*f.* PW]; *m.* **i** name of one of the twelve Ādityas अंशुर्भगश्चातितेजा आदित्या द्वादश स्मृताः ViṣṇuP. i. 15. 131; ŚivaP. v. 32. 8 (442B. 8); BrahmP. 3. 58; **ii** name of one of the Saptarṣis of the eleventh Age (सप्तर्षीन् निबोधत) पौलहो ह्यतितेजाश्च ... एकादशेऽन्तरे BrahmāṇḍP. iii. 1. 80; *f.* fourteenth night of Karmamāsa, IndSt. 10. 296 [PW] cf. अतितेजा.

**अतितेजस्क** (atitejas-ka) *adj.* very refulgent, greatly shining तस्य मध्येऽतितेजस्कमुच्चप्राकारतोरणम् (स्थानम्) KūrmaP. 423. 2 (1. 49)

**अतितेजस्ता** (atitejas-tā) *f.* great refulgance अतितेजस्तया द्वितीय इव परब्रह्मणः ... मुनिरवातरत् NalaCam. 3. 6(40)

**अतितेजस्विन्** (ati-tejasvin) *adj.* **i** very vigorous, very powerful, very spirited योधयत्यतितेजस्वी मधुवन्मधुसूदन MahāBhā. ii. App. 21. 1023; गरुडः ... । कामवीर्योऽतितेजस्वी HariVaṁ. 91. 36; पुरूरवाः ... अतियज्वातितेजस्वी ViṣṇuP. iv. 6. 35; न स्पृशत्येवातितेजस्विनं शोकः HarṣaC. 261. 8; मुनिपुत्रोऽतितेजस्वी ... तपसति BrahmāṇḍP. ii. 24. 51; BhāgP. i. 18. 32; त्वणदातातितेजस्वी विष्णुतुल्यो बभूव BrahmVaiP. i. 9. 34; (सत्यव्रतः) विपाप्मा चातितेजस्वी संभृतः DeviBhāP. vii. 12. 13; हनूमान् ... वायुपुत्रोऽतितेजस्वी AdhyāRā. iv. 6. 13; अतितेजस्व्यपि राजा पानासक्तो न साधयत्यर्थान् ŚārṅgaPa. 1388; Subhāṣi. 2869; को भवान् ? अतितेजस्वी दृश्यसे SiṁhāDvā. 167. 3(7); 207. 3 (19); ĀnandRa. 2. 49(14); **ii** very brilliant, very lustrous, of very fair complexion नान्यदप्यतितेजस्वि न क्रुद्धस्य गुरोर्मुखम् (निरीक्षेत) AṣṭāSaṁ. i. 12. 17 (1. 3); विद्युन्माली ... सुरेष्वतितेजस्वी PariPar. 1. 217; स्निग्धदेहोऽतितेजस्वी रूपयुक्तः प्रजायते BṛParāSm. 10. 218.

**अतितेजःसंयोग** (atitejas-saṁyoga) *m.* close contact with excessive heat अतितेजःसंयोगात् भस्मभावापत्तेश्च LalitāTriBh. 350. 19 (*on* 57)

**अतितेजा** (ati-tejā) *f.* the fourteenth night of Karmamāsa चतुर्दशी अतितेजा comm. on Sūryaprajñapti 148A. 4.

**अतितेजिनी** (atitejinī) *f.* name of a plant शीता तिक्तातितेजिनी MadaPāNi. 12. 185.

**अतितेजोमय** (ati-tejomaya) *adj.* full of excessive lustre श्रेणिसमद्वारमतितेजोमयमुत्तरा शतं मन्दिराणि एकावल्या सन्ति SāmaraU. 266. 23.

**अतितेजोविमान** (atitejo-vimāna) *n.* very lustrous aerial car सोऽतितेजोविमानेन सूर्यलोके महीयते SkandP. iv. 27. 97.

**अतितैक्ष्ण्य** (ati-taikṣṇya) *n.* **i** the nature of being very aggravated (पाचकाग्नीनाम्) मान्द्यातितैक्ष्ण्यतः । वृद्धिः क्षयश्च धातूनां जायते AṣṭāSaṁ. i. 103. 13 (1. 19); **ii** the nature of being very hot or pungent अतितैक्ष्ण्यादिना दुरुपयोगाः ... आहारा राजसस्येष्टाः GītāBh.(Rā.) 617. 26 (*on* 17. 9)

**अतितैजस** (ati-taijasa) *adj.* excelling the luminaries, very refulgent तवातितैजसं रूपं न कश्चिसोढुमुत्सहेत् BrahmP. 33. 25.

**अतितैल** (ati-taila) *n.* too much of oil (i. e. too oily food) अतिते- (v. l. तै)लं यदाश्नासि तदा (वह्निः) समुपशाम्यति PadmP. vi. 53. 17.

**अतितैलपान** (atitaila-pāna) *n.* taking too much of oil अतितैलपानं वातप्रकोपप्रशमाय दृष्टम् ViṣṇuDhaP. ii. 56. 128.

**अतितैसृकम्** (atitaisṛkam) *adv.* not the proper time for using quilt अतितैसृकम् । तैसृकमाच्छादनम् KāśiVṛ. *on* P. ii. 1. 6; न तैसृकस्य वर्तमानः कालः उपभोगस्येत्यर्थेऽतितैसृकम् Nyāsa. ii. 22. 23 (*on* ii. 1. 6); KātanVṛ. *on* P. ii. 5. 14; अव्ययानां यथा—अतितैसृकम् ŚṛṅgāPra. 60. 23.

**अतितोत्रसेत्र** (ati-totrasetra) *adj.* disregarding the goad and the reins अतितोत्रसेत्रा लघुयोक्त्रनद्धिस्त्रिमेढूकाः पत्रङ्गयाः प्रणेशुः DvyāśraKā. 12. 47.

**अतितोदना** (ati-todanā) *adj.* (*f.*) very painful सकच्छपापुष्ठनिभातितोदना । ... निगद्यते कच्छपिका KalyāKā. 11. 15.

**अतितोय** (ati-toya) *adj.* having too much water गच्छेन्नरेन्द्रो विजयाय ...देशम् । न चातितोयं न च तोयदीनम् NītiSā. 16. 41; *n.* excessive water न चात्र निद्रशैलतरावनिर्भवेत् । न चातितोयं न च निर्जलान्वितम् KalyāKā. 2. 36; *m.* lightning अतितोयोऽपि मेघाग्नी ParyāRaMā. 1478.

**अतितोष** (ati-toṣa) *adj.* giving great satisfaction द्विजगुरु[ज]नतातीति)तोषस्य तोषशर्मणो विप्रस्य EI. xv. 307. 18; *m.* extreme joy (साधुना) मतिः सदातितोषेण कर्तव्याराधनाध्वजे BṛKathāK. 1. 23; तस्यातितोषमायाति सगणो भास्करः स्वयम् NīlaP. 453; अतितोषपुष्टजठरः कूष्माण्डकोऽव्याज्जगत् SaduktiKa. 25. 30.

**अतितोषिणी** (ati-toṣiṇī) *adj.* (*f.*) causing great pleasure (सेयम्) केशवस्यातितोषिणी PadmP. iv. 72. 83.

**अतितोषित** (ati-toṣita) *adj.* very much pleased तदनु स रङ्कमहीन्द्रो बुद्धावतितोषितान्तरङ्गमहीन्द्रः । इत्थम् ... उपगम्याब्रवीत् ĀnandRa. 5. 34.

**अतितोषिन्** (ati-toṣin) *adj.* who has been much pleased यथैतेषां मया पूर्वं वरो दत्तोऽतितोषिणाम् BṛKathāK. 11. 129.

**अतित्यक्षु** (a-tityakṣu) *adj.* not desirous of giving up केन स्विद्ब्राह्मणो जीवेज्जघन्ये काल आगते । अतित्यक्षुः पुत्रपौत्रान् MahāBhā. xii. 139. 7.

**अतित्यद्** (ati-tyad) *adj.* surpassing that त्यदतिक्रान्तः [pw. Schol.] अतित्यद् । अतित्यदौ । अतित्यदः KāśiVṛ. *on* vii. 2. 102; PrakriKau. i. 243. 9; SiddhāKau. 90A. 7.

**अतित्याग** (ati-tyāga) *m.* **i** excessive liberality, absolute sacrifice, gifting away too much तरुदाहोऽतिशीतेन दुर्भिक्षमतित्यर्पणात् । अतित्यागादनौचित्यमतिः कुत्रापि नेष्यते PārśvC. 1. 103; 1. 466; KathāK. 117. 23; **ii** dismissal (of a person) absolutely or getting rid (of a person) frequently अतित्यागः (अनुष्टराजलक्षणम्) ArthŚā. ii. 214. 3 (5. 5) (comm. विसृष्टप्रत्यागतस्य कार्यापदेशेन पुनः पुनः विसर्जनम्)

**अतित्यागदूषण** (atityāga-dūṣaṇa) *n.* fault of extreme liberality अथ विज्ञपयामास तस्यातित्यागदूषणम् ।... सज्जनः...महीभुजे PārśvC. 1. 82.

**अतित्यागिन्** (ati-tyāgin) *adj.* extremely liberal or bountiful अतित्यागी च योगी च...कथं कालवशं गतः (भीमः) MahāBhā. i. App. 86 (30)

**अतित्रपा** (ati-trapā) *f.* great shame स्वं कलत्रमपि द्रष्टुं तत्रातित्रपयाक्षमः...तप्यते स दिवानिशम् RājTa.(Ka.) 8. 832.

**अतित्रपाकर** (atitrapā-kara) *adj.* causing great shame or bashfulness भद्राः । सारणकारणं वः प्रकाश्यमानमतित्रपाकरं तत्किमाचक्ष्मिमहि MohaRāPa. 5. 57 (1); देशे गुरुजनासन्ने विवृतेऽतित्रपाकरे । न रमेत ना BhāvPra.(Bhā.) 5. 295.

**अतित्रपान्विता** (atitrapānvitā) *adj.* (*f.*) having great bashfulness प्रमोदे कारणं बाला नोवाचातित्रपान्विता DeviBhāP. iii. 17. 52.

**अतित्रय** (ati-traya) *adj.* more than or exceeding three (i. e. four) अतित्रयाणां वर्णानाम् ... प्रसुरेपः DvyāśraKā. 1. 183.

**अतित्रस्त** (ati-trasta) *adj.* much frightened उदस्यन्तः...विन्ध्यशिखरान् । ... अतित्रस्ताश्चपलमपसर्पन्ति कपयः AnargharRā. 6. 32; अतित्रस्तो हि भगवानाजगाम सुरेश्वरः BrahmVaiP. iii. 6. 11.

**अतित्रस्तमुखाम्बुज** (atitrasta-mukhāmbuja) *adj.* with much frightened lotus-like face एतदुक्त्वा स्थितो विष्णुरतित्रस्तमुखाम्बुजः ŚivaP. ii(2). 35. 53 (112B. 10)

**अतित्रस्नु** (ati-trasnu) *adj.* overtimid [MW]

**अतित्रास** (ati-trāsa) *m.* extreme fear अतित्रासलोलायतलोचनयुगलं त्राहि त्राहि माम् ... इत्याकुलविलापविधुरं स राजकन्यारत्नमद्राक्षीत् ViṣṇuP. iv. 12. 17; अतित्रासेन रोपेण गृहीताश्च चमूवराः । संग्राममधिकं तेनुः BrahmāṇḍP. iii. 23. 91.

**अतित्रि** (ati-tri) *adj.* more than or exceeding three (i. e. four) अतित्रीणामुदन्वताम् । प्रसुरेपः DvyāśraKā. 1. 183.

**अतित्रुटदुत्सुक** (atitruṭad-utsuka) *adj.* with bursting eagerness असह आशु विद्रुयितुं परो युवतिनीविमतित्रुटदुत्सुकः HammīMaKā. 7. 81.

**अतित्वक्प्रसादन** (ati-tvakprasādana) *adj.* extremely pleasant to or soothing for the skin कषायः...रूक्षोऽतित्वक्प्रसादनः AṣṭāHṛ. i. 10. 21.

**अतित्वम्** (ati-tvam) cf. अतियुष्मद्.

**अतित्वर्** (ati-tvar-) I. Ā. to hasten over much [MW] (caus.) उपजपितारो वा नातित्वरयन्ति...इति शनैर्यायात् ArthŚā. iii. 109. 3 (10. 2)

**अतित्वर** (ati-tvara) *adj.* hastening very much, with great haste सह नवार्ककरैरिव यूथपैः कपिरसावपरेयुरतित्वरः । ... नृपतपस्विवरस्य पुरोऽभवद् RāmC. 7. 1.

**अतित्वरत्** (ati-tvara(n)t) *adj.* hurrying much, with great haste अतित्वरन्तो विविशुः परं ते Rāma. ii. 1592*(1); देवाः...। त्वद्वारमप्युचुरतित्वरन्तः कुरुष्व चाखाणि BrahmP. 110. 51; यदौदरं ज्योतिरतित्वरन्महत् ... तवैव तद्रूपम् BhaviP. 182A. 18 (i. 123. 45)

**अतित्वरम्** (ati-tvaram) *adv.* very hurriedly प्रजिघाय च सर्वासु दिक्षु

चक्षुरतित्वरम् PadmP.(Ra.) 53. 19.

**अतित्वरा** (ati-tvarā) *f.* great haste, extreme quickness [mostly Inst.] ततः परमतित्वरया विशेषवत्समुच्चयेन (प्रयुञ्जीत) रागसंधुक्षणार्थम् KāmSū. 105. 13 (2. 3) (comm. तदनुरूपमतित्वरया विशेषवद्विकल्पवर्गानुष्ठानात्समुच्चयेन चेदं वेत्यत्रापि विंशतिप्रयोगाः); 151. 12 (2. 7); आकर्ण्य ··· मुनिदारकेभ्यः । एकाकिनीमशरणां रुदतीमरण्ये गर्भातुरां स्त्रियमतित्वरयागतोऽस्मि KundaMā. 1. 26; अतित्वरागमनद्रुततरपदोद्धूयमानधूलिराजिव्याजेन राजवार्ताश्रवणकुतूहलिन्या मेदिन्येवानुगम्यमानं कुरङ्गमनामानमायान्तमद्राक्षीत् HarṣaC. 212. 2; 212. 4; अतित्वरयाविचारेणैव देवलोकसुखप्रदा LalitāTriBh. 307. 11 (*on* 31); यत्तु तदनुक्त्वैवातित्वरया शास्त्रलक्षणमभिधीयते तन्न युक्तम् NyāyRa. 406. 14 (*on* 5(5). 2); यावन्न निपतति शरीरम् ··· तावदतित्वरया विचारे प्रवर्तितव्यम् PrakaVi. 27. 21; संहर भववैरिणं त्वतित्वरया ĀryāS'. 4; अतित्वरायां सार्धप्रहरत्रयावधि जपेत् BālamBha. i. 127. 3 (*on* 1. 24)

**अतित्वरान्वित** (atitvarānvita) *adj.* with great haste or hurry प्रयात्येष दुरात्मातित्वरान्वितः ViṣṇuP. v. 9. 21 = BrahmP. 187. 20; प्रयत्नस्तु तदप्राप्तौ व्यापारोऽतित्वरान्वितः DaśRū. 1. 20; PratāYaBhū. 105. 10; SāhiDa. 298. 9; त्वष्टा चातित्वरान्वितः । वाजिशीर्षं चकर्तांशु DeviBhāP. i. 5. 108.

**अतित्वरापरीत** (atitvarā-parīta) *adj.* with great haste अतित्वरापरीतौ तौ पराभूत्युद्रवासहौ । अपि नासहतां यानम् PadmP.(Ra.) 101. 29.

**अतित्वरायुत** (atitvarā-yuta) *adj.* with great haste प्रयत्नस्तु फलावाप्तेर्व्यापारोऽतित्वरायुतः Mānaso. iv. 2. 132.

**अतित्वरावश** (atitvarā-vaśa) *m.* [Abl.] due to great haste अनर्पयित्वा कुचयोरतित्वरावशाद्वहन्ती नवहारवल्लरीम् । व्यभाद्दरीतुं विसुमेकिका Raghunā. 11. 10.

**अतित्वरित** (ati-tvarita) *adj.* with great hurry, very quick गत्वा ततोऽतित्वरितः स्वां पुरीं रघुनन्दनः । अध्यावसत् MahāBhā. iii. 736*(2); अतित्वरितसखीजनोपनीतमासनमध्यास्य देवेन प्रहितानि तान्याभरणोपायनान्युपानैषम् NalaCam. 7. 22 (10); इदम् ··· अतित्वरितचेटीसमारोप्यमाणदीपिकाचक्रवालनिह्नुतसायंतनसमयसन्तमसबन्धम् ··· उत्सवायतनम् S'ṛṅgāBhū. 81. 7; अतिप्लवम् । अतित्वरितेन मार्गेण BālamBha. iii. 159. 31 (*on* 3. 264); *n.* great haste प्रत्यक्षादिषु वक्तव्यं शब्दमात्रस्य लक्षणम् । तदतित्वरितेनेह किं शास्त्रादभिधीयते S'lokaVār. 5(5). 1 (406. 2); यत्पुनरतित्वरितेनैव सामान्यलक्षणावसरे विशेषो लक्ष्यते तदसाम्प्रतम् Kāśi. iii. 102. 15 (*on* 5(5). 1)

**अतित्वरितगति** (atitvarita-gati) *f.* very swift walking or movement सा···अतित्वरितगतिजनितं वातमन्तरेव जरयन्ती···न्यद्रासीत् YaśasCam. ii. 51. 1.

**अतित्वरितगमन** (atitvarita-gamana) *adj.* moving or walking very quickly or hurriedly सः···अतित्वरितगमनः···तामेव दिशमगच्छत् Kād. 34. 21.

**अतित्वरितपद** (atitvarita-pada) *n.* very quick or hurried step अतित्वरितपदप्रवृत्तैरवनिपतिभिः ··· केयूरकोटिताडितानाम् ··· मणिस्तम्भानां रणितेन सर्वतः क्षुभितमिव तदास्थानभवनमभवत् Kād. 14. 20.

**अतित्वरितम्** (ati-tvaritam) *adv.* very quickly, very hurriedly अतित्वरितमुभाभ्यामपि भवद्भ्याम् ··· द्वे अप्याधे सेनाङ्गे देवस्य विज्ञापनीये YaśasCam. i. 290. 2; ii. 41. 5; शतमन्युः ··· निस्सरन्नपि बहिस्ततोऽप्यतित्वरितम् ··· आवध्य कक्ष्याम् NilaVi. 17. 18.

**अतित्वरितवत्** (atitvarita-va(n)t) *adj.* who had hurried much तथैव च तेन प्रतिपन्नम् (v. l. तथा करोमीत्युक्त्वा स चातित्वरितवान्) PañcT. 1. 86 (97. 11)

**अतित्वरितविक्रान्ति** (atitvarita-vikrānti) *adj.* (*f.*) having very quick movement अथ श्रीललितादेव्याः श्रीपाशायुधसंभवा । अतित्वरितविक्रान्तिरश्वारूढाचलत्पुरः BrahmāṇḍP. iii. 16. 14.

**अतित्वरितोक्त** (atitvaritokta) *adj.* uttered or said in great haste तदितरपरिचोदनानवतारप्रसङ्गादतित्वरितोक्तम् TantrVā. 1127. 23 (*on* iii. 7. 2)

**अतिथि** (áti-thi) *m.* [MAYR. 1. 27; 3. 626; DEBRU. p. 722; Uṇā. 4. 2; KāśiVṛ. *on* vi. 2. 44; / अतिथिरभ्यतितो गृहान् भवति । अभ्येति तिथिषु परकुलानीति वा । परगृहाणीति वा Nir. 4. 5 (76. 17); अनित्यं हि स्थितो यस्मात्तस्मादतिथिरुच्यते ManuSm. 3. 105 = ViṣṇuSm. 67. 34 = VasiSm. 8. 7 = SkandP. iii(2). 6. 22; VasiDS. 4. 5; ParāSm. 1. 42; अतिथेरतिथिः प्रोक्तः BrahmāṇḍP. ii. 15. 17; न विद्यते तिथिर्यस्य सोऽप्यतिथिः PadMañ. *on* KāśiVṛ. *on* P. iv. 4. 104; अनित्या हि तिथिर्यस्मात्तस्मादतिथिरुच्यते BallāC. 63. 15; संयममविनाशयन्नततीत्यतिथिः TattvāRāVār. vii. 21. 11; पञ्चेन्द्रियप्रवृत्ताख्यास्तिथयः पञ्च कीर्तिताः । संसारे(ऽ)श्रयहेतुत्वात्ताभिर्मुक्तोऽतिथिर्भवेत् YaśasCam. ii. 412. 10] A guest, casual visitor स्योनशीरतिथिर्न प्रीणानः RV. i. 73. 1; अतो न आ नॄनतिथीनतः पत्नीर्दशस्यत RV. v. 50. 3; एते वै प्रियाश्चाप्रियाश्चर्त्विजः स्वर्गं लोकं गमयन्ति यदतिथयः AV. ix. 6. 23; यद्वा अतिथिपतिरतिथीन्परिविष्य गृहानुपोदैत्यवभृथमेव तदुपावैति AV. ix. 6. 53; हिरण्यस्रगयं मणिः श्रद्धां यज्ञं महो दधत् । गृहे वसतु नोऽतिथिः AV. x. 6. 4; अतिथेरातिथ्यमसि TaiS. I. ii. 10. 1 = KāṭhS. 2. 8 = VājaS. 5. 1; अनस्वी चं रथी चातिथीनामपचिततमौ TaiS. V. ii. 2. 3; अतिथिभ्यश्च दानम् S'āṅkhāS'S. ii. 3. 25; अतिथींश्च लभेमहि GautPiMe. ii. 5. 12; ऋषिः पुराणोऽतिथिराजगाम MahāBhā. iii. 26. 4; अथागच्छद् द्विजः कश्चिदतिथिः MahāBhā. xiv. 93. 11; अहमतिथिः । कोऽत्र भोः Prati. 5. 7(2); अतिथिरयमस्माकमुपाध्यायो दशकण्ठस्य AnargbaRā. 3. 51(8); भर्तृदारिके नवपुरुषोऽतिथिरागतः TāpaVa. 3. 13(54); को नाम नातिथिरिहाश्रमकन्यकानां वाचा रमेत Kapphiṇā. 6. 24; अतिथिमतिविशिष्टमादरादमरवधूरभि तं जगाम सा RāmC. 12. 97; स्वामिन् किं न तवातिथेः समुचितं सख्यानयानुष्ठितम् NalaCam. 7. 37; एकदा गाधिमगमत् कश्चित्तत्र प्रियोऽतिथिः YogVā. v. 47. 27; अतिथिर्मे मुनिः कश्चित्सह शिष्यैरुपागतः ĀdiP. 23. 41; स प्राणाहुतितोयार्थी ददर्शातिथिमागतम् DarpDa. 6. 41; अथ गोविन्ददत्तस्य गृहानतिथिराययौ KathāSaSāg i. 7. 44; तवागताः स्मोऽतिथयः PariPar. 1. 147; अवतारः सरस्वत्यास्त्वं यत्रातिथिरागतः PāṇḍaC. 3. 252; कृतकृत्याः प्रतीक्षन्ते मृत्युं प्रियमिवातिथिम् HāsyaCū. 145. 17; पुण्यमद्यास्माकं येन त्वमतिथिः संपन्नोऽसि PrabaK. 92. 26; भवन्त एव ··· चामृतं पिबन्तु चातिथीनिमान् सुरान् विधाय दानवाः NilaVi. 121. 19; (definitions and varieties of guests) एष वा अतिथिर्यच्छ्रोत्रियः AV. ix. 6. 37; तद्यस्यैवं विद्वान्व्रात्यो राज्ञोऽतिथिर्गृहानागच्छेत् AV. xv. 10. 1; अतिथिदेवो भव TaiĀ. vii 11. 3 (732. 14); प्रविशत्यतिथिर्ब्राह्मणो गृहान् KāṭhU. 2. 7; वैश्वदेवं हुत्वा अतिथिं आकाङ्क्षेत् BhārGS. 3. 14 (83. 3); KauṣiGS. iii. 10. 11; BaudhGS. ii. 9. 1; असमानग्रामोऽतिथिरैकरात्रिकोऽधिवृक्षसूर्योपस्थायी GautDS. i. 5. 36; संप्राप्तो वैश्वदेवान्ते सोऽतिथिः स्वर्गसंक्रमः ParāSm. 1. 40; दूराच्चोपगतं श्रान्तं वैश्वदेव उपस्थितम् । अतिथिं तं विजानीयान्नातिथिः पूर्वमागतः ParāSm. 1. 41; S'aṅkhaSm. 6. 3; ViṣṇuSm. 67. 34; अध्वनीनोऽतिथिर्ज्ञेयः YājñaSm. 1. 111; अतिथिः स्यादयाचकः VāyuP. ii. 17. 17; अज्ञातकुलनामानमन्यदेशादुपागतम् । क्षुधार्तं पांसुकीर्णाङ्गमतिथिं तं विदुर्बुधाः Mānaso. i. 15. 114; BhaviP. 273A. 4 (i. 184. 8); PadmP. ii. 36. 19; वालखिल्यो यतिश्चैव विज्ञेयो ह्यतिथिः सदा BrahmāṇḍP ii. 15. 16; एकरात्रिको ग्रामान्तरादागतोऽसंबन्धी अतिथिः ViraMi. (Āhnika.) 156. 21; (duties towards the guests) अशितावत्यतिथावश्नीयाद्यज्ञस्य सात्मत्वाय AV. ix. 6. 38; इष्टं च वा एष पूर्तं च गृहाणामश्नाति यः पूर्वोऽतिथेरश्नाति AV. ix. 6. 31; नादत्त्वा गुरुभ्यो नातिथिभ्यो नोपाश्रितेभ्यः (भक्षयेत्) CaraS. i. 8. 20; AṣṭāSaṁ. i. 65. 4 (1. 10); अतिथिं ब्रह्मरूपं च कथं हन्यामनागसम् MahāBhā. iii. 154. 33; अतिथेः प्रतिकूलं ते न कर्तव्यं कथंचन MahāBhā. xiii. 2. 41; ब्राह्मणश्चातिथिश्चैष अनुक्तो हि शपेत माम् Rāmā. iii. 45. 2; मातुलातिथिसंश्रितैः ··· विवादं न समाचरेत् ManuSm. 4. 179; अतिथिर्यस्य भग्नाशो गृहात्प्रतिनिवर्तते ViṣṇuSm. 67. 33; अनाशितमतिथिं गृहे न वासयेत् ViṣṇuSm. 67. 30; कथमतिथिं मां परिभवसि S'āk. 4. 0(25); एतत्तु मां दहति यद्गृहमस्मदीयं क्षीणार्थमित्यतिथयः परिवर्जयन्ति Mṛcch. 1. 12; अतिथिर्यस्य नाश्नाति न तच्छ्राद्धं प्रशस्यते KūrmaP. 608. 18 (2. 22); असत्कृत्यातिथिं नाथो न मे भोक्ष्यति कर्हिचित् SkandP. iv. 96. 131; गृहस्थैश्च न निन्द्यास्तु सदा ह्यतिथयः LiṅgaP. i. 29. 43; अयं सायतनं प्राप्तमतिथिं क्षुधयार्दितम् । वाण्यापि नाकरोत् तस्य पूजनम् PadmP. iv. 39. 61; अतिथिर्विमुखो यस्य याति पूजां विना गृहात् । स तस्य ··· पुण्यं हृत्वा पलायते RāmāMañ. 116. 16; यत्र श्रोत्रियानतिथीनासनपाद्यादिभिरपि गृहिणो नोपतिष्ठन्ति PraboCan. 2. 6 (22. 6); भवन्तश्चेदृशा धर्मज्ञा यन्मामतिथिं हन्तुमुद्यताः Hitopa. 1. 43(5); अतिथिम् ··· मा वधीः RājTa. (Jo.) 1126; मम राज्ये अतिथिभिरकृतभोजनैर्न यथा स्थीयते तथा कर्तव्यम् ViraMi. 667. 20 (*on* 2. 186); (duties towards guests and others associated with him) भोजयेत् पूर्वमतिथिकुमारव्याधितगर्भिणीस्ववासिनीस्थविरान् GautDS. i. 5. 23; अग्रे भोजयेदतिथीन् BaudhDS. ii. 7. 19; गृहस्थस्य ··· देवपित्रतिथिभृत्येषु त्यागः शेषभोजनं च ArthS'ā. i. 29. 10 (1. 3); धर्मागतं प्राप्य धनं यजेत दद्यात्सदैवातिथीन् भोजयेच्च MahāBhā. i. 86. 3; स्वयत्नेन तु तान् वीरान् द्रोणः प्रत्यग्रहीत्स्वयम् । अतिथीनागतान् यद्वत् सलिलेनासनेन च MahāBhā. vii. 85. 22; वासयन्त्यतिथीन्नित्यं नित्यं ये चानसूयकाः । ··· दुर्गाण्यतितरन्ति ते MahāBhā. xii. 111. 4; अतिथीनन्नपानेन पितॄंश्च स्वधया तथा MahāBhā. xii. 99. 8; येन येन च तुष्येत नित्यमेव त्वयातिथिः । अप्यात्मनः प्रदानेन न ते कार्या विचारणा MahāBhā. xiii. 2. 42; अतिथिं प्रतिपूज्य च । ···स तेषां भोजनं ददौ Rāmā. iii. 11. 24; अस्माकमतिथिश्चैव पूज्यश्च प्लवतां वरः Rāmā. v. 1. 86; स ददर्शातिथिं श्लाघ्यं देवर्षिम् HariVaṁ. 46. 4; संपादयत्यर्थद्वयमारोग्यमिन्द्रियविजयं चेति । ··· अतिथीनां पूजकः CaraS. i. 8. 18; i. 11. 33; अतिथये प्रदद्यादासनोदके ViṣṇuSm. 67. 45; 59. 29; प्रत्युज्जगामातिथिमातिथेयः RaghuVa. 5. 2; अतिथीनाश्रमोन्मुखान् । पुनानं पवनोद्धूतैर्धूमैः RaghuVa. 1. 53; अतिथिः परिचरितव्यः S'ābaBh. 1657. 6 (*on* ix. 1. 10); सन्तु मेऽतिथयः श्लाघ्याः MārkP. 19. 17; MatsyaP. 16. 50; निवापेन पितॄनर्चन् यज्ञैर्देवांस्तथातिथीन् । अन्नैः ViṣṇuP. iii. 9. 9; वोसुज्यतेऽतिथिसुहृत्स्वजनैः सहान्नम् BṛSaṁ. 19. 18; अतिथीनामथार्चनम् PauṣkS. 41. 60; विसर्जयेदनु-

व्रज्य सुतसश्रोत्रियातिथीन् VedavyāSm. 3. 46; दीयतामतिथये शरीरमिदम् HarṣaC. 339. 9; देव क्षुन्मानतिथिरुपस्थित: VeṇīSam. 6. 200; ऋषिरयमतिथिश्चेद् विष्टर: पाद्यमर्घ्यं तदनु च मधुपर्क: कल्प्यतां श्रोत्रियाय MahāviC. 2. 44; देवातिथीनां पूजा च…धर्मोऽयं वनवासिन: NītiSā. 2. 28; यथातिथये प्रद्रुताय दद्यात्तादृगेतत् ManuBh. i. 71. 20 (on 2. 10); तानि पर्वाणि येष्वतिथिपरिजनयो: प्रकामं संतर्पणम् NītiVā. 27. 48; स्वकर्मणा धनं लब्ध्वा पितृदेवातिथीनपि । सम्यक् संप्रीणयेद् भक्त्या VāmaP. 14. 12; अतिथि: प्रार्थयामि त्वां देहं यागाय पावनम् AgniP. 114. 6; अतिथे: सेवनं दानम्…ब्रह्मचारी समाचरेत् BṛDharmaP. ii. 5. 1; पूजाऽस्यातिथिदेवानाम् धर्मोऽयं गृहिणां कृत: SamarāSū. 7. 19; बालादीनतिथिभृत्यांश्च संभोज्य …शेषभोजनं कर्तव्यम् Mitā. 36. 12 (on 1. 105); पिता त्वां च नियुङ्क्ते स शुश्रूषायै ममातिथे: KathāSaSāg. i. 1. 40; अतिथिस्तद्गदेवास्य गृहस्थस्य प्रभु: स्मृत: S'aṅkhaSm. 5. 7; प्रवर्तयत…अतिथीनां सपर्यार्थम्…पशुविशसनानि KaumuMi. 1. 16 (20); अभीष्टो ह्यतिथि: कामं गृहसर्वस्वमर्हति PāṇḍaC. 5. 403; अतिथिपूजनमतिथिभ्योऽन्नदानं स मनुष्ययज्ञ इत्यर्थ: SmṛtiCan. ii. 566. 17; दानं चतुर्विधाहारपात्राच्छादनसद्मनाम् । अतिथिभ्योऽतिथिसंविभागव्रतमुदीरितम् TriṣaS'aPuC. i. 3. 639; i. 1. 191; MalliC. 7. 820; SamarāSam. 1. 294; वेदविहिता तु हिंसा प्रत्युत धर्महेतु: देवतातिथिपितॄणां प्रीतिसंपादकत्वात् SyādvāMañ. 11 (6); अतिथिर्दातुरत्यन्तोपकारक: Aparā. 438. 2 (on 2. 219-221); यद्यप्यन्नं नास्ति तदा प्रीतिवचनेनापि तावदतिथि: पूज्य: Hitopa. 1. 44 (1); पात्रं मे पयसा पूर्णमतिथि: कोऽपि पीतवान् PrabhāC. 6. 14; संपूजितो योऽतिथिरुद्धरेत्कुलम् S'aṅkaDigVi. (Mā.) 14. 104; देवतातिथिविप्राणामदत्त्वा योऽन्नमश्नुते । … वायस: संप्रजायते S'ārṅgaPa. 724; सेवेत देवभूदेववृद्धवैद्यनृपातिथीन् BhāvPra. (Bhā.) 5. 250; अतिथिसोदरान् । हित्वा गृही न भुञ्जीयात् प्राणै: कण्ठगतैरपि MahNirvāT. 8. 33; प्रिये राधिके गृहागतायातिथये निवेदय पल्लवास्तरणम् GopāKeCan. 127. 35; यथातिथि: प्रीयते तथा कर्तव्यतया विहितम् S'ivārkaMaDī. i. 36. 12 (on i. 1. 1); अतिथिकुमारादीनां तु भोजने पौर्वापर्यमनियतम् ViraMi. (Āhnika.) 455. 22; (Agni as guest) श्रेष्ठं यविष्ठमतिथिम् … । अग्निमीळे न्युंषिषु ṚV. i. 44. 4; प्रेष्ठं वो अतिथिं गृणीषेऽग्निम् ṚV. i. 186. 3; विश्पतिं यह्वमतिथिं नर: सदा …। प्र शंसन्ति ṚV. iii. 3. 8; कविप्रशस्तो अतिथि: शिवो न: ṚV. v. 1. 8; अधा विश्वीड्योऽसि प्रियो नो अतिथि: ṚV. vi. 2. 7; घृतानो दैव्यो अतिथि: शुशोच ṚV. vii. 8. 4; समिधाग्निं दुवस्यत घृतैर्बोधयतातिथिम् ṚV. viii. 44. 1; स दर्शतश्रीरतिथिर्गृहेगृहे ṚV. x. 91. 2; तेषामासन्नानामतिथिरात्मन् जुहोति AV. ix. 6. 21; घृतैर्बोधयतातिथिम् TaiS. IV. ii. 3. 1; VājaS. 3. 1; दीदाय दैव्यो अतिथि: शिवो न: TaiS. II. v. 12. 4; VājaS. 12. 34; एष ह वा अस्य प्रियोऽतिथिर्यदग्निरग्ने: AitBr. 3. 5 (71); (as guest among men) दधुष्ट्वा भृगवो मानुषेष्वा …। होतारमग्ने अतिथिं वरेण्यम् ṚV. i. 58. 6; विश्वेषामतिथिर्मानुषाणाम् ṚV. iv. 1. 20; कविं सम्राजमतिथिं जनानाम् ṚV. vi. 7. 1; अतिथिं मानुषाणाम् ṚV. viii. 23. 25; त्वमग्निमतिथिं जनानाम् ṚV. x. 1. 5; एको विभूरतिथिर्जनानाम् AV. vii. 21. 1; (guest of the clans) विशामग्निमतिथिं सुप्रयसम् ṚV. ii. 4. 1; विशामतिथिर्विभावसु: ṚV. iii. 2. 2; प्रियो विशामतिथिर्मानुषीणाम् ṚV. v. 1. 9; v. 3. 5; v. 18. 1; viii. 74. 1; अग्निरकामयत विशोविशोऽतिथि: स्याम् PañcBr. xiv. 11. 37; AitĀ. I. i. 1. 4; वैश्वानर: अग्निरेव साक्षात् प्रविशति अतिथिस्सन् ब्राह्मण: KāṭhUBh. 106. 5 (on 1. 7); अतिथि: सर्वभूतानामग्नि: सोमो गवामृतम् MahāBhā. iii. 1332*(5); (*fig.* used to emphasize a casual or accidental visit and hence to indicate *death* or *birth in heaven*, an *accidental* occurrence etc.) अथैवातिथय: सर्वे भविष्यन्ति यमस्य ते MahāBhā. V. App. 1. 7 (14); कैलासस्य त्रिदशवनितादर्पणस्यातिथि: स्या: MeghDū. 58; स्वकृत्यभारसंन्यासी यावदित्थं विषीदसि । तावदन्तकदंष्ट्राणामरातिरतिथिर्न ते RāmC. 1. 46; अहो विक्रमैकरसिकेषु महासाहसिकेषु भवत्सु मध्ये किं कोऽपि मे प्रार्थनातिथिमनोरथसारथिरस्ति YaśasCam. ii. 302. 23; (पतग:) अयमतिथिर्वनपल्लवस्य जात: NavaSāC. 3. 38; °शिर: सरोजातिथिभृङ्गभङ्गिभि: S'rīKaC. 3. 9; 3. 16; 3. 56; वच: प्रियतमश्रुतेरतिथिरेव RasMañ. 3; स दृशोरतिथिर्न नोऽभूत् CaitanCa. 120. 10 (5); तान् सोऽतिथीन् कारितवान् यमस्य VīraBhā. 2. 61; आसन्नदृशो: क्षणमतिथयो यस्य ते ते न देशा: BhramaDū. 17; एतदेव मम पुण्यमगण्यं यत् कृशोदरि दृशोरतिथिस्त्वम् PadyaVe. 275; तेषामासीदक्ष्णामतिथि: ĀnandRa. 1. 14; [Kośas give synonyms of अतिथि as आगन्तु or आगन्तुक, MediK. 77. 14; S'abdaRaSaK. 169. 17; प्राघूर्णक प्राघुण or प्राघुणक AbhidhāCin. 499; VisvaPra. 76. 16; VisvaLoK. 164. 16; तिथिहीन NānārthāSam. ii. 59. 150] B [included in *śubhrādigaṇa*, GaṇPā. 230. 28; GaṇRa. 3. 220 (263)] a king of the solar race (son of Kuśa, grandson of Rāma) अतिथिस्तु कुशाज्जज्ञे HariVam. 10. 75; अतिथिं नाम काकुत्स्थात् पुत्रं प्राप कुमुद्वती RaghuVa. 17. 1; KāvyPra. 778. 3; CitraMi. 33. 22; कुशस्यातिथि: … पुत्रोऽभूत् ViṣṇuP. iv. 4. 105; MatsyaP. 12. 52; कुशस्य पुत्रो धर्मात्मा ह्यतिथि: सुप्रियातिथि: VāyuP. ii. 26. 199; BrahmāṇḍP. ii. 63. 201; नसेव मैथिलीभर्तुरतिथिर्नाम पार्थिव: NavaSāC. 11. 35; KūrmaP. 235. 18 (1. 21); AgniP. 272. 36; LiṅgaP. i. 66. 38; BrahmP. 8. 88; BhaviP. 415A. 24 (ii(1). 2. 8); PadmP. v. 8. 156; SaurP. 30. 70; S'ivaP. v. 39. 19 (452A. 2); KalkiP. iii. 4. 1; कुशपुत्र, कुशनन्दन, कुशतनय, नृपभेद TrikāS'e. 3. 194; AnekāSam. 3. 307; VisvaPra. 76. 16; NānārthāSam. ii. 59. 150; MediK. 77. 14; VisvaLoK. 164. 16; KośaKaTa. 2. 5803; S'abdaRaSaK. 169. 17; C name of S'iva असंसृष्टोऽतिथि: … एवं नाम्नां सहस्रेण तुष्टाव हि हरं हरि: S'ivaP. iv. 35. 78 (392B. 9); LiṅgaP. i. 98. 104; SaurP. 41. 89; D one of the Ādya gods अन्तरीक्षो वसुहयो ह्यतिथिश्च प्रियव्रत: ।… आद्या ह्येते प्रकीर्तिता: VāyuP. ii. 1. 59; E name of a deity guarding the gates सुमुख: कालदण्डश्चातिथिर्मुदितस्तथा ।… द्वारपा: स्मृता: ĪśānS'iPa. ii. 59. 95; F name of a King अयोध्यायां पुरा कश्चिदतिथिर्नाम वै नृप: SkandP. ii(4). 32. 54; G name of a Ṛṣi, VīraMi. (Saṁskāra.) 624. 6; S'abdaRa. (Vā.) 411; H anger, wrath क्रुध्, AnekāSam. 3. 307; कोप VisvaPra. 76. 16; VisvaLoK. 164. 16; KośaKaTa. 2. 5803; I bitumen शिलाजतु DhanvNi. 128. 2; [Vedic name of an attendant of Soma, GOLD.]

**अतिथि** (a-tithi) *f.* i day which is not a lunar day, inauspicious lunar day न रजस्वलां नातुराम् … न सन्ध्ययोर्नातिथिषु … नारहसि व्यवायं गच्छेत् CaraS. i. 8. 22; ii name of a queen हस्तिनागपुरे … अभूदायोधनो नाम नृपति: ।… अतिथिर्नामा(? म) चास्य महादेवी YaśasCam. ii. 350. 23.

**अतिथिकालोपस्थित** (atithikālopasthita) *adj.* arriving at a time (specified) for a guest पाषण्डिन: … एतानतिथिकालोपस्थितान् वाङ्मात्रेणापि न पूजयेत् ManvaMu. 150. 6 (on 4. 30)

**अतिथिकुशल** (a-tithikuśala) *adj.* 1 who is not well-versed in (the interpretation of) the lunar days अभ्यस्ततिथिभिरप्यतिथिकुशलै: … ब्राह्मणैरध्यासितम् (कुण्डिनं नाम नगरम्) NalaCam. 2. 27 (7); 2 who receives guests and takes up the sacred grass, NalaCam. 2. 27 (7); (cf. comm. अतिथीन् … कुशांश्च लान्ति स्वीकुर्वन्ति)

**अतिथिक्रिया** (atithi-kriyā) *f.* reception of a guest, hospitality मुनय: … रामलक्ष्मणयो: पश्चादकुर्वन्नतिथिक्रियाम् Rāmā. i. 22. 18; i. 28. 16; तां देवतापित्र्यतिथिक्रियार्थामन्वग्ययौ RaghuVa. 2. 16; कृतमेव त्वया सर्वं सर्वामेवातिथिक्रियाम् MārkP. 70. 14; वानप्रस्थाश्रमं धर्मं प्रवक्ष्याम: … शय्या ब्रह्मचर्यं पितृदेवातिथिक्रिया: VāmaP. 14. 112; रचयितुं ह्युचितामतिथिक्रियां पथिकमाह्वयतीव … फलिताम्रवणावली NemiC. 8. 18.

**अतिथिगवी** (atithi-gavī) *f.* cow to be offered to the guest (i. e. Soma) अथ हैके सप्तगुना यजन्ते सोमक्रयण्यतिथिगव्यनूबन्ध्याश्चतस्रो मध्यत: BaudhSS. iii. 232. 7.

**अतिथिगौरवऋद्धि** (atithi-gauravarddhi) *f.* abundance of hospitality to a guest आजिषु वीरा: … गौरवाद्गुरपास्य भजन्ते मत्कृतामतिथिगौरवऋद्धिम् NaiṣC. 5. 15.

**अतिथिग्रहण** (atithi-grahaṇa) *n.* obtainment of a guest ततो गोदोहमात्रं वै कालं तिष्ठेद्गृहाङ्गणे । अतिथिग्रहणार्थाय ViṣṇuP. iii. 11. 58.

**अतिथिग्व** (atithi-gvá) *m.* [DEBRU. p. 545] 1 name of a king (father of Divodāsa) आविथारन्धयोऽतिथिग्वाय शम्बरम् (Sāy. अतिथिभिर्गन्तव्याय दिवोदासाय) ṚV. i. 51. 6; i. 112. 14; अतिथिग्वाय शम्बरं गिरेरुग्रो अवाभरत् ṚV. i. 130. 7; दिवोदासमतिथिग्वं यदावम् ṚV. iv. 26. 3; दिवोदासादतिथिग्वस्य राध: शाम्बरं वसु प्रत्यग्रभीष्म ṚV. vi. 47. 22 (Sāy. स (प्रस्तोक:) एव दिवोदासोऽश्वथोऽतिथिग्व इति चाख्यायते); 2 name of a sage य आयुं कुत्समतिथिग्वमर्दयो वावृधानो दिवेदिवे ṚV. viii. 53. 2 (Sāy. एतत्संज्ञमृषिम्); 3 name of a king associated with Indra मघवन् … नि तुर्वशम् … शिक्षन्नतिथिग्वाय शंस्यं करिष्यन् ṚV. vii. 19. 8; त्वं करञ्जमुत पर्णयं वधीस्तेजिष्ठयातिथिग्वस्य वर्तनी ṚV. i. 53. 8; त्वमस्मै कुत्समतिथिग्वमायुं महे राज्ञे यूने अरन्धनाय: ṚV. i. 53. 10; प्र तत्ते अद्या करणं कृतं भूत्कुत्सं यदायुमतिथिग्वमस्मै ṚV. vi. 18. 13; कुत्सस्यायोरतिथिग्वस्य वीरान्न्यवृणक् ṚV. ii. 14. 7; अहं गुङ्गुभ्यो अतिथिग्वम् … धारयम् ṚV. x. 48. 8 (Sāy. अतिथिगो: पुत्रम्)

**अतिथिजन** (atithi-jana) *m.* guests अस्मदीयमिह धर्मोपदेशप्रदानमेव प्रथममातिथेयमतिथिजनेषु NalaCam. 6. 28 (8); स्वाधीनसुलभम् … अतिथिजनप्रतिपूजनसमर्थरूपं शरीरधनम् JātMā. 29. 18 (6. 16); 34. 24 (7. 4); विप्र: प्रियव्रतो नाम…। आसीत्काश्यां शुभाचार: सदातिथिजनप्रिय: SkandP. iv. 47. 4; अतिथिजनशेषमश्नाति सज्जनजिह्वे कृतार्थासि SubhāRaK. 37. 40; अतिथिजनसपर्यापर्युत्सुकसौमित्रिसमाहृतकन्दमूलफलकल्पितैकदेशम् … रामाश्रमं भरत: … अभजत RāmaCam. 2. 76 (11); अतिथिजनार्चनै: … ते नैकं दिनमिव वन्ध्यतामनैषु: RāghPāṇ. (Ka.) 5. 2.

**अतिथिज्ञ** (atithi-jña) *adj.* who knows the (duties towards) the guests (विप्र:) अस्तेनश्चातिथिज्ञश्च स राजन्केतनक्षम: MahāBhā. xiii. 24. 27.

**अतिथिता** (atithi-tā) *f.* the status of a guest ते वध्यमानाः पार्थेन … शक्रस्यातिथितां गताः MahāBhā. vii. 18. 36; viii. 43. 77; अप्रत्ययस्य वातिथितया समुपस्थितत्वादर्थः JayaMa. 357. 22 (*on* 6. 6); धनमित्रनरेन्द्रस्य स्नेहादतिथितां गतः।…वलिः TriṣaS'aPuC. iv. 3. 75; मुनिरेषः…अर्थिनोऽप्यतिथितामनुमेने NaiṣC. 5. 4 (comm. आतिथ्यम्); निजानुजेनातिथितामुपेतः प्राचीपतेर्वाहनवारणेन। सिन्दूरसान्द्रे किमकारि मूर्ध्नि तेनारुणश्रीरयमुज्जिहीते NaiṣC. 22. 44; अनगारेष्वतिथितामागतेष्वन्नतृष्णया PariPar. 12. 317; (fig.) दृशोरतिथितां नीत्वा विष्णुर्वाराणसीं ततः। पुण्डरीकाक्ष इत्याख्यां सफलीकृतवान्मुदा SkandP. iv. 58. 16; इयं न यस्यातिथितां गता दृशोः NavaSāC. 7. 5; परान्परःशतान्प्रेतपतेरतिथितां नयन्। परमारान्वयं चक्रे क्षेत्रसिंहोऽत्र सार्थकम् HammīMaKā. 13. 204; कालस्यातिथितां गतोऽपि कुरुते कां कां नवाश्चर्यताम् ParamāKā. 19. 137.

**अतिथित्व** (atithi-tva) *n.* the status of a guest अतिथित्वेन वर्णानां देयं शक्त्यानुपूर्वशः YājñaSm. 1. 107; सकलयज्ञातिथित्वेन वैश्यान्नं तेन संस्कृतम् ĀpaSm. 8. 16; विद्वान्विद्वांसमविद्वांसं च क्षुधितं चागतं चातिथित्वेन परिचरति PārāSū. 97. 11; क्षत्रियो यदि वा गच्छेदतिथित्वेन वेश्मनि BṛParāSm. 4. 210 (206); त्रिभ्यश्चाधिकस्य विप्रस्याधिगतस्यातिथित्वं कल्प्यम् Aparā. 146. 11 (*on* 1. 104); त्वम्…मद्भाग्येन गतोऽतिथित्वम् SaduktiKa. 33. 25; अतिथित्वेनागतोऽनर्चितो वसन्नन्यत्रापि ManvaVi. 339. 27 (*on* 3. 100); कः पुनरतिथित्वेऽधिक्रियत इत्यत आह – अतिथित्वेऽपि BālaKrī. i. 96. 22 (*on* 1. 106); वैडालव्रतिकायातिथित्वेन सत्कृतार्धदानादि निषिद्धम् ManvaMu. 179. 29 (*on* 4. 192); अतिथित्वात्स नः पूज्यो वरश्चान्यो न तादृशः KathāSaSāg. xii. 23. 84; अतिथित्वेनोपस्थितानां ब्राह्मणादीनां वर्णानुपूर्व्ये यथाशक्त्यन्नं देयमित्यर्थः ViraMi. 200. 1 (*on* 1. 107); एवं च प्रियस्य यदतिथित्वमुक्तं शातातपेन BālamBha. i. 357. 3 (*on* 1. 107); PrabaK. 119. 10; (fig.) अतिथित्वमवाप नेत्रयोर्बुधलोकः शिवशर्मणस्तथ SkandP. iv. 15. 20; छिन्नेऽपि जगाम पक्ष्मयुग्मे पक्षीन्द्रलिदिवस्य योऽतिथित्वम् RāmC. 14. 18; आयाति…कथंकारम् … बिम्बं मज्जनस्यातिथित्वम् S'rīKaC. 14. 60; अन्तकस्य स तत्कालमतिथित्वं गमिष्यति PariPar. 9. 9; अतिथित्वमनायि सा दृशोः सदसत्संशयगोचरोदरी NaiṣC. 2. 40; तव भवनस्यातिथित्वं विधास्ये KamVa. 5. 38.

**अतिथित्वनिराकरण** (atithitva-nirākaraṇa) *n.* denial of the status of a guest सख्यादीनामतिथित्वनिराकरणात् ViraMi.(Āhnika.) 439. 7.

**अतिथित्वमात्र** (atithitva-mātra) *n.* mere status of a guest श्रोत्रियत्वमात्रेणातिथित्वमात्रेण वा विशिष्टस्य माननमनेन फलाय विधीयत इत्यनुसन्धेयम् Aparā. 156. 3 (*on* 1. 111)

**अतिथित्वसंभव** (atithitva-sambhava) *m.* possibility of (possessing) the status of a guest भैक्ष्यभोजित्वात्तेषां नातिथित्वसंभवः ManuBh. i. 313. 2 (*on* 4. 31)

**अतिथित्वाभाव** (atithitvābhāva) *m.* absence of the guest-status मित्रादीनामतिथित्वाभावो मनुनोक्तः BālamBha. i. 358. 20 (*on* 1. 108); एकग्रामनिवासिनोऽतिथित्वाभावेऽपि वैश्वदेवार्थमुद्धृत्यावश्यं भिक्षा प्रदातव्या ViraMi.(Āhnika.) 436. 21.

**अतिथित्वाभिधान** (atithitvābhidhāna) *n.* statement of assigning the status of a guest (to some one) शातातपवाक्ये…प्रियस्यातिथित्वाभिधानात् ViraMi.(Āhnika.) 439. 5.

**अतिथिदर्शन** (atithi-darśana) *n.* sight of a guest तदहो ददतोऽन्नं महात्मनः। शिष्टं मात्सर्यहीनस्य वर्धत्यतिथिदर्शनात् MahāBhā. iii. 246. 9; कोऽयमतिथिदर्शनेन प्रतिभयः प्रथितः स्वेदकम्पोपप्लवः KaumuMi. 1. 18 (6)

**अतिथिदान** (atithi-dāna) *n.* offering to a guest एवकारोऽतिथिदानादपि पूर्वकरणाद् विचिकित्सानिवृत्त्यर्थः BālaKrī. i. 95. 1 (*on* 1. 102)

**अतिथिदारिद्र्य** (atithi-dāridrya) *n.* poverty of a guest प्रदीप्तेऽतिथिदारिद्र्यदावाग्नौ क्षिपतोऽपि ते। दानवारीणि … स्नेहनाशो न दृश्यते AlaṅkāMañ. 128. 10.

**अतिथिदेव** (athithi-deva) *adj.* having a guest for a deity अतिथिदेवो भव TaiU. 1. 11 = TaiĀ. vii. xi. 2 (S'aṅ. देवतावदुपास्या एते इत्यर्थः)

**अतिथिदेवत्य** (atithi-devatya) *adj.* pertaining to treatment of a guest as a deity अस्ति ह्याचारो बहुलं लोके। देवदेवत्यमतिथिदेवत्यं पितृदेवत्यम् Nir. 7. 4 (134. 12); अत्र हि देवताशब्दः स्मर्यते। अग्निदेवत्यं सूक्तम्। अग्निदेवत्यं हविरिति। तथा अतिथिदेवत्यम्, पितृदेवत्यमिति SābaBh. 1927. 21 (*on* x. 4. 23)

**अतिथिदैवत** (atithi-daivata) *adj.* having a guest as a deity मुनिः … नित्यं चातिथिदैवतः SkandP. iv. 94. 2.

**अतिथिदैवत्य** (atithi-daivatya) *adj.* having a guest as a deity गृहस्थोऽतिथिदैवत्यस्तस्मात्तं पूजयेत्सदा ViṣṇuDhaP. ii. 92. 57.

**अतिथिद्विष्** (atithi-dviṣ) *adj.* hating a guest, MediK. 18. 9; AnekāSaṁ. 4. 28; VisvaPra. 19. 216; S'abdaRaSaK. 40. 17; AnekāTi. 4. 149.

**अतिथिद्वेष** (atithi-dveṣa) *m.* hatred of a guest, inhospitality [MW]

**अतिथिधर्म** (atithi-dharma) *m.* 1 A duty towards a guest भो भद्र … तद्गृह्यतामतिथिधर्मः Pañcā. 26. 17; 1 B duty of a guest अतिथिधर्मेणाह – गोदोहनकालमिति ViraMi.(Āhnika.) 442. 10; 2 [Inst.] in the role of a guest यदि त्वतिथिधर्मेण क्षत्रियो गृहमाव्रजेत् ManuSm. 3. 111; ViṣṇuSm. 67. 36; आश्रमान्तरस्थानां भैक्षचर्या विहिता न त्वतिथिधर्मेण भोजनम् ManuBh. i. 258. 2 (*on* 3. 109); आगतमप्यतिथिं न विद्यात् नातिथिधर्मेणार्चयेत् ManvaVi. 341. 21 (*on* 3. 103); भवं(? व)त्योऽतिथिधर्मेण प्राप्ताः स्वर्गान्सुमध्यमाः DeviBhāP. iv. 6. 32; ViraMi.(Āhnika.) 449. 2.

**अतिथिधर्मशालिन्** (atithidharmaśāl-in) *adj.* possessed of the status of a guest वैश्यशूद्रावपि … ग्रामान्तरादागतत्वादतिथिधर्मशालिनौ ManvaMu. 108. 5 (*on* 3. 112)

**अतिथिधर्मिन्** (atithi-dharmin) *adj.* having the nature of a guest वैश्यशूद्रावपि प्राप्तौ कुटुम्बेऽतिथिधर्मिणौ। भोजयेत् ViṣṇuSm. 67. 37; ManuSm. 3. 112; सकाशं तव संप्राप्तौ दूरादतिथिधर्मिणौ BhaviP. 612B. 20 (iv. 3. 25); वैश्यशूद्रावपि प्राप्तौ कुटुम्बेऽतिथिधर्मिणौ … भोजयेत्सह भृत्यैस्तौ BallāC. 63. 16.

**अतिथिधर्मोपदेश** (atithidharmopadeśa) *m.* instruction relating to the duties towards a guest अतिथिमवजानन्तं यजमानमतिथिधर्मोपदेशेन तत्स्वीकारमकारयतां ब्राह्मणानामयं प्रत्यवायः CaturCin. iii(1). 440. 9.

**अतिथिन्** (ati-thin) *adj.* [DEBRC. p. 330, 722] wanderer, itinerant [w. r. for वैतिथिन् MahāBhā. xii. 29. 22]

**अतिथिनी** (atithin-ī) *adj.* (*f.*) bringing guests साध्वर्या अतिथिनीरिषिराः …। बृहस्पतिः … गा ऊपे ṚV. x. 68. 3 (Sāy. सततं गच्छन्तीः) = AV. xx. 16. 3.

**अतिथिनिमित्तक** (atithinimitta-ka) *adj.* meant for a guest अतिथिनिमित्तके आतिथ्यं यदुपात्तं तदतिथिना भक्ष्यमित्यर्थः ViraMi.(Āhnika.) 530. 17.

**अतिथिनिरीक्षण** (atithi-nirīkṣaṇa) *n.* looking out for a guest भिक्षादानानन्तरमप्यतिथिनिरीक्षणाय गृहाङ्गणे कंचित्कालं तिष्ठेदित्यर्थः SmṛtiCan. ii. 588. 8; ViraMi.(Āhnika.) 433. 21.

**अतिथिपञ्चम** (atithi-pañcama) *adj.* with the guest as the fifth देवान् पितॄन्मनुष्यांश्च भिक्षूनतिथिपञ्चमान् MahāBhā. v. 33. 63.

**अतिथिपति** (átithi-pati) *m.* [AltGr. II. 1. 264] a host यजमानब्राह्मणं वा एतदतिथिपतिः कुरुते AV. ix. 6. 18; ix. 6. 3; यद्वा अतिथिपतिरतिथीन्परिविष्य गृहानुपोदैति AV. ix. 6. 53; अतिथिपतिर्वा अतिथीनामीष्टे MaiS. iv. 8. 1.

**अतिथिपथ** (atithi-patha) *m.* guest's path (i. e. arrival) गृहपतिर्मम। प्रतीक्षेतातिथिपथम् SkandP. iv. 96. 132.

**अतिथिपद** (atithi-pada) *n.* 1 position of a guest तेन चाहमतिथिपदादातिथेयेनापश्चितोपचिताकाल्पखेदः(?)… तमब्रवम् AvantiKa. 193. 16; 2 the word 'guest' अनित्यं स्थित इत्यस्मिन्नर्थेऽतिथिपदं निपात्यते ManvaVi. 341. 1 (*on* 3. 102)

**अतिथिपरिग्रह** (atithi-parigraha) *m.* reception of a guest यः प्राजापत्यामिष्टिं निरूप्य … प्रव्रजितो न तस्य होमो न तस्यातिथिपरिग्रहः NyāyKa. 278. 1.

**अतिथिपरिवेषण** (atithi-pariveṣaṇa) *n.* serving food to a guest धर्मकार्यं च भिक्षादानातिथिपरिवेषणहोमीयद्रव्योपकल्पनादि प्रात्यहिकम् ManvaMu. 378. 30 (*on* 9. 86)

**अतिथिपूजक** (atithi-pūjaka) *adj.* [*f.* -ikā] honouring a guest देवतातिथिपूजकाः। दीर्घायुषो नराः सर्वे Rāmā. i. 6. 16; देवतातिथिपूजकः।…ब्राह्मणो नावसीदति ParāSm. 1. 38; अतिथिपूजकाः। ये च वेदार्थवक्तारस्ते वै भागवतोत्तमाः SkandP. ii(1). 21. 56; परीक्षितनृपोऽभवत्। देवतातिथिपूजकः BhaviP. 558A. 13 (iii(4). 9. 3); ये वै ह्यतिथिपूजकाः।… विज्ञेया वैष्णवा नराः PadmP. iii. 1. 27; यज्वा विनीतो ह्रीमांश्च देवतातिथिपूजकः GaṇeP. ii. 27. 5; देवतातिथिपूजिका। नाम्ना इन्दुमती ख्याता GaṇeP. i. 53. 7; निःस्पृहोऽतिथिपूजकः।… सैव सत्राधिपः स्मृतः S'ukraNī. 2. 169.

**अतिथिपूजन** (atithi-pūjana) *n.* honour shown to a guest अहं बाला नियुक्तातिथिपूजने MahāBhā. i. 113. 32; सत्यार्जवं चातिथिपूजनं च …। निषेवितव्यानि सुखानि लोके MahāBhā. xii. 61. 14; यज्ञः … अतिथिपूजनम्। … एतद्ब्राह्मणलक्षणम् MahāBhā. xii. 191*(1); श्रुतपूर्वो मया धर्मो महानतिथिपूजने MahāBhā. xii. 142. 39; xiii. 2. 68; सत्यं च …। द्विजातिदेवातिथिपूजनं च पन्थानमाहुस्त्रिदिवस्य सन्तः Rāmā. ii. 101. 30; पञ्च क्लृप्ता महायज्ञाः…नृयज्ञोऽतिथिपूजनम् ManuSm. 3. 70; धन्यं यशस्यमायुष्यं स्वर्ग्यं वातिथिपूजनम् ManuSm. 3. 106; न चाप्नोति गृही लोकान् यथा त्वतिथिपूजनात् ViṣṇuSm. 67. 44; 67. 28; ParāSm. 1. 39; अस्नानभोजिनो नाग्निदेवतातिथिपूजनम्। करिष्यन्ति ViṣṇuP. vi. 1. 27; सायं प्रातश्च भोक्तव्यं कृत्वा चातिथिपूजनम् MārkP. 34. 49; चतुर्विधो वराहारः

संयतेभ्यः प्रदीयते । श्रद्धादिगुणसम्पत्त्या तत्स्यादतिथिपूजनम् VarāṅgaC. 15. 124; धर्मान्वः पुरतो वक्ष्ये ... पञ्चयज्ञाद्यतिथिपूजनम् LaghvāśvaSm. 1. 2; GobhiSm. 2. 27; तुष्टाः स्युः सर्वदेवताः ... यथा ह्यतिथिपूजनात् VṛGautaSm. 534. 15 (6); होतव्यमग्निहोत्रं च कुर्याच्चातिथिपूजनम् TaiUBhāVā. 32. 18(1); NyāyKa. 277. 11; वेदाभ्यासोऽन्वहं शक्त्या श्राद्धं चातिथिपूजनम् । गृहस्थस्य परो धर्मः KūrmaP. 26. 9 (1. 2); VisnuDhaP. ii. 95. 11; BrahmVaiP. i. 29. 7; SkandP. iv. 96. 134; (सुधर्मा) भगवद्भजने सक्ता तथा चातिथिपूजने GaṇeP. i. 1. 35; अकारि यत्रातिथिपूजनं धनं मनोरमश्च स्वयमाल्ययोऽकृत:(?त) Rāvaṇā. 8. 66; हिंसादिदोषयुक्तोऽपि मुच्यतेऽतिथिपूजनात् KṛṣiPa. 8; SmṛtiCan. iv. 717. 16; मठाग्रहारसदननिर्मापातिथिपूजनैः । नृपोपचारैः साफल्यमनैषीत्सर्वसंपदः (मन्त्री) RājTa.(S'ri.) 3. 37; भूतयज्ञादि अतिथिपूजनपर्यन्तं क्रमेण कर्तव्यम् ViraMi.(Āhnika.) 391. 20; 441. 14; AbhidhāCin. 822; *adj.* honouring a guest गृहाश्रमः...रम्यः सर्वत्रातिथिपूजनः BhaviP. 740B. 15 (iv. 94. 38)

**अतिथिपूजना** (atithi-pūjanā) *f.* honour shown to a guest अहो देहप्रदानेन दर्शितातिथिपूजना MahāBhā. xii. 143. 8.

**अतिथिपूजा** (atithi-pūjā) *f.* honour shown to a guest पाद्यमासनमेवाथ दीपमन्नं प्रतिश्रयम् । दद्यादतिथिपूजार्थम् MahāBhā. xiii. 7. 12; देवतातिथिपूजायां प्रसक्ता गृहमेधिनः MahāBhā. xiii. 32. 19; धर्मद्वारेष्वयधीयेत ... अतिथिपूजायां दाने CaraS. i. 11. 33 (1922 Ed.); (स्वधर्मः) वानप्रस्थस्य ... देवतापित्रतिथिपूजा ArthSā. i. 30. 4 (1. 3); अतिथिपूजायां यतेत VisnuP. iii. 11. 70; सा तापसकन्यका ...मम...अतिथिपूजामकरोत् TilaMañ. 256. 21; गोदेवातिथिपूजासु निरालस्यो भवानघ SkandP. iii(3). 11. 23; PadmP. v. 27. 43; LiṅgaP. i. 29. 44; गत्वा च राजधानीं स्वां प्रेषयामास सोऽन्वहम् । तस्या अतिथिपूजार्थं पक्वान्नानि धनानि च KathāSaSāg. x. 10. 153; सत्प्रतिग्रहादिन्यायेनोपार्जितधनः अतिथिपूजातत्परः (गृहस्थोऽपि मुच्यते) Mitā. 400. 5 (on 3. 205); अतश्चातिथिपूजाया अकरणे निन्दा ब्राह्मणातिथिपूजनाकरणविषयैव Aparā. 152. 11 (on 9. 107); अतिथिपूजाचर्यमेव च - अहो मासस्य पण्णां वा तथा संवत्सरस्य वा । अर्थस्य निचयं कुर्यात् BālaKrī. ii. 22. 21 (on 3. 47); देवतातिथिपूजासु गृहस्थो निरतो भवेत् MahNirvāT. 8. 24; अतिथिपूजाप्रसङ्गेन राजादीनामपि गृहागतानां पूजाविशेषमाह ManvaMu. 109. 23 (on 3. 119); (वर्णनीयाः) आश्रमे-ऽतिथिपूजैणविश्वासो हिंस्रशान्तता AlaṅkāS'e. 16. 0 (73); रात्रावपि ह्यतिथिपूजा स्मर्यते BālamBha. i. 104. 3 (on 1. 24)

**अतिथिपूजादिक** (atithipūjādi-ka) *adj.* honouring a guest etc. गृहस्थस्यातिथिपूजादिकमपि...अपेक्ष्यम् ViraMi. 903. 28 (on 3. 205)

**अतिथिपूजानियम** (atithipūjā-niyama) *m.* obligation regarding honouring a guest यदि भार्यया सह प्रवसेदग्नयश्च गृह एव भवेयुस्तदा नातिथिपूजानियमः ManuBh. i. 251. 23 (on 3. 93)

**अतिथिपूजानिवृत्ति** (atithipūjā-nivṛtti) *f.* abstention from honouring a guest यथोक्तलक्षणातिथ्यभावेऽतिथिपूजानिवृत्तिः ManuBh. i. 134. 23 (on 2. 113)

**अतिथिपूजापर** (atithipūjā-para) *adj.* I devoted to honouring guests अतिथिपूजापरः...गृहस्थः...मुच्यते ViraMi. 904. 5 (on 3. 205); II referring to the honouring of a guest विप्रनिषेधकानि तानि ... अतिथिपूजापराणि BālamBha. i. 494. 18 (on 1. 221)

**अतिथिपूजापरायण** (atithipūjā-parāyaṇa) *adj.* devoted to honouring guests स्नानसंध्याग्निहोत्रस्वाध्यायवैश्वदेवातिथिपूजापरायणः S'aṅkaVi.(Ā.) 69. 9.

**अतिथिपूजाफल** (atithipūjā-phala) *n.* result of honouring guests स्वर्गग्रहणमतिथिपूजाफलोपलक्षणार्थम् ManuBh. i. 216. 20 (on 3. 18)

**अतिथिपूजाविधि** (atithipūjā-vidhi) *m.* procedure of honouring guests अशक्तस्य तृणादिदानेनाप्यतिथिपूजाविधिः स्यात् ManuBh. i. 250. 23 (on 3. 91)

**अतिथिपूजाव्यतिक्रम** (atithipūjā-vyatikrama) *m.* omission of (the duty of) honouring a guest अत्यन्तदरिद्रस्याप्यतिथिपूजाव्यतिक्रमो न युक्तः ManuBh. i. 249. 27 (on 3. 90)

**अतिथिप्रग्रह** (atithi-pragraha) *m.* welcome to a guest अतिथिप्रग्रहरतः ... नरः ... स्वर्गति प्रतिपद्यते BrahmP. 225. 27.

**अतिथिप्रतिपूजन** (atithi-pratipūjana) *n.* honouring a guest निश्चिता खलु मे बुद्धिरतिथिप्रतिपूजने MahāBhā. xii. 142. 40.

**अतिथिप्रत्याख्यान** (atithi-pratyākhyāna) *n.* rejection of a guest अतिथिप्रत्याख्याने च दोष उक्त आपस्तम्बेन ViraMi.(Āhnika.) 435. 22.

**अतिथिप्रत्युत्थान** (atithi-pratyutthāna) *n.* standing up in honour of a guest (आचारहीनः) गुर्वतिथिप्रत्युत्थानाद्याचारवर्जितः ManvaMu. 120. 8 (on 3. 165)

**अतिथिप्रधान** (atithi-pradhāna) *adj.* having a guest as the principal object आतिथ्यमतिथिप्रीत्यर्थं सदतिथिप्रधानम् S'ivārkaMaDī. i. 36. 6 (on i. 1. 1); PūrvottaVāNaMā. 250. 6.

**अतिथिप्रभृति** (atithi-prabhṛti) *adj.* guest etc. विघसो यज्ञशेषः अतिथिप्रभृतिभिः भुक्तशेषश्च SmṛtiCan. v. 155. 3; शेषान् निमन्त्रितव्यतिरिक्तानतिथिप्रभृतीन् SmṛtiCan. v. 279. 20; v. 194. 5.

**अतिथिप्रयुक्त** (atithi-prayukta) *adj.* caused by the guest सर्वं तदतिथिप्रयुक्तम् S'ābaBh. 1649. 23 (on ix. 1. 6); 1657. 5 (on ix. 1. 10)

**अतिथिप्रसङ्ग** (atithi-prasaṅga) *m.* [Inst.] in the context of (honouring) a guest अतिथिप्रसङ्गेन गृहागतानां स्नातकादीनामर्घ्यत्वमाह ViraMi. 201. 20 (on 1. 110)

**अतिथिप्राग्भोजन** (atithiprāg-bhojana) *n.* eating before a guest न हि ... अतिथिप्राग्भोजनं सकलमखविघाङ्गम् PūrvottaVāNaMā. 307. 13; 308. 11; 309. 8.

**अतिथिप्राणक** (atithiprāṇa-ka) *adj.* with guest as his very life नृपः अतिथिप्राणको नित्यम् BṛNāraP. 13. 10.

**अतिथिप्राणाग्निहोत्र** (atithi-prāṇāgnihotra) *n.* Prāṇāgnihotra (to be done) by the guest अतिथिप्राणाग्निहोत्रात् पूर्वं स्वीयप्राणाग्निहोत्रं कुर्यात् VedāntKa. 453. 16 (on iii. 3. 40)

**अतिथिप्राप्ति** (atithi-prāpti) *f.* obtainment of a guest क्व चेद्गतिथिप्राप्तिरहो पुण्योदयोऽद्य मे KathāSaSāg. xii. 5. 129.

**अतिथिप्रार्थनमनोरथ** (atithiprārthana-manoratha) *adj.* [*f.* -ā] 1 desirous of the requests of guests यत्र ... स्वर्गवसतय इवातिथिप्रार्थनमनोरथाः ... सन्ति ग्रामाः YaśasCam. i. 14. 1; 2 not having lunar days and having desires (fulfilled) without being asked for, (comm. अविद्यमानास्तिथयः प्रार्थितमनोरथाश्च यासाम्)

**अतिथिप्राशस्त्य** (atithi-prāśastya) *n.* praise of a guest गोविन्दस्य जयन्ति सायमतिथिप्राशस्त्यगर्भा गिरः GitGo. vi. 12. 4.

**अतिथिप्रिय** (atithi-priya) *adj.* [*f.* -ā] to whom a guest is dear, hospitable अतिथिप्रियः । यो ददाति सतां नित्यं स मां पृच्छतु पाण्डवः MahāBhā. xii. 55. 9; (ये) सततं चातिथिप्रियाः ... तान्नमस्यामि MahāBhā. xiii. 32. 12; दाता यज्वा च धीरश्च श्रुतवानतिथिप्रियः HariVaṁ. i. 24. 8; न्यायागतधनस्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः YājñaSm. 3. 205 (अतिथयः प्रियाः यस्य सोऽतिथिप्रियः Aparā. 1029. 8); Kiraṇā. 12. 17; वरुणायास्तटे विप्रः ... सदातिथिप्रियो रात्रावागतानां समाश्रयः MārkP. 61. 6; अतिथिप्रियः । तस्याः पुत्रः स्मृतोऽक्रूरः VāyuP. ii. 34. 109 = BrahmāṇḍP. ii. 71. 110 = LiṅgaP. i. 69. 24; सत्यवादी च नित्यं चैवातिथिप्रियः AhirbuS. 15. 48; अतिथिः प्रियस्य (? अतिथिप्रियस्य) ... जितेन्द्रियस्य दत्ता हि गौस्तारयते परत्र VṛGautaSm. 574. 1 (9); देवदत्त इति द्विजः । ... व्रतनिष्ठोऽतिथिप्रियः VarāP. 146. 5; अनुरक्ता त्वयि सदा द्विजदेवातिथिप्रिया GaṇeP. i. 7. 13; सुगन्धा नाम यस्यासीत् पत्नी ... द्विजदेवातिथिप्रिया GaṇeP. i. 58. 14; विदुषे स विशाम्पत्युरातिथ्यमतिथिप्रियः NavaSāC. 11. 38; सोऽतिथिप्रियः ... गृहस्थोऽपि विमुच्यते NyāyMañ. ii. 85. 31; अतिथिप्रियाय दान्ताय धेनुं दद्याद्गुणाधिके BhaviP. 831B. 2 (iv. 151. 23); अतिथिप्रियाणां गृहेऽपि मोक्षः पुरुषोत्तमानाम् PadmP. v. 19. 318 = SūktiRa. 25. 11; Subhāṣi. 3017; तिथिरतिथिप्रिय दशमी SaraKaṇṭhā. 262. 9; कूपः । द्रोणाचार्यस्य विद्याधावातिथ्यमतिथिप्रियः PāṇḍaC. 3. 257; अतिथिप्रियो विरचिताभरणः श्रवणातिथिं तिथिमसावकरोत् Rāṣṭrau. 17. 37; तद्भार्यापि तथैवैतं तमुवाचातिथिप्रिया KathāSaSāg. i. 7. 50.

**अतिथिप्रिय** (atithi-priya) *m.* 1 one of the thousand names of Viṣṇu. अतिथिप्रियः (इति विष्णुसहस्रनामानि) SkandP. v(1). 63. 135; 2 name of one of the hosts of Skanda in the North-Western region अतिस्थिरश्चीचिह्नश्च चतुर्थस्त्वतिथिप्रियः IśānSiPa. ii. 53. 85.

**अतिथिप्रीणन** (atithi-prīṇana) *n.* (room for) entertaining guests प्रकरोतु वा द्वयमिदं याम्येऽतिथिप्रीणनम् SilpaRa. ii. 31. 67 = MānaSā. App. 450B. 21.

**अतिथिप्रीति** (atithi-prīti) *f.* I love for a guest (सा) अपूर्वमतिथिप्रीत्या स्वागतेनान्वरञ्जयत् KathāSaSāg. iv. 2. 86; II satisfaction of a guest अतिथिप्रीतिस्तु मधुपर्कसंस्कारादिसमाख्यादजा प्रत्यक्षोपलक्ष्यैव SyādvāMañ. 11 (11)

**अतिथिप्रीतिपर्यन्तता** (atithiprīti-paryanta-tā) *f.* the state of continuing till the satisfaction of a guest इत्यतिथिप्रीतिपर्यन्ततया आतिथ्यविधिवत् SiddhāSi. i. 45. 21.

**अतिथिप्रीतिविधान** (atithiprīti-vidhāna) *n.* act of pleasing the guests आतिथ्यमतिथिप्रीतिविधानम् S'ivārkaMaDī. i. 36. 12 (on i. 1. 1) = PūrvottaVāNaMā. 250. 15.

**अतिथिप्रीत्यन्त** (atithiprīty-anta) *adj.* ending with the satisfaction

of a guest अतिथिप्रीत्यन्तमनुष्ठितं कर्मैव फलदम् SiddhāSi. i. 45. 5.

**अतिथिप्रीत्यर्थ** (atithiprīty-artha) *adj.* meant for the satisfaction of a guest अतिथिप्रीत्यर्था धर्माः VedāntKa. 181. 24 (*on* i. 3. 26); अतिथिप्रीत्यर्थे कर्मण्यातिथ्ये कथमश्रद्धा परिहरणीया SiddhāSi. i. 45. 3; आतिथ्यमतिथिप्रीत्यर्थं सद् अतिथिप्रधानम् SivārkaMaDi. i. 36. 6 (*on* i. 1. 1) = PūrvottaVāNaMā. 250. 6.

**अतिथिप्रीत्यर्थम्** (atithiprīty-artham) *adv.* in order to please a guest देवतातिथिप्रीत्यर्थम् ···। न हिंस्याः प्राणिनः VarāngaC. 15. 112.

**अतिथिप्रेक्षण** (atithi-prekṣaṇa) *n.* looking for or waiting for a guest प्रणयिता यत्र (अवन्तिषु) अतिथिप्रेक्षणे (वर्तते) YaśasCam. i. 203. 5.

**अतिथिबहुत्व** (atithi-bahutva) *n.* abundance of guests यत्तु वायुपुराणे ··· न सेवनपरोऽतिथिः इति तदतिथिबहुत्वे द्रष्टव्यम् SmṛtiCan. ii. 589. 15.

**अतिथिबाहुल्याभाव** (atithibāhulyābhāva) *m.* absence of abundance of guests तत्काले अतिथिबाहुल्याभावादेकातिथित्वम् ManvaVi. 313. 1 (*on* 3. 105)

**अतिथिभक्त** (atithi-bhakta) *adj.* devoted to a guest मम पुत्रः ··· देवतातिथिभक्तः GaṇeP. i. 59. 4.

**अतिथिभक्ति** (atithi-bhakti) *f.* devotion to a guest सातिथिभक्त्या च पाद्यं तस्मै ददौ BrahmVaiP. ii. 14. 12.

**अतिथिभाग** (atithi-bhāga) *m.* share of a guest उपेत्यातिथिभागं तां वीरोऽयाचत यक्षिणीम् KathāSaSāg. xii. 6. 246.

**अतिथिभाजन** (atithi-bhājana) *adj.* fit for a guest भवतोः किं वयमत्र कुशलप्रश्नस्य भाजनम्, न पुनरतिथिभाजनस्य समुचितस्य कण्ठग्रहस्य KundaMā. 5. 11 (5)

**अतिथिभाव** (atithi-bhāva) *m.* the status of a guest ब्राह्मणादीनां वर्णानामतिथिभावे सति ब्राह्मणादिक्रमेण ते भोजयितव्याः Aparā. 152. 2 (*on* 1. 107); 'संप्रीत्या गृहमागतान्' न त्वतिथिभावेन तस्य प्रतिषेधात् ManvaMu. 108. 20 (*on* 3. 113)

**अतिथिभिक्षुप्रभृति** (atithibhikṣu-prabhṛti) *adj.* guest, mendicant and so on नून् अतिथिभिक्षुप्रभृतीनर्चयेत् ManuBh. i. 242. 23 (*on* 3. 71)

**अतिथिभोजन** (atithi-bhojana) *n.* feeding a guest युक्तस्त्वं तथातिथिभोजने। न ··· शक्तसमुद्योगे MahāBhā. vii. 114. 72; सायं प्रातश्च भोक्तव्यं कृत्वा ह्यतिथिभोजनम् SkandP. i(2). 41. 161; अतिथिभोजनस्य प्राथम्यं निन्दित्वा स्वामिभोजनम् ··· प्रापयन्ती ··· आदरं करोति BrahmSūBh.(Śaṅ.) 682. 14 (*on* iii. 3. 40) = BrahmSūBh.(Bhā.) 191. 23 (*on* iii. 3. 40) = Bhām. 648. 18 (*on* iii. 3. 40); स्वामिभोजनस्य ह्यतिथिभोजनादुत्तरः कालः VedāntKa. 453. 6 (*on* iii. 3. 40); अतिथिभोजनमेतेभ्यः प्राक् बोद्धव्यम् DipKa. 14. 26 (*on* 1. 105); अतिथिभोजनेन भक्तक्षये प्राणाग्निहोत्रलोपमाशङ्क्य SrutaPra. ii. 512. 1 (*on* iii 3. 40); अतिथिभोजनस्य वलिकर्मानन्तर्यं श्राद्धाकरणे बोद्धव्यम् VīraMi.(Āhnika.) 392. 3; BālamBha. i. 346. 16 (*on* 1. 103)

**अतिथिभोजननियम** (atithibhojana-niyama) *m.* rule of feeding a guest यद्यपि प्रातराशेऽप्यतिथिभोजननियमः सायं तु तद्व्यतिक्रमे प्रायश्चित्ताधिक्यम् ManuBh. i. 250. 17 (*on* 3. 90)

**अतिथिभोजनादि** (atithibhojanādi) *adj.* feeding of guests etc. श्राद्धेऽतिथिभोजनादौ च कादाचित्क उपयोगः ManuBh. ii. 348. 17 (*on* 10. 63); आतिथेयमतिथिभोजनादि ManvaMu. 90. 1 (*on* 3. 18); एवं च नित्यश्राद्धात्पूर्वं भिक्षुकोपस्थितौ तस्मै भिक्षादानं ततो नित्यश्राद्धादि, ततोऽतिथिभोजनादीति क्रमः VīraMi. (Āhnika.) 431. 2.

**अतिथिमत्** (atithi-ma(n)t) *adj.* [*f.* –tī] containing the word *atithi* सैषाग्नेय्यतिथिमती न सौम्यातिथिमत्यस्ति AitBr. 3. 6 (76); आज्यभागौ ··· अतिथिमन्तौ हैके कुर्वन्ति KauṣīBr. 8. 2 (35. 9); संयाज्ये अतिथिमत्यौ रथवत्यौ त्रिष्टुभावाग्नेय्यौ KauṣīBr. 8. 2 (35. 17); धाय्ये अतिथिमन्तौ ĀśvaSS. I. iv. 5. 3.

**अतिथिरहित** (atithi-rahita) *adj.* without a guest अतिथिरहिते श्राद्धे ये भुञ्जन्ति···काकयोनिं व्रजन्ति ते LaSātāSm. 101.

**अतिथिरूप** (atithi-rūpa) *adj.* [*f.* –ā] having the form of a guest ब्राह्मणमतिथिरूपम् ··· भिक्षादानेन चार्हयेत् ManvaMu. 134. 13 (*on* 3. 243); संहारादि कार्यं जनयन् चिद्देवता ···आत्मीया···अतिथिरूपा PratyabhiHr. 197. 6(20) (Adyar Ed.); *n.* role of a guest कृपयातिथिरूपेण भवद्भिस्तीर्थकाः कृताः BhāgP. i. 19. 32; चरन्त्यतिथिरूपेण पितरः BhaviP. 280B. 12 (i. 188. 18); यदा तु क्षत्रियादिरतिथिरूपेणागच्छति तदा मनूक्तम् SmṛtiCan. ii. 594. 18.

**अतिथिरूपभूत** (atithirūpa-bhūta) *n.* living being in the capacity of a guest अतिथिरूपभूतानि प्रत्युपजीव्यमग्निहोत्रं श्रुतम् VedāntKa. 453. 10 (*on* iii. 3. 40)

**अतिथिरूपभृत्** (atithirūpa-bhṛt) *adj.* having the form of a guest चित्रगुप्तो गृहानागादेकदातिथिरूपभृत् KathāSaSāg. xii. 5. 325.

**अतिथिलक्षण** (atithi-lakṣaṇa) *n.* characteristic features of a guest अतिथिलक्षणं वक्ष्यति ManuBh. i. 247. 16 (*on* 3. 84); CaturCin. iii(1). 350. 3; अप्रसिद्धत्वादतिथिलक्षणमाह ManvaMu. 106. 20 (*on* 3. 102)

**अतिथिलक्षणरहित** (atithilakṣaṇa-rahita) *adj.* not having the characteristic features of a guest अतिथिलक्षणरहितमेवालीकातिथिभावमाविष्कृ-(?फ़्)त्य भोजनयाचनेन ··· श्राद्धे विघ्नकर्तारं प्रत्याह हारीतः CaturCin. iii(1). 441. 6.

**अतिथिलक्षणलक्षित** (atithilakṣaṇa-lakṣita) *adj.* marked by (possessing) the characteristic features of a guest आतिथ्यरहिते अतिथिलक्षणलक्षितविप्रागमनेऽपि तत्पूजारहिते SmṛtiCan. v. 279. 14; CaturCin. iii(1). 440. 11.

**अतिथिलक्षणहीन** (atithilakṣaṇa-hīna) *adj.* lacking the characteristic features of a guest यस्त्वतिथिलक्षणहीनो भोजनयाचनादिना श्राद्धविघ्नं करोति SmṛtiCan. v. 280. 2.

**अतिथिलाभ** (atithi-lābha) *m.* availability of a guest अतिथींश्चेद् लिप्सेत भूयासमन्नदास्त्वम्। अत्रान्नदानं फलं तद्धेतुभूतोऽतिथिलाभः JaineVyā. 132. 12 (*on* ii. 3. 115)

**अतिथिलोकत्रा** (atithiloka-trā) *adv.* to the guests सः ··· अतिथिलोकत्राकृतवाञ्जिनीकः ··· वेत्रपुरमध्यवसत् (वेङ्कटेन्द्रः) ĀnandRa. 2. 40 (13)

**अतिथिलोप** (atithi-lopa) *m.* loss of a guest वनराजिके वसन्तकुसुमाग्रयणं कुर्वन्त्या भवत्या न खल्वतिथिलोपः कृतः PadmPrā. 16. 10.

**अतिथिवचन** (atithi-vacana) *n.* mention of *atithi* (guest) (बालस्ववासिनीवृद्धगर्भिण्यातुरकन्यकाः। संभोज्यातिथिभृत्यांश्च दम्पत्योः शेषभोजनम्) अतिथिवचनं दृष्टान्तार्थम्। चशब्दोऽस्यागतार्थः BālaKrī. i. 96. 5 (*on* 1. 104)

**अतिथिवत्** (atithi-vat) *adv.* 1 like the sage Atithi अथातिथीनां व्यार्षेयः। आत्रेयार्चनानसातिथ्येति। अतिथिवदर्चनानसवदत्रिवदिति ĀpaSS. xxiv. 8. 13; 2 like a guest दासाः···अतिथिवच्छूद्रं भोजयेयुः HirSS. xxvii. 1. 73; ĀpaDS. ii(2). 4. 20; वधूज्ञातिभिरतिथिवदर्चितः BaudhGS. i. 1. 24; विवाहे गौः। गृहेषु गौः। तया वरमतिथिवदर्हयेत् ĀpaGS. i. 3. 8; देवता वा प्रयोजयेदतिथिवद् भोजनस्य तदर्थत्वात् MīmāSū. ix. 1. 6; यागो नाम देवतापूजा। पूजा च पूजनीयं प्रति गुणभूता। तदेतदतिथिवद् द्रष्टव्यम् SābaBh. 1649. 22 (*on* ix. 1. 6); गृहस्था य उपासीरन् वाचं धेनुं चतुस्तनीम्। स्वर्गौकसां पितृणां च पूज्यास्तेऽतिथिवद्दिवि BṛParāSm. 6. 82; स्तुतेरपि हि पूज्यत्वाद् ज्ञायते यजिवाच्यता। न चातिथिवदेतस्याः पूज्यतेति च वक्ष्यते TantrVā. 434. 10 (*on* ii. 2. 10); गृहेष्वतिथिवत्तिष्ठेत् SātvaT. 8. 26; (अहम्) अमुना चातिथिवदुपचरितः क्षणं विश्रान्तः DaśKuC. 41. 6; AṇuBh. 181. 3 (*on* iii. 1. 24); PraboSu. 79; अतिथिवत् भिक्षुकयोर्वैतिब्रह्मचारिणोरपि पूज्यतामाह VīraMi.(Āhnika.) 446. 24; 453. 14; BālamBha. i. 357. 11 (*on* 1. 108)

**अतिथिवत्सल** (atithi-vatsala) *adj.* fond of or hospitable to the guests पतिः ··· प्रियदत्ताया धार्मिकोऽतिथिवत्सलः KathāSaSāg. ix. 2. 241.

**अतिथिवर्ग** (atithi-varga) *m.* group of guests कुलपतिसमादेशादतिथिवर्गमुपचरन्ती···कंचित्कालमनयम् TilaMañ. 331. 2.

**अतिथिवर्जित** (atithi-varjita) *adj.* deficient in a guest यस्याग्निहोत्रम् ··· अतिथिवर्जितं च।··· आसप्तमांस्तस्य लोकान् हिनस्ति MuṇḍaU. i. 2. 3; अतिथिवर्जितं च अतिथिपूजनं च अहन्यहन्यक्रियमाणं यस्य MuṇḍaUBh. 315. 13 (*on* i. 2. 3); एतत्त्वतिथिभोजनमतिथिलक्षणलक्षित आगते सति द्रष्टव्यं न पुनरतिथिवर्जितश्राद्धकरणे CaturCin. iii(1). 440. 11.

**अतिथिवल्लभ** (atithi-vallabha) *adj.* dear to guests महानन्दो द्विजः ··· सदैवातिथिवल्लभः SkandP. iv. 98. 41; इष्टसंपादिनीं विद्यां ससारातिथिवल्लभः (तापसः) KathāSaSāg. xii. 25. 35.

**अतिथिवाञ्छा** (atithi-vāñchā) *f.* desire for (i. e. expectation of) a guest चतुर्दिग्भ्यो भूतेभ्यो बलिं पश्चाद्विनिक्षिपेत्। द्वारि गोदोहमात्रं तु तिष्ठेदतिथिवाञ्छया VṛHāriSm. 8. 226.

**अतिथिविद्विष्** (atithi-vidviṣ) *adj.* hating guests गृहेरुको वदान्येऽपि गृहाशिन्यतिथिद्विषि (v. l. मिश्रिन्यतिथिविद्विषि) SabdaRaSaK. 40. 17.

**अतिथिविशेष** (atithi-viśeṣa) *m.* distinguished guest अये को नु खल्वयम् ··· अतिथिविशेषस्तपोवनं नः सनाथयति SubhaDha. 1. 4 (8); (महोक्षं वा महाजं वा श्रोत्रियायोपकल्पयेत्) एतच्चातिथिविशेषापेक्षया व्यस्तसमस्तत्वेन योज्यम् BālaKrī. i. 97. 17 (*on* 1. 108)

**अतिथिविषय** (atithi-viṣaya) *adj.* 1 possessing men who are averse to request for worldly pleasures यदतिथिविषयेऽस्मिन् विष्टरे सन्निवेश्य सुरभितरमणीनामर्थितार्थप्रदानाम्। इदमगकर्मिदैकं मे कृशाङ्गत्वहेतुः YaśasCam. i. 421. 1; 2 concerned with guests इष्टापूर्तेष्वतिथिविषये ··· वः प्रवीणां नागादेवीमलभत VikraDeC. 18. 80; अतिथिविषयस्तु महोक्षं वा महाजं वा श्रोत्रियाय ··· प्रकल्पयेदित्यादिः (हिंसाविधिः) SyādvāMañ. 11 (15); नष्टशौचे व्रतभ्रष्टे ···। दीयमानं रुदत्यन्नम् ··· इति च मनूक्तं नातिथिविषयम् BālamBha. i. 357. 9 (*on*

**अतिबहिष्कार** (ati-bahiṣkāra) *m.* absolute exclusion यद्वा नातिबहिष्कारो नातीव च परिग्रहः NyāyPari. 25. 9.

**अतिबहु** (áti-bahu) *adv.* [AitGr. II. 1. 232] very much तस्मान्नातिबहु यष्टव्यम् MaiS. ii. 4. 5; अयमतिबहुदीप्तसंविधानः ...।...विदशपतिप्रतिमः प्लवङ्गवीरः RāmC. 6. 5; अतिबहु प्रसक्तानुप्रसक्त्या लिखितमस्माभिः NyāyMañ. ii. 61. 13; DhūrtaViSaṁ. 16. 13; *adj.* i very much, abundant अतिबहु तदा मुक्त्वान्नं संस्थितः सुहितो वदेत् BṛSaṁ. 51. 29; Mugdhopa. 62; Tantrākhyā. 40. 22; SmṛtiCan. iv. 601. 11; तदापि नातिबहु किं स्वल्पमेव वृद्धिदानं कर्तव्यम् ManvaVi. 1336. 6 (*on* 10. 117); CaturCin. iii(1). 6. 18; Bhāsk. i. 207. 15 (*on* i. 5. 3); ii great many, very many इदं चाप्ययत्नेऽतिबहु क्रियत एकस्मिन्नेकवचनं द्वयोर्द्विवचनं बहुषु बहुवचनमिति MahāBh. i. 95. 24 (*on* i. 1. 38); iii. 365. 18 (*on* viii. 1. 4); अनुजाः पुनरतिबहवः DaśKuC. 67. 19; मृदुभिर्न चातिबहुभिः केशैः सुखभाग् नरेन्द्रो वा BṛSaṁ. 68. 81; BrahmSphuSi. 11. 56; NyāyMañ. i. 118. 4; Sphuṭā. i. 5. 20 (*on* 1. 1); DeviCatuSt. 50; NalaCam. 5. 14 (9); TilaMañ. 409. 10; TattvVai. 137. 24 (*on* 3. 15); VyaktiVi. 82. 1; AnekāK. 933; SaṁgiRa. i. 275. 4 (1(8). 2); MayūMāli. 25. 17 (*on* i. 3. 3); ये बहुतराः ... अतिबहवः भेदाः ते आत्मा यस्य तादृशम् Bhāsk. i. 212. 16 (*on* i. 5. 4); ii. 97. 5 (*on* ii. 3. 4); EI. i. 64. 1.

**अतिबहुकालत्व** (atibahukāla-tva) *n.* the state of being a very long time पर्यंशे एवातिबहुकालत्वाच्छङ्कते। न चेति BālamBha. iii. 141. 31 (*on* 3. 250)

**अतिबहुक्रुक्रुटि** (atibahu-krukruṭi) *f.* extremely lude (gesture) अहमेनम् ... अतिबहुक्रुक्रुटिचेष्टितं वक्रोदवृत्तमुदन्तजातं पृच्छामि YaśasCam. ii. 347. 19.

**अतिबहुगुण** (atibahu-guṇa) *adj.* possessing numerous qualities एतच्चातिबहुगुणज्येष्ठातिहीनगुणकनिष्ठविषयम् ManvaVi. 1172. 17 (*on* 9. 114)

**अतिबहुग्रहण** (atibahu-grahaṇa) *n.* levying very heavy (taxes) करशुल्कादेरग्रहणमात्मनो मूलच्छेदः, अतिबहुग्रहणं परेषाम् ManuBh. ii. 41. 10 (*on* 7. 139)

**अतिबहुज्ञ** (atibahu-jña) *adj.* knowing very much अतिबहुज्ञोऽपि ... तृष्णया बध्यते जन्तुः YogVā. iv. 27. 32.

**अतिबहुतर** (atibahu-tara) *adj.* a great many, very many अतिबहुतरदोषा...हस्तिनी (नारी) RatiRaha. 3. 30; TattvSaṁkhyāṬ. 51. 11.

**अतिबहुता** (atibahu-tā) *f.* the state of being very numerous तत्सम्भूतास्त्वतिबहुतया सद्यशोऽपत्यसङ्ख्यानैषेऽप्यस्मिन् जगति न मनुः स्थानयोगाद्विवृद्धिः Gurvā. 170.

**अतिबहुत्व** (atibahu-tva) *n.* i the state of being very numerous प्रमाणकालभावजानां संप्रयोगाणामेकैकस्य नवविधत्वाच्चेषां व्यतिकरे सुरतसंख्या न शक्यते कर्तुम्। अतिबहुत्वात् KāmSū. 88. 17 (2. 1); AvantiKa. 11. 1; AṣṭāSaṁ. i. 138. 3 (1. 27); दोषाणामतिबहुत्वेन कांश्चिदुक्त्वा ... उपरन्तव्यम् NyāySu. (Ja.) 227B. 2 (*on* i. 4. 6); ii the state of being very great or large उच्चराशौ विलोमे च बलं नान्यैरिहेष्यते। कालस्यातिबहुत्वाच्च तस्मात्स्वोच्चेऽतिवक्रिते Sārā. 5. 14; SmṛtiCan. iv. 625. 2; GoviBh. 257. 3 (*on* iii. 3. 54)

**अतिबहुदोष** (atibahu-doṣa) *adj.* having a great many faults अतिबहुदोषमत्र प्रदेशे चिरावस्थानम् TilaMañ. 281. 15.

**अतिबहुधन** (atibahu-dhana) *n.* very abundant wealth स एवातिबहुधनं ददातीति नोपेक्षेत (राजा) ManuBh. ii. 216. 11 (*on* 8. 347); SmṛtiCan. iii. 215. 7.

**अतिबहुधा** (atibahu-dhā) *adv.* in a great many ways जनः करोत्यतिबहुधानुचेष्टितम् PadmP. (Ra.) 73. 180.

**अतिबहुपादक** (atibahupāda-ka) *adj.* (an incision) with many wedges न काकपदकं कुर्यान्न चातिबहुपादकम्। तत्र शस्त्रपदं कुर्यात् Hastyāyur. 383. 19 (3. 4)

**अतिबहुप्रज** (atibahu-praja) *adj.* [*f.* -ā] having many children तन्मदो नामातिबहुप्रजः ... मीनाधिपतिरासीत् ViṣṇuP. iv. 2. 70; प्रजाः ... अतिबहुप्रजाश्शीतवातातपवर्षसहाश्च भविष्यन्ति ViṣṇuP. iv. 24. 96.

**अतिबहुप्रलाप** (atibahu-pralāpa) *adj.* very garrulous or talkative मनुष्याः शीतद्विषश्चलधृतिस्तृतिबुद्धिचेष्टासौहार्ददृष्टिगतयोऽतिबहुप्रलापाः BhāvPra. (Bhā.) 4. 61.

**अतिबहुबालक** (atibahu-bālaka) *adv.* having too many children स दरिद्रश्च मूर्खश्च वृत्यभावेन दुःखितः। पूर्वदुष्कृतभोगाय जातोऽतिबहुबालकः KathāSaSāg. vi. 4. 93.

**अतिबहुभुज्** (atibahu-bhuj) *adj.* eating very much, gluttonous (नारी) अतिबहुभुक्...पिशाचसत्वा RatiRaha. 4. 17; SārṅgaPa. 3119; *m.* name of a serpent नागाः कश्मीरायां कृतालयाः ... अतिबहुभुग् ... नागः NīlaP. 902.

**अतिबहुमत्सर** (atibahu-matsara) *adj.* extremely envious or jealous अध्यास्ते हृदयमकृत्रिमप्रियाणां कान्तानामतिबहुमत्सरो जनः HarVi. 17. 75.

**अतिबहुमान्या** (atibahu-mānyā) *adj.* (*f.*) extremely respectable यस्तु नार्याः प्रियो भवति तस्य नातिबहुमान्या प्रिया भवति DhūrtaViSaṁ. 16. 1.

**अतिबहुरूप** (atibahu-rūpa) *adj.* having very many forms अमितोऽतिबहुरूपः ... परादिः TattvPrakā. 123B. 9 (*on* ii. 3. 48)

**अतिबहुल** (ati-bahula) *adj.* i abundant, plentiful, very much अतिबहुलतिमिरपटलान्धकारः कुसुमरहितः केशपाशः Kād. 60. 20; चिन्तयित्वा चातिबहुलदुःखतां स्नेहस्य ... स्थाणुमाश्रिता Kād. 172. 4; पचेद् घृतेऽतिबहुले सैवा स्वाच्छकृरोदरी BhojanKu. 44. 1; पर्यन्तेष्वतिबहुलं स्वल्पं मध्ये तमस्तमोऽन्याख्ये। सस्यानामीतिभयम् BṛSaṁ. 5. 52; कथमतिबहुलमीदृशं फलम् BālamBha. ii. 86. 24 (*on* 2. 73–75); (राज्यलक्ष्मीः) मदनफलप्रयुक्तिरिव मुक्ताहारमतिबहुलहृदयखेदमुद्वमयति YaśasCam. i. 235. 2; नैवातिबहुलात्यल्पमार्तवं शुद्धमादिशेत् RugVi. 61. 6; ii good many, great many केशैर्न चातिबहुलैर्मृदुभिः पार्थिवो भवेत् BhaviP. 69B. 22 (*on* i. 27. 27); अतिबहुलप्रयोगाभावस्य तत्र विवक्षितत्वात् NyāySu. (Ja.) 186A. 6 (*on* i. 4. 6); अतिबहुलोऽयं पदार्थप्रपञ्चः NyāySu. (Ja.) 361A. 4 (*on* ii. 2. 6); न हि बलदेवयुधिष्ठिरादीनामतिबहुलतीर्थयात्रायां किंचिदेक मुख्यमासीदित्यत्र साधकमुपलभामहे ViraMi. (Tīrtha.) 326. 13; अहंमदशाहधरणीसार्वभौमेन ... सन्ततमतिबहुलदानप्रीणिताश्रिताल्मिता प्रेषितानि ... उपायनानि ĀnandRa. 8. 31 (3)

**अतिबहुलत्व** (atibahula-tva) *n.* great abundance अनयोश्चप्रेक्षानिमित्तं च तमसोऽतिबहुलत्वम् ... अधःसंयोगश्च यथासङ्ख्यम् SāhiDa. 544. 2.

**अतिबहुलाकृति** (atibahulākṛti) *adj.* having great many forms जना यतन्ते स्वकल्पकेऽतिबहुलाकृतौ YogVā. v. 49. 13.

**अतिबहुवक्त्र** (atibahu-vaktra) *adj.* speaking too much, very talkative, garrulous हितवक्ता मितवक्ता संस्कृतवक्ता न चातिबहुवक्ता। अर्थाद्विपुद्य वक्ता वक्तार्यं सर्वबस्तूनाम् Tantrākhyā. 98. 21.

**अतिबहुविस्तृत** (atibahu-vistṛta) *adj.* very large, very extensive कृपयः ... झम्पां ददुः शीतजलकुम्भेऽतिबहुविस्तृते RauhiC. 430.

**अतिबहुशस्** atibahu-śas) *adv.* very often, a good many times यदतिबहुशः पृष्टा किंचिद्ब्रवीति ... वधूः Kāvyālaṅ. (Ru.) 7. 33.

**अतिबहूदक** (atibahūdaka) *n.* very great quantity of water यथा न सर्वोदकद्धानिस्तथा खन्यः कार्यः। यथा च नातिबहूदकक्षितिस्तथा बन्ध्यः कार्यः SmṛtiCan. iv. 556. 8.

**अतिबह्वर्थ** (atibahv-artha) *m.* good many meanings (of *prakaraṇas*) स्थानस्यातिबह्वर्थकथनेनाभिप्रायतोऽर्थानुमितिजनकस्य ततोऽपि दौर्बल्यम् TattvPrakā. 52A. 12 (*on* i. 3. 24)

**अतिबह्वशन** (atibahv-aśana) *n.* too much eating, gluttony ज्ञेया विकारा जन्तूनामतिबह्वशनोद्भवाः KāśyaS. 258A. 28.

**अतिबाढ** (ati-bāḍha) *adj.* very firm, very strong, very well साधीयानतिबाढः स्यात् DharK. 2726; ViśvaPra. 179. 60; AnekāSaṁ. 3. 753; MediK. 190. 66.

**अतिबाढप्ररूढ** (atibāḍha-prarūḍha) *adj.* excessively grown अतिबाढप्ररूढदंष्ट्राङ्कुराग्रलग्नघनसंघातनिर्जितवराहवेषविष्णुसमुद्धृतधराशोभाभिः ... महायोगिनीभिरापूर्यमाणपरिसरम् ... देवतायतनम् YaśasCam. i. 46. 4.

**अतिबाध्** (ati-bādh-) I. Ā. to trouble or oppress exceedingly, to affect very much राजा–प्रियंवदे कच्चित्सखीं वो नातिबाधते शरीरतापः Śāk. 3. 21(5); स तापः ...। कादीविरहजन्मात्र यथा मामतिबाधते SkandP. iv. 52. 10; उवाच चार्यपुत्रेह धर्मो मामतिबाधते PariPar. 2. 516; (*pass.*) नूनां मध्ये स धन्यो वै दुष्कृतैर्नातिबाध्यते PauṣkS. 36. 65.

**अतिबाधतस्** (atibādha-tas) *adv.* because of being strongly invalidated or absolutely set aside (by better proofs) सिद्धैकवाक्यत्वबाधैर्विध्यस्यातिबाधतः। अर्कवद् ब्रह्मपक्षेऽपि कल्पोऽयमनुनातनः SiddhāTaVi. 8. 21.

**अतिबाल** (ati-bāla) *adj.* [*f.* ā] A very young, who is in early childhood (कन्यां) नातिबालां वहन्त्यन्ये अनित्यत्वात् प्रजार्थिनः। वहन्ति कर्मिणस्त्वामन्तःशुद्धिव्यपेक्षया MahāBhā. xiii. 305*; अतिबालां (स्त्रियं) वर्जयेत् CaraS. iv. 8. 6; अतिबालो ह्यसंपूर्णसर्वधातुः स्त्रियं व्रजन्। उपशुष्येत CaraS. vi. 2(4). 41 (1922 Ed.); AṣṭāSaṁ. i. 60. 17 (1. 9); स बालाभिरतिबाला कन्येत्यपदेशमुक्त्वा सुपूजितो विसर्जितः Avimā. 1. 9(9); इयमतिबाला व्यक्तमाढेस्वरेण निद्रान्यान्ने मनोरथम् DaśKuC. 62. 20; अतिबालस्य तु शिरोधात्री सर्वं समाचरेत् KāśyaS. 135A. 24; स्तावणपाटनदहनसीवनैषणसाहसादीन्यतिबालेषु न कुर्यात् KāśyaS. 124A. 40; रल्लानातिबालस्त्रिराङ्गनानां मर्यादया पश्यति कार्यजातम् VarāṅgaC. 11. 52; नातिह्रस्वः नातिवृद्धो नातिबालः (ऋत्विग् ब्राह्मणः) ManuBh. ii. 24. 28 (*on* 7. 78); अत एव मदालसापत्यान्यतिबालानि मातुरुपदेशादेव विवेकख्यातिमन्ति मुक्तानि बभूवुः

SāṁkhyaTaKau. 431. 1 (*on* 50); अतिबालं च वृद्धं तु वर्जयेत् ··· बलीवर्दम् MānaSā. 5. 22; अतिबाल: स्तनं पीत्वा ··· आनन्दैकस्वभावभाक् PañcDa. 11. 50.

**अतिबालक** (atibāla-ka) *m.* very small child, very young boy अतिबालका: । निक्षिप्ता अपि तोयेषु नाम्रियन्त SkandP. iii(1). 22. 59; व्याघ्रसिंहादिभिर्हिंस्रैर्गृहीतो नातिबालक: DevīBhāP. vi. 20. 2; मम हृदयमन्यथा करोतीति मनसा वितर्क्यातिबालकं ग्रहीतुमारभत PadmP. iv. 112. 12(17]; *adj.* childish, puerile [Apte]

**अतिबालता** (atibāla-tā) *f.* i the state of being very young, extreme youthfulness याति सुचिरमतिबालतया धृतिमेक एव परिवारितो जडै:( लै: ) S'iśuVa. 15. 10; ii extreme ignorance or foolishness, S'iśuVa. 15. 10.

**अतिबालत्व** (atibāla-tva) *n.* the state of being a very small child (boy) न वदाम्यतिबालत्वाद्वाच्यमानो निरन्तरम् ĀdiP. 19. 58.

**अतिबाला** (ati-bālā) *f.* cow which is two years old वर्षमात्रा तु बाला स्यादतिबाला द्विवार्षिकी [Apte]

**अतिबालिशदश** (atibāliśa-daśa) *adj.* in a very young age अतिबालिशदशमपि श्लाघनीयशीलै: ··· वरीयसामपि ··· आचरिताश्चर्यचित्तचमत्कारं (मुनिकुमारकयुगलम्) YaśasCam. i. 137. 5.

**अतिबालिश्य** (ati-bāliśya) *n.* extreme childishness मयातिबालिश्यादिदमाचरितं विभो MahāP. 41. 32.

**अतिबाल्य** (ati-bālya) *n.* early childhood अतिबाल्ये दन्तोत्पादवेदनया पीडिता न सम्यक्संपूर्णधातुबला भवन्ति AṣṭāSaṁ. ii. 179. 13 (6. 2); अतिबाल्य एव कृतसंन्यसन: ··· असौ तदनेन सम्प्रति जयेयमहम् S'aṅkaDigVi.(Mā.) 9. 67; संस्कारस्योपनयनादेरतिबाल्यकृतत्वादिना विशेषात् ManvaVi. 1278. 28 (*on* 10. 3)

**अतिबाल्यदशा** (atibālya-daśā) *f.* the state of early childhood अत्रातिबाल्यदशायां प्रवृत्तस्य स्तनचिन्तनस्य ··· तारुण्येऽप्याविर्भाव: AlaṅkāRa. 85(17); अतिबाल्यदशाया बालक्रीडनके प्रवर्तयतामेव पित्रादीनां तस्यैवाध्ययनाधिकारे तादृशक्रीडायां ताडनकर्तृत्वदर्शनात् SetuBa. 2. 14.

**अतिबाष्पायित** (ati-bāṣpāyita) *adj.* profusely tearful तत्किमिति बाष्पायितं (v. l. किमित्यतिबाष्पायितं) भगवता MahāviC. 2. 44(2)

**अतिबाहु** (ati-bāhu) *adj.* having long arms वेनम् ··· अतिबाहुम् ··· ददृशुस्ते महात्मान: PadmP. ii. 27. 40½; *m.* i name of a Gandharva अतिबाहुश्च विख्यातौ च हहाहुहू । तुम्बुरुश्चेति चत्वार: स्मृता गन्धर्वसत्तमा: MahāBhā. i. 59. 49; ii name of one of the ten sons of the first (i. e. Svāyambhuva) Manu अग्नीध्रश्चातिबाहुश्च ···। मनो: स्वायम्भुवस्यैते दश पुत्रा महौजस: VāyuP. i. 31. 17; ViṣṇuDhaP. i. 176. 5; iii name of one of the seven sages of the fourteenth (i. e. Bhautya) Manvantara अग्नीध्र: काश्यपश्चैव ···। भार्गवो ह्यतिबाहुश्च ··· अन्त्या: सप्तर्षयश्च ते HariVaṁ. App. 1(51); ViṣṇuDhaP. i. 189. 3.

**अतिबाहुल्य** (ati-bāhulya) *n.* A great abundance, great density तमसामतिबाहुल्याद् घनत्वात् मूर्तसमुचितं सूचिभेद्यत्वमुपचरितम् VakroJī. 101. 13; B excess, profusion भेषजस्यातिबाहुल्यात् SiddhYo. 1. 49; रजसश्चातिबाहुल्यात वासस्ते रक्ततां ययौ Rasā. 7. 61; RasRaSa. 3. 6.

**अतिबाह्य** (ati-bāhya) *adj.* very external यो हि संभाव्यमानसंसर्गैराधारैरपि न भेत्तुं पार्यते स दूरवर्तिभिरलब्धसम्बन्धैरतिबाह्यै: कथं भिद्येत NyāyMañ. i. 278. 15.

**अतिबिभ्यती** (ati-bibhyatī) *adj.* (*f.*) much afraid तत्पत्नी रतिलालसम् । पतिं निवारयामास वैधव्याददतिबिभ्यती SkandP. iii(3). 2. 53; S'ivaP. iv. 10. 26 (360A. 4)

**अतिबीज** (ati-bīja) *m.* the tree *Mimosa arabica* [PW]

**अतिबीभत्स** (ati-bībhatsa) *adj.* extremely hideous, very disgusting, extremely loathsome (act etc.) बीभत्सुरतिबीभत्सं कर्मेदमकरोत्कथम् MahāBhā. xi. 24. 13; कष्टमतिबीभत्समाचरितं दैवेन VeṇīSaṁ. 4. 358; (appearance etc.) स यं यं देशमभिजगाम ततस्तत एवैनमतिबीभत्सविकृततरदर्शनं मानुष इत्यश्रद्धेयरूपम् ··· प्रवासयामासु: JātaMā. 161. 4 (24. 35); दृष्ट्वा तदतिबीभत्सं (अन्नम्) SamaMā. 4. 102; (state) हा प्रिये मालति कष्टमतिबीभत्समापन्नासि MālaMā. 9. 343; धिक् अतिबीभत्समेतत् CaṇḍaKau. 4. 20(1); (person) तं तथाप्यतिबीभत्सं सर्वश्रेष्ठममन्यत MārkP. 16. 18; *m~n.* name of a hell स: ··· । अतिबीभत्सनरके पाल्यते यमकिङ्करै: SkandP. ii(1). 12. 28 = iii(1). 30. 40.

**अतिबीभत्सकर्मकृत्** (atibībhatsakarma-kṛt) *adj.* performer of a very dreadful act बीभत्सुरतिबीभत्सकर्मकृद्भैरिदारणे PāṇḍaC. 11. 281.

**अतिबीभत्सकर्मन्** (atibībhatsa-karman) *adj.* who has done an extremely hideous act अतिबीभत्सकर्मा नृशंसोऽसि संवृत्त: UttaRāC. 1. 44(3)

**अतिबीभत्सित** (ati-bībhatsita) *adj.* extremely loathsome, very nauseating ते···तदेवातिबीभत्सितमश्नन्ति BhāgP. v. 26. 23.

**अतिबुद्ध** (ati-buddha) *m.* extremely wise, very learned मुग्धबुद्धातिबुद्धानां लोके सिद्धा सुखात्मता PañcDa. 11. 53.

**अतिबुद्धिमत्** (atibuddhi-ma(n)t) *adj.* highly intelligent सोऽतिबुद्धिमतां श्रेष्ठो विष्णु: DevīBhāP. v. 7. 54; पुत्रेभ्यो योसोभाख्योऽतिबुद्धिमान् KathāKau. 9. 3.

**अतिबुद्धिमनस्** (ati-buddhimanas) *adj.* which is beyond intellect and mind शब्दशक्ति: । शक्या ग्रहीतुमतिबुद्धिमनस्यपीति SaṁkṣeS'ā. 1. 358 (i. 264. 24)

**अतिबुद्धीन्द्रियात्मन्** (ati-buddhīndriyātman) *adj.* whose nature is beyond intellect and sense-perceptions अतिबुद्धीन्द्रियात्मानं तं प्रपद्ये प्रजापतिम् MahāBhā. xii. 47. 21.

**अतिबुभुक्ष** (ati-bubhukṣa-) [*desid.*] to wish to eat too much अन्नमन्नाभिलाषेऽपि दत्तं नातिबुभुक्षते AṣṭāSaṁ. ii. 189. 18 (6. 3); AṣṭāHṛ. vi. 3. 39.

**अतिबुभुक्षत्** (ati-bubhukṣat) *adj.* very hungry पिपासिताय श्रान्ताय भ्रान्तायातिबुभुक्षते । तस्मै सत्कृत्य दातव्यम् VāyuP. ii. 17. 19; BrahmāṇḍP. ii. 15. 19.

**अतिबुभुक्षा** (ati-bubhukṣā) *f.* great hunger क्रन्दतोऽतिबुभुक्षया। लब्धं कथंचिदन्नादि पुत्रस्य न ददौ पिता TriṣaS'aPuC. iii. 1. 28; अतिबुभुक्षया पीडिता ··· मर्कटी तं भौतिकं कर्णनासिकादिषु विलूरयामास Bharaṭ. 7A. 1; अतिबुभुक्षयात्मपीडा न कार्येत्यर्थ: VīraMi. (Āhnika.) 477. 6.

**अतिबुभुक्षित** (ati-bubhukṣita) *adj.* very hungry सुशील: ··· द्विजं शान्तं पप्रच्छातिबुभुक्षित: DevīBhāP. iii. 27. 35; ग्लानिर्मुखस्यातिबुभुक्षितस्य KāśyaS. 202B. 43; (अहम्) अतिबुभुक्षित: क्षेत्रं शालेयमासाद्य ··· अधिप्राप्तो महतीं पामरकरग्रहापदम् UdaySuKa. 37. 23; बालक: पाणिं चिक्षेपातिबुभुक्षित: PariPar. 8. 292; जगामान्वभयं सोऽपि तस्करोऽतिबुभुक्षित: RauhiC. 2446); अतिबुभुक्षितैर्भौतिकै: सर्वतो भक्ष्ये विलोक्यमाने एकम्···धान्यक्षेत्रम् ··· दृष्टम् Bharaṭ. 27B. 8.

**अतिबुभुक्षुता** (atibubhukṣu-tā) *f.* excessive desire to eat, great appetite रसानपि···षट् सेवमानस्य मे तेष्वेवातिबुभुक्षुता ··· जायते Jīvān. 329. 8.

**अतिबुभूषत्** (ati-bubhūṣat) *adj.* intending to surpass ऐन्द्रमत्यन्या: प्रजा बुभूषन् ĀśvaS'S. II. iv. 3. 12; II. v. 6. 8.

**अतिबृंहण** (ati-bṛṁhaṇa) *adj.* greatly nourishing श्वभिर्हतं पीतरक्तं नातिबृंहणमुच्यते KāśyaS. 363A. 19; यन्मांसं स्वाग्निना पक्वं तन्मेद इति कथ्यते। तदतीव गुरु स्निग्धं बलकार्यतिबृंहणम् BhāvPra.(Bhā.) 3. 150; *n.* excessive nourishment अथ खल्वतिबृंहणात् ··· वमनविरेचनौपधानां दुर्योगातियोगावुत्पद्येते KāśyaS. 156A. 33; आस्यास्वप्नसुखाजि(?जी)र्णदिवास्वप्नातिबृंहणै: (श्लेष्मा प्रकुप्यति) AṣṭāHṛ. iii. 1. 18.

**अतिबृंहणरोग** (atibṛṁhaṇa-roga) *m.* disease of excessive fattiness मदनम् ···। सपाठारग्वधं पीतमतिबृंहणरोगजित् AṣṭāSaṁ. i. 126. 6 (1. 24)

**अतिबृंहित** (ati-bṛṁhita) *n.* over-nourishment रूपं तैरेव च ज्ञेयमतिबृंहितलङ्घिते AṣṭāHṛ. i. 14. 19; AṣṭāSaṁ. i. 125. 10 (1. 24)

**अतिबृह्** (ati-bṛh-) VI. P. to push through, to increase तां खे रथस्यात्यबृहत्। सा गोधाभवत् JaimiBr. 1. 221; वृषभ: प्रजां वर्षतीति वा। अतिबृहति रेत इति वा Nir. 9. 22 (165. 14)

**अतिबृहत्** (ati-bṛhat) *adj.* very big, excessively large (गाव:) श्यावातिदीर्घजिह्वा गुल्फैरतितनुभिरतिबृहद्भिर्वा BṛSaṁ. 61. 4.

**अतिबृहत्तर** (ati-bṛhattara) *adj.* very big, excessively large स्वतपोवृक्षो मनोरथफलैरलम् । शिवभक्त्यम्बुना सिक्त: फलितोऽतिबृहत्तरै: SkandP. iv. 52. 29.

**अतिबृहत्प्रमाण** (atibṛhat-pramāṇa) *adj.* of a very big size सूक्ष्मातिसूक्ष्मातिबृहत्प्रमाणगरीयसामप्यतिगौरवात्मन् ।··· भगवन् प्रसीद ViṣṇuP. v. 1. 56.

**अतिबृहत्फल** (atibṛhat-phala) *m.* *Artecarpus integripholia* पनश: कण्टकिफल: पलसोऽतिबृहत्फल: BhāvPra.(Bhā.) 6(7). 25; BhāvPraNi. 91. 25.

**अतिबृहत्स्कन्ध** (atibṛhat-skandha) *adj.* of a very huge or large stem or trunk (द्रुमान् वर्जयेत्) बुभ्रतोऽतिबृहत्स्कन्धान् SamarāSū. 16. 14.

**अतिबोधिसत्त्व** (ati-bodhisattva) *adj.* surpassing a Bodhisattva वन्द्या त्वमेव जगत: स्पृहणीयसिद्धिरेवंविधैर्विलसितैरतिबोधिसत्त्वै: MālaMā. 10. 151.

**अतिब्रह्मचर्य** (ati-brahmacarya) *n.* excessive celibacy तत्रातिमैथुनादतिब्रह्मचर्याद्वा ··· मेढ्रमागम्य प्रकुपिता दोषा: SuśruS. ii. 12. 7; *adj.* one who has violated the student life, one who cohabits with women [Apte]

**अतिब्रह्मचारिणी** (ati-brahmacāriṇī) *adj.* (a woman) leading an excessively celibate life तथातिब्रह्मचारिणीम् ··· नारीमत्यर्थमुपसेवमानस्य ··· मेढ्रमागम्य प्रकुपिता दोषा: SuśruS. ii. 12. 7.

**अतिब्रह्मन्** (ati-brahman) *m.* name of a king [PW]

**अतिब्राह्म** (ati-brāhma) *n.* name of a mystic formula अखं सताक्षरं परम् । अतिब्राह्मं समुद्दिष्टमस्य स्वरविलोमजन् AhirbuS. 57. 27.

**अतिब्राह्मण** (ati-brāhmaṇa) *m.* excellent Brahmin अतिब्राह्मणः अतिवृषलः MahāBh. i. 416. 10 (*on* ii. 2. 18)

**अतिब्रुवत्** (ati-bruvat) *adj.* **i** arguing beyond the limit सावयवाः परमाणव इत्यतिब्रुवता कार्यविशेषः परमाणुरित्युक्तम् TātpaT.(Vā.) 650. 19 (*on* iv. 2. 24); **ii** abusing, insulting एवं शिवेऽतिब्रुवति ब्रह्मणः पञ्चमं शिरः ।··· प्रोवाच BbaviP. 51B. 18 (i. 22. 13); **iii** crying aloud धावन्तोऽतिब्रुवन्तश्च··· गजाश्वरथमर्दिताः । निपेतुः प्रधने वीराः KalkiP. iii. 8. 30.

**अतिब्रू** (ati-brū-) II. U. **i** to insult, to abuse, to speak arrogantly, to dispute महारथानधिक्षिपन् (v. l. अतिब्रुवन् MW.) मूढ न लज्जसे कथम् MahāBhā. iii. 252. 2; (वानराः) परस्परं केचिदतिब्रुवन्ते Rāmā. v. 59. 15; **ii** to speak too much न वृद्धान्न गुरून्न गणान्न नृपान् वाधिक्षिपेत्, न चातिब्रूयात् CaraS. i. 8. 25 (1941 Ed.)

**¹अतिभक्त** (ati-bhakta) *adj.* divided, shared अतिभक्तं त्वया सार्धं राज्यं यच्चापि मे वसु Rāmā. vii. 11. 33.

**²अतिभक्त** (ati-bhakta) *adj.* extremely devoted, staunch devotee येनातिभक्तः संसारादुत्तारयति संकटात् PauṣkS. 31. 154; 36. 22; भृत्येषु चातिभक्तेषु मित्रवर्गे तथा मृते । भद्रे दुःखमपारं मे भविष्यति MārkP. 110. 16; अतिभक्तानां नादेयं विद्यते मम SūrySi. 12. 11; प्रणेमुरतिभक्ताश्च गोपाः BrahmVaiP. ii. 11. 28; अतिभक्तस्य गुह्यस्य कुलज्ञानं प्रकाशते KulārT. 2. 33; दर्शितं तेन ···। मुद्गलस्यातिभक्तस्य ··· आश्रमम् GaṇeP. i. 21. 7; विष्णुना मेऽतिभक्तेन यदिदानीमुदीरितम् S'ivaP. ii(2). 19. 43 (91B. 4); सुकुमारोऽतिभक्तो मे भरतः AdhyāRā. vi. 13. 43; कुलीनोऽस्यतिभक्तोऽसि PariPar. 7. 92.

**अतिभक्तत्व** (atibhakta-tva) *n.* great or extreme devotion कृतार्थमतिभक्तत्वादमुं मन्ये तदा गुरुम् PauṣkS. 30. 200.

**अतिभक्ति** (ati-bhakti) *f.* great or extreme devotion अतिश(v. l. भ)क्त्या पितॄनर्चन्देवांश्च प्रयतः सदा MahāBhā. i. 70. 30; अतिभक्त्या च मासमेकं शृणोति यः BrahmVaiP. i. 19. 75; (महामुनिः) अतिभक्त्या तु तीर्थस्य प्रवणीकृतमानसः VāmaP. 43. 14; भक्तो न गणयामीदमतिभक्तिश्च नेष्यते MahāP. 1. 167; अतिभक्तिं तु संचिन्त्य नृपस्य जगदीश्वरं BrahmP. 59. 13; आराध्यतेऽतिभक्त्येति त्वया ब्रह्मन् विमर्शितम् PadmP. iv. 71. 100; (भूशुण्डः) अतिभक्त्या मृत्युलोके सादृश्यं प्रापितो मम GaṇeP. ii. 16. 13; विलोक्य मिश्रं शिवयोः स्वरूपं सर्पाधिराजो मिलितोऽतिभक्त्या RājTa.(Prā.) 2; न द्वेषो नातिभक्तिः प्रियेष्वपि BhaktiRaSi. iii. 1. 19; अतिभक्तिमेव करिणस्त्वमग्रहीः YātrāPra. 3. 231; अतिभक्तिमधिगम्य विभीषणस्य ।···अभ्यषेचयत् MahāN. 6. 73; श्रद्धातिभक्तौ KośaKaTa. 2. 6012; *m.* प्रसादितात्तथा देवैर्गौतमादतिभक्तिना Dhūrtā. 361; *adj.* full of great devotion or attachment (तया) इक्षुलतामेकां प्रार्थितेनातिभक्तिना ।··· समर्प्यत PrabhāC. 147. 8.

**अतिभक्तितस्** (atibhakti-tas) *adv.* with great devotion, out of excessive faith श्राद्धस्य मन्त्राः श्रद्धा च उपयोज्यातिभक्तितः MatsyaP. 19. 4; (कान्ताम्) मांसादिभक्ष्यभोज्याद्यैस्तोषयेद् देवि (v. l. अति)भक्तितः KulārT. 10. 43; जिनं नत्वातिभक्तितः BṛKathāK. 93. 7; करोतु पूजामतिभक्तितोऽर्हताम् SubhāRaSaṁ. 143; सोऽपि सततं माम् उपास्तेऽतिभक्तितः DeviBhāP. vi. 22. 56; दृष्ट्वा ननाम भरतः साष्टाङ्गमतिभक्तितः AdhyāRā. ii. 8. 42; आहूय गन्धमाल्याद्यैर्विधिना चातिभक्तितः CaturCin. i(1). 613. 13; अतिभक्तितः । विचक्रे पञ्चधात्मानं द्वितीयस्वर्गवासवः TriṣaS'aPuC. ii. 2. 482; किरणवेगस्तं नमश्चक्रेऽतिभक्तितः PārśvC. 2. 40; एताभ्यां वन्दितो दूरं वीक्षितश्चातिभक्तितः SamarāSaṁ. 8. 313; श्राद्धाः ··· प्रणेमुरतिभक्तितः PrabhāC. 31. 21; श्राद्धं कृत्वातिभक्तितः MahāNirvāT. 10. 92.

**अतिभक्तिता** (atibhakti-tā) *f.* nature of having great affection or devotion अतिभक्तितया मां त्वं मोक्षेऽपि न जिहाससि BṛĀraUBhVā. ii. 4. 67.

**अतिभक्तितोषित** (atibhakti-toṣita) *adj.* propitiated with great devotion अतिभक्तितोषितहरलब्धवरः (वीरसेनः) NalaCam. 4. 9 (41)

**अतिभक्तिप्रकाशन** (atibhakti-prakāśana) *n.* name of Bālakṛṣṇa अतिभक्तिप्रकाशनः (इति नामसहस्रं विष्णोर्बालकत्वमुपेयुषः) PañcaRā.(Nā.) iv. 8. 12.

**अतिभक्तिप्रभाव** (atibhakti-prabhāva) *m.* power of great devotion अतिभक्तिप्रभावाच्च वाञ्छितं संप्रयच्छति PauṣkS. 38. 58.

**अतिभक्तिभाज्** (atibhakti-bhāj) *adj.* greatly devoted निमेषमात्रमपि यो ह्यतिमुक्तेऽतिभक्तिभाक् ।··· तेन तप्तं महातपः SkandP. iv. 25. 60.

**अतिभक्तिमत्** (atibhakti-ma(n)t) *adj.* having deep devotion शान्तचित्तोऽतिभक्तिमान् ।··· प्रविशेच्छनैः KulārT. 12. 83; अतिभक्तिमानसावनुपलब्धकुमारकुशलवृत्तान्तो न जाने किं व्यवस्यति TilaMañ. 195. 13; राजा संभृतसंभारः सपत्नीकोऽतिभक्तिमान् GaṇeP. i. 75. 4; वैश्योऽतिभक्तिमान् । जुहावासौ निजं मांसम् DeviBhāP. v. 35. 28.



**अतिभक्तिवश** (atibhakti-vaśa) *m.* [Abl.] on account of deep devotion उपदेशमेनमतिभक्तिवशादुपशृण्वतां शमवतां सविधे S'ivLī. 17. 43.

**अतिभक्षण** (ati-bhakṣaṇa) *n.* over-eating लवणातिभक्षणाद्वा ··· शोफाः प्रादुर्भवन्ति CaraS. i. 18. 5 (1922 Ed.); शुण्ठ(? ण्ठ्य)म्भसोऽनुपानं स्याद्राजामतिभक्षणे BhāvPra.(Bhā.) 6 (7). 14.

**अतिभक्ष्यचारिन्** (atibhakṣyacār-in) *adj.* wandering for more food कपालपाणयः पिशाचयक्षराक्षसाः । वदन्ति देहि ··· ममातिभक्ष्यचारिणः MatsyaP. 153. 144.

**अतिभग्न** (ati-bhagna) *adj.* utterly shattered नातिभग्नं पीडयेत् NitiVā. 30. 66.

**अतिभङ्ग** (ati-bhaṅga) *m.* total destruction तृष्णास्रोतोवि(v. l. ऽति)भङ्गः ··· श्रेयसामेष पन्थाः SatTrayi. 3; *n.* extremely bent pose (of an idol) अतिभङ्गमिहोच्यते । पार्ष्ण्यन्तरं शराङ्गुल्यं तत्पादाङ्गुष्ठयोरग्रके । तद्द्वयोर्मध्यमे विंशदङ्गुल्यं द्व्यन्तरं भवेत् । तज्जानुद्वयोर्मध्ये द्व्यन्तरं द्वादशाङ्गुलम् । ··· एवमतिभङ्गं स्यात् MānaSā. 67. 59; ĪśānS'iPa. ii. 43 50; *adj.* having the bent pose समभङ्गोऽतिभङ्गो वा भवेद्वृषभवाहनः ।···वामपादोऽथ कुञ्चितः ĪśānS'iPa. ii. 43. 29.

**अतिभङ्गुर** (ati-bhaṅgura) *adj.* [*f.* -ā] **i** extremely transcient or perishable (ज्ञात्वा) संपत्तिमतिभङ्गुराम् SkandP. iv. 26. 73; PadmP.(Ra.) 113. 33; (वासना) विद्युद्वदतिभङ्गुरा YogVā. iii. 113. 24; स च विशिष्टादिरस्थिरः क्षणः प्रकृतेरेवातिभङ्गुरः YogSā. 74. 13 (4); **ii** extremely tremulous or wavy (सद्रापीमपश्यत्) भ्रूक्षेपानिव कुर्वाणां तरङ्गैरतिभङ्गुरैः PadmP.(Ra.) 8. 94; Mugdhopa. 47.

**अतिभजनकृत्** (atibhajana-kṛt) *adj.* greatly devoted स्वान्ते योऽन्तःपुरीयत्यतिभजनकृतस्तं कुमारीयति द्राक् । तं भजामि CitraMi. 26. 12.

**अतिभजमान** (ati-bhajamāna) *adj.* excessively enjoying स्त्रियमतिभजमाने भवत्यवश्यं तृतीया प्रकृतिः NitiVā. 16. 5.

**अतिभणित** (ati-bhaṇita) *adj.* entreated greatly तेनातिभणितोऽप्येवं भीभो(? मो) नामुञ्चदाग्रहम् PārśvC. 2. 213.

**अतिभद्र** (ati-bhadra) *adj.* very auspicious सः ··· स्वात्मानमेषां ददाति ··· अतिभीषणोऽतिभद्रः NṛsiṁhoTāU. 7; (देव्या) न तया । ख्याति यया जनता ··· अतिभद्रकालीनतया DeviS'. 43; भीमाकारोऽप्यतिभद्रः ··· वीरभद्रः ĪśānS'iPa. ii. 12. 70; *n.* front projection (दिशास्वस्तिकसंस्थानम्) मुखेऽमुखेऽतिभद्रांशं शिरश्चायतमण्डलम् MayaMa. 24. 118; सो(? शा)लायाः पार्श्वतः कुर्यादतिभद्रद्वयम् SamarāSū. ii. 74. 6(57)

**अतिभद्रक** (atibhadra-ka) *adj.* very docile लब्धैः कूर्चैर्दीनैर्वक्त्रैर्नुनय इव शमदमरता भवन्त्यतिभद्रकाः Subhāṣi. 2405.

**अतिभद्रता** (atibhadra-tā) *f.* great nobility सौजन्यपरतन्त्रा चेयं देवानां प्रियस्यातिभद्रता HarṣaC. 40. 6.

**अतिभय** (ati-bhaya) *n.* great fear एतदौत्पातिकं ग्रामे यस्मिन्··· । तस्मिन् ··· अतिभयं महत् AVPari. 64(8). 2; 70B(21). 1; 64(2). 4; (ब्रह्मणः पञ्चमं शिरः) अपश्यत्···रौद्रमतिभयात् SkandP. v(1). 2. 68; Kād. 29. 18; S'ivāL. 32; RāmC. 16. 9; KalāVi. 7. 21; GītGo. iii. 7. 3 (comm. अतिशयितभीत्या); द्विजा व्योमाध्वगं तं च दृष्ट्वातिभयतोऽनशन् PrabhāC. 33. 17; RājTa.(S'ri.) 4. 636; CaitaCa. 183. 10(8); व्यलोकि धृष्टो मयाप्यतिभयात् PadyaVe. 407; 434; *adj.* [*f.* -ā] **1** very dreadful (वनम्···संपरिक्षिप्तम्) पिशितादैरतिभयैर्नैकोग्राकृतिभिस्तथा MahāBhā. xi. 18*(7); वैष्णव्योऽतिभयाश्चान्याः क्रूररूपा भयंकराः MahāBhā. ix. 272*(1); विमुक्तोऽतिभयात् ··· संसारसंकटात् DeviBhāP. iii. 12. 78; GītGo. iii. 7. 3; **2** full of great fear मामियं चलिता विलोक्य वृतं वधूनिचयेन । सापराधतया मयापि न वारितातिभयेन GītGo. iii. 7. 3 (Rasikapriyā मयेत्यस्य विशेषणम् । अतिक्रान्तं भयमिति वधूनिचयविशेषणं वा)

**अतिभयंकर** (ati-bhayaṅkara) *adj.* [*f.* -ā, -ī] very fierce, very terrible, very dreadful (living being) अतिभयंकरः । प्रबुद्धः सहसा पक्षी महाकायः MahāBhā. i. 20. 5; राक्षसी वा पिशाची वा यक्षी वातिभयंकरी MahāBhā. iii. App. 11(61); द्वारपालौ ददर्शातिभयंकरौ BrahmāṇḍP. ii. 32. 12; ii. 35. 27; iii. 23. 33; iii. 24. 50; (रुद्रः) अर्धनारीनरवपुः ··· अतिभयंकरः KūrmaP. 99. 1 (1. 11); VarāP. 2. 49; सा तैलाभ्यक्तितं मां च करोत्यतिभयंकरी BrahmVaiP. iv. 63. 18; द्वीपिनोऽतिभयंकराः PadmP. iv. 59. 6; दुर्निरीक्ष्यस्तदा रामो बभूवातिभयंकरः BṛDharmaP. i. 22. 48; i. 60. 64; आधारशक्तिं स ततोऽप्यतिभयंकराम् । दृष्ट्वा चकम्पे GaṇeP. ii. 52. 51; AdhyāRā. vi. 8. 26; BṛKathāMañ. 5. 116; अतिभयंकरम् राक्षसमेकमपश्यत् SiṁhāDvā. 108. 12(15); 35. 4(6); 154. 9(2); (inanimate object) परशुम् ··· जग्राहातिभयंकरम् Rāmā. vi. 1955*(2); अगा-

धातिभयंकरेषु …कूपेषु जले सुदुर्लभम् KalyāKā. 2. 23; संसारविषवृक्षः …अतिभयंकरः SaurP. 32. 44; (निमित्तानि) नाशहेतूनि … मेघा अतिभयंकराः AdbyāRā. vi. 5. 28; RāmāCam 3. 13(16); (action desire etc.) नमो भगवते चण्डप्रतापहनुमते … अतिभयंकरज्वरमाहेश्वरज्वर° … °श्रमिकापसारांश्च भेदय LāṅgU. 214. 23; संग्रामो बभूवातिभयंकरः MahāBhā. ii. 24. 25; vi. 53. 11; ix. 50. 34; Brahmāṇḍ-P. ii. 24. 80; VāmaP. 9. 31; परदाराभिलाषः … अतिभयकरः PadmP.(Ra.) 46. 123; RāmāCam. 6. 41; RāmāMañ. 117. 18; (नरकान् प्राप्य) घोरानति तीव्रवेदनापादकत्वेनातिभयंकरान् Mitā. 400. 20 (*on* 3. 206); अत्यद्भुतमतिभयंकरं नृत्यम् LalitāSaBh. 72. 12 (*on* 103); राक्षसोऽतिभयंकररूपः SiṁhāDvā. 109. 12 (30); 116. 14(20)

**अतिभयंकरम्** (ati-bhayaṅkaram) *adv.* very terribly (दानवस्य शिरः) चक्रच्छिन्नम् … ननादातिभयंकरम् MahāBhā. i. 281*.

**अतिभयचकित** (atibhaya-cakita) *adj.* [*f.* -ā] startled with great fear नीत्वा गीर्वाणबालानतिभयचकितानुच्चकैर्धावमानः … सिन्धुरास्यः PadyaVe. 9; अतिभयचकिताप्यागता केलिकुञ्जे…नताङ्गी PadyaVe. 414.

**अतिभयजनक** (atibhaya-janaka) *adj.* causing great fear लोकशिक्षार्थं यद्यपि भवतामिदमुचितमेव तथापि नोऽतिभयजनकमेतत् CaitaCa. 183. 10(8)

**अतिभयजनन** (atibhaya-janana) *adj.* causing great fear अतिभयजननम् … शबरसैन्यमद्राक्षम् Kād. 29. 18.

**अतिभयद** (atibhaya-da) *adj.* causing great fear or panic सकलामरातिभयदः क्ष्वेलः … कण्ठदेशे भृतः … शंभो S'ivāL. 32; अतिभयदेषु भयार्तम्। सानुसंधिषु पपात … कुञ्जरयूथम् RāmC. 16. 9; KalāVi. 7. 21; शस्त्रमसुना … परिकल्पितमेतदतिभयदम् MohaRāPa. 5. 63; राज्यविपर्ययोऽतिभयदः RājTa.(S'rī.) 4. 636; अतिभयदो भीषणास्यः … अघोरः S'ilpaRa. ii. 22. 189.

**अतिभयदायक** (atibhaya-dāyaka) *adj.* causing great fright भवदीयमिदं रूपं दृष्ट्वातिभयदायकम्। भयोद्विग्ना वयं सर्वे SkandP. ii(1). 38. 30.

**अतिभयप्रदा** (atibhaya-pradā) *adj.* (*f.*) causing great fear सा वीराशंसनं युद्धभूमिर्यातिभयप्रदा AmaK. 16. 67.

**अतिभयभ्रान्त** (atibhaya-bhrānta) *adj.* rolling due to great fear न यत्र स्थेमानं दधुरतिभयभ्रान्तनयनाः … करटिनः BhāmiVi. 1. 30.

**अतिभययुत** (atibhaya-yuta) *adj.* having great fear कचिदतिभययुतरुरुहितगगनम् …दयिते वनं पश्य PadmP.(Ra.) 42. 47.

**अतिभयविह्वल** (atibhaya-vihvala) *adj.* perturbed with great fear क्रुशोऽतिभयविह्वलः। मन्दिरं स्वं जगामाशु न लेभे दानवः सुखम् DevīBhāP. iv. 23. 14.

**अतिभयसमय** (atibhaya-samaya) *m.* association with great fear वृक्षेष्वद्यापि बाणासनचकितभिया रामनामादिवर्णे राकारामादिशब्देष्वतिभयसमयान्न कचिन्निर्वृतिर्मे DaśāvaC. 7. 124.

**अतिभयाकुल** (atibhayākula) *adj.* [*f.* -ā] full of great fear ब्रह्माण्डक्रमणं कृत्वा निर्विण्णोऽतिभयाकुलः।… ब्रह्माणं शरणं ययौ BrahmVaiP. iv. 25. 56; कंसश्च चण्डिकावाक्यमाकर्ण्यातिभयाकुलः।…हितं मेने पापो बालादिहिंसनम् ĀdiP. 6. 11; सप्तद्वीपान्विता पृथ्वी चचालातिभयाकुला S'ivaP. ii(2). 35. 17.

**अतिभयातुर** (atibhayātura) *adj.* [*f.* -ā] troubled with great fear ततस्तमतिघोरराक्षमवेक्ष्यातिभयातुराः। गोपा गोपस्त्रियश्चैव कृष्ण कृष्णेति चुक्रुशुः ViṣṇuP. v. 14. 7; BrahmP. 189. 51.

**अतिभयानक** (ati-bhayānaka) *adj.* [*f.* -ā] extremely terrifying, very dreadful कबन्धा नर्तनं चक्रुः शतशोऽतिभयानकम् PadmP.(Ra.) 62. 55; AvantiKa. 42. 12; पलायनपराः केचित्तां दृष्ट्वातिभयानकाम् GaṇeP. ii. 21. 54; नाहं बिभेम्यजित तेऽतिभयानकास्यजिह्वार्कनेत्रभ्रुकुटीरभसोग्रदंष्ट्रात् BhāgP. vii. 9. 15; मेघा वर्षन्त्यतिभयानकाः SkandP. ii(9). 25. 50; तयोः परस्परं युद्धं बभूवातिभयानकम् DevīBhāP. v. 31. 51; रथकारोऽपि तमतिभयानकं सिंहं दृष्ट्वा … प्रोवाच Pañcā. 81. 6; भैरवोऽतिभयानकः VīraMi. (Lakṣaṇa.) 32. 11.

**अतिभयाभिपीडिता** (atibhayābhipīḍitā) *adj.* (*f.*) afflicted with great fear इतीव सर्वा रजनीचरस्त्रियः …। विपेदुरार्तातिभयाभिपीडिताः Rāmā. vi. 82. 39.

**अतिभयावह** (atibhayāvaha) *adj.* [*f.* -ā] bringing great fear, very dreadful भवत्यग्निरधूमो वा तथैवातिभयावहः AVPari. 70B(21). 1; सप्ताहाभ्यन्तरे कम्पे मारुतेऽतिभयावहे AVPari. 64(2). 4; ईदृशी प्रमदा दृष्टा मया चातिभयावहा MatsyaP. 131. 30.

**अतिभयोद्विग्न** (atibhayodvigna) *adj.* dejected with great fear दृष्ट्वा तां दैत्यनिर्मिताम्। बभूवातिभयोद्विग्नः DevīBhāP. v. 6. 9.

**अतिभर** (ati-bhara) *m.* great burden, heavy load संभाव्य त्वामतिभरक्षमस्कन्धं स बान्धवः। सहायमध्वरधुरां धर्मराजो विवक्षते S'iśuVa. 2. 103; यो वै ममातिभरमासुरवंशराज्ञामक्षौहिणीशतमपानुददात्ममन्त्रः BhāgP. i. 16. 34; अतिभरेण विस्फुटितशेफालिकाकुसुमैः स्वीकृतास्रवन्मधुरसाकारेण सततवृष्टिः UdaySuKa. 26. 17; गत्वोपभूपमालोक्य कुमारं वेदनातुरम्। विनष्टनासिकं कुष्टरोगस्यातिभरादिव MalliC. 7. 513; रात्रेर्मध्यभरे भरत्यतिभरात् भेरीभरे निर्भरे गर्जति…शास्त्रखानसमान आसुरवरश्रेटीचपेटीकृतः ParamāKā. 4. 29; *adj.* heavily burdened, carrying a great load धरस्योद्धर्तासि त्वमिति ननु सर्वत्र जगति प्रतीतस्तत्किं मामतिभरमधः प्रापिपयिषुः S'iśuVa. 5. 69; मालवेश्वरः … त्वच्चरणकमलरेणुनिकरनिचितमतिभरमिव दुःखदुःखेन शिरोऽवहत् AvantiKa. 38. 9.

**अतिभरविवश** (atibhara-vivaśa) *adj.* helpless due to a heavy burden अतिभरविवशस्य भोगिभर्तुस्तदिव सहायदशां प्रयातुमीषुः PṛthvīVi. 10. 23.

**अतिभरसहन** (atibhara-sahana) *n.* bearing of a heavy burden अतिभरसहनप्रवृद्धकीर्तिद्विपमिव शेषम् … मत्वा … तत्करभकुलं हयसंघमन्वयासीत् PṛthvīVi. 10. 12.

**अतिभरसुरभि** (atibhara-surabhi) *adj.* extremely fragrant नीत्वोच्चैर्निक्षिपन्तः … परागान् कौन्दानां नन्दितालीनतिभरसुरभीन् भूरिशो दिङ्मुखेषु। … हैमना वान्ति वाताः SūktiMu. 63. 21.

**अतिभरस्फुटितोदर** (atibhara-sphuṭitodara) *n.* belly split open by the heavy burden जलधिवारि निपीतवतो भृशं वनमुचो रुधिरस्रवलोहिताः। अतिभरस्फुटितोदरनिर्गता विबभुरन्त्रलता इव विद्युतः JānaHa. 11. 61 (Ceylon Ed. 1967) = SūktiMu. 61. 19.

**अतिभरान्वित** (atibharānvita) *adj.* accompanied with excessive burden रेणूनतिभरान्वितान्। …धमित्वा रवकांश्चरेत् RasRaS. 5. 222.

**अतिभरावसन्न** (atibharāvasanna) *adj.* sinking with excessive burden कृष्णस्य गर्भजगतोऽतिभरावसन्नम् …। दृष्ट्वाहिमाद्यमुपसेदुरमुष्य पत्न्यः BhāgP. x. 16. 31.

**अतिभरित** (ati-bharita) *adj.* [*f.* -ā] well filled, well developed अतिभरितोरुभागभारवहनखेदेनेव तनुतरजङ्घाकाण्डम् (युवानमद्राक्षीत्) HarṣaC. 36. 6; स एव विसर्गः स्वसत्तानन्तरीयकतयैव तथैवातिभरितया सत्तया प्रसरन् द्रागित्येव हकलामयः सम्पद्यते ParāTri. 197. 4.

**अतिभर्जय्** (ati-bharjay-) (*caus.*) cf. **अतिभ्रस्ज्.**

**अतिभर्त्सयत्** (ati-bhartsayat) *adj.* scolding severely पिता माता निनिन्दाथ मूर्खं तमतिभर्त्सयन् DevīBhāP. iii. 10. 61.

**अतिभव** (áti-bhava) *n.* loss of worldy existence भवे भवे नातिभवे भजस्व माम् TaiĀ. x. 43. 1 (864. 1) (Sāy. जन्मातिलङ्घननिमित्तम्) = MahānāU. 17. 1; *adj.* who has overcome mundane existence भवतु भवे भवे मम भवेऽतिभवेऽभिरतिः YātrāPra. 3. 103.

**अतिभवकत्** (ati-bhavakat) *adj.* who has excelled you (in a derogatory sense) अतिक्रान्तो भवकन्तमतिभवकानितिवत् SiddhāKau. 52A. 7.

**अतिभवती** (ati-bhavatī) *adj.* (*f.*) (woman) surpassing you भवती अतिभवती MahāBh. i. 183. 23 (*on* i. 1. 72); KāśiVṛ. *on* P. i. 1. 72; P. *on* iv. 1. 4; JaineVyā. 150. 28 (*on* iii. 1. 4); CāndraVṛ. *on* iii. 3. 15; अतिभवतीति। भवन्तमतिक्रान्ता Pradī. iv. 32B. 8 (*on* iv. 1. 4); PrakriKau. i. 323. 3; Prasā. i. 62. 18; PariVṛ.(Sī.) 109. 13.

**अतिभवानीवल्लभ** (ati-bhavānīvallabha) *adj.* surpassing (S'iva) the Lord of Bhavānī अतिभवानीवल्लभं रामभद्रचरितम् BālRā. 3. 77(78)

**अतिभव्य** (ati-bhavya) *adj.* [*f.* -ā] very noble or auspicious or handsome सा गङ्गा कस्य सेव्या न भवति भुवने सज्जनस्यातिभव्या VijñāS'. 68; अतिभव्यां भालस्थलीं बिभ्राणा (युवतिराजगाम) UdaySuKa. 67. 15; KathāSaSāg. ix. 6. 54; यस्येयं गुणसंपदस्ति महती तस्यातिभव्यस्य ते संरब्धत्वमसद्भुमद्कलहे नाहं सहे हंस हे S'ārṅgaPa. 813.

**अतिभस्त्रका** (ati-bhastrakā) *adj.* (*f.*) surpassing the bellows भस्त्रादीनामापः स्थानेऽतः के परत आप्यसुप इत्त्वं वा भवति … अतिभस्त्रिका। अतिभस्त्रका CāndraVṛ. *on* vi. 1. 72.

**अतिभस्त्रिका** (ati-bhastrikā) *adj.* (*f.*) surpassing the bellows, CāndraVṛ. *on* vi. 1. 72.

**अतिभा** (ati-bhā-) II. P. I to shine brightly यथा सूर्यो अतिभाति यथास्मिन्तेज आहितम् AV. x. 3. 17; सा एषा विद्युत्। … अथ यत्परमतिभाति स पुण्यकृत्यायै रसः JaimiUBr. i. 30. 4; कर्णोऽपि विबभौ (v. l. कर्णस्त्वतिबभौ) MahāBhā. vii. 47. 3; राज्ञो (दशरथस्य) नातिबभौ रूपं ग्रस्तस्यांशुमतो यथा Rāmā. ii. 37. 12; कान्ते कमलनिलया श्रीधरेवातिभासि NāṭyaS'ā. 15. 110; अतिभाति विशालाक्षी … यथा षोडशवार्षिकी PadmP. ii. 19. 55; MahāP. 23. 87; ĀnandRa. 2. 48; II to excel, to outshine (fig.) ज्योतिरिव ह वा एषोऽन्येषु मनुष्येष्वतिभाति यस्सूयते JaimiBr. 2. 197; सर्वान् गुणानेष गुणोऽतिभाति Mahā-

Bhā. v. 35. 46 ( MahāBhārDi. अतिक्रम्य प्रकाशते )

**अतिभागव्यवस्था** ( atibhāga-vyavasthā ) *f.* settlement of share of property अतिभागव्यवस्थायाम् … ग्राह्यो मासस्तु सावन: BhaviP. 355A. 18 (ii(2). 6. 8)

**अतिभाग्य** ( ati-bhāgya ) *adj.* very fortunate धन्योऽहमतिभाग्योऽहं पावितोऽहं महात्मभि: DevīBhāP. i. 2. 1; *n.* great fortune य: केनाप्यतिभाग्येन जातश्रद्धोऽस्य सेवने BhaktiRaSi. i. 2. 5.

**अतिभाग्यशालिन्** ( ati-bhāgyaśālin ) *adj.* very fortunate बाहुमध्यमतिभाग्यशालिन: कस्य वा पुनरलंकरिष्यति ( सा ) Nalābhyu. 3. 30.

**अतिभाग्यसंपद्** ( ati-bhāgyasampad ) *f.* affluence of good fortune अहो प्रजानामतिभाग्यसंपद् यासां त्वमेवं नरदेव गोप्ता JātaMā. 87. 17 (13. 42)

**अतिभाग्याधिकत्व** ( atibhāgyādhika-tva ) *n.* excess of good fortune अतिभाग्याधिकत्वेन लघिष्ठोऽपि गुरुर्भवान् । … गृहाण राज्यमेतच्च तव भाग्यै: समर्पितम् PārśvC. 7. 729.

**अतिभानु** ( ati-bhānu ) *adj.* excelling the sun सैहं पीठन् … स्वां द्युतिमिद्धामतिभानुं तन्वानं तद् भाति विभोस्ते MahāP. 23. 147; *m.* name of one of the sons of Kṛṣṇa and Satyabhāmā अतिभानुस्तथाष्टम: । श्रीभानु: प्रतिभानुश्च सत्यभामात्मजा दश BhāgP. x. 61. 10.

**अतिभानुमत्** ( ati-bhānuma(n)t ) *adj.* excelling the sun सुतो जज्ञे …तेजसा चातिभानुमान् PrabhāC. 28. 28.

**अतिभार** ( ati-bhāra ) *m.* **1 A** excessive weight, great load, heavy burden अतिभारोऽभवद्भूमेर्भारती तत्र निर्मिता NāṭyaS'ā. 20. 11; शकटस्य चातिभारात् … संजीवक: .. निपसाद Tantrākhyā. 3. 19 = Pañcā. 4. 2; PañcT. 4. 17 (387. 32); उरुजघनस्थलातिभारात् Kirātā. 10. 60; तदतिभारनामितं वा … शिर: AvantiKa. 57. 9; ( विभेद ) भित्तिमश्मघटितामतिभारात् RāmC. 16. 55; हे नागराज … °पर्यङ्कबन्धनविधेस्तव कोऽतिभार: KāvyMī. 88. 20 = VakroJī. 73. 2; अतिभार: … पशु( ? शू )नामकाले मरणकारणम् NītiVā. 8. 10; नृपातिभारेण नितम्बिनीनां विमानरत्नानि पुरो नमन्ति NavaSāC. 14. 36; BhaviP. 284A. 16 (i. 191. 12); सुवो नामातिभारोऽयन् BrahmP. 210. 23; लोका: कुकर्मण्यतिरागिण: । यदा तदातिभारो मे भवत्येव जगद्गुरो । श्रुत्वेति वाक्यं धरणे: ĀdiP. 14. 148; रजकोऽतिनिर्दयो मामतिभारेण पीडयति Pañcā. 237. 6; DvyāśraKā. 2. 72; स्तनविनिहितमपि हारमुदारम् । सा मनुते कृशतनुरिव ( v. l. रति ) भारम् GītGo. iv. 9. 1; हिंसया हि शरीरिण: । पोता इवातिभारेण मज्जन्ति नरकार्णवे TriṣaS'aPuC. i. 1. 586; i. 1. 590; आरोपितोऽतिभारो हि गात्रभङ्गाय जायते PariPar. 8. 145; आक्रान्तोद्यानहर्म्यस्थलमणिभवना द्यौर्नतामातिभारात् RāghPāṇ. (Ka.) 11. 12; ( गजदन्तहस्त: ) स्तम्भग्रहेऽतिभारे च श्रीसोढलसुतोदित: SaṁgīRa. iv. 56. 6 (7. 207); SūktiRa. 102. 3; CaitaCan. 211. 16(9); स्वप्नातिभाराध्वगमनात् … नयनरोगा गजानाम् Hastyāyur. 138. 26 (1. 18); 246. 5 (2. 39); **1 B** heavy strain, great pressure (intellectual etc.) न बुद्धीन्द्रियाणामतिभारमादध्यात् CaraS. i. 8. 27; नातिभारोऽस्ति नो बुद्धे: BṛĀraUBhVā. iii. 1. 50; **2 A** very heavy task or responsibility नातिभारो हि पार्थस्य केशवेनाभवत्सह MahāBhā. i. 55. 36; iii. 19. 7; न दैवस्यातिभारोऽस्ति MahāBhā. iv. 19. 6 = x. 9. 10; vi. 89. 8; vii. 21. 27; प्रत्युवाच ततो राजन्नभिमन्युमिदं वच: । अतिभारोऽयमायुष्मन्नाहितस्त्वयि पाण्डवै: MahāBhā. vii. 35. 3; vii. 107. 36; भारश्चाप्यतिभारश्च शल्यानां च प्रतिक्रिया । …सर्वमेतन्मया ज्ञेयम् MahāBhā. viii. 28. 7; xi. 25. 30; नातिभारोऽस्ति दैवस्य सर्वभूतेषु लक्ष्मण Rāmā. iii. 65. 29; न कालस्यातिभारोऽस्ति Rāmā. vi. 38. 19; अतिभारे नियुक्तं वा भङ्क्त्वा परमवस्थितम् । …कृच्छ्रेण साध्यते मित्रम् ArthS'ā. iii. 40. 6 (8. 5); DūtGha. 43; अयम् … सरस्वत्या अप्यतिभार: … क: खलु … शक्नुयादविकलमस्य चरितं वर्णयितुम् HarṣaC. 140. 12; कोऽतिभार: समर्थानाम् TantrāKhyā. 7. 4 = PañcT. 1. 19 (22. 10) = Hitopa. 2. 12 = Pañcā. 7. 22 = SiṁhāDvā. 154. 9; NyāyMañ. i. 376. 26; कोऽतिभारो हरेर्नाम्नि जिह्वया परिकीर्तने AgniP. 200. 17; न ह्येतन्निराकर्तुं: सोऽयमतिभार इति पूर्व: पक्ष: AṇuBh. 3. 2 (*on* i. 1. 1); HaṁsSaṁ. 94; अत: परं ममातिभारो लघूभूत: CaitaCan. 116. 1(5); काम: । मधो किमत्र अतिभारमाकलयसि Manmatho. 1. 6 ( 421. 9 ); **2 B** excessive strain, heavy load (of meaning) अनेनैव प्रसङ्गोऽनेनैव निवृत्तिरिति अतिभार एकस्यैव वाक्यस्य भवति S'ābaBh. 1527. 11 (*on* vii. 1. 2); विशिष्टविधानस्य नातिभार: TantrVā. 1123. 23 (*on* iii. 6. 45); 604. 22 (*on* ii. 3. 13); 795. 12 (*on* iii. 2. 22); न ह्यस्ति वचनस्य अतिभार: BrahmSūBh.(S'aṅ.) 684. 15 (*on* iii. 3. 4); किं नु खलु ऋग्वेदादीनां ब्रह्मत्वं कुर्वतामतिभारो भवति, न ब्रूम: अतिभार इति NyāyMañ. i. 235. 19; यथाश्रुतमेव तद्व्याख्येयमित्यतिभार: NyāyMañ. ii. 120. 27; Bhām. 220. 13 (*on* i. 3. 19); AbhinBhā. 304. 4 (*on* 6. 45); TantrRa. 202. 8 न हि वचनस्यातिभारोऽस्ति Mitā. 504. 15 (*on* 3. 298); SmṛtiCan. iv. 357. 17; CaturCin. iii(1). 124. 3; NyāyMāVi. 205. 7 (*on* iii. 8. 2); VīraMi. (Samaya.) 16. 11; MayūMāli. 814. 24 (*on* xi. 2. 12); *adj.* [ *f.* -ā ] of heavy weight, having excessive load तदा धरातिभारा हि कृत्वा गोरूपमद्भुतम् । संप्राप्ता ब्रह्मसदनम् ĀdiP. 14. 143; किं मे … देहेन चातिभारेण SkandP. iii(3). 2. 44; शेषाणां ( स्तन्भानाम् ) चातिभाराणां कुम्भ: स्यात्प्रियदर्शन: ĪśānS'iPa. ii. 31. 52.

**अतिभारग** ( atibhāra-ga ) *m.* mule वेसरस्त्वश्वखरज: … मिश्रशब्दोऽतिभारग: RājNi. 267. 25; KalpaK. 321. 30.

**अतिभारगुरु** ( atibhāra-guru ) *adj.* heavy with a great burden पूर्वं वारिधरप्रसङ्गसमयेनापूरितै: कुक्षिभिर्या गर्भिण्य इवातिभारगुरवो नि:सेव्यतामागता: (नद्य: ) SaduktiKa. 179. 5 = SūktiMu. 62. 21 = Subhāṣi. 1825; अद्भि: करप्रकरनिर्गमरन्ध्रमार्गनि:शुषिताभिरतिभारगुरूदरोऽर्क: AmṛUda. 3. 34.

**अतिभारगुरुत्व** ( atibhāraguru-tva ) *n.* the state of being heavy due to a great burden or load शकटस्य चातिभारगुरुत्वात् … संजीवको युगभङ्गं कृत्वा निपसाद PañcT. 1. 3 (10. 4)

**अतिभारता** ( atibhāra-tā ) *f.* the state of having a very heavy task युद्धे समस्तमतिभारतया विपन्नन् PratiYau. 1. 6.

**अतिभारधुरंधर** ( atibhāra-dhurandhara ) *adj.* capable of bearing a great burden य एव त्वद्गृहे वोढा ह्यतिभारधुरंधर: SkandP. v(3). 209. 162.

**अतिभारप्रसङ्ग** ( atibhāra-prasaṅga ) *m.* contingency of a great weight (i. e. difficulty of significative capacity) ननु जातिविशेषणत्वेन व्यक्तिं च विशेष्यत्वेन वक्ष्यति गोशब्द: । न शक्नोति वक्तुमतिभारप्रसङ्गात् NyāyMañ. i. 293. 1.

**अतिभारभङ्गुर** ( atibhāra-bhaṅgura ) *adj.* **i** liable to be broken under a heavy burden लघूकरिष्यन्नतिभारभङ्गुरामसूं किल त्वं त्रिदिवादवातर: S'iśuVa 1. 36; **ii** troubled by a very heavy task इत्थमतिभारभङ्गुरा: सुरासुरा यावदासेदुरन्तिकं दुग्धनिधे: NīlaVi. 75. 19.

**अतिभारभूत** ( atibhāra-bhūta ) *adj.* becoming a very heavy burden (i. e. beyond the reach of) धनस्य रत्नस्य च तस्य तस्य कृताकृतस्यैव च काञ्चनस्य । तदा हि नैकान् स निधीनवाप मनोरथस्याप्यतिभारभूतान् BuddhaC. 2. 2.

**अतिभारयोग** ( atibhāra-yoga ) *m.* bearing of a very heavy burden ( गजदन्त: कर: ) एष च वधूवराणामुद्वाहे चातिभारयोगे च । स्तम्भग्रहणे च तथा शैलशिलोत्पाटने चैव NāṭyaS'ā. 9. 155.

**अतिभारवती** ( atibhāravatī ) *adj.* ( *f.* ) bearing a very heavy burden याचमानजनमानसवृत्ते: पूरणाय बत जन्म न यस्य । तेन भूमिरतिभारवतीयं न द्रुमैर्न गिरिभिर्न समुद्रै: NaiṣC. 5. 88 = Subhāṣi. 3040.

**अतिभारवह** ( atibhāra-vaha ) *adj.* carrying a very heavy burden विख्यातमल्लमोहितमतिभारवहं तथा विकृतगात्रम् । रुधिराङ्गवीक्षिततनुर्जनयति सौरो नरं वृषभे Sārā. 29. 39; अश्वे तु घोडको वाजी … अतिभारवहे स्थौरी ParyāS'a. Ra. 2. 297.

**अतिभारवहन** ( atibhāra-vahana ) *n.* **i** carrying of a very heavy load इत्थं व्यर्थजलातिभारवहनप्रोद्भूतखेदादिव स्वां मूर्तिं वडवानले जलनिधिर्मन्ये जुहोत्यन्वहम् Subhāṣi. 882; अस्ति कस्यचिद्रजकस्य वस्त्रनयनातिभारपीडया गर्दभोऽवसन्न: ( v. l. अस्ति कस्यचिद्रजकस्यातिभारवहनसमर्थ: खर: ) PañcT. 3. 31 (286. 5); **ii** putting a very heavy load लोभावेशादधिकभारारोपणमतिभारवहनम् [JainL.]

**अतिभारविघटित** ( atibhāra-vighaṭita ) *adj.* separated due to very heavy weight उर्वीपति: …अतिभारविघटिताङ्गुलीसंनिवेशगलितम् … रक्तासवकपालम् … आददानम् … वेतालमद्राक्षीत् TilaMañ. 47. 10.

**अतिभारश्रम** ( atibhāra-śrama ) *m.* fatigue due to a very great burden यद्दिव्याभरणोच्चयस्य महिमश्लाघाविधाने तथा हर्षात्कम्पयते फणादशशतीमाशीविषग्रामणी: । पर्यस्येत यथा धृतश्चिरमद:प्रत्युप्तरत्नाङ्कुरप्रौढालोकनिरर्थकीकृतमणिवृन्दातिभारश्रम: YātrāPra. 3. 214.

**अतिभाराक्रान्त** ( atibhārākrānta ) *adj.* overcome with a very heavy load ततो धनिकेनातिभाराक्रान्तेन महद् हलमुत्पाट्य भूमौ क्षिप्तन् Bharaṭ. 20B. 6.

**अतिभारातिसंतप्ता** ( atibhārātisantaptā ) *adj.* ( *f* ) greatly afflicted with a very heavy burden अतिभारातिसंतप्ता कं त्वाऽहं शरणं गता ( मेदिनी ) GaṇeP. ii. 6. 3.

**अतिभाराधिगम** ( atibhārādhigama ) *m.* acquisition of a very heavy load तथा पथि त्यागमयं वितीर्णवान्यथातिभाराधिगमेन मार्गणै: । तृणीकृतं रत्ननिकायमुच्चकैश्चिकाय लोकश्चिरमुञ्छमुत्सुक: NaiṣC. 15. 2.

**अतिभाराभाव** ( atibhārābhāva ) *m.* absence of a very heavy load (of meaning) वैदिकशब्दस्यातिभाराभावात् TantrVā. 695. 20 (*on* iii. 1. 12); 1118. 6 (*on* iii. 6. 43); वचनस्यातिभाराभावात् S'āstrDī. 332. 17 (*on* iii. 8. 1); MīmāKau. iii. 258. 1 (*on* ii. 2. 22); MayūMāli. 393. 17 (*on* iv. 3. 18)

**अतिभारारोपण** (atibhārāropaṇa) *n.* placing an excessive burden or load न्याय्यभारादतिरिक्तभारवाहनमतिभारारोपणम् TattvāRāVār. vii. 25. 4; क्षुधापिपासाशीतोष्णातिभारारोपणादिना । कशाङ्कुशप्रतोदैश्च सहन्ते वेदनाममी TriṣaS'aPuC. i. 1. 575; iii. 4. 124.

**अतिभारार्ता** (atibhārārtā) *adj.* (*f.*) troubled by a very heavy burden मेदिनी चातिभारार्ता ब्रह्माणं शरणं गता DevīBhāP. vii. 8. 32.

**अतिभारिक** (atibhār-ika) *adj.* A of very great importance यदि न गुह्यं नातिभारिकं वा ततः श्रोतुमिच्छामि MudrāRā. 6. 15 (9); B too heavy सर्वं त्वतोयमरुणमशोफं नातिभारिकम् (उदरम्) AṣṭāHṛ. iii. 12. 9.

**अतिभारोद्वहन** (atibhārodvahana) *n.* carrying of a very heavy load अतिभारोद्वहनात्सलिलतरणात् ··· वातः प्रकोपमापन्नो नयनवहा शिरा निरुणद्धि Hastyāyur. 142. 14 (1. 18)

**अतिभाव** (ati-bhāva) *m.* great devotion तेन राज्ञा महापूजा जिनानाम् ··· प्रवर्तितातिभावेन BṛKathāK. 115. 3.

**अतिभावतस्** (atibhāva-tas) *adv.* with great devotion दक्षिणा विविधा दत्त्वा ब्राह्मणेभ्योऽतिभावतः । पाण्डुपुत्राः ···। घोरं दुःखं कथं प्राप्ताः DevīBhāP. iv. 1. 33.

**अतिभावनी** (ati-bhāvanī) *f.* name of a disease in the trunk of an elephant caused by the saliva of a spider अतो लूताः प्रवक्ष्यन्ते ··· अङ्गुल्यां मेदिनी नाम स्थूलहस्तेऽतिभावनी Hastyāyur. 521. 8 (3. 26)

**अतिभावयत्** (ati-bhāvayat) *adj.* i contemplating deeply (about something) साधोरजनि महेशं किमुपर्यासीन्न तेऽतिभावयतः RasiRañ. 22; शंभुभूपतिः। आबभार सुषमां महत्तरां कालिकोक्तिमतिभावयन् हृदि ParamāKā. 176. 53; ii experiencing to a high degree, RasiRañ. 22.

**अतिभावस्वरूप** (atibhāva-svarūpa) *adj.* having the essential nature which is beyond all entities अतिभावस्वरूपोऽहमहमेव सुखात्मकः TejoBiU. 3. 34.

**अतिभाविक** (ati-bhāvika) *adj.* possessed of extreme faith, extremely devoted ये नराः कीर्तयिष्यन्ति माहात्म्यमतिभाविकाः SkandP. v(1). 15. 6.

**अतिभाष्** (ati-bhāṣ-) I. P. (*caus.*) to talk ill of (some one) त्वं कपित्वान्न जानीषे महान्तो विचरन्ति यत् । लोकं पुनानाः सञ्चारैस्तस्तान्नातिभाषयेत् AdhyāRā. iv. 2. 63.

**अतिभाषण** (ati-bhāṣaṇa) *n.* excessive talk न मे प्रिया यद् बहुमानवर्जिता कृताप्रिया ते परुषाभि( v. l. ति )भाषणैः NāṭyaS'ā. 15. 67 [GHOSH]; अतिस्वप्नमशय्या च तथा चाप्यतिभाषणम् ।··· सर्वमेतदनायुष्यम् BhelaS. 12. 16 (1. 8)

**अतिभाषा** (ati-bhāṣā) *f.* superhuman language भाषा चतुर्विधा ज्ञेया ··· अतिभाषार्यभाषा च जातिभाषा तथैव च । तथा योन्यन्तरी चैव भाषा नाट्ये प्रकीर्तिता NāṭyaS'ā. 17. 27; अतिभाषा तु देवानामार्यभाषा तु भूभुजाम् NāṭyaS'ā. 17. 28.

**अतिभाषित** (ati-bhāṣita) *n.* long or prolix speech प्रवचनं निगमेऽप्यतिभाषिते KośaKaTa. 2. 6584.

**अतिभाषिन्** (atibhāṣ-in) *adj.* very talkative पृथुनासिकोऽतिभाषी धन्व्यंशे जायते धनाधिपतिः HorāSā. 30. 17; नात्युपविष्टो नाप्यतिभाषी नातिस्थितस्तिष्ठेत् RaseCin. 8. 40 (96. 6)

**अतिभाष्य** (ati-bhāṣya) *n.* excessive or delirious speech संधारणाजीर्णरजोऽतिभाष्यक्रोधर्तुवैषम्यशिरोऽभितापैः । संस्त्यानदोषे शिरसि प्रवृद्धो वायुः प्रतिश्यायमुदीरयेत्तु CaraS. vi. 26. 104 (1941 Ed.); न चालिसमुखोऽतिभाष्यहास्यक्रोधशोकरोदनस्वेदनाश्यातपदिवास्वप्नान् सेवेत AṣṭāSaṁ. i. 161. 19 (1. 31); RugVi. 58. 13; क्षयोपवासाध्वगमातिभाष्यव्यवायवातातपपीडितानाम् । व्यायामिनां वातकफोत्तराणां यन्नारिकेरादुदकं प्रशस्तम् BhojanKu. 188. 4.

**अतिभास्** (ati-bhās) *adj.* very bright दीप्तं तु दग्धे ज्वलितेऽतिभासि KośaKaTa. 2. 5179.

**अतिभासन** (ati-bhāsana) *n.* very clear manifestation दूरेऽवभासमानस्य सन्निधानेऽतिभासनम् PramāVāBh. 19. 2.

**अतिभासुर** (ati-bhāsura) *adj.* [*f.* -ā] very resplendent, very refulgent, very brilliant चित्याश्चाप्यतिभास्वराः ( v. l. चैत्याश्चाप्यतिभासुराः ) MahāBhā. ii. 3. 15; निस्सृत्य मण्डलान्मित्राद्रश्मिवत्सोऽतिभासुरः PadmP.(Ra.) 17. 146; 19. 136; 85. 132; 118. 44; दीप्यमानेऽतिभासुरे ।···अनन्तभोगशयने शयानं पीतवाससम् PāraS. 6. 194; ददर्श दूरादतिभासुरं शुभम्···रामस्य गेहम् ··· भरतः AdhyāRā. ii. 8. 66; इत्याजवंजवीभावमामोक्षमतिभासुरम् । भूयो भूयोऽनुभवति YogVā. iii. 55. 43; v. 42. 24; (सुमुखीं स्वप्नपथेन पार्थिवः ।···व्यलोकयत्) अतिभासुररत्नकुण्डलाम् NavaSāC. 12. 14; तपांसि सः । तेपेतरां तपनवत्तेजोभिरतिभासुरः PariPar. 5. 52; 7. 7; ततोऽर्कोऽप्यतिभासुरः TriṣaS'aPuC. i. 3. 246; i. 5. 701; वज्रं च ··· षट्कोणमतिभासुरम् RasRaSa. 4. 27; जनता ··· अतिभासुरया सुरया व्यहरत् Nalo. 1. 54; प्रसन्नतां सपदि भजन्ति पार्थिवाः । दिनाधिपे दिवसमुखेऽतिभासुरे महीतले Raghunā. 8. 44.

**अतिभास्कर** (atibhās-kara) *adj.* producing excessive lustre or light निःप्रकाशमिवाकाशे भास्करो नातिभास्करः AVPari. 64(2). 3.

**अतिभास्करज** (ati-bhāskaraja) *adj.* surpassing the Sun's son (Manu or Karṇa) निशाकरकुलोत्तंसः सोऽतिभास्करजः सदा । प्रभाकरोदये तातं दिवाकरमिवानमत् DvyāśraKā. 11. 60.

**अतिभास्करवर्चसा** (ati-bhāskaravarcasā) *adj.* (*f.*) surpassing the lustre of the sun यस्मिन् वसति तोये च साऽतिभास्करवर्चसा (जलौका) Hastyāyur. 700. 2 (4. 34)

**अतिभास्वत्** (ati-bhāsvat) *adj.* extremely bright or brilliant, surpassing the Sun सूक्ष्मातिदूरांतिकस्थातिभास्वद्भैरवाप्रियविकृतादिदर्शनम् ··· मिथ्यायोगः AṣṭāSaṁ. i. 116. 14 (1. 22); शोभते पद्मनाभाख्यः किरीटेनातिभास्वता PadmP. iv. 84. 93; शङ्खचक्रगदापाणेः···मनः शरीरेणातिभास्वता । इदं संचिन्तयामास त्रैलोक्याब्जमहालिना YogVā. v. 38. 6; तेजोऽतिभास्वद्भरतं दधानम् । राजा स शत्रुघ्नमनीलसर्पि प्रास्थापयत् RāghPāṇ.(Ka.) 2. 41; भूपरिक्रमणादन्या भवतामतिभास्वताम् । तमसामिव शत्रूणां निरासे कीदृशी क्रिया Yādavā. 22. 16.

**अतिभास्वर** (ati-bhāsvara) *adj.* extremely radiant or brilliant गङ्गा तं गर्भमतिभास्वरम् । उत्ससर्ज Rāmā. i. 36. 17; दीप्यमानेऽतिभास्वरे ।···अनन्तभोगशयने शयानं पीतवाससम् PāraS. 10. 175; अत्यन्तनिर्मलः सूक्ष्म आत्मायमतिभास्वरः SarvaVeSāSaṁ. 481; (नृपकुमारः) आनन्दाश्रुबिन्दुविसरमतिभास्वरेण रत्नादर्शतेजसा जनितमिति मुहुर्मुहुरपप्रथत् TilaMañ. 278. 20; 405. 2; अन्येषां चैव देवानां शरीरेभ्योऽतिभास्वरम् । निर्गतम् (तेजः) DevīBhāP. v. 8. 41; सः। ··· संज्वाल्य हुताशमतिभास्वरम् । जुहाव ··· मांसं स्वस्कन्धभित्तितः YogVā. iv. 48. 35.

**अतिभास्वरता** (atibhāsvara-tā) *f.* the state of being extremely radiant or resplendent अतिभास्वरतया तडिद्दण्डैरिव निर्मितानाम् ··· अङ्गानाम् TilaMañ. 36. 3; 152. 11; 153. 7; 158. 21.

**अतिभास्वरत्व** (atibhāsvara-tva) *n.* the state of being extremely resplendent or radiant (समरकेतुः) अतिभास्वरत्वादपरिस्फुटविभाव्यमानावयवशोभम् ··· आयतनं ददर्श TilaMañ. 214. 10.

**अतिभास्वररोचिस्** (atibhāsvara-rocis) *adj.* possessed of very brilliant lustre वर्तन्ते द्वादश कला अतिभास्वररोचिषः BrahmāṇḍP. iii. 35. 86.

**अतिभास्वराकृति** (atibhāsvarākṛti) *adj.* extremely radiant in form (समरकेतुः) भास्वतेव सेवागतेनातिभास्वराकृतिना प्रभामण्डलेनोद्भासिताम् ··· प्रतिमामपश्यत् TilaMañ. 217. 7.

**अतिभिद्** (ati-bhid-) VII. U. (*pass.*) to differ very much हिरण्यगर्भपक्षस्तु वेदान्तान्नातिभिद्यते SarvaSiSaṁ. 12. 87; (*caus.*) to cause excessive division अतिभेदयेन्नातिसामं नातिदानं न च स्त्रीषु दण्डो न च मायोपेक्षा कर्तव्या BārhaS. 1. 52.

**अतिभिदा** (ati-bhidā) *f.* great difference यासाम् ··· नातिभिदा तिरश्चिन्त्यः (?) AvantiKa. 125. 11; प्रणमामि चन्द्रसूर्यप्रज्ञप्ती ··· नातिभिदार्थात्मनापि ययोः SiddhāASta. 26.

**अतिभिन्न** (ati-bhinna) *adj.* i very different लाटडिडिनो नामैते नातिभिन्नाः पिशाचेभ्यः PādaTā. 16. 3; नैयायिकः ··· साधयिष्यति नश्शिवम् । नातिभिन्नं मतं यस्मादावयोर्वेदवादिनोः SarvaSiSaṁ. 5. 37; ii not entirely different भिन्नम्-अत्यन्तभिन्नम् अतिक्रान्तो अतिभिन्नः भेदाभेदवान् LaCandr. 678. 33; iii crossed over भवेतिभिन्नः कुलपामराणां भवेऽतिभिन्नः कुलपामराणाम् ĪśvaS'. 8.

**अतिभिन्नता** (atibhinna-tā) *f.* radical difference or complete distinction अतिभिन्नता नारायणेन मुक्तानामपि सम्यक् AnuVyā. 49B. 4 (*on* 3. 3)

**अतिभिन्नपुरीष** (atibhinna-purīṣa) *n.* excessively loose excrement अतिभिन्नपुरीषश्च अतिस्निग्धस्य लक्षणम् AśvaVai. 19. 9.

**अतिभी** (ati-bhī) *f.* i great fear मध्येछाद्यगृहं वृद्धभूमिकस्यातिभीर्यथा । प्रदीपेन PārśvC. 6. 371; राज्ञः ··· भाविनाशादतिभीरनुवर्तते PañcDa. 14. 26; ii the flames of the thunderbolt (very terrific) स्फूर्जथुर्वज्रनिर्घोषो वज्रज्वालातिभीः स्मृता AbhidhāRaMā. 1. 57; कुलिशोऽस्यार्चिरतिभीः स्फूर्जथुर्ध्वनिः AbhidhāCin. 181; Liṅgānu.(He.) 60. 2; शम्बार्चिरतिभीरुक्तः स्फूर्जथुर्वज्रनिःस्वनः ParaNā. 225; Liṅgānu.(Para.) 3539; वज्रार्चिरतिभीः स्त्रियाम् KośaKaTa. 1. 421; 2. 2465.

**अतिभीत** (ati-bhīta) *adj.* [*f.* -ā] very much frightened, greatly afraid of दाम्भिकस्यातिभीतस्य ··· रक्षोऽधमस्य तस्यास्ति कुतः स्वल्पापि शूरता PadmP.(Ra.) 48. 140; सातिभीताब्रवीत्कोऽसि कूपान्तःस्थोऽद्भुतस्वरः VāmaP. 91. 54; अतिभीतस्य तदा मे विस्मयोऽभवत् ĀdiP. 10. 7; किं नासौ मुरजित्सुरा न किममी येनातिभीता प्रिये UdaySuKa. 110. 28; अर्जुनः ··· भीतभीतोऽतिभीतः

भूयस्तं प्रणम्य…आह GītāBh.(Rā.) 553.7 (*on* 11.35); 609.6 (*on* 16.5) क्रोधाद्य-स्यातिभीता दिशि दिशि विहतानन्तसामन्तकान्ताः कान्तारेषु प्रविष्टाः EI. xiv. 301.33; सा (माया) चातिभीता पुरतो यमेव स्तोतुमक्षमा PañcaRā.(Nā.) ii. 3.13; यह्णाङ्गलाग्रकलनात् कुरुराजधानी धानेव धामसहिता चलितातिभीता SātvaT. 2.47; ग्रीष्मग्रासभयातिभीतजनताशौटीर्यदुर्गालयो मार्गः … जयिना प्रोत्तम्भितो मण्डपः EI. vi. 202.22; दूरादालोक्य तस्यास्तमाकारमतिभैरवम् । आवाभ्यामतिभीताभ्यां सेयं कृत्येति निश्चितम् PāṇḍaC. 9.321; किं करवाम धामरहिता शीतातिभीता वयम् S'atTrayi. 767.

**अतिभीतवत्** (atibhīta-vat) *adv.* like one who is very much frightened निवसाम्यतिप्रच्छन्नो मत्तादतिभीतवत् SkandP. i(2). 13.55; कद्र्वास्तद्वचनं श्रुत्वा विनता ह्यतिभीतवत् । पुत्रमाह … गरुडं विहगाधिपम् BrahmP. 159.31; (सुग्रीवः) दृष्ट्वा लक्ष्मणम् … उत्पपातातिभीतवत् AdhyāRā. iv. 5.51; अतिभीतवद्द्रवति सौरभं ततः Manmatho. 1.2 (419.29)

**अतिभीति** (ati-bhīti) *f.* excessive fear, great fright प्रायशो भाषणेनातिभीत्या…भवेन्मारुतस्य प्रकोपः HāriS. i. 5.52; (तदनुचराः) अतिभीतिविस्मितान्तकरणः(? णाः) श्रेणिकधरणीश्वरायेदं निवेदयामासुः YaśasCam. ii. 305.22; अग्रे धावत्यात्मनाथेऽतिभीत्या … यूथनाथास्तदीयाः … सर्वे प्राद्रवन् Raghunā. 10.40; नातिधैर्यं प्रदातव्यं नातिभीतिश्च रोगिणे KaliVid. 24.

**अतिभीतिकर** (atibhīti-kara) *adj.* causing great fear मुग्धामनुनयति …नातिभीतिकरैर्वाक्यैः S'ṛṅgāTi.(Ru.) 1.54.

**अतिभीतिद** (atibhīti-da) *adj.* causing great fear, very frightening सर्पो बभूव सोऽतिभीतिदः BṛKathāK. 78.140.

**अतिभीम** (ati-bhīma) *adj.* [*f.* -ā] exceedingly terrible or fierce or formidable अग्निः साचिव्यकर्ता स्यात् … । अर्जुनस्यातिभीमेऽस्मिन् कुरुपाण्डुसमागमे MahāBhā. v. 59.8; vii. 953*(1); viii. 359*(2); अतिभीमा (कृत्या) समागम्य…तं (=प्रह्लादम्) जघानाशु वक्षसि ViṣṇuP. i. 18.34; भुजेऽतिभीमे सशरं शरासनं निधाय वामे JānaHa. 9.29; AvantiKa. 90.9; एष स्त्रैणकपोलकुङ्कुमलिपिस्तेयातिभीरौ (v. l. °भीमे) भुजे विभ्राणः … धनुः AnarghaRā. 4.19; अतिभीमा भैरवाश्च … शिवस्य पार्षदाः सर्वे BrahmVaiP. ii. 61.44; SkandP. iv. 95.57; सुन्दरं चातिभीमं च रूपं कृत्वा हिमाचले । रक्षांसि भक्षयिष्यामि LakṣmīT. 9.39; पेशलेनातिभीमेन प्रसन्नेनाकुलेन च । …तेजसा रञ्जितप्रभम् (वपुः) YogVā. i. 6.20; निर्गमनं श्रियोऽतिभीमा अरु[ण]दजयमेरुगोपुरस्य … तोरणस्रक् PṛthviVi. 10.38; भीमस्ततो भीम इवातिभीमः । महीमहेलापतितां प्रपेदे VasaViKā. 3.14; वराहा वारिवाहातिभीमाः VīraBhā. 11.44; अस्या दृशि विमलायां तरलतरतारकातिभीमा Hāsyārṇa. 2.25; *m.* I name of one of the five *Yajñamuṣ* ('sacrifice-stealer') gods अभीममतिभीमं च भीमं भीमबलाबलम् । एतान् यज्ञमुषः पञ्च देवानभ्यसृजत् तपः MahāBhā. iii. 210.11; (cf. TaiS. III. v. 4.1-2); II lord of the Rākṣasas भीमातिभीमदाक्षिण्यात् ते चान्यैरपि वः कुले । अनुज्ञाताः सुरैः सर्वैः पूर्वमित्येनमागमः PadmP.(Ra.) 6.65.

**अतिभीमदन्त** (atibhīma-danta) *m.* very fierce tusk रुषा करीन्द्राः । मत्तान्यकुम्भिभ्रमतोऽतिभीमदन्ताभिघातव्यसनं वहन्ति KumāSam. 9.42.

**अतिभीमदर्शना** (atibhīma-darśanā) *adj.* (*f.*) of an exceedingly terrible or frightful appearance इति (राक्षसीम्) तामतिभीमदर्शनामभिवीक्ष्योभयतस्तपोधनम् । धनुषोरवनीभुजः सुतौ सपदि न्यस्तशरावतिष्ठताम् JānaHa. 4.62.

**अतिभीमनिर्घात** (atibhīma-nirghāta) *m.* extremely fearful or loud thunder-clap दिवोल्का…राजमृत्यवे स्यात् । …अतिभीमनिर्घातो राजमृत्यवे ViṣṇuDhaP. ii. 166.0 (292A.16)

**अतिभीमपराक्रम** (atibhīma-parākrama) *adj.* possessing exceedingly formidable power or valour तव भीम बलेनाहमतिभीमपराक्रम । अक्षतः सह पाञ्चाल्या गच्छेयं गन्धमादनम् MahāBhā. iii. 145.2; अतिभीमपराक्रमौ…गणौ-धातृविधातारौ PāraS. 11.29.

**अतिभीमवात** (atibhīma-vāta) *m.* very strong or violent wind तेनातिभीमवातेन विदूरथरथोऽप्यथ । उह्यमानोऽभवत् YogVā. iii. 49.3.

**अतिभीमसेन** (ati-bhīmasena) *adj.* surpassing Bhīmasena अतिभीमसेनमनयोः प्राचण्ड्यं प्रेक्ष्य वेपते हृदयम् S'ṛṅgāBhū. 73.

**अतिभीय** (atibhī-ya) *ger.* becoming extremely frightened यत्रावदत् तामतिभीय भैमी NaiṣC. 6.68.

**अतिभीरु** (ati-bhīru) *adj.* extremely timid or apprehensive अतिभीरुमतिक्लीबम् … न भजन्ति नृपं श्रियः MahāBhā. iii. 239.4; एष स्त्रैणकपोलकुङ्कुमलिपिस्तेयातिभीरौ भुजे विभ्राणः … धनुः AnarghaRā. 4.19; अतिभीरु-भूपालमण्डलमिव वलिभिराक्रान्तमशेषमङ्गम् … आवरीतुं न शक्यते NalaCam. 4.20(2); सुखं चन्दनवनितादिसङ्गजन्म…अतिभीरुणा त्यज्येतापि Bhām. 54.9 (*on* i. 1.1); प्रज्ञया वादिनः सर्वे स्वविकल्पविलासिनः । जयन्ति सुभटप्रख्यान् नरानप्यतिभीरवः YogVā. v. 12.33; सुवर्णरजतानि वा स्वप्ने पश्येद् यदि तदा … अकस्मादतिभीरुर्वा मासानष्टैव जीवति YogS'ā. 5.141; [अतिभीरु is given as one of the meanings of अपोगण्ड, AnekāSaṁ. 4.71; KośaKaTa. 2.4774]

**अतिभीरुक** (atibhīru-ka) *adj.* very timid, great coward cf. अतिभीलुक अपोगण्डस्तु शिशुके विकलाङ्गेऽतिभीरुके ViśvaPra. 46.39; ViśvaLoK. 96.41; S'abdaRaSaK. 101.1.

**अतिभीरुता** (atibhīru-tā) *f.* extreme timidity or cowardice किं वा करोतु वराको येनातिभीरुतया … न तु दृष्टान्येव … कुपितानां तेजस्विनां मुखानि HarṣaC. 259.5; सोऽतिभीरुतयात्यन्तं जायते निकृतो नरः PadmP.(Ra.) 54.39; सेयमतिभीरुता सकललोकयात्राविरोधिनी TātpaṬ.(Vā.) 625.23 (*on* iv. 1.54)

**अतिभीरुमति** (atibhīru-mati) *adj.* very timid or a coward at heart अतिभीरुमतिं दीर्घसूत्रं चातिप्रमादिनम् । व्यसनाद् विषयाक्रान्तं न भजन्ति नृपं प्रजाः S'ukraNi. 1.140.

**अतिभीलुक** (ati-bhīluka) *adj.* very timid, great coward, cf. अतिभीरुक प्रलपत्यतिभीलुकः पितृव्यः Rāgh. 15.62.

**अतिभीषण** (ati-bhīṣaṇa) *adj.* [*f.* -ā] I beyond or above frightfulness or terribleness स एतत् सर्वं निरूह्य प्रत्यूह्य … अतिभीषणोऽतिभद्रोऽतिमृत्यु-मृत्युः … भूत्वा स्वे महिम्नि सदा समास्ते NṛsiṁhoTāU. 7; II extremely fierce or terrible or deadly (animates and personified objects) राजा कल्माषपादः … । स एषोऽस्मिन् वनोद्देशे निवसत्यतिभीषणः MahāBhā. i. 168.2. (कल्माषपादम्) तमतिभीषणं राक्षसस्वरूपमवलोक्य ViṣṇuP. iv. 4.60; सिंहव्याघ्राश्च संक्रुद्धा भीमसेनमभिद्रवन् । … विनदन्तोऽतिभीषणाः MahāBhā. iii. 146.46; पपात पूतना भूमौ म्रियमाणातिभीषणा ViṣṇuP. v. 5.10 = BrahmP. 184.10; एवंविधं तदा पुत्रं विजज्ञे सातिभीषणम् VāyuP. ii. 8.76; BrahmāṇḍP. ii. 7.42; आससाद वने घोरं शार्दूलमतिभीषणम् BrahmāṇḍP. ii. 25.52; ततो देवीशरीरात्तु विनिष्क्रान्तातिभीषणा । चण्डिकाशक्तिरत्युग्रा MārkP. 88.22; 87.15; उर्वीपतिः … यमुनाप्रवाहमिव…आवर्तद्वयेनातिभीषणम् … वेतालमद्राक्षीत् TilaMañ. 48.9; अक्षौहिणीः सप्तदशातिभीषणास्ता राम एको भगवानसूदयत् BhāgP. ix. 15.30; माल्यवानतिभीषणः रावणश्च महाबलः SkandP. i(1). 8.30; तं दान्तमनुयाति स्म ब्रह्महत्यातिभीषणा SkandP. iii(1). 24.59; iii(1). 11.63; भवो ब्रह्महत्यासंज्ञामतिभीषणां स्त्रियमुत्पाद्य तां प्रत्युवाच TristhaSe. 194.4; भगवानेक एव जनार्दनः ।… राजेन्द्राखिलभूतानि भक्षयत्यतिभीषणः PadmP. v. 2.112; क्षणाच्च भूमिविवराद्भुजगामातिभीषणः । …अजगरो महान् KathāSaSāg. viii. 3.63; धूमावती देवतास्य ज्येष्ठा या चातिभीषणा ĪśānS'iPa. i. 47.58; रक्षैः … अतिभीषणैः । श्मशानादत्यरिच्यन्त पुरराजपथा अपि TriṣaS'aPuC. iii. 1.33; पुरुषव्याघ्रैरतिभीषणा कुरुनरेश्वरसेनारण्यानी PārthPa. 38(2); सः … भ्रूभङ्गेनातिभीषणः Suratho. 9.8; गुणवानपि वक्रतां गतः पुरुषश्चाप इवातिभीषणः HammīMaKā. 10.3; चेटकास्ते समागत्य मध्यरात्रेऽतिभीषणाः TantrRā. 17.91; (inanimates, abstracts) न बाधते विषं घोरमनेकं चातिभीषणम् JayāS. 29.176; विषं दत्तमस्माभिरतिभीषणम् ViṣṇuP. i. 18.8; पुरा हि त्रेतायां देवासुरयुद्धमतिभीषणमभवत् ViṣṇuP. iv. 2.22; अभवद् रणः । …अतिभीषणः BrahmāṇḍP. iii. 29.57; वज्रं च राजतेजश्च द्वयमेवातिभीषणम् Hitopa. 2.153; चक्रमतिभीषणम् TriṣaS'aPuC. iv. 1.724; सा …अतिभीषणम् … कमपि प्रादुरभावयत कृपाणम् MadhuVi. 8.17; तस्मै चापम् …अतिभीषणम्… । स खलु ददौ YudhiVi. 3.9; लिङ्गाकारा समुद्भूता वह्निज्वालातिभीषणा MatsyaP. 60.4; वनेऽतिभीषणे कष्टं रणाभिमुखतां गतः PadmP.(Ra.) 49.16; अस्ति रामाटवी … अतिभीषणा YogVā. iii. 98.5; ययौ खरतराटवीम् । तत्रातिभीषणे … यक्षभवनं दिव्यमैक्षत PārśvC. 7.638; सा … अटवीमतिभीषणामगात् Nalābhyu. 7.67; मोक्षं सुदुर्लभं ज्ञात्वा संसारं चातिभीषणम् । …वाराणस्यां वसेन्नरः KūrmaP. 315.18 (1.31); PadmP. i. 33.22; शिवे मतिं प्रकुर्वाणः संसारादतिभीषणात् । मुच्यते SaurP. 64.20; आग्नेयीं वारयामास शंकरः । … संहृतां चातिभीषणाम् SaurP. 36.39; अशक्ताः सर्ववानराः । तर्तुं प्लवोडुपैरेनं समुद्रमतिभीषणम् SkandP. iii(1). 2.51; अकुर्वाणः पतत्याशु यममार्गेऽतिभीषणे BrahmP. 216.2; निरयानतिभीषणान् SaurP. 17.50; श्मशानमतिभीषणम् BṛKathāMañ. ix. 2.474; गिरिं प्रापातिभीषणम् SamarāSaṁ. 6.93; 6.148; त्वद्रूपमतिभीषणम् BṛKathāK. 134.10; बिभ्रता अतिभीषणं रूपम् TilaMañ. 284.1; देवोऽथ कुपितो नानारूपैस्तस्यातिभीषणैः उपसर्गं व्यधात् PārśvaC. 2.997; देहि हन्तां प्रथमतो या जाता ह्यतिभीषणा BrahmP. 123.162; निवर्तस्व संकल्पादतिभीषणात् BṛKathāS'loSaṁ. 1.78; प्रतिज्ञां त्वं शृणु रामातिभीषणाम् YogVā. iii. 4.66; मयः … मायां च विविधानाय देवा- अनावृष्टिरभूत् … अतिभीषणा BrahmP. 93.5; मदः … मायां च विविधानाय देवानामतिभीषणान् BrahmP. 124.37; दुर्भिक्षमतिभीषणम् PariPar. 12.312; मोहनेदेषु मिथ्यात्वमतिभीषणम् PārśvC. 2.371; परिवेषोऽतिभीषणः । हन्ति लग्नगुणानन्यान् VasiSaṁ. 43.65; हरिद्राग्रन्थिवद् ग्रन्थिः स स्यात् कृष्णोऽतिभीषणः RaseCin. 7.12 (60.18)

**अतिभीषणकाय** (atibhīṣaṇa-kāya) *adj.* possessing an extremely terrifying or formidable body अतिभीषणकायांस्तांश्छिन्नभिन्नाननेकशः । दृष्ट्वा

... विकृतिं परियातानि मनांसि दानवद्विषाम् GaṇeP. ii. 116.16.

**अतिभीषणदर्शन** (atibhīṣaṇa-darśana) *adj.* having an extremely terrible appearance, very fierce-looking जज्ञे कृत्याचतुष्टयम् । विकरालं महावक्त्रमतिभीषणदर्शनम् MārkP. 118.48.

**अतिभीषणनामिका** (atibhīṣaṇanāmi-kā), *adj.* (*f.*) bearing a very dreadful (inauspicious, harsh) name नोद्वहेत् कपिलां कन्याम् ... न यक्षाहिप्रेष्यनाम्नीं चातिभीषणनामिकाम् BhavīP. 270A.25 (i. 182.41)

**अतिभीषणम्** (ati-bhīṣaṇam) *adv.* quite frightfully, formidably, terrifyingly असुराश्च ततः सर्वे जगर्जुरतिभीषणम् SkandP. i(1). 12.6.

**अतिभीषणविग्रह** (atibhīṣaṇa-vigraha) *adj.* having extremely formidable body or form (सः) तेजसाऽद्वैष्यस्सूर्यमतिभीषणविग्रहः GaṇeP. ii. 75.4.

**अतिभीषणाकार** (ati-bhīṣaṇākāra) *adj.* having an extremely formidable form or appearance बह्वीभिर्दंष्ट्राभिरतिभीषणाकारम् ...तवेदमीदृशं रूपं दृष्ट्वातीव व्यथिता भवामः GītāBh.(Rā.) 548.23 (*on* 11.23)

**अतिभीषणाकृति** (atibhīṣaṇākṛti) *adj.* having an extremely formidable form or appearance प्रियमाणश्चासावतिभीषणाकृतिरतिकरालवदनो राक्षसोऽभूत् ViṣṇuP. iv. 4.43; अतिभीषणाकृतिमदृष्टचरीं परिपश्यति स्म स पदातिचमूम् S'ivLī. 17.10.

**अतिभीषा** (ati-bhīṣā) *f.* intense fright, excessive fear यथावीर्यस्त्वया सर्पः कृतोऽयं मद्विभीषया (v. l. अतिभीषया) MahāBhā. i. 11.4.

**अतिभीषिता** (ati-bhīṣitā) *adj.* (*f.*) quite frightened सलिलानां निधिनातिभीषिताः शरणं नृपतिं ययुः प्रजाः S'ivLī. 15.2.

**अतिभीष्म** (ati-bhīṣma) *adj.* very dreadful, fierce सोऽतिभीष्मो विपोल्काभिर्यावद्दहति केशवम् । असौ तमग्रहीत्तावत् PāṇḍaC. 2.348.

**अतिभुक्त** (ati-bhukta) *n.* excessive eating अजीर्णादतिभुक्ताच्च ... व्रणा न प्रशमं यान्ति निष्क्रियत्वाच्च देहिनाम् CaraS. vi. 25.31; *adj.* **1** who has eaten excessively अतिभुक्तं च भवता ... तेनासि पतितः क्षितौ MahāBhā. xvii. 2.25; मितं पच्येत यस्यान्नमतिभुक्तस्य(१ स्स) उच्यते BhelaS. 69.10 (*on* 3.3); क्षुत्क्षामो नातिभुक्तो वा ... व्यवायं पुरुषो व्रजेत् ViṣṇuP. iii. 11.116; विप्रगणेऽत्यतिभुक्ते तृप्तिः सम्पद्यते यदि पितृणाम् VetāPañ.(S'i.) 29.23; अतिभुक्तोऽतिपीतोऽपि यया सादी न पीडयते । श्रेष्ठा गतिस्तु सा ज्ञेया सः श्रेष्ठस्तुरगो मतः S'ukraNī. iv. 7.116; **2** who has enjoyed excessively अतिभुक्तं स्नानपानादिना ViraMi.(Saṁskāra.) 870.16.

**अतिभुक्तक** (atibhukta-ka) *adj.* well-fed शान्तो रसविशेषे स्वादतिभुक्तकदान्तयोः ViśvaPra. 59.34.

**अतिभुक्ति** (ati-bhukti) *f.* excessive eating अतिभुक्त्याध्वनि...भवेन्मारुतस्य प्रकोपः HāriS. i. 5.52.

**अतिभुक्त्वा** (ati-bhuktvā) *ger.* having eaten excessively व्यायाममतितापत्राध्यतिभुक्त्वा निषेविणाम् । ... वातादयः ... दूषयन्ति BhāvPra.(Bhā.) viii. 54.2.

**अतिभुग्न** (ati-bhugna) *adj.* extremely crooked किमनेनातिभुग्नेन (v. l. किमनेनातिभुग्नेन) वाग्भिः काप्सधर्मेणा MahāBhā. ix. 60.21.

**अतिभुग्नक** (atibhugna-ka) *n.* defect in massaging or rubbing the body (by bending wrongly) संवाहनकला द्वेधा तत्रैका कर्मसंश्रया । शयौपचारिका चान्या ...। दोषास्तस्याः...अमार्गेण प्रव्रातमतिभुग्नकम् PadmP.(Ra.) 24.78.

**अतिभुञ्जत्** (ati-bhuñjat) *adj.* who eats too much नातिभुञ्जन्सदा योगी ... सिद्धिमेति GaṇeP. ii. 142.12.

**अतिभुञ्जान** (ati-bhuñjāna) *adj.* who is eating excessively अस्तं गतेऽतिभुञ्जाना अह्नो भानोः सुसेवकाः KumāCaSaṁ. 58.24.

**अतिभू** (ati-bhū-) I. P. **1** to excel, to surpass पतेन वा इन्द्रोऽत्यन्या देवता अभवत् PañcBr. xxii. 8.2; सप्तमेनात्यन्याः प्रजा भवन्त्योजिष्ठा भवन्ति ĀpaS'S. xxiii. 8.6; xxiii. 13.8; **2** to originate, to arise, to spring forth शब्दश्च घोरोऽतिबभूव MahāBhā. viii. 1033*(3); एवमुद्घोषणापूर्वं दुन्दुभिध्वनिरत्यभूत् PārśvC. 3.1003; **3** to overcome, subdue, overpower [APTE]; *adj.* **1** who overcomes or overpowers मङ्गलानि च सर्वाणि कारयामास चाभिभूः (v. l. अतिभूः) MahāBhā. v. 147.21; आसीत् ... प्रथमस्तीर्थनाथानां नातिभूरिह भारते PāṇḍaC. 1.8; **2** surpassing all (epithet of Viṣṇu) विभुर्भूरभिभूः (v. l. अतिभूः) कृष्णः कृष्णवर्त्मा त्वमेव च MahāBhā. xii. 43.11 (भूः सत्तारूपः। अतिभूः अशरीरः BhārBhāDi.); **3** excessive, extreme दृष्ट्वा क्षणोपि हरिभिस्तरसाथ सीतां चिन्तामिमामतिभुवं सहसाथ सीताम् RāmC. 5.85.

**अतिभूत** (ati-bhūta) *adj.* **1** excelling, surpassing वंशस्तव चापि कान्तो यस्य राजकुञ्जरस्यातिभूतम् ... करकमलतले चक्रम् AvantiKa. 161.12; **2** overcome, overpowered मन्दारोदयसेवितोऽपि न गिरिभ्रान्त्याऽतिभूतः कश्चिद्व्यक्तग्राहविचेष्टितोऽपि विततो नक्षत्रवीथीवलैः ।... सर्वत्राद्भुतसागरः AdbhuSāg. 2.3.

**अतिभूतप्रादुर्भाव** (atibhūta-prādurbhāva) *m.* excessive or intense manifestation तथाहि भवतिरतिभूतप्रादुर्भावे । प्रकर्षगतिश्च । पुनरभिधानात्तेन येन तरतमपूर्वतयैव प्रादुर्भवति न तु क्षणं व्यवतिष्ठते AbhinBhā. i. 343.10 (*on* 7.1)

**अतिभूतरुच्** (atibhūta-ruc) *m.* extreme brilliance वनस्यान्तर्लसत्यत्र ... सुरोधः स्त्रीसखो रत्नैरतिभूतरुचारुणः KāvyKaVr. 85.13 (3.4)

**अतिभूति** (ati-bhūti) *m.* A name of the son of Vimuci and Anukośā विमुचिस्तस्य भामिनी । अनुकोशातिभूतिश्च तनयः PadmP.(Ra.) 30.116; अतिभूतिप्रभृतयो हिंसावादस्य शंसकाः ... दुर्गतिं गताः PadmP.(Ra.) 30.126; **B** name of a Jain sage पराजयेन तेनाथ ह्रिया राज्यं स्वसूनवे । दत्वा गत्वा चातिभूतेः पादान्ते व्रतमाददे TriṣaS'aPuC. iv. 5.69; **C** name of a Jain temple अतिभूतिर्महाभूतिर्विभूत्यम्बरपूर्वकम् । तिलकान्तं बभूवात्र जिनवेश्म चतुष्टयम् (=अतिभूतितिलक) BṛKathāK. 57.134; *f.* name of the goddess Ambā अतिभूतिम् ... आहुः सकलजननीमेव मुनयः DeviPañ. 5.17.

**अतिभूमन्** (ati-bhūman) *adj.* very abundant, excessive, plentiful विदधे ... विश्वक्सेनविमानम् ... हेम्नातिभूम्ना वृतम् EI. iii. 12.7; अतिभूमधूमचयधूम्ररुचेः सहसाकृतेर्विगलिता ललिता ।... सुतरामराजत तदीयतनुः Rāgh. 8.3.

**अतिभूमि** (ati-bhūmi) *f.* [AltGr. II. 1.258] **1** highest point, climax, culmination सर्वोत्सवानामतिभूमिमिवाधिशयाना Kād. 158.19; प्राप्य मन्मथरसादतिभूमिं दुर्वहस्तनभराः सुरतस्य । शश्रमुः S'iśuVa. 10.80; 9.78; स तु स्वभावधीरः सर्वपौरुषातिभूमिः DaśKuC. 35.17; धैर्येण संस्तम्भयातिभूमिगतविप्रलम्भमात्मानम् UttaRāC. 3.43 (13); गतेऽतिभूमिं प्रणये ... नोपचारान् स्मरातुरः संस्मरति स्म लोकः Bhaṭṭi. 11.29; गतेऽतिभूमिं विरहेऽतिदारुणे । वने विनोदान्तरवर्जिते गताः कथं नु देवस्य नभस्यवासराः RāmC. 5.60; मानेऽतिभूमिं गतेऽतिनिर्विण्णः प्रियतमः AmaS'. 5; SūktiMu. 56.7; Subhāṣi. 1177; रागे यातेऽतिभूमिं ... परां निर्वृतिं संतनोमि AmaS'. 100; तदातिभूमिं गतात्कोपाद्वायकोऽप्यप्रसन्न इति JayaMa. 186.22 (*on* 2.10); अन्योन्यं हृदये तयोः स्पृहयतोर्भावेऽतिभूमिं गते पर्याप्तः कुसुमायुधः स भगवान्पारावताराय नः KarṇaSu. 1.21; अयम् ... विधाताप्यधिवसति यतो विस्मयस्यातिभूमिम् PṛthvīVi. 11.93; अनुरागद्रवस्यैता: प्रणयस्यातिभूमयः Pañcā. 58.2; Tantrākhyā. 22.7; अतिभूमिं गतोऽयमस्यानुरागपरभागः किं करोमि CaitaCa. 188.18 (8); आकर्ण्य च तां गिरमतिभूमिं मनोरथानाम् NīlaVi. 126.20; **2** high place, superior status, great eminence अतिभूमिभूमिरेवासनम् ... इत्यभिधाय क्षिताववेोपाविशत् HarṣaC. 319.1; संसर्गेणावाप्तमम्भोऽतिभूमिम् ... फेनहासं व्यतानीत् HarVi. 18.39; एकवीरो हि नारीणामतिभूमिं गतः स्मरः KathāSaSāg. vii. 3.104; अतिभूमिमभूमिमेव वा वचसां वासितवल्लवीस्तनम् । मनसामपरं रसायनं मधुराद्वैतमुपास्महे महः KṛṣṇaKa. 3.37; किमेवमतिभूमिमारोप्यते निदेशवर्ती परिजनः PārvPa. 1.17 (1); **3** violation of proper limits, boldness, excess, extreme state, impropriety अतिभूमिमयं गतो न शक्यते निवर्तयितुम् Kād. 156.18; विपदि न दूषितातिभूमिः S'iśuVa. 8.20; अत्याहिते हि साधूनां अतिभूमिर्न दूषिता PāṇḍaC. 5.46; कथं पुनरेतावतीमतिभूमिमवगाहमानोऽपि वत्सो भवता न निवारितः PrasaRā. 3.48 (148); मन्त्रिपुत्रोऽहमित्यवलेपादतिभूमिं गतोऽस्मि PañcT. 1.136 (145.5); संपातेनातिभूमिं प्रतरसि शठ हे मान्याः खलु वयम् ... मा मैवं हा प्रसीद प्रिय विसृज पुरा कश्चित्प्रविशति PadmPrā. 14.10; **4A** extensive land, region रेमे ताभिः समम् ... मनोज्ञेष्वतिभूमिषु MārkP. 66.11; **4B** place above the earth यद्विहाय धरणिं रणमेघा व्योमगेन सह तेन विनेने । तत्सरीसृपरिपुध्वजमाप्तुं विक्रमोऽपि गतवान् अतिभूमिम् Surath. 11.33.

**अतिभूमिका** (atibhūmi-kā) *f.* highest resort (देवी) जगाद प्रणता नाथ प्रसादस्यातिभूमिका PadmP.(Ra.) 73.43.

**अतिभूमिग** (atibhūmi-ga) *adj.* [*f.* -ā] going beyond bounds, one that has reached the highest point or climax या ... प्रणयेनातिभूमिगा तया ... दीक्षया ते (युवपार्थिवाः) धृतं दधुः MahāP. 34.127; सोऽपि तं वीक्ष्य तपसा वपुषा चातिभूमिगम् । उवाच रचितातिथ्यो राजा मुनिकुमारकम् KathāSaSāg. vi. 2.84.

**अतिभूमिगत** (atibhūmi-gata) *adj.* which has crossed the limits, excessive देव स्वैनैव लोकोत्तरेण धैर्येण संस्तम्भयातिभूमिगतविप्रलम्भमात्मानम् UttaRāC. 3.43 (13)

**अतिभूमिवर्तिन्** (atibhūmivart-in) *adj.* going beyond bounds, getting eminence, [nt. Sak. (Kaśm.) 618.2]

**अतिभूय** (atibhū-ya) *ger.* I having covered अतिभूय तथा पृथ्वीं मनवोऽम्बु व्यवस्थिताः AhirbuS. 4.16; II having superceded संकरस्वभावोक्तिमतिभूय औपम्यं प्राधान्येन प्रतीयते SaraKaṇṭhā. 728.17.

**अतिभूयस्** (ati-bhūyas) *adj.* [*f.* -ī] I very dense (darkness) (सेनान्यः) एकत्वमिव संप्राप्ता स्तिमिरेणातिभूयसा BrahmāṇḍP. iii. 25.45; II very

much, quite abundant, in a great quantity अतिभूयसापि सुकृतेन दुरुपचर एष शक्यते । … न ग्रहीतुम् … नृभिः S'iśuVa. 15.4; हरिवाहनम् …राजा…अतिभूयसा विभवेन स्वभवनमानिनाय TilaMañ. 79.21; अस्माकं मुनिशार्दूल तच्छुश्रूषातिभूयसी SkandP. iii(1). 13.45; अकारवर्जमावृत्तिः स्वराणामतिभूयसी AgniP. 342.7; स चागत्य क्षुधार्तोऽपि चिकीर्षुः संचयाय तत् । क्रोडव्याधाभिपात् किंचिन्न चखादातिभूयसः KathāSaSāg. x. 5.103; xii. 6.326; निजश्रियातिभूयस्या भूरीन् संगृह्य शल्किणः । तत्पदे रत्नकलशं स्वभ्रातरमकारयत RājTa.(Ka.) 7.599; ओजः स्याद्गौढिरर्थस्य संक्षेपो वातिभूयसः Candrā. 4.7; यदा तु वृद्धिरतिभूयसी तदा वृद्धिं गृह्णीयात् ManvaVi. 960.4 (on 8.144); दत्तेन किं खलु भवत्यतिभूयसा Subhāṣi. 274; अन्योन्ययोगादेवं स्याद्भेदसंख्यातिभूयसी KāvyPra. 215.3; iii very large, quite extensive मुष्टिरण्यस्य मध्यस्य माने मन्येऽतिभूयसी PāṇḍaC. 16.187; अथ स्तम्भैरिवोत्तुङ्गैरम्बरस्यातिभूयसः । तत्पातशङ्किना धात्रा स्तब्धैस्तरुभिरावृतम् … रामो दण्डकं वनमाविशत् Rāgh. 7.19; iv very long (time) न हि … अतिभूयसापि कालेन कीर्तनमीदृशं शक्यम् TilaMañ. 156.7; [ Inst. ] greatly, in abundance यत्र …शृङ्गारः परिपूर्णत्वात्सूचनीयोऽतिभूयसा … सा वीथी PratāYaBhū. 130.3; हरिवाहनः … अतिभूयसा विभवविच्छर्दे साकेतनगरान्निरगच्छत् TilaMañ. 181.13.

**अतिभूयस्ता** (atibhūyas-tā) *f.* the state of being very numerous अतिभूयस्तया च राजलोकस्य कृच्छ्रलभ्यनिर्गमप्रवेशावस्थानमास्थानमण्डपमगच्छत् (भूमिपतिः) TilaMañ. 71.3.

**अतिभूयस्त्व** (atibhūyas-tva) *n.* the state of being excessively abundant त्रयाणामेषां निदानादिविशेषाणां सन्निपाते क्षिप्रं श्लेष्मा प्रकोपमापद्यते प्रागतिभूयस्त्वात् CaraS. ii. 4.9 (1922 Ed.)

**अतिभूयिष्ठा** (ati-bhūyiṣṭhā) *adj.* (*f.*) having an abundance of मृदुपदसमाससुभगा युक्तैर्वर्णैर्न चातिभूयिष्ठा … लाटी (रीतिः) SāhiDa. 469.4.

**अतिभूरि** (ati-bhūri) *adj.* i exceedingly abundant, too much more जिते जगद्व्यसनसमाप्तिरम्बुधौ विराधिते भयमतिभूरि भूभुजि RāmC. 15.20; देवी …अतिभूरिणा दुःखसंभारेण निर्भराध्मातहृदया … उत्सङ्गदेशे मलयसुन्दर्याः पर्यास्थत् TilaMañ. 416.1; अनिन्द्यमतिभूरि च सदासीदासमस्माकं धनमादीयतान् BṛKathāS'loSaṁ. 21.70; 27.79; ii too many in number पदातिभिः …वत्सस्वामी समायातो मारिदत्तोऽतिभूरिभिः PadmP.(Ra.) 37.22; 58.37; रक्षोभिर्वेष्टितं दृष्ट्वा तैस्तमतिभूरिभिः । इमे वानरवर्गीणाः …समुद्ययुः PadmP.(Ra.) 60.51; iii too wide (of the mark), too lengthy, too prolix (reply) अप्रसिद्धं विरुद्धं यदत्यल्पमतिभूरि च । नोत्तरं शस्यते बुधैः KātySm. 173; अतिभूरि स्वल्पेऽर्थे वक्तव्ये महावाक्यमसंग्राह्यार्थम् (उत्तरम्) Aparā. 614.25 (on 2.7); कात्यायनेनान्येऽप्युत्तराभासा उक्ताः … गृहीतमिति वाच्ये तु कार्यं ते न कृतं मया । पुरा गृहीतं यद्द्रव्यमित्येतदतिभूरि तु VīraMi. (Vyavahāra.) 63.16; गृहीतमित्येतावन्मात्रेण सत्योत्तरे वक्तव्ये कार्यं तेनेत्यादिकमुत्तरमतिभूरीत्यर्थः SmṛtiCan. iii. 100.7; iv claiming too much अतिभूरि (उत्तरं) यथा शताभियोगे सहस्रं धारयामीति VyavaNi. 58.6; सुवर्णशताभियोगे पञ्चशतानि धारयामीत्यतिभूरि VīraMi. (Vyavahāra.) 62.11; v occurring very frequently अतिभूरिभिः। निधमैरष्टकलकं स्यान्नैपादीकपालकम् SaṁgīRa. i. 276.11 (i 8.9); *n.* large quantity of gold भजतीह (गिरौ) युवा गणयन् हितमतिभूरितानवसुधे वनितां तरसा Yādavā. 6.42 (comm. अतिभूरिः वहुसुवर्णः तानो विस्तारो यस्याः सा वसुधा यस्य तस्मिन्; भूरि प्राज्यसुवर्णयोः ViśvaPra. 131.79)

**अतिभूरितर** (atibhūri-tara) *adj.* extremely great, very heavy (अक्रूरः) तस्याज्ञयैव पुनरीक्षितुमुद्यतस्त्वामानन्दभारमतिभूरितरं बभार Nārāy. x. 72.2.

**अतिभूरित्व** (atibhūri-tva) *n.* excessive abundance अत एव द्वैगुण्येनातिभूरित्वमाह द्विशतमिति BālamBha. 13.1 (on 2.7)

**अतिभूरिनि** (atibhūri-ni) *adj.* having very frequent occurrence of *ni* (musical note) सौराष्ट्री टक्करागेऽतिभूरिनिः SaṁgīRa. ii. 120.2 (ii. 2.173)

**अतिभूरिपयस्** (atibhūri-payas) *adj.* yielding plentiful milk गावोऽतिभूरिपयसो निवृत्तवैराश्च भूपालाः BṛSaṁ. 32.29.

**अतिभूरिभर** (atibhūri-bhara) *m.* excessive weight or load पीतमम्युद्गमन्तमतिभूरिभरादिवाम्भः (पारिजातं ददर्श) HarVi. 31.45.

**अतिभूष्** (ati-bhūṣ-) x. Ā. to deck (oneself) more (than somebody) अहं पतीन् नातिशये नात्यश्ने नातिभूषये MahāBhā. iii. 222.36; to adorn one's self before (another); to adorn richly [MW]

**अतिभूषण** (ati-bhūṣaṇa) *n.* excellent decoration विभूषणानामतिभूषणेन … सा देवकन्या स्वयमागतैव VarāṅgaC. 2.12.

**अतिभूषित** (ati-bhūṣita) *adj.* greatly adorned द्रौणिः … नयनानां सहस्रैश्च विचित्रैरभिभूषितम् (v. l. अतिभूषितम्) (महाकायं भूतमपश्यत्) MahāBhā. x. 6.6.

**अतिभृ** (ati-bhṛ-) III. Ā. to raise oneself above, to be exalted त्वं द्यां च पृथिवीं चाति जभ्रिषे … पवमान ṚV. ix. 86.29; त्वं द्यां च महिव्रत पृथिवीं चाति जभ्रिषे। … पवमान ṚV. ix. 100.9.

**अतिभृत** (ati-bhṛta) *adj.* [*f.* -ā] i well-filled, filled excessively अमुना धनैः क्षितिभृतातिभृता समतीत्य भाति जगती जगती Kirātā. 5.20; (तटिनी) क्षीणां पुनः सातिभृता निकामं भिद्यापराधस्तवदक्षुपूरैः YaśasCam. i. 538.6; ii plentiful सन्मित्रोपगमेन तैरतिभृतैर्भोगैरसल्लोदयैः EI. ii. 334.7.

**अतिभृशनमत्** (atibhṛśa-namat) *adj.* bending down excessively हेमवसने हठादाकृष्टे सत्यतिभृशनमद्गात्रलतिका … त्वं स्मरसि … न कथम् Mukundā. 96.

**अतिभृशम्** (ati-bhṛśam) *adv.* i excessively, exceedingly, extremely प्रिये नातिभृशं हृष्येदप्रिये न च संज्वरेत् MahāBhā. iii. 198.41 = xii. 94.11; निर्विचेष्टं जगत्सर्वं बभूवातिभृशं तदा MahāBhā. xii. 202.23; प्रविश्य वेश्मातिभृशं मुदान्वितम् … न चैव रामोऽत्र जगाम विक्रियाम् Rāmā. ii. 16.61; रुजायां चातिभृशं स्वेदाश्च मृदवो हिताः SuśruS. vi. 12.6; ततः स राजातिभृशं विषण्णः समजायत MārkP. 70.24; गर्भाशये निमग्नं ता (वेदनाः) दहन्त्यतिभृशं तु माम् TaiUBhVā. 81.22(2); जैत्रप्रयाणोत्थिते क्षोणीरेणुभरे नभस्यतिभृशं भूविभ्रमं बिभ्रति । जाता मर्त्यनदी … वियद्दीर्घिका PratāYaBhū. 66.4; द्विषामतिभृशं यशः प्रकटपारदो (? यशःप्रकटपारदो) ध्मापनादुदस्फुटत तारकाकपटतो विहायस्तटे SūktiSu. 100; भूतिं चाखिलपूज्यतामतिभृशं भूभृत्सुतामाश्रितः EI. i. 363.13; viii. 43.8; नलिनी … विद्रुमयुपेन पीडितातिभृशम् । आकिरति बहु परागम् PadyaVe. 648; यन्त्रपुटे पीडितोऽतिभृशम् । आवमति रसमिहेक्षुमेवुरम् PadyaVe. 775; ii very loudly पाण्डुनन्दनः । विनर्दमानोऽतिभृशं सविद्युदिव तोयदः MahāBhā. iii. 146.40; पटहाश्च शङ्खा उद्वेजयन्तोऽतिभृशं विनेदुः VarāṅgaC. 14.11; iii very frequently भेकस्तथैव … शब्दं करोत्यतिभृशं विपराशिमग्नः RākṣaKā. 15; तद्यथातिभृशं दारुणं भारमुद्वहतो हा(ह)रतो वा … श्लेष्माभिस्प(? स्य)न्दमुपगच्छति Hastyāyur. 619.13 (4.7)

**अतिभृशव्यथ** (atibhṛśa-vyatha) *adj.* having intense pain ऊरू … परकीयाविव गुरू स्यातामतिभृशव्यथौ RugVi. 24.4 = BhāvPra.(Bhā.) 7(25).4.

**अतिभृशस्वर** (atibhṛśa-svara) *m.* very harsh sound, ViśvaPra. 104 (given as the meaning of प्रखर)

**अतिभेद** (ati-bheda) *m.* variety that is beyond (the said variety) वाचं कोमलकाव्यबन्धरचनाभेदातिभेदक्रमैः ṢaṭcakraNi. 11 (comm. अतिभेदः तदितरसंस्कृतवाक्यसमुदायः)

**अतिभेदक** (ati-bhedaka) *adj.* causing the ultimate difference द्रव्येषु नित्येष्ववसानसंस्था नित्या विशेषा अतिभेदका स्युः Vidvanmo. 4.37.

**अतिभेदिन्** (ati-bhedin) *adj.* differing very much (from) पञ्चभूतगुणान्वक्ष्ये त्रैगुण्यान्नातिभेदिनः SarvaSiSaṁ. 11.31.

**अतिभेषज** (ati-bheṣaja) *adj.* having excessive medicine यस्यानुवासनो (बस्तिः) दत्तः सकृदन्वक्षमात्रजेत् । … सवातोऽतिमात्रो वा गुरुत्वाद्वातिभेषजः SiddhYo. 75.16.

**अतिभैरव** (ati-bhairava) *adj.* [*f.* -ā] exceedingly terrible, extremely frightful or fierce ततो ध्वनिः … जनितोऽतिभैरवः MahāBhā. vii. 25.57; तां नदीं पितृलोकाय वहन्तीमतिभैरवाम् । तेरुश्चाहननौभिस्ते MahāBhā. ix. 8.33; भेरीशङ्खमृदङ्गास्ते … अवादयन्पारिषदाः … अतिभैरवाः MahāBhā. x. 7.37; वर्षन्तस्ते महासारांस्तमग्निमतिभैरवम् । शमयन्ति ViṣṇuP. vi. 3.37 = BrahmP. 231.37; ततः स्वरोचिः … चण्डालमतिभैरवं दृष्ट्वा निवेश्य तद्रक्षो ददर्श MārkP. 63.34; कपिलो मुनिः । तूर्णमेव क्षयं निन्ये क्रोधाग्निमतिभैरवम् BrahmāṇḍP. ii. 54.3; अतिभैरवः खलु विस्तारी हाहारवः VeṇīSaṁ. 5.115; हिमरजःप्रसरैरतिभैरवम् । धवलयन् गगनम् …शिशिरः प्रमथोऽभवत् Kapphiṇā. 8.55; भद्रकाली … अतिभैरवा SkandP. v(2). 82.34; संसारेऽस्मिञ्जगन्नाथ …अतिभैरवे भ्रमामि BrahmP. 178.18; उदतिष्ठदथोद्धूतसटाभारोऽतिभैरवः KathāSaSāg. xii. 29.40; निरुरुधुस्ते …बलैर्नृपमन्दिरं व्यवहितजनाक्रन्दं भेरीरवैरतिभैरवैः RājTa.(Ka.) 1.366; वर्धमानोऽधरोत्तरम् । विदधे बाहुबलिना सिंहनादोऽतिभैरवः TriṣaS'aPuC. i. 2.602; दूरादालोक्य तस्यास्तमाकारमतिभैरवम् । आवाभ्यामतिभीताभ्यां सेयं कृत्येति निश्चितम् PāṇḍaC. 9.321; मरुद्रुमे … पल्लवन् … कवलितं करभैरतिभैरवैः SaduktiKa. 266.16; *m.* name of God S'iva अभिषेकाद्भवेच्छुद्धी रण्ड(ण्डाया) अतिभैरव KulaCūT. 3.16.

**अतिभैरवत्व** (atibhairava-tva) *n.* i the state of being excessively terrible or frightful रिक्तप्रसक्तकलहैरतिभैरवत्वात् सर्वंस्थितिक्षयविधातृगुणा त्वमेव SamaMā. 4.11; ii the state of being superior to Bhairava (S'iva), SamaMā. 4.11.

**अतिभैरवाराव** (atibhairavārāva) *adj.* causing an excessively dread-

ful noise अतिभैरवारावमतिप्रतिहतपरस्परगतिम् CaraS. iii. 3.7 (1922 Ed.)

**अतिभैरवम्** (ati-bhairavam) *adv.* in a very dreadful manner, very fiercely चेकितानोऽनुविन्देन युयुधे त्वतिभैरवम् MahāBhā. vii. 13.43; नदमानोऽतिभैरवम् । कः इत्येष पुमान् विष्णो VāyuP. i. 24.55 = LiṅgaP. i. 20.61; वृकोदरेण ··· अतिभैरवम् ··· सरः समन्तादवलोडितम् VeṇīSaṁ. 6.109; स···जुघुरे चातिभैरवम् Bhaṭṭi. 14.82; दंष्ट्राकरालवक्त्राश्च जगर्जुश्चातिभैरवम् PadmP. ii. 18.9; दुःसहः शूकरो राजन् गर्जते चातिभैरवम् PadmP. ii. 43.3; अयं रिपुगणं मूर्ध्नि चर्वयत्यतिभैरवम् YuktiKa. 163.16; हनूमता प्रवेशिता ··· विद्विषां मनःसु भीतिर्निर्दतातिभैरवम् RāghPāṇ.(Ka.) 8.11.

**अतिभैषज्यकर्षण** (atibhaiṣajya-karṣaṇa) *n.* emaciation due to excessive use of medicins अतिस्नेहादतिभैषज्यकर्षणात् ··· । व्रणा न प्रशमं यान्ति CaraS. vi. 25.33.

**अतिभोग** (ati-bhoga) *m.* A possession beyond the (time) limit पशुभूमिस्त्रीणामनतिभोगः । इति पश्वादीनां त्रयाणामतिभोगो नापेक्षितः । अल्पभोगेनापि स्वत्वं भवति VyavaNi. 132.14; B excessive enjoyment नातिद्वेषो नातिरागो नातिभोगेषु सक्तिः···इति सिद्धस्य लक्षणम् TantrRā. 35.73.

**अतिभोगप्रिय** (ati-bhogapriya) *adj.* who taks excessive delight in enjoyment अतिभोगप्रियाय नमो नमः SāmaraU. 261.4.

**अतिभोगभार** (ati-bhogabhāra) *m.* excessive burden of enjoyment आसीदवन्यामतिभोगभाराद्दिवोऽवतीर्णा नगरीव दिव्या ।··· अयोध्या JānaHa. 1.1.

**अतिभोगिन्** (ati-bhogin) *adj.* too much given to enjoyment, too much pleasure-loving यस्मिन् कृषीवला राष्ट्रे···नातिभोगिनः ।···वसेत्तत्र विचक्षणः MārkP. 34.116.

**अतिभोजन** (ati-bhojana) *n.* excessive eating, overeating यदास्य··· प्रादुर्भवन्ति व्याधयो वानेकविधाः ··· अतिभोजनम् ··· यमदेवत्यान्यद्भुतानि प्रायश्चित्तानि भवन्ति ṢaḍviBr. v(6). 4.2; अनारोग्यमनायुष्यमस्वर्ग्यं चातिभोजनम् ManuSm. 2.57; नाभोजनेन कायाग्निर्दीप्यते नातिभोजनात् CaraS. vi. 15.21 = AṣṭāSaṁ. ii. 76.11 (4.12); वातातपरजोधूमावश्यायातिसेवनातिभोजन°···°मक्षिकाद्यावाधाः परिहरेत् SuśruS. i. 19.20; वाक्पाणिपादचापल्यं वर्जयेच्चातिभोजनम् YājñaSm. 1.112; पक्षैकं चातिभोजनम् । वर्जयेत् HāriS. iii. 2.163; न चातिभोजनं नित्यं शस्यते सर्वगुल्मिनाम् KāśyaS. 114A. 12; अनिन्द्यैरामन्त्र्यमाणोऽपि चातिभोजनं वर्जयेत् BālaKri. i. 98.15 (*on* 1.111); मुखातिमाधुर्यमिहातिभोजनं प्रमेहरूपाणि भवन्ति पूर्वतः KalyāKā. 11.7; 11.6; अतिभोजनात् ।··· हन्त्यग्निं कुपितः कफः RugVi. 4.13; अनारोग्यमनायुष्यम् ··· अतिभोजनम् SkandP. iv. 36.19; KūrmaP. 527.5 (2.12); BhaviP. 116A. 11 (i. 65.24); PadmP. i. 51.65; व्रती ··· अतिभोजनम् ।··· परिवर्जयेत् SaurP. 17.16; नगरोत्सवयात्रासु विवाहेष (? ष्व) तिभोजनात् । जनता याति ··· मान्यम् NarmaMā. 2.75; अतिभोजनं तृप्तौ सत्यामपि भोजनम् SmṛtiCan. v. 357.20 = CaturCin. iii(1). 1025.11; द्वादश मूर्च्छाः संभवन्ति । तद्यथा···अतिभोजनात् Hastyāyur. 93.1 (1.13); अतिभोजनादुग्धोपयोगेभ्यः पित्तं प्रकुपितम् Hastyāyur. 122.20 (1.17); 140.17 (1.18); 168.18 (2.7); रोगाः स्युर्विषमातिभोजनविरुद्धाजीर्णभुक्तादिभिः MātaLī. 1.13; वारद्वयेऽप्यतिभोजनं न कुर्यात् ManvaMu. 45.13 (*on* 2.56); अतिभोजनम् 'जठरं ··· अवशेषयेत्' इत्यादिविहितभोजनादधिकं भोजनम् वर्जयेत् VīraMi. 203.12 (*on* 1.112); निषिद्धानि ··· अतिभोजनं च NityoNi. 133.12.

**अतिभोजनतस्** (atibhojana-tas) *adv.* on account of too much eating अतिभोजनतो विप्र···रोगा हि सर्वे जायन्ते AgniP. 279.31; ViṣṇuDhaP. ii. 56.12.

**अतिभोजनसमुत्था** (atibhojana-samutthā) *adj.* (*f.*) arising from excessive eating एतैर्लिङ्गैरतिभोजनसमुत्थां मूर्च्छां विद्यात् Hastyāyur. 93.6 (1.13)

**अतिभोजनादि** (atibhojanādi) *adj.* too much eating etc. अतितर्पणम् । अतिभोजनादि BālamBha. iii. 104.32 (*on* 3.79)

**अतिभ्रमण** (ati-bhramaṇa) *n.* excessive wandering अतिभ्रमणखिन्नास्ते तप्ताश्च सूर्यरश्मिभिः GaṇeP. ii. 20.48.

**अतिभ्रष्ट** (ati-bhraṣṭa) *adj.* extremely depraved योऽतिभ्रष्टः ···। यः संपूज्याभिरामं पठति ··· पदमिह लभते···स पूज्यम् AdhyāRā. i. 1.56.

**अतिभ्रस्ज्** (ati-bhrasj-) vr. P. (*caus.*) to fry excessively समितायामर्धमितं घृतं क्षिप्त्वातिभर्जयेत् BhojanKu. 48.10.

**अतिभ्रान्तभ्रु** (atibhrānta-bhru) *adj.* (*n.*) with excessively moving eye-brows संदष्टाधरमुक्तसीत्कृतमतिभ्रान्तभ्रु नृत्यत्करं वेश्यानां धृतिधाम पुष्पधनुषः प्राप्नोति धन्यो रतम् SṛṅgāTi.(Ru.) 1.127.

**अतिभ्रान्ति** (ati-bhrānti) *f.* extreme confusion अतिभ्रान्तिं च नात्राहं मानये तव मानसे PrabhāC. 125.23.

**अतिभ्रुकुटी** (ati-bhrukuṭī) *f.* knitting of the eye-brows दष्टौष्ठतातिभ्रुकुटीभुजास्फालनताडनाः ।··· अनुभावा इहोदिताः BhaktiRaSi. iv. 5.11.

**अतिभ्रू** (ati-bhrū) *adj.* having extra-ordinary eye-brows भ्रुवै ब्राह्मण्यै ।··· भ्रुवे अतिभ्रुवे ब्राह्मणाय MahāBh. i. 314.21 (*on* i. 4.3); अतिभ्रुवां ब्राह्मणानाम् Nyās. i. 266.1 (*on* i. 4.5); स्व्याख्याविस्त्येव···अतिभ्रुवे देवदत्ताय JainaVyā. 35.2 (*on* i. 2.96)

**अतिमघ** (ati-magha) *adj.* which has passed through the asterism Maghā सः···क्षितिपतिः स्तुत्वेति देवम्···। उक्तो ग्रीष्मवसन्तयोरतिमघाश्लेषे विधौ··· निजपुरम् ··· ययौ DvyāśraKā. 5.142.

**अतिमङ्गल** (ati-maṅgala) *adj.* [*f.* -ā] i very auspicious सः ··· पदानि । ददर्श रामस्य भुवोऽतिमङ्गलानि AdhyāRā. ii. 9.2; तुङ्गरत्नविभूषणेन गलेन चाप्यतिमङ्गलाम् (प्रकृतिं वदन्ति) ĪśānŚiPa. i. 15.61; ii extremely satisfactory विवक्ष्यते तदस्माभिः ···। अध्याये हि तृतीयेऽतः सर्वमप्यतिमङ्गलम् PañcDa. 12.88; भगवान्नारायणो जिज्ञास्य इत्यशेषमतिमङ्गलम् TattvPrakā. 224A. 12 (*on* iv. 4.23); पुराणवचनानामर्थम् ··· तैत्तिरीयारण्यकमन्त्रतात्पर्यविषयत्वप्रदर्शनेन स्थिरीकरोतीत्यशेषमतिमङ्गलम् ŚivārkaMaDī. ii. 506.24 (*on* iv. 4.22); *n.* extreme happiness, extremely happy or auspicious state गन्धर्वराज वृणुषे को वा तृप्तोऽतिमङ्गले BrahmVaiP. i. 12.21.

**अतिमङ्गलप्रिय** (atimaṅgala-priya) *adj.* fond of extreme auspiciousness इमं गवां प्रभवविधानमुत्तमं पठन् सदा शुचिरतिमङ्गलप्रियः MahāBhā. xiii. 76.32.

**अतिमङ्गल्य** (ati-maṅgalya) *adj.* very auspicious अतिमङ्गल्यः···अतिशयमङ्गलजनके त्रि [ŚabdaKaDru.]; *m.* the Bilva tree (*Aegle* or *Crataeva marmelos*) पूतिवातोऽथ मङ्गल्यो (v. l. अतिमङ्गल्यो) मालूरश्च महाफलः ParyāRaMā. 27.

**अतिमज्जवपुस्** (atimajja-vapus) *adj.* whose body is rich in marrow मध्यान्ते सुखिनोऽतिमज्जवपुषः सक्षारमेदोधिकाः ··· नवाङ्गुलमितं लिङ्गं वृषा बिभ्रति RatiRaha. 3.34.

**अतिमञ्च** (ati-mañca) *m.* seat higher than a *mañca* (a raised platform) मञ्चा मालकाः प्रेक्षणद्रष्टृजनोपवेशननिमित्तम् अतिमंचाः तेषामप्युपरि ये AupSūṬ. 116.13; JñātāDhaṬ. 40A. 2.

**अतिमञ्जु** (ati-mañju) *adj.* very pleasing, very beautiful मदमन्थरगीतशेषम् । आधित्सुभिस्तदनु संधिमिवातिमञ्जुनिःश्वासमारुतहृतैरलिभिः शिशिञ्जे HarVi. 26.90; ते (देवाः) ··· स्ववक्त्रमादर्शतलेऽथ दर्शं दर्शं बभञ्जुर्न तथातिमञ्जु NaiṣC. 10.20; इयमतिमञ्जुललना चिरविरहेण न खेदनीया GopāKeCan. 131.31.

**अतिमञ्जुल** (ati-mañjula) *adj.* very sweet, very pleasing भामिनि ननु वहपराद्धं भवत्या चित्तजन्मनो यद् ··· कदर्थितवती ··· परभृतरुतमतिमञ्जुलैः प्रलापैः DaśKuC. 74.3; इयमतिमञ्जुलहृदया संकुचितपाणिनाभिमृष्टा । मधुराधरविनिवेशे पूली मूलं हि सौख्यस्य GopāKeCan. 70.31; 63.22; (त्वया अभिनीयमानमवलोकयामः) रम्यं नाट्यप्रबन्धमतिमञ्जुलसंविधानम् PrasaRā. 1.7.

**अतिमञ्जुलम्** (ati-mañjulam) *adv.* in a very pleasing manner आकारिता स्फुटोत्तरमतिमञ्जुलमाशु दर्शयेदबला KandaCū. v. 3.29.

**अतिमञ्जुला** (ati-mañjulā) *f.* *Rosa glandulifera* शतपत्री – महाकुमारी गन्धाढ्या लाक्षापुष्पातिमञ्जुला BhāvPra.(Bhā.) 6(5). 21; BhāvPraNi. 83.22.

**अतिमणि** (ati-maṇi) *m.* excellent gem यदिदं भासते किंचित्तत्स्यैव निरामयम् । कचनं काचकस्येव कान्तस्यातिमणेरिव YogVā. iii. 21.68 (comm. अतिशयितो मणिरतिमणिः)

**अतिमण्डन** (ati-maṇḍana) *n.* very good ornament (गजासुर उवाच) सदैव निर्मला चास्तु सदैवास्त्वतिमण्डनम् (कृत्तिः) SkandP. iv. 68.22; सदैव निर्मला चास्तु सदैवास्त्वतिमण्डनाम् (? नम्) (कृत्तिः) ŚivaP. ii(5). 57.60 (292A. 8)

**अतिमण्डल** (ati-maṇḍala) *adj.* having a bigger orb तत्र त्वेकं महापद्मं मध्ये पद्मवनस्य च । कोटिपत्रप्रकलितं तरुणादित्यवर्चसम् । नित्यं व्याकोशमधुरं चरत्वादतिमण्डलम् VarāP. 79.6.

**अतिमत** (ati-mata) *adj.* very much appreciated तरुणान् ··· स्तनितभीतपुरंध्रिनिगूहनस्थितिमतोऽतिमतोऽभिदधौ घनः HarVi. 3.54; वितीर्यात्तरामहतिमतिमते हि ते शस्यमानस्य वासम् ··· भारती तीर्थकृत् CaturJiStu. 95 (comm. अतिमते अतिशयेन अभिप्रेते)

**अतिमति** (ati-mati) *f.* i haughtiness, arrogance नि षू नमातिमतिं कयस्य चित् ṚV. i. 129.5; ii (prob.) great design or thought तत्र कयाचिदतिमत्यात्यन्तमुक्तैव वृद्धिर्निश्चेतव्या ManuBh. ii. 135.10 (*on* 8.144); *adj.* having excellent wisdom, very wise ब्राह्मणः को भवेद्राजन् वेद्यं किं च युधिष्ठिर । ब्रवीष्यतिमतिं त्वां हि वाक्यैरनुमिमीमहे MahāBhā. iii. 177.15.

**अतिमतिमत्** (atimati-ma(n)t) *adj.* possessing great wisdom, very wise, very intelligent स संदिदेशाभिमतं (v. l. संदिदेशातिमतिमान्) नीलम् Rāmā. iv. 28.28; गजाध्यक्षोऽतिमतिमाञ्शरण्यः सुजितेन्द्रियः Hastyāyur. 43.23 (1.5)

**अतिमतिमुनि** (atimati-muni) *m.* very wise sage आयुर्वेदाब्धिमध्यादतिमतिमुनयो योगरत्नानि यत्नाल्लब्ध्वा स्वे स्वे निबन्धे दधुरखिलजनव्याधिविध्वंसनाय BhāvPra.(Bhā.) 2. 1.

**अतिमत्त** (ati-matta) *adj.* [*f.* -ā] i greatly in rut दृष्ट्वा हि तान्मत्तगजेन्द्ररूपान् पञ्चाभिपन्नान् (v. l. पञ्चातिमत्तान्) इव वारणेन्द्रान् MahāBhā. i. 178. 9; अतिमत्तमातङ्गमनोहरगण्डमण्डले VāsaDa. 179. 2; न जीयते तेन स तापसेन गोमायुनेव द्विरदोऽतिमत्तः RāmC. App. ii. 38. 7; वज्राङ्कुशि ... विधत्स्व प्रयत्नम् ... तनुमदवने ... असि(? ति)मत्ते । अध्यारूढे ... द्विपेन्द्रे CaturJiStu. 32; शक्यो वशीकर्तुमिभोऽतिमत्तः सिंहः फणीन्द्रः कुपितो नरेन्द्रः SubhāRaSaṁ. 206; (कोलाहलः) बृंहतामतिमत्तानां कुञ्जराणाम् YogVā. iii. 43. 11; आघ्राय गन्धं द्विरदोऽतिमत्तो मदं त्यजेत् केसरिणो यथोग्रम् SārṅgaPa. 1891; गजाधिराजैः ... रदारदि चातिमत्तैः कृत्वा क्षणादगमताम् ... नाशम् RājTa.(Jo.) 1174; KośaKaTa. 2. 5410; ii highly intoxicated (by passion) इमां ... अतिमत्तां महोदरीम् । राक्षसीं पुरुषव्याघ्र विरूपयितुमर्हसि Rāmā. iii. 17. 20; अतिमत्ताङ्गनापाङ्गभङ्गतुल्याः ... भोगास्तापोपचयकारिणः PadmP.(Ra.) 29. 75; ततोऽतिमत्ता कुलटा सदा कामातुरा ... जगाम शरणं मुनेः BrahmVaiP. iv. 23. 141; प्राणिनः ... बभूवुश्चातिमत्ताश्च क्रीडासक्ताः परस्परम् DeviBhāP. iv. 6. 4; (शूर्पणखा) अतिमत्तेति वक्तव्यम् PrasaRā. 5. 33(10); iii very arrogant, haughty ऐश्वर्यमदवुष्टात्मन्नतिमत्तोऽसि वासव PadmP. v. 4. 15; तां शिबिकां वहन्त्यः नार्योऽतिमत्ता बलवत्तराश्च (अभवन्) KalkiP. ii. 2. 15; अतिमत्तासुरसमितिध्वंसाय ... अनेन प्रभोर्मनो घटितम् YudhiVi. 3. 111; सः (विराटः) प्रजहार ... अक्षेण धर्मजमतिमत्तायां निजबुद्धौ YudhiVi. 6. 56; iv greatly agitated ये च मध्यस्थास्तेषाम् ... तद् वयमियन्तं कालं प्रमाद्यन्त एवोदास्महे स्म इति निर्विद्यमानानां चित्तमतिमत्तं प्रतिष्ठते DharmoPra. 2. 16.

**अतिमत्तवत्** (atimatta-vat) *adv.* like a very haughty person (सः) खड्गं विधुन्वन्नुत्थाय प्रचचालातिमत्तवत् BrahmāṇḍP. iii. 27. 17.

**अतिमत्य** (atimat-ya) *ger.* having disregarded स एष आहुतिमतिमत्योत्क्रान्तः JaimiUBr. i. 34. 3.

**अतिमत्सर** (ati-matsara) *m.* great jealousy महासुरस्य द्विषतोऽतिमत्सरादिवान्तमासूचयितुं भयंकरः KumāSaṁ. 15. 17; दम्भ(:) स्तम्भोऽतिमत्सरः। ...अविमुक्ते स्थिता विघ्नाः MatsyaP. 184. 40; सहाया यत्रातिमत्सरभृताः ... तत्राचिरात् समुदयन्ति न के ह्यनर्थाः RājTa.(S'rī.) 4. 380; अतिमत्सरोऽस्यन्तास्या VīraMi.(Tīrtha.) 152. 4.

**अतिमत्सरतस्** (atimatsara-tas) *adv.* because of great jealousy अभ्युत्तताम...अस्तमयाय शत्रोः। ...अतिमत्सरतः ... अतिमायः HarVi. 34. 29.

**अतिमत्सरा** (ati-matsarā) *adj.* (*f.*) very jealous न चातिमत्सराभिश्च भाव्यं कौटिल्यबुद्धिभिः PadmP. v. 23. 108.

**अतिमथन** (ati-mathana) *n.* excessive scrutiny लक्षितानां (गुणानां) चतुर्णामतिमथने ज्ञानशक्तिवितितिरूपत्वं व्यक्तम् NyāyPari. 504. 18; कश्चिद्धर्मोऽपि धर्मो स्फुटमतिमथने स्यान्यनिर्वाहकत्वम् TattvMu. 1. 9; 1. 62.

**अतिमथित** (ati-mathita) *n.* hole औदुम्बरस्य वीणादण्डस्य दशातिमथितानि । एकैकस्मिन्नतिमथिते दशदश मौञ्जास्तन्तून् प्रवयति ĀpaSS. xxi. 17. 8–9; *adj.* very harmful अतिमथिते कर्तव्ये भवति खलानां अतीव निपुणा धीः। तिमिरे हि कौशिकानां रूपं प्रतिपद्यते दृष्टिः SūktiRa. 32. 55.

**अतिमथितुम्** (ati-mathitum) *inf.* to churn thoroughly अतिमथितुमारब्धे लोभाद्वै क्षीरसागरम् । उत्पन्नं कालकूटं तु SkandP. v(2). 14. 6.

**अतिमथ्य** (atimath-ya) *ger.* i having shattered completely सिन्धुराजमतिमथ्य हेलया खड्गमन्त्रभृता युधि येन । उत्तमेन पुरुषेषु वि (? पुरुषेष्विव) लेभे श्रीर्यशो(शो) सुवनपावनशङ्खः EI. xiv. 301. 35; ii having churned thoroughly, EI. xiv. 301. 35.

**अतिमद्** (ati-mad-) iv. p. to be infatuated हा, तिलमात्रभवद्दानेनानेनानेना जातोऽजातोदरहितो हितो भवन्नातिममाद CaitaCa. 39. 4(2)

**अतिमद** (ati-mada) *adj.* having profuse ichor ते गजा गिरिसंकाशाः क्षरन्तोऽतिमदा मदम् । ...विमदीकृताः MahāBhā. vii. 25. 6; नन्दः । न धृतिमुपययौ न शर्म लेभे द्विरद इवातिमदो मदान्धचेताः Saund. 9. 50; *m.* i deep intoxication उद्धतैरिव परस्परसङ्गादीरितान्नुभयतः कुचकुम्भैः । योषितामतिमदेन जुघूर्णुर्विभ्रमातिशयपुंषि वपूंषि S'iśuVa. 10. 32; या पर्युत्सुकचित्तातिमदेन मदनेन च । आत्मनाभिसरेत् कान्तं सा भवेदभिसारिका StavMā. 275. 7; ii excessive pride or arrogance प्रादुर्भूते हिरण्यद्विरदमतिमदध्वान्ततन्त्रं निहन्तुम् ...मम भुवनगुरावस्तु भक्तिर्नृसिंहे VarivaRaha. 1; कृतमतिमददोषपोषणेन ... प्रशममुपेहि जहीहि रामदारान् Rāgh. 14. 44; न तृप्तिं जानन्ति ध्रुवमतिमदाक्षिप्तमतयः Rāvaṇā. 23. 52; [Abl.] due to great pride प्रमादादज्ञानादुरितपरिपाकादतिमदाद् विनश्यत्तावेशाद्यदपकृतमेतेन शिशुना KamVa. 6. 6.

**अतिमदन** (ati-madana) *adj.* superior to Cupid, surpassing the god of love अभिमतपदद्दर्शनैरयत्नैरतिमदनं स्वममंस्त कन्दराजः MadhuVi. 6. 68.

**अतिमदनोपनिषद्** (ati-madanopaniṣad) *adj.* surpassing the secret of love or Kāmaśāstra कलमधुरगिरां कलाप्रसङ्गात् अतिमदनोपनिषत्परं रहस्यम् ... श्रुतिषु चकार Yādavā. 24. 40.

**अतिमदप्रद** (atimada-prada) *adj.* causing great intoxication पीडितोऽनिलः ऊर्ध्वं प्रयाते कोष्ठान्मद्यैवाऽतिमदप्रदैः CaraS. vi. 17. 38.

**अतिमदभाज्** (ati-madabhāj) *adj.* possessed of abundant ichor देवः सोऽयमिभाननोऽतिमदभागव्याजमव्यात्स वः Damaru. 19.

**अतिमदवश** (atimada-vaśa) *m.* influence of great passion अत्र विभाति व्योमगवृन्दम् ... कचिदतिमदवशपरिचितकलहम् PadmP.(Ra.) 42. 69.

**अतिमदाकुलिता** (atimadākulitā) *adj.* (*f.*) excited with deep passion स्व नीचरते चटयत्यघनं जघनं प्रमदातिमदाकुलिता RatiRaha. 10. 12.

**अतिमदान्वित** (atimadānvita) *adj.* full of great pride, extremely arrogant स वायमानो बाणौघैर्दानवोऽतिमदान्वितः । राजपुत्राय चिक्षेप दण्डम् MārkP. 127. 18.

**अतिमदावलेप** (atimadāvalepa) *m.* pride due to excessive arrogance वाह्यात्मनामशकुनैर्विदितोऽप्यपायः सेनाचरैर्न ददृशेऽतिमदावलेपात् RāmC. App. ii. 37. 41.

**अतिमद्भक्त** (ati-madbhakta) *adj.* extremely devoted to me सर्वत्र समता मन । विशेषतोऽतिमद्भक्तः कलत्रापर एव च BrahmVaiP. iv. 57. 31.

**अतिमद्य** (ati-madya) *n.* too much of liquor विच्छिन्नमद्यः सहसा योऽतिमद्यं निषेवते । तस्य पानात्ययोद्दिष्टा विकाराः संभवन्ति हि SuśruS. vi. 47. 49; अतिमद्यं हि पिबतो बुद्धिलोपो भवेत्किल S'ukraNi. 1. 114 (114); कट्वम्लतीक्ष्णोष्णविदाहिरूक्षक्रोधातिमद्यार्कहुताशसेवा । आमाभिघातः RugVi. 28. 9.

**अतिमद्यपान** (ati-madyapāna) *n.* excessive drinking of wine अतिमद्यपानात् ... नेत्रे विकाराञ्जनयन्ति दोषाः RugVi. 59. 2.

**अतिमधुर** (ati-madhura) *adj.* i very sweet (taste etc.) श्लेष्मशूलिनाम् । न वनातिमधुराणि शयनं च विवेयकम् HāriS. iii. 7. 45; प्रकाशयाञ्चक्रुः क्रमेण कामाः। ... अतिमधुरमधुरसामोदनिर्हारिणी श्लोककलशी HarṣaC. 292. 9–10; अतिमधुरमनल्पशमनं मुक्तमसात्म्यं न पुष्येत् वपुषः AṣṭāSaṁ. i. 63. 8 (1. 10); अतिमधुरत्वं करामिघातैः ... रत्नप्रधानः सलिलमवादयदन्वितं सुगीता PadmP.(Ra.) 42. 82; राजसः ... सुखेऽतिमधुरं चार्द्रं भक्ष्यम् SarvaSiSaṁ. 11. 21; ननु गतिरियं तदीया वाणी सैवेयमतिमधुरा Kāvyālaṅ.(Ru.) 11. 23; (राजा) अश्वनीनमिदं चारुश्लोकयुगलमतिमधुरगीततरङ्करङ्गिताक्षरं गायन्तमद्राक्षीत् NalaCam. 6. 11(53); क्षीरकदम्बकसूरिः ...नारदाभिधानाय च निखिलभुवनव्यवहारतन्त्रमागमसूत्रमतिमधुरस्वरापदेशमुपदिशन् YaśasCam. ii. 353. 14; गायन्तीः कलवीणयातिमधुरं हुंकारमातन्वतीः ... सरस्वत्यादिकाः पूजयन् । मातङ्गीम् ... भजे TripuMāPūSt.(Saṅ.) 17; तेषां विशीर्यमाणानामतिमधुरसुरभिसुगन्धिबहुलारुणरसोदेनारुणोदा नाम नदी ...इलावृतमुपप्लावयति BhāgP. v. 16. 17; भगवत्यपि वाणीवान्मुमोच ... इत्वातिमधुरं नादं देवकार्यार्थसिद्धये DeviBhāP. v. 13. 16; एवम् अतिमधुरं गोक्षीरं ... दर्शयितव्यम् SāstrDi. 154. 14 (on i. 1. 7); किमतिमधुरमन्नं भोजनान्ते प्रदेयम् VidaMuMa. 2. 41; गायन्तस्तेऽतिमधुररागैर्विपञ्चवन्धुरं । हृषीकेशस्य हृदयं जहुः TrisaS'aPuC. iv. 1. 869; वातोऽतिमधुरध्वानस्तज्जन्योन्मृष्टमुच्चरेत् SaṁgīRa. iii. 259. 19 (8. 159); अयि तरुदेवते, इदमतिमधुरं ते पायसान्नम् GopāKeCan. 100. 18; इदमतिमधुरं गवां मुरारे दधि नलिनीदलभाजनं विचेहि GopāKeGan. 89. 2; इदमतिमधुरं निशम्य वाक्यम् YogVā. i. 6. 55; अतिमधुरस्तानां सेवया पत्रभङ्गैः ... भवति मुदितचेताः कामचारेण नागः MātaLī. 9. 1; वाप्पीयूषं च सानुग्रहमतिमधुरं पायितं श्रोत्रपेयम् CaitaCan. 212. 16(9); उदाहरणे कोकिलस्य कोकिलत्वविधानमनुपयुक्तं सदतिमधुरपञ्चमध्वनिद्यालितया सकलजनहृद्यत्वं गर्भीकरोति Kuval. 166(3); अतिमधुरकण्ठकूजितविलासवत्या सरोजदृशा प्रेम्णा...क्रीतः प्रेयान् S'ṛṅgāMañ.(Bho.) 5. 20; हिंगूजीरकसहितं विमलामलकं कपित्थमतिमधुरं ... शूलघ्नं तेऽपसानि MṛtyuMāPūSt. 30; मापाः पिच्छिलशीतलातिमधुरा वृष्यास्तथा बृंहणा KalyāKa. 4. 23; ii very agreeable (essence) मूलेऽतिमधुरस्विपि विषयोपभोगसुखेषु कारास्वप्येष्विव तृणबुद्धि ... अजीगणत् (राजा) TilaMañ. 21. 13; तत्र लिङ्गे भवेत्स्निग्धकल्कोऽतिमधुरः स्थिरः । तस्य धारणमात्रेण विषत्रेण प्रशाम्यति YuktiKa. 105. 12; तत्र राजोऽतिमधुरः पित्तश्रमतृषापहः BhojanKu. 164. 23; मध्येऽतिमधुरास्तथा । इक्षवस्ते BhojanKu. 157. 4; पुण्ड्रोऽतिमधुरः कफकृत्पित्तनाशनः BhojanKu. 156. 11.

**अतिमधुरतर** (atimadhura-tara) *adj.* very much sweet उत्तङ्गे तव गङ्गे पायं पायं पयोऽतिमधुरतरम् । कदाहं चिराय शयिताहे RasGaṅ. 507. 4.

**अतिमधुरत्व** (atimadhura-tva) *n.* extreme sweetness औषधस्य ... अतिमधुरत्वात् ...दुर्योगादियोगाद्वुलम्बेत KāśyaS. 156A. 35.

**अतिमधुरनिषेव** (atimadhura-niṣeva) *m.* consuming too much sweet (food) अतिमधुरनिषेवात्सन्ततं वह्निसादः YaśasCam. i. 518. 7.

**अतिमधुरानन** (atimadhurānana) *n.* mouth with an excessive

-sweet taste निद्रालुतारुचिरतीव शिरोगुरुत्वं मन्दोष्णतातिमधुराननरोमहर्षाः Kalyā-Kā. 9. 57.

**अतिमधुरास्वाद** (atimadhurāsvāda) *adj.* having a very sweet taste न तथा सुखयन्त्येताः पीयूषरसवीचयः। यथातिमधुरास्वादः संतोषो दोषनाशनः (comm. अतिमधुरः आनन्दप्रचुरः आस्वादोऽनुभवः यस्य) YogVā. ii. 15. 5.

**अतिमधुव्रता** (ati-madhuvratā) *adj.* (*f.*) surpassing the honey-bee अभवत् तस्य पादाब्जोपासनेऽतिमधुव्रता। कलत्रं सुव्रता नाम लोकोत्तरसतीव्रता (comm. मधुव्रतं भ्रमरमतिक्रान्ता) TriṣaS'aPuC. iv. 5. 27.

**अतिमधुसंकाश** (ati-madhusaṅkāśa) *adj.* resembling very much the (tawny red colour of) honey अतःपरममीषां (गजानाम्) हि वक्ष्यन्ते दन्तजातयः। स्निग्धौ सरुधिरौ दन्तौ ... मधुसंकाशवर्णौ च नैव रूक्षौ न चेतरौ। न चातिमधुसंकाशौ Hastyāyur. 628. 27 (4. 10)

**अतिमध्यंदिन** (ati-madhyandina) *n.* exact mid-day or noon नातिकल्यं नातिसायं नातिमध्यंदिने स्थिते। नाज्ञातेन समं गच्छेन्नैको न वृषलैः सह ManuSm. 4. 140.

**अतिमध्यमवृष्टि** (atimadhyama-vṛṣṭi) *f.* showers of absolutely medium degree अनिलहृतं सस्यचयं त्वतिमध्यमवृष्टिसंपन्नम्। शशितनये सस्यपतौ VasiS. 11. 28.

**अतिमन्** (ati-man-) IV. VIII. Ā. **i** to disdain, to despise, to disregard, to disrespect, to look down upon, to offend न हि त्वा पूषन्नतिमन्य आघृणे R̥V. i. 138. 4; किं नो भ्रातरगस्त्य सखा सन्नति मन्यसे R̥V. i. 170. 3; अति वा यो मरुतो मन्यते नो ब्रह्म R̥V. vi. 52. 2 (but Sāy. अति मन्यते अतीत्य स्वस्याधिक्यं मन्यते अस्मत्तोऽपि स्वयमधिक इति बुध्यते); जनंजनं जन्यो नाति मन्यते R̥V. x. 91. 2 (but Sāy. नातिमन्यते न विसृज्य गच्छतीत्यर्थः); तद् बृहत् पूर्वं ससृजानं रथंतरमत्यमन्यत AitBr. 19. 6 (524); ता एनमत्यमन्यन्त TaiBr. I. vi. 4. 1; एतदेवाहं नातिमन्य इति JaimiUBr. 1. 6. 5; तदिदं मनो वाचमत्यमन्यत क्षत्रं ब्रह्म JaimiUBr. 3. 3. 16; गायत्री छन्दांस्यत्यमन्यत TaiĀ. v. 2. 3 (594. 1); BaudhS'S. iii. 50. 15; BhārGS. 2. 27; (राधेयः) दुर्योधनमुपाश्रित्य पाण्डवानत्यमन्यत MahāBhā. i. 122. 47; मद्विधं योऽतिमन्येत धर्मनित्यं जितेन्द्रियम् Rāmā. iii. 41. 43; तस्याज्ञया समस्तार्थानहंकारोऽतिमन्यते LiṅgaP. ii. 10. 14; यः ...पुत्रदारानतिमन्यते ...तस्योद्विग्नं मण्डलमभावायोपतिष्ठते AnargharRā. 4. 14 (39) (comm. अपहरति); **ii** to consider (oneself) superior (to something), to consider with esteem, to be proud of य आहुतिमत्यमन्यन्त देवाः AV. x. 8. 35; स हात्येव पितरं मेने JaimiBr. 1. 42; 1. 207; भृगुर्ह वै वारुणिः। वरुणं पितरं विद्ययातिमेने S'atBr. XI. vi. 1. 1; V. i. 1. 1; यद्ध किञ्चाश्रुतेऽत्येनं मन्यते (एनन्मन्यते ?) AitĀ. II. iii. 3. 1; II. iii. 3. 3; अहं कर्तेति विदुर मावमंस्थाः (v. l. मातिमंस्थाः) MahāBhā. ii. 57. 7; मधुच्छन्दा उवाच - यत्रानुकूल्यं दम्पत्योस्त्रिवर्गस्तत्र वर्धते। न चेदं दूषणं राजन् भूषणं चातिमन्यताम् BrahmP. 138. 13; **iii** to think high of विक्रमातिक्रमे बुद्धौ भृशार्थातिशये त्वतिः। अतिरथः। अतिक्रामति। अतिगहनम्। अतितप्तम्। अतिमनुते ज्ञानम् Prasā. i. 37. 8.

**अतिमनःकान्त** (ati-manaḥkānta) *adj.* extremely fascinating or attractive to the mind अन्यदातिमनःकान्ते मलये विषयान्तके। मलयाख्यगिरिं यातो भूपतिः BṛKathāK. 56. 2.

**अतिमनस्** (ati-manas) *n.* great attention, great care प्रेषितव्यस्त्वया पुत्रो मन्दिरे मम मानिनि। पालयिष्याम्यहं तत्र तवातिमनसा किल DevīBhāP. iv. 23. 17; *adj.* beyond the mind (i. e. with complete control of the mind) स्थातव्यमित्यतिमना भुवि संस्थितोऽसि YogVā. ii. 10. 44.

**अतिमनस्विन्** (ati-manasvin) *adj.* [*f.* -ī] **i** very proud मा तावत्। अतिमनस्विनि, किं न गङ्गा सागरमभियाति। अलमलं व्रीडया PadmPrā. 21. 21; सोऽयं भविष्यदाक्षेपः प्रागेवातिमनस्विनी। कदाचिदपराधोऽस्य भावीत्येवमरुन्ध यत् Kāvyāda. 2. 126; **ii** who is very spirited तद्वयं पितामहोक्तप्रकारेणैव तारकप्रहन्तारमतिमनस्विनं सेनान्यमासादयेम Manmatho. 1. 15 (423. 13)

**अतिमनुज** (ati-manuja) *adj.* **i** inhuman, subhuman रक्तेक्षणः...दशनपीडितदन्तवासाः। त्रासं गतोऽतिमनुजो जननिन्द्यवेषः। क्रोधेन कम्पिततनुर्भुवि राक्षसो वा SubhāRaSaṁ. 40; **ii** super-human ममानुजमतिमनुजबलमबालमबलावियुक्तं युक्तमाश्रयितुं तव RāmāCam. 3. 15 (1)

**अतिमनुष्य** (ati-manuṣya) *adj.* super-human, beyond human power कार्येष्वतिमनुष्येषु साहायकविधायिभिः। योगिनीपुरनाथस्य तैरभूषि निजं कुलम् RājTa. (Jo.) 508.

**अतिमनुष्यकर्मन्** (atimanuṣya-karman) *n.* super-human action, action beyond human power गाण्डीवधन्वा ऋषभः कुरूणामजिह्मगैः कर्णमियाय जिष्णुः। शरास्त्रवृष्ट्या निहतो महात्मा प्रादुश्चकारातिमनुष्यकर्म MahāBhā. iv. App. 44 (50); *adj.* possessed of super-human power तदस्य कर्मातिमनुष्यकर्मणः समीक्ष्य हृष्टाः कुरवोऽभ्यपूजयन् MahāBhā. viii. 62. 54.

**अतिमनुष्यबुद्धि** (atimanuṣya-buddhi) *adj.* possessing super-human intellect तत्प्रेक्ष्य कर्मातिमनुष्यबुद्धेर्जिष्णोः सहभ्रातुरचिन्त्यकर्मा। दामोदरः ... हलायुधं वाक्यमिदं बभाषे MahāBhā. i. 180. 17.

**अतिमनोगति** (ati-manogati) *adj.* surpassing the speed of the mind, faster than the mind सः (अग्निः) ... पृथिवीं चान्तरिक्षं च विचीयातिमनोगतिः। निमेषान्तरमात्रेण बृहस्पतिमुपागमत् MahāBhā. v. 15. 28; द्वीपाम्भोधीन्...अलङ्घिष्ट ... तद्विमानवरं दिव्यं वेगेनातिमनोगति TriṣaS'aPuC. ii. 2. 325.

**अतिमनोज्ञ** (ati-manojña) *adj.* [*f.* -ā] **i** very pleasant, very attractive (sound) स तान्यतिमनोज्ञानि विहङ्गाभिरुतानि वै। शृण्वन्...अगच्छत गौतमः MahāBhā. xii. 163. 10; भुवनजैत्रमन्त्रं रतिपतेरधीते। पिकगिरा मधुश्रीरतिमनोज्ञयासौ ChandaśCū. 2. 70 (3); **ii** very beautiful, very charming अत्रातिमनोज्ञमुपवनम् ViṣṇuP. iv. 2. 104; सोऽथ ... पर्यटन्। ददर्शातिमनोज्ञानि सानूनि हिमभूभृतः MārkP. 61. 20; सरांस्यतिमनोज्ञानि MahāP. 22. 177; कन्त्रः अतिमनोज्ञः ... विग्रहः मूर्तिः यस्याः सा LalitāTriBh. 259. 14 (on 4); वस्त्राण्यतिमनोज्ञानि प्रभूतानि Mānaso. ii. 19. 1020; आदायातिमनोज्ञमद्भुतरसं किञ्चित्फलं पाणिना तन्मध्यं च विलोक्य BhāvS'. 59; **iii** very agreeable सततमतिमनोज्ञः क्रौञ्चमालापरीतः प्रदिशतु हिमयुक्तः कालएषः (?) सुखं वः (v. l. °युक्तस्त्वेष कालः सुखं वः) R̥tuSaṁ. 4. 18; जलाशयेषु ... तस्मिंश्चातिमनोज्ञे काले हस्तिनः ... विविधसुखमनुभवन्ति Hastyāyur. 198. 13 (2. 13)

**अतिमनोज्ञतनु** (atimanojña-tanu) *adj.* having a very attractive or beautiful body कन्दर्पतोऽप्यतिमनोज्ञतनू तनूजौ HariVi. 4. 26.

**अतिमनोज्ञता** (atimanojña-tā) *f.* the state of being very handsome स च (बालकः) संस्कृत्योपनीतो नृपतेरतिमनोज्ञतया प्रीतेन पृष्टोऽसौ राज्ञा MohaRāPa. 3. 58 (37)

**अतिमनोभीष्ट** (ati-manobhīṣṭa) *adj.* very much desired or wished for किन्तु स्त्रीव्यसनेनातिमनोभीष्टेन सर्वदा। चिराय मिलितेनैव भूयोऽप्यालिङ्गितो नृपः PāṇḍaC. 1. 362.

**अतिमनोरथ** (ati-manoratha) *m.* extravagant wish, desire beyond limit अवहास्योऽतिमनोरथोऽक्रमश्च BuddhaC. 5. 36; अस्माकमेष सोऽतिमनोरथः। प्रद्योतस्य मनस्वित्वात्स्वामी दुःखेषु वर्तते PratiYau. 1. 10; कौसल्यामातः! अलमतिमनोरथेन Prati. 5. 11 (2); महेन्द्रकल्पेन सह त्वया संभाषणोत्सवः। इति दर्शितसौहार्दे कस्य नातिमनोरथः JātaMā. 140. 11 (22. 84); कदा पश्यामि तां कान्तां मोचयित्वातिसंकटात्। इति मे हृदयं चाद्य करोत्यतिमनोरथम् DevīBhāP. vi. 22. 45; *adj.* beyond the reach of desire यथावदतिमनोरथैर्वस्तुभिर्महता संमानडम्बरेण पूजितो राज्ञा (कविः) UdaySuKa. 157. 11.

**अतिमनोरम** (ati-manorama) *adj.* [*f.* -ā] **i** very attractive, extremely charming, very beautiful अद्यैव सद्यः पत्नी ते भवत्वतिमनोरमा MārkP. 97. 19; 114. 29; 127. 10; जङ्घे विरोमे सुसमे पादावतिमनोरमौ (यस्याः) ViṣṇuSm. 1. 26; सुगन्धा नाम यस्यासीत्पत्नी धर्मपरायणा।... अतिमनोरमा GaṇeP. i. 58. 13; व्यासायामवती ग्राह्या यौवनातिमनोरमा MayaMa. 33. 5; मध्याह्ने रत्नशैलेन्द्रशिखरेऽतिमनोरमे (कृष्णं ध्यायीत) ĪśānS'iPa. i. 34. 41; शशीवातिमनोरमः TriṣaS'aPuC. iii. 6. 21; तिलोत्तमामिवोद्दिश्य रसामतिमनोरमाम्। सुन्दोपसुन्दभङ्गया ते स्वयं नंक्ष्यन्ति शत्रवः PṛthviVi. 11. 5; फलाग्रकषणोद्भवो यदयमत्र कस्तूरिकाविशेषक्रमिपात्स्फुरत्यतिमनोरमः कालिमा Subhāṣi. 1489; **ii** very pleasant (to the mind) हन्त ते कथयिष्यामि कथामेतां मनोरमाम् (v. l. कथामतिमनोरमाम्) MahāBhā. i. 160. 4; स्वाधीनपतिका प्राप्य कामानतिमनोरमान्। क्रमादापन्नसत्त्वासौ जज्ञे पुण्यजनेश्वरी PāṇḍaC. 7. 382; कोपः श्लोकसमूहस्तु स्यादन्योन्यानपेक्षकः। व्रज्याक्रमेण रचितः स एवातिमनोरमः SāhiDa. 375. 15; नानाकवित्वामृतनीरपूरकल्लोलभङ्ग्यातिमनोरमायाम्। श्रीपद्यवेण्यां प्रथमस्तरङ्गः PadyaVe. 52; **iii** very soft, very fine सूतगन्धकयोः पिष्टिः कार्या चातिमनोरमा RasPraSu. 4. 38; **iv** sonorous, well-sounding आद्यं तद्दिननाथार्णं गृहीत्वातिमनोरमम्। चकार निजशिष्यस्य नाम ParamāKā. 141. 87.

**अतिमनोरमाङ्गी** (atimanoramāṅgī) *adj.* (*f.*) having a very beautiful body अतिमनोरमाङ्गी स्यादान्ध्रकर्णाटभवा पुरन्ध्री AnaṅgaRa. 5. 5.

**अतिमनोहर** (ati-manohara) *adj.* [*f.* -ā, -ī] extremely charming, very attractive, very pleasant, extremely gratifying, very lovely पीतनीलाम्बरधरौ तौ दृष्ट्वातिमनोहरौ। स तर्कयामास तदा भुवं देवावुपागतौ ViṣṇuP. v. 19. 19; रूपिण्यश्च श्रिया युक्ताः सर्वाः कमललोचनाः। लीलाविलाससंयुक्तैर्भावैरतिमनोहरैः। गणैस्ताः सह मोदन्ते VāyuP. ii. 39. 259; स्ववपुरतिमनोहरं हरं दधतमुदीक्ष्य ननाम पाण्डवः Kirātā. 18. 15; तत्र च ... अतिमनोहरं शयनीयमभजत AvantiKa. 136. 19; माल्यैरतिमनोहरैः।... चक्रे शान्तिजिनेन्द्रस्य शान्तचेता दशाननः। पूजाम् PadmP. (Ra.) 69. 4; 81. 25; रूपेण ता द्युतिमतातिमनोहरेण। राज्ञो मनस्यधिगता वनितास्तदासन् VarāṅgaC. 1. 60; प्रासाददेशेषु वराङ्गनानां क्रीडासु रेमेऽतिमनोहरासु VarāṅgaC. 22. 18; भवनमार्ग इवातिमनोहरः। अभृत निष्कुटजां श्रियमुच्चकैः स

समय: HarVi. 3.75; निजवरभवनं सुरगृहमुर्वीतलमतिमनोहरं शयनम् KuttaMa. 232; सानयोर्दुहिता जाता विषाख्यातिमनोहरी BṛKathāK. 72.31; अतिमनोहरस्य … पारिजातकतरो: … शाखाततिभि: समन्तत: स्थगितम् (रम्भागृहमपश्यत्) TilaMañ. 228.18; 289.1; ब्राह्मणो मार्गे …। ददर्श चन्द्रभागां तां नदीमतिमनोहराम् PañcaRā.(Nā.) i. 3.4; रुच्यमतिमनोहरम्। आत्मनोऽङ्गं स्तनबाहुमूलादि (प्रकाशयति) JayaMa. 215.5 (on 3.3); एतस्मिन्नन्तरे तत्र कश्चिद्ब्राह्मणबालक:। आजगाम सुराणां च सभामतिमनोहर: BrahmVaiP. i. 14.3; कथं च लक्ष्मीरधिका रूपं चातिमनोहरन् BhaviP. 117A. 32 (i. 66.25); तन्मध्ये तस्य देवस्य पर्यङ्कोऽतिमनोहर: GaṇeP. ii. 53.2; स्वस्तिके वर्धमाने च भागिक्यो भित्तय: स्मृता:। स्वस्तिकोऽयं तलच्छन्द: कथितोऽतिमनोहर: SamarāSū. 61.55; स्वयं करिष्येऽहमथो निवासाय पृथो: पुरीम्। विचित्रनगरग्रामखेटामतिमनोहराम् SamarāSū. 2.11; स्वच्छांशुकेन जनितमतिमनोहरं नेपथ्यमादधानाम् … योषितं ददर्श UdaySuKa. 9.15; 131.23; रूपेणातिमनोहरेण महता …। रोहन्मोहमहातरुर्मदमय: संजायते य: सदा DarpDa. 1.37; त्रांबीजोत्थं हिरण्याद्रिं ध्यायेदतिमनोहरम् IśānŚiPa. i. 26.11; अन्यच्च वस्त्रनेपथ्यप्रभृत्यतिमनोहरम्। … निधेहि TriṣaŚaPuC. i. 2.621; या शैशवावधिमनोरम (v. l. शैशवादतिमनोहर) रामचन्द्रहस्ताङ्गुलिप्रणयिनी … मणिमुद्रिका PrasaRā. 6.40; सान्यं प्रयाति पुरुषं न कदापि कामं दासीभवेदतिमनोहरदिव्यमूर्ति: PañcSā. 3.55; तदतिमनोहरं सिंहासनं महेन्द्रस्याज्ञया गृहीत्वा विक्रमार्को निजां पुरीमगमत् SiṁhāDvā. 16.6(5); 48.0 (11); 54.8(2); 85.3(21); 148.0(31); 195.0(10); 201.0(7); सोऽप्यनर्घै: पदार्थैर्न तथा तुष्टो महीपते:। सालंकारैर्यथा भूप काव्यस्यातिमनोहरै: RājTa.(Śrī.) 1(6).12; शाहावदीनराज्ये या संपन्नातिमनोहरा। लक्ष्मीपुरे राजधानी RājTa.(Śrī.) 2.140; द्विजपुत्रमतिमनोहरमवलोक्य VetāPañ.(Jam.) 36.9; तस्या मुखस्यातिमनोहरस्य कर्तुं न शक्त: सदृशं प्रियाया:। अद्यापि शीतद्युतिरात्मबिम्बं निर्माय निर्माय पुनर्भिनत्ति Subhāṣi. 1517; त्वत्प्रतापानर्घहेमसंपुटेऽतिमनोहरे। ब्रह्माण्डशालिग्रामोऽसौ धराधीश विराजते SūktiSu. 109; ततो नारायणस्यापि लोकस्तन्निकटे स्थित:। एकैकस्यान्तरं कोटियोजनानामुदीरितम्। तावानेव च विस्तारस्तेषामतिमनोहर: BṛBrahmS. ii. 7.141; **ii** very sweet, very pleasant, very pleasing to hear श्रुत्वैतद्वचनं तासां स्त्रीणामतिमनोहरम्। गमनाय मतिं चक्रे Rāma.(Gorresio.) i. 9.53; आलोलवलयक्वाणवर्धिष्णुगुणनिस्वनम्। …घनश्यामा चकारातिमनोहरम् BrahmāṇḍP. iii. 17.47; सर्वज्ञस्यै(? स्ये)व ते वाणी श्रूयतेऽतिमनोहरा BrahmāṇḍP. ii. 24.3; इन्द्रायुध: …अतिमनोहरम्…हेषारवमकरोत् Kād. 81.11; अतिमनोहरवनितादिजनालापेष्वतितरामतिप्रलोभितकर्णम् … आत्मानम् … द्रष्टुमर्हसीति BhāgP. iv. 29.54; तासां गीतैश्चातिमनोहरै:। … हृतं तस्य न मानसम् PadmP.(Ra.) 48.2; 97.186; श्रोतुमिच्छामहे पुण्यां कथां चातिमनोहराम् BrahmP. 34.54; तत्तद्वाद्यकदम्बकस्य विधिना पूजाविधामानयेत्। … अतिमनोहरान् बहुविधीन् संपाद्य … गुर्वाज्ञामवलम्ब्य … शृङ्गारमेवारभेत् AbhinDa. 31; **iii** very sweet-smelling, very pleasant to smell निमेरपि तच्छरीरमतिमनोहरगन्धतैलादिभिरुपसंस्क्रियमाणं नैव क्लेदादिकं दोषमवाप ViṣṇuP. iv. 5.13; **iv** very tasty, very attractive सुजातं दधि संयोज्य वस्त्रे बद्ध्वा सुपीडितम्। नानापुष्पफलारम्भं कुर्यादतिमनोहरम् BhojanKu. 141.6; [given as meaning for अन्त, अन्त: प्रान्तेऽन्तिके नाशे स्वरूपेऽतिमनोहरे ViśvaPra. 59.31.]

**अतिमनोहरगन्ध** (atimanohara-gandha) *m.* very pleasant smell स्यात्परिमलोऽतिमर्दातिमनोहरगन्धयोश्चापि MediK. 169.156.

**अतिमनोहरता** (atimanohara-tā) *f.* the characteristic of being very beautiful अतिमनोहरतया सुरलोकवासिनामप्युत्पादितनिवासस्पृहं देवतागृहमकारयत् TilaMañ. 34.1.

**अतिमनोहरत्व** (atimanohara-tva) *n.* great charm तन्वन् … योऽतिमनोहरत्वम्। साम्यं विभातसमयस्य बिभर्ति बालसंध्याहितातनुरुचि: स्फुटपुष्करश्री: HarVi. 31.21.

**अतिमनोहररूप** (atimanohara-rūpa) *adj.* of a very attractive or handsome appearance तत्रान्तरे कश्चिद्राजकुमार इवातिमनोहररूप: … तत्रागत: SiṁhāDvā. 195.0 (12)

**अतिमनोहराकृति** (atimanoharākṛti) *adj.* possessing a very attractive or charming form धिग्विधातारमसदृशसंयोगकारिणमतिमनोहराकृतिरपि क्रूरजातितया येनेयम् … रमणीयाप्युद्वेजयति Kād. 12.3.

**अतिमनोहारिन्** (ati-manohārin) *adj.* **i** very beautiful or attractive to the mind राजभवनमविशम्। अतिमनोहारि(? री)णि यत्र सुपुष्करमालानि क्रीडावापीपयांसि NalaCam. 7.18(19); **ii** very pleasant (to hear) कर्णायुष्यं क्वचन कमलाकान्तपादाब्जभाजां शृण्वन् गीतामृतमतिमनोहारि विद्याधरीणाम् MayūSaṁ. 1.61.

**अतिमन्थ्** (ati-manth-) I. Ā. to pain severely (pass.) आटोप्यतेऽस्योदरं च शिरश्चास्यातिमन्थ्यते BhelaS. 57.4 (2.4)

**अतिमन्थन** (ati-manthana) *n.* excessive churning श्रान्ता: स सुभृशं ब्रह्मन्नोद्भवत्यमृतं च तत्। … चिरारब्धमिदं चापि सागरस्यापि मन्थनम् (v. l. सागरस्यातिमन्थनम्) MahāBhā. i. 16.29.

**अतिमन्थर** (ati-manthara) *adj.* very slow यस्यातिमन्थरगतेर्वल्लिबन्धनार्थमागच्छतस्तनुरदृश्यत सश्रमाम्भा:। …दैत्यै: HarVi. 10.27; अथातिमन्थरच्छत्रगतिसूचितविलासमन्दपदविन्यासा … विद्याधरचक्रवर्तिनश्चक्रसेनस्य महिषी पत्रलेखाभिधाना पादचारेण तत्रैवागच्छत् TilaMañ. 340.19.

**अतिमन्थरवचना** (atimanthara-vacanā) *adj.* (*f.*) very slow in speech दुष्टेऽन्व कस्मान्मम तातं नाख्यासि। अद्यैव ते व्यलीकलज्जावत्यास्तथा शास्तिमहं करोमि यथा च नैवमथाप्यतिमन्थरवचना भविष्यसीति ViṣṇuP. iv. 6.30.

**अतिमन्थरम्** (ati-mantharam) *adv.* very slowly, at a very slow pace क्रमेण पुष्यद्गर्भा च संचचारातिमन्थरम्। … धारिणी PariPar. 2.63; सा स्खलाम्भोरुहाणीव विकचानि पदे पदे। पादाभ्यां रोपयामास विचरन्त्यतिमन्थरम् TriṣaŚaPuC. iii. 6.25.

**अतिमन्द** (ati-manda) *adj.* [*f.* -ā] **1 A** very slow (in movement) very gentle or mild तिक्त: कषायो मधुरातिमन्द: … शुभश्च याम्यां प्रभव: समीर: HāriS. i. 5.27; वात: कटू रूक्षतरश्चलात्मा …। स्निग्ध: कफ: स्वादुरसोऽतिमन्द: KalyāKā. 3.48; मारुतोऽतिमन्द: …। व्यजनसुखमदान्महेन्द्रदायादाय YudhiVi. 4.87; अतिमन्दचन्दनमहीरुहवातम् …। अपि तापसानुपवनं मदनार्तान् … अकार्षीत् HariVi. 3.34; **1 B** very languid वपुरतिमन्दमाप्य रविरास्थित पात्रमयोवणिगिव मण्डलेऽथ समघट्टयदंशुधनम् Kapphiṇā. 11.3; **2 A** very slack or feeble मार्गे प्रयातुर्गिलाभवन्मे लभेत मोक्षो यदि तर्हि धन्य:। इत्याशया मूढधियां मतिर्या सैषातिमन्दाभिमता मुमुक्षा SarvaVeSāSaṁ. 232; न चातिगाढं च न चातिमन्दं संदीपनं दृष्टमिदं रसानाम् NāṭaLaRaK. 1969; **2 B** very faint (in appearance), Kapphiṇā. 11.3; **3 A** very foolish (view), extremely weak or unconvincing (argument etc.) अन्ये त्वाहु:। आकाङ्क्षासंनिधियोग्यतावन्त: पदार्था वाक्यार्थीभवन्ति, न पुनर्वाक्यार्थमेव बोधयन्तीति। तदिदमतिमन्दम् PrakaPañ. 394.17; अन्ये तु यद्यस्मादधिकं विधीयते स तस्य शेष इत्याहु: तदतिमन्दम् ŚāstrDī. 185.7 (on iii. 1.2); 299.8 (on iii. 6.3); यत्तावद् 'धर्मिग्राहकप्रमाणापन्ना(? ना)धितविषयं साधनम्' इति तदतिमन्दम् NyāyMa. 129.3; VedāntKa. 436.18 (on iii. 3.16); यद्यपि कस्यचित्सा (दृश्यत्वशङ्का) स्यात् अतिमन्दतया न परिहर्तव्या ŚrutaPra. ii. 603.5 (on iv. 2.13); ii. 400.8 (on ii. 4.16); तदा नीतिनिबन्धनात्मकस्य सूत्रस्य व्युत्पाद्यमतिमन्दं स्यात् ŚatDū. 244.18; 183.19; YuktiSneha. 49.27; VīraMi.(Vyavahāra.) 66.28; एवं च पूर्वपक्षोऽतिमन्द इति ध्येयम् MayūMāli. 835.6 (on xi. 4.6); 625.2 (on ix. 3.6); **3 B** extremely dull-witted or stupid (person) जात्यादिमहत्त्वमनपेक्ष्यातिमन्दैरप्यमायया संक्षेपभावत्वम् सुशीलत्वम् VedāntRaMañ. 1.4 (44.23)

**अतिमन्दकम्** (atimanda-kam) *adv.* very slowly चालयेन्नाधरश्चौष्ठं न द्रुतं नातिमन्दकम् BṛDharmaP. ii. 2.24.

**अतिमन्दगमन** (atimanda-gamana) *adj.* very slow in gait अतिमन्दगमन: … गज: श्लैष्मिक: MātaLī. 11.40.

**अतिमन्दचेष्टता** (atimandaceṣṭa-tā) *f.* the state of being very slow in movements अस्थिक्षये स्यादतिमन्दचेष्टता मन्दवीर्ये इति मेदस: क्षये HāriS. iii. 9.22.

**अतिमन्दचेष्टा** (atimanda-ceṣṭā) *f.* very slow movement भ्रम: क्लम: स्यादतिमन्दचेष्ट:(? ष्टा) शोफो निशाजागरणं च तन्द्रा। … शुक्रक्षये चाङ्गविचेष्टितानि HāriS. iii. 9.24.

**अतिमन्दता** (atimanda-tā) *f.* **A** the state of being very weak मधुरवचनैर्वारं वारं गतोऽप्यतिमन्दताम्। … कुवलयदृश: कोप: कान्ते पुनर्नवतां गत: ŚṛṅgāTi.(Ru.) 2.61; **B** extreme foolishness or weakness (of argument) अतिमन्दतया चेमौ पक्षौ न साक्षादुपन्यस्य निरस्तौ PrakaPañ. 419.13.

**अतिमन्दत्व** (atimanda-tva) *n.* the characteristic of being extremely foolish or weak (in argument) पूर्वपक्षस्यातिमन्दत्वात् ŚāstrDī. 30.1 (on i. 3.4); 285.14 (on iii. 5.6); BhāṭṭDī. iv. 125.2 (on x. 8.15); MayūMā. (on ii. 3.6)

**अतिमन्दधी** (atimanda-dhī) *adj.* very dull (or naive) in intellect वाचेह दीनया याचे साक्रन्दमतिमन्दधी:। किरतं करुणस्यान्तौ करुणोर्मिच्छटामपि StavMā. 89.26.

**अतिमन्दभाग्य** (atimanda-bhāgya) *adj.* [*f.* -ā] very unfortunate अतिमन्दभाग्याया जहासाथ नृपस्तत: MārkP. 109.16; काम्यहोमविधिं वक्ष्ये …। येनातिमन्दभाग्योऽपि श्रीमान् भोक्ता सुखी भवेत् TantrRā. 21.13.

**अतिमन्दम्** (ati-mandam) *adv.* **A** very slowly, at a very slow pace नाविच्छिन्नपदं नातिमन्दं नात्युच्चनीचकै: (पठेत्) AṣṭāSaṁ. i. 5.7 (1.2); **B** very softly, in very low tones उद्घोषैस्तारतारै: परभृतयुवतेर्दत्तताल्यातिमन्दं

मन्दं गर्जद्गम्भीरध्वनिघनमुरजा … भृङ्गी संगीतभङ्गीमनुसरति रसात्सून्नरेणौ रमन्ती Manmatho. I. 11 (422. 8)

**अतिमन्दमन्दम्** (ati-mandamandam) *adv.* very slowly (in speed) विदन्धवूनां पतङ्गिरेभिः स्खलद्गतिरिवायतैः कटाक्षैः । इयं सुजघनातिमन्दमन्दं सखे वितनुते पदप्रपञ्चम् ChandaśCū. 3. 60 (21)

**अतिमन्दरस** (atimanda-rasa) *adj.* having very little flavour, extremely insipid 'विरसं' स्वभावतोऽतिमन्दरसम् (अन्नम्) CaturCin. iii(1). 608. 5.

**अतिमन्दवर्षत्** (atimanda-varṣat) *adj.* raining very lightly or scantily अतिमन्दवर्षदम्बुदशीकरशिशिरार्द्रसान्द्रवसनायाः । आकस्मिकागतायाः कण्ठग्रहणं फलं जनुषः SundaS. 73.

**अतिमन्दवह्नि** (atimanda-vahni) *adj.* whose digestive fire is extremely weak or feeble तक्रमेव वातिमन्दवह्निः सप्ताहमर्धमासं मासमपि वा … शीलयेत् AṣṭāSaṁ. ii. 59. 6 (*on* 4. 10)

**अतिमन्दशक्तित्व** (atimandaśakti-tva) *n.* the characteristic of having very little force तस्मादतिमन्दशक्तित्वादस्य वचनस्य न प्रतिपद्भागत्रयविधानमुखेन चतुर्थांशव्युदासकत्वम् CaturCin. iii(2). 343. 14.

**अतिमन्दाक्षमन्थरा** (atimandākṣa-mantharā) *adj.* (*f.*) languid due to extreme bashfulness असूर्यम्पश्या हि कुलवधूरतिमन्दाक्षमन्थरा प्रमादाद्विगलितसिचयाञ्चला चेदालोक्यते परपुरुषेण SāṁkhyaTaKau. 471. 9 (*on* 61)

**अतिमन्दाग्नि** (atimandāgni) *adj.* having a very weak digestive fire वातार्तस्यंदतिमिरदारुणप्रतिबोधिनः स्नेह्या न त्वतिमन्दाग्नितीक्ष्णाग्निस्थूलदुर्बलाः AṣṭāSaṁ. i. 128. 10 (1. 25)

**अतिमन्दात्मन्** (atimandātman) *adj.* having a very weak understanding इत्थं श्रीदेवनारायणमतिविवृतं शिल्परत्नाद्यभागम् ।… अतिमन्दात्मबोधप्रदम् … संपूर्णं जातम् S'ilpaRa. i. 46. 148.

**अतिमन्दान्तःसंज्ञता** (atimandāntassañjña-tā) *f.* the state of having a very weak consciousness यद्यपि चोद्भिदोऽपि वृक्षादयः शरीरभेदतयात्रैव व्याख्यातुमुचिताः तथाप्यतिमन्दान्तःसंज्ञतया लौकिकापेक्षया सुखदुःखभोक्त्रधिष्ठानत्वममीषामविवक्षन् प्रायेण जङ्गमोपकारकतया तदधीनतया च विषयतां विवक्षन् तेष्वेवान्तर्भाव्य व्याख्यास्यन्ते Kiraṇā. 57. 9.

**अतिमन्द्रध्वनित्व** (atimandradhvani-tva) *n.* the nature of producing a very low tone अतिमन्द्रध्वनित्वेन नेष्यतेऽसौ (वंशः) विचक्षणैः SaṁgiRa. iii. 322. 6 (6. 439); अतिमन्द्रध्वनित्वाच्च न ते (वंशाः) तत्त्वविदां मताः SaṁgiRa. iii. 344. 13 (6. 559)

**अतिमन्मथ** (ati-manmatha) *adj.* surpassing the god of love निरूपयन्ती सा रूपं कुमारस्यातिमन्मथम् । दध्यौ विशेषसंस्थानम् SamarāSaṁ. 8. 116.

**अतिमन्मथाकृति** (ati-manmathākṛti) *adj.* surpassing the appearance of the god of love यदैव हंसाः प्रतिपद्य दूततां भवन्तमाख्यन्नतिमन्मथाकृतिम् Nalābhyū. 4. 52.

**अतिमन्यमाना** (ati-manyámānā) *adj.* (*f.*) looking down upon, neglecting, disregarding तां (प्रजाः) अतिमन्यमाना वरुणेनाग्राहयत् MaiS. ii. 5. 6.

**अतिमन्यु** (ati-manyu) *adj.* very furious, exceedingly angry ते म्लेच्छैः प्रेषिता नागा नरानश्वान् रथानपि । हस्तैराक्षिप्य ममृदुः पद्भिश्चाप्यतिमन्यवः MahāBhā. viii. 17. 9; viii. 1042*(5); xii. 100. 11; माण्डव्येन महाभागे शप्तो भर्ता ममेश्वरः । सूर्योदये विनाशं त्वं प्राप्स्यसीत्यतिमन्युना MārkP. 16. 74; *m.* 1 excessive anger न लेभे स तु निद्रां वै दह्यमानोऽतिमन्युना । वीक्षांचक्रे महाबाहुः MahāBhā. x. 1. 33; महारथानाम् … । आमूललूनैरतिमन्युनेव मातङ्गहस्तैर्व्रियते न पन्थाः Kirātā. 16. 14; 2 name of S'iva नमो देवातिदेवाय धन्विने चातिमन्यवे MahāBhā. viii. 24. 45; 3 one of the ten sons of Naḍvalā and Manu मनोरजायन्त दश नड्वलायाम् …। अतिमन्युः सुयशा दश (पुत्राः) S'ivaP. v. 30. 15 (440B. 4)

**अतिमन्युप्रसक्त** (atimanyu-prasakta) *adj.* possessing great anger संबुबोधयिषुर्मित्रं सदश्वमिव सारथिः । अतिमन्युप्रसक्तो हि MahāBhā. xii. 83. 19.

**अतिमन्युमत्** (atimanyu-ma(n)t) *adj.* possessing extreme anger, very angry इति ब्रुवाणं मद्रेशं कर्णः प्राहातिमन्युमान् MahāBhā. viii. 31. 56; iii. 122. 13 (v. l.); भार्गवश्चातिगर्वितः । जग्राह विधिवत्सोममश्विभ्यामतिमन्युमान् DevīBhāP. vii. 7. 9.

**अतिमम** (ati-mama) cf. **अत्यस्मद्** KāśiVṛ. *on* P. vii. 2. 98; KātanVṛ. *on* ii. 3. 13; BhāṣāVṛ. vii. 1. 27.

**अतिममत्व** (atimama-tva) *n.* extreme egotism अत्यन्तं स्वबलं रक्षेत् स्वराजबलमुत्तमम् । एतेनातिममत्वं दर्शितम् CaturDi. 4. 5.

**अतिमरन्दमुग्ध** (atimaranda-mugdha) *adj.* greatly maddened by honey उद्भासितेऽन्धतमसव्रज एति नाशं सूने प्रयान्त्युभयतोऽतिमरन्दमुग्धाः ।… मधुकराः PadyaVe. 829.

**अतिमर्त्य** (ati-martya) *adj.* superhuman हेलालोला वत्से गत्वातिमर्त्यं धामारोहन् मानभाजः सुखेन S'iśuVa. 18. 14; कृतवान् किल वीर्याणि सह रामेण केशवः । अतिमर्त्यानि भगवान् गूढः कपटमानुषः BhāgP. i. 1. 20.

**अतिमर्त्यचरित्र** (atimartya-caritra) *adj.* possessing superhuman behaviour, doing superhuman deeds एवमेनमतिमर्त्यचरित्रम् (शंकरम्) …। केरलक्षितिपतिर्हि दिदृक्षुः प्राहिणोत् सचिवम् S'aṅkaDigVi.(Mā.) 5. 10.

**अतिमर्त्यबल** (atimartya-bala) *adj.* having superhuman strength अतिमर्त्यबला विराटशल्यद्रुपदाद्या बहवो हि सन्ति वृद्धाः Yādavā. 15. 50.

**अतिमर्द** (ati-marda) *m.* excessive pressing स्यात् परिमलोऽतिमर्दातिमनोहरगन्धयोश्चापि MediK. 169. 156.

**अतिमर्मन्** (ati-marman) *n.* most vulnerable point (on the ground plan of a building conceived as a Vāstupuruṣa) रोगाद्वायुं पितृतो हुताशनं शोषसूत्रमपि वितथात् । मुख्याद् भृशं जयन्ताच्च भृङ्गमदितेश्च सुग्रीवम् । तत्संपाता नव ये तान्यतिमर्माणि संप्रदिष्टानि BṛSaṁ. 53. 64.

**अतिमर्याद** (ati-maryāda) *adj.* exceeding the proper limit, excessive अतिमात्रातिमर्यादनितान्तोत्कर्षनिर्भराः AbhidhāCin. 1506; ParaNā. 1606.

**अतिमर्यादम्** (ati-maryādam) *adv.* beyond limits, excessively अत्यर्थमतिमर्यादमतिवेलं च कथ्यते AbhidhāRaMā. 4. 34; Vaija. 211. 131.

**अतिमर्शम्** (ati-marśam) *ger.* (intermingling of lines of stanzas to form complex units) by means of choosing them from different units अतिमर्शमेव विहरेत्तथा वै प्रगाथाः कल्पन्ते AitBr. 30. 2 (769) (Sāy. अतिमर्शं अतिमृश्य अतिमृश्य); GopBr. ii. 6. 8.

**अतिमल** (ati-mala) *m.* excessive dirt रौक्ष्यादतिमलात् स्वेदात् चिन्तया शोचनादपि ।… यूका भवन्ति HārīS. iii. 5. 3.

**अतिमलक्षय** (ati-malakṣaya) *m.* excessive discharge of faeces शोकोऽभिघातोऽतिमलक्षयश्च निरन्नता चानिलगुल्महेतुः CaraS. vi. 5. 9 (1941 Ed.) = RugVi. 28. 6.

**अतिमलावलिप्त** (atimalāvalipta) *adj.* excessively smeared with faeces वर्चोगृहे कृमिरिवातिमलावलिप्ते शुद्धिः कथं भवति तस्य जलप्लुतस्य SubhāRaSaṁ. 747.

**अतिमलिन** (ati-malina) *adj.* **AI** very dirty, very filthy मूर्खः स्थूलनखद्विजोऽतिमलिनः … भास्करिः Sārā. 4. 27; अतिमलिनपटच्चराच्छादितान् … ध्वजानिव … लेखहारकान् … आलोक्य Kād. 331. 22; नीरागोऽधरपल्लवोऽतिमलिना वेणी S'ṛṅgāTi.(Ru.) 2. 89; नरयानस्थिता ययौ । (एकावली) स्कन्धावारेऽतिमलिना DevīBhāP. vi. 23. 56; एवंविधोऽतिमलिनो देहो यत्सत्तया चलति PraboSu. 1. 27; **AII** excessively defiled, very wicked अतिमलिने कर्तव्ये भवति खलानामतीव निपुणा धीः VāsaDa. 6. 1 = S'ārṅgaPa. 350; Subhāṣi. 328; तथा तत्तत्पापैरतिमलिनमन्तर्मम यदि ĀnandL. 12; असमञ्जसमतिमलिनं मोहाद् व्यक्ति समागतं कर्म KalāVi. 2. 70; नित्यमेवातिमलिना … तृष्णा गह्वरवल्लरी YogVā. i. 17. 20; वासना द्विविधा प्रोक्ता शुद्धातिमलिना तथा ।… मलिना जन्मकारणम् S'ārṅgaPa. 4197; **B** extremely dark or black कज्जलमिवातिमलिनं केवलमयशः संचितम् HarṣaC. 257. 1; नित्यमेवातिमलिना कटुकोन्माददायिनी ।… गह्वरवल्लरी YogVā. i. 17. 20; अतिमलिनैः … तालमहीरुहैः अभिगुप्तम् (अभिनवनगरमाससाद) ĀnandRa. 3. 25 (8); अतिमलिनैः घनैः निर्मलोऽपि चन्द्रमाः…न रराज ĀnandR. 5. 51 (13)

**अतिमलिनख्याति** (atimalina-khyāti) *adj.* whose fame is very much tarnished ओजस्ये रुद्रदेवे विभवति … वैरित्राता भजन्ते वनमतिमलिनख्यातयो देहविद्धाः PratāYaBhū. 349. 1.

**अतिमलिनच्छाय** (atimalina-cchāya) *adj.* having a very dark colour रूक्षस्यामधुरस्य चातिमलिनच्छायस्य धृष्टस्य च … येयं निम्बफलेषु काक भवतः … प्रीतिः S'ārṅgaPa. 884.

**अतिमलिनता** (atimalina-tā) *f.* excessive blackness यात्रायां यस्य खेलत्तुरगखरखुरोत्खातधूलीभरेण प्रापुर्वर्षाभ्रलक्ष्मीमतिमलिनतया शारदास्तोयवाहाः SaduktiKa. 211. 20.

**अतिमलिनाय** (ati-malināya-) [*denom.*] to become extremely sullied or dejected अयं यदि महामना वितरणाय धत्ते धियम् … तदातिमलिनायते स किल कल्पभूमीरुहः VīraMi.(Saṁskāra.) 121. 22.

**अतिमलीमस** (ati-malīmasa) *adj.* [*f.* -ā] **I** very impure अतिमलीमसानाम् … लोहजातीनाम् … मलशोधनाय देवो हुताशन एव मे शरणम् AvantiKa. 122. 14; **II** extremely defiled or wicked ननु कर्मभिरेवाहं हसितातिमलीमसैः PadmP.(Ra.) 16. 156; त्यजेन्मृगव्यव्यसनं हिंसयातिमलीमसम् CāruCaS. 28; मलिनेन कर्मणातिमलीमसांस्तर्जयितान्तकः स्वकान् DvyāśraKā.

18.72; एषामालक्ष्य गतिमतिमलीमसाम् … महर्षयः … अमरान् भूयोऽपि लज्जयांचक्रिरे NilaVi. 41.9.

**अतिमसृण** (ati-masṛṇa) *adj.* [*f.* -ā] **i** very soft, very smooth लम्बिताभिरतिमसृणघनसटाभिरुद्भासितेन बन्धुरा स्कन्धेन (अन्वेष्यतामियं तुरगी) UdaySuKa. 124.10; ‘अतसी’ उमासंज्ञिका तैलप्रकृतिभूतानामतिमसृणानां चिपिटाकृतीनां बीजानामुत्पादिका ओषधिः CaturCin. iii(1). 548.18; **ii** very affectionate अतिमसृणा चान्द्रान्मयूखादपि…मयि कृपादृष्टिस्तवास्तां हरे ĀnaMandā. 13.

**अतिमसृणत्व** (atimasṛṇa-tva) *n.* the state of being very smooth (in an alliteration called *śrutyanuprāsa*, caused by the use of sounds having the same place of articulation in close succession) अत्र दन्त्यवर्णप्रायतयातिमसृणत्वे शिलातलेष्विति दन्त्यवर्णाभ्यामेव वर्णस्तोमो दत्तः SaraKaṇṭhā. 231.15.

**अतिमसृणित** (ati-masṛṇita) *adj.* rendered extremely smooth अतिमसृणितपृष्ठः स्फीतपट्टाम्बरौघैः प्रबलकरटिसंघोऽवेदि घण्टारवेण VīraBhā. 11.16.

**अतिमसृणीकृत** (atimasṛṇī-kṛta) *adj.* [*f.* -ā] rendered very smooth (खल्वः) चतुरङ्गुलनिम्नश्च मध्येऽतिमसृणीकृतः RasRaSa. 9.86; RasPraSu. 1.27; (मूषा) मृन्मया सापि शुष्का च मध्येऽतिमसृणीकृता RasPraSu. 1.110.

**अतिमसृणोपल** (atimasṛṇopala) *m.* very smooth stone खल्वोऽतिमसृणोपलः RasRaSa. 9.86.

**अतिमहत्** (ati-mahat) *adj.* [*f.* -tī] [ MahāBh. i. 183.24 (*on* P. i. 1.72); MahāBh. ii. 201.15; Vār. 2 *on* P. iv. 1.4; ii. 202.1 (*on* P. iv. 1.6); KāśiVṛ. *on* P. iv. 1.4; (अतिमहती) महान्तमतिक्रान्तेति प्रादिसमासः Pradī. iv. 32B.8 (*on* P. iv. 1.4); PadMañ. (*on* P. iv. 1.6); JaineVyā. 150.28 (*on* iii. 1.4); 151.2 (*on* iii. 1.6) ] **1** very big, large, huge, great, heavy (size) **2 A** strong, powerful, mighty **B** important, valuable, noble **C i** great, violent (events) **ii** intense, excessive, sharp (feeling, emotion) **D** loud (sound) **3 i** vast, extensive (space) **ii** wide **iii** tall **iv** thick **v** broad **4** numerous, abundant, ample, copious, maximum **5** of long duration (time) **1** very big, large, huge, great, heavy (size) तदा सातिमहद्रूपं कृत्वा … । आकाशादपतद्राम शिवे शिवशिरस्युत Rāmā. i. 42.4; चकर्ष देहं कंसस्य रङ्गमध्ये महाबलः (कृष्णः) । गौरवेणातिमहता परिखा तेन कृष्यता । कृता कंसस्य देहेन VisṇuP. v. 20.89; अतिमहदुपरोधवैशसमुपरि पौराणां परिवर्तमानमसहमाने … सर्वार्थसिद्धौ MudrāRā. 2.14(2); पश्यतु देवः पुरुषस्य हि सेवां प्रति … अभिमुखीक्रियमाणस्य … परमार्गणयोग्यामतिमहतीं वावस्थामापश्यतः किं प्रायश्चित्तम् HarṣaC. 297.7; देवोऽपि … नगराद्बहिरतिमहतो रोहिणद्रुमस्य … तले द्विरदादवततार DaśKuC. 39.17; अस्य च साम्प्रतम् । शिरश्छेदातिमहन्मायायोषिद्वपुः प्रभुः SkandP. ii(9). 13.28; अल्पेन हि न्यग्रोधबीजेनारब्धो न्यग्रोधतरुर्महान् ततोऽतिमहता वा नारिकेलबीजेनारब्धो नारिकेलतरुरल्पः TātpaṬ.(Vā.) 465.13 (*on* ii. 2.41); BrahmP. 193.75; तस्यातिमहतः … मध्ये सुरालयस्य प्रतिष्ठितम् (अम्बिकाकान्तं नमस्कृत्य) UdaySuKa. 104.16; सुवर्णपरिकल्पितान्यतिमहान्ति पात्राण्यदात् EI. iii. 14.21; मध्यो यवो नातिसूक्ष्मो नातिमहान् ManvaVi. 954.10 (*on* 8.134); अतिमहति भवोर्मीमालिनीह भ्रमन्तः …। कथमपि पृथुपुण्याः प्राणिनः प्राप्नुवन्ति प्रवहणमिव केचिच्छासनं तावकीनम् SrīVīraSta. 17; किमचलशिरोऽतिमहदिति वज्रमणीयो न दारयति SūktiRa. 99.22; अतिमहान् गिरिरेष तु वामके करसरोरुहि तं धरते चिरम् Nārāy. x. 63.6; स च हिरण्मयमुन्नतमास्थितो रथमराजत राजतकेतनम् । अतिमहानिव जम्बुमहीरुहः स्फटिकशृङ्गममर्त्यमहीधरम् Ragh. 19.4; **2 A** strong, powerful, mighty बन्धुवैरिजनायते … जाते पुण्यनिवर्तनेऽतिमहतामर्थोऽप्यनर्थायते SatTrayī. 613; बलेन वित्तेन पराक्रमेण च महीपतिभ्योऽतिमहान् महीपतिः VarāṅgaC. 21.64; तेजस्विनोऽतिमहतः क्वचनापि नूनं तीक्ष्णे मृदौ च न विहन्यत एव शक्तिः HarVi. 45.26; अत्याहारस्तु दैत्योऽतिमहानतिबलान्वितः । अरिष्टः … कृष्णम् … अभ्ययात् HariC.(Pa.) 129; **2 B** important, valuable, noble तत्र पश्यामहे कर्म शल्यस्यातिमहद्रणे MahāBhā. ix. 15.9; तदलमतिविस्तरेण प्रसङ्गवादार्थनिर्णयोऽतिमहान् BṛSaṁ. 1.8; अतिमहद्भिः पूर्वाचार्यैः …घटितायाः AvantiKa. 13.14; वार्तेयमतिमहती DaśKuC. 67.17; इदमतिमहदेवाश्चर्यमाश्चर्यधाम्नस्तव खलु मुखरागो यन्न भेदं प्रयातः SiśuVa. 11.31; आदेशं प्रत्यतिमहानथात इति संभ्रमः BṛĀraUBhVā. ii. 3.236; यः सावसरोऽपि रसो निरन्तरं नीयते प्रबन्धेषु । अतिमहतीं वृद्धिमसौ तथैव वैरस्यमायाति Kāvyālaṅ.(Ru.) 11.14; हीनस्य हीनगुणोऽपि सादृश्याद् ग्रहीतव्यः (साक्ष्ये) । …एतच्च नातिमहति कार्ये द्रष्टव्यम् ManuBh. ii. 105.16 (*on* 8.68); अतिमहती ह्येषा पूजा । न तां सर्वः क्षत्रियोऽर्हति ManuBh. i. 257.16 (*on* 3.109); ताऽपि आगत्य मातुर्मे भवनम् … अतिमहान्तमुत्सवमकारयत् TilaMañ. 263.20; किमियमैश्वर्यमदनिश्चेतना वितन्यमानमतिमहान्तमपि त्वया पूजोपचारं पश्यति (श्रीः) TilaMañ. 49.18; **2 C i** great, violent (events) यत्र धर्मः प्रतिषिध्यते यत्र धर्मी सोऽयमतिमहान् विशेषः NyāyVār. 180.13 (*on* i. 2.56); मानसारेण … मगधराजस्य … अतिमहत् … जन्यमजनि AvantiKa. 172.1; एते प्राणिनः क्षुद्रजन्तवो येषां वधे प्राणायाम उक्तः । तदपेक्षयोपवासोऽतिमहान् ManuBh. ii. 413.27 (*on* 11.42); कश्यपाख्यो द्विजः पूर्वमसिस्तीर्थद्वये शुभे । स्नात्वातिमहतः पापाद्विमुक्तो नरकप्रदात् SkandP. iii(1). 41.2; पुष्करावर्तजलद इव संवर्तकालमारुताहतो वेगमतिमहान्तमतनोत् (गन्धवारणः) TilaMañ. 242.10; ततः प्रवृत्ते तत्र संग्रामोऽतिमहांस्तयोः KathāSaSāg. viii. 6.87; इत्थमिमान् वारिधरान् … सलिलम् । श्यन्तरतो वा स्वेच्छं प्रवर्षयेदतिमहच्चित्रम् SamarāSū. 31.147; अतिमहति सांपराये PraboCan. 5.3 (83.17); अतिमहत्येव दुःखहेतौ मनः स्थिरीकृत्याश्वसन्ति महान्तः BhartṛNi. 2.11(1); एते (मीमांसकाः) सांख्यानुगा येषात् तत्त्वेऽतिमहती भिदा ṢaḍdarSa.(Rā.) 68; कष्टमतिमहति संकटे पतितोऽस्मि AdbhuDa. 6.17(6); स्थितोऽसि चिररात्राय हिताय जगतामिह । महामतेऽतिमहते द्विपतामहिताय च ParamāKā. 40.9; कालस्यापि सत्ताप्रदत्वेनातिमहतीं स्वरूपत्वेन स्थितां सत्ताम् … भजति (शिवः) Bhāsk. i. 299.23 (*on* i. 6.1); **2 C ii** intense, excessive, sharp (feeling, quality) अतिमहान् खल्वायासः Prati. 6.8(11); सोऽयं द्रव्यान्तरानुत्पत्तावतिमहान् व्याघातः NyāyBh. 294.18 (*on* iv. 2.14); अहो परवञ्चनायामतिमहन्नैपुणम् KundaMā. 4.22(2); आस्तां जनपरीवादो दोषोऽप्यतिमहान् मम । परपुंसा हृता सीता यत्पुनर्गृहमागता PadmP.(Ra.) 97.40; आसन्नसेवा नृपतेः क्रीडा शस्त्राहिपावकैः । कौशलेनातिमहता विनीतैः सा निरुह्यते AṣṭāSaṁ. i. 55.6 (1.8); (हरिवाहनः) आपतंश्च प्रकृतिदुर्विलङ्घ्ये दीर्घकालमध्वनि क्लेशमतिमहान्तमासादयिष्यतीति शङ्कितवान् TilaMañ. 196.17; अनेन ते … हर्षाट्टहासेन जनितमतिमहत्कुतूहलं मे TilaMañ. 49.7; केन संक्रमिता कृतिना … इयमक्षराणां गतिः । अतिमहत् कुतूहलं मे TilaMañ. 270.13; प्रायः पथ्यपराङ्मुखा विषयिणो भूपा भवन्त्यात्मना निर्दोषान् सचिवान् भजत्यतिमहान् लोकापवादज्वरः TāpaVa. 1.5 = AlaṅkāSa. 129.21; SūktiRa. 82.30; तव … । तेजस्वितातिमहती तथैव सुकुमारता BhaviP. 117A.33 (i. 66.26); उदयसुन्दरी … सदृशं संदेशमुक्त्वा तमतिमहता प्रश्रयेण विससर्ज (दम्भोलिम्) UdaySuKa. 145.3; अतिमहतः प्रणयाच्च राजपुत्रः ।…चिरं ललाप VikraDeC. 6.8; अनादृत्यौचित्यं ह्रियमविगणय्यातिमहतीम् …धनलवदुराशातरलिताः ।… धनिनां मुखानि प्रेक्ष्य(? क्ष)न्ते SubhāRaK. 42.4; राजा … । प्रसादेनातिमहता संभाष्य विससर्ज तम् TriṣaŚaPuC. i. 4.245; क्ष्मापालाः … श्लाघां दिक्षु विदिक्षु चातिमहतीमासादयन्ति क्षणात् CaturCin. iii(1). 5.12; महाब्राह्मणाः … महाजनानामादरमतिमहान्तमनुरुन्धानाः समादिशन्ति AdbhuDa. 1.5(7); **2 D** loud (sound) तस्या नादेन घोरेण कृत्स्नमापूरितं नभः । अमायतातिमहता प्रतिशब्दो महानभूत् MārkP. 82.32; सुरासुराणां संमर्दस्तस्मिन्नत्यन्तदारुणे । तुमुलोऽतिमहानासीत् सेनयोरुभयोरपि । गर्जतां देवदैत्यानां शङ्खभेरीरवेण च । … तुमुलोऽतिमहानभूत् MatsyaP. 149.1–3; बभ्राम … अतिमहान् निनादः AvantiKa. 95.18; **3 i** vast, extensive (space) नातिमहतो दुकूलवितानस्य Kād. 9.2; (प्रियङ्गुसुन्दरी) अकारयद्दिव्यशक्त्या शिखरभूमावस्य … अतिमहान्तमारामम् TilaMañ. 408.7; **3 ii** wide एतस्मिन्नतिमहति शब्दस्य प्रयोगविषये ते ते शब्दास्तत्र तत्र नियतविषया दृश्यन्ते MahāBh. i. 9.24 (*on* P. i. 1.0); अमी च तथ्या नामातिमहान्तो वेदग्रन्था इयत्येव पर्यवसिता इति NyāyMañ. ii. 92.27; **3 iii** tall संजज्ञे रत्यर्थं पृथिवीतले । द्रुपदस्य कुले कन्या वेदिमध्यादनिन्दिता । नातिह्रस्वा न महती (*v. l.* नातिमहती) MahāBhā. i. 61.96; अतिमहती भित्तिश्च मारीगृहे UdaySuKa. 80.14; **3 iv** thick प्रधानदन्ती … अतिमहत्कान्तारं प्रविष्टः TilaMañ. 184.9; अरिनृपाः … आरुह्याद्रीन् विशन्तो गहनमतिमहत् कण्टकाकृष्टकेशाः PratāYaBhū. 234.4; **3 v** broad अतिदीर्घजिह्वा गुल्फैरतितनुभिरतिमहद्भिर्वा । … नेष्टाः (गावः) SārṅgaPa. 2829; **4** numerous, abundant, ample, copious, maximum अहं तद्धनमतिमहदकृच्छ्रादधिगमिष्यामि KāmSū. 65.14 (1.5); सद्यः फलमपि महत् (*v. l.* अतिमहत्) कामुकत्वस्य लब्धा MeghDū. 24; मागनवला राहोश्चन्द्रोऽन्तरितोऽतिमहति विक्षेपे PañcSi. 3.31; अतिमहतः शबरसैन्यस्य Kād. 29.20; धूमिनी … अवन्तिराजानुग्रहादतिमहत्या भूत्या तस्मिन् देशे न्यवसत् DaśKuC. 109.10; चौरसेनातिमहती रुरोध शरवर्षिणी KathāSaSāg. ii. 2.187; अपहरन्ति सदा मनांसि पुंसामतिमहता गुणसंपरिग्रहेण । न च भवसि तथाप्यनेकचित्तः Subhāṣi. 2491; दण्डग्रहणेनैव तच्छेषस्योपादानात् पुनस्तद्ग्रहणमतिमहति दण्डे दातव्यमिति VīraMi. 469.7 (*on* 2.47); **5** of very long duration (time) नातिमहता व्यायामेन CaraS. i. 15.12; इति तन्मूलामतिमहतीं कथामकरोत् DaśKuC. 82.21; वैवस्वतेऽतिमहति वारुणे वितते क्रतौ । जुह्वानस्य ब्रह्मणो वै प्रजासर्ग इहोच्यते BrahmP. 3.107; देव त्वद्भक्तिहीनानां तपांस्यतिमहान्त्यपि । अबोद्धुणामिव ग्रन्थाभ्यासः क्लेशाय केवलम् TriṣaŚaPuC. i. 3.483; देव अतिमहदस्ति वक्तव्यमनेन AdbhuDa. 4.4(36)

**अतिमहत्तर** (ati-mahattara) *adj.* **i** very great or eminent किमर्थं मां प्रार्थयन्तो भवन्तोऽतिमहत्तराः GaṇeP. ii. 22.19; **ii** extensive, large सितासितसरित्प्रमुखमहातीर्थराशेरतिमहत्तरमिदं मरकतनामकं सरः पारलौकिकसुखसाधनमिति Mukundā. 170(10); *m.* headman of a village दलाढकः कुञ्जरकर्णकुन्द-

**अतिमात्रौषध** (atimātrauṣadha) *n.* excessive or heavy dose of medicine स्विन्नस्य मृदुकोष्ठस्य … । अतिमात्रौषधं पित्तं(पीतम्) जीवं(जीवा)-दानाय कल्पते BhelaS. 249. 12 (8. 4)

**अतिमाद्यत्** (ati-mādyat) *adj.* very much exhilerating or inspiring मोक्षमार्गः समीके मानात् सांमुख्यभाजामहिमकरमयूखातिमाद्यन्मरीचिः KhadgaS. 23.

**अतिमाधुर्य** (ati-mādhurya) *n.* excessive sweetness or pleasantness (of a breeze) शीतोऽतिमाधुर्यगुणः(? ण) प्रयुक्तः … प्राचीप्रवृत्तः पवनो न शस्तः HāriS. i. 5. 25; *adj.* very sweet केवलमतिमाधुर्यं दुग्धैः स्निग्धैश्च शर्करामिलितैः । …मृत्युंजय देव भुङ्क्ष्व परमान्नम् MṛtyuMāPūSt. 27.

[1]**अतिमान** (ati-mānà) *m.* (once *n.* in VṛGautaSm.) 1 excessive arrogance or conceit or pride ततोऽसुरा अतिमानेनैव स्वेष्वेवास्येषु जुह्वतश्चेरुस्तेऽतिमानेनैव पराबभूवुः … पराभवस्य हैतन्मुखं यदतिमानः SatBr. V. i. 1. 1 = XI. i. 8. 1; स ह स्वेनातिमानेन मानुषं वित्तं नेयाय GopBr. i. 2. 10; अतिवादोऽतिमानश्च … मित्रद्रोहश्च तानि षट् । एत एवासयस्तीक्ष्णाः कृन्तन्त्यायूंषि देहिनाम् MahāBhā. v. 37. 9; अत्यायं चातिमानं च दम्भं क्रोधं च वर्जयेत् MahāBhā. xii. 91. 29; अतिमानः श्रियं हन्ति पुरुषस्याल्पमेधसः MahāBhā. xiii. 36. 17 = SūktiRa. 69. 2; MahāBhā. iii. 199. 18; vi. 38. 4 (= BhagGi. 16. 4); xiii. 29. 14; अतिदर्पे हता लङ्का अतिमाने च कौरवाः CāṇaS. 48; सप्तमानाः । …अतिमानः कतमः । सदृशात् श्रेयानस्मि श्रेयसा सदृशोऽस्मीति वा या चित्तस्योन्नतिः AbhidhSa. 45. 7; AbhidhKoBh. 284. 23 (*on* 5. 10); AbhisaAlaṅĀ. 456. 16; संरूढस्यातिमूढे प्रणयसमुदयस्यातिमानोऽवमानः PadmPrā. 21. 19; धिगमर्षं तथा मद्यमतिमानमभीरुताम् MārkP. 6. 34; 19. 28; BhagAjju. 42(12); शाम्यं च दीर्घवैरत्वमतिमानमनार्जवम् । … शूद्रमाविशेत् VṛGautaSm. 635. 2(22); BṛKathāK. 69. 16; उपपातकम् … अतिमानोऽतिकोपश्च PadmP. ii. 67. 63; SivaP. v. 6. 1 (412A. 2); 2 excessive self-respect अतिमानादतिक्रोधात् स्नेहाद्वा यदि वा भयात् । उद्बध्नीयात् स्त्री पुमान् वा गतिरेषा विधीयते ParāSm. 4. 1; BṛParāSm. 8. 50. 3 name of one of the seven sages in the Cākṣuṣa Manvantara उन्नतो भार्गवश्चैव … अतिमानश्च पौलस्त्यः …।मधुरात्रेय इत्येते सप्त वै चाक्षुषेऽन्तरे VāyuP. ii. 1. 66; *adj.* whose pride is excessive, very proud श्रीनरसिंहः …अप्रतिहतशासन[:]…अतिमानः EI. x. 6. 9; इत्थं मतिमानाभ्यामभिहितमाकर्ण्य वचनगतिमानाभ्याम् (द्रौपदीभीमसेनाभ्याम्)…धर्मसुतो वचनमाचचक्षे YudhiVi. 4. 36.

[2]**अतिमान** (ati-māna) *m.* excessive measure or quantity (अशनम्) अप्रमाणेन दुर्मेधाः सेवते चातिमानतः BhelaS. 54. 24 (2. 3); *adj.* [*f.* -ā] immeasurable, boundless, transcending or being beyond all measures अतिमानया … कीर्त्याभितः सुरभितः … भूपो बभूव DaśKuC. 1. 11; को वा ज्ञातुं त्वामतिमानं गतमानं मायासक्तो माधव शक्तो मुनिमान्यम् AdhyāRā. vi. 13. 16; श्रुत्वादसीयभणितं हमीरराट् हर्षप्रकर्षमतिमानमुद्वहन् । …प्रोवाच वाचम् HammīMaKā. 12. 3.

**अतिमानक** (atimāna-ka) *adj.* exceeding the proper measure, excessive, अतिमात्रेऽतिमर्यादमतिवेलातिमानकम् Vaija. 211. 131, cf. [2]अतिमान.

[1]**अतिमानतस्** (atimāna-tas) *adv.* through great pride or vanity दाक्षिण्यादतिमानतो रसवशात् … तदनुष्ठितं मृगदृशा शक्यं न यद् योषिताम् SaduktiKa. 156. 13.

[2]**अतिमानतस्** (atimāna-tas) *adv.* in an excessive quantity or measure, excessively (अशनम्) अप्रमाणेन दुर्मेधाः सेवते चातिमानतः BhelaS. 54. 24 (2. 3)

**अतिमानना** (ati-mānanā) *f.* great honour or respect सत्वरमतिमाननया वासविरानीयते स मतिमाननया (उत्तरया) YudhiVi. 6. 30.

**अतिमाननीय** (ati-mānanīya) *adj.* [*f.* -ā] highly respectable or praiseworthy यो ह्यन्यायेन विपुलमर्थं संगृह्य … पूर्वाश्रमलिङ्गानि परिवर्त्य अतिमाननीयत्वाद्याश्रमस्वीकारेण तद् द्रव्यं रक्षति तस्य तद् व्रतं बैडालसंज्ञं भवति CaturCin. iii(1). 364. 13; अस्ति प्रभावैरतिमाननीया चोलावनी शालिवनीनिचोला Raghunā. 1. 11.

**अतिमानप्रवृत्त** (atimāna-pravṛtta) *adj.* acting with great pride अतिमानप्रवृत्तस्तु जायते कुत्सिते कुले ViṣṇuDhaP. iii. 253. 34.

**अतिमानयत्** (ati-mānayat) *adj.* greatly honouring (obeying implicitly) इति भवद्वचनान्यतिमानयन् फणिपतिर्निरगादुरगैः समम् Nārāy. x. 56. 6.

**अतिमानयुत** (atimāna-yuta) *adj.* having excessive pride ये पुरा मनुजा घोरा अतिमानयुता भृशम् । दर्पसमन्विताः … चण्डालाः संभवन्ति ते MahāBhā. xiii. App. (2048); भीष्मः … राज्ञाम् … अयुतं प्रतिजज्ञे हन्तुमनिशमतिमानयुतम् YudhiVi. 6. 151.

**अतिमानरुद्धसंधान** (atimānaruddha-sandhāna) *adj.* whose union was prevented by excessive pride अप्राप्तकेलिसुखयोरतिमानरुद्धसंधानयोः … यूनोः … भावाः प्रसादपिशुनाः क्षपयन्ति निद्राम् SubhāRaK. 21. 52.

**अतिमानवत्** (atimāna-va(n)t) *adj.* (pigeon) having a very large size ततः पतः परापारापारेभ्यश्चातिमानवान् KalpaK. 332. 132; *m.* pigeon, dove, [pw]

**अतिमानवती** (atimāna-vatī) *adj.* (*f.*) highly honoured, greatly respected बन्दीकृतो हरिरसौ ननु निद्रयात्र शक्त्या तवैव भगवत्यतिमानवत्याः DevīBhāP. i. 7. 41.

**अतिमानवमाया** (atimānava-māyā) *f.* superhuman power विसिस्मिये तया विश्वमतिमानवमायया HarVi. 43. 192.

**अतिमानवविक्रम** (atimānava-vikrama) *adj.* having superhuman valour आमनामा नृपः श्रीमानतिमानवविक्रमः PrabhāC. 82. 19 (11)

**अतिमानवीय** (ati-mānavīya) *adj.* superhuman, divine अवापमशेषभोगानतिमानवीयान् Raghunā. 6. 23.

**अतिमानशालिन्** (atimānaśāl-in) *adj.* having great self-respect धृतिमानवोचदतिमानशालिनो मतिमानथास्य बहुमानहेतवे ĀnandRa. 8. 26.

**अतिमानस** (ati-mānasa) *adj.* beyond the mind or mental sphere यत्खण्डत्वं स्वधर्मस्य देहिनामुपजायते । तेनातिमानसस्तापः … जायते BrahmP. 122. 59.

**अतिमानातुरता** (atimānātura-tā) *f.* eagerness or impatience caused by excessive huff स्वामिनी मनोरमा निकुञ्जे स्वयमेवातिमानातुरतया मनोभावापन्ना भवति SāmaraU. 225. 15.

**अतिमानाभिधान** (ati-mānābhidhāna) *adj.* beyond the means of knowledge and name आदेशो ब्रह्मणोऽतोऽयं निरादेशस्य भण्यते । अतिमानाभिधानस्य BṛĀraUBhVā. 174 (*on* 2. 3)

**अतिमानार्ह** (atimānārha) *adj.* worthy of great honour अतिमानार्हौ खल्वेतौ न विलम्बमर्हतः प्रियसमागमस्य KaṁVa. 7. 12 (22)

**अतिमानित** (ati-mānita) *adj.* [*f.* -ā] highly honoured, very much respected मां परिष्वज । एतावताहं भवता भविष्याम्यतिमानिता MārkP. 66. 20; ततः कलिङ्गराजोऽपि … स्वगृहं यातस्तेन सज्ञातिमानितः VarāP. 137. 81; अवियुक्तः प्रीतमना बन्धुभिश्चातिमानितः … शिवं सरेत् BrahmP. 131. 56; येन त्यक्तः पुरा तेन गृहं नीतोऽतिमानितः DevīBhāP. iii. 11. 46; तत्रास्य सहसैवाशु प्रतिभोदेष्यति स्वयम् । अहमस्मि नृपः श्रीमान्सिन्धुर्नाम्नातिमानितः YogVā. vi(2). 156. 6.

**अतिमानिता** (atimāni-tā) *f.* excessive pride, arrogance or haughtiness हर्षः शोकोऽतिमानिता ।… दृश्यन्ते लुब्धबुद्धिषु MahāBhā. xii. 152. 19; तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता । भवन्ति संपदं दैवीमभिजातस्य भारत BhagGi. 16. 3; दया समस्तभूतेषु तितिक्षा नातिमानिता ।… सामान्यवर्णानां कथिता गुणाः ViṣṇuP. iii. 8. 36; अत्यर्थं मानः अतिमानः स यस्य विद्यते सोऽतिमानी, तद्भावः अतिमानिता GītāBh.(Śaṅ.) 453. 16 (*on* 16. 3); प्रमादोन्मादरोषेर्ष्यावञ्चनं चातिमानिताम् ।… साध्वी विवर्जयेत् VedaVyāSm. 2. 34.

**अतिमानित्व** (atimāni-tva) *n.* excessive pride यौ तौ लोहिताक्षविजयवर्माणौ तावप्यतिमानित्वात् … मलयकेतुमाश्रितौ MudrāRā. 3. 24 (35); अस्थाने गर्वः अतिमानित्वम् GītāBh.(Rā.) 608. 14 (*on* 16. 3)

**अतिमानिन्** (atimān-in) *adj.* [*f.* -ī] 1 very haughty or arrogant, puffed up with great pride, having very high opinion of oneself सधमादो द्युम्निनीराप एता इस्वनतिमानिन्यः SatBr. V. iii. 5. 19; स्यात् … न चातिमानी न च हीनवृत्तो MahāBhā. v. 36. 6 (अतिमानी … सर्वानतीत्याहं मतिमानिति यो मन्यते MahāBhāraDī.); रणे रणेऽतिमानी च विमुखश्चैव दृश्यते MahāBhā. v. 165. 8; त्वां च … अतिमानिनमाहवे । दृष्ट्वा दुर्योधनः … तप्स्यति MahāBhā. vii. 123. 17; viii. 29. 12; अथेमां भक्षयिष्यामि पश्यतस्तेऽतिमानिनः Rāmā. iii. 24. 17 (GORRESIO's Ed.); अतिमानिनमग्राह्यमात्मसंभावितं नरम् । क्रोधनं व्यसने हन्ति स्वजनोऽपि नराधिपम् Rāmā. iii. 31. 15; vi. 74. 24; मद्यमांसप्रिया नित्यं कोपना चातिमानिनी (असुरशीला अङ्गना) NāṭyaŚā. 22. 104; 22. 111; बलावलेपदुष्टे त्वं मा दुर्गे गर्वमावह । अन्यासां बलमाश्रित्य युद्ध(?ध्य) से यातिमानिनी MārkP. 90. 2; 125. 12; ततस्तेषु विपन्नेषु दानवेष्वतिमानिषु ।…महिषः…प्रत्युद्ययौ हरिम् MatsyaP. 152. 16; (न प्राप्यते ललितेश्वरी) उद्धतैरुद्धतालापैर्दाम्भिकैरतिमानिभिः BrahmāṇḍP. iii. 38. 79; अपि कीर्त्यर्थमायान्ति नाशं सद्योऽतिमानिनः PañcT. 282. 13 (*on* 3. 22); लोहिताक्षविजयवर्मणोरपि…अतिमानिनोः कीदृशोऽनुग्रहः प्रीतिं जनयिष्यति MudrāRā. 3. 24 (52); कर्ता द्यूतच्छलानां जतुमयशरणोद्दीपनः सोऽतिमानी … क्वास्ते दुर्योधनोऽसौ VeṇīSaṁ. 5. 234; यस्मिन् कृषीवला राष्ट्रे…नातिमानिनः । वसेत्तत्र विचक्षणः BrahmP. 221. 106; अत्यर्थं मानः अतिमानः स यस्य विद्यते सः अतिमानी GītāBh. (Śaṅ.) 453. 16 (*on* 16. 3); सहासनश्चातिमानी वादी दण्डमवाप्नुयात् ŚukraNī. 4(5). 86; 3. 86; ii having very high self-respect, very proud महाबाहुः … सुदुर्जयः । अतिमानी च शूरश्च प्रवीरः प्रियदर्शनः MahāBhā. viii. 50. 60;

शिवा ··· लज्जाविष्टा स्थिता तत्र वेपमानातिमानिनी DevīBhāP. i. 12.19; सा बाला विदग्धं चातिमानिनम्। निपुणं सर्वकार्येषु ··· समाहूय तमेकान्ते प्रोवाच DevīBhāP. iii. 15.36; ix. 14.6; सोमकान्तो मे भर्ता। अतिमानी वदान्यश्च शूरो दृढपराक्रमः GaṇeP. 5.36 (1); स जयति नरदेवो मानहन्तातिमानी AlaṅkāMañ. 123.12 (34); *m.* one of the ten sons of 14th Manu अतिमानी प्रवीणश्च ··· सत्यस्त्वेते मनोः सुताः ŚivaP. 446.5 (*on* v. 34.68)

**अतिमानुष** (ati-mānuṣa) *adj.* [*f.* -ī, -ā] superhuman or divine, (form, act, strength, valour etc.) शृणु राजन् कथाम् ··· अतिमानुषीम्। अगस्त्यस्य MahāBhā. iii. 98.2; तं कुमारमृषिर्दृष्ट्वा कर्म चास्यातिमानुषम् MahāBhā. i. 68.9; iii. 231.17; iii. 254.10; स तत्र विषयैर्युक्तः कल्याणैरतिमानुषैः। मेनेऽभ्यधिकमात्मानम् MahāBhā. v. 8.9; पाण्डुपुत्राः ··· प्रहारे संमर्दे सर्व एवातिमानुषाः MahāBhā. v. 166.22; v. 178.30; तत्र तल्लाघवं दृष्ट्वा बीभत्सोरतिमानुषम्। देवदानवगन्धर्वाः ··· फल्गुनं प्रत्यपूजयन् MahāBhā. vi. 54.5; ततो युधिष्ठिरः प्रेक्ष्य व्यूहं तमतिमानुषम्।··· वाक्यमब्रवीत् MahāBhā. vii. 19.21; vii. 73.36; vii. 88.8; तत्र भारत भीमस्य बलं दृष्ट्वातिमानुषम्। व्यत्रस्यन्त रणे योधाः MahāBhā. viii. 55.28; तेषामभ्यागतानां स राजा राजीवलोचनः। व्यादिदेशान्नपानानि शय्याश्चाप्यतिमानुषाः MahāBhā. xiv. 86.20; ततः प्रवृत्तं मधुरं गान्धर्वमतिमानुषम् Rāmā. vii. 94.11 = AdhyāRā. vii. 7.12; सान्दीपनिरसंभाव्यं तयोः कर्मातिमानुषम्। विचिन्त्य···मेने प्राप्तौ चन्द्रदिवाकरौ ViṣṇuP. v. 21.22 = BrahmP. 194.22; ये युद्धेऽपि न संप्राप्ताः पञ्चत्वमतिमानुषे MārkP. 2.56; अतिमानुषाणि तामिः क्षितिपु दद्दृशिरे पदानि जिष्णोः Kirātā. 10.7; आप्लुतानाप्लुते काये यस्य गन्धोऽतिमानुषः AṣṭāHṛ. ii 5.24; त्वाम् ··· रूपेणातिमानुषेण प्रथमेन वयसोपपन्नां किम् ··· चापलं स्पृष्टं न वेति परीक्षिता DaśKuC. 116.18 (6); 144.22 (8); देवयोरुभयोर्दृष्टं माहात्म्यमतिमानुषम् ĀścaCū. 7.34; अतिमानुषीं धनुषि धिक् च तां क्रियाम् RāmC. 20.32; प्रागेव चिन्तितं कार्यं मयेदमतिमानुषम् MahāP. 7.202; तस्मान्नानुभवज्ञानं संभवत्यतिमानुषम् DevīBhāP. vi. 15.54; अष्टोत्तरसहस्रं यस्तिलैस्त्रिमधुराप्लुतैः। नित्यं प्रजुहुयात्तस्य शक्तिः स्यादतिमानुषी SāraTi. 11.52; सारस्वती भवेद्देवी तस्य वागतिमानुषी LiṅgaP. i. 85.201; अतिक्रान्ता सभा यस्य सुधर्मामतिमानुषीम् GaṇeP. i. 53.4; स चकार तुरङ्गस्थः संग्रामतिमानुषम् RājTa.(Ka.) 7.905; नृपः प्राह शमस्तादृक् शक्तिश्चाप्यतिमानुषी।··· कस्येदृशं महः PrabhāC. 117.1; आरराध सभाजनैरतिमानुषैर्मधुरेश्वरम् ··· राजशेखरपार्थिवः ŚivLī. 15.88; श्रीशम्भोरतिमानुषा गुणगणा लीनास्तदङ्केऽप्यहो ParamāKā. 8.55; कोऽयमस्मद्भुवमिमामवतीर्णोऽतिमानुषः RāmC. 9.7; पारे समुद्रस्य···गुणवानीश्वरः साक्षात् कश्चिद् दृष्टोऽतिमानुषः KalkiP. ii. 1.11.

**अतिमानुषकर्मन्** (atimānuṣa-karman) *adj.* of superhuman or extraordinary deeds तस्मादिच्छाम्यहं श्रोतुमतिमानुषकर्मणाम्। तेषामाजननम्··· कीर्तय MahāBhā. i. 109.4; *1214; शृणु भीमस्य कर्मेदमतिमानुषकर्मणः MahāBhā. iii. 12.2; ix. 11.20.

**अतिमानुषचेष्टादि** (atimānuṣa-ceṣṭādi) *adj.* superhuman activities etc. पद्मासनस्थ एवासौ भूमिमुत्सृज्य वर्तते। अतिमानुषचेष्टादि तथा सामर्थ्यमुद्भवेत् YogaU2. 55.

**अतिमानुषचेष्टित** (atimānuṣa-ceṣṭita) *adj.* having superhuman exploits or behaviour तमुदारं महासत्त्वमतिमानुषचेष्टितम्।··· ज्ञात्वा विस्मितः पाकशासनः MahāBhā. xiii. 5.8; आसीत्प्रथमकल्पे तु मनुः स्वायंभुवः पुरा। तस्य पुत्रद्वयं जज्ञे अतिमानुषचेष्टितम् VarāP. 2.55; अतिमानुषचेष्टितः स्वयं मधुजित् ··· असुरानभिहन्तुमीहते Yādavā. 9.9.

**अतिमानुषतेजस्** (atimānuṣa-tejas) *adj.* of superhuman prowess वत मोहस्य माहात्म्यमतिमानुषतेजसम्। सदाशिवार्चने यत्तं यत्तं शिवममोहयत् ParamāKā. 56.1.

**अतिमानुषपौरुष** (atimānuṣa-pauruṣa) *adj.* possessing superhuman valour नन्दसूनुः कथमयमतिमानुषपौरुषो बाललीलाकलेवरावृतोऽप्यनावृतब्रह्मास्वादसोदरानन्दमेदुरामुदञ्चयति चेतसो वृत्तिम् KaṁVa. 3.30 (1)

**अतिमानुषप्राणबल** (atimānuṣa-prāṇabala) *adj.* possessing superhuman vitality जगृहे च महति संपराये ··· सिंहवर्मा करिणः करिणमवप्लुत्यातिमानुषप्राणबलेन चण्डवर्मणा DaśKuC. 36.9.

**अतिमानुषम्** (ati-mānuṣam) *adv.* in a superhuman way तस्मिन् प्रगीते चातिमानुषम् ···। वैलक्ष्याद् गोमुखस्यासीदभिप्रायः पलायितुम् BṛKathāŚloSaṁ, 24.46.

**अतिमानुषरूप** (atimānuṣa-rūpa) *n.* superhuman beauty यमयोस्त्वतिमानुषरूपमनुरुध्यमाना ··· दुर्योधनमतिनिर्भरमालिलिङ्ग लक्ष्मीः AvantiKa. 47.8.

**अतिमानुषरूपसंपद्** (atimānuṣa-rūpasampad) *adj.* having abundance of superhuman beauty अतिमानुषरूपसंपदम् ··· कन्यकामिमाम्। चकमे मृगयुः Nalābhyu. 7.63.

**अतिमानुषवर्चस्** (atimānuṣa-varcas) *adj.* having superhuman splendour मां न पश्यसि किं राजन्नतिमानुषवर्चसम् SkandP. ii(2). 9.66.

**अतिमानुषविक्रम** (atimānuṣa-vikrama) *adj.* having superhuman valour पश्यामि कर्णम् ··· अतिमानुषविक्रमम् MahāBhā. vii. 148.31; x. 8.23; xii. 29.122; अतिमानुषविक्रमं तमालोच्य भूपतिः Raghunā. 8.83.

**अतिमानुषविग्रह** (atimānuṣa-vigraha) *adj.* having a superhuman body ते दृष्ट्वा वर्ष्मवन्तं तमतिमानुषविक्रमम् (v. l. अतिमानुषविग्रहम्)। भूतमेव व्यवस्यन्तो न स प्रव्याहरन् भयात् MahāBhā. x. 8.23.

**अतिमानुषशक्ति** (atimānuṣa-śakti) *adj.* possessing superhuman powers अर्वाचीनाः केचिदतिमानुषशक्तयः ĀgaPrā. 2.7.

**अतिमानुषसद्गुण** (atimānuṣa-sadguṇa) *m.* superhuman good qualities आवासभूतमतिमानुषसद्गुणानां रूपं दृशोरमृतवर्षि बिभर्षि भद्रे RasSa. 48.

**अतिमानुषसुख** (atimānuṣa-sukha) *n.* divine pleasure मनुष्यातिशायिपुरुषविशेषनिकेतोऽतिमानुषसुखाधिष्ठानो नानोपकरणः स्वर्गः PramāVāSvopVṛ. 114.1.

**अतिमानुषानुभाव** (atimānuṣānubhāva) *adj.* having superhuman greatness (गर्गमुनिः) अतिमानुषानुभावं न्यगदत् त्वामप्रकाशयन्पित्रे Nārāy. x. 44.6.

**अतिमानैकपर** (atimānaikapara) *adj.* given to excessive pride तस्यातिमानैकपरस्य पुंसः पश्याम्यवष्टब्धमहं विनाशम् Rāvaṇā. 26.26.

**अतिमान्द्य** (ati-māndya) *n.* extreme feebleness (शब्दस्य) अन्त्यस्यातिमान्द्याच्छब्दान्तरोत्पत्तिशक्तिविघातः NyāyVār. 289.3 (*on* ii. 2.14); 308.4 (*on* ii. 2.36)

**अतिमान्य** (ati-mānya) *adj.* [*f.* -ā] highly esteemed, very respectable or adorable हते पाण्डयेऽर्जुनं कृष्णस्त्वरन्नाह वचो हितम्। पश्यातिमान्यं राजानमपयातांश्च पाण्डवान् MahāBhā. viii. 16.4; xiii. 27.89; शास्त्रार्थसाहसयुताः शशिजेऽतिमान्याः Bṛhajjā. 21.9; अवाप्स्यसि···भुवो भर्तुरुचितमतिमान्यं धन्यमसामान्यं कन्यारत्नम् NalaCam. 3.16(4); याः ··· प्रकीर्तिताः। सोमपत्न्योऽतिमान्याः VarāP. 35.2; मिश्रपुरन्दरश्च मत्तातपादानामतिमान्यः CaitaCa. 139.14(6)

**अतिमान्यभाव** (atimānya-bhāva) *m.* the state of being greatly esteemed आखेटिकाव्यसनिनो नृपतेर्विशेषादायासिता इति गतैरतिमान्यभावम्। अश्वैरवापि यवसावसरश्चिरेण PṛthviVi. 4.21.

**अतिमाय** (ati-māya) *adj.* i possessing great magical power तामिल्वलेन महता स्वरेण गिरमीरिताम्। श्रुत्वातिमायो बलवान् क्षिप्रं ब्राह्मणकण्टकः MahāBhā. iii. 480*(2); इदमतिमायेन शम्बरेण सह यमस्य मायायुद्धं भवति Manmatho. 3.27 (638.17); ii beyond the power of nescience (*māyā*) नित्यमसौ ते (v. l. स त्वतिमायः) दैत्यगणारिः प्रहरतु मखमिव (दाक्षं) रिपुगणम् NāṭyaŚā. 15.147; सृष्टं त्वया यथा सर्वमाब्रह्मभवनान्तिमम्। गगनं चातिमायेन दुस्तरं तद्वदस्व मे JayāS. 2.26; अमुनातिमाये(न ? ने)मां रक्षताधोक्षजेन AvantiKa. 45.16; अद्भुताकृतिमिमामतिमायस्त्वं बिभर्षि करुणामय मायाम् Kirātā. 18.30 [fully liberated, emancipated from Māyā, PW, MW, Apte]; *m.* names of various demons; (a *daitya*) अभ्युत्तताम···अस्तमयाय शत्रोः। ··· नीलच्छविः कृततमीतिमिरोऽतिमायः HarVi. 34.29; 34.49; (son of Bhaṇḍa) अतिमायो बृहन्माय उपमायश्च ··· इत्येते दुर्मदाः पुत्रा भण्डदैत्यस्य दुर्धियः BrahmāṇḍP. iii. 26.49; (a *rākṣasa* in the army of Rāvaṇa) अतिकायेऽतिमाये च मुह्यतीवारिसंपदा RāmC. 28.74.

**अतिमाया** (ati-māyā) *f.* name of a sister of Māyā [DBHS]

**अतिमायाविता** (atimāyāvi-tā) *f.* the state of being very deceitful तेषां राजवल्लभतयातिमायावितया च दुर्निवारत्वात् Mitā. 115.8 (*on* 1.336)

**अतिमायावित्व** (atimāyāvi-tva) *n.* the state of being very deceitful तेषां (कायस्थानां) राजवल्लभतयातिमायावित्वाच्च दुर्निवारत्वात् Mitā. 104.27 (*on* 1.336) [1926 Ed.]

**अतिमायाविनी** (ati-māyāvinī) *adj.* (*f.*) great expert in magic कथमुत्तरीयमपि निर्मितमतिमायाविन्या KundaMā. 4.22(1)

**अतिमायिक** (ati-māyika) *adj.* having great (magic) powers शार्दूलः ··· अतिमायिकः। ··· जग्राह तां वधूम् ŚivaP. iii. 27.16 (327A.4); अहो विचित्रं तव राम चेष्टितम् ··· चलस्यजस्रं चरणादिवर्जितः संपूर्ण आनन्दमयोऽतिमायिकः AdhyāRā. i. 5.44.

**अतिमायिन्** (ati-māyin) *adj.* i possessing great magical powers विशेषयन्तावन्योन्यं मायाभिरतिमायिनौ। युयुधाते (घटोत्कचालंबकौ) MahāBhā. vii. 149.25; शम्बरस्य च मायानां सहस्रमतिमायिनः। यस्मिन्प्रयुक्तं चक्रेण कृष्णस्य वितथीकृतम् ViṣṇuP. i. 15.153; ii very deceitful विद्वेषवैरिकलहासुखघातभीतिनिर्भर्त्सनाभिभवनासुविनाशनादीन्। दोषाननुपैति निखिलान्मनुजोऽतिमायी बुद्ध्वेति चारुमतयो न भजन्ति मायाम् SubhāRaSaṁ. 60.

**अतिमायेश** (atimāyeśa) *adj.* who is the lord of the great nescience (*māyā*) शंभुः ··· मायातीतोऽतिमायेशो मायासक्तः स्वमायया । न कालं बुबुधे योगी BrahmVaiP. iv. 46. 29.

**अतिमार** (ati-māra) *m.* name of a king [PW]

**अतिमारक** (atimāra-ka) *m.* name of a king कुरु, गर्ग, संजय, अतिमारक (इति कुर्वादिः) JainaVyā. 172. 3 (*on* iii. 1. 139)

**अतिमारुत** (ati-māruta) *m.* i strong wind, hurricane, cyclone देशेऽशुचावात्मनि च विद्युत्स्तनितसंप्लवे । भुक्त्वार्द्रपाणिरम्भोऽन्तरर्धरात्रेऽतिमारुते (अनध्यायः) YājñaSm. 1. 149; AgniP. 162. 17; अतिमारुते ··· अनध्यायान्विदुर्बुधाः BṛParāSm. 6. 365; अतिमारुतेऽहन्यपि तावत्कालं नाधीयीत Mitā. 50. 27 (*on* 1. 149); अतिमारुतेऽतिशयेन वाति वायौ Aparā. 191. 24 (*on* 1. 149); ViraMi. 232. 7 (*on* 1. 149); ii excess of the bodily humour called 'wind' मारुतिक्रियाऽऽश्लेषसुसूक्ष्मैः । रुक्ष्मैस्सुसम्भारसुसंस्कृतैश्च । जयेदवरयं कफजान्विकारान् मान्द्यं कृशानोरतिमारुतं च BhojanKu. 109. 20.

**अतिमारुति** (ati-māruti) *adj.* who excels the son of Marut (i. e. Hanumat) विकृष्य बलवच्चापमा कर्णादतिमारुतिः । तं मुमोच महेष्वासः क्रुद्धः कर्णजिघांसया MahāBhā. viii. 34. 38.

**अतिमार्ग** (ati-mārga) *adj.* extraordinary (act or procedure) लोकाम्नायातिमार्गाभिसंधिभिर्वातमकल्पणैः । कर्माणि क्षैत्रिकादीशगणकाङ्क्षान्तकानि तु MṛgendraT. ii. 8. 78 (comm. अतिमार्गाणि कर्माणि योगजन्यानि); सिद्धिमायुयात् अतिमार्गस्य धर्मैश्च Rasā 18. 146.

**अतिमार्गण** (ati-mārgaṇa) *m.* i importunate person शल्यं हृदये निक्षिपन्त्यतिमार्गणाः HarṣaC. 196. 2; ii sharp arrow, HarṣaC. 196. 2.

**अतिमार्दव** (ati-mārdava) *n.* i excessive mildness (taste) अतिमार्दवशैत्यौष्ण्यतैक्ष्ण्यपैच्छिल्यसर्पिताः । सान्द्रतापक्वता हीनद्रव्यता दोष उच्यते SuśruS. i. 11. 17; ii excessive softness or gentleness (human qualities) ब्राह्मणे केवले लक्ष्मीर्न वसत्यतिमार्दवात् AhirbuS. 16. 20; नातिक्रौर्यं नातिशाठ्यं धारणेऽत्यातिमार्दवम् SukraNi. 3. 218; iii extremely delicate nature or tenderness (limbs) आभिरूप्यमकाठिन्यमङ्गानामतिमार्दवम् BhāvPra.(Sā.) 103. 16(5)

**अतिमाल** (ati-māla) *adj.* i beyond (i.e. superior to) a garland अतिखट्वः अतिमाल इत्यत्रान्तर्यतो विवृतस्य विवृतः प्राप्नोति संवृतः स्यादित्येवमर्था प्रत्यापत्तिः MahāBh. i. 15. 13 (*on* i. 1. 1); याङ्विधानेऽतिखट्वायातिमालायेत्यप्रतिषेधः । ···याट्सात्र भवति । ह्रस्वादेशात् MahāBh. iii. 341. 20 (*on* vii. 3. 113); क्रान्तार्थे द्वितीयया । अतिक्रान्तः खट्वाम् अतिखट्वः । अतिमालः CāndraVṛ. *on* ii. 2. 24; अतिखट्वः अतिमालः KāśiVṛ. *on* P. i. 1. 48; *on* P. ii. 2. 18; *on* P. vi. 2. 2; मालामतिक्रान्तोऽतिमालः Prasā. i. 524. 11; SiddhāKau. 182B. 10; 209A. 13; ii better than a pearl necklace [nt.]

**अतिमाहात्म्य** (ati-māhātmya) *n.* great majesty, excessive greatness सांख्यवेदान्तयोगाः ··· तवैवातिमाहात्म्यम् ··· गायन्ति भक्त्या SkandP. ii(9). 15. 3; दृश्यते चातिमाहात्म्यं तेषामतिमहौजसाम् AnuVyā. 51A. 3 (*on* 3. 3); न तस्यातिमाहात्म्यम् TattvPrakā. 151A. 1 (*on* iii. 2. 5)

**अतिमाहात्म्यवत्** (atimāhātmya-va(n)t) *adj.* possessed of great majesty मुख्यप्राणस्यातिमाहात्म्यवद्विष्णुत्पन्नत्वोपपत्तेः TattvPrakā. 130A. 5 (*on* ii. 4. 10); सुप्तप्रबोधकत्वेनातिमाहात्म्यवतो हरेर्भक्तिर्युक्तेति सिद्धम् TattvPrakā. 152A. 6 (*on* iii. 2. 8)

**अतिमाहिष्मतीपति** (ati-māhiṣmatīpati) *adj.* superior to the lord of Māhiṣmatī (i. e. Sahasrārjuna) नामेयचैत्यं सोऽपश्यदतिमाहिष्मतीपतिः Dvyāśra-Kā. 15. 91.

**[1]अतिमित** (ati-mita) *adj.* overmeasured, beyond measure, exceeding [MW], excessive [APTE]

**[2]अतिमित** (a-timita) *adj.* not moistened [MW], not wet [APTE]

**अतिमिततनु** (atimita-tanu) *adj.* whose body is beyond measure शिवाभिन्मात्राख्यादतिमिततनोरागतमथो Bhāsk. ii. 210. 8 (*on* iii. 1. 1)

**अतिमिताक्षर** (atimitākṣara) *adj.* consisting of very few words प्रियतमाहितापि वियोगिनीक्षितिमितातिमिताक्षरसत्कथा HarVi. 3. 38.

**अतिमित्र** (ati-mitra) *adj.* surpassing the sun अतिमित्रं तत्र तेजो मित्रावरुणजे मुनौ SkandP. iv. 2. 107; *m.* (i) name of a king अतिमित्रोऽनुमित्रश्च पुरुमित्रोऽपराजितः AgniP. 219. 30; (ii) name of one of the Maruts of the Praghoṣaṇa-group द्वितीये पवनस्कन्धे गणो नाम प्रघोषणः । ··· अतिमित्रो नामित्रश्च ViṣṇuDhaP. i. 127. 25; ii. 22. 53; (iii) name of a god अतिमित्रो सुषेणश्च ऋतधामा KalpaK. 371. 14; *n.* very friendly constellation तत्कालनैसर्गिकतश्च पञ्चधा पुनः प्रकल्प्यास्त्वतिमित्रशत्रवः JātaPā. 2. 45.

**अतिमित्रता** (atimitra-tā) *f.* great friendship मूकको वायसश्चैव गतावेकारिमित्रताम् (v. l. पवातिमित्रताम्) PañcT. 2. 25 (204. 6); द्वयोः सुहृत्त्वं त्वतिमित्रता भवेत् JātaPā. 2. 46.

**अतिमित्रतेजस्** (ati-mitratejas) *adj.* surpassing the sun's lustre यत्रातिमित्रतेजोभिः शलाकाभिः समन्ततः । मणिमाणिक्यरत्नानां प्रासादे भित्तयः कृताः SkandP. iv. 66. 80.

**अतिमित्रवत्सल** (ati-mitravatsala) *adj.* greatly affectionate towards a friend इरीश्वरादप्यतिमित्रवत्सलो यथोचितं दण्डधरो यमादपि PṛthvīVi. 2. 32.

**अतिमिद्** (ati-mid-) I. (IV)P. (*caus.*) to cause to thrive or prosper मह्यमन्नेनैव तदन्यान्यङ्गान्यतिमेदयति PañcBr. v. 2. 12.

**अतिमिम्मिन** (ati-mimmina) *adj.* speaking very indistinctly (or with a nasal twang) (अपत्यम्) तृतीयरात्रौ म्रियतेऽथवा पुनः सगद्गदोऽन्धो बधिरोऽतिमिम्मिनः KalyāKā. 2. 47.

**अतिमिरचक्षुस्** (atimira-cakṣus) *adj.* with eyes without amaurosis अथवा किं विकल्पेन ममातिमिरचक्षुषः । न हि दृष्टेन दृष्टार्थे द्रष्टुर्भवति संशयः BṛKathāSloSaṁ. 26. 6.

**अतिमिरा** (a-timirā) *adj.* (*f.*) free from darkness (i. e. bright) अतिमिरा हरितः प्रचकाशिरे Yādavā. 3. 1.

**अतिमिर्मिर** (áti-mirmira) *adj.* exceedingly twinkling अप्रैतानर्प्सेस्य आलभते । ··· अतिमिर्मिरमतिमेमिषम् TaiBr. III. iv. 19. 1.

**अतिमिलित** (ati-milita) *n.* a kind of buttermilk कालसेयकखाण्डवकमिलितातिमिलितानि दश भवन्ति (तक्राणि) BhojanKu. 145. 18.

**अतिमिलिन्दपुञ्ज** (ati-milindapuñja) *adj.* having many swarms of bees नीता निकुञ्जेऽतिमिलिन्दपुञ्जे ··· गतः कथं स्यात् सखि मे प्रियोऽसौ Padya-Ve. 423.

**अतिमिश्र** (ati-miśra) *adj.* of extremely mixed (features) रामाप्रियो मारसहोऽतिमिश्रः HāriS. i. 5. 23.

**अतिमिष्ट** (ati-miṣṭa) *adj.* very dainty, savoury, sweet येऽतिमिष्टं समश्नन्ति नो वाप्यन्नं ददति च PadmP. ii. 67. 76.

**अतिमीलित** (ati-mīlita) *adj.* tightly closed नातिमीलितेन लोचनयुगलेन ··· तमहम् ··· महाभागमद्राक्षम् Kād. 165. 16.

**अतिमीविता** (ati-mīvitā) *adj.* (*f.*) very strong, extremely large अपीवितां नाप्यतिमीवितां श्रितं तनुम् DhātuKā. 1. 72 (comm. अतिमीवितामतिस्थूलाम्)

**अतिमुकुट** (ati-mukuṭa) *adj.* wearing top-most crown वत्सप्रोक्तोऽतिमुकुटः कटकाङ्गदहारवान् BhaviP. 337A. 13 (ii(1). 12. 14)

**अतिमुक्त** (áti-mukta) *adj.* A absolutely free एतेनो ह्यस्य सुर्वे यज्ञक्रतव एतं मृत्युमतिमुक्ताः SatBr. II. iii. 3. 10; B beyond liberation अतिमुक्तस्तु निष्कले AnekāSaṁ. 4. 97; ViśvaPra. 72. 196; अतिमुक्तस्तु कलाहीने ParaNā. 2672; AnekāTi. 4. 10; ViśvaLoK. 151. 191; KośaKaTa. 2. 5661; C fully released शचीपतिः । इत्यानादतिमुक्तेन कुलिशेनाभ्यताडयत् Rāmā. vii. 35. 46; अतिमुक्तस्तु पुमांस्तिमिशपादपे । ··· अतीव मुक्ते NānārthāSaṁ. iii. 27. 19; D entirely free from worldly attachments अतिमुक्तस्तु निःसङ्गे MediK. 71. 183; DharK. 996; SabdaRaSaK. 133. 15; 158. 11; E surpassing a necklace of pearls अतिमुक्तमद्रथितकेसरावली सततावितासमुभगार्पितस्तनम् । -- तदङ्कपरिवर्तमाप्नुयात् MālaMā. 5. 47; *m.* name of a flower-plant *Gaertneria racemosa* or *Banisteria bengalensis* (or its flowers) प्रियङ्ग्वशोकतिलकैरतिमुक्तैश्च शोभितम् MahāBhā. ii. App. I. 15. 18; पुन्नागैः पारिजातैर्बकुलकुलयैः किंशुकैः सातिमुक्तैः । एतैर्नानाप्रकारैः कुसुमसुरभिभिर्विप्रकीर्णैश्च तैस्तैर्वासन्तैः पुष्पवृन्दैः NāṭyaSā. 15. 131; BhelaS. 179. 9 (6. 18); पलाशिनीवेतससूर्यवल्ली श्यामातिमुक्तैः सहिताष्टमूली BṛSaṁ. 55. 22; अतिमुक्तः पुण्ड्रकः स्याद् वासन्ती माधवी लता AmaK. 792; आरग्वैरगैः पुष्पैरतिमुक्तैः सुगन्धिभिः । पूजयेद् धूपदीपाद्यैः SāraTi. 10. 17; अतिमुक्तमयं तद्वत्पाटला विष्णुलोकदा AgniP. 202. 3; पावन्तिरतिमुक्तश्च कर्णिकारः कुरण्टकः ··· पूजायै स्यात् AgniP. 247. 2; अतिमुक्तः पुण्ड्रकः स्याद् कुमारी तरणिः सहा AgniP. 362. 37; मन्दारैः पारिजातैश्च अतिमुक्तैस्तथार्चयेत् VāmaP. 62. 13; तगरैर्धववाणैश्च अतिमुक्तैः सकुब्जकैः । ··· अन्यैश्च विविधैर्वृक्षैः BrahmP. 28. 13; (तत्क्षेत्रम्) केतकीकरवीरैश्च अतिमुक्तैश्च किंशुकैः । ···तथान्यैः पुष्पजातिभिः ···शोभितम् BrahmP. 41. 43; आस्ते ···क्षेत्रम् ··· केतकीवनखण्डैश्च अतिमुक्तैः सकुब्जकैः ··· समलंकृतम् BrahmP. 42. 24; 43. 52; 44. 68; Vaija. 60. 188; ParyāMu. 11. 15; AnekāSaṁ. 4. 97; लता स्यादतिमुक्तेऽपि AnekāSa. 743; NighSe. 1926; DharK. 996; 1018; सुरप्रमदाजनः ··· विकारानतिमुक्ते सुमनस्यपि व्यधत्त SriKaC. 8. 29; AnekāK. 44; NānārthāSaṁ. iii. 27. 19; MediK. 71. 183; 75. 235; CaturCin. ii(1). 680. 12; ii(2). 647. 18; AnekāTi. 4. 10; SabdaRa.(Vā.) 1060; 3901; ParaNā. 2672; BhāvPraNi. 85. 40; 85. 7; BhāvPra.(Bhā.) 6 (5). 40; AbhidhāMañ. 98. 10; RājNi. 201. 24; ViśvaLoK. 10. 53; ViraMi.(Pūjā) 257. 18; KośaKaTa.

1. 3653; ApūNā. 23B. 4; S'abdaRaSaK. 158. 11; NityoNi. 171. 7; BālamBh. i. 328. 12 (*on* 1. 100)

**अतिमुक्तक** (atimukta-ka) *adj.* absolutely liberated, completley emancipated अतिदूरप्रवृद्धेन मधुना जगति को वा न विक्रियते यदतिमुक्तको मुनिरपि विचकास VāsaDa. 136. 2 (comm. पक्षे अतिमुक्तकः पुण्ड्को मुनिरगस्त्यो विचकास, मुनिः अगस्त्यवृक्षश्च S'rīraṅgam 1906); *n.* **1** a composition free from metrical rules पद्यं च द्विविधं तत्र सुवृत्र(? त्त)मतिमुक्तकम् VisṇuDhaP. iii. 2. 12; **ii** name of a cemetery near Banares [DBHS]; *m.* **1A** a kind of perfume having the fregrance of *atimuktaka* तुल्यैः पत्रतुरुष्कवालतगरैर्गन्धः स्मरोद्दीपनः।…जातीत्वक्सहितोऽतिमुक्तक इति ज्ञेयः स कुस्तुम्बुरुः BṛSaṁ. 77. 7; **1B** name of a verual plant or flower *Gaertneria racemosa*, sometimes identified with *Dalbergia ougeinensis* or *Banisteria bengalensis* जम्बूभिः पाटलाभिश्च कुब्जकैरतिमुक्तकैः MahāBhā. i. 199. 42; i. *513(1); i. *1246(1); xiii. 14. 30; xiii. 54. 4; xiv. App. 4. 1641; अशोकैः सप्तपर्णैश्च केतकैरतिमुक्तकैः। … प्रमदेवोपशोभिताम् (पम्पाम्) Rāmā. iii. 71. 22; vi. 77*(1); vii. 42. 4; किराततिक्तकातिमुक्तकबिभीतक … प्रभृतीनां तैलानि SuśruS. i. 45. 120; iv. 31. 5; vi. 60. 35; लतां प्रफुल्लामतिमुक्तकस्य चूतस्य पार्श्वे परिरभ्य Saund. 7. 8; अच्छातिमुक्तकाच्छोडनालिकेरमधूकजम् HāriS. 14. 22; अतिमुक्तककुन्दाभ्यां कर्पासं सर्षपान् वदेत् BṛSaṁ. 29. 5; 55. 4; 85. 5; तिनिशे स्यन्दनो नेमी रथद्रुरतिमुक्तकः AmaK. 701; तथातिमुक्तकैरण्डशेफाल्यभिरुजानि च AṣṭāHṛ. vi. 13. 89; VāsaDa. 136. 2; समालतीजात्यतिमुक्तकानां वीर्याभिरम्याणि वनानि रेजुः VarāṅgaC. 22. 71; PadmP. (Ra.) 42. 19; 68. 16; Kapphiṇā. 1. 32; ParyāRaMā. 652; AbhidhāRaMā. 2. 53; विकचविचकिलातिमुक्तकमल्लिकारामकुसुमस्तवकतारकितलतामण्डपम् YaśasCam. i. 528. 5; 529. 1; भवेत् … शत्रुक्षयः कदम्बेषु अर्थलाभोऽतिमुक्तके BhaviP. 286A. 20 (i. 193. 9); पुष्पाणि चिन्वत्यतिमुक्तकस्य पश्य श्लथं केशकलापमेषा NavaSāC. 14. 52; अस्य तरोरधस्तादतिमुक्तकात्रोपयिष्यामि Tantrākhyā. 122. 3; अधिरोपिते चिकुरशेखरतामतिमुक्तके त्रिदिववामदृशाम् S'rīKaC. 13. 11; Vaija. 48. 46; Hārāva. 179; DhanvNi. 176. 14; 201. 24; AṣṭāNi. 11. 20; AbhidhāCin. 1147; AnekāSaṁ. 3. 18; 5. 21; DharK. 2569; ViśvaPra. 8. 68; 75. 229; 130. 65; 165. 39; AnekāK. 261; NānārthāSaṁ. ii. 169. 1394; ii. 191. 1649; CaturCin. ii(1). 785. 2; वासन्तीलता अतिमुक्तकलताश्च यद्यप्येकार्था नामकोशेऽधीतास्तथापीह भेदो रूढितोऽवसेयः AupaSūṬ. 17. 7; SthānṬ. 334B. 12; S'ārṅgaP. 2122; ApūNā. 11B. 1; ViśvaLoK. 161. 252; 367. 48; KośaKaTa. 2. 5245; 2. 5736; KalpaK. 257. 78; S'abdaRaSaK. 10. 20; 22. 3; 46. 8; 101. 10; 257. 1; **2 i** name of a prince तस्यातिथीः प्रिया चासीत् तत्पुत्रोऽप्यतिमुक्तकः BṛKathāK. 76. 160; **2 ii** name of a deity चन्द्रपूरोऽथ गुल्मश्च शुभः कामोऽतिमुक्तकः AgniP. 144. 10; **2 iii** name of a sage कंसबन्धुर्विविक्तात्मा मुक्तिकामोऽतिमुक्तकः।… शमवान् मुनिरराययौ PāṇḍaC. 2. 163; **2 iv** name of a Jain spiritual teacher श्रीशत्रुञ्जयतीर्थस्य माहात्म्यमतिमुक्तकः। केवली यदुवाच प्राक्(ग्)नारदस्य ऋषेः पुरः TīrthaK. 1. 2.

**अतिमुक्तकगृह** (atimuktaka-gṛha) *n.* bower of *atimuktaka* creepers अत्रातिमुक्तकगृहे मरुदीरणविधुतकुसुमसंछन्ने … कान्तः पल्लवशयने नो तृप्तिमगात् KuṭṭaMa. 668.

**अतिमुक्तकनद्ध** (atimuktaka-naddha) *adj.* covered (tied) with the creepers *atimuktaka* अतिमुक्तकनद्धेषु तरुखण्डेषु नित्यशः। स्थितिर्मे वारणैः सार्धम् Hastyāyur. 14. 18 (1. 1)

**अतिमुक्तकपत्र** (atimuktaka-patra) *n.* leaf of the creeper *atimuktaka* अतिमुक्तकपत्राणि … क्षिपेत्। कुम्भेषु पञ्चसु VisṇuDhaP. ii. 99. 72.

**अतिमुक्तकबालक** (atimuktaka-bālaka) *m* child called Atimuktaka अतिमुक्तकबालकः। दीक्षामादाय जैनेन्द्रीं तस्थौ मुदितमानसः BṛKathāK. 106. 178.

**अतिमुक्तकमण्डप** (atimuktaka-maṇḍapa) *m.* grove of the creepers *atimuktaka* (मद्रनाथः) उपागतः … तं देशम् … मृद्वीकामण्डपैर्मुख्यैरतिमुक्तकमण्डपैः (शोभितम्) MatsyaP. 118. 26; PadmP. (Ra.) 95. 51; BṛKathāK. 46. 52; व्यधुः। प्रमोदमवरोधानामतिमुक्तकमण्डपाः PāṇḍaC. 4. 90; 5. 75.

**अतिमुक्तकमण्डल** (atimuktaka-maṇḍala) *n.* grove of creepers *atimuktaka* (तस्यैव पर्वतेन्द्रस्य प्रदेशम् उपागतः) अतिमुक्तकमण्डलैः (शोभितम्) VisṇuDhaP. i. 151. 19.

**अतिमुक्तकमला** (atimukta-kamalā) *f.* name of a maiden विजयसेना च अतिमुक्तकमला च … नाम ग्रामिकदुहिता: LaliVi. 18. 22 (35)

**अतिमुक्तकमाला** (atimuktaka-mālā) *f.* name of a maiden [PW]

**अतिमुक्तकमौक्तिक** (atimuktaka-mauktika) *n.* pearl in the form of the (flowers of the) creeper *atimuktaka* अतिमुक्तकमौक्तिकैर्विवव्रे कुचकुम्भेषु वधूजनस्य हारः S'rīKaC. 8. 43 (comm. अतिमौक्तिकानि(? मुक्तकानि) एव वर्णसंनिवेशाभ्यां मौक्तिकानि तैः हारो विवव्रे हारशोभा प्रकटीकृता)

**अतिमुक्तकलता** (atimuktaka-latā) *f.* creeper *atimuktaka* मया … अतिमुक्तकलतामण्डपे … तल्पमधिशयानो मनसिशय इव … पथिकदारको दृष्टः TilaMañ. 162. 20; 353. 13; KathāSaSāg. xiii. 1. 92.

**अतिमुक्तकवल्ली** (atimuktaka-valli) *f.* creeper *atimuktaka* अतिमुक्तकवल्लीभिः … द्रुमाः … शोभन्ते PadmP. v. 15. 37.

**अतिमुक्तकव्रतति** (atimuktaka-vratati) *f.* creeper *atimuktaka* न सुरभावभवन्नतिमुक्तकव्रततयोऽततयोगगुणश्रियः HarVi. 3. 29.

**अतिमुक्तकसंभूतपुष्प** (atimuktakasambhūta-puṣpa) *n.* flower born of the *atimuktaka* creeper आर्पयत्। अतिमुक्तकसंभूतपुष्पमालां तु मानिनी SamarāSaṁ. 9. 247.

**अतिमुक्तकसाधुवत्** (atimuktakasādhu-vat) *adv.* like the saint Atimuktaka बालं पुंसामभिज्ञानामतिमुक्तकसाधुवत्। … स्वकम्। पक्षं देवगुरुः प्राह PrabhāC. 179. 26.

**अतिमुक्तकसुगन्धि** (atimuktaka-sugandhi) *adj.* fragrant like the flower *atimuktaka* उत्पलसप्तपर्णचूतातिमुक्तकसुगन्धि … सेनामतङ्गजगणा मुमुचुर्मदाम्भः HarVi. 44. 12.

**अतिमुक्तका** (atimuktakā) *f.* the creeper *atimuktakā* (Jasmine) अतिमुक्तका माधव्याम् ApūNā. 11B. 1.

**अतिमुक्तकागार** (atimuktakāgāra) *n.* bower of *atimuktaka* creepers सः (राजा) … अतिमुक्तागार(v. l. अतिमुक्तकागार)मपश्यत् MahāBhā. iii. 190. 24.

**अतिमुक्तकामोद** (atimuktakāmoda) *m.* fragrance of the (flower of the) *atimuktaka* creeper अतिमुक्तकामोदमुद्वामयन् … परावर्तत सुरभिमासः Kād. 362. 22.

**अतिमुक्तकुसुम** (atimukta-kusuma) *n.* flower of the creeper *atimukta* अतिमुक्तकुसुमे य उपलब्धो गन्धः स बन्धूके … कदाचिदुपलभ्यते NyāyMañ. i. 207. 6

**अतिमुक्तजव** (atimukta-java) *adj.* who have given up speed अध्वानमल्पमतिमुक्तजवैस्तुरंगैरागच्छता पथि रथेन विलम्बितं मे PañcRā. 3. 22.

**अतिमुक्तजाल** (atimukta-jāla) *n.* net-work of *atimukta* creepers अतिमुक्तजालमयीं पार्श्वे वापीम् … कारयित्वा MahāBhā. iii. 190. 23 (add.)

**अतिमुक्तद्रुम** (atimukta-druma) *m.* *atimukta* plant सदैन्यमलसं मुक्तोऽतिमुक्तद्रुमः RājoKaPū. 70; Subhāṣi. 2535.

**अतिमुक्तपादप** (atimukta-pādapa) *m.* *atimukta* plant शान्तोऽतिमुक्तपादपः DharK. 877, 2314.

**अतिमुक्तबन्धन** (atimukta-bandhana) *adj.* having loose joints तस्य (नरस्य) चेच्चक्षुषी … अतिमुक्तबन्धने … तदा परासुरिति विद्यात् CaraS. v. 3. 6 (1941 Ed.)

**अतिमुक्तबीज** (atimukta-bīja) *n.* seed of *atimukta* creeper अतिमुक्तबीजमध्यं मधुलीढं हन्त्युदरवृद्धिम् BhāvPra. (Bhā.) 8(38(? 39)). 24.

**अतिमुक्तमहामुनि** (atimukta-mahāmuni) *m.* great sage called Atimukta इत्थं हसित्वा सोत्कण्ठमतिमुक्तमहामुनिम्। स मृत्युंजयमात्मानं मन्वानो राज्यमादधे PāṇḍaC. 2. 203.

**अतिमुक्तमहारावा** (atimukta-mahārāvā) *adj.* (*f.*) uttering a very loud cry, roaring very loudly अतिमुक्तमहारावा …। पपात पूतना भूमौ VisṇuP. v. 5. 10.

**अतिमुक्तलता** (atimukta-latā) *f.* *atimukta* creeper परिगृहाण गते सहकारतां त्वमतिमुक्तलताचरितं मयि Mālavikā. 4. 13; MatsyaP. 209. 6; DaśKuC. 102. 3; VisṇuDhaP. ii. 37. 6; अतिमुक्तलतानवीनसूनस्मितसंभावित एष मानिनीनाम् Manmatho. 4. 5 (643. 8)

**अतिमुक्तसार** (atimukta-sāra) *adj.* lacking in essence, without reality न हि अतिमुक्तसारे वस्तुनि स्थूलस्य अवस्थानसंभवः Bhāsk. i. 257. 14 (*on* i. 5. 14)

**अतिमुक्तस्रज्** (atimukta-sraj) *f.* garland (of flowers) of the *atimukta* creeper उन्नतस्तनतटोत्सङ्गेऽतिमुक्तस्रजं भूषायै प्रमथप्रिया निदधिरे S'rīKaC. 8. 56.

**अतिमुक्तहस्त** (atimukta-hasta) *adj.* extremely generous, extremely open-handed सर्वस्वदानेष्वतिमुक्तहस्तः। दत्त्वाप्यशोकः … त्वम् DaśāvaC. 5. 198; *m.* branch of the plant *atimukta*, DaśāvaC. 5. 198.

**अतिमुक्ता** (atimuktā) *f.* creeper *atimuktā* श्यामातिमुक्तातर्कारीकुसुमक्वाथसाधितम् … घृतम् AṣṭāSaṁ. ii- 183. 8 (6. 2); DharK. 933; NānārthāSaṁ. i. 17. 90; i. 110. 787; AbhidhāMañ. 261. 18; S'abdaRaSaK. 167. 2.

**अतिमुक्तागार** (atimuktāgāra) *n.* bower of the creepers *atimuktā* (राजा) श्रान्तः … अतिमुक्तागारमपश्यत् MahāBhā. iii. 190. 24.

**अतिमुक्ति** (áti-mukti) *f.* 1 complete release उपनद्धस्य गृह्णात्यतिमुक्त्यै TaiS. VI. vi. 9.2; KauṣiBr. 10.3 (46.13); S'atBr. II. iii. 3.9; XIV. vi. 1.5; BṛĀraUBhVā. iii. 1.27; 2 an offering called *atimukti* अतिमुक्तीर्जुहोति BhārS'S. vii. 5.6; ĀpaS'S. vii. 7.2; xix. 13.2.

**अतिमुक्तिक** (atimuktika) *m.* the flower *atimuktika* मालती मल्लिका चैव यूथिका चातिमुक्तिकः (पुष्पप्रकाराः) BhaviP. 166B.20 (i. 115.23)

**अतिमुक्तिका** (ati-muktikā) *f.* name of a woman सेयमतिमुक्तिका मुक्तकण्ठमारटति निकटे नाटकसूत्रधारी HarṣaC. 328.18.

**अतिमुक्तिता** (atimukti-tā) *f.* the state of final liberation, being finally released साध्यादप्यासुराद्दैवसाध्यासिरतिमुक्तिता BṛĀraUBhVā. iii. 1.25.

**अतिमुक्तिसाधन** (atimukti-sādhana) *n.* means of final release or liberation अतिमुक्तिः अतिमुक्तिसाधनम् BṛĀraUBh. 359.4 (*on* iii. 1.3)

**अतिमुख** (ati-mukha) *adj.* (blowing) against the face नानापुष्परजोमिश्रः …। दिव्यस्त्रीगीतबहुलो मारुतोऽत्र सुखो (v. l. मारुतोऽतिमुखो) ववौ MahāBhā. xiii. 14.34; ii having a big face (or mouth) प्रलम्बकण्ठोऽतिमुखः … दैत्यो वृषभरूपधृक् ViṣṇuP. v. 14.5.

**अतिमुखर** (ati-mukhara) *adj.* A i roaring or crying aloud अतिमुखराः कल्लोलमुखरम्। शोणम् … मम गजपतयः पास्यन्ति MudrāRā. 4.16; गर्वेयातिमुखरानुन्नादिनो बर्हिणः … अब्द SaduktiKa. 270.7; काष्ठं दण्डं गृहाणेत्यतिमुखरजनैस्ताडितो लोष्टघातैर्भीतः सर्पः S'ārṅgaPa. 574; Subhāṣi. 2421; A ii prattling much मूर्खस्य चाष्टौ गुणा निश्चिन्तो बहुभोजनोऽतिमुखरः Cāṇakya Niti. Text Tradition vol. iii. 1800; B greatly noisy नीरात् … अतिमुखरात् सारसतस्तीरमिता स्रोततिः Nalo. 2.45; C very loud स्नानशङ्खानाम् … अतिमुखरो ध्वनिः Kād. 16.12; TilaMañ. 226.19.

**अतिमुखरीकृत** (ati-mukharikṛta) *adj.* made to talk at length, made very eloquent क्व धीदरिद्रोऽहं क्व च त्वं गुणपर्वतः। अभिष्टोष्ये तथापि त्वां भक्त्यातिमुखरीकृतः TriṣaS'aPuC. i. 3.478.

**अतिमुग्ध** (ati-mugdha) *adj.* [*f.* -ā] A i extremely perplexed or stupefied आकृष्टधन्वना च मनसिजेन विद्धः स दिग्धफलेन पत्त्रिणातिमुग्धः … कथं कथमप्यपासरत् DaśKuC. 60.5; अतिमुग्धः सुरापानाज्ज्ञानभ्रष्टोऽभवत् PadmP. ii. 24.10; A ii extremely enamoured अतिमुग्धो महादैत्यः स तस्याः सुरतेन PadmP. ii. 24.15; व्रजरामा केशववंशरवैरतिमुग्धा। … केलिनिकुञ्जगृहाय जगाम ChandoMa. 3.4; B very simple or innocent अगलदश्रु चलति दयिते नतभ्रुवः। … इदमेव युक्तमतिमुग्धचेतसाम् S'iśuVa. 15.89; VarāṅgaC. 14.31; BṛKathāS'loSaṁ. 22.171; किं बिम्बं पद्मबन्धोः … दृष्ट्वा द्वेष्टुर्बलस्य … तर्कयन्तेऽतिमुग्धा वध्वः … अजितलपनं वस्तदेनस्तृणेद्ध JinaS'. 3.12; SamaMā. 6.34; PraboCan. 2.27 (33.12); तोयेषु तस्याः प्रतिबिम्बितासु व्रजाङ्गनानां नयनावलीषु। स्वबन्धुपङ्क्तिभ्रमतोऽतिमुग्धा गोष्ठीं शफर्यो रचयांबभूवुः ChandoMa. 2.78; KaṁVa. 6.46(4); C very charming अतिमुग्धं च हसितम्। … बालायाः SubhāRaK. 15.43; SaduktiKa. 58.22; अतिमुग्धवाचः। … अतिमुग्धमुखीः (सौराष्ट्रतत्तीरसुगोष्ठकन्या आनन्दयन् … सचिवाधिनाथः) VasaViKā. 11.30.

**अतिमुग्धक** (atimugdha-ka) *adj.* very simple or innocent सुतया बुद्धिशालिन्या पिता प्रोक्तोऽतिमुग्धकः। … आकर्णय … तावत्त्वं मुग्धमानसः BṛKathāK. 55.58.

**अतिमुग्धता** (atimugdha-tā) *f.* great innocence or simplicity अतिमुग्धतया नरा विबोद्धुं परमार्थान्न हि शक्नुवन्ति बालाः VarāṅgaC. 24.21.

**अतिमुग्धम्** (ati-mugdham) *adv.* very naively or innocently नखदशननिपाताः केन कारणेन सवेदना अपि प्रीतिमुत्पादयन्ति … अतिमुग्धमभिहितम् DhūrtaViSaṁ. 18.1; KaumuMa. 5.14(5)

**अतिमुग्धवत्** (atimugdha-vat) *adv.* like an extremely bewildered person सीता … विललापातिमुग्धवत् AdhyāRā. vii. 4.60.

**अतिमुच्** (ati-muc-) VI. Ā. [*pass.* with Acc.] to be released, to be avoided, to be evaded तासां यन्मेध्यं यज्ञियं सदेवमासीत् तदत्यमुच्यत TaiS. VI. iv. 2.3; अति पाप्मानं भ्रातृव्यं मुच्यते य एवं वेद TaiS. VI. vi. 9.2; अपो वै वृत्रः पर्यशयत्तो या अत्यमुच्यन्त ता जीवा यज्ञियाः MaiS. iv. 5.1; i. 4.6; तेषां येऽत्यमुच्यन्त ते मनुष्यान् प्राविशन् KāṭhS. 37.14; 13.8; 32.5; सः … हविषाग्निं प्रीत्वाथातिमुच्यते … ते हविषाग्निं प्रीत्वाथातिमुमुचिरे … तथो एवैवं विद्वान् होता … हविषाग्निं प्रीत्वाथातिमुच्यते KauṣiBr. 13.3 (58.15); 2.9 (8.7); अत्यहोरात्रे मुच्येवहि। ततो वै ते अत्यहोरात्रे अमुच्येते। … अति ह वा अहोरात्रे मुच्यते TaiBr. III. i. 6.2; तेन रक्षांस्यतिमोक्ष्यामहे … तेन रक्षांस्यत्यमुच्यन्त S'atBr. III. iv. 3.8; सा यदा मृत्युमत्यमुच्यत सोऽग्निरभवत् S'atBr. XIV. iv. 1.13; BṛĀraU. i. 3.12; केन यजमानोऽहोरात्रयोराप्तिमतिमुच्यते … केन यजमानः पूर्वपक्षापरपक्षयोराप्तिमतिमुच्यते S'atBr. XIV. vi. 1.6; BṛĀraU. iii. 1.3; अन्नाद्यमेवैतद् अहोरात्रयोर्मुखतोऽपिधायैतौ पुनर्मृत्यू अतिमुच्यते यदहोरात्रे JaimiBr. 1.6; वाचः सत्येनातिमुच्यते। तस्मादोमित्येवानुमन्त्रयेत JaimiUBr. iii. 19.1; i. 3.5; i. 30.4.

**अतिमुच्य** (atimuc-ya) *ger.* having released स सर्वान् पाशान् … मृत्योरतिमुच्य स्वस्त्येवोदमुच्यत AitBr. 12.3 (324); KauṣiBr. 15.5 (68.14); चक्षुषश्चक्षुरतिमुच्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति JaimiUBr. iv. 18.2 = KenU. 1.2.

**अतिमुच्यमान** (ati-mucyamāna) *adj.* [*f.* -ā] being fully released अपोऽतिमुच्यमाना अनु यजमानोऽतिमुच्यते KāṭhS. 32.5; स सर्वस्मात् पाप्मनोऽतिमुच्यमान एति JaimiUBr. i. 32.6; BṛĀraUBh. 362.17 (*on* iii. 1.6)

**अतिमुद्** (ati-mud-) I. Ā. to be greatly pleased राजा … सूनुना चात्यमोदत TriṣaS'aPuC. iv. 1.413.

**अतिमुद्** (ati-mud) *f.* great joy or delight अतिमुदैवाच्युतं संततोऽस्मि SatS'lo. 101; ViṣṇuPādāSt. 25; तपसि … अतिमुदो रविरत्र चेत् TājiNi. ii. 6.58 (292); क्षितिपतितिलकस्याग्रजन्मा तनूजः। लब्ध्वा नानावरौघम् … अतिमुदमधिकामावहन् ParamāKā. 75.93; ज्योतिरुदयत् परं साक्षात्कुर्वन्ननुभवति सीमामतिमुदः Manmatho. 4.17 (645.20); जनयति सुरतेऽतिमुदम् … शकाशनानन्दः Hāsyārṇa. 2.33 (CAPPELLER's Ed.); *adj.* possessed of great joy or delight कामादतिमुदं हर्षं धर्मपौत्रमसूयत MārkP. 50.28; रमयन्ति विमानसंस्थिताः सुरवध्वोऽतिमुदोऽरिणार्चि(? र्दि)तान् YogYā. 16.14.

**अतिमुदा** (ati-mudā) *f.* great joy or delight प्रणम्यात्रिपुत्रमलर्कः … वाक्यमुवाचातिमुदान्वितः MārkP. 43.59; (भार्गवः) संध्यां चकारातिमुदान्वितः BrahmāṇḍP. ii. 35.39; निवृत्तः खेचरोऽतिमुदान्वितः SkandP. i(2). 6.29; नगरमतिमुदायुतं समन्तात् PādaTā. 9.2.

**अतिमुदावती** (atimudā-vatī) *adj.* (*f.*) full of great joy (बहुला) बुभुजे स्वल्पकं भक्ष्यं द्विज नातिमुदावती MārkP. 69.12.

**अतिमुदित** (ati-mudita) *adj.* [*f.* -ā] over-joyed, very glad ललिता चातिमुदिता बभूवास्य पराक्रमैः BrahmāṇḍP. iii. 27.103; DevīBhāP. vi. 2.43; अतिमुदितो महीपतिः … दिव्ययानमारूढवान् UdaySuKa. 145.7; श्रीजयदेवकवेरिदमुदितम्। रसिकजनं तनुतामतिमुदितम् GītGo. vi. 12.8; नृपप्रियामतिमुदितामुपासितुं प्रचक्रमे सुरपुरसुन्दरीजनः NemiNir. 2.34; S'ārṅgaPa. 549 (comm. 2); BhāvVi. 8; ĀnandRa. 5.8 (32); संपूर्णेन्दुप्रभास्ये सुरभिलचिकुरे मञ्जुवागि त्वदीयात् सांनिध्यादेव पञ्चस्वतिमुदितमभूदिन्द्रियेषु त्रयं नः RasSa. 159; *n.* great joy or gladness गिरीन्द्रकन्यायाः। मुखमतिमुदितविलासं विलोकयति … ईशः PārvPa. 2.14.

**अतिमुदिर** (ati-mudira) *adj.* surpassing the cloud क तु पुनर्जटानामाटोपश्चिकुरनिकरश्चातिमुदिरः Manmatho. 2.19 (434.6)

**अतिमुद्रिता** (ati-mudritā) *adj.* (*f.*) tightly sealed or covered धृतपुष्पकरंडकः। वंशस्य नालिकामेकां मदनेनातिमुद्रिताम्। उद्घाटयति तावत्स दष्टस्तान्मूलिकाहिना UttaKuC. 354.

**अतिमुमुचाना** (ati-mumucānā́) *adj.* (*f.*) being let loose या अतिमुमुचाना धावन्ति ता जीवा यज्ञियाः MaiS. iv. 5.1.

**अतिमुस्तक** (ati-mustaka) *m. n.* variety of *Cyperus rotundus* (शिरीषशेलुककुभसिन्दुवारातिमुस्तकम् … पुष्पैरेभिः प्रपक्वम् … घृतम्। लिह्यात् AṣṭāSaṁ. ii. 17.3 (4.3)

**अतिमुहुस्** (ati-muhus) *adv.* very frequently सर्वाङ्गेष्वङ्ग रज्यत्कुतुकमतिमुहुर्धारयन्नीश चित्तं तत्राप्येकत्र युञ्जे वदनसरसिजे सुन्दरे मन्दहासे Nārāy. xi. 95.9 (comm. अतिमुहुः पुनः पुनः)

**अतिमुह्यत्** (ati-muhyat) *adj.* very much confused अतिमुह्यतस्तव कतरः पन्थाः BālBhā. 2.44 (1)

**अतिमूक** (ati-mūka) *adj.* absolutely dumb तत्र सारस्वतं तीर्थम् …। यत्र स्नातोऽतिमूकोऽपि भवेद्वाक्यविचक्षणः SkandP. vi. 46.2.

**अतिमूढ** (ati-mūḍha) *adj.* [*f.* -ā] very foolish, extremely dull or confused, completely insentient संरूढस्यातिमूढे प्रणयसमुदयस्यातिमानोऽवमानः PadmPrā. 21.19; अतिमूढ उदस्यते नयान्नयहीनादपरज्यते जनः Kirātā. 2.49; अतिमूढहतात्मानो निर्लज्जाः क्षुद्रवृत्तयः। … स्थितास्ते मृत्युसन्निधौ PadmP.(Ra.) 53.111; तद्वचेतोऽतिमूढम् … अवशमुपनिषद्बोधयामास सम्यक् SatS'lo. 8; यो वा पुरैषोऽहमिति प्रतीतो बुद्ध्या विक्लृप्तस्तमसातिमूढया VivеCū. 303; सहजं च गाढमतिमूढतमं तम इत्यतः पुरमनुव्रजसि SaṁkṣeSā. 3.41 (ii. 172.1); सुषुप्तेऽप्यतिमूढस्य सर्वसंसारनिह्नुतिः BṛĀraUBhVā. iii. 5.212; क व्रजामि मम धीरतिमूढा RāmC. App. (2). 40.45; किं योगिनीदर्शमिह व्यराध्यस्त्वं वैरिणीवेदमिवातिमूढ DvyāśraKā. 14.7; मन्त्रान् वश्यादिकारिणः। मूढा जपन्तु तेभ्योऽतिमूढाः कृषिमुपासताम् PañcDa. 9.66; अतश्च धनादिस्नेहयुक्ताश्चेदतिमूढा एव Bhāsk. i. 318.7 (*on* i. 6.5)

**अतिमूढधी** (atimūḍha-dhī) *adj.* possessed of a very dull intellect,

very stupid निर्गतो योनितो देही मायया क्षिप्यते पुनः । पितृभ्यां जडवद् बालः पोष्यमाणोऽतिमूढधीः ĀdiP. 7.50; संनिपातज्वरस्तस्य वक्त्रजिह्वे(? वक्रजिह्वो)ऽतिमूढधीः । प्रलयं शनकैर्देहं त्यजन् याति यमालयम् TantrRā. 31.69.

**अतिमूढभाव** (atimūḍha-bhāva) *m.* extreme stupidity अज्ञो विनश्यति पुमानतिमूढभावात् SaṁkṣeSā. 1.268 (i. 205.2); वरं च दत्तं (दातुं) गतवानहं च स चापि वव्रे वरमेतदेव । निवारितो मामतिमूढभावाद् भवान् यथैवं वृतवान् वरं च BrahmP. 228.45.

**अतिमूढमति** (atimūḍha-mati) *adj.* of a very perplexed mind दुर्बुद्धे विनिवर्तस्व वैरिपक्षस्तवादतः ।··· मातिमूढमतिर्भव ViṣṇuP. i. 17.35.

**अतिमूढवत्** (atimūḍha-vat) *adv.* like a very stupid person यदातीव जरायुक्तो जडोऽतिबधिरो भवेत् । कफश्वासादियुक्तश्च परायत्तोऽतिमूढवत् BrahmVaiP. ii. 36.147.

**अतिमूढविषय** (atimūḍha-viṣaya) *m.* [Loc.] in case of a very dull person भवेदेवमिदं जगत् । पयातिमूढविषये उक्तिरेव न राजते YogVā. iv. 31.19.

**अतिमूत्रता** (atimūtra-tā) *f.* excessive urination ज्वरान्ते जायते शोफो मलविट् चातिमूत्रता HārīS. iii. 9.108; (बालकस्य) वर्षे षष्ठे चेष्टातिमूत्रता ĪśānŚiPa. i. 41.80.

**अतिमूत्रल** (ati-mūtrala) *adj.* causing excessive urine क्षारचौरोऽतिमूत्रलः HārīS. ii. 1.24; त्रपुसं त्वतिमूत्रलम् AṣṭāHṛ. i. 6.87 = AṣṭāSaṁ. i. 37.6 (1.7)

**अतिमूत्रवत्** (atimūtra-va(n)t) *adj.* urinating excessively (अश्वः) श्वासार्तोऽप्यतिमूत्रवान् (गतायुः स प्रकीर्तितः) AśvaVai. 23.8.

**अतिमूर्ख** (ati-mūrkha) *adj.* extremely foolish पण्डिते वातिमूर्खे वा··· मृत्योः सर्वत्र तुल्यता BṛNāraP. 7.72; तस्य धीजडो नाम शिष्योऽतिमूर्खः Bharat. 7A.9.

**अतिमूर्खक** (atimūrkha-ka) *adj.* extremely foolish (ओदनस्य च किं भद्रे यौवनं ब्रूहि सांप्रतम्) ओदनस्योष्णता तद्धि ततस्त्वमतिमूर्खकः BṛKathāK. 14.13.

**अतिमूर्खता** (atimūrkha-tā) *f.* great stupidity, extreme foolishness सिंहोऽप्यतिमूर्खतया···तदुपरि दूरं गत्वा पपात Pañcā. 237.23; कमपि ब्राह्मणमतिमूर्खतया शब्दार्थावबोधविरहेण शुद्धिवर्जितं भगवद्गीतां पठन्तम् ··· विलोक्य भगवांस्तमवादीत् CaitCa. 171.12 (7)

**अतिमूर्छा** (ati-mūrcchā) *f.* excessive fainting or swoon तृष्णा ··· अतिमूर्छा···विमोहनानि (पित्तज्वरलक्षणानि) KalyāKā. 9.55; ज्वरातिमूर्छा ··· सपित्तमेहेषु भवन्त्युपद्रवाः KalyāKā. 11.23; 11.175; अश्वीदपि ··· कफातिमूर्छामयहारि BhojanKu. 137.16.

**अतिमूर्छाविसंस्थुल** (atimūrcchā-visaṁsthula) *adj.* unsteady because of excessive fainting छिन्नद्रुपातमपतत्सोऽतिमूर्छाविसंस्थुलः PāṇḍaC. 1.481.

**अतिमूर्छित** (ati-mūrcchita) *adj.* greatly intensified or aggravated (भेषजानि) आनयन्तीव हृदयं दोषांस्तानतिमूर्छितान् BhelaS. 248.5 (8.5); (तार्क्ष्यः) संमूर्छितोऽपि ह्यतिमूर्छितेन क्रोधोष्मणा खादितुमाद्रुतस्त्वाम् Nāray. x. 71.4.

**अतिमूर्ति** (ati-mūrti) *m.* **i** name of a one-day Soma-sacrifice अतिमूर्तिना यक्ष्यमाणो मासं सौर्याचान्द्रमसीभ्यामिष्टीभ्यां यजेत ĀśvaSS. II. iii. 8.1; **ii** name of an attendant of Śiva अतिमूर्तिरनेकाङ्गी क्रूरः क्रूरवपुर्महान् TantrSa. 9.167.

**अतिमूर्धनपीडा** (atimūrdhana-pīḍā) *f.* excessive headache अतिमूर्धनपीडायाः पीडां प्राप्नोति चार्भकः HārīS. iii. 52.1.

**अतिमृगा** (ati-mṛgā) *f.* big cucumber विटंकोऽतिमृगेर्वारुर्विशालैन्द्रीन्द्रवारुणी Vaija. 59.172.

**अतिमृताय** (ati-mṛtāya-) [*denom.*] to become like one completely dead सूर्यायति सुधारश्मिर्मन्मथोऽतिमृतायते । मृतस्य कान्ताविरहे स्वर्गोऽपि नरकीयति SaraKaṇṭhā. 404.2 (comm. अतिमृतवद् भवति) = ŚṛṅgāPra. 410.23.

**अतिमृत्यु** (ati-mṛtyu) *adj.* [AitGr. II. 1.311] (leading) beyond death, conquering death अथ खल्वात्मसंमितमतिमृत्यु सप्तविधं सामोपासीत ChāndoU. ii. 10.1; ii. 10.6; महान्तं पुरुषम् ···। ब्रह्मवित्सोऽतिमृत्युं वै प्रयात्येवानिवर्तकम् BṛParāSm. 12.175 (171); अतिमृत्युपदे बहुव्रीह्याश्रयेण भक्तिपरत्वम् ViraMi.(Bhakti.) 21.1; *m.* name of a *sava*-sacrifice यमोदनमिलतिमृत्युम् KauśiSū. 66.11.

**अतिमृत्युमृत्यु** (ati-mṛtyumṛtyu) *adj.* who is beyond the death of death (i.e. worst death) स पततु सर्वं निरूप्य ··· अतिमृत्युमृत्युरतिनमाम्यहं भूत्वा स्वे महिम्नि सदा समास्ते NṛsiṁhoTāU. 7.

**अतिमृदु** (ati-mṛdu) *adj.* [*f.* -~dvī] **A** very soft (of touch) अतिमृदुनि क्षौमपाण्डूनि स्थानदत्तचीनपट्टोपधानके···शयनपर्यङ्कतले मुहूर्तलब्धविश्रमः AvantiKa. 29.8; तत्रोरुसंधिकक्षावक्षःसु समम्, न पीडितं नातिमृदु (चुम्बनम्) JayaMa. 112.20 (on 2.3); वेश्यातिमृदुभिः स्पर्शैः तत्केशोल्लेखनादिभिः। प्रबोधयति BhāvPra.(Śā.) 101.19 (4); अतिमृदु जलमपि निपतद्भिनत्ति शैलम् Subhāṣi. 2875; अतिमृदु नवनीतात् ··· परिलसति हविष्यं कस्य गल्लच्छलेन PadyaVe. 251; रे रे गोपाः ··· स्वैरं चीरोच्चयमतिमृदुम् ··· वसीध्वम् KaṁVa. 5.22; **B** extremely delicate or tender तथा ··· अतिमृद्वतिकठिनं च शरीरमप्रशस्तमुच्यते KāśyaS. 48B.7; पुष्पवृक्षानतिमृदून् दन्तैनोन्मूलयत्यसौ DeviBhāP. vii. 18.30; इयमतिमृद्वी लतिका गोपवचोभिर्विकम्पिता प्रायः GopāKeCan. 93.8; रतिनिरता अतिमृद्वयः ··· आन्ध्रोद्भवा मृगाक्ष्यः KandaCū. ii. 5.22; अङ्गानि यस्यातिमृदूनि कृत्वा कराब्जयुग्मं कठिनं व्यतानीत् । धाता Raghunā. 7.20; **C** extremely mild or gentle (wind, fire etc.) नात्युष्णोऽतिमृदुर्न च ।··· स्वेदः कार्यकरो मतः CaraS. i. 14.6; अतिमृद्वतितीक्ष्णानां गन्धानामुपसेवनम् ।··· घ्राणेन्द्रियविनाशनम् CaraS. iv. 1.125 (1941 Ed); (सा) तदन्नमण्डम् ··· अतिमृदुना तालवृन्तानिलेन शीतलीकृत्य ··· स्नानाय तमचोदयत् DaśKuC. 111.24; स्तम्भं विधत्तेऽतिमृदुर्हि मश्च (बस्तिः) AṣṭāSaṁ. i. 150.19 (1.28); (दश क्षारदोषाः) तद्यथा···अतिमृदुतितनुरतिघनः AṣṭāSaṁ. i. 191.15 (1.39); अपदच्छिन्नम् ··· अतिमृदुपरुषं च (पाठं) निन्दति KāvyMī. 33.12; दर्व्या वा दरवह्निनातिमृदुना पाकं विदित्वा RasoCin. 9.49 (131.17); (हरेः) लीलावतारानुकथातिमृद्वी विश्वस्य सृष्ट्यादिकलापलिक्ते CaitaCa. 63.13(3); अतिमृदुना राजभागधेयेन संभृतम् । ···अमुं प्रभावलीदेशम् ··· इभ्यास्ते ते समाययुः ParamāKā. 70.24; **D** exceedingly kind or gentle (by nature) अतिमृदुरतिकर्मकृच्च सौर्ये Bṛhajjā. 24.12; जननीरहितोऽतिमृदुः ··· शशिभे (सौरे) Sārā. 29.7; अनुवृत्त्यातिमृद्वपि तस्यापोह्यत वैकृतम् RājTa.(Ka.) 8.3046; अतिमृदुः ··· । सैन्धवमनुनयमानः पाण्डुतनूजो मुमोच YudhiVi. 5.56; मर्मज्ञोऽतिमृदुः क्रियासु स भवेद्धीमान् विटाधीश्वरः ŚṛṅgāDī. 1.23; नातिक्रूरो नातिमृदुर्देवसत्त्वो मनोरमः (हयः) ŚukraNī. 4(7).76; **E** very pleasing (praise etc.) वाक्यानि सुन्दरदृशोऽतिमृदूनि तस्याः [CaurPañ. (Ed. Solf) 24, nt] अतिमृदुस्तुतिनतिसेवादानप्रियोक्तिभिः । मायिकैः सेव्यते ŚukraNī. 5.26; **F** very weak चोरा इवातिमृदवो महतां कवीनामर्थान्तराण्यपि हठाद्वितरन्ति शब्दाः BhallaŚ. 2 = Subhāṣi. 162.

**अतिमृदुक्रमा** (atimṛdu-kramā) *adj.* (*f.*) having a progression of very soft (sounds) मध्यमारभटी प्रौढेऽप्यर्थे नातिमृदुक्रमा PratāYaBhū. 61.11.

**अतिमृदुगमना** (atimṛdu-gamanā) *f.* name of a Buddhist deity (*lit.* having a very delicate gait) [pw]

**अतिमृदुतरनासा** (atimṛdutara-nāsā) *adj.* (*f.*) having an extremely delicate nose अतिमृदुतरनासा ··· कामिनी पद्मिनी स्यात् ŚṛṅgāDī. 2.18.

**अतिमृदुता** (atimṛdu-tā) *f.* **i** excessive mildness अतिमृदुता अतिस्निग्धता···इत्येकादश द्रव्यदोषाः SuśruS. iv. 35.32; **ii** extreme softness or tenderness मुखेऽतिमृदुता ··· यस्यैषा क्षितिरम्बुजस्य वसतिर्युक्तैव तत्र श्रियः SaraKaṇṭhā. 460.20 = ŚārṅgaPa. 1137; **iii** extreme sweetness (of tongue or speech), SaraKaṇṭhā. 460.20 = ŚārṅgaPa. 1137.

**अतिमृदुत्व** (atimṛdu-tva) *n.* **i** extreme mellowness सन्दर्भस्यातिमृदुत्वमसंयुक्तकोमलवर्णबन्धत्वम् PratāYaBhū. 63.2; **ii** extreme tenderness or softness अत्रातिमृदुत्वेनातिदुःसहत्वेन चानुरूपयोरङ्गनामदनज्वरयोर्घटना Kuval. 88(1); सत्पुरुषचेतसाम् ··· पुष्पेभ्योऽप्यतिमृदुत्वं व्यनक्ति AlaṅkāMañ. 220.17.

**अतिमृदुभाग** (atimṛdu-bhāga) *m.* very soft or tender part नैवाकाले न चातिमृदुभागे त्वयास्य प्रहर्तव्यम् Tantrākhyā. 26.4; PañcT. 1.86 (28) (96.11)

**अतिमृदुमधुरम्** (ati-mṛdumadhuram) *adv.* in a very soft and sweet manner अहो मुग्धत मामिति शनैरतिमृदुमधुरमालपन्ती (उदयसुन्दरी) UdaySuKa. 138.2.

**अतिमृदुल** (ati-mṛdula) *adj.* [*f.* -ā] extremely soft, fine or delicate अतिमृदुलौ मम चरणौ ŚivāL. 95; (सः) मृगत्व(? त्व)चोऽतिमृदुला विवस्त्रेस्या(? स्यो)ऽतिसर्जति SkandP. iv. 12.22; कर्णद्वन्द्वे च तालीदलमतिमृदुलम् KṛṣṇaKa. 2.93.

**अतिमृदुलता** (atimṛdula-tā) *f.* excessive tenderness or delicacy ततो मातृवियोगदुःखादतिमृदुलतया शान्तिरुपरता भविष्यति PraboCan. 2.33 (37.6)

**अतिमृदुसंदर्भ** (atimṛdu-sandarbha) *m.* composition consisting of very soft sounds रौद्रबीभत्सयोः ··· । अतिमृदुसन्दर्भस्तु विरुद्धः PratāYaBhū. 61.12.

**अतिमृदुस्पर्श** (atimṛdu-sparśa) *adj.* very soft to the touch (भूमिः) विमलातिमृदुस्पर्शैस्तृणैश्छन्ना विराजते PadmP.(Ra.) 3.53.

**अतिमृदुहृदय** (atimṛdu-hṛdaya) *adj.* possessed of a very tender

heart वत्स जानामि त्वां पितृप्रियमतिमृदुहृदयम् HarṣaC. 220. 11.

**अतिमृदुहृदयता** (atimṛduhṛdaya-tā) *f.* excessive tenderness of heart यत इयं नः स्वामिनी मरणेन च मातुः ··· अतिमृदुहृदयतया ··· निरवलम्बना ··· आग्निं प्रविशति HarṣaC. 325. 17; न चातिमृदुहृदयतया हृद्विलेखः कार्यः Bāla-Krī. i. 197. 16 (*on* 1. 350(? 349))

**अतिमृद्वङ्गी** (atimṛdv-aṅgī) *adj.* (*f.*) having an extremely delicate body or limbs वत्से त्वमतिमृद्वङ्गी BrahmāṇḍP. iii. 26. 81; क सा बालातिमृद्वङ्गी क च तत्तादृशं तपः SkandP. iv. 59. 66.

**अतिमृष्ट** (ati-mṛṣṭa) *adj.* 1 very savoury or tasteful सुञ्जन्दत्तं तया सोऽन्नमतिमृष्टमभीप्सितम् ViṣṇuP. iii. 18. 67; इदमतिमृष्टतयामृतमप्यतिशेते Nala-Cam. 7. 13(9); मृत्पात्रमतिमृष्टस्य पूर्णं दध्योदनस्य वै । प्रदत्तं ब्राह्मणाय VāmaP. 79. 54; 2 well-smeared, polished or rubbed well प्रतिदिनमतिमृष्टं वेश्म कुर्यात सुशोभम् RatiRaha. 12. 1.

**अतिमेचकित** (ati-mecakita) *adj.* of an excessively dark blue colour नगे । वटाह्वये कृतवसतिश्च यक्षराट् प्रभातिमेचकितहरिद् विपन्नगे CaturJi-Stu. 76.

**अतिमेढ़** (ati-meḍhra) *adj.* having a large penis अतिमेढ़ोग्रकायांश्च··· क्षमाचरान् । ···सृजतं (? सृजन्तं) रुद्रम्···। दृष्ट्वा ब्रह्माब्रवीत् BrahmāṇḍP. i. 9. 74.

**अतिमेदुर** (ati-medura) *adj.* [*f.*-ā] 1 very fatty क्रुद्धातिमेदुरान्यकामा ··· न गर्भं धत्ते AṣṭāSam̐. i. 200. 2(2. 1); 2 extremely thick or dense देवः स एव किमयं महसामधीशः संहर्तुमेति तिमिराण्यतिमेदुराणि RukmiHa. 4. 20; 3 full of, replete with अद्य गोत्रजगणो गृहोदरे नैवमास्यति मुदातिमेदुरः HariVi. 5. 46.

**अतिमेदुरत्व** (atimedura-tva) *n.* excessive thickness or denseness अतिमेदुरत्वमासाद्य संपपृचिरे ककुभस्तमोभिः HarVi. 19. 42.

**अतिमेदुरीकृत** (atimedurī-kṛta) *adj.* rendered very pliable or favourable केलिरसमाधुरीततिभिरतिमेदुरीकृतनिखिलबन्धुपशुपालन् । ··· सुन्दरि माधवमवकलयालम् StavMā. 262. 27 (comm. स्निग्धतां नीताः)

**अतिमेद्य** (ati-medya) *adj.* very fatty मृतं कृशं चातिमेद्यन्···मांसमुत्सृजेत् CaraS. i. 27. 311 (1941 Ed.); अतिमेद्यं त्यजेन्मांसं हतं व्याधिविषोदकैः AṣṭāSam̐. i. 35. 13 (1. 7)

**अतिमेध** (ati-medha) *adj.* highly intelligent त्वरितवचनोऽतिमेधो नातिसुतो नार्थवान् रवौ सुतगे HorāSā. 21. 5.

**अतिमेधविग्रह** (atimedha-vigraha) *adj.* whose form is beyond understanding कविं कवीनामतिमेधविग्रहम् । ज्येष्ठराजं वृषभं केतुमेकम् Varada-PūTāU. 1. 5.

**अतिमेधस्** (ati-medhas) *adj.* highly intelligent दिवोदासस्य वै तीर्थं तत्र राज्ञोऽतिमेधसः SkandP. iv. 83. 78; पलाशसमिधां हुताद् भवेदतिमेधा(? धाः) ĪśānŚiPa. i. 19. 58.

**अतिमेधा** (ati-medhā) *f.* high intelligence तर्पयेत्तां जलैः शुद्धैरतिमेधामवाप्नुयात् ŚāraTi. 7. 86; स विन्दतेऽतिमेधाम् ĪśānŚiPa. i. 21. 116.

**अतिमेधावित्व** (atimedhāvi-tva) *n.* the state of being highly intelligent यो नामातिमेधावित्वादेकवेदगतानि शाखान्तराण्यप्यधीते TantrVā. 642. 17 (*on* ii. 4. 9)

**अतिमेधाविन्** (ati-medhāvin) *adj.* highly intelligent तस्य पुत्रोऽतिमेधावी कम्बुग्रीवः DevīBhāP. v. 17. 11; vii. 11. 31; अतिवर्णोऽतिमेधावी ···पैत्तिकप्रकृतिर्नरः BhelaS. 72. 23 (3. 4); अक्लात्मकोपि(ऽति)मेधावी (उत्तमसत्त्वः तुरङ्गमः) Mānaso. iv. 4. 702; (ironical) नूनमतिमेधावी भवान् SiddhāBi. 51. 6.

**अतिमेध्य** (ati-medhya) *adj.* I promoting the intellect greatly घृतमिदमतिमेध्यं वृष्यमायुष्यहेतुः KalyāKā. 18. 24; II not at all defiled लघुतममतिमेध्यं पेयमेतद्धि तोयम् KalyāKā. 5. 8.

**अतिमेमिष** (áti-memiṣa) *adj.* opening the eyes too wide, staring अथैतानरूपेभ्य आलभते । ··· अतिमिर्मिरुमतिमेमिषम् TaiBr. III. iv. 19. 1 (comm. सदा विस्फारिताक्षः स्तब्धदृष्टिः)

**अतिमेह** (ati-meha) *adj.* passing excessive urine कार्शितस्यातिमेहस्य चेष्टितस्य तथैव च (वायुः कुप्यति) BhelaS. 211. 5 (6. 28); *m.* disease of excessive urination औदुम्बरसमिद्धोमादतिमेहः क्षयं व्रजेत् DevīBhāP. xi. 24. 28.

**अतिमैत्र** (ati-maitra) *adj.* extremely friendly or favourable (constellation) मैत्रीकरणं मित्रभमतिमैत्रं परममैत्रर्क्षन् VasiS. 20. 7.

**अतिमैत्रचेतस्** (atimaitra-cetas) *adj.* one whose mind is extremely benevolent अहो हि सत्त्वेष्वतिमैत्रचेतसस्तथागतस्यानुजिघृक्षुता परा Saund. 18. 47.

**अतिमैथुन** (ati-maithuna) *n.* excessive sexual intercourse अतिमैथुनाद् वा शुक्रं चलितमनिर्गच्छद् विमार्गगमनादनिलोऽभितः संगृह्य मेढ्रवृषणयोरन्तरे संहरति SuśruS. ii. 3. 12; ii. 12. 7; vi. 1. 26; vi. 41. 24; प्राग्वाताद तिमैथुनात् । ··· वातादयः प्रकुप्यन्ति CaraS. i. 17. 8; iii. 3. 38 (1941 Ed.); सूतानां दुष्प्रजातानां योनिभ्रंशेऽतिमैथुने । ··· मद्यमाहुर्यथामृतम् KāśyaS. 136A. 42; अपवर्गमरणं च स्याद् विशेषेणातिमैथुनात् AṣṭāSam̐. i. 60. 16 (1. 9); व्यायामतो वाप्यतिमैथुनाद् वा ··· वातः प्रकोपः(? पं) समुपैति नित्यम् KalyāKā. 3. 54; RugVi. 26. 2; 59. 3; 61. 1; अलटनं चानशनमतिमैथुनमेव च । ··· द्राग्जराकरणं महत् ŚukraNi. 3. 302; cf. **अतिमोक्ष.**

**अतिमैथुनज** (atimaithuna-ja) *adj.* caused by excessive sexual intercourse इत्येभिर्लक्षणैर्विद्यादतिमैथुनजं क्षयम् BhelaS. 53. 8 (2. 2)

**अतिमोक्ष** (ati-mokṣá) *m.* 1 means of final liberation तद्योऽयं प्राणः स वायुः स उद्गाता सा मुक्तिः सातिमुक्तिरित्यतिमोक्षाः ŚatBr. XIV. vi. 1. 8; तद्यदिदं मनः ··· सातिमुक्तिरित्यतिमोक्षाः BṛĀraU. iii. 1. 6; इत्येवंप्रकारा मृत्योरतिमोक्षाः BṛĀraUBh. 363. 16 (*on* iii. 1. 6); अतिमोक्षाः स्युः सर्वत्र यथोक्तादेव लक्षणात् BṛĀraUBhVā. iii. 1. 46; 2 designation of the *mantras* in TaiS. III. v. 4. 1-2; ये देवा यज्ञहन इति यजमानस्तीनतिमोक्षान् जपति Vārā-ŚS. I. i. 4. 29.

**अतिमोक्षमाण** (ati-mokṣamāṇa) *adj.* escaping एनदभ्यग्रं शंसेद् यथार्शि प्रदाव्यमतिमोक्षमाणः KauṣiBr. 16. 2 (72. 13)

**अतिमोक्षातिदेश** (atimokṣātideśa) *m.* transference or extension of the designation *atimokṣa* अतिमोक्षातिदेशोक्तेस्तद्विशेषोऽथ भण्यते BṛĀraUBh-Vā. iii. 2. 9.

**अतिमोक्षिणी** (ati-mokṣiṇī) *adj.* (*f.*) (a form of Prajāpati) which completely frees one (from sin) एषा वै प्रजापतेरतिमोक्षिणी नाम तनूर्यदर्दाभ्यः TaiS. VI. vi. 9. 2; KāṭhS. 30. 7.

**अतिमोचारसा** (ati-mocārasā) *adj.* (*f.*) surpassing the essence of banana वृषाकपायीवरयोः सपर्या वाचातिमोचारसयेति तन्वन् । मुनिप्रवीरः Śaṅka-DigVi.(Mā.) 12. 20.

**अतिमोद** (ati-moda) *m.* extreme joy तं देशिकम् ··· दृष्ट्वातिमोदं स जगाम भट्टः ŚaṅkaDigVi.(Mā.) 7. 80; निविडयति डकारीनामचौकर्गहांकाप्रभृतिभिरतिमोदं तत्र गाडा(?)पठारैः VīraBhā. 11. 31; सः ···गोदामतिमोदाकुलमानसः प्रतस्थे Rāṣṭrau. 7. 14; (cognate object) ततोऽतिमोदं मुदितः स देवः सदा चिदानन्दतनुर्धिनोतु GoviBh. 313. 11 (*on* iv. 4. 0)

**अतिमोदमान** (ati-modamāna) *adj.* extremely delighted स रघुनाथविभुः ··· अस्तूयत द्विजवरैरतिमोदमानैः Raghunā. 8. 12.

**अतिमोदा** (ati-modā) *adj.* (*f.*) very much pleased पुत्रम् ··· असूत यशोदा । समजनि बल्लवततिरतिमोदा StavMā. 260. 26; *f.* 1 name of the plant *gaṇikāri*, *Jasminum arboreum* (Roxb.) RājNi. 370. 17; 2 very great fragrance [APTE], extraordinary fragrance [MW]

**अतिमोदान्वित** (atimodānvita) *adj.* extremely delighted भवद्दानं महीमण्डले । सारज्ञा विबुधालयः समधुरं पीत्वातिमोदान्विताः ĀnandRa. 2. 12.

**अतिमोह** (ati-moha) *m.* 1 excessive fainting प्रलपत्यतिमोहेन जृम्भते च पुनः पुनः PadmP. ii. 35. 19; तृष्णालोः शीततो वेपमानस्य तीक्ष्णं शिरोविरेचनमनिलशङ्खहनुस्तम्भदिवाकरावर्तातिमोहानुपजनयति KāśyaS. 161A. 17; 2 A extreme delusion, great ignorance तन्मन्यन्तेऽतिमोहादुपहतमनसः सद्विलासं मनुष्याः SubhāRaSam̐. 127; आसनं शयनं यानपरिधानगृहादिकम् । ···वाञ्छत्यहोऽतिमोहेन AgniP. 382. 2; ततोऽतिमोहाद् भुजयैकयैव मुग्धस्तितीर्षामि महासमुद्रम् HammiMaKā. 1. 11; 2 B extreme infatuation, extreme perplexity कंचित्कालं च दुःखं ते भविष्यति न च त्वया । तत्रातिमोहः कर्तव्यः KathāSaSāg. iii. 1. 147.

**अतिमोहकरी** (atimoha-karī) *adj.* (*f.*) producing great delusion अतिमोहकरी माया मम विष्णोश्च सुव्रत ŚarabhU. 21.

**अतिमोहकर्त्री** (atimoha-kartrī) *adj.* (*f.*) causing great infatuation तस्मिन् प्रविष्टे सलिले मृते च ममार्तिरासीदतिमोहकर्त्री BrahmP. 228. 83.

**अतिमोहकृत्** (atimoha-kṛt) *adj.* causing great delusion, highly infatuating दैतेयान् मोहयामास मायामोहोऽतिमोहकृत् ViṣṇuP. iii. 18. 23.

**अतिमोहद** (atimoha-da) *adj.* very infatuating नार्यः ··· कुर्वन्त्यो गाननृत्यादिप्रपञ्चानतिमोहदान् DevīBhāP. vi. 1. 53.

**अतिमोहन** (ati-mohana) *adj.* very enticing रसिकानन्दशिरोमणेः ··· अतिमोहनस्योपासका भक्ताः SāmaraU. 249. 19; 253. 17; स खलु ··· त्वदीयमतिमोहनं न तु कलेवरं दृष्टवान् Nārāy. iii. 9. 3; अतिमोहनविभ्रमा ··· वारुणी निरगात् Nārāy. viii. 28. 9; *n.* gold जाम्बूनदे तु कुङ्कुमाल्वजाल्वातिमोहनम् Nāma-Māli. 151.

**अतिमोहापहारिणी** (atimohāpahāriṇī) *adj.* (*f.*) removing great infatuation (i. e. clearing great confusion) अतिमोहापहारिण्यः सूक्तयो हि

-महीयसाम् YogVā. v. 4. 5.

**अतिमोहित** (ati-mohita) *adj.* [*f.* -ā] extremely bewildered, completely deluded, very much perplexed (उवाच वाक्यं तं क्षुद्रं वैदेही) विषादादतिमोहिता MahāBhā. iii. 1270*; (तद्रूपं (=शुक्ररूपम्) आस्थाय दैत्यान् प्रति ययौ गुरुः) असुराः ··· प्रणम्य संस्थिताः सर्वे काव्यं मत्वातिमोहिताः DeviBhāP. iv. 12. 55; इयेष नगरं गन्तुं दिग्भ्रमेणातिमोहितः DeviBhāP. vii. 18. 48; एवं पीडासमायुक्तो दुःखं सुष्ठेऽतिमोहितः PadmP. ii. 15. 17.

**अतिमौक्तिक** (atimauktika) *n.* the blossom of Atimukta creeper वधूजनस्य कुचकुम्भेष्वतिमौक्तिकान्येव वर्णसंनिवेशाभ्यां मौक्तिकानि comm. *on* SriKaC. 8. 43; *adj.* of (the person called) Atimukta श्रुत्वातिमौक्तिकं वाक्यं सत्यभूतमपि क्षितौ। ··· तौ ··· चिन्तामेतामुपागतौ BṛKathāK. 106. 220.

**अतिमौर्ख्य** (ati-maurkhya) *n.* extreme foolishness तस्या न लाभो भवितातिमौर्ख्यादाक्रन्दितेनेह वृथा हि किं ते BrahmP. 228. 78.

**अतिम्लानता** (atimlāna-tā) *f.* I great dejection श्रुत्वा दूतमुखाद्राजा··· अतिम्लानतया यातः ··· विनायकम् GaṇeP. ii. 63. 3; II the state of being totally discoloured (अन्नस्य) विषादिसंसृष्टस्य ··· वैवर्ण्यैः सुगन्धोपघातश्च अतिम्लानताग्नौ प्रक्षिप्तस्य वेति ManuBh. ii 67. 7 (*on* 7. 217)

**अतिम्लानमुख** (atimlāna-mukha) *adj.* [*f.* -ī] having a very dejected face (दूताः) अतिम्लानमुखाः ··· मूकतां गताः GaṇeP. ii. 124. 5; सातिम्लानमुखीं कुन्तीं धर्मात्मजमथानमत् PāṇḍaC. 9. 2.

**अतिम्लानि** (ati-mlāni) *f.* great dejection रूपमस्य विनिरूप्य तथातिम्लानिमाप रविवंशवतंसः NaiṣC. 5. 62.

**अतिम्लेच्छम्** (ati-mlecchām) *adv.* annihilating the Mlecchas (making them an event of the past) दुःसुराष्ट्रं निःसुराष्ट्रमतिम्लेच्छं विधायियु। तेष्वत्यक्तं ब्रुवन्तोऽनुदिपं जगुर्द्दिपद्रुताः DvyāśraKā. 5. 40 (comm. भिल्लादीनामतीतत्वं सतामेवातिक्रमम्)

**अतियज्** (ati-yaj-) I. U. I [AltGr. II. 1. 197] to neglect (a deity) while offering a sacrifice यो वै स्वां देवतामतियजते प्र स्वायै देवतायै च्यवते TaiS. II. v. 4. 4; अतियजेत निजां यदि देवतामुभयतश्च्यवते जुषतेऽप्यघम् Yādavā. 6. 4; Kuval. 62(32); अतियजति परस्यायै देवतायै ब्रह्मरुद्रादिरूपायै भगवन्तमतिक्रम्य निरीश्वरं यजति स पापीयान् VedāntRaMañ. 3. 8 (111. 18); II to make an offering beyond (the chanting of a particular metre) यो ह वै विराजमतियजते पुनर्ह सोऽमुष्मिन् लोके यजमान आस्ते। ··· क एत आसत इति। ये विराजमत्ययजामहि JaimiBr. 1. 233; ये विराजमतियजन्ते ṢaḍviBr. i. 6. 1.

**अतियजन** (ati-yajana) *n.* a sacrificial vessel used in the Pravargya rite महावीरोऽतियजने परपुष्टे जराटके S'abdaRaSaK. 291. 12.

**अतियज्वन्** (ati-yajvan) *adj.* offering many sacrifices पुरूरवास्त्वतिदानशीलोऽतियज्वातितेजस्वी ViṣṇuP. iv. 6. 35.

**अतियत्** (ati-yat-) I. Ā. to exert more, to strain oneself more (*pass.*) असदुक्तविरोधीति तेन नेहातियत्यते BṛĀraUBhVā. i. 5. 278.

**अतियत्** (ati-yát) *adj.* going beyond, passing by, crossing अतियन्नेव यं दिष्यात् तं मनसा प्रेव विध्येत् KausīBr. 11. 5 (51. 2); तथो हैतमेषोऽतियन्तमग्निर्युर्नो न हिनस्ति SatBr. I. i. 2. 10; देशसंधौश्च सोऽतियन् MahāP. 35. 27.

**अतियतात्मन्** (atiyatātman) *adj.* who has controlled himself thoroughly नगर्यास्तत्र निर्याति यतावति यतात्मनि ··· संजातः संक्षोभः PadmP. (Ra.) 120. 45.

**अतियत्न** (ati-yatna) *m.* great effort, great care शरीरं पीड्यते येन शुभेन त्वशुभेन वा। अत्यन्तं तन्न (v. l. अतियत्नं न) कुर्वीत अनायासः स उच्यते AtriS. 37; द्विजाः किं वातियत्नेन मार्यन्ते कर्मभिः स्वकैः। रक्ष्यन्ते चाखिला जीवाः MārkP. 2. 61; तस्मातियत्नादतिरिच्यमाने पराक्रमे ··· । हन्ता पुरां भूरि पृषत्कवर्षं निरास Kirātā. 17. 32; अकीर्तिः ··· अस्य नोत्पद्यते यथा। कुरुध्वमतियत्नेन विभिन्नखिलमेतयोः PadmP. (Ra.) 47. 66; KuṭṭaMa. 59; विजिज्ञासतया यत्र वेदान्तेषु मुमुक्षुभिः। समर्थ्यतेऽतियत्नेन तद्ब्रह्म VākyaVṛ. 34; अतियत्नेन महिमानस्य कीर्तितः BṛĀraUBhVā. i. 3. 345; i. 4. 903; अमीषाम् ··· इन्द्रियग्राममतियत्नेनापि संरक्षितुं न तरति पुरश्चारी लोकः YaśasCam. i. 112. 4; TilaMañ. 302. 19; YogVā. iii. 60. 55; AdhyāRā. iii. 7. 7; iv. 7. 55; (अविच्छिन्ना) अतियत्नादनिच्छन्त्या अपि तस्याः स्नेहख्यापनार्थं परिचारिकया काटयेत् JayaMa. 243. 14 (*on* 4. 2); Daśāva-C. 7. 191; यत्कोष्ठादतियत्नेन नासामह्मपुराननैः। बहिः प्रक्षेपणं वायोः स रेचकः YogS'ā. 5. 6; रमणं नातियत्नस्य विक्षेपादेव युज्यते AnuVyā. 11B. 5 (*on* 1. 2); सोमदेवः ··· स्फुटतरपरिभाषानामरत्नानि हृत्वा। व्यरचयदतियत्नात्तैरिमां कण्ठमालाम् RasRaSa. 8. 89; 5. 118; स्वमतान्यपि तेन खण्डितान्यतियत्नैरपि साधितानि कैः S'aṅkaDigVi.(Mā.) 4. 9; (रत्नचूडः) पाल्यमानोऽतियत्नेन पितृमातृमनोरथैः RatnaCūKa. 67; AdvaiSi. 8. 5; 900. 9; चित्रान् रसिसंयोगानतियत्नादरीयवैव KandaCū. v. 4. 53; Nāräy. xi. 96. 7; *adj.* exerting very much, striving hard भवतु भवतीह मयि सततमनुरोधिनी। तत्र मम हृदयमतियत्नम् GitGo. x. 19. 3.

**अतियत्नज** (atiyatna-ja) *adj.* got by strenuous effort भूयांसोऽतोऽसुरा देवाः कनीयांसोऽतियत्नजाः BṛĀraUBhVā. i. 3. 25 (comm. अतियत्नजा इत्यत्यन्तयत्नसाध्यज्ञानकर्मलभ्या इत्यर्थः)

**अतियत्नतस्** (atiyatna-tas) *adv.* with great effort, with great diligence, with great care सदैव कूपेषु जलं सुदुर्लभं हरन्ति यन्त्रैरतियत्नतो जनाः KalyāKā. 2. 23; मधुब्राह्मणविद्यामिदमेव प्रवक्ष्यते। वस्त्वैकात्म्यप्रसिद्ध्यर्थं प्राधान्येनातियत्नतः BṛĀraUBhVā. i. 4. 1792; यस्तु कामयते लक्ष्मीं मुक्तिदां मुक्तिदामपि। तेन चीरेश्वरं लिङ्गं संसेव्यमतियत्नतः SkandP. iv. 83. 113; iv. 96. 92; आकार्यारामिकं स्त्रीयं शिक्षयित्वातियत्नतः। रोपणायार्पयद् राजा तदाम्रम् PārśvC. 1. 428; उच्चारूढैर्नरैरात्मा रक्षणीयोऽतियत्नतः दूरारोहपरिभ्रंशविनिपातः सुदुःसहः PārśvC. 2. 596; SamarāSam. 9. 358; (पर्पटीम्) विभाव्य पालिकामध्ये क्षिप्त्वा बदरवह्निना। ईषत्प्रस्वेदनं कृत्वा स्थापयेदतियत्नतः RasRaSa. 14. 89; 20. 137; निधिदेवमहीपानां प्रभावाच्चातियत्नतः। असात्म्यभूमिसंपन्ना अपि सिध्यन्ति पादपाः S'ārṅgPa. 2123; कन्या ··· शिक्षणीयातियत्नतः MahNirvāT. 8. 47; अपमानम् ··· गोपयेदतियत्नतः MahNirvāT. 8. 145; 10. 199.

**अतियत्नम्** (ati-yatnam) *adv.* very carefully, painstakingly बलीयानयमजास्तनंधयः। तदतियत्नमुपसंव्यानेन बद्धानीयतामुदवसितम् YaśasCam. ii. 132. 2; प्रीतिं कुर्याद्विष्णवेषु अभक्तेषु विवर्जयेत्। दैवोपलब्धं भुञ्जानो नातियत्नं चरेत्सुखे SātvaT. 8. 25.

**अतियत्नवत्** (atiyatna-va(n)t) *adj.* making strenuous effort, very careful अतीसारेषु यो नातियत्नवान् ग्रहणीगदः (तस्य) AṣṭāSam. i. 280. 5 (3. 8); AṣṭāHṛ. iii. 8. 15 (comm. अतीसारेषु योऽतियत्नवान्न भवति तस्य ग्रहणीगदो भवेदिति ग्रहण्या निदानम्); अतियत्नवतश्च चित्तविक्षेपो नियतः NyāySu.(Ja.) 166A. 13 (*on* i. 2. 5)

**अतियत्नशील** (atiyatna-śīla) *adj.* very careful सर्वकर्मसु कथितलक्षणान्नियोज्य कोषागारेऽतियत्नशीलो भवेत् RājNiRa. 53. 18.

**अतियत्नाधिगम्यता** (atiyatnādhigamya-tā) *f.* the state of being known (only) with great effort (सूक्ष्मतां चान्ववेक्षेत योगेन परमात्मनः ManuSm. 6. 65) सूक्ष्मतामतियत्नाधिगम्यतामवेक्षेत सदा चिन्तयेत् ManvaVi. 731. 20 (*on* 6. 65)

**अतियन्त्र्** (ati-yantr-) X. P. to put under severe restrictions दंतोद्भेदेषु रोगेषु न बालमतियन्त्रयेत्। स्वयमप्युपशाम्यन्ति AṣṭāHṛ. vi. 2. 43 (comm. पथ्यभोजनादिना नातीव नियमयेत्); AṣṭāSam. ii. 182. 2 (6. 2)

**अतियन्त्रणा** (ati-yantraṇā) *f.* great restraint, rigid formality अभूमिरियमुपचाराणामलमतियन्त्रणया HarṣaC. 158. 8; तदपास्यातियन्त्रणामनुभूयन्तां यथेष्टमिन्द्रियसुखानि DaśKuC. 133. 5.

**अतियन्त्रयोग्यतस्** (atiyantrayogya-tas) *adv.* due to being exactly fit for the use of mechanisms अथाल्पसत्त्वादतियन्त्रयोग्यतस्तथाल्पवस्तैरपि चाल्पमांसतः। ··· अश्मरी सुखाद्(? द्र)हीतुम् ··· शक्यते KalyāKā. 13. 14.

**अतियन्त्रित** (ati-yantrita) *adj.* firmly fastened or fixed किं त्वेते पञ्जराः सप्त कीलकैरतियन्त्रिताः। कदाचिदपि नोद्घाट्यास्त्वया BhaviP. 681A. 11 (iv. 54. 18)

**अतियम** (ati-yama) *m.* name of one of the two attendants of Kārttikeya (given by Varuṇa) घसं चातिघसं (v. l. यमं चातियमं) चैव ··· प्रददौ कार्त्तिकेयाय वरुणः सत्यसंगरः MahāBhā. ix. 44. 41.

**अतियियिवस्** (ati-yayivás-) *adj.* going through, penetrating एष वर्स्नि पिब्द्वना पुरुषा ययिवाँ अति। अव शादेषु गच्छति ṚV. ix. 15. 6.

**अतियव** (ati-yava) *m.* I a variety of barley (यवः कषायो मधुरो हिमश्च) ··· एभिर्गुणैर्हीनतरैस्तु किंचिद्विद्याचवेभ्योऽतियवानशेषैः SuśruS. i. 46. 43; यवस्तु सितशूकः स्यान्निःशूकोऽतियवः स्मृतः BhāvPra.(Bhā.) 6(9). 27; MadaPāNi. 63. 19; BhāvPraNi. 139. 27; असाद् (यवाद्) अतियवः किंचिद् गुणैर्न्यूनतरः स्मृतः MadaPāNi. 63. 22; यवास्त्वतियवाश्चैव गोधूमाश्च समा रसे BhelaS. 48. 17 (1. 28); वर्षालतियवा नित्यं तथा वृषकवासकौ ··· एवमादीनि चान्यानि वराणि मधुराणि च BrahmāṇḍP. ii. 14. 14; महायवे प्ररूढोऽल्पे वनाशोऽतियवोऽपि च Vaija. 127. 52; II a kind of rice वर्ज्याश्चातियवा नित्यम् अतियवाः शालिभेदाः CaturCin. iii(1). 550. 10; मसूराः शतपुष्पाश्च ··· वर्ज्याश्चातियवा नित्यं यथा वृषवासकौ ··· अतियवाः शालिभेदाः ViraMi. (S'rāddha.) 41. 6.

**अतियवस** (ati-yavasa) *adj.* too full of fodder स्वच्छिद्रं नातियवसं यथा पद्यन्ति वाजिनः। स्थानं चैव पृथक् प्राप्तं प्रयत्नं रोगिणां न वै AśvaCi. 18. 8.

**अतियशस्** (ati-yaśas) *adj.* of great fame तेषामतियशा लोके रामः सत्यपराक्रमः Rāmā. i. 76. 13 = i. 514*(42); पूर्वकेण हि ते राजंस्तेनातियशसा तदा। ··· नैष प्राप्तो मनोरथः Rāmā. i. 43. 8; vi. 77. 15; तेनातियशसा कर्णं ब्रवा

शत्रुगणान्मम MahāBhā. vii. 5.6; vii. 157.34; तुरोत्तमाः … तेऽन्योन्यमूचुः … उपस्थितेऽतियशसश्चाप्युपस्यान्तरे मनोः HariVaṁ. 3.47; BrahmP. 3.54; तत्रन्ये चातियशसे जातूकर्णाय चर्यये VāyuP. i. 1.8; BrahmāṇḍP. ii. 65.14; BrahmP. 9.9.

**अतियशस्** (ati-yaśas) *f.* name of the sixth *tithi* स्कान्दी षष्ठी चातियशा मित्रा सौरी च सप्तमी KośaKaTa. 1.1006.

**अतियशस्विन्** (ati-yaśasvin) *adj.* [*f.*-ī] highly famous भोजस्यातियशस्विनः। दाक्षिणात्यपतेः पुत्रो दिक्षु रुक्मीति विश्रुतः MahāBhā. v. 155.2; कन्या प्रचण्डनाम्नस्तु गोपस्यातियशस्विनी। चित्रगन्धेति विख्याता PadmP. iv. 72.43.

**अतियशा** (ati-yaśā) *adj.* (*f.*) [AltGr. II. 1.96; III. 284] very famous बृहत्सेनामतियशां तां धात्रीं परिचारिकाम् MahāBhā. iii. 238*(1)

**अतियशोबल** (ati-yaśobala) *m.* name of a prince जातः। कोटियुगोत्रतनमितः प्रथितोऽतियशोब(व)लः श्रीमां(मा)न् EI. i. 149.9.

**अतियष्टव्या** (ati-yaṣṭavyā) *adj.* (*f.*) (metre) to be extended beyond (the offerings) विराण् नातियष्टव्येत्याहुः JaimiBr. i. 233.

**अतिया** (ati-yā-) II. P. (Ā.) **i** to get over, to overcome या वां माया अभिद्रुहे यजत्राः … अश्वीव तां अतियेयं रथेन RV. ii. 27.19; आ रथो वर्तते वाम्। मनोजवा अश्विना वातरंहा येनातियाथो दुरितानि विश्वा RV. v. 77.3; ग्राहिं पाप्मानमति तां अयाम AV. xii. 3.18; स्वस्ति दुर्गां अति याहि शीभम् AV. xiii. 2.5; **ii** to go beyond, to cross, to pass by पुरु वरांस्यमिता मिमानापो धन्वान्यति याथो अज्रान् RV. vi. 62.2; अति वायो ससतो याहि शश्वतो यत्र ग्रावा वदति तत्र गच्छतम् RV. i. 135.7; पुष्पितानि वनानि च। पदयन्नतियौ शीघ्रं (रामः) Rāmā. ii. 43.3; ii. 43.7; ii. 51.3; उच्चैरसौ राघवमाहतेदं धनुः सवाणं कुरु मातियासीः Bhaṭṭi. 2.51; यद्दूरं निकटतरं हयाः समीयुर्नदीयो यदतिययुः क्षणाद्वीयः … नवप्रियो हि लोकः RāghPāṇ.(Dha.) 14.15; स्पृष्टः साधय साधयेति लहरीहस्तैरिवान्वक्तया त्रस्यन्त्या पुटशासनादतिययौ देवः स वाराणसीम् Gaṅgāva. 7.50; **iii** to violate, to transgress विनिश्चितार्थं समयं न देशं क्रियाभ्युपायादिषु योऽतियायात्। स प्रामुयात् मन्त्रफलम् Bhaṭṭi. 12.63; **iv** to pass, to spend (time) पूर्णे पूर्णे त्रिरात्रे तु मासमेकं फलाशनः। … द्वितीयं मासमत्यगात् (v. l. अत्ययात्) MahāBhā. iii. 39.21; **v** to traverse, to take (the path) पन्थानममरैर्यातं शूरैश्चैवानिवर्तिभिः। अपि तैः संगतं मार्गं वयमप्यारुहेमहि (v. l. अतियामहे) MahāBhā. ix. 4.37; **vi** to surpass, to excel क्षणेन तानप्यतियान्ति शूराः प्राणान् सुयुद्धेषु परित्यजन्तः ArthSā. iii. 115.8 (10.3); कसादेवं शिविरौशीनरोऽयमेकोऽत्ययात् सर्ववेगेन वाहान् MatsyaP. 42.18; सद्रुक्मपीठस्थितं क्रतेन्द्रादिगणान् गुणैरतिययौ श्रीभीमनाथं मुदा EI. iv. 43.100; **vii** to transcend गुणत्रयमयं ह्येतद् महान् शक्तित्रयं महत्। योऽतियाति स यात्येव परं नावर्तते पुनः ViṣṇuP. i. 7.48; मा लोकेश वदेवं यत्नः सुकृतोऽतियाति केशव दैवम् YudhiVi. 6.81 (comm. दैवमतियाति तल्लङ्घयतीत्यर्थः); **viii** to elapse (of time) आलेख्यविद्याधरयोर्यथा संमुखयोस्तयोः। महान्कालोऽतियाति स BṛKathāS'loSaṁ. 5.220; अमुष्य त्वत्कुमारस्य वर्षाणि द्वादशात्ययुः SkandP. iii(3). 21.9; क्रीडतोर्जनकजारघुसूनोरत्ययुः क्षणनिभाः शरदोऽपि Rāgh. 5.5.

**अतियाचक** (ati-yācaka) *m.* person asking or begging too much गुणिनां मत्सरः शत्रुलुब्धानामतियाचकः DarpDa. 1.35.

**अतियाचित** (ati-yācita) *adj.* pressed or asked for too much कुप्येत्को नातियाचितः Hitopa. 2.157.

**अतियाच्ञा** (ati-yāčñā) *adj.* (*f.*) making excessive demand लभेत पुंश्चली भोगं संगमस्योपलिङ्गनात्। अतियाच्ञा तु जीयेत दौर्मैत्र्याविनयेन च ArthSā. ii. 85.2 (3.13) (comm. अतिमात्रभृतिप्रार्थिनी तु पुंश्चली जीयेत दण्डयेत); *f.* importunity, too frequent begging यदा दरिद्रः परिधानहीनस्तपानिलीनः कुरुतेऽतियाच्ञाम् DarpDa. 4.14.

**अतियाज** (ati-yājá) *m.* [AltGr. II. 1.121] **1** superior sacrificer नि ह्वयतामतियाजस्य यष्टा RV. vi. 52.1 (but Sāy. अतियाजो नाम कश्चिदृषिः); **2** name of a sage अतियाजोऽतियाजत्वं प्राप निन्दत्पृजिश्वनि NītiMañ. 97 (comm. अयं अतियाजः इति नाम्ना ख्यातिं प्राप प्राप्तवान्)

**अतियाजत्व** (atiyāja-tva) *n.* the state of one who performs sacrifices too often अतियाजोऽतियाजत्वं प्राप निन्दत्पृजिश्वनि NītiMañ. 97 (comm. अतियजतीत्यतियाजः तस्य भावोऽतियाजत्वम्)

**अतियात** (ati-yāta) *adj.* **1** who has reached the very end or one's destination पुनरन्यं आगच्छदर्थार्थी ब्राह्मणः। तमब्रवीत्। अतियातो दासामि। त्वरितमेव दीयताम्। इत्यब्रवीद् ब्राह्मणः MahāBhā. iii. App. 21(6) 122 (*but* अतिवेगवान् Nilakaṇṭha); **ii** gone or passed (time) वर्षमानरतेरेवमतियातेषु केषुचित्। दिनेषु BṛKathāS'loSaṁ. 11.77; **iii** passed by, gone beyond स्कीताञ्जनपदांस्तत्र पुरग्रामव्रजाकरान्। …एक एवातियातोऽहम् BhāgP. i. 6.14; **iv** ridden too frequently, very much worked out अतियातो गजो राजन्यथा भवति तच्छृणु। अयोगेनानभिज्ञेन यो गजो वाहितो भृशः Hastyāyur. 322.11 (2.67); कर्मातिनीतो मातङ्गस्त्वतियातो निरुच्यते Hastyāyur. 323.6 (2.67); 324.2 (2.67); मांसैः क्षीरैस्तथा स्नेहैः … । अतियातस्य नागस्य बलं क्षिप्रं प्रवर्तते Hastyāyur. 323.28 (2.67); 619.27 (4.7); **v** excelled, surpassed पितुः संपदमतिलङ्घ्य जातः संवृत्तोऽतिक्रम्य वा तां यातः प्राप्तो विशिष्टतरसंपदं सन्नहतर इत्यर्थः इत्यतिजातोऽतियातो वा SthāṇṬ. 185A.5.

**अतियातना** (ati-yātanā) *f.* extreme torture तत्रातिद्यतनां मुक्त्वा पुनरेव प्रजायते PadmP. i. 61.90.

**अतियातयामवयस्** (atiyātayāma-vayas) *adj.* very much advanced in age, very old स्वयमेव … अतियातयामवयोभिरात्तपुरुषैरधिष्ठितामुत्सुकोत्सुकामागच्छन्तीम् (अम्बादेवीम्) … अपश्यत् YaśasCam. ii. 82.3 (comm. अतीव वृद्धवयोभिः)

**अतियात्रा** (ati-yātrā) *f.* A leading beyond, journey beyond (i.e. after death) आर्चिरादिमभिमानिनश्चेतना देवताविशेषा अतियात्रायां नियुक्ता इति गम्यते BrahmSūBh.(Śaṅ.) 827.11 (*on* iv. 3.5); B passage-fee अपि तु भवन्तोऽप्यदाद्यानुसंसा बुद्धचारिकायाम्। … नाग्निभयम् … न चौरभयं न गुल्मतरपण्यातियात्राभयम् Divyāva. 58.20.

**अतियान** (ati-yāna) *n.* **i** too long a journey अतिकालातियाने च शुभमिच्छन्विवर्जयेत् BṛParāSm. 6.272; **ii** entry into a town अतियानं नगरप्रवेशः, तत्र ऋद्धिः तोरणहट्टशोभाजनसम्मर्दादिलक्षणा SthāṇṬ. 173A.4; *adj.* covering a long journey दुर्बलाश्चातियानाश्च क्षीणा ये च मतङ्गजाः। तेभ्यः प्रदापयेत् Hastyāyur. 618.14 (4.15)

**अतियानकथा** (atiyāna-kathā) *f.* description of (a king's) entry into the town अतियानं नगरादौ प्रवेशस्तत्कथा अतियानकथा SthāṇṬ. 211A.3.

**अतियानगृह** (atiyāna-gṛha) *n.* house at the entrance of a city अतियानगृहाणि नगरादिप्रवेशे यानि गृहाणि SthāṇṬ. 88B.2.

**अतियाम** (ati-yāma) *adj.* occurring after the (first) watch (period of three hours) स्याद्दत्तरार्धमतियाममथ द्वितीये। … फलदः … स्वप्नेषु HāriS. ii. 2.3.

**अतियायिन्** (atiyāy-in) *adj.* speeding or rushing headlong ततः … स भूपतिः। पार्ष्णिसंस्पर्शरोपेण हृतोऽश्वेनातियायिना BṛKathāMañ. ix. 2.422.

**अतियुक्त** (ati-yukta) *adj.* **i** possessed of in excess स्वगुणैरतियुक्तेषु विपरीतेषु वा पुनः। … दोषाः कुप्यन्त्युतुषु SuśruS. i. 6.37; गुरुभक्तोऽभियुक्तोऽतियुक्तो धीस्मृतिपाटवैः। … शिष्योऽध्याप्यः AṣṭāSaṁ. i. 5.2 (1.2); **ii** administered in excess or excessively सोऽतियुक्तोऽनलपवनम् … जनयेत् AṣṭāHṛ. i. 10.13; स्नेहाद्यैरतियुक्तैश्च मिथ्यायुक्तैर्विषैर्मयैः। …नृणां भवत्यतीसारः RugVi. 3.2; सोऽतियुक्तो ज्वरश्वासगलगण्डार्बुदक्रिमीन् … कुर्यात् BhāvPra.(Bhā.) 6(1). 178; **iii** appointed त्वा(?त्व)न्मन्त्रमाद्(?त)तिकेऽतियुक्तो मव VarāṅgaC. 14.35; *m.* name of one of the Maruts धातुरुग्रो ध्वनिर्भीमो ह्यतियुक्तः क्षिपः सहः। … एते त्वामभिषिञ्चन्तु मरुतः ViṣṇuDhaP. ii. 22.55.

**अतियुक्तता** (atiyukta-tā) *f.* the state of being beyond logicality (illogicality) अन्यत्र वर्तमानस्य ततोऽन्यस्थानजन्मनि। तस्मादचलतः स्थानादवृत्तिरित्यतियुक्तता SarvaDaSaṁ. 2.136; [great skill or dexterity, pw]

**अतियुक्तावसान** (ati-yuktāvasāna) *adj.* whose end is not specified यः कश्चित्करणैर्मन्त्रो न च पादाक्षरैर्मितः। अतियुक्तावसानं च तद्यजुर्वै प्रचक्षते BrahmāṇḍP. i. 33.37.

**अतियुक्तितस्** (atiyukti-tas) *adv.* very skilfully or dexterously समभागानि पयसा पाचयेदतियुक्तितः। …तत्क्वाथम् Hastyāyur 328.1 (2.68)

**अतियुक्तिमत्** (atiyukti-ma(n)t) *adj.* very reasonable स्वसादचलतः स्थानात् वृत्तिरित्यतियुक्तिमत्। यत्रासौ वर्तते भावस्तेन संबध्यतेऽपि न PramāVāSvopVṛ. 50.23; विकल्पैरुत्तरैर्वेत्ति तत्त्वमित्यतियुक्तिमत् NyāyVi. 2.64.

[**अतियुज्** (ati-yuj-) VII. U. to associate with युजिः … अतेः। अन्वये KośaKaTa. 2.1620.]

**अतियुद्ध** (ati-yuddha) *n.* great battle गजरथतुरगाणां संबभूवातियुद्धम्। —अतिघोरम् DevīBhāP. iii. 15.6; तौ (रामलक्ष्मणौ)…गरुडनिपातोन्मुक्ततराशबन्धौ विदधतुरतियुद्धम् MahāN. 9.53.

**अतियुध्** (ati-yudh-) IV. Ā. to put up a strong fight तदातियुध्यन्त हयैर्इयास्ते VarāṅgaC. 17.79.

**अतियुधिष्ठिर** (ati-yudhiṣṭhira) *adj.* surpassing Yudhiṣṭhira राज्ञातियुधिष्ठिरेण। अज्ञाय्यरप्येतिलवचदन्यस्त्वक्सारवचान्तरसार एव DvyāśraKā. 6.12.

**अतियुवन्** (ati-yuvan) *adj.* A very young, very youthful स चाभिरूपसदृशः (v. l. गन्धर्वरूपोऽतियुवा) MahāBhā. i. 96.56; कनिष्ठोऽतियुवाल्पयोः AmaK. 2417; AnekāSaṁ. 3.742; कनीयानतियूनि च ViśvaPra. 179.59; कनिष्ठोऽतियुवाल्पयोः AnekāK. 188; कनिष्ठोऽतियुवाल्पानुजे MediK. 41.12;

कनीयाननुजाल्पयोः । अतियूनि NānārthaMa. 1915; 491; कनीयाननुजेऽप्यल्पे त्रिषु स्यादतियूनि वा ViśvaLoK. 392.48; उदर्चिः पावकद्रुतोः । अतिय(? यू)न्य-नुजे वीरेऽपि AnekāTi. 3.38; [*f.* -yūnī] **B I** surpassing a youth इह कस्मान्न भवति । निःशुनी अतियूनीति MahāBh. ii. 202.20 (*on* P. iv. 1.7); युवानमतिक्रान्तेति प्रादिसमासः Pradī. iv. 36A.3 (*on* P. iv. 1.7); अस्य ··· मतिः शुनीदुच्छनिमातियूनी शल्यं मघोनी भजतो मघोनः DvyāśraKā. 2.73; युवान-मतिक्रान्ता ··· अतियूनी PadMañ. *on* KāśiVṛ. *on* P. iv. 1.7; अथैवत एव शब्दस्य ग्रहणम् ···न निरर्थकस्य अतिशुनी अतियूनीति PariVṛ.(Sī.) 18.5; **B II** passing beyond youth, older (वरीयस्) श्रेष्ठेऽतियूनि च AnekāSaṁ. 3.749; वरीयानतियूनि स्यात् ViśvaPra. 179.60; वरीयान् ··· वरिष्ठे त्वतियूनि च MediK. 190.63.

**अतियुष्मद्** (*ati-yuṣmad*) *adj.* [Cpd. with personal pronoun as the second member, subordinate to the first member, giving rise to an adjective as against a cpd. like *paramatvam* giving rise to a pronoun, both theoretical constructs of grammarians based on the view that द्विवचने in P. vii. 2.92 and एकवचने in P. vii. 2.97 give the meaning of the pronominal stems and not case-suffixes. In the case of the adjectival cpd. the number of the pronominal base may differ from the number of the cpd. as a whole, while the case will belong only to the cpd. and its referent, which is the case with *ati-yuṣmad*. Theoretical forms will be in three numbers of the subordinate referent into three numbers of the principal referent into seven cases, a total of 63 forms, many of which will be identical in endings like other nominal or pronominal declensions. Giving P. vii. 7.93–97 an overriding power, number distinction in the subordinate referent is obliterated in Nom. sg., Dat. sg., Gen. sg. and Nom. pl. Possibly P. and CāndraVyā. do not have such cpds, while Pat. gives forms for the sg. and dual numbers of the subordinate referent. The SiddhāKau. completes the scheme by adding forms of plural numbers as well. In the older languages all the three bases of personal pronouns in the sg., du. and pl. form first member of cpds and all those bases are considered as independent words with inherent numbers. cf. युवद्देवत्य SatBr. VIII. ii. 1.12; युवयिता ṚV. vi. 67.9; युवानीतस्य ṚV. viii. 26.12; recorded forms are given in order. I Singular number of the subordinate referent; Nom. sg. अतिक्रान्तस्त्वामतित्वम् MahāBh. iii. 307.2; KāśiVṛ. *on* P. vii. 2.97; KātanVṛ. *on* ii. 3.10; अतिक्रान्तस्त्वां युवाम् युष्मान् वा अतित्वम् JaineVyā. 356.20 (*on* v. 1.153); SākaṭāVyā. i. 2.180 [Vārāṇasī, 1971]; SiddhaHe. ii. 1.12; Acc. sg. अतिक्रान्तं त्वामतित्वाम् MahāBh. iii. 307.3; SākaṭāVyā. i. 2.180; SiddhaHe. ii. 1.6; Inst. sg. अतित्वया MahāBh. iii. 307.4; Dat. sg. अतितुभ्यम् MahāBh. iii. 307.5; KāśiVṛ. *on* P. vii. 2.95; KātanVṛ. *on* ii. 3.12; तदन्तविधिना अतिक्रान्ताय त्वां युवाम् युष्मान् वा अति-तुभ्यम् JaineVyā. 356.22 (*on* v. 1.154); SākaṭāVyā. i. 2.180; Abl. sg. अतित्वत् MahāBh. iii. 307.6; KātanVṛ. *on* ii. 3.10; अतित्वद् SākaṭāVyā. i. 2.179; SiddhaHe. ii. 1.8; Gen. sg. अतितव MahāBh. iii. 307.7; KāśiVṛ. *on* P. vii. 2.96; KātanVṛ. *on* ii. 3.13; अतिक्रान्तस्य त्वां युवाम् युष्मान् वा अतितव JaineVyā. 356.24 (*on* v. 1.155); SākaṭāVyā. i. 2.178; Loc. sg. अतित्वयि MahāBh. iii. 307.8; KātanVṛ. *on* ii. 3.17; Nom. du. अतिक्रान्तौ त्वामतित्वाम् MahāBh. iii. 307.2; KātanVṛ. *on* ii. 3.7; JaineVyā. 356.12 (*on* v. 1.151); अतिक्रान्तौ त्वां तिष्ठतः पश्येति वा अतित्वाम् JaineVyā. 356.29 (*on* v. 1.156); Acc. du. अतिक्रान्तौ त्वामतित्वाम् MahāBh. iii. 307.4; अति-क्रान्तौ त्वां पश्यातित्वाम् Nyās. iii. 757.11 (*on* P. 7.2.97); Inst. du. अतित्वा-भ्याम् MahāBh. iii. 307.5; अतिक्रान्ताभ्याम् त्वाम् अतित्वाभ्याम् KāśiVṛ. *on* vii. 2.7; JaineVyā. 356.13 (*on* v. 1.151); Dat. du. अतित्वाभ्याम् MahāBh. iii. 307.6; अतिक्रान्ताभ्यां त्वां देहि अतित्वाभ्याम् Nyās. iii. 755.22 (*on* vii. 2.92); Abl. du. अतित्वाभ्याम् MahāBh. iii. 307.7; अतिक्रान्ताभ्यां त्वामाग-तोऽतित्वाभ्याम् Nyās. iii. 755.24 (*on* vii. 2.92); JaineVyā. 356.14 (*on* v. 1.151); Gen. du. अतित्वयोः MahāBh. iii. 307.7; अतिक्रान्तयोस्त्वां स्वमतित्वयोः स्वम् Nyās. iii. 755.26 (*on* vii. 2.92); अतित्वयोः स्वम् JaineVyā. 356.15 (*on* v. 1.151); Loc. du. अतित्वयोः MahāBh. iii. 307.8; अतिक्रान्तयोस्त्वां निधेह्य-तित्वयोर्निधेहि Nyās. iii. 757.27 (*on* vii. 2.92); Nom. pl. अतिक्रान्तास्त्वामति-यूयम् MahāBh. iii. 307.3; KāśiVṛ. *on* P. vii. 2.93; KātanVṛ. *on* ii. 3.11; अतिक्रान्तास्त्वां युवां युष्मान् वा अतियूयम् JaineVyā. 356.17 (*on* v. 1.152); Acc. pl. अतिक्रान्तांस्त्वामतित्वान् MahāBh. iii. 307.4; KāśiVṛ. *on* P. vii. 2.97; KātanVṛ. *on* ii. 3.6; JaineVyā. 356.29 (*on* v. 1.156); Inst. pl. अतित्वाभिः MahāBh. iii. 307.5; अतिक्रान्तैस्त्वाम् अतित्वाभिः KāśiVṛ. *on* P. vii. 2.97; Dat. pl. अतित्वभ्यम् MahāBh. iii. 307.6; KātanVṛ. *on* ii. 3.15; अतिक्रान्तेभ्यस्त्वां देहि अतित्वभ्यं देहि Nyās. iii. 757.14 (*on* vii. 2.97); Abl. pl. अतित्वत् MahāBh. iii. 307.7; अतिक्रान्तेभ्यस्त्वामागतोऽतित्वदागतः Nyās. iii. 757.16 (*on* vii. 2.97); JaineVyā. 356.30 (*on* v. 1.156); Gen. pl. अति-त्वाकम् MahāBh. iii. 307.8; अतिक्रान्तानां त्वां स्वम् अतित्वाकं स्वम् Nyās. iii. 757.17 (*on* vii. 2.97); अतित्वयाम् KātanVṛ. *on* ii. 3.16; MugdhaBo. 3.142 (32.13); JaineVyā. अतित्वाकम् 356.30 (*on* v. 1.156); SākaṭāVyā. i. 2.186; Loc. pl. अतित्वासु MahāBh. iii. 307.9; अतिक्रान्तेषु त्वां निधेहि अति-त्वासु निधेहि Nyās. iii. 757.19 (*on* vii. 2.97); KātanVṛ. ii. 3.18; Siddha-He. ii. 1.11; II Dual number of the subordinate referent; Nom. sg. अतिक्रान्तो युवामतित्वम् MahāBh. iii. 306.19; KāśiVṛ. *on* P. vii. 2.92; JaineVyā. 356.20 (*on* v. 1.153); Acc. sg. अतिक्रान्तं युवामतियुवाम् Mahā-Bh. iii. 306.20; KāśiVṛ. *on* vi. 2.92; JaineVyā. 356.4 (*on* v. 1.151); SākaṭaVyā. i. 2.180; SiddhHe. ii. 1.10; Inst. sg. अतियुवया MahāBh. iii. 306.22; अतिक्रान्तेन युवाम् अतियुवया KāśiVṛ. *on* vii. 2.92; JaineVyā. 356.5 (*on* v. 1.151); SiddhaHe. ii. 1.7; Dat. sg. अतितुभ्यम् MahāBh. iii. 306.23; अतिक्रान्ताय युवाम् अतितुभ्यम् KāśiVṛ. *on* vii. 2.92; JaineVyā. 356.10 (*on* v. 1.151); v. 1.154; v. 1.156; Abl. sg. अतियुवत् MahāBh. iii. 306.24; अतिक्रान्तेभ्यो युवाम् अतियुवत् KāśiVṛ. *on* vii. 9.92; JaineVyā. 356.6 (*on* v. 1.151); SiddhaHe. ii. 1.19; Gen. sg. अतितव MahāBh. iii. 306.25; अतिक्रान्तस्य युवाम् अतितव KāśiVṛ. *on* vii. 2.92; JaineVyā. 356.6 (*on* v. 1.151); v. 1.155; Loc. sg. अतियुवयि MahāBh. iii. 306.26; अतिक्रान्ते युवाम् अतियुवयि KāśiVṛ. *on* vii. 2.92; Nom. du. अतिक्रान्तौ युवामतियुवाम् MahāBh. iii. 306.20; JaineVyā. v. 1.151; Acc. du. अति-क्रान्तौ युवामतियुवाम् MahāBh. iii. 306.21; Inst. Du. अतियुवाभ्याम् Mahā-Bh. iii. 306.22; SākaṭāVyā. i. 2.183; Dat. du. अतियुवाभ्याम् MahāBh. iii. 306.23; Abl. du. अतियुवाभ्याम् MahāBh. iii. 306.24; Gen. du. अति-युवयोः MahāBh. iii. 306.25; Loc. du. अतियुवयोः MahāBh. iii. 306.26; Nom. pl. अतिक्रान्ता युवाम् अतियूयम् MahāBh. iii. 306.20; KāśiVṛ. *on* vii. 2.92; JaineVyā. 356.10 (*on* v. 1.151); v. 1.152; SākaṭāVyā. i. 2.180; Acc. pl. अतिक्रान्तान् युवाम् अतियुवान् MahāBb. iii. 306.21; KāśiVṛ. *on* vii. 2.92; JaineVyā. v. 1.151; Inst. pl. अतियुवाभिः MahāBh. iii. 306.22; अतिक्रान्तै-र्युवाम् अतियुवाभिः KāśiVṛ. *on* vii. 2.92; KātanVṛ. *on* ii. 3.7; JaineVyā. 356.5 (*on* v. 1.151); Dat. pl. अतियुवभ्यम् MahāBh. iii. 306.23; अतिक्रान्तेभ्यो युवाम् अतियुवभ्यम् KāśiVṛ. *on* vii. 2.92; अतिक्रान्तेभ्यो युवाम् देहि वा अति-युवभ्याम् (? अतियुवभ्यम्) JaineVyā. 356.6 (v. 1.151); SākaṭāVyā. i. 2.185; SiddhaHe. ii. 1.18; Abl. pl. अतियुवत् MahāBh. iii. 306.24; अतिक्रान्तेभ्यो युवाम् अतियुवत् KāśiVṛ. *on* vii. 2.92; KātanVṛ. *on* ii. 3.14; JaineVyā. 356.6 (*on* v. 1.151); Gen. pl. अतियुवाकम् MahāBh. iii. 306.24; अतिक्रान्तानां युवाम् अतियुवाकम् KāśiVṛ. *on* vii. 2.92; JaineVyā. 356.7 (*on* v. 1.151); KātanVṛ. *on* ii. 3.16; अतियुवयाम् MugdhaBo. 3.142; PrakriKau. i. 255.9; Loc. pl. अति-युवासु MahāBh. iii. 306.26; अतिक्रान्तेषु युवाम् अतियुवासु KaśiVṛ. *on* vii. 2.92; JaineVyā. v. 1.151; SiddhaHe. ii. 1.10; III plural number of the subordi-nate referent; Nom. sg. अतित्वम् JaineVyā. 356.20 (*on* v. 1.153); अतिक्रान्तो युष्मानित्यतित्वम् Nyās. iii. 757.4 (*on* vii. 2.97); Acc. sg. अतियुष्माम् Sākaṭā-Vyā. i. 2.186; Inst. sg. अतियुष्मया SiddhāKau. 93B.7; Dat. sg. अतितुभ्यम् JaineVyā 356.22 (*on* v. 1.154); Abl. sg. अतियुष्मत् SiddhāKau. 93B.10; SākaṭāVyā. i. 2.179 (अतियुष्मद्); Gen. sg. अतितव JaineVyā. 356.24 (*on* v. 1.155); Loc. sg. अतियुष्मयि SiddhāKau. 93B.12; Nom. du. अति-युष्माम् SiddhāKau. 93B.6; अतिक्रान्तौ युष्मान् अतियुष्मान् (? अतियुष्माम्) KāśiVṛ. *on* vii. 2.92; KātanVṛ. *on* ii. 3.7; अतिक्रान्तौ युष्मान् अतियुष्मान् (? अतियुष्मान्) JaineVyā. 356.12 (*on* v. 1.151); Acc. du. युष्मान् अतिक्रान्तौ पश्य अतियुष्माम् Nyās. iii. 755.20 (*on* vii. 2.92); Inst. du. अतिक्रान्ताभ्याम् युष्मान् कृतमतियुष्माभ्याम् कृतम् Nyās. iii. 755.22 (*on* vii. 2.92); JaineVyā. v. 1.151; Dat. du. अतिक्रान्ताभ्यां युष्मान् देहि अतियुष्माभ्याम् Nyās. iii. 755.23 (*on* vii. 2.92); JaineVyā. 356.13 (*on* v. 1.151); Abl. du. अतियुष्माभ्यां बिभेति JaineVyā. 356.14 (*on* v. 1.151); अतिक्रान्ताभ्यां युष्मानागतोऽतियुष्माभ्यामागतः Nyās. iii. 755.25 (*on* vii. 2.92); Gen. du. अतियुष्मयोः स्वम् JaineVyā. 356.15 (*on* v. 1.151); युष्मानतिक्रान्तयोः स्वम् अतियुष्मयोः स्वम् Nyās. iii. 755.27 (*on* vii. 2.92); Loc. du. अतियुष्मयोर्निधेहि JaineVyā. 356.15 (*on* v. 1.151); अतिक्रान्तयोर्युष्मान् निधेहि अतियुष्मयोर्निधेहि Nyās. iii. 755.28 (*on* vii. 2.92); Nom. pl. अतियूयम् KāśiVṛ. *on* vii. 2.93; JaineVyā. 356.17 (*on* v. 1.152); Acc. pl. अतियुष्मान् SākaṭāVyā. i. 2.186; Inst. pl. अति-युष्माभिः SākaṭāVyā. i. 2.183; Dat. pl. अतियुष्मभ्यम् SākaṭāVyā. i. 2.181;

धाननिबन्धनं स्वरूपसंबन्धमतिलङ्घ्य साधनीभूतसंख्येयसंबन्धाध्यवसानम् PrakaPañ. 20.4; प्रथमभावीनि पदान्यतिलङ्घ्य, नार्थेषु वाक्यार्थबोधनशक्तिराश्रयितुं युक्ता PrakaPañ. 400.14; यच्चेदं घटाभावमतिलङ्घ्य नास्तीति व्यवहारानुमानमवस्थितं तदपि केन विशेषेणेति न विद्मः Kāśi. iii. 207.26 (on 5(8).38); तच्छब्दोऽनन्तरमप्याकाशमतिलङ्घ्य हृत्पुण्डरीकं परामृशति Bhām. 212.13 (on i. 3.14); किमपराद्धं मरीचिषु तोयविपर्यासेन सर्वजनीनेन यत् तमतिलङ्घ्य विपर्यासान्तरं कल्प्यते Bhām. 515.19 (on iii. 2.3); अन्वयव्यतिरेकादिकमतिलङ्घ्य दृष्टान्तमात्रेण न किंचित् साधयितुं शक्यम् SrutaPra. iB. 28.22 (on i. 1.1); क्रियारूपस्य गुणस्य वा ज्ञानस्य स्वाश्रयमतिलङ्घ्यान्यत्र संसर्गायोगात् VivaPraSaṁ. 86.23; करणशक्तिमतिलङ्घ्य ज्ञानस्य विषयानुसारित्वे Nyāyāmṛ. 628A.1; कथं प्रकृत्यर्थो धात्वर्थः प्रत्ययार्थप्रधानमपूर्वमतिलङ्घ्य विप्रकृष्टेन फलेन प्रथमं करणतामन्वेति TantrRaho. 62.1; पशुकाम उक्थ्यं गृह्णीयादित्यादिवाक्येषूक्थ्यादिशब्दवाच्यम् ... उक्थ्यादिसंस्थामतिलङ्घ्योक्थ्यादिपदलक्ष्यस्य ... क्रतोः पश्वादिफलसंगतिरङ्गीक्रियते चेत् VidhiRa. 38 (194.8); ननु तर्हि गुणविधिरेवास्तु ... गुणमात्रविधानमतिलङ्घ्य गुणविशिष्टकर्मान्तरविधिकल्पनायोगात् VidhiRa. 41 (206.15); विकाराधर्मयद्ग्रायपाठं चातिलङ्घ्य कुतः प्राचुर्यार्थत्वमवसीयते SivārkaMaDi. i. 214.5 (on i. 1.14); सर्वनाम्नाम् ...प्रकरिष्यमाणपरत्वमतिलङ्घ्य प्रकृतपरामर्शित्वं व्युत्पत्तिसिद्धम् SivārkaMaDi. i. 275.26 (on i. 1.25); i. 302.16 (on i. 2.1); ii. 276.24 (on iii. 2.40); आख्याताधेयस्य विधेः प्रकृत्यर्थं निर्वापमतिलङ्घ्य ... यागे संक्रान्त्यभ्युपगमात् PūrvottaVāNaMā. 123.14; प्रधानमतिलङ्घ्योपसर्जने क्रियान्वयपर्यवसानात् CitrMī. 78.14; **2 B** having transgressed or violated (a rule, a command etc.) लोकान्तरप्रणयिनं श्वशुरं प्रणन्तुमाज्ञप्तकालमतिलङ्घ्य यदि प्रयासि RāmāCam. 3.40; मम जगदखिलं वरोरु नाज्ञामिदमतिलङ्घ्य धृतिं मुहूर्तमेति PraboCan. 1.13 (7.16); ननु व्यवस्थानमतिलङ्घ्यान्यत्रापि वृत्तिर्व्यभिचारः TārkiRa. 218.5; अध्यायानां पादचतुष्टयात्मकत्वनियममतिलङ्घ्य प्रथमाध्यायस्य पादषट्कात्मकत्वेन निबन्धनीयत्वप्रसङ्गात् SrutaPra. ii. 202.20 (on i. 4.29); विश्वस्तु श्रुतिमतिलङ्घ्य संप्रदातुं हव्यं तच्चदभिमतं द्विजर्षभेषु। ... °भागान् स्वीचक्रुः ... देववर्गाः SivLī. 6.59; **3 A** having overcome, having got over अतिलङ्घ्यासुरं भावं देवतात्मानमाप्नुमः BṛĀraUBhVā. i. 3.32; iii. 8.138; नियतं नियतिबलमतिलङ्घ्य पौरुषमेव धीरस्य पुरुषार्थान् समर्पयेत् RāmāCam. 2.28(8); मुमुक्षवो जीवाः ... भगवत्प्रसादेन ... तन्मायामतिलङ्घ्य...मोक्षमिच्छन्ति SarvaMaSaṁ. 39.12; **3 B** having surpassed सर्वान्तरायानतिलङ्घ्य वत्स धर्मान्तरायो गुरुतामुपैति VarāṅgaC. 29.27; अतिलङ्घ्य पुंस्त्वाङ्कैणे मिथो जल्पति तत्र राजा। तद्योगिनीवृन्दमिति व्युद्ध DvyāśraKā. 14.44; जम्बीरश्रियमतिलङ्घ्य लीलयैव ... कुचौ ते स्पर्धेते खलु कनकाचलेन सार्धम् RasGaṅ. 626.10 = BhāmiVi. 2.91.

**अतिलज्ज्** (ati-lajj-) I. Ā. to be very much ashamed नवं कुलकलङ्कं तं हसनीयं जनेऽखिले। महालज्जाकरं पत्युः श्रुत्वा भद्रात्यलज्जत TriṣaSaPuC. iv. 1.204; कौटिल्यं हृदि पाञ्चजन्य भवतस्तेनातिलज्जामहे SūktiMu. 29.3 = Subhāṣi. 918.

**अतिलज्ज** (ati-lajja) *adj.* very much ashamed दृष्ट्वा स्थितं प्रियतमं सशङ्कितं सापराधमतिलज्जम् NāṭyaSā. 22.275.

**अतिलज्जन** (ati-lajjana) *adj.* very shameful विट्कुम्भद्वितयं नीला संयोगमतिलज्जनम्। विमूढमानसः शोकः सुखमित्यभिमन्यते PadmP.(Ra.) 83.59.

**अतिलज्जना** (ati-lajjanā) *f.* feeling of extreme shame महाकृपाचार्यसदोषितात्मनः परस्य दुःखैरुपतप्तचेतसः। परस्य कृत्ये समुपस्थिते पुनः परैः समादापनतोऽतिलज्जना MaYānaSū. 18.26 (4.27)

**अतिलज्जा** (ati-lajjā) *f.* great shame, extreme bashfulness जीवन्तीलतिलज्जेयम् RāmāMañ. 263.25; अतिलज्जया त्वयैव प्रकटः प्रेयानकारि ĀryāSaSa. 57.

**अतिलज्जान्विता** (ati-lajjānvitā) *adj.* (*f.*) possessed of extreme bashfulness अतिलज्जान्वितेत्येयं(? वं) यस्तु कन्यामुपेक्षते। सोऽनभिप्रायवेदीति पशुवत् परिभूयते KāmSū. 206.24 (3.2)

**अतिलज्जित** (ati-lajjita) *adj.* [*f.* –ā] very much ashamed दृष्ट्वं सर्वे गर्गो मुक्तेऽतिलज्जितः BṛKathāK. 24.19; पश्चात्तापं करोत्येष भूयो भूयोऽतिलज्जितः BṛKathāK. 102(10).27; आयातेऽथ महादेवे वीरभद्रोऽतिलज्जितः SkandP. iv. 89.102; SkandP. iii(1). 39.33; इत्युक्ता सा तदा तेन लीलावत्यतिलज्जिता DevīBhāP. iii. 25.20; (सः) प्रतिगृहं प्रायात् ...अतिलज्जितः BṛKathāMañ. 16.65; सा ... प्रकृतिः ... विनाशमायात्यतिलज्जितेव Vidvanmo. 6.25.

**अतिलटह** (ati-laṭaha) *adj.* extremely pretty, very handsome अन्यपाणिसंतन्यमानमतिलटहडमरुडात्कारकन्दलम् ... आदिनटमद्राक्षीत् YātrāPra. 5.10 (11) cf. लटभ.

**अतिलब्ध** (ati-labdha) *adj.* oppressed, maltreated तस्य परिचारकजनं वाग्दण्डपारुष्यातिलब्धं मार्गेत ArthSā. ii. 150.10 (4.7)

**अतिलभ्** (ati-labh-) I. Ā. to obtain in plenty तस्मिन् जाते त्रिलोकीसुखमतिलभते VīraBhā. 7.81.

**अतिलमिश्र** (a-tilamiśra) *adj.* not mixed with sesame द्वया धानास्तिलमिश्राश्चातिलमिश्राश्च BaudhPiMe. i. 17.2.

**अतिलम्पट** (ati-lampaṭa) *adj.* extremely passionate, very much addicted to pleasures, libertine कथं दुनोषि मां लोल रतिचौरातिलम्पट BrahmVaiP. iv. 3.59; स्वयंवरमिमं यः करिष्यत्यतिलम्पटः। स वध्यः ... सर्वैः SkandP. vii(2). 17.46; उवास तत्र सुप्रीतो तपस्वी नातिलम्पटः SivaP. ii(3). 35.6 (164B.5); न भविष्याम्यहं ततः। उत्तरोत्तरसौख्यानां पञ्चसेनेऽतिलम्पटः PariPar. 2.692.

**अतिलम्ब** (ati-lamba) *adj.* very long तद्धार्यमुपवीतं स्यान्नातिलम्बं न चोच्छ्रितम् GobhiSm. 1.3; अत्रातिलम्बात्युच्छ्रितप्रतिषेधान्मध्ये कथंचिदलाभे परिमाणान्तरमविरुद्धमिति ज्ञायते SmṛtiCan. i. 83.10; i. 83.13.

**अतिलम्बिता** (ati-lambitā) *adj.* (*f.*) too much hanging down तुलावदुध्धृता वल्गा नात्युच्चा नातिलम्बिता AśvaCi. 8.15.

**अतिलम्बी** (atilambī) *f. Anethum sowa* अतिलम्बी सितच्छत्रा (शतपुष्पायाः नामानि) BhāvPra.(Bhā.) 6(2).90; BhāvPraNi. 11.89.

**अतिलम्बोष्ठी** (ati-lamboṣṭhī) *adj.* (*f.*) having too long (i. e. hanging) a lower lip अतिलम्बोष्ठीम् ... कुब्जामुज्ज्वाननानकरोत् PraboSu. 235.

**अतिलम्बौष्ठ** (ati-lambauṣṭha) *adj.* having a very long or hanging lower lip धिक् करभमतिलम्बौष्ठं दीर्घग्रीवम् Upask. 339.5 (on vii. 2.20)

**अतिलल्** (ati-lal-) X. P. to fondle or caress to an excess न पीडयेदिन्द्रियाणि। न चैतान्यतिलालयेत् AṣṭāHṛ. i. 2.29; SiddhYo. 81.85; SukraNi. 3.16; तत्रातिलालयेत् Bārhas. 1.83.

**अतिललाटंतप** (ati-lalāṭaṁtapa) *adj.* excessively scorching the forehead अतिललाटंतपस्तपनः VidhaSā. 4.3(3)

**अतिललित** (ati-lalita) *adj.* [*f.* – ā] very graceful, extremely charming मृद्वारक्तं वहन्तः करमतिललितम् ... शशाः स्युः RatiRaha. 3.31; अतिललिते ... विरचितावासे स्थितम् ... सर्वज्ञादिकशक्तिवृन्दमनिशं वन्दे TripuMāPūSt. (Sañ.)94; गानम् ...कलमतिललितं कर्णपूरायतां नः SivPāKeSt. 38; अतिललितपदविन्यासरसासुसिन्धुरवधूस्कन्धमधिरूढा ... भूपालपुत्रिका ... न्यग्रोधच्छायामण्डपमशिश्रयत् NalaCam. 1.55(7); रम्याः किं न विभूतयोऽतिललिताः सच्चामरभ्राजिताः SubhāRaSaṁ. 314; श्रीजयदेवभणितमतिललितम्। सुखयतु रसिकजनं हरिचरितम् GītGo. ix. 18.8; वधूनां नयनम् ... अतिललितां विभरांबभूव शोभाम् Nalābhyu. 6.60; 6.28; यदपि कविता नातिललिता मुदं धास्यन्त्यस्यां तदपि हरिगन्धाद्बुधगणाः VidaMā. 1.4; (हंसम्) वरं दूतं मेने तमतिललितम् ... ललिता HaṁsDū. (Rū.) 7; पत्युर्मुखेऽतिललिता तव नाममाला SṛṅgāMañ.(A.) 15.28; अतिललितेन गतेन (राजानं रञ्जयामास राज्ञी) ParamāKā. 52.9; दैवज्ञशिखामणिः ...सुब्रह्मण्यनामा ... अतिललितवितितदक्षिणप्रघणसदनान्तरनिवेशितरत्नपर्यङ्कविलसत्कमनीयोपधानकलितसव्यभुजाञ्चितशुचिमृदुलोण्णीषभूषितशीर्षस्य ...उशनसः स्वपरिपन्थिजननिरसनालोचनप्रस्तावम् ... विचारयन् ĀnandRa. 6.4 (36)

**अतिललिततर** (atilalita-tara) *adj.* extremely playful अतिललिततरं तरङ्गभङ्गैरिदमपि ... वारि वाप्याः NalaCam. 4.5.

**अतिललितम्** (ati-lalitam) *adv.* most gracefully, most sportively त्रस्तकुरङ्गीदृशा ... कान्तदिदृक्षयातिललितं द्वारे दृगारोपिता SaduktiKa. 93.15.

**अतिललितरति** (atilalita-rati) *adj.* whose amorous sport is extremely charming ज्ञातव्या पण्डितेन्द्रैरतिललितरतिर्लाटकर्णाटनारी PañcSā. 2.28.

**अतिललितविलास** (atilalita-vilāsa) *adj.* whose sport is extremely graceful or charming अतिललितविलासम् ... नौमि कामम् AnaṅgaRa. 1.1.

**अतिललिताङ्गी** (atilalitāṅgī) *adj.* (*f.*) whose body (or limb) is extremely charming एतस्यामुदितायामिन्दुकलायामिवातिललिताङ्ग्याम्। अनुभवतु बन्धुलोको मकरालय इव महान्तमानन्दम् SṛṅgāBhū. 84; आसंस्तिरमलनृपतेः कीर्तिश्रीह्रिय इवातिललिताङ्ग्यः। पन्थ्यः ĀnandRa. 2.35.

**अतिलवण** (ati-lavaṇa) *adj.* (*f.* –ā) very salty, mixed with much salt तासाम् (अपाम्) अन्यतरा अतिलवणाः ... ता अशान्ता रेतः समुद्रं वृत्वातिष्ठन् GopBr. i. 1.3; (अन्नपानभेषजादिभिः) तथातिलवणक्षारैरम्लैः कटुभिरेव च।... शोणितं संप्रदुष्यति CaraS. i. 24.5 (1941 Ed.); (भेषजम्) अतिलवणम् ... वमनीयमुपकल्पितमस्य विरेचनाय संपद्यते।... तमौषधविपर्ययमाचक्षतेऽतियोगं च KāśyaS. 157A.23; (भोजनम्) अतिलवणमचक्षुष्यं तीक्ष्णात्यम्लं जरा साक्षात् AṣṭāSaṁ. i. 69.9 (1.10); अत्यम्लं चातिलवणम् ...। आसुराणीह भोज्यानि तान्यतो दूरतस्त्यजेत् BrahmP. 220.183; अतिलवणम् अतिमात्रलवणयुक्तम् CaturCin. iii(1). 609.18; अतिलवणमम्लयुक्तं कदशनशाकोत्कटं वर्ज्यम् HaṭhPra. 1.60.

**अतिलवणत्व** (atilavaṇa-tva) *n.* the state of being too much salty, excessive salinity औषधस्य ... अतिलवणत्वात् ... वमनविरेचनौषधानां दुर्योगातियोगातुत्पद्यते KāśyaS. 156A.36.

**अतिलवणसात्म्य** (atilavaṇa-sātmya) *adj.* used to consume too much of salt ये ह्यतिलवणसात्म्याः पुरुषास्तेषामपि खालित्येन्द्रलुप्तपालित्यानि वलयश्चाकाले भवन्ति CaraS. iii. 1. 21 (1922 Ed.)

**अतिलसत्** (ati-lasat) *adj.* very much shining, bright, beautiful क्रुध्यत्यद्धा ययोः स्वां तनुमतिलसतोर्दिम्बतां लक्ष्यन्ती ··· शैलकन्या। युग्मांस्तौ ··· अव्याताम् ··· कपोलौ S'ivaKePāSt. 8; (गजाननः) गम्भीरनाभिविलसद्दुदरोऽतिलसत्कटिः GaṇeP. i. 63. 35.

**अतिलसद्रुचि** (atilasad-ruci) *adj.* having extremely bright lustre सः ··· अतिलसद्रुचि कालघनावृतेर्हरति तत्प्रतिबिम्बमहो क्षणात् RājTa.(Jo.) 1300.

**अतिला** (a-tilā) *adj.* (*f.*) unmixed with the seeds of *Sesamum indicum* अतिलाभिर्धानाभिलिः प्रसर्पं परिकिरति BhārPiMe. ii. 5. 3.

**अतिलाघव** (ati-lāghava) *n.* 1 extreme quickness, dexterity or ease चिच्छेदास्य शरव्रातान्स्वशरैरतिलाघवात् MatsyaP. 150. 120; चित्रीयमाणानतिलाघवेन ··· निचखान दूरं बाणान्ध्वजिन्या हृदयेष्वरातिः Kirātā. 17. 31; प्रपन्नारुखां जन्तवः ···। जन्मोदर्धि लघु तरन्त्यतिलाघवेन KalyāMaSt. 12; (गजः) दत्त्वा प्रहारमतिलाघवतातुरः पृष्ठे श्रयत्यसकृदुद्भटे भटे HammīMaKā. 12. 54; मनसोऽतिलाघवात्त्वरया ज्ञानेन्द्रियसम्बन्धान्नानाज्ञानोत्पत्तेः SiddhāMu. 53. 29 (*on* 85); सः ··· शतमन्युदूतः ··· अतिलाघवोदस्तसमस्तविटपिपटलः ··· अखिलामपि वाहिनीमेवं क्षणेन क्षोभयामास ĀnandaRa. 7. 43 (4); 2 extreme lowness, meanness, degradation जगतां पतिरर्थितयाद्विष्णुर्वामनतां गतः। अधिकः कोऽपरस्तस्मात्रो न यात्यतिलाघवम् PadmP. ii. 66. 137; त्वयात्र सखि राधिकाश्रवसि वीक्ष्य तत्कुण्डलं मनः खमुदवादि यत्तदतिलाघवायैव नः UjjvaNīMa. 246. 2; 3 extreme simplicity or economy of thought कार्यान्वितपरत्वनियमाभावे पदानामतिलाघवायान्वितपरत्वमपि त्यज्यताम् VedāntKa. 81. 21 (*on* i. 1. 4); स्फुरत्प्रतीयमाननिगा( निर्भागा ? )इप्रत्ययवेद्यचेतनस्य देहात् पृथग्भावमात्रमतिलाघवात् प्रत्येतव्य[म्] NyāyKu. 112. 18; (घटपटादीनामप्यैक्यमस्तु) एकत्वाभ्युपगमे चातिलाघवात् SiddhāBi. 34. 2; न चैवमतिलाघवान्नाम्ना वस्तुप्रतिपत्तिमुद्दिश्योच्चारणमुद्देश इत्येतावदेव लक्षणं स्यादिति वाच्यम् S'ivārkaMaDī. i. 102. 29 (*on* i. 1. 2); अतिलाघवात् व्यक्तावेव शक्तिः MīmāKau. i. 142. 4 (*on* i. 3. 30); iii(1). 22. 11 (*on* i. 2. 7); तथा चातिलाघवात् भावाभावयोर्विरोध एव न स्वीक्रियताम् GuruCandr. i. 86. 16; i. 148. 17; एवं चासंसर्गविषयकतत्प्रकारकज्ञानस्य प्रवृत्तौ व्यवहारे च हेतुत्वादतिलाघवमित्याहुः BhāṭṭCin. i. 21. 3 (*on* i. 1. 4); अत एव पक्तेत्यादावपि कृतिबोधाय पृथक् शक्तिर्न कल्प्येत्यतिलाघवं स्यात् VaiyāBhū. 41. 17 (*on* 7); 4 extreme lightness (as against heaviness or weight) गुल्मप्लीहानाहशूल° ··· °अतिलाघव° ··· °वातव्याधयः AṣṭāSam. i. 145. 15 (1. 28)

**अतिलाङ्गलदेश** (atilāṅgala-deśa) *m.* name of a country अतिलाङ्गलदेशे च लक्षः प्रोक्तः सपादकः (ग्रामाणाम्) SkandP. i(2). 39. 138.

**अतिलाभ** (ati-lābha) *m.* great gain, profit अतिलाभं तु मन्येऽहं यत्तेन रिपुघातिना (भीमेन)। तदैव न हताः सर्वे मम पुत्राः MahāBhā. v. 50. 15; किमतिलाभकाङ्क्षया कुडु( ? टु )म्बसर्वस्वेन संगृहीतभाण्डो देशान्तरमभिगच्छन्नन्तरा चौरैरभ्यासादितो भवान् Ubhayābhi. 10. 11.

**अतिलालन** (ati-lālana) *n.* too much of fondling or caressing अतिलालनमेकके।··· पितरौ त्वयि चक्रतुः GaṇeP. i. 7. 11; अज्ञानादतिलालनादपि च ते मातर्मया माघता निर्माल्ये परदैवतस्य चलितं यत्किंचिदुच्छृङ्खलम्। तत्क्षन्तव्यम् NīlaVi. 119. 5; गुरुरलमतिवात्सल्यादतिलालनेनेत्यभिधाय NīlaVi. 63. 17.

**अतिलालना** (ati-lālanā) *f.* excessive fondling वरं चातितिरस्कारो बालानां नातिलालना BṛKathāS'loSam. 20. 89; दक्षस्तु धातुरतिलालनया रजोऽन्धो नात्यादृतस्त्वयि Nārāy. iv. 16. 9.

**अतिलालवत्** (ati-lālava(n)t) *adj.* having excessive saliva (श्रृगालादीनाम्) यदानिलः। श्लेष्मप्रदुष्टो मुष्णाति संज्ञां संज्ञावहाश्रितः। तदा प्रस्रस्तलाङ्गूलहनुस्कन्धोऽतिलालवान्।– अन्योन्यमभिधावति SuśruS. v. 7. 44; RugVi. 69. 58.

**अतिलालस** (ati-lālasa) *adj.* [*f.* -ā] i very eagerly longing, very eager, very much devoted to या सा माहेश्वरी शक्तिर्ज्ञानरूपातिलालसा (तस्याः कार्यमिदं जगत्) KūrmaP. 101. 14 (1. 12); 106. 10 (1. 12); सर्वन्तिरस्था च चिच्छक्तिरतिलालसा KūrmaP. 108. 18 (1. 12); प्रणेमुरादराद्देव्यो गायन्ति सातिलालसाः KūrmaP. 188. 11 (1. 16); (मानसं नाम सरः) तस्य तीरेषु सुभगां चरन्तीमतिलालसाम् (उर्वशीम्) KūrmaP. 250. 18 (1. 23); ऋषयस्तपतां वराः। आजग्मुः परमेशस्य दर्शने त्वतिलालसाः PadmP. iv. 9. 31; (विरहिणी) अङ्गान्यत्यतिलालसा वहति या क्लेशेन SūktiMu. 38. 22; ii very greedy शूद्रान्नसेविनो विप्रा जिह्वाला अतिलालसाः SkandP. iv. 68. 37.

**अतिलालित** (ati-lālita) *adj.* [*f.* -ā] excessively fondled अथवा यौवनमतिलङ्घितं( v. l. लालितं ) नु कुवृद्धैः DhūrtaViSam. 5. 21; भवाः परिषदीत्यासन् सुराः पारिषदाह्वयाः। ते पीठमर्दसदृशाः सुरेन्द्रैरप( v. l. °अति )लालिताः MahāP. 22. 26; बालानां नातिलालना। इदयन्ते ह्यवसीदन्तो धीमन्तोऽप्यतिलालिताः BṛKathāS'loSam. 20. 89; केलिमेदपरिलोलिताभिरतिलालिताभिरबलाभिः स्वैरमीश। ननु सुरापयसि चारु नाम विहृति व्यधाः Nārāy. x. 69. 10.

**अतिलावण्य** (ati-lāvaṇya) *n.* extreme beauty (सा राक्षसी) आगता दितिरूपेण ···। अतिलावण्यनिलया GaṇeP. ii. 21. 18.

**अतिलाशय** (atilāśaya) *m.* name of a water-bird ठिंकः पाशगठो ठिङ्को जलसायीतिलाशयः। जलपक्षी RājNi. 405. 24.

**अतिलिङ्ग** (ati-liṅga) *adj.* possessed of excessive characteristics (than usual) कालं तु खलु यथर्तुलिङ्गाद्विपरीतलिङ्गमतिलिङ्गं हीनलिङ्गं चाहितं व्यवस्येत् CaraS. iii. 3.7 (1941 Ed.)

**अतिलिप्सा** (ati-lipsā) *f.* excessive greed परिग्रहोत्था च ममातिलिप्सा ViṣṇuP. iv. 2. 120.

**अतिलिहा** (atilihā) *f.* name of a Prakrit metre (of four lines, each containing sixteen *mātrās*) [PW, MW, APTE]

**अतिली** (ati-lī-) IV. Ā. to cling, to stick to न च धावसि नातिलीयसे GiMs. iii(1). 9. 12 [to become slack(?) DBHS] (गजस्य) समन्तात्परिलीयन्ते कृष्णा यस्य तु मक्षिकाः। शरीरे चातिलीयन्ते न स जीवति तादृशः Hastyāyur. 625. 20 (4. 9)

**अतिलीढ** (ati-līḍha) *f.* name of an aspirate coming after *ṣ* विवृतं प्रति या ऊष्मा विज्ञेया विकटानना। लीढातिलीढविघुष द्यपसेषु प्रकीर्तिताः YājñaSi. 146.

**अतिलीन** (ati-līna) *adj.* A completely absorbed in धन्यास्ते वीतरागाः ··· योगाभ्यासेऽतिलीना गिरिवरगहने यौवनं ये नयन्ति SatTrayī. 542; B excessively coming closer, closely attached हेमन्तमार्जार इवातिलीनः स चेत्र निर्याति निरस्थमानः। तदेष कार्यः ··· परुषोपचारः SamaMā. 5. 79.

**अतिलीनदोष** (atilīna-doṣa) *adj.* whose disorder has closely stuck to तत्र साध्यमामं दुष्टमलवीभूतमुल्लिखेत्पाययित्वा सलवणमुष्णं वारि। तथा स्वच्छदेयतमतिलीनदोषं कृष्णानागदन्तीकल्कयुक्तं पाययेत् AṣṭāSam. i. 70. 24 (1. 11)

**अतिलुब्ध** (ati-lubdha) *adj.* [*f.* -ā] very greedy, extremely covetous न हि ··· राज्ञा ··· अतिलुब्धेन शक्याः पालयितुं प्रजाः MahāBhā. xii. 76. 14; चपला चातिलुब्धा च परुषा कलहप्रिया NāṭyaS'ā. 22. 105; अतिलुब्धः ··· महापद्मनामा नन्दः ··· भविष्यति ViṣṇuP. iv. 24. 20; वर्धमानो महान्स्नेहः ··· अतिलुब्धेन जन्तुकेन विनाशितः Tantrākhyā. 3. 3 = PañcT. 1. 1 (7. 4); Pañcā. 3. 3; Hitopa. 2. 1; डिङ्गरातबलगुप्तयोरतिलुब्धयोः ··· अनुग्रहः कथं शक्यः MudrāRā. 3. 24 (49); वाताधिकोऽतिलुब्धादिर्जातो भूमिसुवो गृहे AgniP. 133. 3; मयातिलुब्धेन ··· धर्षिता मुनिपत्नी सा GaṇeP. i. 34. 23; अतिलुब्धेन। धूर्तेन वञ्चितोऽहम् KalāVi. 2. 52; संचयेनातिलुब्धो हि निहतो जम्बुकः पुरा BṛKathāMañ. xvi. 1. 412; गृध्रोऽतिलुब्धपक्षिणोः DharK. 1980; अतिलुब्धासि हे पापे PārśvC. 7. 172; औरगं इवातिलुब्धा भवन्ति धनलवणवारिविहृतृष्णाः S'ārṅgaPa. 431; (मानवाः) आसन् ··· नातिलुब्धाः MahNirvāTa. 1. 26.

**अतिलुब्धक** (atilubdha-ka) *adj.* very greedy, very covetous एवं चातिलुब्धकराजाग्रहाद्दौलानामन्तरद्रोणीः प्रजास्संश्रयिष्यन्ति ViṣṇuP. iv. 24. 94; क्षितोऽतिलुब्धकश्चौरः केन वा नरघातकः BrahmVaiP. ii. 25. 30; DevīBhāP. ix. 23. 27.

**अतिलुब्धत्व** (atilubdha-tva) *n.* the nature of being very greedy, excessive greed अतिलुब्धत्वादथो स्त्री पुरुषोऽवदत् PārśvC. 6. 637.

**अतिलुभ्** (ati-lubh-) IV. P. to be excessively tempted by स्त्रीणां मनोऽतिलुलुभे शशिनः करेषु Subhāṣi. 1990.

**अतिलुलित** (ati-lulita) *adj.* closely attached or adhering [MW]

**अतिलेखन** (ati-lekhana) *adj.* completely scrapping off (मधु) मेदःस्थौल्यापहं ग्राहि पुराणमतिलेखनम्। दोषत्रयहरं पकम् SuśruS. i. 45. 141; शङ्खोदधिमलौ शीतौ कषायावतिलेखनौ AṣṭāSam. i. 76. 1 (1. 12); गुग्गुलुः ··· स नवो बृंहणो वृष्यः पुराणस्त्वतिलेखनः BhāvPra.(Bhā.) 6(3). 42.

**अतिलेपन** (ati-lepana) *n.* plastering completely, over-application of (ointment etc.) पूर्वोक्तैश्च गुणैश्चास्य प्रच्छितस्यातिलेपनम् Hastyāyur. 320. 15 (2. 66)

**अतिलेहितदोष** (atilehita-doṣa) *m.* defect due to too much use of an electuary अतिलेहितदोषाः के KāśyaS. 1A. 4.

**अतिलोक** (ati-loka) *adj.* i which has spread beyond this world स्वं यशः कथकचारणसङ्घैरुद्धतं निशमयन्नतिलोकम् AṣṭāSam. ii. 53. 13 (4. 9); ii who is above (the injunctions and prohibitions of) this world अतिलोकस्य को दोषः शंभोर्मूर्धशिरश्छिदः RāmC. 24. 34; iii supernatural, extraordinary अतिलोकैः पदार्थैः स्यात् विस्मयात्मा रसोऽद्भुतः DaśRū. 4. 78 = SāhiSā. 5. 105; तव पदाम्बुजयुग्मम्। ··· प्रस्नवन्मधु किमप्यतिलोकम् Stotrā.

19. 16; मम ... अतिलोकं स्वभावं शृणु GītāBh.(Rā.) 481. 1 (*on* 9. 29); वपुर्मनोहारि वचश्च रम्यं पदं च लोकादतिलोकमस्याः PārvPa. 4. 11; **iv** who excels the whole world त्वय्यनादरवतामतिलोके यामिमां वदसि वाचमनूचीम् Yādavā. 21. 26; **v** who conquers all, Yādavā. 21. 26 (comm. लोकोपद्रवकारिन्)

**अतिलोकोत्तरत्व** (atilokottara-tva) *n.* the state of being highly extraordinary or supernatural एतद्ग्रन्थे क्रियमाणस्यातिलोकोत्तरत्वेन ... मयैव पूर्वं कामितम् LaCandr. 8. 18.

**अतिलोचनसौन्दर्य** (ati-locanasaundarya) *n.* extreme beauty of the eyes (बालाम्) सोऽतिलोचनसौन्दर्यान्नाम्ना चक्रे सुलोचनाम् KathāSaSāg. vi. 2. 73.

**अतिलोठनता** (atiloṭhana-tā) *f.* complete retreat अतिलोठनताम् ... यस्याततायिपृतना युधि नायकस्य संदर्शनादभृत HarVi. 16. 31 (comm. परावृत्तिशीलत्वम्)

**अतिलोभ** (ati-lobha) *m.* **1** excessive greed or avarice अज्ञानं चातिलोभश्चाप्येकं जानीहि पार्थिव MahāBhā. xii. 153. 9; अतिलोभाद्गुणानाम् ... न शक्नोमि निश्चयं गन्तुम् PratiYau. 2. 3(15); सूक्ष्मत्वादतिलोभाच्च ... कामलक्ष्म तु दुर्ज्ञानं स्त्रीणाम् KāmSū. 323. 3 (6. 2); नातिलोभं च मन्येत [संप्राप्या ?] प्यापदाश्रयम् ParaS. 11. 36; अतिलोभमोहादशास्त्रविद्यः कुरुते चिकित्साम् KalyāKā. 7. 49; तथा क्षुरप्रैरनयैः क्रियाफलं मदातिलोभाविव वाजिनां युगम् RāghPāṇ. (Dha.) 6. 20; वातादिभिः शोकभयातिलोभक्रोधैः ... अरोचकाः स्युः RugVi. 14. 1; अतिलोभादिति। लुब्धा हि स्वाभाविकमिव रूपयन्ति प्रवृत्त्या न ज्ञायन्त इति JayaMa. 323. 12 (6. 2); चाञ्चल्यमतिलोभश्च ... वर्ज्यः SkandP. ii(9). 22. 58; निष्फलोदयः कृतोऽतिलोभादभिमानविक्रयः DaśāvaC. 3. 15; परिचारकैः ... अतिलोभादतिसिद्धम् ... भोजितवत् ... भवत्युपभाव्यापत् Hastyāyur. 118. 21 (1. 16); अथो जगाद सा दक्षातिलोभो न शुभः प्रिय PārśvC. 6. 639; अतिरागादशग्रीवो ह्यतिलोभात्सुयोधनः (गर्हितः) SūktiRa. 163. 52; अतिलोभात्प्रतिपन्नं तद्वचः सुभटैः CampaS'reKa. 299; अतिलोभेन प्रचुरकरादिग्रहणं परेषां मूलोच्छेदः ManvaMu. 272. 1 (*on* 7. 139); KandaCū. vi. 2. 39; **2** name of the third son of king Dāmodarasvāmin नृपतिः ... सिंहविष्णुमनोरथातिलोभनाम्नस्तनूजानजीजनत् AvantiKa. 11. 8.

**अतिलोभज** (atilobha-ja) *adj.* arising from extreme greed अस्या अतिलोभजम्। दर्शितं फलम् PārśvC. 7. 223.

**अतिलोभतस्** (atilobha-tas) *adv.* through excessive greed स जाने मां प्रेरयेदतिलोभतः KathāSaSāg. vii. 9. 83; मणिकुन्तलेषु वद्धतेऽतिलोभतो निजवाससा हलभृतेव गोपिता S'rīKaC. 14. 2; नास्तिक्यादतिलोभतः ... उपसर्गः प्रजापतेः VasiS. 45. 2; तिरस्काराेऽतिलोभतः S'ukraNī. 3. 220.

**अतिलोभता** (atilobha-tā) *f.* excessive greed or greediness मूर्खत्वमतिलोभता। ... स्त्रीणां दोषाः S'atTrayī. 368 = CāṇaNīDa. 2. 1; अतिलोभता शूद्रमाविशेत् VṛGautaSm. 635. 3 (22); अतिलोभताम्। वर्जयेत् PārśvC. 8. 181; मात्सर्यमतिलोभता। ...गुणिनामपि दोषाय S'ukraNī. 3. 243.

**अतिलोभन** (ati-lobhana) *adj.* very greedy धिङ् मामतिलोभनं मूढम् S'ṛṅgāMañ.(A.) 51. 16; धनप्राणहरो राजा प्रजायाश्चातिलोभनः S'ukraNī. 4(1). 64.

**अतिलोभनीय** (ati-lobhanīya) *adj.* very attractive, seductive or alluring, very covetable हंसैरप्यतिलोभनीयगमने हारावलीमुज्ज्वलाम् ... स्त्रीकुरु MantrMāSta. 250. 6; तमतिलोभनीयं दृष्ट्वा महीश्वरः परमं पिप्रिये CaitaCa. 233. 17(10); कुमारिकासंपुटिकाविहारानालोक्य यस्यामतिलोभनीयान् Raghunā. 1. 25.

**अतिलोभनीयता** (atilobhanīya-tā) *f.* extremely attractive nature स जानानः स्वस्य वपुषोऽतिलोभनीयताम् ... मृगाणामाधिपत्यं चकार JātaMā. 167. 14(26)

**अतिलोभपरा** (atilobha-parā) *adj.* (*f.*) very greedy अतृप्तातिलोभपरा स्वं स्वेनैव व्यनाशयत् PariPar. 3. 42.

**अतिलोभयत्** (ati-lobhayat) *adj.* greatly alluring or attracting इदमिदमिति मूरद्धां प्रयत्नैर्मुहुरतिलोभयता पुरःपुरोऽन्या। अनुरहसमनायि नायकेन S'iśuVa. 7. 50.

**अतिलोभान्ध** (atilobhāndha) *adj.* blind (i. e. indiscriminate) due to excessive greed कासां हि नापदां हेतुरतिलोभान्धबुद्धिता KathāSaSāg. v. 1. 198.

**अतिलोभान्वित** (atilobhānvita) *adj.* extremely greedy (i. e. very much interested) धर्म्यो न लोभान्वितः (v. l. धर्म्येऽतिलोभान्वितः) Mṛcch. 9. 5(52)

**अतिलोभाभिभूत** (atilobhābhibhūta) *adj.* overwhelmed with excessive greed अतिलोभाभिभूतात्मा कुट्टिनी रासभी भवेत् PārśvC. 7. 240.

**अतिलोभार्त** (atilobhārta) *adj.* suffering from excessive greed न दद्युस्तेऽतिलोभार्ता नास्ति नास्तीति वादिनः DevīBhāP. vi. 16. 14.

**अतिलोभाश्रय** (atilobhāśraya) *m.* receptacle or abode of extreme greed देहस्येव गदोदयो गुणगुणस्येवातिलोभाश्रयः HammīMaKā. 10. 28.

**अतिलोभिता** (atilobhi-tā) *f.* the state of being extremely greedy अनृतं साहसम् ... अतिलोभिता। ...स्त्रीणां दोषाः MādhavaĀ. 197.

**अतिलोभिन्** (ati-lobhin) *adj.* extremely avaricious अये विशाखेऽयमतिलोभी दध्नः GopāKeCan. 87. 29.

**अतिलोमन्** (ati-loman) *m.* name of a demon अतिलोमा विलोमा च ... । ब्रह्माणं पर्युपासन्त PadmP. v. 18. 76; *adj.* having too much hair पुरुषा निन्दिताः ... अतिलोमा चालोमा CaraS. i. 21. 3; सारगृहमतिलोम (शङ्किन्याः) RatiRaha. 1. 16.

**अतिलोमश** (ati-lomaśa) *adj.* [*f.* -ā] **i** very hairy, shaggy आलभते ...अतिकुल्वं चातिलोमशं च VājaS. 30. 22; आलभते। ... अतिश्लक्ष्णमतिलोमशम् TaiBr. III. iv. 19. 1; (सः) अद्राक्षीद्राक्षसं घोरम् ... अतिलोमशम् SkandP. iv. 54. 21; तामसः ... कृशः कृष्णोऽतिलोमशः SarvaSiSaṁ. 11. 26; योनिः ... अतिलोमशा वैधव्यकरी KāśyaS. 47B. 38; अतिलोमशम् ... शरीरेष्व(स्व)... प्रशस्तमुच्यते KāśyaS. 48B. 7; बभ्रुरतिलोमशो गिरिभवप्राणिविशेषः DīpKa. 102. 15 (*on* 3. 269); **ii** very woolly विमृशामि वितानं तेऽतिश्लक्ष्णमतिलोमशम् TripuVePāSt. 15.

**अतिलोमशा** (atilomaśā) *f.* *Convolvulus argenteus* नीलपुष्प्यतिलोमशा ParyāRaMā. 112.

**अतिलोमा** (ati-lomā) *adj.* (*f.*) very hairy, having much hair (on the body), shaggy नोद्वहेत्कपिलां कन्याम् ... नातिलोमाम् ManuSm. 3. 8; उद्वहेत द्विजो भार्याम् ... नातिलोमाम् SkandP. iv. 36. 93; NaraP. 58. 41; BhaviP. 270A. 23 (1. 182. 40)

**अतिलोमाङ्ग** (atilomāṅga) *adj.* having a body full of hair अजायत तदा पुरुषः ... अतिलोमाङ्गः MahāBhā. xii. 274. 39.

**अतिलोमिका** (ati-lomikā) *adj.* (*f.*) having too much hair (on the body) नोद्वहेत्कपिलां कन्याम् ... नातिलोमिकाम् LaS'ātāSm. 34.

**अतिलोल** (ati-lola) *adj.* **i** very fickle, very agitated, unsteady दुर्गन्धो भृशमश्रुचित्तश्चातिलोलः ... भ्रमति रुदन् पिशाचजुष्टः SuśruS. vi. 60. 15 (comm. अतिचपलः); RugVi. 20. 25; (Madhukośa सर्वसिन्नत्रे पाने च सतृष्णः); BhāgP. x. 87. 33; संप्रापुरतिलोलाश्च रुदन्तः शोकविह्वलाः BrahmVaiP. iv. 19. 143; iv. 23. 81; SkandP. iv. 20. 41; वरमदनमदादतिलोलम् GītGo. ii. 6. 5; अतिलोलमपि चेतः ... स्थैर्यमाश्रयति YogS'ā. 12. 30; YudhiVi. 2. 84; **ii** very frail क्व वत हरिणकानां जीवितं चातिलोलं क्व च निशितनिपाता वज्रसाराः शरास्ते S'āk. 1. 10.

**अतिलोलता** (atilola-tā) *f.* excessive desire ऋजुमतेः किल वक्रगिरा भवान् वरतनोरतनोदतिलोलताम् Nārāy. x. 79. 11 (comm. अतिलोलतां परवशताम्)

**अतिलोलुप** (ati-lolupa) *adj.* **i** very eager जटीभूतकचाक्षादिपक्ष्माणं त्वतिलोलुपम् (स्नपयेत्) AṣṭāSaṁ. ii. 184. 20 (6. 2); **ii** very lustful देवोऽदेवाङ्गनतः सृजति स्मातिलोलुपान् BhāgP. iii. 20. 23; SkandP. iii(2). 39. 314; PadmP. iv. 65. 34; vi 170. 56; DevīBhāP. i. 14. 41; vii. 10. 7.

**अतिलोलुपत्व** (atilolupa-tva) *n.* excessive desire (अनीश्वरज्ञाः) ते चेन्द्रियार्थेष्वतिलोलुपत्वादजातलज्जाः ... भ्रमन्ति Vidvanmo. 7. 15.

**अतिलोहित** (ati-lohita) *adj.* [*f.* -ā, -nī] dark red, very red विद्युदातपायातिलोहिनी MahāBh. i. 449. 25 (*on* ii. 3. 13); राज्यः समन्तादतिलोहिताः ... रक्ताभिपन्ने नयने भवन्ति SuśruS. vi. 6. 9; BhelaS. 98. 1 (5. 1); बभ्रुः पलाशान्यतिलोहितानि KumāSaṁ. 3. 29 = VakroJī. 49. 24 = AuciViCa. 16(12) = SuvṛTi. 3. 17(2) = SūktiRa. 184. 5 = Kuval. 35(33) = Subbhāṣi. 1673; KāmSū. 126. 7 (2. 5); स मुनिः ... अतिलोहितेन चक्षुषा स्वरुधिरोपहारमिवामर्षदेवतायै प्रयच्छन् HarṣaC. 15. 3; 179. 9; S'iśuVa. 17. 13; BṛĀraUBhVā. iv. 3. 1239; नाल्यः समन्तादतिलोहिताः RugVi. 59. 8; SkandP. i(2). 17. 5; JayaMa. 126. 8 (*on* 2. 5); NavaSāC. 12. 27; AbhidhāCin. 1326; VasaViKā. 8. 27; वहन्नतिलोहितं वपुरगादुदयं रजनीकरः HammīMaKā. 7. 19; LalitāSaBh. 29. 34 (*on* 53); *m.* name of a form of the deity Rudra-Vāyu अतिलोहितानां रुद्राणां स्थाने स्वतेजसा भानि TaiĀ. i. 17. 1 (120. 9); cf. **अतिलोहिती**

**अतिलोहितगन्ध** (atilohita-gandha) *m.* name of a plant, white thorn-apple, *daturalba* अतिलोहितगन्धश्च ध्यामा मदनकस्तथा ParyāMu. 11. 35.

**अतिलोहितनेत्र** (atilohita-netra) *n.* extremely red eye अतिलोहितनेत्राभ्यामाशीविष इव श्वसन् MahāBhā. v. App. 1. 12 (87)

**अतिलोहिता** (ati-lohitā) *f.* name of a female form of the deity Vāyu. अथ वायोः ... कपिला अतिलोहिताः। ...वैद्युत इत्येकादश TaiĀ. i. 9. 2 (64. 1)

**अतिलोहिताक्षि** (atilohitākṣi) *n.* very red eye प्रतिदिशमतिलोहिताक्षिपक्ष्मपातम्…वदति न मौनमुपेयुषी (श्रीराधा) सखीभ्यः GopāKeCan. 92. 22.

**अतिलोहिताक्षी** (atilohitākṣī) *adj.* (*f.*) with very red eyes, whose eyes are exceedingly red भेदाद्भ्रुवोः कुटिलयोरतिलोहिताक्ष्या भग्नं शरासनम् … स्मरस्य S'āk. 5. 24; SaraKaṇṭhā. 578. 11.

**अतिलोहिती** (atilohitī) *f.* [DEBRU. p. 392] name of a female form of Vāyu अतिलोहितीनां रुद्राणीनां स्थाने स्वतेजसा भानि TaiĀ. i. 17. 2 (121. 9)

**अतिलौकिक** (ati-laukika) *adj.* [*f.* -ī] supra-mundane, transcendental संक्लेशे व्यवदाने च स्वयमश्रान्तबुद्धयः। यच्छन्ति लौकिकीं कृत्स्नां संपदं चातिलौकिकीम् MaYānaSū. 163. 4 (19. 16); PramāVār. 3. 473; आगमः पौरुषेयः स्यात्प्रमाणमतिलौकिकम्(? के) NyāyVi. 2. 405.

**अतिलौल्य** (ati-laulya) *n.* 1 great perturbation चूर्णम् … तृष्णातिलौल्यशमनं करोति HāriS. iii. 6. 22; 2 excessive greediness, extreme greed बकः … अतिलौल्योद्धृतेनाथ कर्कटेन निपातितः BṛKathāMañ. 16. 288; Tantrākhyā. 18. 14; PañcT. 1. 61 (66. 22); 4. 18 (392. 6); Hitopa. 4. 15; Pañcā. 36. 16; अतिलौल्यमतिस्पृहाम्। … वर्जयेत् Rasā. 18. 119; अतिलौल्यात् पुनर्लब्धमप्यर्थं हारयेत् कुधीः PārśvC. 6. 629.

**अतिलौल्यतस्** (atilaulya-tas) *adv.* owing to extreme greed अतिलौल्यतः कवलयन् मलिनद्युति काननं किमपि दावशिखी KāvyKaVṛ. 138. 17 (4. 5)

**अतिलौल्यता** (atilaulya-tā) *f.* excessive greed, over-greed अस्यातिलौल्यताध्यानादप्यनर्थः प्रजायते PārśvC. 2. 1016.

**अतिलौल्यवत्** (ati-laulyava(n)t) *adj.* having much greed, too greedy हास्यादृते किमन्यत्स्यादतिलौल्यवतां फलम् KathāSaSāg. iv. 2. 200.

**अतिवक्तुम्** (ati-vaktum) *inf.* to exaggerate प्रभावं शक्तोऽतिवक्तुं न गुरुः सुराणाम् EI. xxv. 15. 30.

**अतिवक्तृ** (ati-vaktṛ) *adj.* i reviler यो ब्राह्मणः … अतिवक्ता च … नरश्वानं हि तं विदुः MahāBhā. xiii. 37. 13; MatsyaP. 216. 15; ऋषीणामतिवक्तार इति। अधिक्षेप्तारोऽपवदितार इत्यर्थः Sphuṭā. 26. 25 (*on* 3. 15); ii talking too much वावदूकोऽतिवक्तरि AmaK. 2095; KośaKaTa. 2. 23; KalpaK. 222. 71.

**अतिवक्त्र** (ati-vaktra) *adj.* having a big face, big-faced चन्द्रवक्त्रश्च (v. l. अतिवक्त्रश्च) य आसीदसुरोत्तमः MahāBhā. i. 61. 26.

**अतिवक्र** (ati-vakra) *adj.* [*f.* -ā] i very retrograde वक्रातिवक्रा विकला मन्दा मन्दतरा समा (ग्रहाणां गतिः) SūrySi. 2. 12 (53); ऋज्वी हिता प्रजानां अतिवक्रार्थं गतिविनाशयति BṛSaṁ. 7. 16; ऋज्व्यतिवक्रा वक्रा विकला च मतेन देवलस्यैताः (बुधस्य गतयः) BṛSaṁ. 7. 15; राशिषु चतुर्षु वक्रं षट्स्वतिवक्रम् BrahmSphuSi. 2. 51; MahāBhāsk. 4. 56; ii very crooked, curved कलावान् वचनपरिचयो भ्रूविकारोऽतिवक्रः … सेवामेवं … विदधति सुभगे मुञ्च मानग्रहोऽयम् S'atTrayī. 629; KalyāKā. 19. 126; RāmāMañ. 93. 1; वातेन शूलेन मरुत्प्लवेन सदातिवक्रा हि शिरा वहन्ती (नाडी) NāḍiVi. 100; इहाविशयेन पथातिवक्रः शास्त्रौघनिष्यन्दसुधाप्रवाहः। सोऽस्याः श्रवः पत्रयुगे प्रणालीरेखेव धावत्यतिकर्णकूपम् NaiṣC. 7. 62; SūktiMu. 4. 107; MātaLī. 3. 2; Bharat. 7A. 10; विलासिनीनां मलिनोऽतिवक्रो वेणीकलापः परमाप बन्धम् Rāṣṭrau. 10. 10; NilaVi. 56. 3; *m.* Mars कलावान् वचनपरिचयो भ्रूविकारोऽतिवक्रः … सेवामेवं ग्रहास्ते विदधति सुभगे मुञ्च मानग्रहोऽयम् S'atTrayī. 629.

**अतिवक्रगमन** (ativakra-gamana) *n.* moving in the maximum retrograde motion वक्रातिवक्रगमने विज्ञेये तन्निवृत्तिश्च MahāBhāsk. 4. 55.

**अतिवक्रगा** (ativakra-gā) *adj.* (*f.*) going in a maximum retrograde motion या वक्रा सातिवक्रगा (गतिः) SūrySi. 2. 13.

**अतिवक्रचेष्टित** (ativakra-ceṣṭita) *adj.* having exceedingly crooked behaviour केरानतिवक्रचेष्टितान् ManvaVi. 1230. 4 (*on* 9. 225)

**अतिवक्रता** (ativakra-tā) *f.* extreme crookedness मृषावादोऽतिवक्रता …स्त्रीवेदस्याश्रवा इमे TriṣaS'aPuC. iii. 7. 100.

**अतिवक्रवचस्** (ativakra-vacas) *n.* very cunning speech हीनाहं भवतोऽतिवक्रवचसा दातुं प्रवीणोत्तरम्। का ते सुन्दरि हीनता VakroPañ. 31.

**अतिवक्रित** (ati-vakrita) *adj.* very retrograde, being in backward motion उच्चराशौ विलोमे च बलं नान्यैरिहेष्यते। कालस्यातिबहुत्वाच्च, तस्मात्स्वोच्चेऽतिवक्रिते Sārā. 5. 14.

**अतिवक्ष्** (ati-vakṣ-) I. P. cf. उक्ष्, to grow beyond, to overgrow त्रीणि रोचना। अतीदं विश्वं भुवनं ववक्षिथ ṚV. i. 102. 8; अति विश्वं ववक्षिथ ṚV. i. 81. 5; अति तृष्टं ववक्षिथाथैव सुमना असि ṚV. iii. 9. 3 [*but* Sāy. ववक्षिथ अतिशयेन वोढुमिच्छसि ]

**अतिवङ्क्** (ati-vaṅk-) I. Ā. to surpass, to cross वनप्रदेशान् … अयमत्यवङ्कत DhātuKā. 1. 13.

**अतिवच्** (ati-vac-) II. P. to censure, to blame किं मात्यवाक्षीः परुषैस्त्रैगं सूच्या इवानघ MahāBhā. v. 74. 14; अथापि काममेतं ते प्रजात्यै करवाण्यलम्। यथा मां नातिवोचन्ति मुहूर्तं प्रतिपालय BhāgP. iii. 14. 21.

**अतिवचोविषया** (ati-vacoviṣayā) *adj.* (*f.*) indescribable (*lit.* beyond the range of speech) अपि तन्मुखाभिषवसेकभृते प्रियसुह्रदत्रातिवचोविषयान्। अधरीचकार … मानसंस्थितिं मगो बकुलः HammiMaKā. 5. 24.

**अतिवज्रघटिता** (ativajra-ghaṭitā) *adj.* (*f.*) constituted of something harder than the thunder-bolt सख्यः संशृणुतासु…एतानप्यधुनातिवज्रघटिता नूनं सहिष्ये घनान् S'ṛṅgāTi.(Ra.) 2. 84.

**अतिवञ्चक** (ati-vañcaka) *adj.* very fraudulent जनैः प्रकथितम्…यथार्थं क्षुल्लकः श्रेष्ठिन् धर्मवाह्योऽतिवञ्चकः BṛKathāK. 70. 88.

**अतिवञ्चन** (ati-vañcana) *n.* clever cheating, great fraud धूर्तैरतिबलं प्रोक्तं कपटेनातिवञ्चनम् RasāSu. 227. 20 (3. 55); विज्ञायाक्षरतन्मात्रं जीवितं चातिवञ्चनम्। विहाय सर्वशास्त्राणि परलोकं समाचरेत् BhaviP. 278B. 7 (i. 187. 40)

**अतिवञ्चयत्** (ati-vañcayat) *adj.* deceiving greatly विशुद्धज्ञानरूपोऽपि त्वं लोकानतिवञ्चयन्। मायया मनुजाकारः सुखदुःखादिवानिव AdhyāRā. vi. 8. 35.

**अतिवञ्चित** (ati-vañcita) *adj.* [*f.* -ā] greatly deceived or cheated तस्थौ शय्यातले श्रेष्ठी गुणपालोऽतिवञ्चितः BṛKathāK. 72. 84; 59. 74; काव्यस्तु … चुकोपाथ शशाप च दैत्यान् … गुरुणातिवञ्चितान् DeviBhāP. iv. 14. 13; कृतककृतकैर्मायास्वैस्त्वयास्म्यतिवञ्चिता Subhāṣi. 1628; *n.* great deception अहो पश्यत मूढत्वं लोकानामतिवञ्चितम् PadmP. iv. 35. 33.

**अतिवत्सल** (ati-vatsala) *adj.* [*f.* -ā] i very affectionate, very much attached to offspring देशकालोपसंपन्ना दोग्ध्री शान्तातिवत्सला। … गौर्मम MahāBhā. xiii. 70. 15 [Chitrashālā Ed.]; सा हि रोदिति मे माता कान्ताथाप्यतिवत्सला ViṣṇuP. v. 27. 17; BrahmP. 200. 16; किं नु तत्कारणं येन स्वपत्नी नातिवत्सला। मम चासावतीवेष्टा MārkP. 71. 24; वत्सौ तु वर्धयन्त्येव गङ्गेयमतिवत्सला SkandP. i(3). 18. 17; NavSāC. 5. 28; शोचामि … किं बन्धूनतिवत्सलान CaṇḍaKau. 4. 2; एकापत्यतया चातिवत्सलः स न तां वणिक्। भर्तृयुक्तां सुतां गेहात्तत्याज KathāSaSāg. xii. 28. 8; iii. 4. 260; अतिवत्सला … । अजनि विनीता गृहिणी … सपत्नीस्तनोऽङ्केदे ĀryāSaS'a. 2; PāṇḍaC. 14. 314; कुर्याद्धात्रीन्…सवत्सामतिवत्सलान् BhāvPra.(Bhā.) 4. 25; आर्या चेदतिवत्सला मयि मुहुर्गोष्ठेश्वरी किं ततः … । दीव्यत्यत्र न चेदुमाव्रतफलं पिच्छावतंसी पतिः UjjvaNiMa. 51. 9; ii very kind नाथ कस्योपरि द्रुतम्। चोदयामि रथं पश्य मृत्युरथातिवत्सलः PadmP.(Ra.) 24. 104; अपारे व्यसनाम्भोधौ पतन्तं पाति देहिनम्। … धर्मोऽतिवत्सलः Yogśā. 4. 95; TriṣaS'aPuC. iv. 2. 31.

**अतिवत्सलता** (ativatsala-tā) *f.* great affection, great love for children भरतमवलोकयन्नतिवत्सलतया … देवो दशकण्ठरिपुरुद्कण्ठत RāmāCaṁ. 6. 102(5); अन्नैकादशधा विभक्तमपि ते रूपं भवानीं च यो द्रष्टुं तुल्यमिवातिवत्सलतया धत्ते दृशो द्वादश S'rīKaC. 16. 36; सुग्रीवः-हन्त लज्जयेव मीलयति मामतिवत्सलतया देवपादानामास्थानप्रवृत्ता मुहुरत्युक्तिः AdbhutDa. 3. 19(2)

**अतिवत्सलत्व** (ativatsala-tva) *n.* great affection अस्त्येव भक्तेष्वतिवत्सलत्वाद्बलाद्गुणारोपणकौतुकत्वम् NavaSāC. 9. 31; ताताग्रजो मामतिवत्सलत्वाच्चिरं चिरंजीवतयाजुहाव Vidvanmo. 1. 20.

**अतिवद्** (ati-vad-) I. P. A to speak exaggeratedly or hyperbolically यावद्दाताभिमनस्येत तन्नातिवदेत् AV. xi. 3. 25; एष तु वा अतिवदति यः सत्येनातिवदति। सोऽहं भगवः सत्येनातिवदानीति ChāndoU. vii. 16. 1; सत्यं वदति सत्यमतिवदतीत्यर्थः S'rutaPra. ii. 16. 25 (*on* i. 3. 7); TattvPrakā. 45B. 3 (*on* i. 3. 8); सत्येन परब्रह्मणोपास्येनोपलक्षितो योऽतिवदतीत्यर्थः VedāntKau. 82. 23 (*on* i. 3. 8); B to speak better, to excel or surpass in speech or sound तस्मात्क्षत्रं विशमतिवदति KāṭhS. 21. 10; तस्माद्राष्ट्रं विशमतिवदति TaiS. V. iv. 7. 7; अनुष्टुप्सु षोडशिसाम कुर्वीत यः कामयेत न मान्या वागतिवदेदिति JaimiBr. 1. 205; कुतो हि वाग्वाचमतिवदिष्यति तस्मादेतस्याज्ञो यज्ञायज्ञीयमेवाग्निष्टोमसाम कार्यमिति JaimiBr. 2. 413; तस्माद्दुन्दुभिः सर्वा वाचोऽति वदति TaiBr. I. iii. 6. 2; वज्रो वै षोडशी वागनुष्टुप् वज्रेणैवास्मै वाचं स्तृणोति नैनं वागतिवदति PañcBr. xii. 13. 16; याज्ञवल्क्येति होवाच यदिदं कुरुपञ्चालानां ब्राह्मणानत्यवादीः BṛĀraU. iii. 9. 19; C to speak too much or excessively विद्वानात्मनोऽन्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति। अतो नातिवदति MuṇḍUBh. 346. 20 (*on* iii. 1. 4); न हि वेदः … अतिवदति च प्रतिपिपादयिषितमर्थम् S'rutaPra. ii. 335. 20 (*on* ii. 2. 42); D to speak against, to revile or blame तद्धु विद्वांसमाहुरति नोऽवादीरिति ṢaḍBr. ii. 3. 10; गुरूनतिवदेन्मत्तः परदारान्प्रधर्षयेत् SūktiRa. 55. 4; [to ask for too much, MW]

**अतिवदत्** (ati-vadat) *adj.* i speaking better, being superior in discussion ते होचुर्जनको वा अयं वैदेहोऽग्निहोत्रेऽनुशिष्टः स नोऽतिवदन्निव

मन्यते JaimiBr. 1. 22; ii speaking too much उच्च वै पापीयांसं सभायामतिवदन्तं सेधन्ति नि च सेधन्ति JaimiBr. 3. 289; अथाजगाम ... कपालहस्तो दीर्घास्यो भैरवोऽतिवदन्मुहुः MārkP. 8. 83.

**अतिवदन** (ati-vadana) *n.* exaggerated statement परिचारकमुखा ये नायकेन प्रणिहितास्तैर्थ्यस्यातिवदनम् JayaMa. 326. 12 (*on* 6. 3); भ्रमाभावश्चातिवदनातिरिक्तविषय इति सर्वं सङ्गतम् S'rutaPra. ii. 336. 8 (*on* ii. 2. 42).

**अतिवदनसुभग** (ati-vadanasubhaga) *adj.* excellent beautifier of the face लेपोऽतिवदनसुभगोऽप्यङ्गकलङ्कं च नाशयति RatiRaha. 15. 96.

**अतिवदान्यता** (ativadānya-tā) *f.* excessive or great generosity साञ्जलिबन्धं किं ब्रवीषि, अलं तावदतिवदान्यतया Mukundā. 96(5)

**अतिवधु** (ati-vadhu) *adj.* beyond or without a bride अतिवधु कुलम् JaineVyā. 4. 9 (*on* i. 1. 7); ऊकारान्तपक्षे अतिक्रान्ता वधूर्येन मुनिमण्डलेन तदतिवधु KāvyKaVṛ. 82. 20 (3. 4)

**अतिवनुष्य** (ati-vanuṣya-) [denom.] to seek to outbid or surpass इन्द्रावरुणा ... दीर्घप्रयज्युमति यो वनुष्यति वयं जयेम पृतनासु दूढ्यः RV. vii. 82. 1.

**अतिवन्द्य** (ati-vandya) *adj.* most respectable यस्यातिवन्द्यवन्द्यस्य व्यापिनः परमात्मनः। एकांशेन जगत्सर्वं कस्तमेवं प्रवक्ष्यति MatsyaP. 245. 39; रागीति प्रतिपत्तिभूविट इति प्राप्तोऽतिवन्द्यं पदम् ... प्रमाणपुरुषो वेश्याभिरभ्यर्च्यते Mugdhopa. 31; यावन्नैति परोपभोगसहतामेषा (वृद्धिः) ततस्तां तथा ज्ञात्वा ते हृदयं द्विधा दलति यत्तेनातिवन्द्यो भवान् S'ārṅgPa. 1028.

**अतिवमन** (ati-vamana) *n.* excessive vomiting कर्णे स्वनोऽतिवमनं क्षमशूलमोहः श्वासेन गुल्ममिति (ग्रहण्याः) लक्षणमेव विद्धि HārīS. iii. 3. 86.

**अतिवयम्** (ati-vayam) *adj.* cf. अस्मद् who surpass me, two or all of us, KāśiVṛ. *on* P. vii. 2. 93; प्रमाणमत्रातिवयं तथातियूयं रथाङ्गाविति कूजतो नु DvyāśraKā. 2. 19.

[1]**अतिवयस्** (ati-vayas) *adj.* i very aged or old राजा तु ... अतिवयसम् ... अमात्यम् ... अब्रवीत् Kād. 12. 22; तस्यातिवयसश्चासीत्नाम्ना गुणवती सुता SkandP. ii(4). 13. 6; ता अपि मामतिवयसं तरलदृशः शरलमीक्षन्ते SubhāRaK. 43. 5; Subhāṣi. 3395; KandaCū. vii. 2. 4; Nārāy. x. 80. 4; Surath. 12. 26; ii decrepit, without vigour तृतीये तु पादेऽतिक्रान्ते गतरसान्यतिवयांसि न्यूनसामर्थ्यानि भवन्ति (छन्दांसि) ManuBh. i. 95. 23 (*on* 2. 38); *n.* old age कन्या कापि भवानिवातिवयसि प्राप्ता हरेः सेवया। पित्रा ते वृषभानुना GopāKeCan. 67. 31.

[2]**अतिवयस्** (ati-vayas) *adj.* sheltering many birds स्वापत्यानिव पवनेन वेपमानान् पार्श्वस्थानतिवयसस्तरून् दधानाम्। तां दृष्ट्वा जलजमुखीं समुद्रजायां स्वामपि विमना मनाक् स दध्यौ Surath. 12. 26.

**अतिवयस्त्व** (ativayas-tva) *n.* old age, decrepitude नार्या व्यावृत्तिकारणं वक्ष्ये। मृशमनुरागः पत्यावपत्यवात्सल्यमतिवयस्त्वं च RatiRaha. 13. 18.

**अतिवर** (ati-vara) *m.* [AltGr. II. 1. 258] 1 surplus gift, no gift गौर्वै वरोऽतिवरोऽन्यो धेनुर्वैरोऽतिवरोऽन्यः ĀpaSS. v. 11. 4; 2 groom beyond the age of marriage क ते रूपं विशालाक्षि कासौ वृद्धो वनेचरः। कथं देया मया पुत्री तस्मै चातिवराय च DevīBhāP. vii. 3. 41; *adj.* [*f.* -ā] most excellent, very superior अतिवरा विवराविपुता जह्नौ सफलिनीरलिनी रसताहृता Kapphiṇā. 8. 58; ततोऽग्रे दर्शयेतां तौ कौबेरं लोकमुत्तमम्। ... शक्रलोकादतिवरम् GaṇeP. ii. 52. 19; Vaija. 56. 25.

**अतिवरण** (ati-varaṇa) *n.* choice of an outsider priest एतेषामेकस्मिन्नतिवरणं वावरणं वा भवतीति BaudhSS. iii. 196. 2.

**अतिवरा** (ati-varā) *f.* the plant *Hibiscus mutabilis* पद्मावतीत्यतिवरा लक्ष्मी श्रेष्ठा सुपुष्करा AbhidhāMañ. 41. 6.

**अतिवरीफला** (ativarī-phalā) *f.* Arabian date-palm खर्जूरिका। शिलेमानी परालोके मृदुलातिवरीफला MadaPāNi. 39. 19.

**अतिवरीयस्** (ati-varīyas) *adj.* (comp.) [*f.* -ī] more excellent, superior जम्बूनाम्ने प्रदत्ताः सो वरायातिवरीयसे PariPar. 2. 91; (राधिका) महाभावस्वरूपेयं गुणैरतिवरीयसी UjjvaNīMa. 73. 9.

**अतिवरेण्य** (ati-vareṇya) *adj.* most excellent मलयाचलवायवः ... | रतिवरेऽतिवरेण्यपुरस्सरे प्रतिदिशन्ति दिशं प्रशमाम्बुधेः VasaVīKā. 6. 65.

**अतिवर्चस्** (ati-varcas) *m.* name of an attendant of Kārttikeya सुवर्चसं महात्मानं तथैवाप्यतिवर्चसम्। हिमवान् प्रददौ राजन् हुताशनसुताय वै MahāBhā. ix. 44. 42; SkandP. i(2). 30. 54; सुवर्चसं च वरुणः प्रददौ चातिवर्चसम् VāmaP. 57. 68; (ततः स्कन्दगणान् सर्वान् प्राग्वदावाहयेद् गुरुः) सुवर्चाश्चातिवर्चाश्च काञ्चनातिघनावपि। पश्चिमे IśānSiPa. ii. 53. 84.

**अतिवर्ण** (ati-varṇa) *adj.* having a deep complexion अतिवर्णोऽतिमेधावी स्वप्ने पावकदृक् तथा। ... पैत्तिकप्रकृतिर्नरः BhelaS. 72. 23 (3. 4); कुलतोऽपवादमाह यमः – अत्युच्चमतिह्रस्वं च अतिवर्णं च वर्जयेत् SmṛtiCan. i. 204. 1; अतिशयितो वर्णो यस्मिन् तदतिवर्णम् SmṛtiCan. i. 204. 8; अतिवर्णमतिक्रुष्णमतिगौरं वा Aparā. 85. 15 (*on* i. 54); VīraMi. (Saṁskāra.) 589. 4.

**अतिवर्णाश्रमिन्** (ati-varṇāśramin) *adj.* who is beyond the scope of *varṇas* (classes) and *āśramas* (stages of life) परतत्त्वं विजानाति सोऽतिवर्णाश्रमी भवेत् NāraPaU. 6. 10; अतिवर्णाश्रमी नित्यं शिवोऽहंभावनात् परात्। शिवयोगी च नियतमीशानेनापि धारयेत् S'ivaP. i. 24. 37 (31A. 8); स्मृतिषु जीवन्मुक्तः स्थितप्रज्ञभगवद्भक्तगुणातीतब्राह्मणातिवर्णाश्रम्यादिनामभिस्तत्र व्यवह्रियते JīvanVi. 15. 14; 31. 13; 34. 10.

**अतिवर्तन** (ati-vartana) *n.* A i setting aside, avoidance न दैवस्यातिभारोऽस्ति न दैवस्यातिवर्तनम् MahāBhā. iv. 19. 6; A ii avoidance (of punishment), exemption यानस्य चैव यातुश्च यानस्वामिन एव च। दशातिवर्तनान्याहुः ManuSm. 8. 290; वक्ष्यमाणान्यतिवर्तनानि दण्डातिवृत्तेर्दण्डाभिभावस्थानानि ManvaVi. 1048. 17 (*on* 8. 290); दण्डमतिक्रम्य वर्तन्ते इत्यतिवर्तनानि अदण्डनिमित्तानि DaṇḍaVi. 224. 9; B immoderate activity तथातिरोषभाष्याध्वहास्यभारातिवर्तनैः। वायुः कोष्ठगतो धावन् ... हिक्कां कुर्यात् CaraS. vi. 17. 39 (1941 Ed.); लिङ्गं पित्तावृतेऽपाने रजसश्चातिवर्तनम् CaraS. vi. 28. 230 (1941 Ed.)

**अतिवर्तमान** (ati-vartamāna) *adj.* A flowing excessively रक्तेऽतिवर्तमाने दाहे क्लेदेऽवगाहयेच्चापि। मधुकामृणालपद्मचन्दनकुशकाशनिष्क्वाथे CaraS. vi. 14. 215; जयति। रक्तमतिवर्तमानं वातं च पलाण्डुरुपयुक्तः AṣṭāSaṁ. ii. 63. 25 (4. 10); B going over (from one stage to another) सा तण्डुलेषु मुकुलावस्थामतिवर्तमानेषु ... स्थाल्यान्नमण्डमगालयत DaśKuC. 111. 18; श्लेष्मा प्रवृद्धः स्थानात् स्थानमतिवर्तमानः। ... शुद्धपाकलमभिनिर्वर्तयति Hastyāyur. 57. 15 (1. 9)

**अतिवर्तयितुम्** (ati-vartayitum) *inf.* to set aside, to deny भेदेऽपि काश्चिदेव व्यक्तयोऽस्य जननाय समर्थाः न सर्वा इत्यत्र कार्यकारणभावस्य प्रत्यक्षानुपलम्भाभ्यां दृष्टस्यातिवर्तयितुमशक्यत्वात् TarkBhā.(Mo.) 30. 12.

**अतिवर्तव्य** (ati-vartavya) *adj.* not to be offended (by refusal) ऋतावृतौ राजपुत्रि स्त्रिया भर्ता यतव्रते। नातिवर्तव्य इत्येवं धर्मं धर्मविदो विदुः MahāBhā. i. 113. 25.

**अतिवर्तित** (ati-vartita) *adj.* 1 violated, offended, slighted मन्देन मया निर्निमित्तम् ... सुहृदश्चातिवर्तिता: DaśKuC. 114. 21; धर्मनाशे विनष्टः स्याद्वर्णाचारोऽतिवर्तितः DevīBhāP. i. 18. 47; कृतकक्तकैर्मायाशाठ्यैस्त्वयाप्यतिवर्तितम्। ... भवतु विदितं नेष्टा तेऽद्य SūktiMu. 57. 24; S'ārṅgaP. 3560; B passed through, changed अतिवर्तितवद्भवर्णैर्द्वैरिव धवलभावपलिताढ्यैः। कृत्वा विष्णुपदाश्रयमम्बुधरैः स्थीयते यत्र UdaySuKa. 26. 28.

**अतिवर्तितुम्** (ati-vartitum) *inf.* A to overcome, to subdue, to get rid of तव पुत्रस्य पौरुषम्। यदेकं सहिताः पार्था न शेकुरतिवर्तितुम् MahāBhā. ix. 18. 54; xii. 22. 15; मया त्वया च पूर्वैश्च न स (कालः) शक्योऽतिवर्तितुम् MahāBhā. xii. 217. 56; v. 193. 52; तस्य बाणचयं प्राप्य न शेकुरतिवर्तितुम्। वानरेन्द्राः Rāmā. vi. 63. 28; यः प्रभुः सर्वभूतानां सुखदुःखोपपत्तये। तं नातिवर्तितुं दैत्याः पौरुषैरीश्वरः पुमान् BhāgP. viii. 21. 20; भवितव्यं हि धात्रापि न शक्यमतिवर्तितुम् KathāSaSāg. vii. 3. 236; xii. 34. 296; ते युक्त्या मतिमतिन तत्स्वभावमतिवर्तितुमर्हति NyāyRa. 141. 21 (*on* 4. 28); अतो योगिप्रत्यक्षमपि स वराकः समरे भुजोष्मणा S'ivLī. 15. 76; दैवं पुरुषकारेण कोऽतिवर्तितुमर्हति। विधातृविहितं मार्गं न कश्चिदतिवर्तते Subhāṣi. 3112; न हि शब्दस्पृष्टं केनाप्युपायेन प्रमेयतामतिवर्तितुं शक्यम् Bhask. i. 54. 18 (*on* i. 1. 1); B to transgress, to violate, to disregard भ्रातरं धार्मिकं ज्येष्ठं नातिक्रमितुं (v. l. कोऽतिवर्तितुम्)मर्हति MahaBhā. ii. 61. 8; सोऽहं न शक्ष्यामि पितुर्नियोगमतिवर्तितुम् Rāmā. ii. 18. 35; श्रौतमागममिवातिवर्तितुं कः क्षमेत नयशास्त्रसंग्रहम् HarVi. 14. 56; न्यायैकनिष्ठे राजनि ... सर्वाः प्रजास्तन्मुद्रां नातिवर्तितुमीशते SyādvāMañ. 5(11); निदेशं तस्य राजानो न शेकुरतिवर्तितुम् Yādavā. 1. 18; BṛBrahmS. ii. 1. 42; C to excel, to surpass मनुष्यसंख्यामतिवर्तितुं वा। निरुत्सुकानामभियोगभाजां समुत्सुकेवाङ्कमुपैति सिद्धिः Kirātā. 3. 40 = KāvyaPra. 368. 5; VyaktiVi. 49. 23; SāhiDa. 409. 9; D to cross over शतपदी सति पादशते क्षमा भुवि न गोष्पदमप्यतिवर्तितुम् Bhallaś. 72; S'ārṅgaP. 1215; Subhāṣi. 969; E to delay, to postpone यस्यां सन्ध्यागतः सोमो मृणालमिव दृश्यते। अपराह्णे क्षयस्तस्यां पिण्डानां करणं ध्रुवम्। इति निर्देशः पिण्डपितृयज्ञे नातिवर्तितुमीहते CaturCin. iii(1). 180. 4.

**अतिवर्तिन्** (ativart-in) *adj.* [*f.* -ī] A going over, crossing तेषामक्षौहिणीशतं समवेक्ष्य वनौकसाम्। लङ्कामुपनिविष्टानां सागरं चातिवर्तताम् (v. l. चातिवर्तिनाम् Gorr. vi. 16. 100) Rāmā. vi. 31. 83; मनोजवा मेघपथेऽतिवर्तिनः। ... वाजिनः RāghPān.(Dha.) 1. 16; B transgressing, violating, behaving improperly सतां धर्मातिवर्तिना। त्यक्तधर्माङ्कुशेनाहं निहतो रामहस्तिना Rāmā.

iv. 17. 38; ध्रुवमहं विनिहत्य मदोद्धतं परनृपाय ददाम्यतिवर्तिनम् VarāṅgaC. 20. 18; न वेद धर्मं किल पद्मयोनिर्न ब्रह्मपुत्राः …। … ये नो निषेधन्त्यतिवर्तिनं हरम् BhāgP. vi 17. 12; राजशासनानुवर्तिनां तदतिवर्तिनां च … न … °सुखदुःखयोर्भोक्तृत्वप्रसङ्गः S'riBh. 417. 20 (*on* ii. 1. 4); **C** neglecting, ignoring अहम् … प्रव्यथितप्रियतमाप्रणामाञ्जलिशपथशतातिवर्ती … असिद्वितीयः … उदचलन् DaśKuC. 57. 8; **D** excelling, surpassing, transcending, going beyond (ददृशुः पुरुषन्) भुवनातिवर्तिना । … अश्रुवानमिव विश्वमोजसा Kirātā. 12. 21; संबन्धो नैव कर्मभिः । भवेत् कालत्रये शम्भोरविद्यामतिवर्तिनः LiṅgaP. ii. 9. 39; चलाः सहन्ते किमिवातिवर्तिनः RāghPāṇ.(Dha.) 6. 14; Yādavā. 17. 29; पदार्थेषु लोकसीमातिवर्तिषु SāhiDa. 166. 2; संतानकाः सप्त तान् । आवृत्तान् गणनातिवर्ति कृतवान् … श्रीसाल्ववतिम्मप्रभुः EI. vi. 119. 53; vi. 235. 37; **E** passing beyond निरीक्ष्य माध गच्छ त्वमृतुकालातिवर्तिनीम् Rāmā. vii. 48. 19; **F** having the sixth stage of rut सोऽतिवर्तीव गन्धेभो नियमात् प्रविशेद् वनम् MahāP. 15. 52; [guilty of a pardonable offence, MW]

**अतिवर्तिनी** (ativart-inī) *f.* the sixth stage of the rutting elephant पट्टवर्धन आर्द्रकपोलिकायाम् (अवस्थायाम्) … अतिवर्तिन्यां चर्चरीवतंसः … इत्यनीकस्थेन विनिवेदितद्विरदमदावस्थः YaśasCam. i. 495. 4; (गजः) एवं निरङ्कुशो यस्यामवस्था सातिवर्तिनी Mānaso. iv. 3. 501; iv. 3. 628.

**अतिवर्तुल** (ati-vartula) *adj.* very round ततोऽजाविवराहहरिणगोमहिषान्यतमजम् … नातिवर्तुलं मृदु दृढम् … विवृताननं विवेश्य वस्तिम् AṣṭāSaṁ. i. 147. 7 (1. 28); *m.* a kind of grain or herb कलायस्त्रिपुटस्त्वस्त्रः सतीलश्चातिवर्तुलः ParyāRaMā. 686.

**अतिवर्त्य** (ativart-ya) *ger.* **i** setting aside, neglecting, ignoring स शोचत्यापदं प्राप्य यथाहमतिवर्त्य तौ MahāBhā. x. 6. 19; तदनुसारिणो वयं न तमतिवर्त्य स्वेच्छया धर्मानुभवान् व्यवस्थापयितुमीहमहे TattvVai. 131. 27 (*on* 3. 13); नियतकारणान्वयव्यतिरेकानुविधायिभावानि हि कार्याणि न स्वकारणमतिवर्त्य कारणान्तराद्भवितुमीशते TattvVai. 200. 10 (*on* 4. 16); **ii** having gone beyond, having crossed तद्विश्वनाभिं त्वतिवर्त्य विष्णोरणीयसा विरजेनात्मनैकः BhāgP. ii. 2. 25; पश्यैष बाल्यमतिवर्त्य विवर्तमानः शृङ्गारसीमनि तरङ्गितमातनोति AlaṅkāS'e. 21. 2(27); **iii** having overcome तावतिवर्त्य परमार्थे तस्मिन्नसौ स्थिरीभवति GoviBh. 4. 12 (*on* i. 1. 1)

**अतिवर्धत्** (ati-vardhat) *adj.* growing excessively अतिवर्धति चाधर्मे …वेदाः प्रत्यानीता हि तेन वै BrahmP. 213. 108.

**अतिवर्धन** (ati-vardhana) *adj.* promoting growth कौमारभृत्यमतिवर्धनमुक्तमेतत् KāśyaS. 92B. 21; *n.* great augmentation or increase व्यजनानिलैरतिवर्धनं प्रभञ्जनस्य यदस्मद्विधैः परिबोधनमार्यस्य Kād. 289. 15.

**अतिवर्धयत्** (ati-vardhayat) *adj.* causing to prosper greatly नतानतिवर्धयन् सः … सुखमगमयत् कालम् RāghPāṇ.(Dha.) 3. 43.

**अतिवर्धित** (ati-vardhita) *adj.* greatly increased कृतः । श्रीमालिर्विरथो रोषात् प्रहारेणातिवर्धितान्(? त्) PadmP.(Ra.) 12. 236.

**अतिवर्धमान** (ati-vardhamāna) *adj.* greatly increasing शमधनाधिपो विनेयैश्चिरविरहादतिवर्धमानहार्दैः … वृतः … जिगमिषुराजनि मण्डनस्य गेहम् S'aṅkaDigVi.(Mā.) 10. 61; कालिन्दीमतिवर्धमानसलिलामुल्लङ्घ्य Vidvanmo. 8. 13.

**अतिवर्ष** (ati-varṣa) *n.* excessive rain अवर्षं चातिवर्षं च व्याधिपावकमूर्च्छनम् । सर्वमेतत्तदा नासीत् MahāBhā. ii. 30. 5; सततं त्वन्तःकलहं करोति सौभिक्षमतिवर्षम् VasiS. 9. 60; अमानुष्योऽग्निवर्षमतिवर्षम् … श्वापदः NītiVā. 11. 3; अतिशीतं चातिवर्षम् … एषां रूपेण यो देवस्तस्याहं शरणं गतः PadmP. ii. 18. 33; पिहितौ तौ दृशौ (पुटौ) रुजि । सुसिमूर्छातिवर्षोष्णधूमवाताञ्जनार्तिषु SaṁgiRa. iv. 154. 7 (7. 444)

**अतिवर्षण** (ati-varṣaṇa) *n.* excessive or heavy rain अतिवर्षण° … °हवनानि BṛhaspaSm. 254. 161; दुर्भिक्षमतिवर्षणात् PārśvC. 1. 103; KathāK. 117. 22; अवर्षणं चाप्यतिवर्षणं च देवो न जानाति कुतो मनुष्यः VetāPañ.(S'i.) 17. 35; BhojPra. 28. 3.

**अतिवर्षीयस्** (ati-varṣīyas) *adj.* (comp.) very old प्रकर्षनामातिवर्षीयान् महाप्रतीहारः सह स्वपरिवारेण भूत्वा पुरस्तादकृतविस्तरस्तामवादीत् TilaMañ. 417. 1.

**अतिवर्ष्मन्** (ati-varṣman) *adj.* having a huge body हरवृष इवातिवर्ष्मा … तुरङ्गरत्नं भद्रवाहनो नाम AvantiKa. 88. 5.

**अतिवल्** (ati-val-) I. P. (*caus.*) to turn over अथैतन्मेक्षणमधोऽधः स्रुचावाग्नीध्रायोत्प्रयच्छन्नाहातिवालयतादेव मानुप्रहार्षीरिति BaudhSS. i. 168. 12.

**अतिवलन** (ati-valana) *n.* excessive bending or twisting अलमतिवलनेन देहयष्टेः सुतनु तनुस्तव भङ्गमेति मध्यः HarVi. 28. 5.

**अतिवला** (ati-valā) *f.* cf. **अतिबला,** MadaPāNi. 11. 179; AśvaVai. 8. 12.

**अतिवलाकपल्लिका** (ativalāka-pallikā) *f.* name of a village कार्त्तिकेयपुरे अतिवलाकपल्लिका विशाखिलपल्लिका अरिस्थाश्रमः EI. xiii. 116. 23.

**अतिवल्ग्** (ati-valg-) I. P. to be very active किसार एवमतिवल्गसि इंसिपासि YogVā. iii. 79. 32 (comm. अतिशयेन व्यवहरसि); (*caus.*) to stroke or shake violently त्रिः स्रुचाग्निमुदञ्चमतिवल्गयति ĀpaSS. vi. 11. 3.

**अतिवल्गत्** (ati-valgat) *adj.* jumping violently चिरस्थावभिवल्गन्तौ (v. l. अतिवल्गन्तौ) समेयातां महारथौ MahāBhā. vi. 70. 26; चाणूरे चातिवल्गति … । प्रविष्टौ सुमहारङ्गं बलदेवजनार्दनौ BrahmP. 193. 29.

**अतिवल्गन** (ati-valgana) *n.* excessive boasting अतिवल्गनं ममैतन्मूढत्वं यद्यपि प्रभोः पुरतः ĀryāS'. 31.

**अतिवल्गुवचस्** (ativalgu-vacas) *adj.* making very charming sounds तांश्चातिवल्गुवचसो रथाङ्गाह्वयना द्विजाः । अधिरोहन्ति Rāmā. ii. 89. 11.

**अतिवल्गुवल्गत्** (ativalgu-valgat) *adj.* galloping very beautifully अतिवल्गुवल्गद्भिः स्वभावचञ्चलैः प्रधानवाजिभिरुह्यमाननायकम् (खेचरनरेन्द्रवृन्दमद्राक्षन्) TilaMañ. 153. 2.

**अतिवल्गुसद्गुण** (ativalgu-sadguṇa) *m.* very beautiful quality or virtue तरुणि … तव । अतिवल्गुसद्गुणजुषो वपुषः कुशलं किमङ्ग जनुषो धनुषः Rāgh. 8. 11.

**अतिवल्लभ** (ati-vallabha) *adj.* [*f.* –ā] **A i** very dear or favourite इदं पवित्रम् … पितॄणामतिवल्लभं च। पापहरं च पुंसाम् MatsyaP. 53. 74; धन्योऽयं दयिताभीष्टो ह्येताश्चास्यातिवल्लभाः MārkP. 65. 11; यमस्येवातिवल्लभानि दण्डग्रहणानि HarṣaC. 121. 5; संगीतयोगिनी प्रोक्ता श्रीदेव्या अतिवल्लभा BrahmāṇḍP. iii. 19. 62; रत्नवती … तस्यैव बलभद्रस्यातिवल्लभा जाता DaśKuC. 115. 15; ततो नाम्ना महोत्साहः सामन्तोऽस्यातिवल्लभः PadmP.(Ra.) 17. 40; गेयानि शृण्वन्नतिवल्लभानि VarāṅgaC. 8. 45; इत्थं कविः पठन्काव्यं वाग्देव्या अतिवल्लभः KāvyMī. 33. 22; यमो यमभटानाह …भूषणैश्चातिवल्लभैः । अर्चयन्ति(ये)न ते ग्राह्या नराः कृष्णालये गताः AgniP. 38. 41; यस्मादिष्टं हि भूतानां स्मशानमतिवल्लभम् SkandP. v(1). 1. 32; भगवन्काशिराजस्य सुताहमतिवल्लभा SkandP. v(2). 61. 25; प्राप्तोऽयं माधवो मासो माधवस्यातिवल्लभः PadmP. iv. 85. 41; तत्रातीव रहो रम्यं वदिष्येऽग्रेऽतिवल्लभम् ĀdiP. 10. 37; चत्वारोऽमरतुल्यास्ते तेषां रामोऽतिवल्लभः AdhyāRā. i. 4. 10; अथ ब्रूमो वराटाख्यम् … नागानां चातिवल्लभम् SamarāSū. ii. 83. 13; तस्य चैकैव मद्रातुर्भार्या सा चातिवल्लभा KathāSaSāg. vii. 2. 113; द्वितीया चन्द्रवत्येषा त्वयि रक्तातिवल्लभा KathāSaSāg. vii. 8. 207; (न) केवलं तस्या भवानतिवल्लभो यावद्भवतोऽपि सा सुतरां रोचते Kāvyānu.(He.) 40. 11; अभूच्चातिविनीतत्वादावलिस्तेऽतिवल्लभः TriṣaS'aPuC. ii. 5. 22; अतिवल्लभापि दुहिता प्रहिता जिनदाससार्थवाहेन PrabhāC. 43. 8; वृद्धस्य तरुणीवाभूयात्रा तस्यातिवल्लभा RājTa.(Jo.) 421; नित्यं सहचारिणी अतिवल्लभापि सा त्वत्प्रसादेन अस्ने अस्माकमेव MīmāKau. iii(1). 99. 5; **A ii** much more dear, dearer (with Abl. or Gen.) भव्यजीवा हि तस्यासन् प्राणेभ्योऽप्यतिवल्लभाः PadmP.(Ra.) 23. 35; न मे ब्रह्मकुलात्प्राणाः…दाराश्चातिवल्लभाः BhāgP. ix. 9. 43; त्वम् …कनिष्ठो भूर्मम भ्राता प्राणेभ्योऽप्यतिवल्लभः PariPar. 1. 431 = PāṇḍaC. 16. 48; दुहिताहं तयोर्जाता प्राणेभ्योऽप्यतिवल्लभा PārśvC. 6. 1125; सा महिषी राज्ञो राज्ञीनामतिवल्लभा NaraP. 31. 23; **B** the plant Pāṭalā अतिवल्लभः पाटलायाम् ApūNā. 33. 3; **C** a kind of jasmine, Kunda कुन्दस्तु मकरन्दस्य सदापुष्पोऽतिवल्लभः ṢaḍrasaNi. 31. 18.

**अतिवल्लभतर** (ativallabha-tara) *adj.* much more dear, much dearer मध्येविमानमभिमानिनि पुष्पशय्या कस्यातिवल्लभतरस्य कृते कृतेयम् RāmC. 36. 55.

**अतिवल्लभता** (ativallabha-tā) *f.* great love, great liking अतिवल्लभतया विषादं कुर्वन् यावद्विलपति PañcT. 4. 47 (221. 5) [KOSEGARTEN's Ed.]

**अतिवल्लभत्व** (ativallabha-tva) *n.* great love, great liking धीरस्यापि धाष्टर्यमारोपयति हृदयलघिमलङ्घितमतिवल्लभत्वम् HarṣaC. 338. 21; इयन् … नियतं कुपितातिवल्लभत्वात्त्वयमुत्प्रेक्ष्य ममापराधम् VeṇīSaṁ. 2. 126; राज्ञोऽतिवल्लभत्वेन साथ पृष्टा पुनः पुनः PārśvC. 7. 43.

**अतिवश्य** (ati-vaśya) *adj.* extremely dependent यः स्वाधुर्योऽवधिमेति स्वदेहनिष्ठं यस्यान्तको भवति मित्रतयातिवश्यः RājTa.(S'rī.) 2. 90.

**अतिवश्यता** (ativaśya-tā) *f.* the state of being completely subjected to तां समालोक्य सौमित्रिः पुस्तनिष्कम्पलोचनः । अनन्यजस्य धीरोऽपि परिप्राप्तोऽतिवश्यताम् PadmP.(Ra.) 93. 17.

**अतिवस्** (ati-vas-) I. P. (*caus.*) to cauce to remain, to detain रूपवतीर्जनपदयोषितः प्रीत्यपदेशेन मासं मासार्धं वातिवासयन्ति KāmSū. 294. 23 (5. 5)

**अतिवसु** (ati-vasu) *n.* huge treasure (स्त्री) पुष्पवती … । अतिवसुधनभाक् स्यान्मानिनी सच्चरित्रा । …प्रोष्ठपद्याम् VasiS. 24. 27.

**अतिवस्तु** (ati-vastu) *n.* multitude of precious objects [व]स्त्र[द्रा]रे-

ऽतिवस्तुमततमिव दिवो द्वारम् EI. i. 150. 20.

**अतिवह्** (ati-vah-) I. U. **1Ai** to carry over, to carry across, to carry beyond स नो वक्षदनिमानः सुवक्षेन्द्रो विश्वान्यति दुर्गहाणि ṚV. vi. 22. 7; अग्निर्वै पयोऽतिवोढा स एनानतिवहति S'atBr. XIII. viii. 4. 6; न वै नोऽयं मृत्युं न पाप्मानमत्यवाक्षीत् JaimiUBr. ii. 1. 5; स वाचं प्रथमामत्यवहत् JaimiUBr. ii. 11. 2; सा वा एषा देवतैतासां देवतानां पाप्मानं मृत्युमपहत्याथैना मृत्युमत्यवहत् BṛĀraU. i. 3. 11; i. 3. 16; BṛĀraUBh. 57. 1 (*on* i. 3. 14); मृत्युमत्यवहत् प्राणः सामान्योक्तेर्विशेषतः BṛĀraUBhVā. i. 3. 230; PrakaVi. 690. 19; विश्वाविश्वान् द्विषोऽज्ञानपापादीन् अतीत्य शक्तो विष्णुः स्वभक्तानतिवहत्येव KarmaNi. 6B. 9; (*caus.*) दुर्गेषु मार्गेषु अतिवाह्यान् अतिवाहयन्ति BrahmSūBh.(S'aṅ.) 826. 18 (*on* iv. 3. 4); प्रदीप्ते वेश्मन्यन्तर्गताम्रणम् ... निःसरणासमर्थं स्वमरणमङ्गीकृत्य प्रविशातिवाहयेत् BālaKrī. ii. 102. 17 (*on* 3. 240); श्रान्तं युद्धेषु निर्भिन्नम् ...। अतिवाहयते भूपमेक एव तुरङ्गमः SūktiRa. 97. 4; लोकाल्लोकान्तरं लिङ्गदेहं अतिवाहयतीति आतिवाहिकम् SāṁkhyaPraBh. 140. 2 (*on* 5. 103); (*pass.*) अग्निस्वामिकं लोकं प्राप्तः अग्निना अतिवाह्यते BrahmSūBh.(S'aṅ.) 828. 11 (*on* iv. 3. 5; तेनार्चिराद्यधिष्ठातृदेवैरतिवाह्यन्ते इति सिद्धम् AṇuBh. 337. 8 (*on* iv. 3. 6); **1Aii** to lead over, to cover, to traverse पृष्ठ्ये रथमतिवहेयुः LāṭyāS'S. iii. 5. 1 (comm. शीघ्रं वहेयुः); (*caus.*) तमध्वशेषम् ... अत्यवाहयन् । सादिनः MahāP. 27. 128; योगी ... तं व्याघ्रम् ... आरुरोह ... सुखं तेन पन्थानमतिवाहयत् RaubiC. 380; **1Aiii** to carry away, to marry यो जपेद् दशशतं दशाक्षरम्। ... नरो वाञ्छितामतिवहेत् स कन्यकाम् PañcaRā.(Nā.) v. 2. 8; **1Aiv** to remove, to exhaust (caus.) प्रवृत्तफलं कर्माशयं भोगेनातिवाहयन्तु VedāntKa. 445. 5 (*on* iii. 3. 32); **1Av** to sustain (*pass.*) राजपुत्रैः समं सख्यं कृच्छ्रादप्यतिवाह्यते KathāSaSāg. vi. 2. 111; **1B** to proceed with, to dispose of (*caus.*) धर्मस्थश्चेत् ... कार्यमदेशेनातिवाहयति छलेनातिहरति ... उत्तममस्मै साहसदण्डं कुर्यात् ArthS'ā. ii. 161. 3 (4. 9); (*pass.*) नयनसलिलैर्यैरेवैको व्रजन्नतिवाह्यते PādaTā. 13. 8; आयुष्मन् किमेवमतिवाह्यतेऽनुरक्तो लोकः KaṁVa. 5. 35 (7); **2** to pass (time), to spend (time) (*caus.*) पुरावृत्तकथाभिश्च शेषाहमतिवाहयेत् VedaVyāSm. 3. 73; नरपतिरतिवाहयांबभूव ... त्रियामाम् RaghuVa. 9. 70; प्रियया सह मध्याह्नमतिवाहयति DhūrtaViSaṁ. 28. 21; तन्मयैव सह ... कालमतिवाहयस्वेति Tantrākhyā. 79. 21; PañcT. 2. 72 (245. 9); तं दिवसम् ... दुःखेनात्यवाहयत् Kād. 118. 16; अन्येद्युरप्यनेनैव क्रमेण नक्तन्दिनमत्यवाहयत् HarṣaC. 32. 8; जानश्रुतिः ... रात्रिशेषमतिवाहयामास ChāndoUBh.(S'aṅ.) 207. 10 (*on* iv. 1. 5); कालं प्रियया ... अत्यवाहयन् BṛKaS'loSaṁ. 18. 93; शर्वरीरत्यवाहयत् MahāP. 34. 188; त्वं पुनः किमाचरन्ती दिवसानतिवाहयसि PraboCan. 4. 4; मध्याह्नसमयमतिवाहयन्तु किंनरमिथुनानि NalaCaṁ. 6. 25 (10); सकललोकलोचनघूर्णनेषु घर्मदिनेषु मदिरासमागमानिव मध्याह्नसमयानतिवाहयामास YaśasCam. i. 538. 6; क भूत्वा ... कालमतिवाहयिष्यामि मन्दभाग्या TilaMañ. 21. 2; कथमपि निशीथमतिवाहयांबभूव Bhām. 268. 4 (*on* i. 3. 34); क्ष्मापतिस्तं क्षपाशेषं कृतकृत्योऽत्यवाहयत् RājTa.(Ka.) 3. 190; तत्तूर्यध्वनिघोषेण ... तां रात्रिमतिवाहयेत् BhaviP. 695B. 18 (iv. 64. 40); कैर्वा विनोदविभ्रमैरतिवाहयामि दिवसान् UdaySuKa. 40. 23; अतश्च दिवैवैकवारमेव भोजनेनैवैकमहोरात्रमतिवाहयेदिति Mitā. 516. 28 (*on* 3. 318); राजा तया सह ...। एकाहमिव वर्षाणां सहस्रं सोऽत्यवाहयत् TriṣaS'aPuC. i. 4. 547; नृपः जाग्रदेव यामिनीं तां कथंचिदत्यवाहयत् BallāC. 31. 2 (4); (*pass.*) कूटपण्यैरसामान्यैस्तारुण्यमतिवाह्यते SamaMā. 4. 67; क्रमात्ताभ्यामदुःखाभ्यामन्योन्यस्नेहवृत्तिभिः । केऽपि कैतववाह्याभिरत्यवाह्यन्त वासराः VikraDeC. 4. 94; तत्र त्रिषष्टिवर्षाणां सत्रयोदशवासरा अत्यवाह्यत भूपेन तेन पृथ्वीं प्रशासता RājTa.(Ka.) i. 330; **3** to overcome, to go beyond [caus.] स्वसंस्कारविपाकं तथाजातीयकमतिवाहयन्ति (देवादयः) YogBh. 24. 2 (*on* 1. 19); (*pass.*) एषा गुणमयी माया दुर्बोधेन दुरत्यया । नित्यं सत्यावबोधेन सुखेनैवातिवाह्यते YogVā. vi(1). 67. 7.

**अतिवह** (ati-vaha) *adj.* excessive oozing अद्यार्द्रसैरतिवहेष्वर्शः – स्विन्नोल्वणशरीरः CaraS. vi 14. 207 (1941 Ed.) = AṣṭāSaṁ. ii. 63. 22 (4. 10)

**अतिवहन** (ati-vahana) *n.* carrying across, leading beyond अतिवहनं हि गन्तॄणां गमयितृत्वम् S'rīBh. 749. 10 (*on* iv. 3. 4); आदिष्टा(? ष्टो) विश्वनेत्रा स्वयमतिवहने देवयानाध्वगानाम् TattvMu. 2. 60; मुच्यमानानामतिवहने परमेश्वरेण नियुक्ता देवताविशेषाः S'ivārkaMaDī. ii. 474. 23 (*on* iv. 3. 4)

**अतिवहिका** (ati-vahikā) *f.* palanquin कामः ... यस्य चेतो नृपतिपरिभवात् पुण्यपण्यं प्रवेश्य प्रायासीद्वालयित्वा शुचिमतिवहिकां देवसूरिः स नन्द्यात् PrabhāC. 180. 24.

**अतिवह्निकर** (ati-vahnikara) *adj.* excessively stimulating the fire of digestion (वारिशोषणः) अतिवह्निकरः श्रीदो बलवर्णाग्निवर्धनः । धन्वन्तरिकृतः सद्यो रसः परमदुर्लभः RaseCin. 9. 308 (249. 18)

**अतिवह्न्यर्क** (ati-vahnyarka) *adj.* (splendour) surpassing both the fire and the sun अतिवह्न्यर्कमसौ दधच्च तेजो द्युसदां शल्यमिवोच्चकैर्बभूव SkandP. iv. 43. 113.

**अतिवा** (ati-vā-) II. P. to blow over न भूमिं वातो अति वाति AV. iv. 5. 2; IV. P. to blow violently, [MW]

**अतिवाक्करण** (ati-vākkaraṇa) *adj.* talking too much, excessively talkative (अभिधर्पयन्ति) अतिवाक्करणं प्रायः शुक्रैकादश्यां सप्तम्यां च यक्षाः CaraS. vi. 9. 21 (1941 Ed.); AṣṭāSaṁ. ii. 205. 3 (6. 7)

**अतिवाक्त्व** (ativāk-tva) *n.* too much prattling उन्निद्रतातृड्भ्रमरोमहर्षा जृम्भातिवाक्त्वं च चलात्सपित्तात् AṣṭāSaṁ. i. 262. 10 (3. 2)

**अतिवाक्पटुता** (ativākpaṭu-tā) *f.* great eloquence नैवातिवाक्पटुतया न च काव्यदर्पात् ... विधास्यते तत् (कल्याणकारकम्) KalyāKā. 1. 12.

**अतिवाक्य** (ati-vākya) *n.* **i** improper (insulting) words अतिवाक्यमथो तितिक्षसे परुषं पापजनैरुदीरितम् GiMs. iii(1). 11. 17; **ii** *adj.* going beyond the testimony or evidence अतिवाक्यक्रियोपेतमतिसत्त्वातिभावकम् ।... नाट्यधर्मी तु सा स्मृता NāṭyaS'ā. 13. 73 (comm. इतिहासादिवाक्यमतिक्रम्य या उचितरञ्जकेतिवृत्तकल्पनात्मिका क्रिया)

**अतिवाग्युता** (ativāg-yutā) *adj.* (*f.*) possessing excessive talk वर्जयेत् ... कन्याम् ... अतिवाग्युताम् BṛParāSm. 6. 28.

**अतिवाङ्मनस्** (ati-vāṅmanas) *adj.* completely beyond words and thought (i. e. undescribable and unimaginable) पुण्यमाश्रममद्राक्षीद्भरद्राजस्य कौरवः ...। अतिवाङ्मनसोदारं परमानन्दकारणम् SkandP. ii(1) 30. 33; अतिवाङ्मनसं भवन्तमेव प्रतिपन्नास्तु वयं प्रशासितारम् S'ivLi. 3. 77; 15. 60.

**अतिवाच्** (ati-vāc) *adj.* excessively talkactive अतिवाक् चैव दूषितः (विप्राः...नाभ्यर्च्याः) BṛParāSm. 7. 13; *f.* excessive prattling स्वप्ननाशोऽतिवाग्जृम्भा वातपित्तज्वराकृतिः CaraS. vi. 3. 86 (1941 Ed.)

**अतिवाचक** (ati-vācaka) *adj.* reciting or reading in excess (पूजार्हः) शतरुद्रीयजापी च साग्निकश्चातिवाचकः PadmP. iv. 100. 43.

**अतिवाचाट** (ati-vācāṭa) *adj.* excessively talkative (प्रहसनम्) कामुकैरतिवाचाटैः पण्डदुष्पडि(ण्डि)तादिभिः ।... विकृतं स्मृतम् SāhiSā. 6. 56.

**अतिवाचाल** (ati-vācāla) *adj.* **i** excessively talkative हहह आः अतिवाचालोऽयं विहङ्गः ĀścaCū. 4. 9 (1); शश्वद्धर्मातिवाचालो याति वै तद्गृहात् सती (लक्ष्मीः) BrahmVaiP. ii. 38. 46; भूपालमतिवाचालमित्यादिपरिदेवितैः । काममुपच्छमानं च जीवितान्ताय कर्मणे (पौरामात्यादयः ... प्रसादयामासुः) PāṇḍaC. 5. 273; **ii** sounding loudly (संध्या) कुपितेव निवर्तते जवादतिवाचालविहङ्गनूपुरम् NavaSāC. 12. 37.

**अतिवाचालता** (ativācāla-tā) *f.* too much verbosity अथ नञा प्रतिषेधः क्रियते, तत्तद्भावभावित्वेन नञ एव तत्सामर्थ्यं, न विधेरिति कृतमतिवाचालतया TātpaṬ.(U.) 187. 16 (*on* 5. 13); कृतमतिवाचालतया चिरमपि निपुणैर्निरूप्यमाणोऽतः । अर्थस्यैव न बुद्धेः सिध्यति नीलादिराकारः NyāyMañ. ii. 114. 7; NyāyMa. 211. 5.

**अतिवाचोयुक्ति** (ati-vācoyukti) *adj.* beyond appropriate expression (i. e. surpassing description) प्रेषित एषः ... द्वारपलाटभर्त्रा हृत्पाश्यतोहर्यधरोऽतिवाचोयुक्तिः ... महेभः DvyāśraKā. 6. 27.

**अतिवाच्य** (ativāc-ya) *ger.* having caused to recite देवतायां देवतायामतिवाच्याद्भिरभ्युक्ष्योदञ्चयुत्खिदेत् BaudhS'S. iii. 83. 3.

**अतिवाञ्छित** (ati-vāñchita) *adj.* greatly desired (तरणिः कुन्तीम्) मुक्त्वा जगाम देवेशो वरं दत्वातिवाञ्छितम् DevīBhāP. ii. 6. 28; यदि नात्रं मनोयोग्यं तदा दास्येऽतिवाञ्छितम् GaṇeP. ii. 105. 15.

**अतिवात्** (ati-vāt) *adj.* blowing severely or forcefully (मुनयोऽभितस्थुः) ऊर्ध्वा(? र्ध्वं)दिवार्के प्रदहत्यभीक्ष्णं पार्श्वे च वायौ परुषेऽतिवाति VarāṅgaC. 30. 36; एवं वायुर्धर्मार्तस्य शान्तो भवति शीतार्तस्य घोरो धूलिशर्कराविमिश्रोऽतिवान् मूढ इति SāṁkhyaKāBh. 23. 11 (*on* 38)

**अतिवात** (ati-vāta) *m.* strong wind, cyclone, storm (अथोपरमम्) अतिवाते S'āṅkhāGS. iv. 7. 28; अतिवाते अभ्रे वर्षति KauṣiGS. iii. 9 24; गीतवादितरुदितातिवातेषु तत्कालम् GobhiGS. iii. 3. 28; तस्मिंश्च समये तत्संभवं कलये कलिनिधनकरं निवेदयितुकामा(प्य ? ह्य)तिवातादयो दोषा दुद्रुवुः AvantiKa. 160. 6; (बुधः) यदार्काद् व्यतिरिच्येत तदातिवाताभ्रप्रायानावृष्ट्यादिभयमाशंसते BhāgP. v. 22. 13 (comm. अतिवातश्च अभ्रप्रायं च तत्समाहारम्); विधुनोत्यतिवातेन दातुरज्ञानतः कृतम् । पापं दातुर्गृहे भानुर्दिवा रात्रौ न संशयः BhaviP. 157A. 25 (i. 103. 41); DevīBhāP. viii. 16. 30; नैर्ऋतेनातिवातेन हा प्रजे क गमिष्यसि RājTa.(S'rī.) 3. 276.

**अतिवातग्रह** (ativāta-graha) *m.* seizure by excessive (bodily humour) wind शेषे च वातप्रकृतावतिवातग्रहान्विते ।... अविश्राम्यमसृग्भवेत् Hastyāyur. 484. 30 (3. 52)

**अतिवातन्धय** (ati-vātandhaya) *adj.* surpassing the snake घटिधम-

मुष्टिंधमनासिकंधमनिस्वपाः । लुभ्यन्ति पितृराज्येऽतिवातंभयखर्धिया: DvyāśraKā. 11.81 (comm. वातन्धयान् सर्पान् मृगान् वा अतिक्रान्ताः)

**अतिवातल** (ati-vātala) *adj.* [*f.* –ā] **i** causing excess of (bodily humour called) wind कलायस्त्वतिवातलः AṣṭāHr. i. 6.17; राजमाषः ··· अतिवातलः AṣṭāSam. i. 30.22 (1.7) = BhojanKu. 11.17; पित्तकृन्नातिवातलम् । कफप्रकोपजननं विचाचणकपूरणम् BhojanKu. 49.13; **ii** extremely affected by (bodily humour called) wind निरन्तरं खरं रूक्षं मन्दश्लेष्मातिवातला (नाडी वहति) NāḍīVi. 79.

**अतिवातानुलोम्य** (ati-vātānulomya) *n.* quite fit or proper disposition of (bodily humour called) wind नातिवातानुलोम्यं च छिद्रान्वस्येह लक्षणम् Hastyāyur. 352.19 (3.1)

**अतिवाताशन** (ati-vātāśana) *n.* eating too much food causing disorder of (bodily humour called) wind अतिवात्य(? ता)शनादिभिः ··· भिनत्ति (कण्ठम्) पवनः परम् BhelaS. 198.26 (6.23)

**अतिवातिका** (ati-vātikā) *adj.* (*f.*) **i** very mad (possessed by Vāta) सा शालिजननीत्येन संभाव्ये कोविदैः कथम् । याहं शस्येषु गण्यापि भद्रिकेव हि वातिका (v. l. भद्रिकेवातिवातिका) SāliC. 6.146; **ii** grown in a windy place, SāliC. 6.146.

**अतिवात्पराग** (ativāt-parāga) *m.* pollen dust which is blown strongly (i. e. scattered) (ग्रीष्मे) असिन्नद्दृश्यन्त न वै(? वै)दगार्गलाक्षाङ्कलक्ष्माण्यतिवात्परागैः DvyāśraKā. 16.84 (comm. अतिवान्तो गाढवात्यावानेन अत्यन्तं परिभ्राम्यन्तो ये परागाः)

**अतिवात्सल्य** (ati-vātsalya) *n.* **i** excessive or great parental affection कथमतिवात्सल्यादतिक्रमोऽपि MahāviC. 1.55(1); तस्मिन्नप्यतिवात्सल्यात्पुत्रास्थां जननी स्थिराम् । ववन्ध DarpaDa. 2.81; बहुपुत्रोऽपि स हि मे पिता पूर्वं वसन्निह । मया विनातिवात्सल्यान्नाहारमकरोत्सदा KathāSaSāg. xii. 19.131; RājTa.(Ka.) 7.1674; TriṣaŚaPuC. i. 1.886; अलमतिवात्सल्यादतिलालनेनेत्यभिधाय, विसृज्य सामाजिकान् NīlaVi. 63.17; **ii** very great kindliness भगवन्नतिवात्सल्यादस्माकं स्निग्धचक्षुपा । ··· भवतोदितम् RāmāMañ. 101.19; सः ··· प्रवार्धितोऽतिवात्सल्यात् तथा तद्गुरुगौरवात् PrabhāC. 29.2; 178.8.

**अतिवाद** (ati-vāda) *m.* A hypermetrical recitation अथो खल्वाहुर्गायत्री वाव प्रातःसवने नातिवाद इति TaiS. VI. iv. 5.2 (गायत्र्या एव अतिवादास्त्रिष्टुवादयः Bhaṭṭabhāskara; अधिकाक्षरयुक्त्या पाठ्यमानत्वमतिवादः Sāy.); B name of a *ṛk* (ṚV. Khila v. 19.1 = AV. xx. 135.4 = ŚāṅkhāŚS. xii. 33.4 = ĀśvaŚS. ii. 2.3) अतिवादं शंसत्यतिवादेन वै देवा असुरानत्युवाथैनानत्यायन् AitBr. 30.7 (789); अथातिवादं शंसति वीमे देवा अक्रंसतेति GopBr. ii. 6.13; VaitāSū. 32.26; **C i** excessive talk, very opprobrious or vituperative talk, reproof, meaningless talk, sophistry यः परेषां नरो नित्यमतिवादांस्तितिक्षति MahāBhā. i. 74.1; i. 82.10; अतिवादान्मदाचैव मा धर्ममतिशङ्किथाः MahāBhā. iii. 32.6; iii. 199.18; xii. 269.6; अतिमानातिवादौ तमाविशन्ति द्विजाधमम् MahāBhā. xiii. 29.14; अतिच्छेदातिवादाभ्यां स्मयोऽयं समुपागतः MahāBhā. xiii. 121.9; ManuSm. 6.47; ViṣṇuSm. 96.19; MatsyaP. 28.1; 36.10; पण्डितः । वर्जयेदसतीं वाचमतिवादांस्तथैव च MārkP. 58.71; पारुष्यमतिवादः स्यात् AmaK. 338; अतिवादः निरर्थकोऽतिप्रलापः Sanat-Bh. 253.8 (on 2.22); शास्त्रमतिक्रम्य यः कश्चिद्वदति सोऽतिवादः अप्रियाक्रोशः ManuBh. i. 512.24 (on 6.47); अतिवादानतिक्रमवादानतिष्ठभाषणानि तितिक्षेत क्षमेत ManvaVi. 723.5 (on 6.47); विषाणि जङ्गमायानि (v. l. चातिवादाश्च) स्रत्योद्वाराणि देहिनाम् BhaviP. 617B.21 (iv. 4.87); आसुर्याः (लक्षणम्) शृणु साम्प्रतम् । अतिवादोऽभिमानश्च दर्पोऽज्ञानं सकोपता GaṇeP. ii. 147.4; ततो वादातिवादाश्च बभूवुः कुपितस्तदा । भीमसेनः BallāC. 106.1; (भूपः) स्वान् दुर्गुणान् परित्यज्य ह्यतिवादान् तितिक्षते ŚukraNī. 1.83; इति प्रवृत्ते कलहेऽतिवादमेषा सपत्न्या मनुपे न साध्वी SivLī. 22.43; **C ii** exaggerated statement, very boastful or vaunting talk अधर्मस्यातिवादस्य वृद्धातिक्रमणस्य च (द्रक्ष्यसि त्वं फलं तीव्रम्) MahāBhā. v. 160.18; अश्रुतवेदान्तानां कर्मण्यश्रद्धा मा भूदिति देवताधिकरणेऽतिवादाः कृताः VedāSam. 157.10; स्वविवक्षितादधिकार्थान्तराकथनं विवक्षितेऽर्थे प्ररोचनार्थोऽतिवादश्च संभवतः SrutaPra. ii. 335.19 (on ii. 2.42); नातिक्रौर्यं नातिशाठ्यं धारयेच्चातिमार्दवम् । नातिवादं नातिकार्यासक्तिमत्याग्रहं न च ŚukraNī. 3.218; **C iii** excessive praise कुशीलवा वर्षारात्रिमेकस्था वसेयुः । कामदानमतिमात्रमेकस्यातिवादं च वर्जयेयुः ArthŚā. ii. 122.9 (4.1); परिभवोपवातकुत्सातिवादांश्चैषु न प्रयुञ्जीत ArthŚā. ii. 347.4 (7.16); स्पृहामोहातिवादेषु लोकः सक्तो न बुध्यते SkandP. i(2). 21.295; *adj.* eloquent साचीयानतिसाधो स्यादतिवादेऽपि वाच्यवत् ViśvaLoK. 395.62; *cf.* अतीवादा.

**अतिवादतस्** (ativāda-tas) *adv.* through abuse or vituperation (अति सर्वं नाशहेतुः) अपमानोऽतिवादतः ŚukraNī. 3.220.

**अतिवादत्व** (ativāda-tva) *n.* the state of being a statement going beyond (its own purport), exaggeration द्रव्यप्राधान्योक्तेरतिवादत्वम् अनुष्ठानविरोधात् SrutaPra. iA. 26.26 (on i. 1.1)

**अतिवादरूपता** (ativādarūpa-tā) *f.* the state of having the nature of talking hyperbolically or exaggeratedly शैवस्तुतिवचनस्यास्य ··· अतिवादरूपतया स्वीयतन्त्राधिकारिशैवस्तुतिमात्रपरत्वं वा (कल्पनीयम्) PāñcRāRa. 28.5.

**अतिवादलिङ्ग** (ativāda-liṅga) *n.* mark of exaggerated talk इदं च 'तत्रापि' इत्यतिवादलिङ्गात् अपिशब्दात् सूच्यते PāñcRāRa. 41.13.

**अतिवादलिङ्गत्व** (ativādaliṅga-tva) *n.* the state of being the mark of exaggerated talk अपिशब्दस्यातिवादलिङ्गत्वं 'चण्डालमपि वृत्तस्थं तं देवा ब्राह्मणं विदुः' इत्यादिप्रयोगेषु प्रसिद्धम् PāñcRāRa. 41.14.

**अतिवादवचन** (ativāda-vacana) *n.* hyperbolic statement यानि च पाद्मपारमेश्वरादिष्वतिवादवचनानि तानि नूनम् इक्षुभक्षणचिकीर्षुभिः प्रक्षिप्तानि PāñcRāRa. 23.18.

**अतिवादवादिन्** (ativāda-vādin) *adj.* who is used to indulge in excessive disputation न मेऽद्य वक्ष्यस्यतिवादिमानिन् (v. l. मोक्ष्यस्यतिवादवादिन्) MahāBhā. iii. 134.2.

**अतिवादसहन** (ativāda-sahana) *n.* enduring slanderous talk विरोधिनी सा तद्रक्षां कुर्वीत वलिकर्मणा । तथातिवादसहनाच्छास्त्राचारनिषेवणात् MārkP. 51.31.

**अतिवादातिविद्ध** (ativādātividdha) *adj.* deeply hurt by slanderous talk अतिवादापविद्धस्तु (v. l. अतिवादातिविद्धस्तु) वक्ष्यामि बलमात्मनः MahāBhā. v. 74.6.

**अतिवादापविद्ध** (ativādāpaviddha) *adj.* deeply hurt by slanderous talk अतिवादापविद्धस्तु वक्ष्यामि बलमात्मनः MahāBhā. v. 74.6.

**अतिवादित** (ati-vādita) *n.* mode of playing on *paṇava* (just before playing on *murajas*) अतिवादितमनुवाद्यं समवादितमुच्यते पणवत्राद्यम् । तत्रातिवादितं स्यात् मुरजानामग्रतो यत्तु NāṭyaŚā. 34.67.

**अतिवादित्व** (ativādi-tva) *n.* habit of speaking exaggeratedly (of something) प्राणदर्शिनश्चातिवादित्वम् 'अतिवाद्यसीत्यतिवाद्यस्मीति ···' इत्यभ्युनुज्ञाय 'एष तु वा अतिवदति यः सत्येनातिवदति' BrahmSūBh.(Śaṅ.) 153.15 (on i. 3.8); 153.17 (on i. 3.8); अतिवादित्वं प्राणोपासकस्य व्रतमुक्त्वा BrahmSūBh.(Bhā.) 53.15 (on i. 3.8); प्राणभूयस्त्वदर्शिनोऽतिवादित्वेन Bhām. 198.21 (on i. 3.8); अतिवादित्वं हि स्वोपास्यगुरुपार्थाधिक्यवादित्वम् VedāntSā.(Rā.) 87.1 (on i. 3.7); VedāntDī. 45.5 (on i. 3.7); 45.13 (on i. 3.7); प्राणातिवादिनोऽनन्तरं सत्यवचनं विधत्ते, उत सत्यशब्दवाच्यपरोपासकस्यातिवादित्वं वदति SrutaPra. ii. 10.23; (on i. 3.7); TattvPrakā. 175A.5 (on iii. 3.38); VedāntKau. 82.18 (on i. 3.8); 82.25 (on i. 3.8); BrahmSūBh.(Rā.) 282.12 (on i. 3.7); AṇuBh. 251.15 (on iii. 3.44); ŚivārkaMaDī. i. 208.11 (on i. 1.13); i. 411.33 (on i. 3.7); GoviBh. 43.7 (on i. 3.8); 43.13 (on i. 3.8)

**अतिवादित्वनिमित्त** (ativāditva-nimitta) *adj.* whose cause is the state of speaking hyperbolically (of something) तस्मादतिवादित्वनिमित्ततत्साक्षात्काराय तदुपायभूतं सत्योपासनं कुर्यादित्यर्थः SrutaPra. ii. 16.26 (on i. 3.7); पूर्वातिवादित्वनिमित्तात् प्राणादस्यातिवादित्वनिमित्तं सत्यमधिकतयोपदिशति VedāntKau. 82.21 (on i. 3.8)

**अतिवादित्वरूपत्व** (ativāditvarūpa-tva) *n.* the nature of the state of speaking hyperbolically (of one's object of meditation) आशाद्युपासनाफलापेक्षया अधिकफलवदुपासनाविषयत्वस्यैव भूयस्त्वरूपत्वात् तादृशप्राणवादित्वस्य च अतिवादित्वरूपत्वात् LaCandr. 824.22.

**अतिवादित्ववर्णन** (ativāditva-varṇana) *n.* mention of the state of speaking hyperbolically (of something) तद्दर्शिनोऽतिवादित्ववर्णनस्यासामञ्जस्यप्रसङ्गात् ŚivārkaMaDī. i. 411.32 (on i. 3.7)

**अतिवादित्वहेतु** (ativāditva-hetu) *m.* cause of the state of speaking hyperbolically (of something) ततश्चोपास्यदेवतासाक्षात्कारोऽतिवादित्वहेतुरित्यर्थः VedāntKau. 83.2 (on i. 3.8); तुशब्देनातिवादित्वहेतुं प्रकृतं प्राणोपास्ति व्यावर्त्य GoviBh. 43.8 (on i. 3.8)

**अतिवादित्वान्तर** (ativāditvāntara) *n.* another type of hyperbolic mode of speaking, another (kind of the) state of one speaking hyperbolically (of something) सत्येनेति तृतीयाश्रुत्या करणत्वाभिधानेन्या सत्यज्ञानेनातिवादित्वान्तरमेव विधीयते PrakaVi. 231.26.

**अतिवादिन्** (ati-vādin) *adj.* [*f.* –ī] **i** speaking exaggeratedly or hyperbolically विजानन् विद्वान् भवते नातिवादी MuṇḍaU. iii. 1.4; एष एवं पश्यन्नेवं मन्वान एवं विजानन्नतिवादी भवति । तं चेद् ब्रूयुरतिवाद्यसीति । अतिवाद्यस्मीति ब्रूयात् । नापह्नुवीत ChāndoU. vii. 15.4; अतिवादी अतीत्य सर्वानन्यान्

वदितुं शीलमस्येत्यतिवादी MuṇḍUBh. 346.15 (on iii. 1.4); तस्मिन्नधोमुखी विहसेत् । तां चातिवादिनीमधिक्षिपेद्विवदेच KāmSū. 202.23 (3.2); अतिवादिनी-मित्यनुरागातिशयं कथयन्तीमधिक्षिपेत् JayaMa. 203.11 (on 3.2); प्राणदर्शिनोऽति-वादिनो व्यवच्छिद्य सत्येनातिवादिनं वदन् कथं प्राणस्य भूमानमभिदधीत Bhām. 200.9 (on i. 3.8); NayaMañ. I. iii. 2.4; अतिवादिन्यां तस्यां साक्षेपः स्याद्विवादस्तु KandaCū. iii. 2.25; SivārkaMaDi. i. 414.22 (on i. 3.7); II loquacious, who speaks complainingly नासूयको न चापीर्युर्नातिवादी न मत्सरी । भविष्यति जनस्तत्र MahāBhā. iv. 27.13; विप्रस्याजायतात्मजः । दुराचारस्य पापस्य निर्घृण-स्यातिवादिनः SkandP. i(2). 13.101; (पुनरूचुश्च गोपिकाः) वयं मिथ्यातिवादिन्यो न हि सोऽयं तवात्मजः ĀdiP. 25.49; किमर्थं शिशवस्त्वां गेहे गेहेऽतिवादिनः BhaviP. 798A.6 (iv. 132.2); III who excels in sophistry अनभिज्ञास्तु शान्तत्वाच्चित्तानामतिवादिनाम् DeviBhāP. vi. 6.29; यत्र वेदविदो नित्यं वेद-वादबहिष्कृतान् । वादजल्पवलैर्घ्नन्ति वचोभिरतिवादिनः SivaP. vii (1). 3.62 (505B.10)

**अतिवादिमानिन्** (ativādimān-in) *adj.* who thinks himself an excellent argumentator न मेऽद्य वक्ष्यस्यतिवादिमानिन् ग्लहं प्रपन्नः सरितामिवागमः MahāBhā. iii. 134.2.

**अतिवादिस्थानीय** (ativādi-sthānīya) *adj.* who attains the status of one excelling in speech अतिवादिस्थानीयोऽग्निहोत्री SrutaPra. ii. 14.15 (on i. 3.7)

**अतिवादुक** (ati-vāduka) *adj.* who excels in speech अथो खल्वाहुर्गायत्री वाव प्रातःसवने नातिवाद इत्यनतिवादुक एनं भ्रातृव्यो भवति य एवं वेद TaiS. VI. iv. 5.2.

**अतिवादेन्धन** (ativādendhana) *adj.* having fuel in the form of excessive (i. e. unreasonable) dispute अतिवादेन्धनो जज्ञे कलहाग्निः क्षयावहः ViṣṇuP. v. 37.40.

**अतिवाद्यन्तर** (ativādy-antara) *n.* another person who excels in speech अतः पूर्वातिवादिनः प्रत्यभिज्ञा नास्तीत्यतिवाद्यन्तरं प्रतिपन्नमित्यर्थः SrutaPra. ii. 14.7 (on i. 3.7); ii. 13.28 (on i. 3.7); ii. 14.20 (on i. 3.7)

**अतिवाद्यन्तरत्व** (ativādyantara-tva) *n.* the state of being another person who excels in speech अत्र त्वतिवाद्यन्तरत्वनिमित्तमुपासनान्तरम्···प्रतीयते SrutaPra. ii. 14.9 (on i. 3.7)

**अतिवान्त** (ati-vānta) *adj.* who has vomited excessively, suffering from excessive vomiting विक्षिप्तवक्त्रगात्रमतिवान्तविरिक्तं मदनयोगहतं विद्यात् ArthSā. ii. 150.4 (4.7); अतिवान्तस्य लक्ष्माणि संप्रोक्तानि निबोध मे BhelaS. 243.8 (S.1); KāśyaS. 150A.36; अतिवान्तम् ··· । उपाचरेत्सिताक्षौद्रमिश्रैर्लेहै-श्चिकित्सकः SiddhYo. 73.23; *n.* excessive vomiting पित्तातियोगं च विसंज्ञतां च हृत्कण्ठपीडामपि चातिवान्ते SiddhYo. 73.14; अतिवान्ते भवेत् तृष्णा हिक्कोद्गारौ विसंज्ञिता SārṅgaS. iii. 3.23.

**अतिवाप** (ati-vāpa) *m.* the keeper or superintendent (of a gambling table) cf. अक्षातिवाप.

**अतिवाम** (ati-vāma) *adj.* extremely hostile प्रतिमुखस्थितकुवलयकोपा-दिवातिवामानि···मामिनीनामरज्यन्त लोचनानि AvantiKa. 27.8; न काकुवाक्यै-रतिवाममङ्गजं द्विषता याचे पवनं तु दक्षिणम् NaiṣC. 9.93;

**अतिवामचेष्टिता** (ativāma-ceṣṭitā) *adj.* (*f.*) whose (outward) behaviour is very affectionate तां तीक्ष्णचित्तामतिवामचेष्टितां वीक्ष्यान्तरा कोश-परिच्छदासिवत् । वरस्त्रियं तत्प्रभया च धर्षिते निरीक्षमाणे जननी ह्यतिष्ठताम् BhāgP. x. 6.9.

**अतिवामन** (ati-vāmana) *adj.* [*f.* -ā, -ī] very short, dwarfed किरति मिहिरे विष्वद्रीचः करानतिवामनी स्वलकमठवद्देहच्छाया जनस्य विचेष्टते Anargha-Rā. 1.54 = SubhāRaK. 31.4; पादाम्बुजाभ्यामतिवामनाभ्यां कृतार्थयन्तं कृपया धरित्रीम् SāraTi. 13.140; वर्जनीयपात्राणि ··· अत्युच्चाप्यतिवामना (नर्तकी) AbhinDa. 26.

**अतिवामनता** (ativāmana-tā) *f.* the state of being very low अति-वामनतया च जवनभागस्य पातालादिव उत्थिता ··· गन्धहस्तिना सनाथीकृतैकदेशम् ··· राजकुलं विवेश Kād. 87.19.

**अतिवामनत्व** (ativāmana-tva) *n.* the state of being very dwarfish आकृतिविकृतिरतिवामनत्वदन्तुरत्वादिः RasāSu. 155.12 (2.124)

**अतिवामिन्** (ativām-in) *adj.* causing excessive vomiting (अथ ताम्रम्) अतिवामि कठोरकम् RasRaSa. 5.45.

**अतिवामोरु** (ati-vāmoru) *adj.* surpassing (a woman) with beautiful thighs डीबाधनत्स्याप्रधानस्य ह्रस्वो भवति । ··· अतिवामोरुः CāndraVṛ. on ii. 2.86.

**अतिवामोरू** (ati-vāmorū) *adj.* (*f.*) having very beautiful thighs अशिवेनातिवामोरूरजस्रं नेत्रवारिणा । स्तनावपतितौ बाला सहितावभिवर्षती । उवाच वाक्यम् MahāBhā. iii. 265.18; अहमपि अतिवामोरु पीडितः क्षुधया वने DeviBhāP. vii. 13.10.

**अतिवायत्** (ati-vāyat) *adj.* blowing strongly, (place or time) having excessive wind ब्रह्मविदो ब्रह्म नाधीयन्ते(? ते)ऽतिवायति MahāBhā. xii. 315.56; अतिवायति गृहादिभङ्गकारिणि चातिवाति ManvaVi. 516.19 (on 4.122)

**अतिवायु** (ati-vāyu) *m.* strong wind, storm क्रियात्मकेन रजसा लघु सत्त्वं सर्वत्र नीतं स्यादतिवायुना तूलावयववद्यदि गुरुणा तमसा नियमनं न स्यात् SāṁkhyaTaPra. 165.7; शशाङ्कजः । अतिवायुं स्वल्पवृष्टिं करोति NāraS. 2(1).7; 2(6).9; 35.19.

**अतिवायुकुमारक** (ati-vāyukumāraka) *adj.* surpassing the Vāyu-kumāraka gods आददाते विहंगमान् । राज्ञः कुमारौ तौ वेगादतिवायुकुमारकौ TriṣaSaPuC. ii. 3.9.

**अतिवारक** (ati-vāraka) *m.* plant *kuraṇḍa* कुरण्डस्त्वतिवारकः KoṣaKaTa. 1.4239.

**अतिवारि** (ati-vāri) *n.* abundant water तदा क्षमा भवति समातिवारिणा BṛSaṁ. 28.10.

**अतिवारिता** (ati-vāritā) *adj.* (*f.*) firmly prohibited विघ्नेन मोहिताः पौरयोषितः । गृहेषु न हि तिष्ठन्ति ह्यसाभिरतिवारिताः PadmP. vi. 202.22.

**अतिवारिभय** (ativāri-bhaya) *n.* fear of excessive water or floods अतिवारिभयं विद्यात्सौम्यायां भूरिसंपदः AVPari. 59.7.

**अतिवार्त्त** (ati-vārtta) *adj.* thoroughly useless यच्च संसृष्टिनस्तु संसृष्टी-त्यस्य भ्रात्राधिकारावसरे विशेषविधानमात्रार्थत्वं न पत्न्यायपवादकत्वमित्युक्तम् तदति-वार्त्तम् ViraMi. (Vyavahāra.) 511.28.

**अतिवार्धक** (ati-vārdhaka) *n.* very old age प्रायश्चित्तेषु रोगपीडाति-वार्धकेन वा स्वयमसमर्थः ··· उपवासजपादिकं कारयेत् ĪśānSiPa. ii. 20.37(12)

**अतिवार्धकदशा** (ativārdhaka-daśā) *f.* very old condition अस्तो-दयाद्विगतमर्कशशाङ्कबिम्बमहोऽतिवार्द्धकदशामवलम्बितस्य । ताराक्षराणि पठितुं तप-नीयशैलनासावसक्तमुपनेत्रमिवावभासे PadyaVe. 557.

**अतिवार्धुषिक** (ati-vārdhuṣika) *adj.* excessive usurer, who charges excessive interest वणिक् पण्योपघाती यो यश्चाप्यस्य प्रतीक्षकः । अतिवार्धुषिकश्चैव हन्यन्ते बहुरूपया KāśyaS. 191B.14.

**अतिवार्यमाण** (ati-vāryamāṇa) *adj.* being firmly prevented तेनाति-वार्यमाणोऽपि ययसौ न निवर्तते । तदान्यत्र क्वचिद्गत्वा शिवमेवानुचिन्तयेत् MāliniT. 18.72.

**अतिवालक** (ati-vālaka) cf. अतिबालक *m.* an infant; *adj.* infantine [MW]

**अतिवाल्य** (ati-vālya) *ger.* having passed over or across अथ सकृदति-वाल्य कूर्चे स्रुचं निधाय दक्षिणावृद्वाईपत्यं प्रतीक्षते BaudhSS. i. 75.4; प्रस्तरे बर्हिर्यविन्मात्रे स्पन्यया विग्रथ्याहवनीयेऽतिवाल्याङ्गिरभ्युक्ष्योत्तरतः सादयति BaudhSS. i. 178.11; BaudhPiMe. iii. 1.16.

**अतिवाल्लभ्य** (ati-vāllabhya) *n.* the state of being very dear तस्मि-ल्लक्ष्मीसरस्वत्योः अतिवाल्लभ्यमाश्रिते MahāP. 11.34.

**अतिवास** (ati-vāsa) *m.* fast on the day preceding a *śrāddha* [APTE, MW]

**अतिवासवा** (ati-vāsavā) *adj.* (*f.*) excelling that of Indra तस्य भूलोकचन्द्रस्य समृद्धिरतिवासवा RāghPāṇ.(Ka.) 3.19.

**अतिवासुकि** (ati-vāsuki) *adj.* who excels Vāsuki उपरि स्थितेन भवता जगती कथमुद्धृतेयमतिवासुकिना VasaViKā. 2.5.

**अतिवाह** (ati-vāha) *m.* I carrying across or beyond or over यत्प्रयाणां मृत्यूनां साम्नातिवाहं वेद स उद्गाता मृत्युमतिवहतीति JaimiUBr. iii. 9.10; विदुषामतिवाहे परमपुरुषेण नियुक्ता अतिवाहिका देवताविशेषा एतेऽर्चिरादयः SriBh. 749.8 (on iv. 3.4); VedāntDi. 237.18 (on iv. 3.4); अतिवाहे भवा अतिवाहिकाः BrahmSūBh.(Bhā.) 235.11 (on iv. 3.4); VedāntKau. 415.18 (on iv. 3.4); II carrying an excessive load or carrying a load excessively अतिदोहातिवाहाभ्याम् AtriS. 221; ĀpaSm. 1.23; अतिवाहे च ··· प्रायश्चित्तं विनिर्दिशेत् ParāSm. 9.28; अतिवाहा(? हा) तिदोहाभ्याम् ··· पादोनं व्रतमाचरेत् LaSaṅkhaSm. 53; तस्य गर्दभोऽतिवाहाद्दुर्बलो मुमूर्षुरभवत् (v. l.) PañcT. 3.33 (286.12); Hitopa. 3.9(2); योजनं हलशकटादावतिवाहादिना BālamBha. iii. 161.18 (on 3.263); [guide, conductor DBHS]

**अतिवाहक** (ati-vāhaka) *m.* the deity or spirit appointed by God to help in the conveying of the *jīva* or *sūkṣmaśarīra* [APTE]

**अतिवाहन** (ati-vāhana) *n.* I carrying away, removal अन्नानुभूतस्य क्षीरोदधेः कीर्तिप्रवाहदर्शनेनोत्कण्ठाया अतिवाहनम् AlaṅkāRa. 20(21); II ex-

-cessive acceleration (of motion) अपानो रूक्षगुर्वन्नवेगाघातातिवाहनैः। ···कुपितः कुरुते रोगान् AṣṭāSaṁ. i. 304. 11 (3. 16); iii causing to carry excessively श्रमो भवति ··· वाहानामतिवाहनात् AśvaVai. 22. 1 [excessive toiling, MW]

**अतिवाहनीय** ( ati-vāhanīya ) *adj.* to be removed or atoned for पश्चा कथमतिवाहनीयमिन्द्रेण परःसहस्रैरपि वत्सरैः···इदं दुरितम् NīlaVi. 46. 6 (Vibudhānanda क्षपणीयम्)

**अतिवाहयत्** ( ati-vāhayat ) *adj.* removing, emptying (of a reservoir) सङ्कृप्रवृत्तमेव हि ते फलदानाय कर्माशयमतिवाहयन्तः ··· अन्यमन्यं देहं संचरन्तः BrahmSūBh.(Śaṅ.) 669. 12 (*on* iii. 3. 32); ii passing (time) (अहं) भवन्तं चिन्तयान एव कालमतिवाहयन् ··· आलोकिनः DaśKuC. 154. 2; UdaySuKa. 40. 12; इतश्च भरतस्तस्थौ दिवसानतिवाहयन् TriṣaŚaPuC. i. 6. 257; PārśvC. 2. 1058; ŚivārkaMaDī. ii. 230. 8 (*on* iii. 2. 6)

**अतिवाहयितुम्** ( ati-vāhayitum ) *inf.* i to remove, to wash away, to console कामं न शक्नोति मे हृदयम् ··· कल्पमहापुरुषस्य विनिपातमसुबिन्दुभिरेव केवलैरतिवाहयितुम् HarṣaC. 218. 1; अतिवाहयितुमनङ्गमार्गणोदग्रवेदनादुःखानि UdaySuKa. 116. 7; ii to pass (time) तामदृष्ट्वा ··· प्रियाम् ··· । अतिवाहयितुं नाहं प्रभवामि दिनत्रयम् PadmP.(Ra.) 15. 125; राजा रजनिशेषमतिवाहयितुम् ··· हंस° ··· °तल्पमभजत् NalaCam. 6. 55(1); दुःसहमध्याह्नमतिवाहयितुमुत्सुकमानसः (राजा विलासोद्यानं ददर्श) UdaySuKa. 46. 10; अतिवाहयितुं कष्टं दिनमासीन्महीपतेः RājTa.(Ka.) 8. 786; अतिवाहयितुं वर्षाश्चक्रे तत्रोटजान् जनः TriṣaŚaPuC. i. 1. 101.

**अतिवाहिक** ( ativāh-ika ) *adj.* (subtle body) fit for carrying the Soul तत्क्षणात्सोऽथ गृह्णाति शारीरं चातिवाहिकम् SkandP. i(2). 50. 62; ViṣṇuDhaP. ii. 116. 11; *m.* hellish creature स्युर्नारकास्तु परेतप्रेतवात्यातिवाहिकाः AbhidhāCin. 1358; AbhidhāRaMā. 3. 3; KalpaK. 367. 6.

**अतिवाहिकदेह** ( ativāhika-deha ) *m.* the (subtle) body carrying (the individual soul) beyond अतिवाहिकदेहातु प्रेतपिण्डैर्विना नरः । न हि मोक्षमवाप्नोति AgniP. 368. 11 = ViṣṇuDhaP. ii. 113. 15.

**अतिवाहिकरूपिणी** ( ativāhika-rūpiṇī ) *adj.* (*f.*) of the form of a guide, having a subtle form पूजयित्वा ··· देवताः पञ्च पूर्वोक्ता अतिवाहिकरूपिणीः ŚivaP. vi. 22. 5 (499B. 12)

**अतिवाहिकारूढ** ( ativāhikārūḍha ) *adj.* residing in the transmigrating (body) तेनातिवाहिकारूढं दृक्क्रियाशक्तितेजसा । वपुः पाशात्मकं व्यासं स्त्रस्थं भौवनं स्मरेत् MṛgendraT. ii. 7. 79.

**अतिवाहित** ( ati-vāhita ) *adj.* [*f.* -ā] Ai suffered, endured, put up with गुहाविसारीण्यतिवाहितानि मया कथंचिद्घनगर्जितानि RaghuVa. 13. 28; VakroJī. 51. 11; स दुष्कालोऽतिवाहितः RāmC. 1. 24; व्याघ्रसेन क्व युष्माभिर्मेद्वियोगोऽतिवाहितः BṛKathāMañ. ix. 2. 1247; स शापस्त्विङ्गता तेन वर्षं वैराटवेश्मनि । स्त्रीवेषेण महाश्चर्यरूपेणाप्यतिवाहितः KathāSaSāg. vi. 7. 91; AlaṅkāRa. 20 (6); Subbhāṣi. 3278; 3373; Aii passed or spent (time) कथं त्वया शत्रुमध्यगतेन कालोऽतिवाहितः Tantrākhyā. 114. 4; किं वा मयापि न दिनान्यतिवाहितानि MālaMā. 6. 179; अत्यार्ति माघरजनात्वतिवाहितायां हेमे हिमाहतसरोजनिभं मुखं ते RāmC. 19. 22; प्रायेण पञ्चसप्ततिवर्षेष्वतिवाहितेषु अर्थतृष्णा तनूभवति TātpaṬ.(Vā.) 629. 25 (*on* iv. 1. 60); अतिवाहितश्च पुरः करकलितकार्मुकेण काल एतावान् TilaMañ. 90. 8; 168. 11; SamaMā. 4. 47; SkandP. iv. 60. 97; KathāSaSāg. xiv. 4. 14; एवं च कतिचिन्मासा नीवारेणातिवाहिताः DevīBhāP. vii. 13. 32; PraboCan. 1. 2 (2. 11); पृच्छति स च हे वत्सौ सुखं कालोऽतिवाहितः PariPar. 1. 246; तन्नाटकादिभिस्तेनाहोरात्रमतिवाहितम् SamarāSaṁ. 1. 83; तया सह समस्तत्र मया बहवोऽतिवाहिताः YogVā. iii. 107. 6; ĀnandaRa. 3. 15 (4); B removed, drained, emptied, past दुःखमतीतमुपभोगेनातिवाहितं न हेयपक्षे वर्तते YogBh. 79. 4 (*on* 2. 16); पुञ्जीभूय मूले युगपदतिवाहिततरुणतपनातपाः ··· पादपच्छायाः TilaMañ. 350. 11; अथातिवाहितानागतानामपि द्रव्यपर्यायाणां तादात्विकवत् पृथक्त्वेन ज्ञाने वृत्तिमुद्योतयति TattvPradī.(A.) 49. 8 (*on* 1. 37); कर्माणि व्यपगतानि ज्ञानेनैवातिवाहितानि Bhām. 638. 7 (*on* iii. 3. 32); ननु वर्तमानमुपभुज्यमानं न भोगेनातिवाहितम् TattvVai. 79. 20 (*on* 2. 16); असौ पुनरत्र निर्वर्तिताक्गाहविधिरतिवादि(? हि)तार्थ(? घ) निदाघसंज्वरः ··· पद्यति स YātrāPra. 9. 51 (1); C traversed, covered, crossed, conducted, driven very much अहर्देवत्यातिवाहिता आपूर्यमाणपक्षदेवतां प्रतिपद्यन्ते BṛĀraUBh. 779. 12 (*on* vi. 2. 14); ChāndoUBh. 297. 9 (*on* v. 10. 3); यथाकथंचित्तोकोऽयम् ··· मयातिवाहितः RājTa.(Ka.) 2. 34; अवाहिता विनश्यन्ति विनश्यन्त्यतिवाहिताः AśvaCi. 7. 3; अये वंहीयानतिवाहितः पन्थाः KamVa. 3. 13(1) 53

**अतिवाहितक्लम** ( ativāhita-klama ) *adj.* who has got rid of his fatigue (i. e. rested) अतिवाहितक्लमश्च कंचित्कालमुत्थाय···पादपफलान्यभ्यवजहार (समरकेतुः) TilaMañ. 199. 9.

**अतिवाहितदिवस** ( ativāhita-divasa ) *adj.* [*f.* -ā] who has passed the day अतिवाहितदिवसः ··· यामिनीमपि ··· जाग्रदेव निन्ये Kād. 118. 16; अतिवाहितदिवसा ··· तत्सिक्तमण्डपशिलातले ··· सुष्वाप HarṣaC. 32. 6.

**अतिवाहितवत्** ( ativāhita-va(n)t ) *adj.* [*f.* -tī] who has passed (time etc.) सोऽपि ··· अपराह्नसमयमतिवाहितवान् NalaCam. 3. 21 (26); अथाहम् ··· शैशवमतिवाहितवती TilaMañ. 264. 4; (असौ) रात्रिमप्युद्गच्छितेन चन्द्रमसा इषदोलकेनेव स्फोटयितुं हृदयमुद्यता मन्यमाना कालमतिवाहितवती UdaySuKa. 105. 23; एकातपत्रं साम्राज्यं भुञ्जानः स महाभुजः । अतिवाहितवान् कालं पुरन्दरमिन्द्र इव क्षितः TriṣaŚaPuC. iv. 1. 258; स्वं जन्मातिवाहितवती PrabaCin. 110. 29.

**अतिवाहितशैशव** ( ativāhita-śaiśava ) *adj.* who has passed his childhood कुमारः केलिलीलाभिः सोऽतिवाहितशैशवः PāṇḍaC. 5. 107; नृपदेहत्तदासीदानन्दहेतुरतिवाहितशैशवोऽयम् AcyutaRā. 2. 53.

**अतिवाहितश्रम** ( ativāhita-śrama ) *adj.* who has got rid of fatigue (i. e. rested) (अहम्) अतिवाहितश्रमः स्वस्थचेतास्तथा शिलातलोपविष्टम् ··· आत्मानमवलोक्य TilaMañ. 243. 23.

**अतिवाहितातप** ( ativāhitātapa ) *adj.* who has endured the sun's heat उत्तरन्ति विनिकीर्य पल्वलं गाढपङ्कमतिवाहितातपाः । ··· वनवराहयूथपाः KumāSaṁ. 8. 35.

**अतिवाहिताध्वखेद** ( ativāhitādhvakheda ) *adj.* who has got rid of the fatigue of his journey (i. e. rested) (अहम्) अतिवाहिताध्वखेदो दिव्यदेवतायतनदर्शनप्रीतमनसम् ··· तारकमवोचम् TilaMañ. 156. 14.

**अतिवाहिनी** ( ati-vāhinī ) *f.* name of a particular state of rut (of an elephant) एतां षड्ढीं मदावस्थां जानीयादतिवाहिनीम् Hastyāyur. 693. 19 (4. 31)

**अतिवाह्य** ( ativāh-ya ) *ger.* Ai having endured or got through successfully, having experienced रतावसानिकं रागमतिवाह्य···पृथक्पृथगाचारभूमिगमनम् KāmSū. 179. 3 (2. 10); रागमतिवाह्य रतिमनुभूय JayaMa. 179. 16 (*on* 2. 10); किं वाक्सादपदवीमतिवाह्य कष्टां लब्धाविकारविभवेन विदर्जितासि SamaMā. 1. 23; Aii having passed (time) वणिक् सन्ध्यामतिवाह्य निशामुखे ··· अशनमकरोत् Tantrākhyā. 79. 3; HarṣaC. 330. 23; तत्रैव तां निशां दिवसमप्यतिवाह्य कन्दर्पकेतुश्चचाल VāsaDa. 164. 7; दिनान्तमतिवाह्याथ प्रभाते SkandP. iii(2). 36. 173; मुनिस्तु ··· छिद्रालापलीलयातिवाह्य काश्चित्कालकलाः ··· मण्डलेश्वरमापृच्छ्य ··· अम्बरतलमुदपतत् NalaCam. 3. 17 (19); 7. 10 (24); निशामतिवाह्य प्रत्यूष एव पुनः प्रवृत्ता गन्तुम् BālRā. 6. 35 (3); (अहम्) अतिवाह्य च क्षणमेकम् ··· गृहीत्वा शनैस्तमवाचयम् TilaMañ. 396. 18; JayaMa. 290. 24 (*on* 5. 5); अतिवाह्य क्षपामेवं विधियुक्तेन कर्मणा PadmP. v. 24. 172; UdaySuKa. 35. 22; 42. 22; KalāVi. 3. 44; अतिवाह्य निशामेकां प्रतस्थे मुनिपूजितः RāmāMañ. 11. 6; 469. 25; एवमन्योन्यमालोच्य तां रात्रिमतिवाह्य च KathāSaSāg. i. 6. 133; नृत्तगीतादिभिः श्यामामतिवाह्योदिते रवौ ĪśānŚiPa. ii. 60. 36; YogVā. i. 28. 20; RājTa.(Ka.) 7. 915; ध्यानेन ··· आयुर्लीलयैवातिवाह्य सः TriṣaŚaPuC. i. 1. 279; वज्रोऽपि नगरीद्वारे शर्वरीमतिवाह्य च PariPar. 12. 222; PṛthvīVi. 4. 28; Aparā. 1238. 26 (*on* 3. 321); MalliC. 8. 73; CaturCin. i. 355. 6; PrabhāC. 109. 25; NāṭaLaRaK. 2536; PrabaCin. 29. 5; MadhuVi. 4. 48; ŚivārkaMaDī. i. 474. 15 (*on* i. 3. 33); Bi having sent off अथ बोधिसत्त्वस्तं शिष्यं सव्यपदेशमतिवाह्य चिन्तामापेदे JātaMā. 4. 2 (1. 20); Bii having carried out और्ध्वदेहिकीं पितुः क्रियामतिवाह्य AnargharRā. 5. 2 (22); C having crossed or gone beyond अलकामतिवाह्यैव वसतिं वसुसंपदाम् KumāSaṁ. 6. 37; विजयशेखरं नाम करिणमारुह्यान्तःपुरानुगमग्राह्योऽतिवाह्य(? ह्य) नगरमार्गमुपगतारामसीमसंसर्गः YaśasCam. ii. 317. 18; यदेवेनातिवाह्याई प्रासवाङ्क्ष्तं क्रमात् YogVā. iii. 106. 16; यदि च सर्वेलोकमनिवाह्य स्वर्गकृतलक्षणेर्थव्यवहारः NyāyVārPari. 668. 4 = Kiraṇā. 299. 9; पदवीमतिवाह्य भूयसीं विपिने क(? का)ञ्चिदरदस्तां समाम् Nalābhyu. 7. 34; सरयूमतिवाह्य राघवौ ययतुः Rāgh. 3. 4.

**अतिवाह्य** ( ati-vāhya ) *adj.* [*f.* -ā] A to be passed (time) एवं क्षपातिवाह्या च MatsyaP. 69. 46; क्षपातिवाह्या वै गीतमङ्गलनिःस्वनैः PadmP. v. 23. 54; त्वया मया सह प्रीतिपूर्वं कालोऽतिवाह्यः Pañcā. 164. 4; B to be conducted or led through दुर्गेषु मार्गेषु अतिवाह्यान् अतिवाहयन्ति BrahmSūBh.(Śaṅ.) 826. 17 (*on* iv. 3. 4)

**अतिवाह्य** ( ati-vāhya ) *m.* name of one of the seven sages at the time of the fourteenth Manu चतुर्दशे तु पर्याये सत्यस्यैवान्तरे मनोः ।··· भार्गवोऽप्यतिवाह्यश्च ··· सप्तर्षयश्च ते ŚivaP. v. 34. 64 (446A. 2) [ LaŚaṅkhaSm 53; *v. r. for* अतिवाह ]

**अतिवाह्यमान** ( ati-vāhyamāna ) *adj.* A (time) which is being passed देवद्विजप्रसादादिहापि सर्वं शुभं भविष्यतीति प्रकृते बोधयता राजलोकेनातिवाह्यमानदिवसम् ··· राजकुलमव्रजत् TilaMañ. 64. 17; तमालषण्डेषु प्रविश्य तिमिर-

**अतिवीणिन्** (ati-vīṇin) *adj.* possessing great skill in playing on lute विस्वरं सामगाः कुर्युर्विरक्तमतिवीणिनः NāraŚi. i. 6. 20.

**अतिवीत** (ati-vīta) *adj.* over-clothed नातिवीतो नाक्तं कृत्वोर्ध्वंशुरनपश्रितोऽधीयीत AitĀ. V. iii. 3. 11.

**अतिवीध्र** (ati-vīdhra) *adj.* excessively clean or bright छत्रत्रयं तद्रुरुचेऽतिवीध्रम् MahāP. 23. 44.

**अतिवीप्सा** (ati-vīpsā) *f.* excessive repetition अभीत्थंभूतकथनेऽप्यतिवीप्साभिमुख्ययोः ViśvaLoK. 414. 48.

**अतिवीर** (ati-vīra) *adj.* very brave or heroic सः ···अतिवीरोऽतिमहान् ···स्वे महिम्नि सदा समास्ते NṛsiṁhoTāU. 7; सदायज्ञोऽतिवीरश्च ··· । अक्रूरः MatsyaP. 45. 27; PadmP.(Ra.) 12. 212; मुहूर्तमेवं युयुधेऽतिवीरः (ऐन्द्रसेनिः) VarāṅgaC. 18. 57; कुमारेण हतस्सोऽतिवीरः ŚivaP. ii(4). 10. 32 (205A. 7); RāmāMañ. 135. 23; अतिवीरः ···वायुपुत्रः ···चण्डोड्डीनमङ्गीचकार MahāN. 5. 33.

**अतिवीर्य** (ati-vīrya) *adj.* [*f.* -ā] **i** very heroic, very powerful, very courageous स इन्द्रजिन्नाम वरप्रधानः । ··· धन्वी रथस्थोऽतिरथोऽतिवीर्यः Rāmā. vi. 47. 16; ताभ्यस्त्वमात्मना पुत्रमेवंवीर्यं (v. l. अतिवीर्यम्) जनिष्यसि MahāBhā. iii. 126. 23; ViṣṇuP. iv. 24. 144; गणेश्वर पुरीं गत्वा शून्यां वाराणसीं कुरु । मृदुनैवाभ्युपायेन अतिवीर्यः स पार्थिवः (दिवोदासः) HariVaṁ. App. I. 7(90) = VāyuP. ii. 30. 37 = BrahmāṇḍP. ii. 67. 41; अतिवीर्यं महाविनायकप्रवराणामनुत्रादिनां वर (शाक्यपुङ्गव) GiMs. iii(1). 11. 9; शक्रादयः सुरगणा निहतेऽतिवीर्ये तस्मिन् दुरात्मनि सुरारिबले च देव्या । तां तुष्टुवुः MārkP. 84. 1; **ii** very powerful, very potent गिरिवरतटरूपा दुर्निवारातिवीर्या व्रजति नभसि शीघ्रं मेघवृन्दानुयात्रा DūtVā. 48; पायासुर्वोऽतिवीर्यास्त्रिभुवनजयिनः पञ्चबाणस्य बाणाः SubhāRaK. 14. 2 = Subhāṣi. 1039; *n.* great valour, great might महाबलः । यः शक्रमपि वीर्येण (v. l. अतिवीर्येण) गमयेद् यमसादनम् MahāBhā. iii. 126. 20; PadmP. v. 73. 41; बालत्वं चातिवीर्यं च जन्म चास्मास्वशोभनम् । ··· शङ्कां कृष्ण प्रयच्छति BrahmP. 189. 8; वीरभद्रोऽतिवीर्येण गजेनैवाहनद् गजम् GaṇeP. ii. 121. 20; *m.* name of a king अतिवीर्यः सुवीर्यश्च···तथान्ये पृथिवीभृतः PadmP.(Ra.) 5. 7; इति मन्त्रयमाणस्य रामस्य मतिरुद्गता । अतिवीर्यग्रहोपाये PadmP.(Ra.) 37. 92; अतिवीर्यस्य तनया श्रीकेशिनमसूत च PadmP.(Ra.) 94. 34.

**अतिवीर्यत्व** (ativīrya-tva) *n.* the characteristic of possessing excessive valour बालत्वं चातिवीर्यत्वं जन्म चास्मास्वशोभनम् ViṣṇuP. v. 13. 7; दैत्येन्द्रस्यातिवीर्यत्वात् परिश्रान्ततरो यमः SkandP. i(2). 17. 63.

**अतिवीर्यदर्प** (ati-vīryadarpa) *adj.* possessing excessive valour and conceit शीघ्रं प्रयामि ··· अवनीम् ··· दृप्तान् जिघांसुरसुरानतिवीर्यदर्पान् BālC. 2. 21.

**अतिवीर्यदिगम्बर** (ativīrya-digambara) *m.* the Jaina monk Ativīrya by name अश्वैः प्रववृते द्रष्टुमतिवीर्यदिगम्बरम् PadmP.(Ra.) 38. 12.

**अतिवीर्यनरेन्द्र** (ativīrya-narendra) *m.* king Ativīrya दूतोऽस्मि ··· अतिवीर्यनरेन्द्रस्य नयन्यासमनीषिणः PadmP.(Ra.) 37. 32.

**अतिवीर्यपराक्रम** (ati-vīryaparākrama) *adj.* possessing excessive prowess and heroism स ददृशे ··· । मधुकैटभौ दुरात्मानावतिवीर्यपराक्रमौ MārkP. 81. 71; एवं मातृगणेनाजावतिवीर्यपराक्रमम् । मर्दितं दानवं सैन्यं पलायनपरं ह्यभूत् DevīBhāP. v. 28. 59; ननन्द देवस्तं दैत्यमतिवीर्यपराक्रमम् GaṇeP. ii. 102. 5.

**अतिवीर्यबल** (ati-vīryabala) *adj.* possessing excessive valour and strength अतिवीर्यबलं नानुगच्छामि MadhyaVyā. 1. 40(10)

**अतिवीर्यबलप्रद** (ativīryabala-prada) *adj.* producing much semen and strength मांसम् ··· अतिवीर्यबलप्रदम् BhojanKu. 170. 11.

**अतिवीर्यमुनि** (ativīrya-muni) *m.* monk Ativīrya अतिवीर्यमुनिं दृष्ट्वा सुघोरतपसि स्थितम् PadmP.(Ra.) 38. 17.

**अतिवीर्यवत्** (ativīrya-va(n)t) *adj.* **i** extremely strong or mighty (person) ततः सुह्मान्प्राच्यसुह्मान्समक्षांश्चैव वीर्यवान् (v. l. सपक्षानतिवीर्यवान्) । विजित्य युधि कौन्तेयः MahāBhā. ii. 27. 14; एषः ··· वासुदेवोऽतिवीर्यवान् । वाहयन्नेति तुरगान् MahāBhā. viii. App. I. 7(5); तव पुत्रोऽतिवीर्यवान् MahāBhā. ix. 204*(1); सोंऽशुमानतिवीर्यवान् । त्वरितं हयमादाय पुनरायान्महायशाः Rāmā. i. 40. 22; मकराक्षातिकायौ च त्रिशिराश्चातिवीर्यवान् Rāmā. vi. 1687*(2); पातु वासवदत्तायो महासेनोऽतिवीर्यवान् PratiYau. 1. 1; पुत्रस्तदस्त्राण्यतिवीर्यवान् । चिच्छेद MārkP. 21. 83; 85. 75; महिषो नाम पुत्रस्ते भविष्यत्यतिवीर्यवान् SkandP. iii(1). 6. 15; ब्रह्मासृजयतः क्षत्रमात्मनोऽप्यतिवीर्यवत् BṛĀraUBhVā. i. 4. 1603; अदित्यां मघवा पुत्रो यदाभूदतिवीर्यवान् DevīBhāP. iv. 3. 22; अङ्गदो नाम वालिपुत्रोऽतिवीर्यवान् AdhyāRā. vi. 4. 30; तस्य विष्णुः प्रकुप्येत नाशयेदतिवीर्यवान् PadmP. ii. 9. 11; **ii** extremely powerful, of high potency or efficacy (a thing) अमेयमतिवीर्यवत् । आग्नेयमस्त्रम् MahāBhā. iii. 23. 28; अतिवीर्यवतीव भेषजे बहुरल्पीयसि दृश्यते गुणः Kirātā. 2. 4; यदेव विद्यया कुर्यात्तदेव ह्यतिवीर्यवत् AnuVyā. 61B. 8 (*on* 3. 4)

**अतिवीर्यविक्रम** (ati-vīryavikrama) *adj.* possessing excessive valour and heroism अमात्यपुत्रानतिवीर्यविक्रमान् समादिदेशाशु निशाचरेश्वरः Rāmā. v. 42. 19.

**अतिवीर्यवृत्रभिद्** (ativīryavṛtra-bhid) *adj.* which sundered the highly powerful Vṛtra (i. e. Vajra) तदद्भुतं परमतिवीर्यवृत्रभित्तिरस्कृतो नमुचिशिरोधरत्वचा BhāgP. viii. 11. 32.

**अतिवीर्यवृद्धि** (ati-vīryavṛddhi) *f.* great increase of semen तस्य स्यादतिवीर्यवृद्धिः BhojanKu. 140. 17.

**अतिवीर्यशालिन्** (ativīrya-śālin) *adj.* possessing excessive valour अमितौजसामनन्तकार्यनिर्माणेनातिवीर्यशालिनाम् (तन्मात्राणाम्) MānvaMu. 9. 21 (*on* 1. 16)

**अतिवीर्यसत्त्व** (ati-vīryasattva) *adj.* having excessive valour and energy सर्वे भवन्तस्त्वतिवीर्यसत्त्वाः MahāBhā. iii. 181. 39.

**अतिवीर्यसमुन्नति** (ativīrya-samunnati) *f.* exaltation of (king) Ativīrya अतिवीर्यसमुन्नतिम् ··· शृणुत सज्जनाः PadmP.(Ra.) 1. 83.

**अतिवीर्यसुत** (ativīrya-suta) *m.* son of (king) Ativīrya अतिवीर्यसुतः प्राप्तो भवेदापातपण्डितः PadmP.(Ra.) 65. 10.

**अतिवीर्या** (ativīryā) *f.* name of a Buddhist Divinity [PW]

**अतिवृ** (ati-vṛ-) v. u. (*caus.*) to prevent, to stop लेढ्वस्तु शस्तो मधुनापि मानुजे रक्तवाहमतिवारयत्यपि HāriS. iii. 3. 58; (*pass.*) to be denied or refuted प्रमाणबलतः सिद्धा चेतना नातिवार्यते ṢaḍdarSa.(Rā.) 170.

**अतिवृंहित** (ati-vṛṁhita) *adj.* cf. **अतिबृंहित** strengthened अपां फेनं समासाद्य विष्णुतेजोऽपबृंहितम् (v. l. अतिबृंहितम्) MahāBhā. v. 16. 16.

**अतिवृक्षक** (ativṛkṣa-ka) *m.* name of the plant *kuṭaja* ApūNā. 11B. 1.

**अतिवृत्** (ati-vṛt-) I. A. (P.) **1 A i** to go beyond, to transcend **ii** to escape, to avoid, to omit **B** to surpass, to excel **C i** to transgress, to violate **ii** to disregard, to disobey **D i** to neglect **ii** to elude **E** to subdue, to overcome **2 A i** to go beyond (the proper time), to exceed (the time limit), to outlive, to survive **ii** to pass away, to elapse (time) **B i** to go beyond, to cross, to go ahead **ii** to proceed further, to progress, to pass out **3 A** to be different from, to change **B** to be beyond the scope of, to be outside the reach of, to depart from **4** to outlast, to live beyond **5 A** to behave beyond limits, to misbehave **B** to go beyond facts, to exaggerate. **1 A i** to go beyond, to transcend उपासते पुरुषं ये ह्यकामास्ते शुक्रमेतदतिवर्तन्ति धीराः MuṇḍaU. iii. 2. 1; किमाचारः कथं चैतांस्त्रीन् गुणानतिवर्तते MahāBhā. vi. 36. 21 = BhagGī. 14. 21 (Śaṅ. केन च प्रकारेण एतान् त्रीन् गुणान् अतिवर्तते अतीत्य वर्तते); मनो बुद्धिश्च भावश्च ··· । न गुणानतिवर्तन्ते गुणेभ्यः परमा मताः MahāBhā. xii. 239. 13; BrahmP. 236. 52; 236. 75; यथेतरेतरविधर्माणो रूपादयो न द्वैविध्यमतिवर्तन्ते तथा रूपादिवैधर्म्याच्चेतना न द्वैविध्यमतिवर्तेत यदि शरीरगुणः स्यात् NyāyBh. 228. 7 (*on* iii. 2. 55); यदा ह्ययमात्मादि प्रमेयं विपर्ययेणाध्यवसितो भवति । अथ संसारं नातिवर्तत इति NyāyVār. 12. 18 (*on* i. 1. 1); साक्षाच्छब्देन जनितां भावनानुगमेन वा । इतिकर्तव्यतायां तां (प्रतिभाम्) न कश्चिदतिवर्तते VākyaP. 2. 148 (comm. अतिक्रम्य तिष्ठति); तद्ब्रह्म नात्येति नातिवर्तते मृदादिकमिव घटादिकार्यं कश्चन कश्चिदपि विकारः KaṭhUBh. 170. 13 (*on* 6. 1); अतिवर्तन्ति अतिगच्छन्ति धीराः ··· न पुनर्योनिं प्रसर्पन्ति MuṇḍUBh. 353. 11 (*on* iii. 2. 1); ChāndoUBh. 160. 11 (*on* iii. 12. 2); प्राक् च तथाभूतात्मविज्ञानात् प्रवर्तमानं शास्त्रमविद्यावद्विषयत्वं नातिवर्तते BrahmSūBh. (Śaṅ.) 4. 13 (*on* i. 1. 1); गुरुणा बोधितः शिष्यः शब्दब्रह्मातिवर्तते SadācāAnu. 20; BṛĀraUBhVā. i. 4. 53; iv. 3. 449; इन्द्रियाणां वशं गत्वा संसारान्नातिवर्तते ParaS. 26. 77; कष्टो हि बान्धवस्नेहं राज्यलोभोऽतिवर्तते KathāSaSāg. vii. 7. 40; GītāBh.(Rā.) 358. 1 (*on* 6. 44); ŚivaP. vii. 39. 34 (598A. 2); पृथिवीं भूतजातं नातिवर्तते कर्मवश्यात्मनां नियमेन प्रतिष्ठात्वादशक्यातिक्रमणेत्यर्थः ŚrutaPra. 1B. 263. 7 (*on* i. 1. 27); **1 A ii** to escape, to avoid, to omit कालं प्राप्य महाबाहो न कश्चिदतिवर्तते MahāBhā. ix. 63. 9; xi. 2. 5; ते पिबन्तः कषायांश्च ··· न मृत्युमतिवर्तन्ते MahāBhā. xii. 28. 45; विरोधोद्धारं वानुक्त्वा त्वन्मतेनाभिधीयत इति ब्रुवाणो न व्याघातमतिवर्तसे NyāyVār. 325. 14 (*on* ii. 2. 67); एतां सत्तां पदार्थो हि न कश्चिदतिवर्तते VākyaP. 3(3). 51; सत्तायां हि साध्यायां सर्वस्तद्धेतुर्न त्रयीं दोषजातिमतिवर्तते – असिद्धं व्यभिचारं विरोधं च PramāVāSvopVṛ. 63. 21; 78. 17; TattvSaṁ. 339; कार्यस्य कारणे सद्भावमुक्त्वा (? सद्भावं मुक्त्वा) नियमहेतुरुच्यमानो यः कश्चित् स सर्वः पर्यनुयोगं नातिवर्तते BrahmSūBh.(Bhā.) 101. 13 (*on* ii. 1. 18); NyāyMañ. ii. 64. 15; ii. 194. 27; पित्र्यं कर्म यद्दैत्यदानवरक्षांसि यज्ञविध्वंसकराण्यपि नातिवर्तन्ते ManuBh. i. 291. 28 (*on* 3. 186); PañcPā. 12. 17 (*on* i. 1. 1); ĀtmaSi. 33. 3; स च विचार्यमाणः पूर्वन्यायं नातिवर्तते ĀtmaTaVi. 198. 6; Bhām. 20. 4 (*on* i. 1. 1); आपातप्रतीतोऽप्यर्थः संशयविपर्ययौ नातिवर्तते

S'rīBb. 4.21 (*on* i. 1.1); **1 B** to surpass, to excel सः···वेदस्याध्ययनेन वै। बहून्नृपीन्महातेजाः पाण्डवेयोऽत्यवर्तत MahāBhā. iii. 115.29; यन्तारं च हृषीकेशं कोऽतिवर्तेत संयुगे MahāBhā. vii. 53.50 (v. l.); ix. 21.8; तपो यज्ञः श्रुतं शीलम् ··। गुरुदैवतपूजा च नातिवर्तन्ति भूमिदम् MahāBhā. xiii. 61.21; नार्थार्थं नापि कामार्थमथ भूतदयां प्रति। वर्तते यश्चिकित्सायां स सर्वमतिवर्तते CaraS. vi. 1.58 (1941 Ed.); AṣṭāSaṁ. i. 7.4 (1.2); DhūrtaViSaṁ. 20.9; यशोऽधिगन्तुं सुखलिप्सया वा मनुष्यसंख्यामतिवर्तितुं वा Kirātā. 3.40 (comm. अमानुषं कर्म कर्तुं वेत्यर्थः); क्रियमाणमपि यत्नमतिवर्तन्ते गान्धर्वप्रिया वाजिनः KundaMā. 1.3(10); संन्यास एव ताभ्यां च विशेषेणातिवर्तते BṛĀraUBhVā. iii. 5.202; PadmP. i. 3.8; (व्युत्पन्नाः पुंसः) प्रमाणप्रमेयव्यवहारे तु प्रागभून्मात्रधर्मान् नातिवर्तन्ते Bhām. 27.25 (*on* i. 1.1); RāmāMañ. 298.12; KathāSaSāg. xviii. 2.67; S'aṅkaDigVi.(Mā.) 4.6; वाचो रेखामति हि भवतो वैभवं वर्तते नः HaṁsaSaṁ. 5; RājTa.(Jo.) 382; Nārāy. viii 26.3; (to exceed) यस्तु तादृशमप्यतिवर्तते पुनराक्षारयति स दण्डभाक् DaṇḍaVi. 216 8; अरुन्धतीमप्यतिवर्तते या व्रतेन पुण्येन महानुभावा Ragh. 20.30; **1 Ci** to transgress, to violate विधातृविहितं मार्गं न कश्चिदतिवर्तते MahāBhā. i. 1.187; (पाण्डवेयाः) समयं नातिवर्तन्ते वेलामिव महोदधिः MahāBhā. iv. 338 (9); मर्यादा स्थापिता ब्रह्मन् यां सूर्यो नातिवर्तते MahāBhā v. 107.11; vii. 168.6; xii. 59.137; मम त्वं वचनं कुर्वन्नातिवर्तेः सतां गतिम् Rāmā. ii. 103.4; ii. 12.6; vi. 19.19; 'लौकिकं चातिवर्तते' द्वितीयं तृतीयं च वनान्तमुदकान्तं वानुव्रजति MahāBh. i. 310.16 (*on* i. 4.56); उपक्रमेत विस्रम्भयेच्च न तु ब्रह्मचर्यमतिवर्तेत KāmSū. 199.8 (3.2); 29.19 (1.3); (*caus.*) प्रजासर्गे न सोऽस्तीह यश्चाज्ञां मेऽतिवर्तयेत् BrahmāṇḍP. i. 25.49; स्वपक्षरागेण चैके न्यायमतिवर्तन्ते NyāyBh. 310.8 (*on* iv. 2.50); AhirbuS. 50.41; देव कोऽन्यो जीवितुकामो देवस्य शासनमतिवर्तेत MudrāRā. 3.10(11); कोऽतिवर्तते दैवमिति सहेतरैः प्रायात् DaśKuC. 50.1; 141.17; 144.4; स्वार्थिकाः प्रत्ययाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्तेऽपीति KāśiVṛ. *on* P. v. 4.14 (Nyās. व्यभिचरन्त्यपीत्यर्थः); सुष्ठुपि हि दैवसंपन्नाः पदार्थस्थितिं नैवातिवर्तन्ते BālaKri. i. 196.11 (*on* 1.346); तमुवाचाङ्गदः क्रुद्धः क्रमः केनातिवर्तते RāmC. 11.80; तदेवं समयसरणसापेक्षत्वेऽपि नेन्द्रियार्थसन्निकर्षोत्पन्नतामतिवर्तते सविकल्पकं विज्ञानमिति कथमप्रत्यक्षम् NyāyMañ. i. 89.24; BrahmSūBh.(Bhā.) 58.22 (*on* i. 3.20); JayaMa. 199.11 (*on* 3.2); Bhām. 273.1 (*on* i. 3.39); PadmP. v. 18.391; यस्य वशात् सामर्थ्यात् वस्तु नीलसुखादिकं व्यवतिष्ठते नियतां प्रकाशमर्यादां न अतिवर्तते PratyabhiVi. ii. 68.6 (*on* ii. 3.1); KathāSaSāg. xii. 31.53; GītāBh.(Rā.) 539.8 (*on* 10.42); PāṇḍaC. 1.36; लघुत्वमेव प्राप्नोति यस्य चाज्ञातिवर्तते(? र्त्यते) SūktiRa. 70.1; KośāKaTa. 2.1711; PariVṛ.(Ni.) 33.20; ऋष्यशृङ्गादिभिरपि मदाज्ञा नातिवर्त्यते Manmatho. i. 25(12) (426.23); आसेधकाल आसिद्ध आसेधं योऽतिवर्तते S'ukraNi. 4(5).97; **1 Cii** to disregard, to disobey कथं च सदृशीं भार्यां गान्धारीं धर्मचारिणीम् ··· धृतराष्ट्रोऽत्यवर्तत MahāBhā. i. 107.4; पार्थिवान्। त्वन्मुखानकरोद्राजन् न च त्वामत्यवर्तत MahāBhā. v. 93.56; न त्वाहमतिवर्तिष्ये वेलामिव महोदधिः DhūrtaviSaṁ. 31.6; **1 Di** to neglect ऋतुस्नातां सतीं भार्यामृतुकालानुरोधिनीम्। अतिवर्तेत दुष्टात्मा Rāmā. ii. 1802*(10); त्वां समासाद्य वैदेहि रूपयौवनशालिनीम्। कः पुमानतिवर्तेत Rāmā. v. 18.14; व्रीडायुक्तापि योषिदत्यन्तक्रुद्धापि न पादपतनमतिवर्तेत इति सार्वत्रिकम् KāmSū. 200.23 (3.2); सोऽपि शब्दब्रह्म वेदोक्तकर्मानुष्ठानफलमतिवर्तेऽपाकरिष्यति GītāBh.(S'aṅ.) 209.3 (*on* 6.44); नैषा (श्रीः) गुणेषु रमते निर्गुणान्नातिवर्तते SūktiRa. 167.3; **1 Dii** to elude नक्षत्रमतिपृच्छन्तं बालमर्थोऽतिवर्तते। अर्थो ह्यर्थस्य नक्षत्रं किं करिष्यन्ति तारकाः ArthS'ā. iii. 71.3 (9.4); SūktiRa. 156.23; **1 E** to subdue, to overcome ब्राह्मीं मायामासुरी चैव माया त्वयि स्थिते कथमेवातिवर्तेत् MahāBhā. i. 71.43; अज्ञानं कर्म तृष्णा च ज्ञेयाः संसारहेतवः। स्थितोऽस्मिंस्त्रितये जन्तुस्तत्सत्त्वं नातिवर्तते BuddhaC. 12.23; एवमहङ्कारादिभिर्दोषैर्भ्राम्यमाणो नातिवर्तते प्रवृत्तिं सा च मूलमघस्य CaraS. iv. 5.10 (1941 Ed.); अखिलपदार्थपद्धतेर्व्यवहारानातिवर्तयेय तान् Stotrā. 8.6; RājTa.(Ka.) 4.413; तपस्विन इति ज्ञात्वा स रुद्रान् नातिवर्तते Yādavā. 16.40.; **2 Ai** to go beyond (the proper time), to exceed (the time-limit), to outlive, to survive पुष्पाणि च फलानि च। स्वकालं नातिवर्तन्ते तथा कर्म पुराकृतम् MahāBhā. xii. 174.12 = xiii. 7.23; स्वभावं वा समासाद्य न कश्चिदतिवर्तते (कालम्) Rāmā. iv. 24.6; आ षोडशाद् ब्राह्मणस्य सावित्री नातिवर्तते ManuSm. 2.38 (comm नातिक्रान्तकालं भवति); ViṣṇuSm. 27.26; पिब्रा वा यं प्रपाययेत्। सपुत्रदारः सधनस्त्रीन् पक्षान् नातिवर्तते ArthS'ā. iii. 236.4 (14.3); काकः कपोतो गृध्रो वा निलीयेद्यस्य मूर्धनि। क्रव्यादो वा खगः कश्चित् षण्मासान्नातिवर्तते VāyuP. i. 19.6; BrahmāṇḍP. ii. 74.221; शमप्रकोपयोः कालं न चायमतिवर्तते (विषमज्वरः) KāśyaS. 228B.23; AṣṭāHṛ. i. 7.68; न खलु दूरगतोऽप्यतिवर्तते महमसौ S'iśuVa. 6.19; तथा कर्तारः कर्माणि फलं च यच्छासनात् स्वं स्वं कालं नातिवर्तन्ते MuṇḍUBh. 338.8 (*on* ii. 2.7); S'aṅkhSm. 2.7; दोहकालं गवां दोग्धा नातिवर्तेत BhaviP. 33B.8 (i. 12.38); AdhyāRā. iv. 4.52; SūktiRa. 34.6 = Subhāṣi. 3082; कथामवगाह्यैतद्विच्छेदमिच्छन्तोऽनावश्यकापसरणव्याजवचनं विक्षेपः NyāyPari. 207.7; **2 Aii** to pass away, to elapse (time) दिवसश्चातिवर्तते। तन्न जानामि वार्ष्णेय यदि जीवति वा न वा MahāBhā. vii. 85.81; त्वयापि सुप्यतां भद्रे रजनी ह्यतिवर्तते MahāBhā. xiii. 20.48; त्वरते कार्यकालो मे अहश्चाप्यतिवर्तते Rāmā. v. 1.117; न मे दुःखं प्रिया दूरे न मे दुःखं हृतेति च। एतदेवानुशोचामि वयोऽस्या ह्यतिवर्तते Rāmā. vi. 5.5; Subhāṣi. 1193; सन्ध्यामुपासितुं वीर समयो ह्यतिवर्तते Rāmā. vii. 72.19; मदनुरोधात् क्रियतामुपनिबन्धोऽग्निसाक्षिकश्च। समयो नातिवर्तते MahāviC. 5.59(5) (150.12); एवमुक्तोऽसि वै देव कालश्चाप्यतिवर्तते PadmP. v. 16.126; प्रतिदिनं च लोकातीतस्नेहपुरःसरः कालोऽतिवर्तते Tantrākhyā. 60.21; PañcT. 1.54(34); 2.25(13); BṛKathāS'loSaṁ. 21.147; रामस्याभिषेकार्हः पुष्ययोगोऽतिवर्तते RāmāMañ. 62.25; इदानीं नित्यकृत्यानां क्षणो वो मातिवर्तताम् TriṣaS'aPuC. iii. 3.162; Hitopa. i. 74.4; Pañcā. 46.9; **2 Bi** to go beyond, to cross, to go ahead अदत्ता एवैते रथा अतिवर्तन्ते BaudhS'S. ii. 73.11; ii. 96.4; पराजेष्यमाणान् मृत्युरतिवर्तते, जेष्यन्तो मृत्युम् KauśiSū. 15.16; यातुधाना हि बहवः ···। त्वयाभियुक्तान् कौन्तेय नातिवर्तेयुरन्तिकान् MahāBhā. iii. 90.7; एष वातिकपण्डो वै प्रख्यातः सत्यविक्रमः। नाभ्यवर्तत यद्द्वारम् MahāBhā. iii. 130.13; (भरतः) हस्तिपृष्ठकमासाद्य कुटिकामत्यवर्तत Rāmā. ii. 65.11; iii. 40.28; यथा हि शकुनिः सर्वं दिवसमपि परिपतन् स्वां छायां नातिवर्तते CaraS. i. 19.5 (1941 Ed.); स्वरस्थानाच्च्युतो यस्तु स्वस्थानमतिवर्तते NārS'i. 1.6.20; यत्रातिवर्तते युग्यं वैगुण्यात् प्राजकस्य तु। तत्र स्वामी भवेद् दण्ड्यः MatsyaP. 227.95; ViṣṇuDhaP. ii. 72.79 (read प्राजकस्य for रजकस्य); DaṇḍaVi. 225.11; भर्त्रा विरहिता स्त्री च ···। देहलीं नातिवर्तेत BhaviP. 34A.15 (i. 13.2); **2 Bii** to proceed further, to progress, to pass out कथं वा मन्यते भीष्मो द्रोणो वा विदुरोऽपि वा। भवान्वात्र क्षमं कार्यं पुरा चार्थोऽतिवर्तते MahāBhā. iii. 9.12; यदा तु वारणोऽत्यर्थं द्रुतमध्वनि युज्यते। त्वरयातिप्रवृत्तस्य न मूत्रमतिवर्तते Hastyāyur. 258.24 (2.48); **3 A** to be different from, to change न धात्वर्थस्तथाविधत्वमतिवर्तते BhāvanāVi. 16.2; असत्ख्यातिरपि न विपरीतख्यातिमतिवर्तते NyāyMañ. i. 164.15; यत्तत्त्वकं स्याद् यद्वस्तु न तत्तदतिवर्तते BṛĀraUBhVā. i. 4.303; नगरस्थं तु गोज्ञानं स्मरणान्नातिवर्तते S'lokaVār. 10.51 (448.10); तदिदमाभाणकं लौकिकानां नातिवर्तते सार्थादपि तस्करा बहव इति NyāySu.(Ja.) 124B.12 (*on* i. 1.6); (यः) कृशोऽकस्माच्च जायते। प्रकृतिश्चातिवर्तेत स सप्ताहं न जीवति Hastyāyur. 626.13 (4.7); **3 B** to be beyond the scope of, to be outside the reach of, to depart from दोषाणां सः (ज्वरः) तु लिङ्गानि कदाचिन्नातिवर्तते SuśruS. vi. 39.62; यस्य एते षड्गुणास्तस्य न साध्यमतिवर्तते CaraS. i. 9.21 (1941 Ed.); ii. 8.34 (1941 Ed.) = AṣṭāSaṁ. i. 6.19 (1.2); पाण्डोः पुरोपरोधवैचित्री वाचामतिवर्तते पन्थानम् Jīvān. 144.2; तदा त एव ते भवन्तीति लक्षणं नातिवर्तन्ते AbhidhKoBh. 27.12 (*on* 1.39); विकारजातं विविधं त्रीन् गुणान्नातिवर्तते AṣṭāHṛ. i. 12.33; AgniP. 342.6; निर्निमित्ता न चोत्पत्तिः ··· बोधयन्न च शब्दोऽत्र प्रामाण्यादतिवर्तते S'lokaVār. 20.13 (684.2); गुणशब्दो यौगिको वा संनिहितं विशेषं नातिवर्तते BrahmSūBh.(Bhā.) 205.18 (*on* iii. 4.20); तथा चार्थं विषयं नातिवर्तते NyāySu.(Ja.) 247A.8 (*on* ii. 1.2); यदिदं विज्ञानं न प्रत्यक्षफलतामतिवर्तते NyāyMañ. i. 74.29; देशधर्मः ··· शक्यानुष्ठानतां नातिवर्तते VakroJī. 45.21; न त्रिविधं संबन्धमतिवर्तते AlaṅkāSa. 104.5; अयं च वस्त्वलंकाररसादिरूपतया भवन्न त्रैविध्यमतिवर्तते Ekāva. i. 13.198 (53.1); तथापि षट्पक्षीं नातिवर्तते TārkiRa. 315.19; **4** to outlast, to live beyond नैनं (चूर्णम्) प्राप्यातिवर्तन्ते रोगाः SiddhYo. 37.21; **5 A** to behave beyond limits, to misbehave सह भोज्यं सहार्थैः। आत्मा चैषामग्रतो नातिवर्तेदेवंवृत्तिर्वर्धते भूमिपालः MahāBhā. iii. 6.21; अपत्यलोभाद्या तु स्त्री भर्तारमतिवर्तते ManuSm. 5.161 = BṛDharmaP. ii. 8.5; **5 B** to go beyond the facts, to exaggerate कथमतिवर्तन्ते मन्युसंरब्धानि देवस्य जल्पितानि AdbhuDa. 1.15 (1)

**अतिवृत** (ati-vṛta) *adj.* **1** chosen by overlooking (someone) नातिवृतो याजयेत् BaudhS'S. iii. 197.6; **2** completely screened कालः सर्वेषु भूतेषु चरत्यविधृतः (v. l. त्यतिवृतः) समः MahāBhā. i. 1.189.

**अतिवृत्त** (ati-vṛtta) *adj.* [*f.* -ā] **1 Ai** gone far beyond the range of **ii** gone far beyond or a long way from **Bi** elapsed, gone, passed **ii** what has already taken place, past **iii** what is completed, over or finished **iv** what has passed away, lost, perished or disappeared **C** which has become mature or stale **2 i** who has committed an offence, guilty **ii** who has violated (rule etc.), who has deviated from **iii** surpassed, stolen a march over **3 i** very much round or circular **ii** occurring beyond circle **4** stiff, unpliable or unmalleable voice *n.* **i** committing of an offence **ii** act or occurrance in the past. **1 Ai** gone far

beyond the range or reach of, escaped तं (मृगम्) स पश्यति ··· अतिवृत्तमिषोः पातात् Rāmā. iii. 42. 5; येनेन्द्रियेण गृह्यते शब्दस्तस्य विषयभावमतिवृत्तोऽर्थो न गृह्यते NyāyBh. 115. 11 (on ii. 1. 53); हा कष्टमतिवृत्त एव धृष्टो दृष्टिविषयम् AvantiKa. 118. 11; चलतोऽश्मातिवृत्तश्चेद्विहायोद्देशसङ्गमा: BhāvanāVi. 54. 3; **1Aii** gone far beyond or a long way from ज्ञाननूलात्मकं क्लेशमतिवृत्तस्य मोहजम् MahāBhā. iii. 202. 15; संख्यामप्यतिवृत्तानां तज्जानां (वातजानाम्) हि प्रधानत: । अशीतिर्नखभेदाद्या रोगा: CaraS. vi. 28. 13 (1941 Ed.); लोमराजी ··· नाभिमतिवृत्ता मध्यत्वाय KāśyaS. 48A. 2; त्वम् ··· नातिवृत्तश्च यौवनात् MārkP. 61. 11; **1Bi** elapsed, gone, passed बीजाङ्कुरान् काल इवातिवृत्त: Saund. 16. 34; **1Bii** what had already taken place, past न ह्यतिवृत्तस्य ज्ञानस्य ग्राह्यविशेषणतया विषयभाव: PañcPā. 7. 21 (on i. 1. 1); ननिदानीमसदेव अतिवृत्तं ज्ञानमिति किं प्रमाणीभविष्यति Kāśi. i. 86. 21 (on 2. 39); न ह्यजातमतिवृत्तं वागमयदनुमानादि प्रत्यक्षपक्षनिश्चेयं क्षमते ĀgaPrā. 3. 9; चरमविज्ञानसमये प्राचां प्रत्ययानामतिवृत्तत्वात् TattvBi. 46. 6; अतिवृत्त: स वृत्तान्त: (भैमीस्वयंवर:) NaiṣC. 17. 118; न हि लोके पचनलवनादिक्रियायामतिवृत्तायां देवदत्त: पाचको लावको न भवति TattvPradi.(Ci.) 91. 2; तस्यातिवृत्तस्य स्मृतिविपरिवर्तिनोऽपि न अनुमियङ्गत्वम् TarkSaṁ.(Ā.) 90. 20; दृश्यमाने तु गवये वाक्यमतिवृत्तमेव MānaMe. 112. 8; Vaij. 273. 1; MediK. 100. 161; **1Biii** what is completed, over or finished अतिवृत्तमेव हि सामिधेनीनां प्रकरणम् S'ābaBh. 736. 3 (on iii. 1. 21); नातिवृत्तस्य षडहस्येति S'ābaBh. 2001. 19 (on x. 6. 30); अतिवृत्ते उपनयने स्वकाले तस्य (केशान्तस्य) विधानात् ManuBh. i. 111. 5 (on 2. 68); **1Biv** passed away, lost, disappeared or perished यदि नाम कलङ्क इन्दुलेखामतिवृत्ते लघयेत चापि भावो Bhaṭṭi. 10. 39; दाशरथ्यादीनामनुत्पन्नातिवृत्तानां च किमिति ··· संबन्ध एव न स्यात् PrakaPañ. 99. 3; एवं विनष्टस्यापि अजातातिवृत्तयोरनतिभेदात् Kāśi. ii. 87. 14 (on 5(2). 189); अनुभूयातिवृत्तश्चेत्स्नेहो मध्य: प्रकीर्तित: BhāvPra.(S'ā.) 80. 20(4); **1C** which has become mature or stale पाकेऽतिवृत्ते तुषिरस्तनुत्वग्दोषभक्षित: AṣṭāSaṁ. i. 184. 25 (1. 38); मद्यं स्वानद्योपान्वितमतिवृत्तमजातम् ··· पीतवतो मद्यमूर्च्छां भवति Hastyāyur. 96. 18 (1. 13); विपन्नं चातिवृत्तं च मद्यं मेदकमेव च । वारणेभ्यो न दातव्ययतिमात्रं च यद् भवेत् Hastyāyur. 665. 15 (4. 19); **2i** who has committed an offence, guilty नृशंसेनातिवृत्तेन त्वया मे निहत: पिता MahāBhā. x. 33*(1); (खर:) अतिवृत्तो हत: Rāmā. iii. 48. 13; शर्मिष्ठा यातिवृत्तास्ति दुहिता वृषपर्वण: । त्वयोऽस्यां जनिता: पुत्रा राज्ञा MatsyaP. 32. 28; **2ii** who has deviated from प्रमाणान्यतिवृत्तो हि वेदशास्त्रार्थनिन्दक: MahāBhā. iii. 32. 18; य: समाचार उपादेय: ··· तस्मादतिवृत्तोऽपि (नर:) GītāBh.(Rā.) 483. 2 (on 9. 30); **2iii** surpassed, stolen a march over शर्मिष्ठयातिवृत्तास्मि दुहित्रा वृषपर्वण: । त्वयोऽस्यां जनिता: पुत्रा: MahāBhā. i. 78. 27; **3i** very much round or circular ध्यायेत्तत्त्वं देवेशि ··· अतिवृत्तघनोत्तुङ्गस्निग्धपीनपयोधराम् SivaP. vi. 7. 67 (479A. 16); **3ii** gone beyond the circle द्वारादिष्वतिवृत्तस्य दिक्सूत्रस्य तु सङ्गसे PauṣkS. 7. 62; **4** stiff, non-pliable अप्रशस्ता अपि स्वरास्तत्रैवोक्ता: ··· अतिवृत्त: स्तब्ध: ViraMi.(Lakṣaṇa.) 32. 11; **n. 1** committing an offence मयातिवृत्तमेतत्ते यन्मां चोदयसि प्रियम् MahāBhā. i. 92. 8; **ii** act or occurrence in the past नन्दनं विविधोद्यानम् ··· अतिवृत्तमिवाचिन्त्यम् ··· स ददर्श Rāmā. v. 13. 11.

**अतिवृत्तकथन** (ativṛtta-kathana) *adj.* who tells about a happening in the past अतिवृत्तकथन: ··· वृद्धो गृहे ग्लायति SaduktiKa. 311. 31.

**अतिवृत्तकर्मानुसार** (ativṛttakarmānusāra) [Instr.] in accordance with the past action अतिवृत्तकर्मानुसारेणेश्वरे फलदातरि श्रुते नापूर्वकल्पनावकाश: PrakaVi. 804. 9.

**अतिवृत्तत्व** (ativṛtta-tva) *n.* the state of being over अनुमितिसितज्ञानस्यातिवृत्तत्वात् ĀtmaSi. 44. 13.

**अतिवृत्तधामन्** (ativṛtta-dhāman) *adj.* whose glory is beyond (the range of) का ते स्तुति: स्तुतिपथादतिवृत्तधाम्न: MahāviC. 4. 29.

**अतिवृत्तपुरीषता** (ativṛttapurīṣa-tā) *f.* the state of (a disease characterised by) the retention of the faeces अतिवृत्तपुरीषताबुभुक्षादौर्बल्यम् CaraS. ii. 3. 15 (1941 Ed.) (comm. उदावर्त:)

**अतिवृत्तवर्त्मन्** (ativṛtta-vartman) *adj.* having passed beyond the sphere of कोऽप्येष वाङ्मनसयोरतिवृत्तवृत्ति-(v. l. अतिवृत्तवर्त्मा)र्भाव: हुताशनमयश्च तमोमयश्च AnargharRā. 4. 68.

**अतिवृत्तवृत्ति** (ativṛtta-vṛtti) *adj.* having passed beyond the sphere of कोऽप्येष वाङ्मनसयोरतिवृत्तवृत्तिर्भावो हुताशनमयश्च तमोमयश्च AnargharRā. 4. 68.

**अतिवृत्तसंकीर्तन** (ativṛtta-saṅkīrtana) *n.* statement of the past पूर्वेष्वधिकरणेष्वतिवृत्तसंकीर्तनस्य ··· प्रतिपत्तिसौकर्यार्थोऽनुवाद: S'ivārkaMaDi. ii. 243. 18 (on iii. 2. 11)

**अतिवृत्ति** (ati-vṛtti) *f.* **i** excessive action अतियोगोऽतिवृत्तिस्तु वेगोदीरणधारणम् AṣṭāHṛ. i. 12. 40; **ii** name of a metre तथातिवृत्तिसंज्ञं च विंशतिस्त्रैकवर्जिता ViṣṇuDhaP. iii. 3. 6; **iii** action overcoming (the lover) अतिवृत्ती रतिविरतौ पुंसोऽनुदयस्य लक्षणान्याहु: KandaCū. ii. 8. 21; **iv** act of impudence अतिवृत्तिमवेक्ष्य तस्य घोराम् ··· सभासदस्ते ··· क्षणमालेख्यसमर्पिता इवासन् Yādavā. 15. 75; **v** transgression, violation परिणयविषय: कुत: साक्षीकृत्येह ये पुन: शिखिनम् । आचार्याणां वचनादतिवृत्तिं न प्रयान्त्येते KandaCū. iii. 5. 13.

**अतिवृत्तितस्** (ativṛtti-tas) *adv.* due to transformation आसादितविशेषणामप्यूनामतिवृत्तित: । एकाकारविवेकेन नैकैकप्रतिपत्तय: NyāyVi. 2. 316 (comm. स्वरूपातिक्रमेणान्यथापि प्रवृत्त:)

**अतिवृत्य** (ativṛt-ya) *ger.* having crossed पदैव बाल्यमतिवृत्य विवर्तमान: शृङ्गारसीमनि तरङ्गितमातनोति KāvyPra. 436. 2; पञ्चाशदब्दमधुना स्ववयोऽर्धरूपमेकं परार्धमतिवृत्य हि वर्तते ऽसौ Nārāy. iii. 8. 4.

**अतिवृद्ध** (ati-vṛddha) *adj.* [*f.* -ā] **i** grown very much, greatly, increased, very plump, very big or vast [*lit.* and *fig.*] अथातो भस्मन एवातिवृद्धस्य मीमांसा । भस्म चेदतिवर्धेत स उपकल्पयेत BaudhS'S. ii. 16. 18; तां दृष्ट्वा राघव: क्रुद्धां विकृतां विकृताननाम् । प्रमाणेनातिवृद्धां च लक्ष्मणं सोऽभ्यभाषत Rāmā. i. 25. 9; तथावदेवैव न ··· सेतुं नदीवेग इवातिवृद्ध: ··· यास्यामि तावत् BuddhaC. 13. 6; पश्यतु देव: पुरुषस्य हि सेवां प्रति दुर्जनत्वेनातिवृद्धया दुर्गन्धवामिनुस्त्रीक्रियमाणस्य ··· किं प्रायश्चित्तम् HarṣaC. 297. 4; 229. 13; मधुपूरपरिपुतेऽङ्गनानामतिवृद्धोऽप्यवतीर्य चित्तमार्गे । विजहार निरर्गलं प्रकोप: Kapphiṇā. 13. 38; अतिवृद्धमपि सुन्दरीपरिवृतकण्ठम् ··· जलनिधिमपश्यदचिन्त्यश्च VāsaDa. 271. 2; 47. 2; सुकविकथामाधुर्यप्रबन्धसेवातिवृद्धजाड्यानाम् । पिचुमन्दकन्दलीष्विव भवतु रुचिर्नेदिग्धोक्तिषु बुधानाम् YaśasCam. i. 7. 5; अतिवृद्ध: कामस्तस्मान्नास्ति यत्र करोति NitiVā. 10. 114; अतिवृद्धं प्रवाहं तम् ··· आलोक्य नियमासीनामाहु: सत्यस्तदाम्बिकाम् SkandP. i(3A). 4. 22; प्रक्रामसुङ्गैः पलितैरिव यशोभि: शोभितयातिवृद्धया राजश्रियाधिष्ठिते प्रतिष्ठिते ··· सिंहासने ··· चिन्तयितुमारेभे UdaySuKa. 7. 20; यान्त्यां कनिष्ठिकामूलाद् रेखायां तर्जनीं प्रति । वृद्धि: स्यादतिवृद्धायाम् PārśvC. 7. 615; **ii** very old, advanced in age श्रोतव्यं खलु वृद्धानामिति शास्त्रनिदर्शनम् । न त्वेवाप्यतिवृद्धानां पुनर्बाला हि ते मता: MahāBhā. v. 165. 24; vi. 73. 3; अतिवृद्धानभार्याश्च ··· परिविन्दन्न दुष्यति GobhiSm. 1. 73; अथ साक्षिण: । न राजश्रोत्रिय ··· 'साहसिकातिवृद्ध' ··· 'रागान्धा: ViṣṇuSm. 8. 2; जडातिवृद्धबालाश्च विज्ञेयास्तु निरुत्तरा: BṛhaspaSm. 27. 173; त्वं नातिवृद्धो वयसा ··· पृथिवीमटसि द्विज MārkP. 61. 11; गाधिरप्यतिरोषणायातिवृद्धाय ब्राह्मणाय दातुमनिच्छन् (सत्यवतीम्) ··· कन्याशुल्कमयाचत ViṣṇuP. iv. 7. 14; मयप्रस्यातिवृद्धस्य ··· वाक्यानि जातु कार्याणि नो बुधै: PadmP.(Ra.) 47. 63; गतोऽहं यत्र दम्पती । अतिवृद्धावन्धदृष्टौ AdhyāRā. ii. 7. 37; बालस्य चातिवृद्धस्य ··· सर्वाङ्गे जायते शोफ: HāriS. ii. 4. 21; बालातिवृद्धकृशदुर्बलशोषिणां च, कुष्ठातिसार इति तं परिवर्जयेत KalyāKā. 9. 89; ऋत्विजो वृणुयात् ··· नातिवृद्धो नातिबाल: ManuBh. ii. 24. 28 (on 7. 78); त्वयाप्यतिवृद्धो मार्गदर्शको मे निरूपणीय: TilaMañ. 20. 21; अतिवृद्धे चातिदीने ··· पद्मसु कन्या न दीयते PadmP. v. 49. 98; न वामयेत् ··· स्थूलक्षतक्षीणकृशातिवृद्धान् SiddhYo. 73. 19; अतिवृद्धो महानीम: ··· तेन पृष्ट: GaṇeP. i. 76. 16; अतिवृद्धामतिकृशामतिबालां च रोगिणीम् । हत्वा पूर्वविधानेन चरेदर्धव्रतं द्विज: AgniP. 173. 15; शीघ्रमाजगाम मुनीश्वर: ··· अतिवृद्धो महायोगी BrahmVaiP. iv. 47. 134; iv. 40. 73; iii. 9. 2; निर्बीजा तु पुनर्दीक्षा ··· अतिबालातिवृद्धातिरुग्णानाम् ĪśānS'iPa. ii. 16. 11; प्रश्नवस्तोऽतिवृद्ध: (ऋत्विक्) Aparā. 838. 11 (on 2. 265); युवा नातिबालो नातिवृद्ध: ··· एते श्राद्धसम्पद: DīpKa. 26. 20 (on 1. 219); जीर्णत्वादतिवृद्धानां क्लेशाय त्रिरजीवितम् DaśāVaC. 5. 43; स्वैम पुनस्त्वेव येनातिवृद्धोऽपि श्रेय: ··· उर्वी बभार UdaySuKa. 94. 3; लोभ: पितातिवृद्ध: ··· पुत्रो दम्भस्य हुंकार: KalāVi. 1. 64; ये तु ··· अतिवृद्ध' ··· 'कुहकचोरा: तेषां कालप्रतीक्षणेन परिवेदने तु न दोष: SmṛtiCan. v. 174. 2; iv. 605. 8; दुःखावैवातिवृद्धस्य विलासात्तरुणीकृता: BhojPra. 24. 29; वयोऽतिगानतिवृद्धान् ··· आश्रिपेद् ManvaVi. 525. 18 (on 4. 141); शुक्रादयोऽतिवृद्धाश्च स्त्रियश्च ··· मन्त्रं भिन्दति ManvaMu. 273. 24 (on 7. 150); 273. 18 (on 7. 149); वयोऽतिगा अतिवृद्धा: ViraMi.(Rājanīti.) 309. 19; पवनसुतवर: ··· द्विजोऽभूत् ··· अतिवृद्ध: MahāN. 5. 72; अतिवृद्धस्य वा ··· अत्राधिकारो न तु समर्थशरीरादे: TristhaSe. 54. 3; युवा वृद्धोऽतिवृद्धो वा ··· । अभ्यासात्सिद्धिमाप्नोति सर्वयोगेष्वतन्द्रित: HaṭPra. 1. 64; तरुण इत्यनेनातिवृद्ध: ··· निषिध्यते ViraMi.(Lakṣaṇa.) 630. 9; यदा तूत्पन्नपुत्रोऽतिवृद्धो वा कन्यां न लभते, तदा भवत्येव तस्यापि स्नातकव्रताचरणम् ViraMi.(Saṁskāra.) 748. 9; अयोग्या अप्राप्तयौवनातिवृद्धा च BālamBha. i. 224. 17 (on 1. 81); iii. 165. 30 (on 3. 265); उदुम्बरफलं मांसम् ··· । हयस्य चातिवृद्धस्य करोति परमं सुखम् AśvaCi. 13. 27; 13. 6; **iii** over-accumulated, far advanced or enhanced अत ऊर्ध्वमतिवृद्धानां दोषधातुमलानां लक्षणं वक्ष्याम: SuśruS. i. 15. 13; हीनमध्यातिवृद्धानां दोषाणां तु यथाक्रमम् । हीनमध्याधिकैरेवं रसै: कुर्यादुप-

क्रमम् KāśyaS. 263A. 21; विगतामातिसारम् ... रक्तसहितमतिवृद्धम् । मधुना सह शमयत्यरलुः HāriS. iii. 3. 23; विसूच्यामतिवृद्धायां पार्ष्ण्योर्दाहः प्रशस्यते AṣṭāHr. i. 8. 17; अनिलोऽतिवृद्धः । ...वृद्धिं स्मृतिं चाप्युपहन्ति शीघ्रम् RugVi. 20. 7; 60. 13; दुष्टे च कोष्ठे कृमिभिर्मनुष्यं न नमयेद्वर्चसि वातिवृद्धे SiddhYo. 73. 20; *m.* 1 name of the elephant supporting the earth in the western quarter तथा च गर्गः-चत्वारः पृथिवीं नागा धारयन्ति चतुर्दिशम् । वर्धमानः सुवृद्धश्चातिवृद्धश्च पृथुश्रवाः । वर्धमानो दिशं पूर्वां सुवृद्धो दक्षिणां दिशम् । पश्चिमामतिवृद्धस्तु सौम्याशां तु पृथुश्रवाः comm. *on* BrSaṁ. 32. 1 (VSS. 1895); 2 (Tantra) name of a defective *mantra* चतुःशतान्यथारभ्य यावद्वर्णसहस्रकम् । अतिवृद्धः प्रयोगेषु परित्याज्यः सदा बुधैः SāraTi. 2. 108; 2. 70; चतुःशतं समारभ्य यावद्वर्णसहस्रकम् । अतिवृद्धः स मन्त्रस्तु सर्वशास्त्रेषु वर्जितः cited by Apte [Kośas give अतिवृद्ध as the synonym of ज्येष्ठ MediK. 40. 5; AnekāSaṁ. 2. 104; जिन ViśvaPra. 85. 1; ViśvaLoK. 186. 8; DharK. 1364; ज्यायस् Vaija. 228. 7; दशान्त NānārthaMañ. 792; दशमिन् ŚabdaRa. (Su.) 3. 4; KośaKaTa. 1. 4986; 2. 4632; ParyāŚaRa. 2. 105; ŚabdaRaK. 187. 2]

**अतिवृद्धक** (ativṛddha-ka) *m.* name of quick-silver medically treated in a particular way षड्गुणे जारिते त्वन्ने वृद्धश्चैव रसोत्तमः । सप्ताष्टगुणिते चाभ्रसत्त्वे जीर्णेऽतिवृद्धकः RasPraSu. 1. 106.

**अतिवृद्धगुदज** (ativṛddha-gudaja) *n.* excessively developed piles वार्ताकफलम् ... योऽस्ति । पिबति त तक्रं नूनं तस्याश्चेवातिवृद्धगुदजानि । यान्ति विनाशम् SiddhYo. 5. 15.

**अतिवृद्धता** (ativṛddha-tā) *f.* extreme old age अतिवृद्धतया मूत्रोच्चारादिशौचं कर्तुं न शक्नोति...एवंविधेन भृग्वादिभिरात्मघातः कर्तव्यः HārLa. 117. 3.

**अतिवृद्धत्व** (ativṛddha-tva) *n.* extreme old age त्वं नो दत्तोऽतिवृद्धत्वे नीतोद्रव्यं स्वयंसुवा GopāKeCan 63. 10.

**अतिवृद्धराग** (ativṛddha-rāga) *adj.* excessive passion नरकपाते फलेऽतिवृद्धरागान्धो न निवर्तते TātpaṬ. (U.) 101. 16 (*on* 2. 213)

**अतिवृद्धविकारिन्** (ativṛddha-vikārin) *adj.* whose disease is in a very advanced stage नातिवृद्धविकारिणाम् (रोगिणाम्) । ... शमनं हितमुच्यते KāśyaS. 238A. 36.

**अतिवृद्धा** (ati-vṛddhā) *f.* a very old cow [Apte]

**अतिवृद्धि** (ati-vṛddhi) *f.* 1 excessive development or growth, great increase अतिवृद्धिं तथा वास्ताम् (वान्तम्) अक्षिव्यापत्तिजान् विदुः BhelaS. 20. 8(1. 11); अनङ्ग नीतोऽसि मयातिवृद्धिम् वा Śāk. 3. 6; स्नेहजातिरतिवृद्धिमागता JānaHa. 8. 49; तत्सेवातोऽतिवृद्धिः स्यात् BrĀraUBhVā. (Sambandha.) 345; गतातिवृद्धिं ल्त्वलीलतेव ... परमारलक्ष्मीः NavaSāC. 1. 77; शुभकृद्वत्सरे सर्वसस्यानामतिवृद्धयः NāraS. 3. 52; II great prosperity विपापङ्कजिनीविकाशि विदितं राज्ञोऽतिवृद्ध्यै स्फुरद् वृत्तं विश्वविबोधनाय भवतात् PrabhāC. 212. 7; [अतिवृद्धि is given as one of the meanings of the word अभिस(ष्य)न्द AnekāSaṁ 4. 137; ViśvaPra. 81. 47; AnekāTi. 4. 18]

**अतिवृद्धिकलुष** (ativṛddhi-kaluṣa) *adj.* dirty on account of excessive accumulation (of dust) अतिवृद्धिकलुषः ... पार्थिवो रजःसन्दूहः AvantiKa. 68. 13.

**अतिवृद्धितस्** (ativṛddhi-tas) *adv.* due to excessive growth इत्यासीदतिवृद्धितो मृगदृशां विक्षिप्तलक्ष्मा मदः SrīKaC. 14. 58.

**अतिवृद्धिद** (ativṛddhi-da) *adj.* granting great prosperity रुचकम्... शूद्राणामतिवृद्धिदम् SamarāSū. 19. 170.

**अतिवृद्धिपत्र** (ativṛddhi-pattra) *n.* a kind of surgical instrument छेद्यं स्यादतिवृद्धिपत्रमुदितम् KalyāKā. 21. 53.

**अतिवृध्** (ati-vṛdh-) I. Ū. I to go or do beyond (the prescribed limit) तस्मात् पादावनेज्यं नातिवर्धते PañcBr. vi. 1. 11; II to outgrow, to grow beyond (limit) स यदा तामतिवर्धा अथ कर्पूं खात्वा तस्यां मा बिभरासि ŚatBr. I. viii. 1. 3; भसा चेदतिवर्धते स उपकल्प्यते BaudhŚS. ii. 16. 18; तस्य कोपोऽस्यतिवृधत् MahāBhā. iv. 54. 16; सूर्यावर्तशिरोरोगः पूर्वाह्णे चातिवर्धते ĪśānŚiPa. i. 45. 144; पादाः शूयन्ति नवमे (मासि) तस्याथश्चातिवर्धते AśvaVai. 9. 10.

**अतिवृन्दिष्ठ** (ati-vṛndiṣṭha) *adj.* most praise-worthy आसीत्प्रेयान्मेऽतिवृन्दिष्ठः DvyāśraKā. 20. 54.

**अतिवृष्** (ati-vṛṣ-) I. P. to rain violently [PW, MW]

**अतिवृष** (ati-vṛṣa) *adj.* excessively virile बस्तयः। ... कुर्वन्त्यतिवृषं नरम् CaraS. viii. 12. 68 (1922 Ed.)

**अतिवृषता** (ativṛṣa-tā) *f.* excessive virility प्रासस्तेनातिवृषतां श्रमयेद्धनिशातम् AṣṭāSaṁ. ii. 156. 12 (5. 5)

**अतिवृषल** (ati-vṛṣala) *m.* Śūdra par excellence अति । अतिब्राह्मणः अतिवृषलः MahāBh. i. 416. 10 (*on* ii. 2. 18)

**अतिवृष्ट** (ati-vṛṣṭa) *adj.* excessively showered प्रावृषीवातिवृष्टानि शुक्लानि धरामृताम् MahāBhā. iii. 167. 26; पुण्याहमहावोपाख्यः ... विरजस्कोऽभि-(v. l. ति BI. 16. 31)वृष्टश्च (स्कन्धावारः) NītiSā. 17. 31.

**अतिवृष्टि** (ati-vṛṣṭi) *f.* I excessive rain or shower अत ऊर्ध्वं प्रवक्ष्यामि ...अतिवृष्टिम् AVPari. LIX. 1. 3; LIX. 1. 14; अधर्मः संप्रवर्तन्ते ... अवृष्टिरतिवृष्टिश्च MahāBhā xii. 91. 34; ArthŚā. ii. 102. 2 (9. 7); गर्भसमयेऽतिवृष्टिर्गर्भाभावाय निर्निमित्तकृता BrSaṁ. 21. 32; अतिवृष्टिरवृष्टिश्च विषमा वृष्टिरीतयः PadmP. (Ra.) 20. 95; तारणे सस्यसंपत्तिरतिवृष्टिस्तथा जयः AgniP. 139. 6; अतिवृष्ट्यामनावृष्ट्याम् ... वैष्णवी शान्तिरिष्यते ViṣṇuDhaP. ii. 133. 8; अतिवृष्टि-(रनावृष्टि)रेवासुरीवृष्टिरुच्यते PañcT. 1. 59 (20) (63. 1); उल्कापाते महावाते विनावृष्ट्यतिवृष्टिषु ŚivaP. iii. 12. 45 (310A. 11); अकस्मादथ संजाते काण्डच्छेदेऽतिवृष्टिभिः KathāSaSāg. i. 6. 46; स्वाम्यगाद् यत्र नो तत्र वैरमारीत्यवृष्टयः । दुर्भिक्षमतिवृष्टिर्वा TriṣaŚaPuC. i. 3. 688; वृष्ट्यतिवृष्टिकवन्धप्रभृतीनामद्भुतानि (वक्ष्यति) AdbhuSāg. 3. 14; निवारितास्तेन महीतलेऽखिले निरीतिभावं गमितेऽतिवृष्टयः 1. 11; अतिवृष्टयो वद्यधिरे सजलैर्नयनैः परं रिपुकुरङ्गदृशाम् PṛthviVi. 3. 18; भूः पङ्किलातिवृष्टिश्च RājTa. (Śrī.) 3. 69; II excessive shedding (of tears) अश्रूणामतिवृष्टिभिर्द्विगुणयत्यर्कात्मजा UjjvaNiMa. 92. 4.

**अतिवृष्टिकर** (ativṛṣṭi-kara) *adj.* causing excessive rain अन्तःकोपकरं स्यात् सुभिक्षदं नातिवृष्टिकरम् (मध्यविदरणम्) BrSaṁ. 5. 89; धनिष्ठायं पण्णक्षत्रमतिवृष्टिकरम् ViṣṇuDhaP. ii 166. 0 (292A. 8)

**अतिवृष्टितस्** (ativṛṣṭi-tas) *adv.* as compared to excessive rain निराजीवत्वादवृष्टिरतिवृष्टितः (पापीयसी) ArthŚā. iii. 16. 2 (8. 2)

**अतिवृष्टिद** (ativṛṣṭi-da) *adj.* producing excessive rain वारुणम् ... अतिवृष्टिदम् BrSaṁ. 32. 22.

**अतिवृष्टिभीरु** (ativṛṣṭi-bhīru) *adj.* apprehensive of excessive rain अतिवृष्टिभीरुरुदधिः पयोमुचामुपयुक्तमेव सलिलं प्रयच्छति PṛthviVi. 9. 8.

**अतिवृष्टिविघटित** (ativṛṣṭi-vighaṭita) *adj.* damaged or broken by excessive rain पल्लवकनाम्ना कर्मकृतां वरेण ...विरचितान्यतिवृष्टिविघटितानि कुल्यासु तटानि UdaySuKa. 27. 22.

**अतिवृष्टिविशेष** (ativṛṣṭi-viśeṣa) *m.* speciality (= special effect) of excessive rain अतिवृष्टिविशेषो बार्हस्पत्ये 'सप्तरात्रं यदा वर्षेत् प्रवृद्धः पाकशासनः। अनृतौ तस्य देशस्य प्रधानानां वधो ध्रुवम्' AdbhuSāg. 376. 14.

**अतिवृष्टिसंभव** (ativṛṣṭi-sambhava) *adj.* arising from heavy or excessive rain अचिन्तयन्त्यभिनववर्षविद्युतस्त्वमागता सुतनु (v. l. न मानसे भयमतिवृष्टिसंभवं पराक्रमैस्त्वसि) यथा प्रभावती NāṭyaŚā. 15. 82.

**अतिवृष्टिहत** (ativṛṣṭi-hata) *adj.* injured (damaged, killed) by excessive or heavy rain ग्रामघाते शरौघेण वेश्मभङ्गनिपातने । अतिवृष्टिहतानां च प्रायश्चित्तं न विद्यते ParāSm. 9. 43; (रणाङ्गणम्) अतिवृष्टिहतं देशमिव प्रोज्झितमानवम् YogVā. iii. 38. 45.

**अतिवृष्य** (ati-vṛṣya) *adj.* [*f.* -ā] strongly aphrodisiac, very stimulating तिलाश्वगन्धाकपिच्छुमूलैर्विदारिकाषष्टिकपिष्टयोगः । आजेन पिष्टः पयसा घृतेन पक्त्वा भवेच्छष्कुलिकातिवृष्या BrSaṁ. 76. 9; वार्ताकः ... नृष्टोऽतिवृष्यस्तथा KalyāKā. 4. 37; 4. 30; 4. 41; 5. 31; वैक्रान्तः ... आयुष्प्रदश्च बलवर्णकरोऽतिवृष्यः RasRaSa. 2. 57; 2. 146; वृष्यात् परमतिवृष्यं रसायनं चूर्णरत्नमिदम् RaseCin. 8. 48.

**अतिवृ** (ati-vṛ-) IX. U. I to choose overlooking (the legitimate claimant) तस्य चेत् पूर्वपुरुषैर्वृताः स्युस्तानेव नातिवृणीत BaudhŚS. iii. 195. 11; II to choose in excess न पञ्चातिवृणीत इति विज्ञायते ApaŚS. xxiv. 5. 7.

**अतिवेग** (ati-vega) *adj.* [*f.* -ā] A very fast or swift, moving very speedily (both animate and inanimate) तस्य (हनूमतः) लाङ्गूलमाविद्धमतिवेगस्य पृष्ठतः । ददृशे गरुडेनेव ह्रियमाणो महोरगः Rāmā. v. 1. 31; v. 42. 15; भूतस्ते सेक इवातिवेगा धावन्ति नाड्यो हि यथाध्विगामाः NāḍīVi. 83; नदीषु नातिवेगासु ... कुर्यात् पुंसां निमज्जनम् ViraMi. (Vyavahāra.) 205. 2; भूप राघव, (नराणाम्) मनांसि समानि त्वदुरुपटलैरतिवेगैः AlaṅkāMañ. 13. 5; B suffering from fits or paroxys क्षीणेन्द्रियः पार्श्वरुजोऽतिवेगः शूलावृतो वा गलके च बद्धः । निद्राकृतिर्भिन्नवर्चो मनुष्यो वातेन कासश्च भवेत् प्रकाशः HāriS. iii. 12. 9.

**अतिवेग** (ati-vega) *m.* 1 great force, impetuosity or speed खरत्वं चातिवेगश्च का(रौ)क्ष्यं चाप्यनिलात्मकम् BhelaS. 15. 23 (1. 9); (राजा) तमतिवेगावलाघवानुकृतमारुतान्तरं तुरङ्गमनुसरन्ला: ... रयातिरेकमाकलय्य तुरङ्गया: ... अकस्मादात्मानमेकत्र महावने पतितं व्रजन्तमद्राक्षीत् UdaySuKa. 127. 27; यदयमतिवेगवर्धितसंभ्रमविगणितवेषविपर्यासः ... अभिधावत्यशोकवनिकाभ्यन्तरम् AdbhuDa. 6. 19 (2); KośaKaTa. 2. 7105; **अतिवेगात्** (ati-vegāt) [Abl.]

with great force or speed, very quickly or impetuously or forcefully तैश्चातिवेगात् स तथाविधोऽपि नीतः शमं वह्निः MahāBhā. viii. 1040*(3); कन्दर्पो योगयुग्मं मेत्तुं सर्वं समाधिमतिवेगात् । आकृष्य चापमधिकं नो मुञ्चति सायकं चित्रम् BhāvS. 86; SūryaS. 22; गणपतिरतिवेगात् प्रस्थितो नाकमार्गम् HarVi. 41. 62; RugVi. 15. 11; आकर्ण्य वा मदीयमाक्रन्दमतिवेगादगणितनिजश्रमो नागच्छेत् TilaMañ. 314. 9; 243. 6; DeviBhāP. i. 5. 64; RāmaCam. 6. 84; रुधिरम् ... अतिवेगात् प्रवृत्तं तु यथैवं नैव तिष्ठति । शिरावेधं तदा प्राज्ञो माषकल्केन लेपयेत् AśvaVai. 15. 10; PraboSu. 231; VetāPañ.(Jam.) 62. 23; उदपतदतिवेगादुग्रकर्मा कपीन्द्रः MahāN. 9. 40; NīlaVi. 83. 17; **अतिवेगेन** (ati-vegena) [Inst.] with great force or speed, very quickly, very swiftly or impetuously or forcefully सः ... अतिवेगोऽतिवेगेन ... । परिघं पातयामास जम्बुमालेर्महोरसि Rāmā. v. 42. 15; ततो हतोऽतिवेगेन प्रहस्तो गदया Rāmā. vii. 32. 47; मया स विद्धो बाणेन ...। अपक्रान्तोऽतिवेगेन MārkP. 21. 49; भ्रामितस्त्वातिवेगेन नारदांशुमतोऽपि हि । मुजौ हस्तत्वमापन्नौ VāmaP. 5. 14; 9. 11; हृदयस्पन्दनमतिवेगेन AbhinBhā. i. 327. 14 (on 6. 70); धावंस्ततोऽतिवेगेन ... स शरवनेगामोचि चित्तं धैर्येण नो पुनः RājTa.(Ka.) 3. 406; YogVā. iii. 53. 13; RājTa.(Ka.) 3. 406; GaṇeP. ii. 153. 32; मर्दिता पिष्टिः ...। प्रद्रवत्यतिवेगेन स्वेदिता RasRaSa. 9. 90; भोगोत्कर्षातिवेगेन क्षयं यान्ति क्षितीश्वराः SūktiRa. 40. 20; यद् धीमतातिवेगेन व्यासेन सहसा बहु । भाषितं शतशस्तेन तत्रैव च रुचिं कुरु Subhāṣi. 2330; 2 one of the epithets of Śiva ईशानाय श्मशानाय अतिवेगाय वेगिने । नमोऽस्तु ... लिङ्गिने LiṅgaP. i. 18. 5.

**अतिवेगकटाक्ष** (ativega-kaṭākṣa) *m.* very quick or forceful side-glance सः ... अतिवेगकटाक्षेण लोलां कामातिपीडिताम् । ... तामुवाच प्रियां शान्ताम् BrahmVaiP. i. 10. 27.

**अतिवेगगति** (ativega-gati) *f.* very quick or speedy gait परा नृपालोकनपारवश्यात्र लाक्ष्या रञ्जयति स पादौ । अलक्तरागादपि रक्तिमानमग्रापतुस्तावतिवेगगत्या Acyutarā. 12. 34; *adj.* having a very speedy gait, very swift of foot, marching very fast अतिवेगगतौ दीर्घजङ्घालो जाङ्घिकोऽपि च ParyāSaRa. 2. 336.

**अतिवेगतरा** (ativega-tarā) *adj.* (*f.*) very fast or quick धारागतिः सा विज्ञेया यातिवेगतरा मता SukraNi. 4 (7). 145.

**अतिवेगतस्** (ativega-tas) *adv.* very quickly or speedily, with great force or speed स (नाराचः) तस्य हृदयं भित्त्वा प्रविवेशातिवेगतः । ...धरणीतलम् MahāBhā. ix. 13. 49; अनिलं रेचयद् योगी न मन्दं नातिवेगतः BṛPaRāSm. 12. 175 (+43); JayāS. 26. 35; BrahmāṇḍP. iii. 22. 99; आलोक्य सुन्दरम् । निश्चेतनं पतिं नार्यो निपेतुरतिवेगतः PadmP.(Ra.) 77. 11; गता हयैर्म्योऽप्यसवोऽतिवेगतः RāghPāṇ.(Dha.) 6. 43; SkandP. ii(1). 22. 29; अहङ्कारो भवेद् यस्य तस्य नाशोऽतिवेगतः BṛNāraP. 7. 38; ĀdiP. 28. 20; एतच्चूर्णीकृतं सर्वम् ... छर्दिं हन्त्यतिवेगतः SārṅgaS. ii. 6. 146; सुनन्दासुनुना दण्डो भ्रम्यमाणोऽतिवेगतः । ... भ्रमिं व्यधित चक्षुषाम् TrisaSaPuC. i. 5. 690; RasRaSa. 3. 41; बिलद्वारे ततः सर्पाः प्रणश्यन्त्यतिवेगतः SārṅgaPa. 2941; 2988.

**अतिवेगनिपीत** (ativega-nipīta) *adj.* drunk in a great hurry or very quickly अतिवेगनिपीतजलधिजलशङ्खमालामिव बलाकाच्छलादुद्वमन्तद्दश्यत जलदः VāsaDa. 283. 5.

**अतिवेगपतन** (ativega-patana) *n.* fall with an excessive speed or force अतिवेगपतनाद् गुरुत्वाच्च कायस्य गत्वा दूरमस्य सरसो मूलपङ्के विलग्नो गाढम् (पट्टवारणः) TilaMañ. 244. 14.

**अतिवेगपातिन्** (ativegapāt-in) *adj.* flying or falling down with a great speed चिच्छेद बाणैश्च शिलीमुखानतौ तैनैव मुक्तानतिवेगपातिनः DeviBhāP. iii. 15. 5.

**अतिवेगप्रधावित** (ativega-pradhāvita) *adj.* taking effect very quickly विरेचनम् । न सम्यङ् निर्हरेद् दोषानतिवेगप्रधावितम् SuśruS. iv. 33. 35.

**अतिवेगप्रवृत्त** (ativega-pravṛtta) *adj.* moving very rapidly जनितं जलपूरेण समं सर्वं नतोन्नतम् । अतिवेगप्रवृत्तेन प्रस्ख(? ख)लत्येव चेतसा PadmP. (Ra.) 22. 55.

**अतिवेगप्रसृत** (ativega-prasṛta) *adj.* spreading with great speed क्षीरार्णवस्येव तटे प्रसुप्तो मत्तोऽतिवेगप्रसृतोर्मिजालैः (दुःखसहस्रभागी) PadmP. (Ra.) 32. 193.

**अतिवेगरथ्य** (ativega-rathya) *m.* very speedy horse आरूढो रथमतिवेगरथ्ययुक्तं पूषा ĀnandRa. 6. 40.

**अतिवेगवत्** (ativega-va(n)t) *adj.* (*f.* -vatī) A very fast अतिवेगवन्तः (महाशरौघाः) ... मन्दन्ति MahāBhā. iii. 252. 17; (अश्विः) प्लावयंस्तीरजान् ग्रामान् पुरादीनतिवेगवान् ViṣṇuP. v. 36. 8; अतिवेगवत् । तस्या भल्लमहिष्यामं त्वचं चिच्छेद जाठरीम् MārkP. 2. 37; परितोऽकरोद् भ्रमणमस्य ... लक्ष्मणः । अतिवेगवान् PadmP.(Ra.) 42. 83; अतिवेगवान् (दन्ती) ... तमभ्यगात् NavaSāC. 8. 51; (सः) अतिवेगवतीं निर्जरतरङ्गिणीमिव ... निजध्वजिनीम् ... रोधःप्रदेशे निवेशयामास ĀnandRa. 7. 13 (16); B (disease) extremely virulent (रक्तपित्तम्) यत्त्रिदोषमसाध्यं स्यान्मन्दाग्नेरतिवेगवत् RugVi. 9. 10.

**अतिवेगविस्मृत** (ativega-vismṛta) *adj.* forgotten due to great hurry अन्याभिरतिवेगविस्मृतोत्तरीयवल्कतया 'करतलावृतपयोधराभिः ... विरचितो माङ्गलिकसत्कारः UdaySuKa. 146. 28.

**अतिवेगव्यापृत** (ativega-vyāpṛta) *adj.* active with great speed अतिवेगव्यापृतोऽस्य तत्र क्षणे ... तुल्यकालमलक्ष्यत वामेतरः पाणिः TilaMañ. 90. 21.

**अतिवेगसमुत्पात** (ativega-samutpāta) *adj.* rushing out with great speed (भटाः) अतिवेगसमुत्पाताः प्रविष्टाः शात्रवं बलम् PadmP.(Ra.) 58. 36.

**अतिवेगा** (ati-vegā) *f.* name of one of the Śaktis कश्यपान्वय (व्यूहम्) ...। योगातिवेगा सुवेगा च अतिवेगा सुवासिनी LiṅgaP. ii. 27. 187; ViraMi.(Rājanīti.) 389. 3.

**अतिवेगित** (ati-vegita) *adj.* very swift चचारोन्मत्तवद् द्रोणो वृद्धोऽपि तरुणो यथा (v. l. वृद्धश्चैवातिवेगितः) MahāBhā. vii. 7. 9; भौमादयः ...। दैवतैरप्रकम्पन्ते सुदूरमतिवेगिताः SūryaSi. 2. 10; दितेस्तनूजाः ... चापानि कर्षन्त्यतिवेगिताश्च VāmaP. 9. 49; ततोऽतिवेगितं वज्रं दृष्ट्वा बलवतां वरः VāmaP. 10. 6; (चण्डाद्याः) नरकेषु च तान् सर्वान् प्रक्षिपन्त्यतिवेगिताः BṛNāraP. 29. 60; न्यवारयत दैत्योऽपि स्वशरैरतिवेगितैः GaṇeP. ii. 103. 2.

**अतिवेगिता** (ativegi-tā) *f.* very swift motion (सूर्यः) अतिवेगितया ... प्रकृष्टां भूमिं कालेनाल्पेन गच्छति ViṣṇuP. ii. 8. 33; SkandP. i(2). 33. 14.

**अतिवेगिन्** (ativeg-in) *adj.* very swift मरुतो नाम देवास्ते बभूवुरतिवेगिनः ViṣṇuP. i. 21. 40; मनसोऽतिवेगिनम् ... महारथं धनुर्धरः शक्तिधरोऽध्यरोहयत् KumāSam. 14. 2; सुनन्दिवातेन ... अतिवेगिना । उद्वीजयामि रुद्रं स्म SivaP. ii(2). 9. 10 (77A. 14); (अहम्) अगमं दक्षनिलयं स्यन्दनेनातिवेगिना SivaP. ii(2). 17. 41 (8SB. 12); जङ्घालस्त्वतिवेगिनि KalpaK. 115. 242.

**अतिवेदन** (ati-vedana) *n.* severe pain हृत्पृष्ठगात्रशिरसामतिवेदनानि (वातज्वरे भवन्ति) KalyāKā. 9. 53; *adj.* [*f.* -ā] I suffering severe pain गर्भे जन्तुः ... अतिवेदनः (आस्ते) BrahmP. 233. 11; II very painful समेचक्रा छेदयुतातिवेदना ... शराविकेति प्रतिपाद्यते बुधैः KalyāKā. 11. 12.

**अतिवेदनम्** (ati-vedanam) *adv.* very painfully, hurting greatly सम्भ्रमध्ये ललाटं च तपतीवातिवेदनम् CaraS. i. 17. 19.

**अतिवेदना** (ati-vedanā) *f.* I severe pain अङ्गानामतिरुक्षता वा वैवर्ण्यं रौक्ष्यम् ... अतिवेदना च KāśyaS. 115B. 22; तस्यायवौ निद्रा ययौ सा चातिवेदना KathāSaSāg. vi. 3. 167; शोकः समुपजायते । तेनातिवेदना ... भवेत् Hastyāyur. 125. 20 (1. 17); II intense passion सखि कुरु तावदलं पटुतरमतिवेदनाप्रतीकारे KuṭṭaMa. 283.

**अतिवेध** (ati-vedha) *m.* name of one of the four types of contacts of *daśamī* and *ekādaśī* अतिवेधो द्विघटिकः प्रभासंदर्शनाद्रवेः CaturCin. iii(2). 259. 4 = iii(2). 268. 22; iii(2). 259. 8.

**अतिवेधन** (ati-vedhana) *n.* piercing deeply लाघवे वेधने तथा (v. l. चातिवेधने) क्षुरनाराचभल्लानाम् ... तत्त्ववित् (फाल्गुनः) MahāBhā. i. App. I. 80. 11.

**अतिवेप्** (ati-vep-) I. Ā. to tremble very much यथातिवेपसे ... तथात्र मन्ये तव पक्षपातवत् ... अन्तःकरणम् NavaSāC. 7. 56.

**अतिवेप** (ati-vepa) *m.* great shaking निष्पेततुः परमविक्रमितातिवेपस्कन्धप्रवालविटपौ BhāgP. x. 10. 27.

**अतिवेपथु** (ati-vepathu) *adj.* trembling excessively (प्रम्लोचा) तावद् गलत्स्वेदजला सा बभूवातिवेपथुः ViṣṇuP. i. 15. 44; BrahmP. 178. 98; *m.* great tremor स्पर्शहानिरतिवेपथुरुच्चकालकूटविषलक्षणमेतत् KalyāKā. 19. 38.

**अतिवेपथुमत्** (ativepathu-ma(n)t) *adj.* trembling very much अतिवेपथुमत्सुदुःसहोऽभिमर्त°... 'वपुरादरातिशयशंसि पुनः प्रतिपत्तिमूढमपि बाढमभूत् SiśuVa. 9. 77.

**अतिवेपमान** (ativepa-māna) *adj.* trembling very much झिन्धोरतिवेपमानतरङ्गपाणेरवलम्बदण्डः (पुष्णातु) YātrāPra. 5. 29.

**अतिवेपित** (ati-vepita) *adj* [*f.* -ā] trembling excessively (तान्) हन्यमानान्दृष्ट्वैव काव्यमातातिवेपिता DeviBhāP. iv. 11. 43; श्रीसिंहभूपप्रतिनायकानां खिद्यन्ति गात्राण्यतिवेपितानि RasāSu. 143. 18 (2. 101).

**अतिवेपिन्** (ativep-in) *adj.* trembling excessively तेन भीतेन ह्यतोऽहं विह्वलेनातिवेपिना DeviBhāP. ii. 11. 35.

**अतिवेल** (ati-vela) *adj.* I I belated, taking place after its proper time तदेतद् (आधानम्) आर्तवस्यातिवेलं वा श्रद्धायुक्तस्य BaudhSS. i. 54. 1;

too much exercise अतिव्यायामानुपसेवनात् …श्लेष्मा संचयमुपगच्छति Hastyāyur. 385.7 (3.5)

**अतिव्युत्पन्न** ( ati-vyutpanna ) *adj.* very learned, great scholar [nt.]

**अतिव्योमसीमन्** ( ati-vyomasiman ) *n.* surpassing the limit of the sky, sky-scraper वसति गौरीसहचरः । कृत्वा प्रासादमाशामुखमुकुरमतिव्योमसीमानम् EI. ii. 240. 50.

**अतिव्रज्** ( ati-vraj- ) I. P. **i** to go beyond, to cross, to cross over प्रतिगृह्योत्तरेण होतारमतिव्रजेत् ĀśvaSS. I. iii. 1. 18; नद्यो वह्नि नातिव्रजेत् PadmP. i. 55. 56; **ii** to offend, to disobey नातिव्रजेत्परं वाचा BrahmP. 235. 63.

**अतिव्रजत्** ((ati-vrájat) *adj.* flying over, travelling steadily तिस्रः क्षपस्त्रिरहातिव्रजद्भिर्नासत्या भुज्युमूहथुः पतङ्गैः ṚV. i. 116. 4 = TaiĀ. i. 10. 3 (76. 3); **ii** passing beyond उत्तरेणाग्नीध्रीयमतिव्रजन्तु ( अध्वर्युषु ) ĀśvaSS. I. iv. 10. 4.

**अतिव्रज्य** (ativraj-ya) *ger.* having gone beyond, crossing आहिताग्निराचम्यापरेण वेदिमतिव्रज्य दक्षिणत उपविश्य ĀśvaSS. I. ii. 3. 11; अपरेण वेदिमतिव्रज्य दक्षिणतः शालामुखीयस्योपविशेत् ĀśvaSS. I. iv. 10. 6; मैत्रावरुणमग्रतः कृत्वोत्तरेण हविर्धाने अतिव्रज्य … उपविशति होता ĀśvaSS. I. iv. 11. 3; अतिव्रज्य समिध आदाय … उपतिष्ठते KauśiSū. 24. 13; ततस्त्वतिव्रज्य सुराष्ट्रराष्ट्रम् … उद्धवं भागवतं ददर्श BhāgP. iii. 1. 24; स एव भक्तियोगाख्य आत्यन्तिक उदाहृतः । येनातिव्रज्य त्रिगुणं मद्भावायोपपद्यते BhāgP. iii. 29. 14.

**अतिव्रत** ( ati-vrata ) *adj.* performing many vows अतिथिव्रती ( v. l. अतिव्रतः ) क्रियावांश्च ( मुद्गलः ) MahāBhā. iii. 246. 4; अत्यार्यमतिदातारमतिशूरमतिव्रतम् । … श्रीर्भजत्योदार्मिति MahāBhā. v. 39 50; SūktiRa. 167. 2; Subhāṣi. 2646.

**अतिव्रतति** ( ati-vratati ) *adj.* (a hill) full of creepers इहासनेऽतिव्रततौ समेते मरुत्सुधारः श्रमहृत्तुषारः Yādavā. 6. 37.

**अतिव्रतवत्** ( ativrata-va(n)t ) *adj.* observing vows well अवीत्य स्नात्वा गुरुभिरनुज्ञातेन खट्वारोढव्या । य इदानीमतोऽन्यथा करोति स उच्यते खट्वारूढोऽयं जाल्मः । नातिव्रतवानिति MahāBh. i. 384. 12 (*on* ii. 1. 26)

**अतिव्रीड्** ( ati-vrīḍ- ) I. Ā. to be excessively ashamed of, to feel great shame बद्धश्च वारुणैः पाशैर्नातिव्रीडे न च व्यथे BhāgP. viii. 22. 7.

**अतिव्रीडाकर** ( ativrīḍā-kara ) *adj.* very shameful प्रार्थनमतिव्रीडाकरम् TilaMañ. 59. 15.

**अतिशंस्** ( ati-śaṃs- ) I. P. **i** to recite beyond a given limit यद् बृहतीमतिशंसेत् प्राणानतिपद्येत AitBr. 17. 4 (460); न सहस्रमतिशंसेत् KauṣīBr. 18. 3 (80. 1); कस्मात्स्तोममतिशंसन्ति KauṣīBr. 28. 10 ( 138. 7 ); तदाहुः … किं नातिशंसन्ति … स ब्रूयात् … वाचम् एव नातिशंसन्ति JaimiBr. 2. 40; **ii** to continue reciting एकया द्वाभ्यां वा स्तोममतिशंसन्ति SāṅkhāSS. xii. 2. 10; अतिशंस्यादुक्थ्ये MānSS. 88. 20; **iii** to omit in reciting [MW]; (*pass.*) **i** to be recited beyond a given limit न स स्तोमो देवान् गच्छति यो नातिशस्यते KauṣīBr. 28. 10 (138. 9); **ii** to be recommended highly, to excel in quality मयूरकण्ठसच्छायं भाराढ्यमतिशस्यते RasRaSa. 2. 127; सर्वरोगहरो वृष्यो जारणायातिशस्यते RasRaSa. 3. 141; मृत्तिका पाण्डुरस्थूला … मूषार्थमतिशस्यते RasRaSa. 10. 5; **iii** to be praised greatly नीलं मरकतच्छायं तेजाढ्यमतिशस्यते RasPraSu. 5. 70.

**अतिशंसत्** ( ati-śaṃsat ) *adj.* praising or speaking highly अनुनापि धुनातीव करं मम कुचस्पृशम् । करेण कङ्कणक्वाणकैतवान्मेऽतिशंसता TārāŚa. 94.

**अतिशंसन** ( ati-śaṃsana ) *n.* continued recitation न त्वेतान्यनोन्यातिशंसनम् ĀśvaSS. II. i. 12. 3; VaitāSS. 35. 14.

**अतिशंसना** ( ati-śaṃsanā ) *f.* continued recitation अथो स्तोमातिशंसनाया एव AitĀ. i. 4. 1.

**अतिशकटि** ( ati-śakaṭi ) *adj.* surpassing carts अतिशकटये ब्राह्मणाय MahāBh. i. 314. 18 ( *on* i. 4. 3) = PadMañ. *on* KāśiVṛ. *on* P. i. 4. 3; अतिशकटयै ब्राह्मण्यै MahāBh. i. 314. 18 (*on* i. 4. 3)

**अतिशकल** ( ati-śakala ) *n.* large piece न चातिशकलं चापि न च दन्तः प्रहीयते Hastyāyur. 627. 4 (4. 10)

**अतिशक्करी** ( ati-śakkarī ) *f.* [PW] cf. अतिशक्वरी.

**अतिशक्त** ( ati-śakta ) *adj.* **A** very strong or powerful अशक्तश्च नराधिपः ( v. l. अतिशक्ते नराधिपे ) PañcT. 3. 36 (290. 7); व्यपदेशेऽपि सिद्धिः स्यादतिशक्ते नराधिपे Hitopa. 3. 13; **B** very competent or efficient दूरतोऽप्यतिशक्तः स लीलया केवलं प्रभुः AnuVyā. 11A. 3 (*on* i. 2. 1); विष्णुः … तत्तच्छक्तिप्रबोधनेऽतिशक्तः NyāySu.(Ja.) 156A. 1 (*on* i. 2. 1)

**अतिशक्ति** ( ati-śakti ) *adj.* possessing great power, excessively powerful त्रैलोक्यनाथस्य तवातिशक्तेः किमस्ति कार्यं मघवन् मयापि PārvPa. 2. 9; *f.* **i** excessive ability शक्त्या वा दक्षिणां दद्यात् । नातिशक्तिर्विधीयते KauśiSū. 74. 23; अतिशक्त्या पितृनर्चन् … । अन्वगृह्णात् प्रजाः सर्वा ययातिः MahāBhā. i. 70 30; अतिशक्त्या प्रयच्छन्ति सन्तः सद्भिः समागताः MahāBhā. iii. 198. 85; **ii** excessive power ( सा ) सतीष्वपि तेभ्योऽपि ह्यतिशक्त्या पतन्त्रिषु ViṣṇuP. vi. 7. 61; नाहारपानादिषु चातिशक्तिः YuktiKa. 199. 21; प्रचालयन्नेव भगोलकोऽपि तथातिशक्त्या स्वपराक्रमस्थान् SiddhāTaVi. 25. 13; *adv.* beyond one's ability आजह्रुः संक्रमं द्रव्यं यथाशक्त्यतिशक्ति च Rāmā. vi. 298*(10)

**अतिशक्तितस्** ( atiśakti-tas ) *adv.* beyond one's power प्राणाचार्यं बुधः … पूजयेदतिशक्तितः CaraS. vi. 1 (4). 40 (1941 Ed.); vi. 1 (4). 50 (1941 Ed.)

**अतिशक्तिता** ( atiśakti-tā ) *f.* the state of being excessively powerful अतिशक्तितयास्येमं संशयं छेत्तुमर्हसि AhirbuS. 27. 3; AmaK. 1672; KośaKaTa. 1. 1971.

**अतिशक्तिभाज्** ( atiśakti-bhāj ) *adj.* possessing excessive valour, AmaK. 420.

**अतिशक्तिमत्** ( atiśakti-ma(n)t ) *adj.* endowed with excessive power विक्रमशक्तिश्चैव विषयेष्वतिश(?स)किमान् … विंशतिः पुरुषा अमी AgniP. 239. 11.

**अतिशक्र** ( ati-śakra ) *adj.* surpassing Indra, superior to Indra अतिशक्रमिदं सत्त्वं तव MahāBhā. iii. 161. 39; स तथा मुनिशुश्रूषकाशीनोऽतिशक्रश्चक्रवर्ती AvantiKa. 217. 11; अस्यैतातिशक्रस्य राज्ञो यज्ञः सदोचितः RāmāMañ. 500. 20; मन्त्रीश्वरः श्रीजिनमेवजिनार्चनं विरचयाश्चकेऽतिशक्रः श्रिया VasaViKā. 12. 50; तस्यातिशक्रस्य … चतुर्दश महारत्नान्यभूवन् PārśvC. 4. 97.

**अतिशक्रशोभिन्** ( atiśakra-śobhin ) *adj.* shining in a manner surpassing Indra प्रेक्ष्य दर्पणतलस्थमात्मनो राजवेषमतिशक्रशोभिनम् RaghuVa. 19. 30.

**अतिशक्वरिका** (ati-śakvarikā) *f.* fifteen अतिशक्वरिकास्यष्टिकरैरतिधृतेर्मितैः । … स्तानमण्डपाः ĪśānŚiPa. ii. 50. 9.

**अतिशक्वरिकामित** ( atiśakvarikā-mita ) *adj.* measuring fifteen रुद्रातिजगतीसङ्ख्यैरतिशक्वरिकामितैः । तालैः स्तम्भा भवन्ति ĪśānŚiPa. ii. 50. 13.

**अतिशक्वरी** ( ati-śakvarī ) *f.* **A** name of a metre of four lines, each containing fifteen syllables पङ्क्तिरेवातिशक्वरी ṚPrāti. 16. 54; दशपञ्चातिशक्वर्याः NāṭyaŚā. 14. 49; छन्दसां नामानि … शक्वरी । अतिशक्वरी Jānāśra. 1. 2 (6); अतिशक्वरी नाम पञ्चदशाक्षरं छन्दः Jāonāśra. 4. 73(1); सर्गबन्धो महाकाव्यम् … नातिविस्तरम् । शक्वर्यातिजगत्यातिशक्वर्या त्रिष्टुभा तथा AgniP. 336. 26; अतिशक्वरी च कथिता तथा पञ्चदशाक्षरा ViṣṇuDhaP. iii. 3. 4; शक्वर्यतिशक्वरी च धृतिश्चातिधृतिस्तथा DeviBhāP. xii. 1. 17; ĪśānŚiPa. i. 1. 86; शक्वर्यन्या स्यादतिशक्वरी । … इति संज्ञाः समाख्याताश्छन्दसां पूर्वसूरिभिः Mānaso. iv. 2. 219; °शक्वरी - अतिशक्वरी - अष्टि - अत्यष्टि - धृति - अतिधृतयः एकैकवृद्धाः Chandonu. 2. 4; 2. 242; KośaKaTa. 1. 1406; **ii** fifteen (cubits) प्रकृत्या चातिशक्वर्या त्रिभौमं तुङ्गविस्तृतम् ĪśānŚiPa. ii. 30. 11; शक्वर्या वातिशक्वर्या … संमितम् ŚilpaRa. i. 5. 63.

**अतिशङ्क्** ( ati-śaṅk- ) I. Ā. **i** to doubt unreasonably, to suspect falsely अनुव्याहारिणीममिति यमि(?म)तिशङ्केत तस्मा अग्नीधाय आहुतिवज्रं प्रहरेत् LāṭyāSS. ii. 1. 10; अतिवादान्मदाश्चैव मा धर्ममतिशङ्किथाः ( v. l. अतिशङ्कथाः ) MahāBhā. iii. 32. 6; पापीयान् हि सः … यो धर्ममतिशङ्कते MahāBhā. iii. 32. 9; iii. 32. 17; अजानन्निव चाकस्मादर्जुनाद्भिशङ्कसे ( v. l. °वातिशङ्कसे ) MahāBhā. v. 77. 16; v. 94. 43; श्रोतव्यं यदि वृद्धानां मातिशङ्कीर्वचो मम MahāBhā. v. 145. 40; vii. 16. 4; vii. 135. 8; viii. 23. 5; viii. 23. 18; परितुष्टा हि सा देवी वनवासं गते मयि । राजानं नातिशङ्केत मिथ्यावादीति धार्मिकम् Rāmā. ii. 46. 52; यद्वै न पश्यतीत्येवमात्मानमतिशङ्कते BṛĀraUBhVā. iv. 3. 1541; i. 3. 371; **ii** to suspect strongly, to express great doubt शङ्कास्थाने नातिशङ्कते ArthŚā. ii. 213. 2 (5. 5); क्षेत्रज्ञो नाभि( v. l. ति )शङ्कते ManuSm. 8. 96; क्षेत्रज्ञोऽन्तर्यामी पुरुषो नातिशङ्कते किमयं सत्यं वक्ष्यत्यनृतं वेत्येवं नाशङ्कते ManuBh. ii. 114. 15 (*on* 8. 96); SmṛtiCan. iii. 198. 20; स तु … स्वब्राह्मणत्वमपि … अतिशङ्केत NyāyPari. 480. 5.

**अतिशङ्कक** ( ati-śaṅkaka ) *adj.* very suspicious (person) अतिशङ्ककमित्येवं पुरुषं सामवादिनम् । आसाद्यवोऽवजानन्ति …। अतिशङ्ककम्, अतिशयिता शङ्का यस्मिन् तादृशम् ViraMi.(Rājanīti.) 280. 7.

**अतिशङ्कनीया** ( ati-śaṅkanīyā ) *adj.* (*f.*) to be suspected too much or falsely न लक्ष्मणास्मिन्मम राज्यविघ्ने माता यवीयस्यतिशङ्कनीया Rāmā. ii. 19. 22.

**अतिशङ्कमान** ( ati-śaṅkamāna ) *adj.* doubting very much अथाप्याचार्यस्मृतीनां वक्ता तमतिशङ्कमानः सर्वत्रैवाशङ्केत NidāSū. 23. 6 (2. 1)

**अतिशङ्का** ( ati-śaṅkā ) *f.* strong or false suspicion, excessive doubt तथा राजन्सह संवत्सरोषितः । अतिशङ्का भवेत् स्थाने तव लोकस्य च MahāBhā.

iv. 67.4; सुहृदामतिशङ्का च त्रयो दोषाः क्षयावहाः Rāmā. vi. 74.20; शास्त्रस्यातिशङ्कायां यागादिष्वपि तत् समानम् AvantiKa. 75.15; व्रते विवादम् ··· सत्येऽतिशङ्काम् ··न करोति साधुः DaśāvaC. 7.61 = Subhāṣi. 318; अतिशङ्कायां वेदेऽप्यनाश्वासप्रसङ्गात् SrutaPra. ii. 327.28 (on ii. 2.42); अतिशङ्कां सुहृत्सु च । नीतिसंशंसिना कद्धेः समुद्धरत कण्टकौ Yādavā. 22.26; यश्चैवमतिशङ्कामाद्रियते स तु स्वमातापितृचरितानवधारणेन स्वब्राह्मणत्वमपि यथार्हमतिशङ्केत NyāyPari. 480.3; कूटस्थेऽप्यतिशङ्का स्यादिति चेन्मातिशङ्क्यताम् PañcDa. 8.65; देवल, कुलिशसहाये महाहौ जाग्रति किमेवमतिशङ्का क्रियते PārvāPa. 2.2(1)

**अतिशङ्काकुला** (ati-śaṅkākulā) *adj.* (*f.*) extremely stricken with doubt प्रौढश्रीरलका न जातपुलका लङ्कातिशङ्काकुला PrabaCin. 13.16

**अतिशङ्कावकाश** (atiśaṅkāvakāśa) *m.* scope for strong doubt अथ न तदा कातिशङ्कावकाशः TattvMu. 4.42.

**अतिशङ्कित** (ati-śaṅkita) *adj.* much suspicious of, being in great doubt, being very apprehensive, much afraid प्रत्याचख्यौ च शाल्वोऽपि चारित्र्याभिशङ्कितः (v. l. अतिशङ्कितः) MahāBhā. v. 175.26; योगवित् । शुश्रूषामेव देवस्य चिन्तयेदतिशङ्कितः ParaS. 10.17; अतिशङ्कितमित्येवं पुरुषं सामवादिनम् । अ(? आ)साधवो विजानन्ति MatsyaP. 222.9; संतापादतिशङ्कितैर्न नगरीमार्गो नरैः सेव्यते Mṛcch. 8.11; तस्य तं निश्चयं ज्ञात्वा तुराषाडतिशङ्कितः DevīBhāP. vii. 14.22.

**अतिशङ्कितव्या** (ati-śaṅkitavyā) *adj.* (*f.*) to be greatly suspected न लक्ष्मणास्मिन् मम राज्यविघ्ने माता यवीयस्यतिशङ्कनीया (v. l. अतिशङ्कितव्या) Rāmā. ii. 91.22.

**अतिशङ्किता** (atiśaṅki-tā) *f.* extreme fear सरलहृदये शङ्काग्रस्तस्तनोत्यतिशङ्किताम् RājTa.(Jo.) 849.

**अतिशङ्कितुम्** (ati-śaṅkitum) *inf.* to doubt seriously विदितैवैतामवस्थां मे नातिशङ्कितुमर्हसि MahāBhā. v. 129.26; पूर्वसिद्धायाश्चोदनाया अर्थो न पश्चिमसिद्धपुरुषवचनवशेनातिशङ्कितुं शक्यते BrahmSūBh.(Śaṅ.) 284.15 (on ii. 1.1)

**अतिशङ्किन्** (ati-śaṅkin) *adj.* A extremely suspicious, suspecting strongly तेनातिशङ्की भारत निष्ठुरोऽसि MahāBhā. viii. 49.83; सर्वातिशङ्की नृपतिः MahāBhā. xii. 57.27 = SūktiRa. 40.12; B very much afraid ऊचुः सर्वे तदा विप्रा नन्दिनं चातिशङ्कितम् SkandP. i(1). 5.148; द्विजिह्वेन मुनिस्त्यक्तो(? मुनिस्त्यक्तो) निर्विण्णेनातिशङ्किना । मां शपेत मुनि(? निः) क्रुद्धः DevīBhāP. iv. 8.16.

**अतिशङ्क्य** (ati-śaṅkya) *adj.* fit to be doubted धर्मो यस्यातिशङ्क्यः स्यात् ··वेदाच्छूद्र इवापेयात् स लोकादजरामरात् MahāBhā. iii. 32.7.

**अतिशङ्क्य** (atiśaṅkya) *ger.* doubting too much अतिशङ्क्य वचो ह्येतद्धर्मलोपो भवेत्तव MāhāBhā. iii. 189.26.

**अतिशङ्खा** (atiśaṅkhā) *f.* one of the sixteen Śaktis (powers) belonging to the second Āvaraṇa of Śauṇḍavyūha (शौण्डव्यूहे) द्वितीयावरणं शृणु । वज्रा शङ्खातिशङ्खा वा बला चैवाबला तथा LiṅgaP. ii. 27.157.

**अतिशठ** (ati-śaṭha) *adj.* [*f.* –ā] very deceitful, extremely cunning सन्ति चैषां (ब्राह्मणानाम्) अतिशठास्तथान्येऽतितपस्विनः MahāBhā. xiii. 33.10; अतिशठोऽधिको लुब्धः ··· शशिनि भौमबुधमध्ये Sārā. 13.20; व्याधिक्लिष्टो जनोऽयं किमिदमतिशठे बाध्यते धीरहस्तः PadmPrā. 26.9; (एषा) दत्ते नोत्तरमात्रमप्यतिशठा चाटूक्तिदीनस्य मे UdaySuKa. 48.31; सुहृदतिशठः इयान्सोढुं शक्यः RājTa.(Ka.) 7.616; कश्चित्तदाश्वोऽतिशठः स्वकण्ठमुत्प्लुत्य पर्याणखलीनहस्तम् । चखाद VasaViKā. 11.7; हे पक्षिन् ··· तदतिशठ महापाप मा ब्रूहि मिथ्या SārṅgaPa. 8.8.

**अतिशतरुद्रीय** (ati-śatarudrīya) *adj.* surpassing the offerings in honour of the divinity called Śatarudra तत्रातिशतरुद्रीयापांनप्त्रीयैश्च सोऽयजत् DvyāśraKā. 15.106.

**अतिशत्रु** (ati-śatru) *m.* great foe (i. e. the planets that are inimical to each other by nature and for the time being as well) द्वयोः सुहृत्त्वं त्वतिमित्रता भवेद् द्विधारयस्ते तु सदातिशत्रवः JātaPā. 2.46.

**अतिशद्** (ati-śad-) 1 Ā; vi Ā. [P. vii. 3.78 conjugational base शीय] to fall out, to go out of, to escape ये प्रत्यञ्चः शम्यामतिशीयन्ते तन्नैर्ऋतमेककपालम् MaiS. ii. 6.1; KāṭhS. 15.1; MānŚS. 185.4; 185.9; तेषां परिगृहीतानां यथा क्षुद्रा मत्स्या अक्ष्योरक्ष्यतिशीयेरन् एवमेव ये क्षुद्राः पशव आसुस्ते अतिशेरुः JaimiBr. 2.110; एतामेव नातिशीयते ChāndoU. iii. 12.3–4; मन्त्री च चिरमीशो हि राजानं चातिशीयते BṛDharmaP. ii. 3.51.

**अतिशनैस्** (ati-śanakais) *adv.* very slowly संसारध्वान्तधाराहतिरतिशनैर्निर्जगामाजगाम ParamāKā. 17.118.

**अतिशब्द** (ati-śabda) *m.* 1 the word *ati* इह पचतीत्युक्ते कश्चिच्छब्दः श्रूयते पचशब्दश्चकारान्तोऽतिशब्दश्च प्रत्ययः MahāBh. i. 255.14 (on i. 3.1); i. 255.16 (on i. 3.1); अतिशब्द उपरिभावे वर्तते Nyās. i. 704.20 (on iii. 3.80) = PadMañ. on KāśiVṛ. on P. (iii. 3.80); अनेनातिशब्दोऽत्रातिक्रमे वर्तत इति दर्शयति Nyās. ii. 158.17 (on v. 4.46); अत्र द्वितीयं द्वितीयं शब्दरूपम् अतिशब्दात् परतः प्रयोक्तव्यम् MṛtaSaṁ. 41.3 (on 4.7); आधिक्येन तु दोषायैवेत्यतिशब्देनाह JayaMa. 352.19 (on 6.6); अश्रुतस्यातिशब्दस्य स्थानं दद्यात्कथं पुनः AnuVyā. 9B.2 (1.1); NyāySu.(Ja.) 140B.8 (on i. 1.6); अतिशब्दो नेदानीमित्यस्यार्थे वर्तते PadMañ. on KāśiVṛ. on P. (ii. 1.6); on KāśiVṛ. on P. (v. 4.46); 2 loud sound (रणः) ना तु शब्दे परे त्वातुरतिशब्देऽपरे पुनः NānārthāSaṁ. i. 136.1037; *adj.* producing a loud sound यस्यानिलो नासिकया निरेति । ··· अतिशब्दः RugVi. 58.5; वृषः ··· श्वेतोऽतिशब्दः TājiNi. i. 1.3(2)

**अतिशब्दक** (atiśabda-ka) *adj.* verbose (verbosity one of the eighteen defects of speech) वाग्दोषान् द्विनव शृणु । ··· विरुद्धं यत् त्रिवर्गेण न्यूनं कष्टातिशब्दकम् SkandP. i(2). 45.71.

**अतिशब्दद्वयार्थ** (atiśabdadvayārtha) *m.* meaning of the word *ati* occurring twice द्विपोऽतीत्यातिशयेनात्मानं प्रत्याहत इत्यतिशब्दद्वयार्थः KarmaNi. 6B.11.

**अतिशब्दविषय** (ati-śabdaviṣaya) *adj.* beyond the sphere of words, indescribable यस्यातिशब्दविषयं चरणारविन्दमुत्तंसयन्त्यमितभक्ति ··· वराननाः AlaṅkāKau.(Vi.) 413.3.

**अतिशब्दश्रवण** (atiśabda-śravaṇa) *n.* hearing excessive noise ऋतौ प्रथमदिवसात् प्रभृति ब्रह्मचारिणी ··· °कथनातिशब्दश्रवणावलेखनानिलायासान् परिहरेत् SuśruS. iii. 2.25.

**अतिशब्दार्थकौशल** (ati-śabdārthakauśala) *n.* extreme skilfulness in explaining the meaning of words गौश्चेन्नास्ति विवादोऽयमर्थस्तु विधिलक्षणः । अगौर्गोशब्दवाच्यश्चेदतिशब्दार्थकौशलम् TattvSaṁ. 987.

**अतिशब्दित** (ati-śabdita) *adj.* 1 producing excessive sound (पद्मोवाच) तव ··· पुच्छमच्छमणिव्रातघर्घरेणातिशब्दितम् । ··· करोमि KalkiP. ii. 1.19; 2 denoted by the word *ati* मूर्छाशूलकफप्रायो महावेगोऽतिशब्दितः (अतिनिरूढः) SiddhYo. 76.9.

**अतिशब्दोपादान** (atiśabdopādāna) *n.* use of the word *ati* प्रकर्षनिमित्तमतिशब्दोपादानं विद्यते SaraKaṇṭhā. 578.14.

**अतिशमाय** (ati-śamāya) [*denom.*] – Ā. to destroy very much यदि सप्ताहमतिशमायेताग्ने दुःशीर्ततन इति पुरस्ताज्जुहुयात् MānŚS. 98.12.

**अतिशम्भुप्रिय** (ati-śambhupriya) *adj.* excessively beloved of Śiva शैवपर्वसु ··· योऽधीते भक्तितत्परः । एतदाख्यानम् ··सोऽतिशम्भुप्रियो भवेत् ŚivaP. iii. 17.18 (316A.15)

**अतिशय** (ati-śaya) *m.* 1 A abundance, extreme (limit), plenitude, fullness, great extent B excess, more than necessary amount 2 A eminence, excellence, perfection B superiority, excelling over, surpassing 3 efficacy, effectiveness, potency 4 being better or best, gradation 5 peculiarity, difference, distinctness 6 supernatural power or miraculous event associated with a Jain prophet 7 i one of the 36 bhūṣaṇas of a drama ii one of the 36 lakṣaṇas of a drama iii one of the 64 alaṅkāras of a drama 8 A heightened or exaggerated description, poetic hyperbole and a figure of speech based on it B a figure of speech based on adhyavasāya. 1 A abundance, extreme (limit), plenitude, fullness, great extent जवातिशययुक्तेन खररथेन···स्वयमेवामात्यः प्राप्तः PratiYau. 2.9(4); (भगवान् नारदः) मुक्तागुणातिशयसंभृतमण्डनश्रीः Vikramo. 5.19; निरवधिचमत्कृत्यतिशयो वराहो वा राहुः प्रभवति ŚatTrayī. 412; प्रतापातिशयोपनतसमग्रसामन्तमण्डलः EI. ix. 297.11; अश्वातिशयमिन्द्रायुधमद्राक्षीत् Kād. 80.3; विहितनिखिलविद्वज्जनमनःपरितोषातिशयः EI. viii. 192.25; वामोरूरतिशयमाप विभ्रमस्य ŚiśuVa. 8.24; सुदृशः··· । वपुरादरातिशयशंसि पुनः प्रतिपत्तिमूढमपि बाढमभूत् ŚiśuVa. 9.77; (जामदग्न्यः) अभिजनतपोविद्यावीर्यक्रियातिशयैर्निजैरुपचितशमः MahāviC. 2.11; 5.46 (294.5); यदृच्छासंवादः किमु किमु गुणानामतिशयः UttaRāC. 5.16; या तु श्रुतिः कपिलस्य ज्ञानातिशयं प्रदर्शयन्ती प्रदर्शिता BrahmSūBh.(Śaṅ.) 285.3 (on ii. 1.1); योऽसौ कुत्र चमत्कृतेरतिशयं यात्वम्बिकाकेसरी VakroJi. 18.6; सोऽर्भकः भक्तेरतिशयात् साक्षात्कृतो लम्बोदरेण सः । चक्षुष्मान् श्रुतिसंपन्नः GaṇeP. i. 20.11; भ्रान्तेरतिशयश्च यः SaraKaṇṭhā. 366.14; ब्रह्मानन्दातिशयेयत्तां वक्तुम् ŚrīBh. 208.3 (on i. 1.17); प्रज्ञाया अतिशयः PramāMi. 12.1 (on i. 1.16); अहो मतेरतिशयो भापित्वेत्यथ भूषणः । प्राह SamarāSaṁ. 8.54; लक्ष्ये तस्यैवातिशयः फलम् SāhiDa. 55.1; वियोगशोकभयजुगुप्सादीनामतिशयाद् ग्रहावेशादेश्चोत्पन्नो व्याधिविशेषोऽपस्मारः RasGaṅ. 116.8; 1 B excess, more than necessary amount पार्श्वतः परिकृष्यातिशयतृतीयेन सह मण्डलं परिलिखेत् ĀpaŚuS. i. 3.3; द्वे द्रव्ये पश्यन्नेकत्र विद्यमानमतिशयं गृह्णाति NyāyBh. 266.11 (on iv. 1.40); मा शङ्खमक इव स्वामिन्नतिशयं कृथाः PariPar. 2.693; व्ययस्यातिशयेनाह्नो कोशो रिक्तत्वमागतः RājTa.(Jo.) 494; 2 A

-eminence, excellence, perfection ( स्मरणम् ) विरोधातिशयप्राप्ति° ... °निमित्तेभ्यः NyāySū. iii. 2.41; यावद्ब्रूयात्प्रकर्षेऽतिशय इति तावदतिशायन इति MahāBh. ii. 413.3 (on v. 3.55); ( भूमिः ) अकूण्टकिन्यबहुविषमाप्रत्यासारवतीति पदातीनामतिशयः ArthSā. iii. 122.5 (10.4); तस्मिन्विधानातिशये विधातुः ... निपेतुरन्तःकरणैर्नरेन्द्राः RaghuVa. 6.11; तथातिशयो विशेषस्तेन युक्तः Sāṁkhya-KāBh. 2.31 (on 2); विदग्धैर्निग्राह्यो न पुनरविदग्धैरतिशयः UttaRāC. 4.21; 6.11; निर्ह्रासातिशयौ दृष्टौ बुद्धीनाम् TattvSaṁ. 1904; ततोऽप्यतिशयः पुंसां सर्वलोकोपकारिता BṛĀraUBhVā. i. 4.1572; यथा भूः सर्वभूतानां शान्तेरतिशयः स्मृतः BhaviP. 282A. 11 (i. 189.36); उपमायामतिशयस्येष्टत्वात् KāvyālaṅSū. iv. 2.20; न तु काव्यस्यासौ कश्चिदतिशयः Loc. 32.20 (on 1.12); अप्रमादस्यातिशयात् सर्वदुःखक्षयो ध्रुवम् PārśvC. 2.494; कस्यापि कोऽप्यतिशयोऽस्ति स तेन सद्भिः सम्पूज्यते Auyo. 55; प्रजाभ्योऽभयदानस्य चातिशयमाह ViraMi. 359.19 (on 1.323); **2 B** superiority, excelling over, surpassing देशस्थोत्तमपूर्णत्वैर्लक्षणातिशयो मुनेः AbhidhK. 3.97; कर्णेऽपि स्वकक्ष्यायां न स्यादतिशयस्तथा VākyaPa. 3(7).74; यत्राप्यतिशयो दृष्टः स स्वार्थानतिलङ्घनात् । दूरसूक्ष्मादिदृष्टौ स्यान्न रूपे श्रोत्रवृत्तिता S'lokaVār. 2.114 (80.5); पूर्वस्मात्पूर्वस्मात्परस्य परस्यातिशयो विवक्षितः ManuBh. i. 151.9 (on 2 145); तत्र कोऽतिशयो येनेदानीं पङ्क्तिपावनत्वमुच्यते ManuBh. i. 285.17 (on 3.174); एतद्विवर्धमानं यत्र निष्क्रान्तमतिशयात्स सर्वज्ञः TattvVai. 30.26 (on 1.25); दर्शनस्य च परोऽतिशयः सूक्ष्मव्यवहितविप्रकृष्टभूतभविष्यदादिविषयत्वम् Nyāy-Mañ. i. 96.4; तस्मात्स्य साम्यातिशयैर्विनिर्मुक्तमैश्वर्यं स एवेश्वरः YogBh. 30.5 (on 1.24); परिमाणेऽतिशयो विरुध्यते SaṁkṣeS'ā. 2.75 (ii. 46.12); नायमेतावानतिशयः कस्यचित्पुरुषस्य Kāśi. i. 118.25 (on 2.111); संस्कारो योनिसाध्यो वा ... । शूद्रेभ्योऽतिशयं धत्ते BhaviP. 80B. 32 (i. 41.22); न हनूमतो लङ्घनेऽतिशयं सूचयति SaraKaṇṭhā. 13.13; ततो मुक्तस्य न कश्चिदतिशयः S'āstrDī. 126.15 (on i. 1.5); पूर्वप्रथमावन्यतोऽतिशये SiddhaHe. vii. 4.77; अणिमादिगुणावाप्तिर्जपस्यातिशये भवेत् ĪśānS'iPa. i. 27.54; i. 27.54; वचनम् ... परिसंख्या द्वयोः प्राप्तावेकस्यातिशयाय यत् SaṁgiRa. i. 94.2 (1(7).59); ईश्वरे ... जीवादतिशयस्यादर्शनात् TattvPrakā. 90B.5 ( on ii. 1.28 ); तत्स्पर्धिनामतिशयस्त्यागे वाच्यः KandaCū. vi. 3.18; जिनधर्मं विहायान्यस्मिन् धर्मेऽतिशयो न दृश्यते SamyaKau. 103.13; **3** efficacy, effectiveness, potency यस्य चाभावात् प्रमातृप्रमेये न प्रमां कुरुतः सोऽतिशयः NyāyVār. 7.20 (on i. 1.1); न हि विभूतिख्यापनेन कश्चिदतिशयो लभ्यते NyāyVār. 467.2 ( on iv. 1.21 ); न वै सर्वत्रातिशयोत्पादनं सहक्रिया HetuBiṬ. 113.25; कर्तृभेदः करणभेद इवातिशयविवक्षाभेदादुपपद्यते BhāvanāVi. 110.2; अथास्त्यतिशयः कश्चिदभिव्यक्त्यादिलक्षणः TattvSaṁ. 19; सामान्येऽतिशयः कश्चिन्न हि क्षेत्रादिभेदतः । एकरूपतया नित्यं धान्यादेस्तु स विद्यते TattvSaṁ. 725; अस्ति नाम कोऽपि गोरतिशयः यः प्रतियोगिदर्शनप्रतिलब्धाभिव्यक्तिर्गवयसदृशीं धियमुपजनयति Tātpa-Ṭ.(U.) 388.19 (on 12.4); अज्ञानं कमतिशयं जनयेत् NaiṣkaSi. 104.4; सोऽतिशयः शक्तिरित्युच्यते NayaVi. 133.6 (on i. 1.5); अतोऽस्ति कश्चिदतिशयः कारणानाम् Kāśi. iii. 163.9 (on 5(7).4); धर्मयोः केनाप्यतिशयेन नानादेशतया युगपदवभासनम् KāvyPra. 714.6; अर्थगतो वा ज्ञानजन्योऽतिशयः कल्पयति ज्ञानम् S'āstrDī. 56.26 (on i. 1.5); विवाहाग्नौ कोऽप्यतिशयो गृह्यकर्मानुकूलो जायते Aparā. 121.5 (on 1.97); व्रीहीन् प्रोक्षतीत्यत्र कालान्तरकार्यानुकूलोऽतीन्द्रियोऽतिशयः TattvCin. ii(2). 134.6; तदा तथाविधं तस्यातिशयमभिवाञ्छेदेव S'atDū. 65.13; अथ ब्रह्मगताया मायायास्त्वयमतिशयः S'atDū. 177.15; सहकारिजन्योऽतिशयः किमतिशयान्तरमारभते न वा SarvaDaSaṁ. 2.80; **4** being better or best, gradation तरतमयोश्चातिशयेऽदक्षिणप्रत्यासङ्गे VājaPrāti. 5.2; तस्यातिशये तरबुत्पद्यते MahāBh. iii. 136.1 (on vi. 2.139; प्रसृततरा गतिर्यन्नित्यमुक्त्वातिशय उच्यते MahāBh. iii. 366.22 (on viii. 1.4); तमबर्थश्चातिशयः TātpaṬ.(U.) 34.24 (on 2.9); यथोक्तकर्मफलेषु ... कश्चिदतिशयो मोक्षः BrahmSūBh.(S'aṅ.) 21.4 (on i. 1.4); अलब्धातिशयं यस्माद्व्यावृत्तास्तमवादयः NaiṣkaSi. 6.3; पूर्वप्रथमावन्यतोऽतिशये S'ākaṭāVyā. ii. 3.5; द्वयोरेकस्यातिशये तरो बहूनां तमः स्यात् MugdhaBo. 7.48 (71.21); **5** peculiarity, difference, distinctness चोदितो दधि खादेति किमुष्ट्रं नाभिधावति । अथास्त्यतिशयः कश्चिद्येन भेदेन वर्तते PramāVār. 1.184; यदि नामाध्रुवा व्यक्तिर्लभेतातिशयं तदा । जातेस्तु त्रिगुणं रूपं न कदाचिन्निवर्तते TattvSaṁ. 761; क्षीर एव दध्नः कश्चिदतिशयः BrahmSūBh. (S'aṅ.) 320.7 (on ii. 1.18); अननुसंधाने च स्वपरसंवेद्ययोः कोऽतिशयः Brahm-Si. 4.10; न ह्यजातानन्वयप्रध्वस्तयोरतिशयः कश्चित् SphoṭSi. 33.12; वस्तुनोऽतिशयः कश्चिदभाववचसोच्यते BṛĀraUBhVā. i. 2.16; कमतिशयं वाक्यं कुर्यात् NaiṣkSi. 139.7; तदिदमसाधारण्यमतिशयः TātpaṬ.(Vā.) 26.4 (on i. 1.1); गुणगुणित्वकृतोऽतिशयस्तयोः SaṁkṣeS'ā. 1.230 (i. 176.13); अनुभवाधीनं कश्चिदात्मनोऽतिशयमुपकल्पयति PrakaPañ. 330.10; चिरध्वस्तं फलायालं न कर्मातिशयं विना NyāyKuA. i. 26.3; दर्पणादिकम् ... प्रतिबिम्बभाग एवातिशयमादधाति VivaPraSaṁ. 58.15; योषिद्वपुष्यतिशयो न दृष्टो जीवनिर्मितः PañcDa. 4.24; अत्रापि हि आगमसिद्धान्तस्य केवलमोक्षप्रदत्वलक्षणोऽतिशयः PañcRāRa. 9.16; नापि तज्जन्यो विषयगतो ज्ञाततापराकाट्यापरपर्यायोऽतिशयः TantrRaha. 8.5; विशेषः - पूर्वावस्थाया भेदः, अतिशय इति यावत् Bhāsk. i. 98.17 (on i. 2.6); **6** super-natural power or miraculous event associated with a Jain prophet नश्यन्त्यतिशयाः सर्वे त्रिदशागमनादयः PadmP.(Ra.) 92.61; दृष्ट्वातिशयमीदृक्षं बहवो नरकुञ्जराः ... बभूवुः श्रावकास्तदा BṛKathāK. 49.183; गृहेऽस्यातिशयाः पञ्च बभूवुः BṛKathāK. 66.10; दृष्ट्वातिशयमीदृक्षं गुरुदत्तस्य योगिनः । कृत्वा स्वनिन्दनं वाढं प्राप्य केवलिनं द्विजः BṛKathāK. 139.108; महाप्रातिहार्यचतुस्त्रिंशदतिशयविराजितस्य YaśasCam. ii. 374.5; अयमेवातिशयः किं न भवति TātpaVṛ. 29.21 (on 1.20); आहारनीहारविधिस्त्वदृश्यश्चत्वार एतेऽतिशयाः सहोत्थाः AbhidhāCin. 58; आचार्यैर्दर्शितं तम् ... अतिशयं प्रेक्ष्य PariPar. 12.97; ज्ञानैस्त्रिभिश्चतुर्भिश्चातिशयैः सहजन्मभिः । जगद्विलक्षणोऽस्ति TriṣaS'aPuC. iii. 1.190; एवं चातिशयैः सम्यक् सामान्यजनदुस्तरैः । ... वीरगणिः सूरिर्विश्वपूज्यस्तदाभवत् PrabhāC. 131.11; तस्य पात्रदानस्यातिशयात्त्वं सातवाहननामा नृपतिरासीः PrabaCin.10.15; °संज्ञाकर्मकषायगुप्त्यातिशया ज्ञेयाः सुधीभिः सदा KumāPraPra. 85.27; ममाज्ञातफलभक्षणे नियमोऽस्ति किमेभिरतिशयैः SamyaKau. 87.19; **7i** one of the 36 *bhūṣaṇas* of a drama गुणानुवादोऽतिशयः सहेतुः NāṭyaS'ā. 16.1; उत्तमार्थाद्विशिष्टो यः स चाप्यतिशयः स्मृतः NāṭyaS'ā. 16.13; **7ii** one of the 36 *lakṣaṇas* of a drama बहून् गुणान् कीर्तयित्वा सामान्यजनसंश्रयान् । विशेषः कीर्त्यते यत्र ज्ञेयः सोऽतिशयः बुधैः NāṭyaS'ā. + 16.20; AbhinBhā. ii. 306.14 (on 16.13) = one of the 36 भूषणs, RasāSu. 256.9 (3.115); 248.5 (3.99); (*bhūṣaṇa* called गुणातिशय) SāhiDa. 339.14; **7iii** one of the 64 (?) अलंकारs of a drama विशेषकीर्तनं यस्यार्थे सोऽतिशयः स्मृतः BhāvPra.(S'ā.) 224.3 (8); 223.11 (8); SāhiSā. 3.21; **8A** heightened or exaggerated description, poetic hyperbole and a figure of speech based on it अलंकारान्तराणामप्येकमाहुः परायणम् । वागीशमहितामुक्तिमिमामतिशयाह्वयाम् Kāvyāda. 2.220; SaraKaṇṭhā. 540.4; समान्नासीत् ... अतिशयं पाराशरः KāvyMī. 1.10; अर्थस्यालंकारा वास्तवमौपम्यमतिशयः श्लेषः Kāvyālaṅ.(Ru.) 7.9; यत्रार्थधर्मनियमः प्रसिद्धिबाधाद् विपर्ययं याति । कश्चित्क्वचिदतिलोकं स स्यादित्यतिशयस्तस्य Kāvyālaṅ. (Ru.) 9.1; लोकसीमानिवृत्तस्य वस्तुधर्मस्य कीर्तनम् । भवेदतिशयो नाम संभवासंभवाद् द्विधा AgniP. 343.26; लोकसीमातिक्रमेण विशेषविवक्षा सोऽयं क्रियातिशयो नामातिशय एवान्योन्यातिशय उच्यते SaraKaṇṭhā. 543.218 (also called अतिशयोक्ति); इह हि अतिशयस्य द्वयी गतिः यदयं कविप्रतिभानिर्वर्तितः सामान्यात्मा भवति भेदेऽप्यभेद इत्येवमादिरूपो विशेषात्मा वा Vimarśinī on AlaṅkāSa. 67.13; सम्भावनयान्यथा वातिशयोऽतिशयः AlaṅkāRa. 95; **8B** figure of speech based on *adhyavasāya* ( where the *upamāna* completely swallows the *upameya* usually called Atiśayokti ) विषयिणा विषयस्य निगरणमतिशयः RasGaṅ. 421.2; किं च परस्पराभेदाध्यवसानमात्रमतिशय एव नातिशयोक्तिः RasGaṅ. 487.4; क्वचिद्भेदाध्यवसायरूपोऽतिशयः RasGaṅ. 405.3; [ AmaK. 2271; 131; AnekāSa. 672; 801; Vaija. 192.3; AbhidhāCin. 1506; MediK. 35.3; 137.69; अतिशय has been rendered as one of the meanings of अट्ट Vaija. 214.5; Nānārthā-Saṁ. i. 45.25; अत्यर्थ TrikāS'e. iii. 3.91 (comm.); उत्कर्ष TrikāS'e. iii. 3.71 (comm.); ऋद्धि AnekāK. 408; कट TrikāS'e. iii. 3.93 (comm.); काम AnekāTi. 2.62; किमुत AnekāSaṁ. 7.55; MediK. 197.29; AnekāK. 986; ज्यायस् AnekāTi. 2.122; प्राग्भार NānārthāSaṁ. ii. 25.160; भर AnekāSaṁ. 2.433; AnekāK. 714; NānārthāSaṁ. i. 28.85; S'abdaRaSaK. 257.13; भृश TrikāS'e. iii. 3.121 (comm.); विशेष NānārthāSaṁ. ii. 197.1716; व्यापत Anekā-Saṁ. 3.285; AnekāTi. 3.232 ]; **अतिशयात्** ( atiśayāt ) [Abl.] in a high degree आच्छादयामास मृगो मृगाङ्कम् । दूराधिरूढं जनमापदीव प्रकाशमानोऽतिशयादवर्णः RāmC. 3.76; **अतिशयेन** ( atiśayena ) [Inst.] A excessively, greatly, very much, to a great extent or degree (with verbs) ( दूती पत्युः ) मन्दवेगताम् ...अन्यानि च यानि तस्मिन् गुप्तानि अस्या अभ्यासे सति सद्भावेऽतिशयेन भाषेत KāmSū. 276.23 (5.4); एकीकृत्य तु तत्सर्वं पश्चात् सूत्रेण लाञ्छयेत् ... तत्र चातिशयेन च JayāS. 15.24; अतिसत्त्वयुक्त इति पुंभिरयमतिशयेन वर्ण्यते S'iśu-Va. 15.38 + 15; दीप्यते हि इयम् अतिशयेन ब्रह्मविद्या सर्वविद्यानाम् GītāBh. (S'aṅ.) 254.13 (on 9.2); अति असृजत अतिशयेन असृजत सृष्टवत् BṛĀraUBh. 144.12 (on i. 4.11); 245.7 (on ii. 1.19); न चैतदतिशयेन साम्प्रतमुपयुज्यते NyāyVārPari. 10.6; यथा कार्ये ज्योतिषि अतिशयेनोपपद्यते Bhām. 151.15 (on i. 1.24); संध्याकाले ... सततमतिशयेन भृशं च नृत्यति AbhinBhā. i. 164.17 (on 4.249); जीर्धेत्यतिशयेनेति पचाद्यचि यदुक्तं रूपम् AbhinBhā. i. 29.17 (on 1.70); अकृतार्थे तु द्रव्ये प्रक्षेपस्यापि हि दृष्टार्थाभावादतिशयेन अदृष्टार्थता वक्तुं शक्यते TantrRa. 65.16; उक्तमर्थमतिशयेनावधारयति Karma-Ni. 3A.11; अतिशयेन दीप्यते ... प्रभुप्रतापः HammiMaMa. 2.:7(1)' पुन

पुनरतिशयेन वा मूत्रयति मोमूत्र्यते MugdhaBo. 20.3 (129.7); भृशमतिशयेन अतुदन् अव्यथयन् ManvaVi. i. 489.1 (on 4.68); धर्मज्ञम् ··· प्रीतिमत्प्रकृतिकं यत् तन्मित्रमतिशयेन शस्यते ManvaMu. 285.19 (on 7.209); PrakriKau. ii. 350.2; अतिमारुतेऽतिशयेन वाति वायौ ViraMi. 232.7 (on 1.149); विनायकोपसृष्टः स्वप्ने निद्रादशानां(? यां) जलमत्यर्थमतिशयेनावगाहते जले मज्जति ViraMi. 331.11 (on 1.272); अतीसारो व्याधिः । अन्तर्भावितण्यर्थोऽत्र सरतिः । रुधिरादिकमतिशयेन सारयतीत्यर्थः SiddhāKau. 568B.9; **Bi** excessively, greately (participles etc. used predicatively) विदितं नाम यद्विदिक्रियया अतिशयेन आप्तं विदिक्रियाकर्मभूतम् KenaUBh. 35.18 (on 1.4); असावपि युवा ··· अतिशयेन स्पृहणीयतां गतेन ··· आत्मसमर्पणेन परमस्तं TilaMañ. 123.17; तत्तु (अनपत्यताडुःखम्) दैवादतिशयेनासह्यतां गतम् TilaMañ. 28.8; यदीयस(श)सा जगत्यतिशयेन सु(शु)क्लीकृते EI. xxv. 56.8; अतस्त्वमसि ··· इत्येकत्वमतिशयेन निराकृतम् SarvaDaSam. 5.187; विरहिततरमतिशयेनागन्तुकैस्तदुर्व्यैश्च जीवैर्वर्जितम् KumāPraPra. 76.16; तदतिशयेन संपादनीयो मम पानभोजनविधिः Jīvāu. 331.1; प्रत्युपकारार्थबुद्ध्यापि मातापित्रोरतिशयेन हितं कार्यम् ManvaVi. 258.4 (on 2.227); अतिशयेनाहितं कृतम् KathāK. 151.2; सत्सु सज्जनेषु आ समन्तादतिशयेनोदिता LalitāSaBh. 186.28 (on 221); **Bii** (with adjectives) ब्रह्मिष्ठोऽसीति अतिशयेन त्वं ब्रह्मवित् PraśnaUBh. 261.5 (on 3.2); उभयेषां मध्ये के योगवित्तमाः के अतिशयेन योगविदः इत्यर्थः GitaBh. (S'aṅ.) 340.10 (on 12.1); हिंसा चातिशयेन दुःखावहा ManuBh. i. 441.16 (on 5.48); अतिशयेन प्रयोजनवत् TātpaṬ.(Vā.) 16.6 (on i. 1.1); यो युवतीनामतिशयेनात्मतत्त्वावगमकानामज्यानां नित्यानां धेनूनां धर्मार्थकाममोक्षपोषकाणां वाचां पतिं वायुं प्रति पतिर्भवसि इति वा KarmaNi. 5A.1; अतिशयेन प्रवृत्तिनिमित्तवत्त्वेन शब्दस्य मुख्यत्वात् TattvPrakā. 66B.10 (on i. 4.2); अनृत्यतिशयेनानृतवादी ··· तस्यान्नं न भुञ्जीत ManvaMu. 184.12 (on 4.214); अतिशयेन स्रग्वी स्रजिष्ठः PrakriKau. i. 924.5; तथा सति अतिशयेन वीर्यवती भूयासम् ManvaMu. 57.27 (on 2.114); सर्वकण्टकानां मध्ये अतिशयेन पापतमं सुवर्णकारम् ··· खण्डशश्छेदयेत् ManvaMu. 417.16 (on 9.292); **Biii** (with adverbs) भगवानखिलसिद्धगन्धर्वेभ्योऽतिशयेन कमनीयं रूपमकरोत् ViṣṇuP. iv. 2.87; अतिशयेन स्थूलः स्थविष्ठः ViṣṇuSaBh. 48.7 (on 19); स मे मम युक्ततमः अतिशयेन युक्तः मतः अभिप्रेतः इति GitāBh.(S'aṅ.) 210.14 (on 6.47); परं कृष्णं रूपम् अतिशयेन कृष्णमित्यर्थः ChāndoUBh. 145.15 (on iii. 4.3); अयमनयोः अतिशयेन शुक्लः ParāTri. 29.4; आ पादान्तान्मेध्यः पुरुषः । तस्य नामेरूर्ध्वमतिशयेन मेध्यम् ManuBh. i. 43.16 (on 1.92); महागंभीरोऽतिविदग्धः सुष्ठु गर्वहीनोऽतिशयेन क्रीडाचतुरः Loc. 44.14 (on 1.13); तेजोराशिः समुत्पन्नः तिष्ठति अनभिभवात् अतिशयेन दीप्यमानः Kiraṇā. 94.20; यस्यां तु मिथ्यादृष्टौ सर्वभूतानि जाग्रति अतिशयेन सुप्रबुद्धरूपाणि Kāvyānu.(He.) 52.21; तद्विधूतस्य नभोवनेऽस्मिन् दत्त्वेति निर्मितमिवातिशयेन तुङ्गम् PṛthviVi. 4.25; अतिशयेन साधकं साधकतमं प्रकृष्टं कारणमित्यर्थः TarkBhā.(Ke.) 28.6; यच्च यदर्थं प्रियं तत्ततोऽप्यतिशयेन प्रियमिति लोके दृष्टम् SarvaDaKau. 127.8; अतिशयेन वृद्धो ज्येष्ठः PrakriKau. i. 921.7; अयमेषामतिशयेन लघुः लघुतमः लघिष्ठ इत्यर्थः PrakriKau. i. 917.6; पटुतमेति।···इयमासामतिशयेन पट्वी 'अतिशायने तमबिष्ठनौ' इति तमप् Prasā. i. 585.15; अतिशयेन यागार्हं हविर्देवताभ्य उपकल्प्य शेषान्नमुपभुञ्जीत ManvaMu. 230.11 (on 6.12); पूज्यतमः यथान्येषां पूज्यास्ततोऽप्यतिशयेन पूज्या इत्यर्थः ViraMi. 349.19 (on 1.308); परमतिशयेन विश्रुतं प्रसिद्धमित्यर्थः LalitāSaBh. 14.19 (on 33); एवमतिशयेन साधुरित्यर्थे साधीय इत्यपि LaS'abdeS'e. i. 353.24; अध्यात्मविषयकज्ञानविषये अतिशयेन निपुण इत्यर्थः BālamBha. i. 12.17 (on 1.9); किं ब्रवीषि । आर्य स्वत एव रमणीयमिदमम्बिकानिलयनम् इदानीं पुनरतिशयेन RasSa. 63(2); **C** excessive, great, abundant (with nouns) ओंकारः ··· अतिशयेन रसः रसतमः ChāndoUBh. 12.2 (on i. 1.3); विस्मयोऽतिशयेनार्थदर्शनाच्चित्तविस्मृतिः AgniP. 338.15; तस्या अतिशयेनाप्रगल्भत्वात् JayaMa. 274.5 (on 5.3); तत्र मे परममित्रम् ··· अतिशयेन प्रसादपात्रम् ··· क्रीडासुखमनुभवति TilaMañ. 40.8; सा दुर्दशेवातिशयेन याच्ञा न कस्य मानक्षतिमातनोति DaśāvaC. 5.190; श्रुतिस्मृत्यपरिगृहीतत्वाच्चातिशयेनानपेक्षता BrahmSūBh.(Ma.)29B.10 (on ii. 2.17); परमस्थूलतायुतः । ··· द्वितीयपक्षे परममतिशयेन अस्थूलता KāvyKaVṛ. 74.13 (3.3); अतिशयेन राजा अतिराजा MugdhaBo. 6.83 (64.11); सर्वोत्कृष्टत्वोपासनं चान्योपासनेभ्योऽतिशयेन भगवत्प्रसादहेतुः TattvPrakā. 201B.6 (on iv. 1.5); अन्यसूत्रेभ्योऽतिशयेन निर्णायकत्वाद् वचनं युक्तम् TattvPrakā. 3B.6 (on i. 1.0); वायोरपि परतो गन्तव्यसद्भावान् न तस्यातिशयेन प्राधान्यम् TattvPrakā. 215A.9 (on iv. 3.6); ततो ह्यतिशयेन चित्तविक्षेपाद्रमणानुपपत्तिः NyāySu.(Ja.) 166B.5 (on i. 2.5); यान्यतिशयेन राजोपभोग्यत्वेन प्रसिद्धानि करितुरगादीनि मणिमुक्तादीनि च DaṇḍaVi. 92.11; तस्माद्गजेन्द्राः परीक्षणीयाः स जीवितं चातिशयेन राज्ञाम् Hastyāyur. 45.5(1.6); कामजे चतुष्के कष्टतममतिशयेन दुःखहेतुः ManvaVi. 778.20 (on 7.50); ततोऽप्यतिशयेनान्तरमन्तरतरम् AṇuBh. 223.6 (on iii. 3.8); अतिशयेन वेदधारणात्सर्वस्यास्य जगतो धर्मानुशासनेन ब्राह्मणः प्रभुः ManvaMu. 26.16 (on 1.93); उत्कृष्टेभ्योऽप्यतिशयेन श्रैष्ठ्यम् S'ivārkaMaDī. i. 266.10 (on i. 1.23-24); गतिरतिशयेनोपनिषदाम् ··· स चैतन्यः किं मे पुनरपि दृशोर्यास्यति पदम् StavMā. 3.21; पुनः पुनरतिशयेन वा यानं यान्तस्यार्थः SiddhāKau. 478A.5; विद्यावतां पाणिनिप्रभृतीनामतिशयेन विद्यायोगमाख्यातुम् Prasā. i. 484.18.

**अतिशय** (ati-śaya) *adj.* [*f.* -ā] **i** excessive, exceeding, more तथा स (सामप्रगाथः) स्तोत्रियेण समो वातिशयो वा संपद्यते KausiBr. 23.2 (103.16); अतिशयं वै द्विपदां यज्ञायज्ञीयम् PañcBr. v. 1.19 (Sāy. अतिशयितमतिरिक्तम्); विलोक्याद्भुतमेतन्मे विस्मयोऽतिशयोऽभवत् ĀdiP. 13.12; दानम् ··· अतिशयश्रीदम् EI. xix. 160.62; **ii** superior, surpassing लोकातिशयविक्रमतया नरलोकविक्रमः EI. ix. 318.9; सैषा ब्रह्मणः प्रजापतेरतिसृष्टिरात्मनोऽप्यतिशया BṛĀraUBh. 93.15 (on i. 4.6); तथापि तस्यामतिशयं दैवं प्रवर्तते । अतिरिक्तः पुरुषकार एव भवति ManuBh. ii. 63.16 (on 7.205)

**अतिशयकरण** (atiśaya-karaṇa) *n.* the act of bringing about excellence प्रथमवर्णश्रवणवेलायां स्फोटोऽभिव्यक्तो भवति न च द्वितीयादिवर्णवैफल्यं तदवगतेरेवातिशयकरणात् NyāyMañ. i. 340.4.

**अतिशयकरत्व** (atiśayakara-tva) *n.* characteristic of creating a speciality आवृत्तेरतिशयकरत्वे दृष्टे सत्यपरोक्षज्ञानातिशयावृत्तिरिति नानुपपन्नम् VedāntKa. 512.10 (on iv. 1.1); नापि योगिप्रत्यक्षं तद्ग्राहकम्, तस्य स्वविषयरूपादिष्वेव अतिशयकरणत्वात् VivaPraSam. 278.18.

**अतिशयकर्कश** (atiśaya-karkaśa) *adj.* excessively harsh अतिशयकर्कशेन वातातपस्पर्शेनातिमात्रकर्शितमपि ··· समरकेतुमालोकितमात्र एव ··· अभिमुखमगच्छत् (हरिवाहनः) TilaMañ. 230.18.

**अतिशयकर्तृरूप** (atiśayakartṛ-rūpa) *adj.* having the form of one causing distinction अतिविशिष्टेऽर्थे इति । अतिशयकर्तृरूपेऽर्थे इत्यर्थः LaS'abdeS'e. ii. 366.6.

**अतिशयकल्पन** (atiśaya-kalpana) *n.* assumption of a speciality कथं तन्निर्वाहार्थमतिशयकल्पनम् TattvCin. ii(2). 136.1.

**अतिशयकल्पना** (atiśaya-kalpanā) *f.* assumption of superiority अस्तु वा तत्राप्यतिशयकल्पना किं नश्छिन्नम् NyāyMañ. i. 35.2.

**अतिशयकारणत्व** (atiśayakāraṇa-tva) *n.* the state of being the cause of excellence भीष्मादप्युत्तमानां सर्वकालस्याप्यतिशयकारणत्वान्न कालविशेषेणातिशयः TattvPrakā. 212A.11 (on iv. 2.21)

**अतिशयकारित्व** (atiśayakāri-tva) *n.* the state of creating distinction योगसामर्थ्यस्यापीन्द्रियविषयेष्वेवातिशयकारित्वात् VedāntKa. 62.9 (on i. 1.4)

**अतिशयकारिन्** (atiśayakār-in) *adj.* doer of extraordinary deeds कवेरतनया[ वे ]लो[ ल ]ल्लङ्घनप्रशमनप्रमुखाद्यनेकातिशयकारिणः करिकालस्यान्वये··· नृपतिरभवत् EI. xi. 345.4.

**अतिशयकुटिलगति** (atiśayakuṭila-gati) *adj.* very crooked or devious in gait अतिशयकुटिलगतिः । ··· सा परिहार्या क्रौञ्चपदा स्त्री NāṭyaS'ā. 15.148.

**अतिशयक्रिया** (atiśaya-kriyā) *f.* very effective action अतिशयक्रिया कर्तर्येव समवेता Pradī. iv. 381A.10 (on v. 3.55)

**अतिशयखेदसम्पद्** (atiśayakheda-sampad) *f.* high degree of excessive exhaustion भृशमतिशयखेदसम्पदेव स्तनयुगलैरितरेतरं निपण्णैः S'iśuVa. 7.65.

**अतिशयगत** (atiśaya-gata) *adj.* **i** charged with (unreal) peculiarities सर्वमतिशयगतं कुरुते स्फुटमिन्द्रजालमिदमेष मायया S'iśuVa. 15.38(+20); **ii** endowed with excellence, S'iśuVa. 15.38 (+20)

**अतिशयगन्धाढ्य** (atiśayagandhāḍhya) *adj.* rich in abundant smell वनमतिशयगन्धाढ्यं भ्रमति मधुकरी हृष्टा NāṭyaS'ā. 15.30.

**अतिशयगहन** (atiśaya-gahana) *adj.* very thick, extremely dense कानि स्थानानि दम्भान्यतिशयगहनास्सन्ति वा के प्रदेशाः SūktiMu. 60.14.

**अतिशयगुण** (atiśaya-guṇa) *adj.* extremely meritorious अतिशयगुणं त्वत्पाण्डित्यं मयाप्यनुवर्तितम् Tantrākhyā. 130.7 = PañcT. 4.19 (394.3)

**अतिशयगुणयोग** (atiśayaguṇa-yoga) *m.* possession of excellent merits तपोविद्यातिशयगुणयोगेन प्रख्याततमाः ManuBh. i. 209.12 (on 3.5)

**अतिशयगुणवत्** (atiśayaguṇa-va(n)t) *adj.* possessing extraordinary merits अर्थिप्रत्यर्थिभ्यामनुमतोऽतिशयगुणवानेकोऽपि साक्षी स्यात् BālaKrī. i. 227.25 (on 2.74)

**अतिशयगौर** (atiśaya-gaura) *adj.* very pale वपुरतिशयगौरं गर्भमाविष्करोति SaduktiKa. 74.30.

**अतिशयग्रह** (atiśaya-graha) *m.* cognition of distinction दिक्कालादि-

विशिष्टोऽर्थः स्फुरत्यतिशयग्रहात् NyāyMañ. i. 79. 5.

**अतिशयग्रहण** (atiśaya-grahaṇa) *n.* perception of preponderance द्वयोर्ग्रहणेऽतिशयग्रहणोपपत्तिः NyāyBh. 266. 10 (*on* iv. 1. 40)

**अतिशयग्राहक** (atiśaya-grāhaka) *adj.* apprehending excellence सविषयेऽतिशयग्राहकमार्गयमपि प्रत्यक्षमूलं संभवति PrakaVi. 300. 21; TattvCin. ii(2). 139. 1.

**अतिशयग्लपित** (atiśaya-glapita) *adj.* reduced extremely, very much emaciated विश्रान्ताः शोषमतिशयग्लपिताः ज्वरिता इव लक्ष्यन्ते ··· महासरितः Subhāṣi. 1814.

**अतिशयचपल** (atiśaya-capala) *adj.* very momentary जीवितमतिशयचपलम् MohaMu. 4.

**अतिशयचमत्क्रिया** (atiśaya-camatkriyā) *f.* great pleasure यस्यैव एतद्भोगासङ्गाभ्यासनिवेशितानन्तवृंहकवीर्यवृंहितं हृदयं, तस्यैव सातिशयचमत्क्रिया ParāTri. (comm.) 49. 7.

**अतिशयचारु** (atiśaya-cāru) *adj.* very beautiful कृतार्थकृत्य ··· अतिशयचारुरूपाम् ··· तिलकमञ्जरीम् TilaMañ. 425. 19; PrabhāC. 46. 7.

**अतिशयचोक्ष** (atiśaya-cokṣa) *adj.* very clean, very pure यथातिशयचोक्षाणि सच्छायान्यंशुकान्यहम्। धूपयित्वा परिदधे कौमुदीपर्ववासरे PariPar. 7. 50.

**अतिशयच्छेक** (atiśaya-ccheka) *adj.* very clever or skilful (नायकः) अतिशयच्छेकपाटहिकताडितपटहनादपटुतरेण दूरादेव खुरपुटध्वनिना प्रकटीकृतो ··· काचरककाण्डरातनामानौ प्रज्ञाततमावश्ववारावद्राक्षीत् TilaMañ. 85. 9.

**अतिशयजनकत्व** (atiśayajanaka-tva) *n.* the state of being productive of excellence क्षणिकत्वेऽपि प्रत्यासीदतां सहकारिणामतिशयजनकत्वात् Kiraṇā. 75. 15; VedāntKa. 76. 16 (*on* i. 1. 4)

**अतिशयजनन** (atiśaya-janana) *n.* production of excellence न हि परस्यातिशयजननार्थं तदुपादानम् MayūMāli. 333. 3 (*on* iii. 8. 2)

**अतिशयजन्मन्** (atiśaya-janman) *n.* creation of excellence (i. e. in Adṛṣṭa) न चातिशयजन्म। गुणे गुणान्तरानुपपत्तेः NyāySu. (Ja.) 109B. 5 (*on* i. 1. 3)

**अतिशयजुष्** (atiśaya-juṣ) *adj.* possessing speciality or excellence असद्वाचामतिशयजुषां वस्तुतत्त्वाभिधाने। ··· यशसां कोऽपि टाङ्कारटङ्कः HarVi. 50. 95(+3); दातार्थानामतिशयजुषामर्थिसार्थार्थनायाः। ··· जीवतादार्कचन्द्रम् ··· तत्त्वविज्ञाननाथः Mitā. 528. (18 3. 33(+4))

**अतिशयज्ञान** (atiśaya-jñāna) *adj.* possessing superior knowledge प्रणम्यातिशयज्ञानः पृष्टः श्रमणसत्तमः PadmP. (Ra.) 7. 386; *n.* superior knowledge स च महेश्वरेण विनियुक्तो ब्रह्मातिशयज्ञानवैराग्यैश्वर्यसंपन्नः PadārthaSaṁ. 49. 12 = NyāyKa. 53. 3; TattvSaṁ. 3169; 3462.

**अतिशयज्ञानिन्** (atiśaya-jñānin) *adj.* possessed of supreme knowledge देवताविशेषोऽतिशयज्ञानी पूजोपचारम् ··· जानीते SyādvāMañ. 11(70); PrabhK. 93. 21; KumāDeC. (So.) 14. 11.

**अतिशयतस्** (atiśaya-tas) *adv.* excessively द्विजजातिनातिशयतः केनापि संसेवितः EI. i. 65. 10.

**अतिशयतिरस्कार** (atiśaya-tiraskāra) *m.* extreme contempt प्रकृष्यगर्होऽतिशयतिरस्कारः JaineVyā. 68. 31 (*on* i. 4. 27)

**अतिशयतीव्रा** (atiśaya-tīvrā) *adj.* (*f.*) very acute मया ··· मनस्तिशय इवातिशयतीव्रामीशाननयनाग्निदाहवेदनां विनोदयितुमायातः ··· पथिकदारको दृष्टः TilaMañ. 162. 22.

**अतिशयतृतीय** (atiśaya-tṛtīya) *adj.* one-third of the excess distance (between the square and the arc) पार्श्वतः परिक्रम्यातिशयतृतीयेन सह मण्डलं परिलिखेत् ĀpaŚuS. i. 3. 3.

**अतिशयत्व** (atiśaya-tva) *n.* the state of being excessive, excessiveness, extreme limit यस्यातिशयत्वनिबन्धनं तथाविधं तद्विदाह्लादकारि काव्यं करणीयमिति तस्यालंकारः VakroJī. 162. 7; PadmP. ii. 66. 173; TātpaṬ. (Vā.) 25. 9 (*on* i. 1. 1); तारतम्यं क्वचिद्विश्रान्तं अतिशयत्वात् PramāMī. 12. 1 (*on* i. 1. 16); शिशिरसरोजरुचेः सह क्षणादतिशयत्वमगादनुनेतृता HammīMaKā. 7. 44; LaCandr. 791 19.

**अतिशयदर्शन** (atiśaya-darśana) *n.* experience of excessiveness or extremeness समानसंख्यैश्वरारब्धेऽतिशयदर्शनात् PadārthaSaṁ. 131. 10; TātpaṬ. (U.) 73. 24 (*on* 2. 114); NyāyKa. 137. 2; Kiraṇā. 215. 7; कार्यमहत्त्वादौ अतिशयदर्शनात् TarkSaṁ. (Ā.) 66. 24; धूपोपयोगेन चातिशयदर्शनात् घ्राणसिद्धिः NyāySu. (Ja.) 417A. 1 (*on* ii. 2. 10)

**अतिशयदर्शनीयता** (atiśayadarśanīya-tā) *f.* the state of being very beautiful or good-looking सौवर्णशब्दः उपलक्षणं मित्यादीनां, प्रायस्त्वदर्शनात् तदुपादानं स्वतः मनोज्ञस्य स्तम्भस्यातिशयदर्शनीयतायै LalitāTriBh. 351. 10 (*on* 57)

**अतिशयदुःख** (atiśaya-duḥkha) *n.* excessive pain संशब्दोऽतिशयदुःखप्रतिपत्त्यर्थः Bālakri. ii. 74. 3 (*on* 3. 208)

**अतिशयदुष्प्रेक्षा** (atiśaya-duṣprekṣā) *adj.* (*f.*) extremely disagreeable to see लङ्घनम्या निरन्तरम्। कृतातिशयदुःप्रेक्षा सुमीमात्यन्तगह्वरा PadmP. (Ra.) 48. 245.

**अतिशयदुर्गन्धिता** (atiśayadurgandhi-tā) *f.* the state of having an extremely nauseating smell यदतिशयदुर्गन्धितयाप्रियं लशुनपुरीषादि तस्य ··· आघ्राणम् ··· इत्येतत्प्रत्येकं जातिभ्रंशकरं स्मृतम् ManvaMu. 463. 3 (*on* 11. 67)

**अतिशयदुर्लभ** (atiśaya-durlabha) *adj.* very difficult to get स हि··· निःशयरनकैवल्यसुखम्। अतिशयदुर्लभमनघं संप्राप्तः PadmP. (Ra.) 123. 144.

**अतिशयदुष्ट** (atiśaya-duṣṭa) *adj.* very wicked अयमतिशयदुष्टो हन्यताम् (अङ्गदः) MahāN. 7. 77.

**अतिशयदेश** (atiśaya-deśa) *m.* excellent region असौ (विराधितः) ··· रेमे ·· अतिशयदेशेषु गीर्वाणागमनेषु (वीराणां विश्रमं पदयन्) PadmP. (Ra.) 9. 47.

**अतिशयद्योतन** (atiśaya-dyotana) *n.* suggestion of eminence, superiority or excellence अतिशयद्योतनार्थं गतिसंबन्धाभावः Pradī. iii. 169A. 31 (*on* iii. 2. 56); प्रत्ययप्रयोगोऽतिशयद्योतनाय VedāntKa. 135. 21 (i. 2. 1); प्रकृत्यर्थस्यातिशयद्योतनाय तरबादयः PadMañ. *on* KāśiVṛ. *on* P. iii. 1. 22.

**अतिशयद्योतनार्थ** (atiśaya-dyotanārtha) *adj.* for the sake of conveying excellence तुराब्दः सिद्धान्तापेक्षयातिशयद्योतनार्थः YuktiSneha. 5. 39 (*on* i. 1. 1); गवाश्वगतप्राशस्त्यस्यानन्यनिष्ठत्वख्यापनेनातिशयद्योतनार्थत्वात् MīmāKau. i. 285. 7 (*on* i. 4. 26)

**अतिशयधर्मोपन्यास** (atiśayadharmopanyāsa) *m.* statement of an extraordinary quality अत्रातिशयधर्मोपन्यासः सातिशयोपमा AlaṅkāSe. 11. 3(8)

**अतिशयधवल** (atiśaya-dhavala) *m.* epithet of king Amoghavarṣa (excessively bright) मगधमाळवबेङ्गीशैरर्चितोऽतिशयधवलः EI. vi. 103. 8; vii. 205. 6.

**अतिशयधावद्धामन्** (atiśaya-dhāvaddhāman) *adj.* of glory flowing amply धनुरतिशयधावद्धाम्नि यस्मिन् धुनाने विजयविजयवेला नो विलम्बं व्यधत्त VīraBhā. 11. 3.

**अतिशयन** (ati-śayana) *n.* **i** eminence, excellence अतिशयनमतिशायनं प्रकर्षः KāśiVṛ. *on* v. 3. 55; **ii** excess, abundance, superfluity [APTE]; *adj.* **i** eminent, abundant [PW, MW, APTE]; **ii** surpassing (in comparison), great [APTE]

**अतिशयनम्** (ati-śayanam) *adv.* excessively [MW]

**अतिशयनमित** (atiśaya-namita) *adj.* [*f.* -ā] bent down very much विटपततिः ··· नानाफलैरतिशयनमिता HarVi. 5. 16; अतिशयनमितः स्तनभारैः क्षीणगः YudhiVi. 2. 105.

**अतिशयनम्र** (atiśaya-namra) *adj.* **i** extremely humble or low स्तब्धप्रकृतिर्लोके बहुमानमुपैति नातिशयनम्रः SūktiRa. 29. 25 = Subhāṣi. 2878; **ii** very much sagging SūktiRa. 29. 25 = Subhāṣi. 2878.

**अतिशयनामन्** (atiśaya-nāman) *adj.* of the nature of exaggeration गुणानुवादनाम्ना लक्षणेन योगात्प्रशंसोपमा अतिशयनाम्नातिशयोक्तिः AbhinBhā. ii. 321. 21 (*on* 16. 40)

**अतिशयनाश** (atiśaya-nāśa) *m.* destruction of excellence or potency न च अतिशयनाशादजनकतास्तु NayaVi. 134. 6 (*on* i. 1. 5)

**अतिशयनिन्दा** (atiśaya-nindā) *f.* excessive censure or blame राज्ञः पुनरुपन्यासः ··· अतिशयनिन्दाप्रदर्शनोपोद्घातार्थः BālaKri. i. 109. 21 (*on* 1. 139)

**अतिशयनिभ** (atiśaya-nibha) *adj.* of the nature of superiority निरगमम् ··· अतिशयनिभनिष्ठवाक्प्रबन्धान् सुगतमतस्थितकोविदान् जिगीषुः PrabhāC. 70. 26.

**अतिशयनियम** (atiśaya-niyama) *m.* necessity of distinction विषायाः अन्यथात्वाभावान्नास्ति तत्फले कश्चिदतिशयनियमः PrakaVi. 997. 19.

**अतिशयनिर्बन्ध** (atiśaya-nirbandha) *m.* great emphasis or stress किमेतैर्बीभत्सविशेषणैरतिशयनिर्बन्धानुबद्धैरधिकमुद्भासितम् AuciViCa. 16 (143)

**अतिशयनिष्ठा** (atiśaya-niṣṭhā) *f.* highest perfection, extreme superiority अतिशयनिष्ठामप्राप्तानामौपचारिकमैश्वर्यमित्यर्थः TattvVai. 30. 12 (*on* 1. 24)

**अतिशयिनी** (atiśayinī) *f.* name of a metre of four lines, also called *citralekhā* [MW, APTE]

**अतिशयपर** (atiśaya-para) *adj.* pertaining to excellence or superiority अतिशयपरकर्कशसोत्कर्षसुमदसुजस्तम्भसासुचितेन कुवलयनालतुलाधिरोपणेन वाक्यार्थः सोपहासतयैव निबद्धः परिज्ञायते AuciViCa. 12(21)

**अतिशयपरभाग** (atiśaya-parabhāga) *m.* extreme excellence अति-

very prosperous श्रियै अतिश्रियै ब्राह्मण्यै ··· श्रियै अतिश्रियै ब्राह्मणाय MahāBh. i. 314. 20 (*on* i. 4. 3); अतिलक्ष्मीः अतिश्रीः JaineVyā. 4. 18 (i. 1. 8) = KāśiVr. *on* i. 2. 48; अतिश्रिये ब्राह्मणाय Nyās. i. 266. 13 (*on* i. 4. 6); अतिश्रीः। इत्यादौ ह्रस्वो न PrakriKau. i. 525. 2; अतिश्रियं ब्राह्मणानामिति Prasā. i. 190. 11; वैमानिकसुखावासं तेऽतिश्रियमशिश्रियन् PrabhāC. 52. 26(7)

**अतिश्रु** (ati-śru-) v. ā. to excel in renown एष एतानि चक्रारेन्द्रो विश्वा योऽति शृण्वे R̥V. viii. 2. 34.

**अतिश्रुत** (ati-śruta) *adj.* very renowned तदीयतनयो वंशीधरोऽतिश्रुतः GopāKeCan. 140. 25.

**अतिश्रुतिकटु** (ati-śrutikaṭu) *adj.* extremely bitter (i. e. harsh) to the ears अतिश्रुतिकटुत्वेन ··· सभ्यैर्नैषापि मानिता (समस्या) PrabhāC. 149. 23.

**अतिश्रुतिसुखम्** (ati-śrutisukham) *adv.* very pleasantly, very melodiously गायत्यतिश्रुतिसुखं विपिनेव यत्र भृङ्गः SūktiMu. 32. 10; S'ārṅgaPa. 1144; Subhāṣi. 930.

**अतिश्रेयस्** (ati-śreyas) *adj.* **i** very prosperous, very distinguished अतिश्रेयांस्त्वं भूयाः Ratnā. iv. 13. 11; **ii** very auspicious अतिश्रेयस्यहनि ··· अजनयत्तनयम् TilaMañ. 75. 22; *n.* great luck दृष्टा यत्र भुजङ्गमेन तदतिश्रेयः किमेतैः क्षतैः SaduktiKa. 77. 28.

**अतिश्रेयसि** (ati-śreyasi) *adj.* (man) superior to the most excellent woman बहुव्रीहिः किम्। अतिश्रेयसिः PrakriKau. i. 525. 4 = Prasā. i. 525. 23; SiddhāKau. 201A. 11.

**अतिश्रेयस्करी** (ati-śreyaskarī) *adj.* (*f.*) conducive to great happiness or prosperity (द्वादशी) बुधश्रवणसंयुक्ता सातिश्रेयस्करी स्मृता VāmaP. 79. 66.

**अतिश्रेष्ठ** (ati-śreṣṭha) *adj.* [*f.* -ā] very distinguished, best of all मत्ताविध्यान्नदीनां त्वमतिश्रेष्ठा भविष्यसि VarāP. 144. 56; अतिश्रेष्ठस्य शुद्धाध्वनोऽप्युपरि स्थितं परमाकाशरूपं परमपदम् S'ivārkaMaDi. i. 124. 33 (*on* i. 1. 2); नयकारानतिश्रेष्ठानभिवाद्यैवमब्रवीत् (नृपः) Hastyāyur. 4. 3 (1. 1); [Superior to the best, PW]

**अतिश्रेष्ठतर** (atiśreṣṭha-tara) *adj.* better than the very best अतिश्रेष्ठतरं लिङ्गं श्रेयोरूपं त्रिलोचनम् SkandP. iv. 75. 25.

**अतिश्रेष्ठत्व** (atiśreṣṭha-tva) *n.* great superiority, pre-eminence ईश्वरयोगस्य सांख्ययोगापेक्षयातिश्रेष्ठत्वप्रतिपादनार्थम् YogSūVr. 1. 29; अतिश्रेष्ठत्वात् ऊर्ध्वदेशरूपेणेत्यर्थः Bhāsk. ii. 275. 14 (*on* iii. 2. 20)

**अतिश्लक्ष्ण** (áti-ślakṣṇa) *adj.* [*f.* -ā] **i** very fine or tender अथैतानरूपेभ्य आलभते। ··· अतिश्लक्ष्णमतिलोमशम् TaiBr. III. iv. 19. 1; विमृशामि वितानं तेऽतिश्लक्ष्णमतिलोमशम् TripuVePāSt. 15; **ii** very smooth रत्नचूर्णैरतिश्लक्ष्णैः पञ्चवर्णसमन्वितैः PadmP. (Ra.) 6. 167; (घण्टाम्) सुस्वरां तामतिश्लक्ष्णां पञ्चगव्येन धावयेत् CaturCin. i(1). 728. 14; **iii** very thin or fine दद्यान्नस्यं तुरङ्गस्य ··· नाद्यातिश्लक्ष्णया वैद्यः AśvaVai. 17. 3.

**अतिश्लक्ष्णता** (atiślakṣṇa-tā) *f.* excessive smoothness अस्वेदनमतिस्वेदनं पारुष्यमतिश्लक्ष्णता CaraS. ii. 5. 8 (1922 Ed.); KāśyaS. 115B. 20; यस्यामतिश्लक्ष्णतया गृहेषु विभातुमालेख्यमशक्नुवन्तः S'iśuVa. 3. 46.

**अतिश्लक्ष्णमणि** (atiślakṣṇa-maṇi) *m.* very smooth or polished jewel अतिश्लक्ष्णमणिकुट्टिमे ··· दत्तहस्तम् (ससंभ्रममुपसत्य) S'r̥ṅgāTi. (Rā.) 106(5)

**अतिश्लथ** (ati-ślatha) *adj.* very loose or lax न च विकेशिकामौषधम् ··· अतिश्लथगाढम् ··· दद्यात् AṣṭāSaṁ. i. 187. 11 (1. 38)

**अतिश्लथत्व** (atiślatha-tva) *n.* excessive looseness or laxity अतिश्लथत्वादपरिशुद्धिः AṣṭāSaṁ. i. 187. 12 (*on* 1. 38)

**अतिश्लथावलम्बिन्** (atiślathāvalambin) *adj.* hanging down very loosely अतिश्लथावलम्बिपयोधरेयम् ··· जरां प्राप शरच्छलेन SūktiMu. 62. 4.

**अतिश्लाघ्य** (ati-ślāghya) *adj.* very praiseworthy तदतिश्लाघ्यमेव स्यात् MahāBhā. ix. 206*. 7; श्रीमल्लक्ष्मणसेनभूपतिरतिश्लाघ्यः AdbhuSāg. 4. 13.

**अतिश्लाघ्यास्पदत्व** (atiślāghyāspada-tva) *n.* the state of being the object of great praise सर्वनायकातिशायनाद्धीरोदात्तस्य तद्विषयत्वाद्धि प्रबन्धानामतिश्लाघ्यास्पदत्वम् PratāYaBhū. 41. 7.

**अतिश्लिष्** (ati-śliṣ-) to fasten or tie over [MW]

**अतिश्लिष्ट** (ati-śliṣṭa) *adj.* [*f.* -ā] closely connected, very close, closely sticking (महाशङ्खम्) अतिश्लिष्टोदरोरस्कम् ··· प्राध्मापयदरिंदमः (अर्जुनः) MahāBhā. iv. 774*(4); अतिश्लिष्टातिप्रकृष्टरौद्रभैरवाद्भुतद्विष्टबीभत्सनविकृतवित्रासनादिरूपदर्शनं मिथ्यायोगः CaraS. i. 11. 37; नातिश्लिष्टः संधिरस्य मृणालवलयस्य S'āk. 3. 34(3); अङ्गुलीभिस्त्रिभागतः संवृताभिः काश्लिकाभिरिवातिश्लिष्टाभिः AvantiKa. 104. 11; DaśKuC. 62. 7; JaineVyā. 263. 7 (*on* iv. 1. 137); DharmoPra. 5. 28; IśānSiPa. i. 38. 1.

**अतिश्लेष** (ati-śleṣa) *m.* close union प्रथमांशजां दिगै(?शै)रतिश्लेषो दिग्भेदो युतिर्द्वितीयः ViṣṇuDhaP. ii. 174 (299A. 8)

**अतिश्लेष्मन्** (ati-śleṣman) *m.* excessive phlegm अतिश्लेष्मव्याप्तकण्ठः ··· कदा मरणमुपयामि BrNāraP. 30. 5 (378. 13); BhojanKu. 166. 19.

**अतिश्लोक** (ati-śloka) *m.* excessive praise अक्रूर इत्थं स्तुतिमीश्वरस्य श्लोकैरतिश्लोककरैरकार्षीत् HariVi. 4. 74.

**अतिश्व** (ati-śva) *adj.* [*f.* -ī] [DEBRU. p. 393] surpassing a dog अतेः पराच्छुनष्टज् भवति। अतिक्रान्तः श्वानम् अतिश्वो वराहः। अतिजवन इत्यर्थः। अतिश्वः सेवकः। सुष्ठु स्वामिभक्त इत्यर्थः। अतिश्वी सेवा। अतिनीचेत्यर्थः Cāndra-Vyā. iv. 4. 81; JainoVyā. 280. 31 (*on* iv. 2. 98); KāśiVr. *on* v. 4. 96; Nyās. ii 176. 15 (*on* v. 4. 96); KātanVr. *on* ii. 6. 41; अतीतः श्वानमतिश्वो वराहः S'r̥ṅgāPra. 14. 10; DvyāśraKā. 19. 127; MugdhaBo. 6. 50 (59. 14); PrakriKau. i. 556. 9; SiddhāKau. 185B. 14; 185B. 15; *m.* name of a tribe or man अतिश्व इत्यन्यः GaṇRa. 4. 279 (324)

**अतिश्वन्** (ati-śvan) *m.* name of a tribe or man अतिश्वन् GaṇPā. 132. 17; खिलास्त्यतिश्वानः (पक्षादेः फञ्) GaṇRa. 4. 279 (324); cf. अतिस्वन्

**अतिश्वा** (atiśvā) *f.* service [APTE]

**अतिश्वास** (ati-śvāsa) *m.* excessive breathing शमं नयाशु गोविन्द ··· अन्तःश्वासमतिश्वासम् AgniP. 31. 20; KalyāKā. 9. 53; AśvaCi. 13. 26.

**अतिश्वी** (atiśvī) *f.* service सेवा श्ववृत्तिर्दुर्वृत्तिरतिश्वी च निगद्यते KośaKa-Ta. 1. 5877.

**अतिश्वेत** (ati-śveta) *adj.* [*f.* -ā] very fair अगम्यास्त्वेवैताः (कन्याः) ··· अतिश्वेतातिकृष्णा KāmSū. 69. 13 (1. 5); JayaMa. 69. 21 (*on* 1. 5); नमो रैवन्ताय ··· नमोऽतिश्वेताय AśvaVai. 7. 41; PadmP. ii. 15. 8; AupaSūT. 30. 10; SetuBa. 133. 1.

**अतिश्वेतत्व** (atiśveta-tva) *n.* extreme paleness सुप्तत्वकण्डूगुरुगात्रतातिश्वेतत्वशीतत्वमहत्त्वनिद्राः ··· श्लेष्मप्रकोपोपगतामवास्ते KalyāKā. 3. 66.

**अतिषक्त** (áti-ṣakta) *adj.* [*f.* -ā] closely connected with, closely attached उखा कुम्भी वेद्यां मा व्यथिष्ठा यज्ञायुधैराज्येनातिषक्ता AV. xii. 3. 23; अतिषक्ताभिर्यजति। तस्माद्ग्रीवा अतिषक्ताः KāthS. 25. 1 = KapiKaS. 38. 4; इन्द्रो दधीचो अस्थभिर्वृत्राण्यप्रतिष्कुतः। ववक्षुरग्रो अस्तृत इत्यथर्वशिरो दशातिषक्ताः ĀpaSS. xvii. 8. 2; HirSS. xii. 1. 19; VaikhāSS. 19. 5; SaṅkarKāBh. 75. 3 (*on* ii. 1. 73); अतिषक्तः पुरुषः SaṅkarKāBh. 75. 4 (*on* ii. 1. 73)

**अतिषङ्ग** (ati-ṣaṅga) *m.* **1** name of a Sāman cf. इन्द्रस्यातिषङ्ग Ārṣe-Br. vi(1). 4. 4 [PW]; **2** close connection अभि(v. l. अति)षङ्गादहं भीतः MahāBhā. iv. 67. 7; SaṅkarKāBh. 75. 3 (*on* ii. 1. 73)

**अतिषण्ड** (ati-ṣaṇḍa) *m.* name of a *Nāga* तथा नागौ चक्रमन्दातिषण्डौ। ··· स्वयं राजा वरुणश्चापि राजन्। प्रत्युद्गम्य स्वागतेनाभ्यनन्दन् MahāBhā. xvi. 5. 15.

**अतिषित** (áti-ṣita) *adj.* tied or fastened पृथिव्यामतिषितं यदूधः पयो गोष्वदधा ओषधीषु R̥V. x. 73. 9.

**अतिषिषेणयिष** (ati-ṣiṣeṇayiṣa-) -. P. [desid.] to wish to assail with an army गेः परेषां स्वासेनय° ··· स्वञ्ज इत्येतेषां सकारस्य षत्वं भवति। अतिषिषेणयिषति JainoVyā. 406. 31 (*on* v. 4. 46)

**अतिषोडश** (ati-ṣoḍaśa) *adj.* who has passed the 16th year, more than 16 years old द्वादशे वैश्यं, नातिषोडशमुपनयीत JaimiGS. 1. 12 (10. 5)

**अतिष्कद्** (ati-ṣkád) *f.* jump, leap, crossing अतिष्कदो भियसा तन्न आवत् R̥V. x. 108. 2 [Viśva, अतिष्कदस्]

**अतिष्कदे** (áti-ṣkade) *inf.* for jumping or leaping across नास्माकमस्ति तत्तर आदित्यासो अतिष्कदे R̥V. viii. 67. 19.

**अतिष्कद्वरी** (atiṣkád-varī) *adj.* (*f.*) having an abortion इत्वरसरायातिष्कद्वरीम् VājaS. 30. 15 (Mahī. अतिस्कन्दति स्रवति इत्यतिस्कद्वरी) cf. अतिस्कद्वरी

**अतिष्कन्द्** (ati-ṣkand-) I. P. to leap or jump over ते स्पन्द्रासो नोक्षणोऽति ष्कन्दन्ति शर्वरीः R̥V. v. 52. 3

**अतिष्टिघम्** (ati-ṣṭígham) *inf.* [AltGr. 1. 151] to overstep or overwhelm प्रजापतिः··· असुयौं वा एता यदोषधयस्ता अतितिष्टिघिषन्नतिष्टिघं नाशक्नोत् MaiS. i. 6. 3.

**अतिष्टु** (ati-ṣṭu-) II. P. to chant in excess (with a larger number of Stomas or syllables than the prescribed ones) यत् संप्रति स्तुवन्ति तत् स्तुतं यदतिष्टुवन्ति तत् सुष्टुतम् PañcBr. ix. 3. 7; यद्यर्वाक् स्तुयुर्यावतीभिर्न स्तुयुस्तावतीभिर्वातिष्टुयुर्भूयोऽक्षराभिर्वा PañcBr. ix. 3. 8 = Kṣudra. i. 7 (176. 20); यद्यतिष्टुयुः स्वारमग्निष्टोमसाम कार्यम् PañcBr. ix. 3. 11; ix. 3. 9; JaimiBr. 1. 356; यद्यतिष्टुयुरुत्तरे स्तोत्रे तावतीर्वा न स्तुवीरन् ··· अत्येतद् रेवयन्ति

यदतिष्टुवन्ति JaimiBr. 1. 356; यथा वै निष्कं मणिं स्रजं प्रतिमुच्य तत् पुनरुन्मुञ्चेत् ताहृक् तद् योऽग्निष्टोमेऽतिष्टौतीति JaimiBr. 2. 190.

**अतिष्टुत्य** ( ati-ṣṭutya ) *adj.* liable to be over-chanted (with a larger number of Stomas or syllables) तदाहुरनतिष्टुत्यम् JaimiBr. 2. 190.

**अतिष्ठ** ( ati-ṣṭha ) *m.* one of the thousand epithets of Viṣṇu or Kṛṣṇa अतिष्ठ उमापतिः । ···इत्येतत् कथितं देवि सहस्रं नाम चोत्तमम् । आदिदेवस्य वै विष्णोर्बालकत्वमुपेयुषः PañcaRā.(Nā.) iv. 8. 119.

**अतिष्ठत्** ( á-tiṣṭhat ) *adj.* [ *f.* –ntī ] **i** not remaining or standing still (i. e. moving) अतिष्ठन्तीनामनिवेशनानां काष्ठानां मध्ये निहितं शरीरम् । वृत्रस्य RV. i. 32. 10; स सूर्यः पर्युरू वरांस्येन्द्रो ववृत्याद् रथ्येव चक्रा । अतिष्ठन्तमपस्यं१ न सर्गम् RV. x. 89. 2; जडैव चिन्मयीवासावन्यस्पन्दोपजीविनी । निमेषमप्यतिष्ठन्ती स्थैर्यशङ्कां प्रयच्छति YogVā. iii. 113. 18; **ii** not persisting in, not continuing in वार्ताधर्मे ह्यवर्तन्तो ( v. l. अतिष्ठन्तः ) विनश्येयुरिमाः प्रजाः MahāBhā. iii. 149. 33; अतिष्ठन्तमिवात्मानं मत्वा स्वखुरधूलिभिः । वश्रमुर्वाजिनो यस्य संकटास्वपि वीथिषु PṛthvīVi. 5. 49; वक्तव्येऽर्थे ह्यतिष्ठन्तमुत्क्रामन्तं च तद्वचः । आसेधयेद् विवादार्थी ···। प्रत्यर्थिनं तु SukraNī. 4(5). 93; **iii** not remaining, not being retained अमुक्ते रिक्तकोष्ठस्य प्रयुक्तमनुवासनम् ।··· तेन वायोर्जयो न स्याद् वातधामन्यतिष्ठता AṣṭāSaṁ. i. 146. 15 (1. 28); i. 149. 16 (1. 28); SiddhYo. 75. 16; **iv** not stopping, oozing or flowing out (as blood) ( स्रुतरक्तस्य ) अतिष्ठति तु रक्ते सिरामुखं संधाय पूर्वोक्तैश्चूर्णैरवचूर्ण्याङ्गुल्यग्रेण पीडयेत् AṣṭāSaṁ. i. 179. 17 (1. 36); AṣṭāHr. i. 27. 48.

**अतिष्ठमान** ( á-tiṣṭhamāna ) *adj.* [ *f.* –ā ] not standing still, not waiting तेऽन्योन्यस्मै ज्यैष्ठ्यायातिष्ठमानाः···व्यक्रामन् TaiS. II. ii. 11. 5; क्रुक्ला मे वै देवेभ्यो यज्ञायातिष्ठमाने TaiS. VI. i. 3. 1; वाग्वै देवेभ्योऽपाक्रमद् यज्ञायातिष्ठमाना TaiS. VI. i. 4. 1.

**अतिष्ठा** (ati-ṣṭhā-) 1 P. **i** to overcome, to excel, to surpass यो जनान् महिषाँ इवातितस्थौ पवीरवान् । उतापवीरवान् युधा RV. x. 60. 3; अग्नेर्वै जिह्वा ब्रह्मणस्पतिस्सर्वमेपातितिष्ठति KāṭhS. 13. 4; कथं न्विदमिदं सर्वमतितिष्ठेयमर्वाङ्गेव मदिदं सर्वं स्यादिति ··· स इदं सर्वमेवात्यतिष्ठत् SatBr. IV. v. 3. 2; एवं वा एष इदं सर्वमतितिष्ठति SatBr. V. iv. 2. 5; त्रयस्त्रिंशं शतं राजाश्वान् बद्धाय मेध्यान् सौद्युम्निरत्यष्टाद्न्यानमायान् नायवत्तर इति SatBr. XIII. v. 4. 12; IV. v. 3. 3; X. vi. 1. 9; XIII. vi. 1. 1 = XIII. vii. 1. 14; स य एवमेनमुपास्तेऽतीव सर्वा भूतानि तिष्ठति ĀrṣeU. 6. 5; महीं विजयते सर्वां शत्रूंश्चापि पराजयेत् ( v. l. चाप्यतितिष्ठति ) MahāBhā. i. 56. 19; आवाहयेत् तमेकान्ती यो ज्यायानतितिष्ठति । अमृतत्वस्य चेशानो भगवान् पुरुषोत्तमः BṛBrahmaS. i. 12. 98; **ii** to remain beyond, to stand beyond स भूमिं विश्वतो वृत्वात्यतिष्ठद् दशाङ्गुलम् RV. x. 90. 1 = AV. xix. 6. 1; VājaS. 31. 1; TaiĀ. iii. 12. 1; SvetāU. 3. 14; स भूमिं विश्वतो वृत्वा ··· अत्यतिष्ठदतीत्यैव स्थितो भूयो दशाङ्गुलम् AhirbuS. 59. 20; ViṣṇuP. i. 12. 56; PañcDa. 2. 57; **iii** to mount (on a chariot) अश्वान् समुत्थाप्य तु सारथिः । तस्थौ सात्यकिमासाद्य संप्लुतस्तं ( v. l. सोऽत्यतिष्ठद् ) रथं पुनः MahāBhā. vii. 25. 37. cf. **अतितिष्ठत्**

**अतिष्ठा** ( ati-ṣṭhā́ ) *f.* **1** pre-eminence, superiority अयं सर्वेषां राज्ञां श्रैष्ठ्यमतिष्ठां परमतां गच्छेत AitBr. 39. 1 (935); एतदतिष्ठेवातिष्ठेव ह वै भवति SatBr. IV. v. 4. 2; अतिष्ठो वा इन्द्रः SatBr. V. iii. 3. 6; **2** permanency, long existence or standing फलेच्छां दर्शयति ··· श्रैष्ठ्याधिपत्यान्तान् गुणान् प्राप्नुयात् । श्रैष्ठ्यं जातिश्रेष्ठताम् अतिष्ठां चिरकालवासित्वम् VīraMi.(Rājanīti.) 93. 2; *adj.* superior in standing, foremost, standing over or beyond, pre-eminent, surpassing एष वा अतिष्ठा वैश्वानरः एतां हि वै त्वमतिष्ठां वैश्वानरं वेत्थ SatBr. X. vi. 1. 9; अतिष्ठा वा एषा छन्दसां यदतिच्छन्दा अतिष्ठा अश्वमेधो यज्ञानाम् SatBr. XIII. v. 1. 9; अतिष्ठाः सर्वेषां भूतानां मूर्धा राजेति SatBr. XIV. v. 1. 2 (= BṛĀraU. ii. 1. 2); बृहत्(? न्) पाण्डरवासा अतिष्ठाः सर्वेषां भूतानां मूर्धेति वै SāṅkhāĀ. 6. 3 (22. 27) = KauṣīBrU. 4. 2; BṛĀraUBhVā. ii. 1. 51; VedāntKa. 148. 6 (*on* i. 2. 24)

**अतिष्ठाकाम** ( atiṣṭhā-kāma ) *adj.* desirous of pre-eminence or superiority पुरुषमेधस्त्रयोविंशतिदीक्षोऽतिष्ठाकामस्य KātySS. xxi. 1. 1.

**अतिष्ठागुण** ( atiṣṭhā-guṇa ) *m.* quality of being superior ( दिवः ) वाजसनेयकगतोऽतिष्ठागुणश्छान्दोग्ये द्रष्टव्यः PrakaVi. 216. 22.

**अतिष्ठात्व** ( atiṣṭhā-tva ) *n.* the state of being superior यद्यपि वाजसनेयके चौरतिष्ठात्वगुणा समाम्नायते BrahmSūBh.(Saṅ.) 140. 3 (*on* i. 2. 31); अतीत्य स्थितत्वं हि दिवोऽतिष्ठात्वम् । तच सर्वोत्कृष्टत्वम् SrutaPra. iB. 342. 28 (*on* i. 2. 26); iB. 342. 24 (*on* i. 2. 26)

**अतिष्ठाय** ( atiṣṭhā́-ya ) *ger.* having surpassed or stood beyond अतिष्ठाय वर्चसाध्यन्यान्त्सूर्यइवा भाहि प्रदिशश्चतस्रः AV. xix. 33. 5; AV.(P.) xii. 5. 5.

**अतिष्ठाय** ( atiṣṭhā-ya ) *adj.* pre-eminent, superior ब्राह्मणस्पत्यमतिष्ठाय-



मालभेत यः कामयेतातिष्ठायस्स्यामिति KāṭhS. 13. 4.

**अतिष्ठावत्** ( atiṣṭhā́-va(n)t ) *adj.* [ DEBRU. p. 905 ] having superiority, superior, pre-eminent हस्ती मृगाणां सुषदामतिष्ठावान् बभूव हि AV. iii. 22. 6.

**अतिष्ठावन्** ( atiṣṭhā́-van ) *adj.* [ DEBRU. p. 898 ] superior in standing, pre-eminent, surpassing (governs Acc.) अतिष्ठावा बार्हस्पत्यः AV.(P.) ii. 69. 5; तेषाम् ··· त्रयोऽकायमन्तातिष्ठावानः स्वामेति SatBr. IV. v. 4. 1; यथायं पूर्वेतोऽतिष्ठावा यथर्षभः पशूनतिष्ठावैवं वा एष इदं सर्वमतितिष्ठति SatBr. V. iv. 2. 5; IV. v. 4. 2.

**अतिष्यपुरुष** ( atiṣya-puruṣa ) *m.* person recognized supreme in the non-tiṣya aeons or the three yugas other than the Kaliyuga भवन्तमद्राक्षमतिष्यपुरुषम् SaṅkaDigVi.(Mā.) 16. 52.

**अतिष्वङ्ग** ( ati-ṣvaṅga ) *m.* intense affection रुचिर्भोगेऽनुरागे स्यादतिष्वङ्गेऽपि कुत्रचित् NānārthSaṁ. 74. 8.

**अतिस** ( atisa ) *n.* leaky boat तरण्यां नौस्तरिस्तारिः सद्वर्तः सह इत्यपि । अर्धनावं तु नावोऽर्धेऽप्यतिसं प्रचलं तथा ParyāSaRa. 3. 43.

**अतिसंयम** ( ati-saṁyama ) *m.* extreme (i. e. complete) restraint त्वं तु शुष्कक्रियायतनः केवलं मन्त्रसाधकः । सिद्धिः सत्त्ववतामेव संकोचो ह्यतिसंयमः BṛKathāMañ. 14. 47.

**अतिसंयमिन्** ( ati-saṁyamin ) *adj.* absolutely self-restrained मुनिः कोऽप्यतिसंयमी ··· पत्य तेषां पुरस्तस्थौ PāṇḍaC. 9. 363.

**अतिसंयुक्त** ( ati-saṁyukta ) *adj.* administered in excess पानान्नैरतिसंयुक्तैः सहसा पीडितोऽनिलः । हिक्कयत्यूर्ध्वगो भूत्वा तां विद्यादन्नजां भिषक् RugVi. 12. 6.

**अतिसंयोग** ( ati-saṁyoga ) *m.* excessive union or intercourse रत्यर्थमतिसंयोगादन्योन्यगुणसंश्रयात् । ऋतौ निर्वर्तते रूपम् BrahmP. 242. 4.

**अतिसंयोज्य** ( ati-saṁyojya ) *ger.* having mixed with in excess फाणितेनातिसंयोज्य के(क)वलांस्तु प्रदापयेत् Hastyāyur. 251. 18 (2. 44)

**अतिसंरब्ध** ( ati-saṁrabdha ) *adj.* **i** excited or agitated very much सः ··· प्रविवेशातिसंरब्धस्तरसैव महामनाः MahāBhā. iii. 77. 3; विजेतुमभि( v. l. ति )संरब्ध एक एवातिसाहसात् । बृहद्रथसहायश्च निर्यातः पृथिवीजयः MahāBhā. iv. 63. 7; v. 197. 16; गर्जन्तमतिसंरब्धं सुरलोकमथारिहा । उवाच माधवो वाक्यम् YogVā. v. 33. 1; **ii** extremely inflamed, exasperated, enraged or furious ततः शल्यः प्रहस्येदं कर्णं पुनरुवाच ह । रथस्थमतिसंरब्धं युधिष्ठिरवधे धृतम् MahāBhā. viii. App. I. 18 (108); तां च दृष्ट्वातिसंरब्धं कर्णं च भरतर्षभ । अश्रौ दुर्योधनः क्रुद्धो नोत्तरं प्रतिपद्यते MahāBhā. viii. 574*(1); युयुधातेऽतिसंरब्धौ महाबलपराक्रमौ MārkP. 9. 12; 83. 14.

**अतिसंरब्धम्** ( ati-saṁrabdham ) *adv.* very excitedly प्रायुध्यत चातिसंरब्धमनुमद्यारप्रवृत्तस्त्वपक्षम् कण्ठीरवस्तं विद्रुतमद्वयम् DaśKuC. 96. 22.

**अतिसंरम्भ** ( ati-saṁrambha ) *m.* **i** extreme agitation, excitement or flurry शोकः क्रोधोऽतिसंरम्भो राजसास्ते गुणाः स्मृताः MahāBhā. xiv. 31. 2; पार्थोऽपि नातिसंरम्भादनीकं समनीनहत् । सुगोच्छेदेऽपि किं कार्मं सिंहः संरम्भते कचित् PāṇḍaC. 5. 180; **ii** excessive anger, rage or wrath सा ··· महादुद्दासमतिसंरम्भेण बिभ्रन्ती तत उत्पत्य ··· जगौ ननर्त च BhāgP. v. 9. 18; धाययन्पितृवधं मानी नोपलेभे स निर्वृतिम् । अथोपसिन्धु गान्धारैः सज्जे कन्यास्वयंवरे । निमन्त्र्य शुश्रावानीतान्वृष्णीन्दर्पोष्णदोर्द्रुमः । ततस्त्यातिसंरम्भाचानदूरस्थितान्नति । यात्राभूत् RājTa.(Ka.) 1. 67; **iii** ardent desire, extreme activity धर्मविद्यास्थानेष्वपि हि वहिर्देलेष्वतिसंरम्भो मुमुक्षोरपोद्यते NyāyPari. 482. 18.

**अतिसंरम्भवर्धित** ( atisaṁrambha-vardhita ) *adj.* increased by excessive agitation ततः शुश्राव वै शब्दमतिसंरम्भवर्धितम् Rāmā. i. 645*(1)

**अतिसंरम्भवेग** ( atisaṁrambha-vega ) *m.* very forceful or violent speed समिति रिपुगणोऽन्यैर्नातिसंरम्भवेगादिव सकरमरीणां चामरैर्वीज्यमानम् ( हरिमभिययौ ) HarVi. 46. 64.

**अतिसंरम्भवेदन** ( atisaṁrambha-vedana ) *adj.* causing excessive pain नावतन्त्रं नचोत्सन्नमतिसंरम्भवेदनम् । दंशादौ विपरीतादिकीटदष्टं सुबाधकम् SuśruS. v. 8. 41 (comm. अतिशयव्यथम्)

**अतिसंरम्भिन्** ( ati-saṁrambhin ) *adj.* having excessive anger, exceedingly enraged or furious पक्षो भवतोः श्रुतो मया ···। अतिसंरम्भी YudhiVi. 4. 37.

**अतिसंराग** ( ati-saṁrāga ) *m.* excessive attachment विषयेष्वतिसंरागो मानसो मल उच्यते SkandP. iv. 6. 37.

**अतिसंलग्न** ( ati-saṁlagna ) *adj.* existing close together, very contiguous करद्वयम् । कुर्याच्चैवातिसंलग्नं मणिबन्धावसानतः JayāS. 27. 160 = LakṣmīT. 45. 109; ( वाजिनाम् ) अङ्गुलं चातिसंलग्नं आवर्तद्वितयं तथा SukraNī. 4(7). 104.

**अतिसंलुप्त** ( ati-saṁlupta ) *adj.* completely disappeared दृष्ट्वा मुखं च

-धर्माक्तं शरच्चन्द्रविनिन्दितम् । अतिसंलुप्तसिन्दूरम् BrahmVaiP. iv. 53. 13.

**अतिसंवत्सर** ( ati-saṁvatsara ) *adj.* [ *f.* -ā ] what is kept over a year नातिसंवत्सरं भुञ्जीत BaudhDS. ii. 6. 17 = GautDS. i. 3. 34; ( नातिसांव-त्सरीं वृद्धिम् ... हरेत् ) अथवा संवत्सरमतिक्रान्ता अतिसंवत्सरेति प्राप्ते ManuBh. ii. 145. 11 (*on* 8. 153)

**अतिसंवादाभाव** ( atisaṁvādābhāva ) *m.* absence of close agreement or corroboration गोत्रप्रवराभिधानपरपुराणभागस्यातिसंवादाभावात् ... तदनुरोधेन गोत्रप्रवरनिर्णयस्याकिञ्चित्करत्वात् ViraMi.(Saṁskāra.) 658. 11.

**अतिसंविद्ध** ( ati-saṁviddha ) *adj.* extremely pricked or pierced -सूच्येव शङ्कुनेव चातिसंविद्धमात्मानं मन्यते CaraS. ii. 3. 7 (1922 Ed.)

**अतिसंवृत** ( ati-saṁvṛta ) *adj.* [ *f.* -ā ] **I** greatly contracted विवृताति--महायोनिः सूचीवक्त्रातिसंवृता SusruS. vi. 38. 19; RugVi. 62. 12; **II** very much covered or hidden अतिसंवृते सूकरवालेन ( अन्वेषयेत् ) AṣṭāSaṁ. i. 185. 22 (1. 38); *n.* extreme shortness or smallness मर्मपीडा भवेद् यत्र भित्ति-स्तम्भतुलादिभिः । कुर्वीत ह्रासं वृद्धिं वा तत्र मर्मण्यथं त्यजन् । अतिसंवृतविस्तारं -कार्यवृद्धिय बुद्धिमान् । शालाप्रविष्टं कुर्वीत SamarāSū. 24. 24.

**अतिसंवृद्ध** ( ati-saṁvṛddha ) *adj.* very well grown up or bred अन्तः-पुरेऽतिसंवृद्धान् ... शुनश्शेपायनं ददौ Rāmā. ii. 61. 21.

**अतिसंवृद्धि** ( ati-saṁvṛddhi ) *f.* great increase अधर्मस्यातिसंवृद्ध्या रेवती लभतेऽन्तरम् KāśyaS. 198B. 25.

**अतिसंव्याप्तिप्रसक्ति** ( atisaṁvyāpti-prasakti ) *f.* contingency of wider application (of definition) तिष्ठन्पृथिव्यां योऽत्र स्यात्सोऽन्तर्यामीति गृह्यताम् । इत्युक्तावतिसंव्याप्तिप्रसक्तावुत्तरं वचः BṛAraUBhVā. iii. 7. 26.

**अतिसंशब्द** ( ati-saṁśabda ) *m.* loud call (for battle or fight), loud announcement सोढुं न च समर्थोऽहं युद्धकामस्य संयुगे । सुग्रीवस्य च संरम्भं -( v. l. अतिसंशब्दम् ) हीनग्रीवस्य गर्जतः Rāmā. iv. 16. 4.

**अतिसंशयकारण** ( atisaṁśaya-kāraṇa ) *adj.* having a cause of great doubt यदसाध्यं भवेत् कार्यमतिसंशयकारणम् । तत्तस्य वाक्यतः सिद्धिमेति मौन-फलादृभुवि BṛKathāK. 57. 565.

**अतिसंशुद्ध** ( ati-saṁśuddha ) *adj.* highly or absolutely pure शुक्लं -ब्रह्मातिसंशुद्धमिति केचिद्विनिश्चिताः BṛAraUBhVā. iv. 4. 562.

**अतिसंशोधन** ( ati-saṁśodhana ) *n.* heavy purging treatment न त्वेव -बालस्य विशेषणं हितं नैवातिसंशोधनरक्तमोक्षणे KāśyaS. 46B. 39; अतिसंशोधनं चैव गुल्मिनां न प्रशस्यते KāśyaS. 113B. 14.

**अतिसंश्लिष्ट** ( ati-saṁśliṣṭa ) *adj.* very close together अवर्णे उच्चार्यमाणे ओष्ठहनु अत्युपसंहृतम् अतिसंश्लिष्टं न भवति TribhāsyaRatna *on* TaiPrāti 2. 12; -यथा रजोभिर्गगनं यथा कमलमम्बुभिः । न लिप्यतेऽतिसंश्लिष्टैर्देहैरात्मा तथैव च SārṅgaPa. 4248.

**अतिसंश्लेष** ( ati-saṁśleṣa ) *m.* **I** very close connection or union -नारायणं परं ब्रह्म शक्तिर्नारायणी च सा । व्यापकावतिसंश्लेषादेकं तत्त्वमिव स्थितौ AhirbuS. 4. 78; **II** close embrace वक्षःपीठेऽतिसंश्लेषसक्तैः स्वस्तनकुङ्कुमैः । काम्युपालक्ष्यत् पत्युः कबन्धं न पुनः शिरः PāṇḍaC. 13. 1062.

**अतिसंसक्त** ( ati-saṁsakta ) *adj.* **I** extremely attached यत्र यस्मि--न्स्थाने वर्तमानोऽतिसंसक्तोऽप्यन्यस्य संयोगादिमेति संयुक्तोऽयं कदाचिदपकरिष्यतीति JayaMa. 341. 1 (*on* 6. 4); **II** very confidential कार्यं तदतिसंसक्तं यदन्यक्तं हितं भवेत् । अतो द्रक्ष्ये विवक्षुर्वा विविक्तस्त्वाबुभावपि ParamāKā. 38. 23.

**अतिसंसर्ग** ( ati-saṁsarga ) *m.* extreme contact, close association -योऽहमज्ञानसंमोहादज्ञया संप्रवृत्तवान् । संसर्गादतिसंसर्गात्स्थितः कालमिमं त्वहम् BrahmP. 243. 29; तत्र यथास्वं चक्षुरादीन्द्रियाणां रूपादिभिरर्थैरतिसंसर्गोऽतियोगः -AṣṭāSaṁ. i. 116. 13 (1. 22); AṣṭāHṛ. i. 12. 36.

**अतिसंसिद्धि** ( ati-saṁsiddhi ) *f.* complete accomplishment or attainment (of what is above all) अतिसंसिद्धिमपि गच्छेत विद्यया सह SaṁhiUBr. -3. 17.

**अतिसंसू** ( ati-saṁsū- ) II. Ā. to produce इन्द्रियाणि दशैकं च तन्मात्राणि च शासनात् । अहंकारोऽतिसंसूते शिवस्य परमेष्ठिनः LiṅgaP. ii. 10. 10.

**अतिसंसृति** ( ati-saṁsṛti ) *adj.* beyond the worldly life, extraordinary भुज्यमानाल्पसौख्येन संसारपदमीयुषः । प्रायो विसयते सौख्यं श्रुतमप्यतिसंसृतिः ( ? ति ) PadmP.(Ra.) 114. 5.

**अतिसंस्कृत** ( ati-saṁskṛta ) *adj.* [ *f.* -ā ] A well-cooked or prepared, well-dressed (as food), highly finished ततोऽन्नं मृष्टमत्यर्थममीष्टमतिसंस्कृतम् VisnuP. iii. 15. 29; BrahmP. 140. 11; मिष्टान्नप्रचुरां भिक्षां नादद्यात्रातिसंस्कृताम् MṛgendraT. iv. 1. 82; S'ivaP. iii. 9. 48 (306A. 1); RājTa.(S'rī.) 1(5). 19; B highly consecrated संस्कारतः सोऽतिशयो यदि स्यात्सर्वस्य पुंसोऽस्त्यतिसंस्कृ--तस्य BhaviP. 81A. 25 (i. 41. 30); 82B. 24 (i. 42. 10); [ अतिसंस्कृत is given as one of the meanings of अभिनीत AmaK. 2496 ]

**अतिसंस्तव** ( ati-saṁstava ) *m.* utmost intimacy, too much acquaintance सखे हनूमन् । किमेतदतिसंस्तवाद्विषयमात्रतः सङ्घं निवर्तयति मे दृशः जत् RāmC. 2. 93; *adj.* beyond praise अतिजडोऽपि गृहीतवाक्यः । पूर्वानुभाव-जयिनो भवति प्रभावावस्य स्तुमस्तमतिसंस्तवमप्रतर्क्यम् RājTa.(Ka.) 8. 2356.

**अतिसंस्तुत** ( ati-saṁstuta ) *adj.* well-informed or appraised अहं चेत्तं नृपं सद्यो न करोम्यतिसंस्तुतम् DeviBhāP. vii. 17. 57.

**अतिसंस्तुतसाहस** ( atisaṁstuta-sāhasa ) *adj.* where venture is praised very much अतिसंस्तुतसाहसम् । अतिशीलितपारुष्यमतिशिक्षितवैकृतम् ( रावण-स्थानमालोक्य ) RāmC. 21. 13.

**अतिसंस्निग्ध** ( ati-saṁsnigdha ) *adj.* extremely oily अतिसंस्निग्धं जलं यच्च सफेनिलम् ... तस्मिंस्तिष्ठेज्जलद्विपः Hastyāyur. 698. 10 (4. 33)

**अतिसंस्पर्श** ( ati-saṁsparśa ) *m.* close contact अतिसंस्पर्शः ... भूतविष-वातानाम् ... मिथ्यायोगः स उच्यते CaraS. iv. 1. 120 (1941 Ed.)

**अतिसंस्मृत्य** ( ati-saṁsmṛtya ) *ger.* having remembered well स च विद्याधरः ... आत्मानं चातिसंस्मृत्य मध्येलिङ्गं लयं गतः SkandP. iv. 76. 167.

**अतिसंहत** ( ati-saṁhata ) *adj.* [ *f.* -ā ] **I** very compact ततश्चावर्पदनलं समन्तादतिसंहतम् । चक्षूंषि दानवेन्द्राणां चक्रारान्धानि च प्रभुः MatsyaP. 150. 170; **II** very thick स्नेहभृष्टेषु वा तेषु यवागूं वातिसंहताम् ( प्रयोजयेत् ) AṣṭāSaṁ. i. 131. 15 (1. 25)

**अतिसंहतता** ( atisaṁhata-tā ) *f.* the state of being very closely joined or united अतिसंहततया च तेषामन्तरितचक्षुरिन्द्रियाः पुरोवर्तिनामपि वीराणां रणमति( ती )न्द्रियेण चक्षुपादाङ्गुरमरपङ्क्तयः TilaMañ. 89. 20.

**अतिसंहर्ष** ( ati-saṁharṣa ) *m.* excessive joy किशोरस्त्वतिसंहर्षात्किशोर इव चोदितः । अभवद्दैत्यसैन्यस्य मध्ये रविरिवोदितः HariVaṁ. 33. 21 = PadmP. v. 37. 187; MatsyaP. 173. 21.

**अतिसंहित** ( ati-saṁhita ) *adj.* cheated, deceived पृथक्त्वा सह याने वा विश्वासेनातिसंहितम् । ...कृच्छ्रेण साध्यते मित्रम् ArthS'ā. iii. 40. 1 (8. 5); ii. 330. 5 (7. 14); प्रतारितं वञ्चितं स्यादतिसंहितमित्यपि KośaKaTa. 2. 553.

**अतिसंहिता** ( ati-saṁhitā ) *f.* too much closeness, extreme conjunction पद इत्येकपदे नास्त्यतिसंहिता AbhinBhā. ii. 231. 16 (*on* 14. 38)

**अतिसंहृ** ( ati-saṁhṛ- ) I. P. to administer भक्षयित्वाथ मांसानि विपिणो भक्षयन्ति ये । औषधानि भिषक्तेषु शीघ्रमेवातिसंहरेत् Hastyāyur. 171. 9 (2. 8)

**अतिसंहृष्ट** ( ati-saṁhṛṣṭa ) *adj.* extremely or greatly delighted or pleased, overjoyed शुद्धात्मा चातिसंहृष्टः ... यजेत् KulārT. 6. 6; स्तुत्याति-संहृष्टो रघुनाथो महायशाः । प्रोवाच तान् सुरान् PadmP. iv. 5. 12; CaturCin. i. 473. 7.

**अतिसकरुण** ( ati-sakaruṇa ) *adj.* very much compassionate पश्यन्ति... योगिनः ... यमतिसकरुणम् Vidvanmo. 8. 124; सह गमनसमुत्कैर्याचितो लोकवृन्दैः अतिसकरुणचित्तस्तांस्तथैवानुमेने ( रामः ) MahāN. 9. 145.

**अतिसकाम** ( ati-sakāma ) *adj.* very much passionate याः पण्यनार्योऽ-तिसकामपुंसं कामोपभुक्त्यै निजदत्तदेहाः । ... पौरन्दरास्ता गणिका भवन्ति BṛParāSm. 10. 232.

**अतिसक्त** ( ati-sakta ) *adj.* [ *f.* -ā ] very much passionate, very much lustful, greatly attached अविश्रसन्न व्यसनी नातिसक्तोऽप्रवासकः । विद्वान् सुशीलः पुरुषः सदारः सुखमश्नुते MahāBhā. xiii. 202*(1); रोहिण्यामतिसक्तस्य शरीरं नानुरक्षतः ( अश्विनौ ) CaraS. vi. 8. 4 (1941 Ed.); अतिसक्तः पुमान् यत्र भया-द्बहु ददाति च KāmSū. 340. 9 (6. 4); KandaCū. vi. 4. 36; तत्र कश्चित्कुलपुत्रः कलासु गणिकासु चातिसक्तः DaśKuC. 115. 19; RāmāMañ. 243. 16; दुष्टचेतसः । अतिसक्ताः पलायन्ते श्रीधृतिस्मृतिकीर्तयः SūktiRa. 48. 4; 196. 10; नातिसक्तो न वैराग्यभाग्यस्यामधिकारिता BhaktiRaSi. i. 2. 6.

**अतिसक्तता** ( atisakta-tā ) *f.* excessive attachment चत्वार्याहुर्नरश्रेष्ठा व्यसनानि महीक्षिताम् । मृगयां पानमक्षांश्च ग्राम्ये चैवातिसक्तताम् MahāBhā. ii. 61. 20.

**अतिसक्ति** ( ati-sakti ) *f.* **I** excessive attachment, overaddiction मद्या-तिसक्तिं विश्रम्भस्वातन्त्र्ये स्त्रीषु च त्यजेत् AṣṭāHṛ. i. 2. 44; अतिसक्तिमेत्य वरुणस्य दिशा भृशमन्वरज्यदतुपारकरः S'iśuVa. 9. 7; विश्वासमतिसक्तिं च तीक्ष्णतां स्त्रीषु वर्जयेत् VisnuDhaP. ii. 62. 15; अप्रतिपिद्धेष्वतिसक्तिनिषेधार्थोऽयं श्लोकसंघातः ManuBh. i. 123. 22 (*on* 2. 88); BṛKathāS'loSaṁ. 21. 16; **II** close contact, S'iśuVa. 9. 7.

**अतिसक्तितस्** ( atisakti-tas ) *adv.* due to over-extension विधान्तरं न कल्प्येत गौरवादतिसक्तितः TarkSaṁ(Ā.) 83. 13; 85. 13; अव्याप्तेरतिसक्तितः TarkSaṁ.(Ā.) 106. 14.

**अतिसक्तिमत्** ( atisakti-ma(n)t ) *adj.* excessively attached, over-addicted विरक्तप्रकृतिश्चैव विषयेष्वतिसक्तिमान् । ... विंशतिः पुरुषा अमी । एतैः सन्धिं न कुर्वीत NitiSā. 9. 25 = Hitopa. 4. 34; SūktiRa. 134. 2; Hitopa. 4. 43.

**अतिसक्तिवर्जन** ( atisakti-varjana ) *n.* avoidance of over-addiction or excessive attachment 'संयमः' प्रतिषिद्धेषु विषयेषु प्रवृत्तिपरिहारोऽप्रतिषिद्धेष्व-प्यतिसक्तिवर्जनम् ManuBh. i. 123. 11 (*on* 2. 88)

**अतिसक्थ** (ati-saktha) *adj.* possessed of excellent thigh-bones (न पूजनात्) प्राग्बहुव्रीहिग्रहणं च कर्तव्यम् । बहुव्रीहौ सक्थ्यक्ष्णोरित्येवमादौ प्रतिषेधो न भवति । सुसक्थः । अतिसक्थः । स्वक्षः । अत्यक्षः KāśiVṛ. *on* P. v. 4. 69.

**अतिसक्षुध** (ati-saksudha) *adj.* excessively hungry अतिसक्षुधः । ...महर्षिं तमद्राक्षीत् PārśvC. 4. 147.

**अतिसखि** ( ati-sakhi ) *adj.* [AltGr. iii. 141] **i** having an excellent friend वृद्धिः प्रतिषेध्या । अतिसखीनि ब्राह्मणकुलानि MahāBh. i. 116. 6 (*on* i. 1. 47); iii. 73. 11 (*on* vi. 1. 91); iii. 275. 26 (*on* vii. 1. 96); अतिसखेरागच्छामि अतिसखेः स्वम् MahāBh. iii. 85. 2 (*on* vi. 1. 112); (स्यत्यादतः) इत्यत्र स्यत्या-दिति विकृतनिर्देशः किम्? यणादेशाभावे मा भूत् अतिसखेरागच्छति JaineVyā. 297. 29 (*on* iv. 3. 99); KāśiVṛ. *on* P. vi. 1. 112; PariVṛ.(Sī.) 108. 10; PrakriKau. i. 157. 2; Prasā. i. 156. 18; (सख्युरसम्बुद्धौ) अशाविति किम्? अतिसखीनि CāndraVṛ. *on* v. 4. 44; सवर्णदीर्घत्वे हि सत्यतिसखेरागच्छतीत्यत्र एकादेशस्यान्त-वत्त्वादसखीति घिसंज्ञायाः प्रतिषेधः स्यात् KāśiVṛ. *on* P. vi. 4. 148; PadMañ. *on* KāśiVṛ. *on* P. i. 1. 47; **ii** who has excelled a friend अतिसखेरिति । अतिक्रान्तः सखा येनेति बहुव्रीहिः PadMañ. *on* KāśiVṛ. *on* P. vi. 1. 112; **iii** whom a woman friend has excelled अतिक्रान्ता सखी एनमिति...ततश्चाति-सखेरागच्छतीति घेर्ङिति गुणो (vii. 3. 111) न स्यात् Nyās. ii. 596. 24 (*on* vi. 4. 148); **iv** who has excelled a woman friend सखीमतिक्रान्तोऽतिसखिः, अतिसखेरागच्छतीत्यत्रासखीति घिसंज्ञाप्रतिषेधः स्यात् PadMañ. *on* KāśiVṛ. *on* P. i. 4. 7; SiddhāKau. 59B. 4; *m.* excellent friend, very great friend अतिसखे-रागच्छामि । अतिसखेः स्वम् MahāBh. iii. 85. 2 (*on* vi. 1. 112); iii. 226. 24 (*on* vi 4. 148); अतिसखीति पर्युदासोऽयम् । तेन शोभनः सखा सुसखा । अतिसखा । अतिसखेरागच्छति । अतिसखेः स्वम् JaineVyā. 35. 7 (*on* i. 2. 97); 276. 27 (*on* iv. 2. 66); 297. 29 (*on* iv. 3. 99); विकृतनिर्देशादेवेह न भवति, अतिसखे-रागच्छति KāśiVṛ. *on* P. vi. 1. 112; PariVṛ.(Sī.) 108. 10; PrakriKau. i. 157. 2; Prasā. i. 156. 18; यद्वा शोभनः सखा अतिसखा 'न पूजनात्' इति समा-सान्तनिषेधः PadMañ. *on* KāśiVṛ. *on* P. vi. 1. 112; PrakriKau. i. 156. 4; Prasā. i. 156. 13; SiddhāKau. 59B. 2.

**अतिसख्य** (ati-sakhya) *n.* very close friendship or friendly behaviour रघुपतिस्त्वयोध्यां ययौ ... गुहगृहेऽतिसख्यं स्मरन् KalkiP. iii. 3. 50.

**अतिसगर्व** (ati-sagarva) *adj.* excessively proud (सिंहलराजपुत्रः) अतिसगर्वं गन्धर्वकमपश्यत् TilaMañ. 222. 17.

**अतिसङ्कट** (ati-saṅkaṭa) *n.* **A** severe calamity, highly critical situation, great danger दुर्भिक्षे चातिसङ्कटे । ... स्थानं निरीक्ष्य यदि तद्भवेत् JayāS. 20. 379; अतिसङ्कटे । धारको जयमाप्नोति मन्त्रस्यास्य प्रभावतः JayāS. 29. 181; दृश्यतां गणपतेऽन्यया दृशा कार्यमेतदतिसंकटे स्थितम् HarVi. 14. 16; तदेतदति-सङ्कटं यदिह कैश्चिदुक्तं जनैः NalaCam. 7. 33; प्राणी ... साधनानामभावेऽपि अवशश्चातिसङ्कटे DevīBhāP. iii. 12. 73; vii. 17. 35; तृष्णा ... अन्तःपुरस्थमपि या योजयत्यतिसङ्कटे YogVā. i. 17. 32; प्राप्तावकाशः कामोऽपि पतितास्यतिसङ्कटे NavaSāC. 6. 83; प्रगल्भभावः ... महाशयानामतिसङ्कटेषु ... न धियं जहाति RājTa.(Ka.) 7. 985; 7. 1160; अतिसङ्कटे तु मनस्तापमात्रेण शुद्धिः BālamBha. i. 500. 23 (*on* 1. 225); **B** fierce clash, great combat तस्यासिना ... चर्ममात्रं न तुत्रोट कङ्कटस्यातिसङ्कटे RājTa.(Ka.) 6. 249; *adj.* [*f.* –ā] **A** full of many dangers and difficulties, extremely troublesome संसारेऽस्मिन् मनुष्याणां भ्रमतामतिसङ्कटे MārkP. 45. 5; चित्रतां कर्मणां केचिदवोचन्नतिसङ्कटाम् PadmP.(Ra.) 78. 39; भगवति सुलभवहनधर्ममतिसङ्कटमिदं वयस्यास्य MālaMā. 6. 240; हेतुत्वाच्चेष्टितं कामस्यैवेत्युक्तम् । तदिदमतिसङ्कटम् ManuBh. i. 55. 17 (*on* 2. 4); गर्भवासात्परं दुःखम् ... नैवास्ति कुत्रचित् । ... अतिसङ्कटम् ŚivaP. v. 22. 34 (431B. 6); ओजः ... यस्य समयेऽप्यतिसङ्कटे ... तं प्रति समेति रणे जयश्रीः RājTa.(Śri.) 4. 490; **B** very much contracted or narrow अन्तरालं भवेत्तावद्यथा वा नातिसङ्कटम् PāraS. 21. 9.

**अतिसङ्कटत्व** (atisaṅkaṭa-tva) *n.* extreme narrowness, crowdedness दोर्दण्डखण्डवलनान्यतिसङ्कटत्वमुत्प्रेक्ष्य नो विदधिरे ककुभां पुरस्तात् HarVi. 2. 55.

**अतिसङ्कटविषय** (atisaṅkaṭa-viṣaya) *adj.* relating to a very difficult or critical situation अद्यौ तान्यव्रतघ्नानि ... गुरोर्वचनमौषधम् । इदं चाति-सङ्कटविषयम् NirṇaSi. 33. 22.

**अतिसङ्कटवेला** (atisaṅkaṭa-velā) *f.* time of great calamity अति-सङ्कटवेलासु कुर्याद्दया प्रपूजनम् GaṇeP. i. 50. 15.

**अतिसङ्कटस्थलविषय** (atisaṅkaṭasthala-viṣaya) *adj.* relating to a situation of extreme difficulty गोवालव्यजनादर्वाक्सवासा जलमाविशेत् । इति । एतदतिसङ्कटस्थलविषयम् Mitā. 353. 1 (*on* 3. 30)

**अतिसङ्कटस्थानविषय** (atisaṅkaṭasthāna-viṣaya) *adj.* having reference to a place of extreme difficulty एतदतिसङ्कटस्थानविषयमिति कैश्चिद्व्या-ख्यातम् SmṛtiCan. ii. 307. 21.

**अतिसंकीर्ण** (ati-saṅkīrṇa) *adj.* **A** very much crowded, over-crowded (place) (मुञ्जीत) नाकाले नातिसङ्कीर्णे ViṣṇuP. iii. 11. 83; पुरमध्येऽति-सङ्कीर्णे महिषीपातिताज्जनात् ... अभवत्कोलाहलो महान् RauhiC. 105; **B** very much mixed (प्रचारः) अधमस्य त्वतिसङ्कीर्ण इति AbhinBhā. ii. 61. 8 (*on* 9. 173); सुरभिः ... अतिसङ्कीर्णे दुस्तरपङ्के निमग्नासीत् SimhāDvā. 190. 4(6)

**अतिसंकीर्णता** (atisaṅkīrṇa-tā) *f.* over-mixture सङ्कीर्णतातिसङ्कीर्णतायां तस्यां भूयस्ततस्तैर्वक्ष्यमाणश्च (स्या)लङ्कारवर्गस्य बहूनि विचित्राणि जायन्ते तानि कथमाहियन्ते AbhinBhā. iv. 63. 24 (*on* 28. 14+0)

**अतिसंकीर्णशङ्किन्** (atisaṅkīrṇa-śaṅkin) *adj.* suspicious of being very much crowded विष्टेयुक्तत्र तुरगा नातिसङ्कीर्णशङ्किनः SamarāSū. 33. 33.

**अतिसंकुचत्** (ati-saṁkucat) *adj.* [*f.* –cati] shrinking or contracting very much अतिसंकुचन्नवयवैस्सकलैर्यमधःस्थितो वहति कूर्मपतिः (क्षिति-भरम्) PṛthviVi. 3. 27; सखि ललिते । किमतिसंकुचती गात्रपुटके प्रविष्टा GopāKeCan. 139. 12.

**अतिसंकुचित** (ati-saṅkucita) *adj.* extremely limited यदि च जीवः स्वातन्त्र्येण कुर्यादीश्वरस्य तत्त्वमतिसंकुचितमेव स्यात् NyāyKu. 118. 20; नात्र सच्छब्दोऽतिसङ्कुचितज्ञानसूक्ष्मावस्थजीवमात्रविषयः ŚrutaPra. iB. 184. 24 (*on* i. 1. 10); संवलितशब्दभावनामयेन अतिसंकुचितशब्दपरामर्शरूपेण भाव्यमेव Bhāsk. i. 293. 12 (*on* i. 5. 19)

**अतिसंकुचितज्ञानैश्वर्य** (atisaṅkucita-jñānaiśvarya) *adj.* possessed of extremely limited knowledge and greatness जीवभूतस्त्वतिसंकुचितज्ञानैश्वर्यः GītāBh.(Rā.) 601. 16 (*on* 15. 7); मदंशः ... जीवभूतोऽतिसंकुचितज्ञानैश्वर्यो जीवलोके संसारे वर्तमानः VedāntTaSā. 58. 6.

**अतिसंकुचिताङ्ग** (atisaṅkucitāṅga) *adj.* having the body excessively contracted योऽतिसङ्कुचिताङ्गस्तु शूलार्तः संनिषीदति (गजः) Hastyāyur. 290. 22 (2. 58)

**अतिसंकुल** (ati-saṅkula) *adj.* [*f.* –ā] **A** very much difficult क्षेत्रे रजोघनौघे ... । न चिरात् प्रकोपमुपयाति शास्त्रमतिसङ्कुला सिद्धिः BṛSaṁ. 38. 3; **B** very much crowded or dense राक्षसैः परुषारावैर्नृत्यद्भिरतिसंकुलम् । चुक्षोभ वसुधातलम् PadmP.(Ra.) 39. 67; भटानामतिसंकुलः । बभूव शस्त्रसंपातः PadmP.(Ra.) 45. 11; सदा दर्शनतः प्रज्ञाबलादप्यतिसङ्कुलम् । तत्परिस्फुरितं सम्यक् सदा-भ्यस्तमिवात्मनः PrabhāC. 161. 15.

**अतिसंकोच** (ati-saṅkoca) *m.* extreme contraction or shrinkage अतिसङ्कोचविस्तारौ पुत्तिकाद्दस्तिदेहयोः (कल्पनीयौ) TantrVā. 379. 12 (*on* ii. 1. 5); निश्चितमूलानाम् ... वचनानाममवास्या प्रेतपक्षमृताहविषयत्वेनातिसंकोचस्या-युक्तत्वात् Mitā. 92. 26 (*on* 1. 256); तावतां चान्यूनानधिकानामवयवानाम् ... अति-संकोचविस्तारकल्पनं नातीव हृदयमनुरञ्जयति ŚāstrDī. 124. 19 (*on* i. 1. 5)

**अतिसंकोचपरिहार** (atisaṅkoca-parihāra) *m.* avoidance of extreme narrowness अविशेषप्रवृत्तस्यातिसंकोचपरिहारात् ŚāstrDī. 353. 6 (*on* iv. 3. 7)

**अतिसंकोचिन्** (ati-saṅkocin) *adj.* too narrow स्वलक्षणेऽतिसंकोचिनि ...संकेतस्य कर्तुमशक्यत्वात् PratyabhiVi. i. 87. 7 (*on* i. 2. 1)

**अतिसंक्रुद्ध** (ati-saṅkruddha) *adj.* extremely enraged रावणिः ... ततस्तैन्यमतिसंक्रुद्धः प्रविवेश Rāmā. vii. 29. 20; तं पापमतिसंक्रुद्धस्तक्षकः ... नेता यमस्य सदनं प्रति MahāBhā. i. 37. 13; i. 37. 15 (v. l.); अतिसंक्रुद्धोऽपरः श्रृगालः समायातः Pañcā. 254. 22.

**अतिसंक्लिष्ट** (ati-saṅkliṣṭa) *adj.* extremely defiled वास्तु अतिसंक्लिष्टे मिथ्यादृष्टौ नरकगतिप्रायोग्या वैक्रियतैजसाद्याः शुभप्रकृतयो बन्धमायान्ति JñānBiPra. 4. 10.

**अतिसंक्लेश** (ati-saṅkleśa) *m.* excessive distress or hardship साध्य-सिद्धोऽतिसंक्लेशात् साध्यसाध्यो निरर्थकः KulārT. 15. 82; साध्यसिद्धेऽतिसंक्लेशा-त्साध्यसाध्योऽतिदुःखकृत् TantrRā. 1. 50.

**अतिसंक्षय** (ati-saṅkṣaya) *m.* excessive loss धमनिरेव च निद्राया नाशः श्लेष्मातिसंक्षयात् AṣṭāHṛ. i. 7. 63.

**अतिसंक्षिप्त** (ati-saṅkṣipta) *adj.* [*f.* –ā] **i** very brief or concise तथा तदतिसंक्षिप्तमनभिव्यक्तलक्षणम् PāraS. 1. 48; पाणिनेः अतिसंक्षिप्तानि सूत्राणि ManuBh. i. 2. 9 (*on* 1. 1); तेन ईश्वरकृष्णेन विस्तरग्रन्थग्रहणभीरुणा द्वितीयं षष्टि-तन्त्रम् अतिसंक्षिप्तम् MāṭhVṛ. 84. 1 (*on* 71); साध्यरूपं (प्रयोजनं) च रक्षापदेनाति-

संक्षिप्तम् S'rutaPra. iA. 7. 14 (*on* i. 1. 1); क्वाप्यतिसंक्षिप्तस्य विस्तरणम् Nyāy-Su.(Ja.) 8B. 2 (*on* i. 1. 1); **ii** very little or short (period) गते तु नातिसंक्षिप्ते काले BṛKathāS'loSaṁ. 15. 35; **iii** very narrow मुजङ्गस्यातिसंक्षिप्तामद्राक्षं पदवीम् BṛKathāS'loSaṁ. 18. 450.

**अतिसंक्षिप्तकेशा** (atisaṅkṣipta-keśā) *adj.* (*f.*) having very few or thin hair अतिसंक्षिप्तकेशा या(कन्या) ···उद्वाहयति यः कन्याम् ···मृत्युं स प्राप्नोति SkandP. vi. 135. 6.

**अतिसंक्षिप्तचिरन्तनोक्ति** (atisaṅkṣipta-cirantanokti) *f.* very concise expression of an ancient authority निजनिर्मितकारिकावलीमतिसंक्षिप्तचिरंतनोक्तिभिः। विशदीकरवाणि SiddhāMu. 1. 5 (*on* 1)

**अतिसंक्षिप्तसर्गक** (atisaṅkṣiptasarga-ka) *adj.* having very small cantos (*sargas*) नातिसंक्षिप्तसर्गकम् ··· अत एव महाकाव्यम् AgniP. 336. 27.

**अतिसंक्षिप्तोपदेश** (atisaṅkṣiptopadeśa) *m.* very succinct instruction मन्त्रे उपास्योपासनोपासकानामतिसंक्षिप्तोपदेशः कृतो दृश्यते S'ivārkaMaDī. i. 517. 10 (*on* i. 4. 6)

**अतिसंक्षिप्य** (atisaṅkṣip-ya) *ger.* having closely contracted or shrunk स्वान्यङ्गान्यभिसंक्षिप्य (v. l. अतिसंक्षिप्य) निष्क्रान्तो वलसूदनः MahāBhā. v. 9. 48.

**अतिसंक्षुब्धा** (ati-saṅkṣubdhā) *adj.* (*f.*) extremely agitated or afflicted सेना ··· विललापातिसंक्षुब्धा S'ivaP. ii(3). 44. 1 (175B. 11)

**अतिसंक्षेप** (ati-saṅkṣepa) *m.* **i** extreme brevity or shortness, great conciseness ग्रीष्मे ··· रात्रीर्गा चातिसंक्षेपाद्दिवास्वप्नः प्रशस्यते CaraS. i. 21. 43; इति प्रोक्तोऽतिसंक्षेपाद्दस्तुलक्षणसंग्रहः YuktiKa. 31. 2; 69. 19. एवं संकीर्णानुक्त्वा तद्वर्मानतिसंक्षेपेण विवक्षन्नाह ViraMi. 170. 1 (*on* 1. 95); **ii** great contraction or limitation अभ्यासिरतिसंक्षेपात् AśvaCi. 9. 49.

**अतिसंख्य** (ati-saṅkhya) *adj.* surpassing enumeration, countless अतिसंख्याः किल शंकरे गुणाः S'aṅkaDigVi.(Mā.) 4. 64; अतिसंख्योऽपि महान्गुणाकरः सन्वाधितो यत्र गतः समाप्तताम् AlaṅkāMaū. 141. 1.

**अतिसङ्ग** (ati-saṅga) *m.* **1** excessive intimacy (with women) बहुस्त्रीकाश्च ये बालाः ···। संक्षीयन्तेऽतिसङ्गाद्वा KāśyaS. 149B. 13; स्त्रीष्वतिसङ्गाद्यशो वर्धते Bārbas. 1. 34; **2** detention for a long time मलानां त्वतिसङ्गोत्सर्गाभ्यां च तद्वृद्धिक्षयौ (उपलक्षयेत्) AṣṭāSaṁ. i. 102. 11 (1. 19); **3** too much eagerness यत्र व्याहतता नास्ति कोऽतिसंगोऽस्य साधने AnuVyā. 39A. 1 (*on* 3. 2)

**अतिसंगत** (ati-saṅgata) *adj.* gathered close together रक्षांसि च पिशाचाश्च विनेदुरभि(v. l. °ति)संगताः MahāBhā. vii. 1419*(4)

**अतिसंगति** (ati-saṅgati) *f.* excessive association, acquaintance or familiarity तद्दोषे ह्यतिसंगत्या दृष्टे श्रद्धा विनश्यति RāmāMaū. 298. 20.

**अतिसङ्गप्रज** (ati-saṅgapraja) *adj.* having excessive intercourse and profuse progeny अतिसङ्गप्रजः शुभः स्निग्धतनुर्द्विजोऽलिः TājiNī. 1 (1). 9 (5) (Bhāvaprakāśikā बहुस्त्रीसङ्गो बहुप्रजावान्)

**अतिसङ्गप्रसव** (ati-saṅgaprasava) *adj.* having excessive intercourse and profuse progeny स्निग्धोऽतिसङ्गप्रसवोऽपि विप्रः (मीनराशिः) TājiNī. 1(1). 12(7)

**अतिसंगर** (ati-saṅgara) *m.* grave battle or severe fighting बभूव तेषां च तदातिसंगरो महाभयो दैत्यवैरैस्तदानीम् SkandP. i(1). 29. 46; दौहित्रः स्थापितस्तेन राज्ये कृत्वातिसङ्गरम् DeviBhāP. iii. 19. 8.

**अतिसंगोपनीय** (ati-saṅgopanīya) *adj.* which should be kept very secret अतिसंगोपनीयञ्च कवचम् ··· तन्मे कथय मद्रेश PañcaRā.(Nā.) i. 15. 23.

**अतिसंगोपित** (ati-saṅgopita) *adj.* protected very well नीत्यातिसंगोपितम् (नवनीतम्)।··· मुक्तम् GopāKeCan. 86. 19.

**अतिसंघटन** (ati-saṅghaṭana) *n.* excessive clinging together उदितं शयनस्थितयोरतिसंघटनेन तद्वितैः (आलिङ्गनम्) KandaCū. ii. 2. 18.

**अतिसंघट्ट** (ati-saṅghaṭṭa) *m.* excessive collision कपोलमतिसंघट्टा(त्) कुंडलोरदंट्रया। न विवेद ··· विक्षतम् PadmP.(Ra.) 103. 89.

**अतिसंघट्टयोनि** (atisaṅghaṭṭa-yoni) *adj.* arising from excessive collision or clash (of arrows) बाणानामतिसंघट्टयोनयः। विस्फुलिंगा विदधिरे BrahmāṇḍP. iii. 22. 58.

**अतिसंघर्षतस्** (atisaṅgharṣa-tas) *adv.* owing to great friction अतिसंघर्षतः सिन्धुमन्दराचलयोः ··· अमृतमुत्थितम् HarVi. 32. 108.

**अतिसज्जनदुर्गति** (ati-sajjanadurgati) *f.* great misery of a good person अतिसज्जनदुर्गतिः ··· इति किं विधिनिर्मितिः PadyaVe. 835.

**अतिसंचय** (ati-sañcaya) *m.* too much hoarding, saving to an extreme degree न कार्यस्त्वतिसंचयः GiMa. iii(2). 122. 15; Tantrākhyā. 64. 1; युष्मामिरतिसंचयः कृतः PañcT. 2. 53 (2) (241. 15); Hitopa. 1. 117 (1); नाशोऽतिसंचये BṛKathāMañ. 16. 412.

**अतिसंचयकर्तृ** (atisañcaya-kartṛ) *adj.* great hoarder (of wealth) अतिसञ्चयकर्तृणां वित्तमन्यस्य कारणात् Subhāṣi. 474.

**अतिसंचयधी** (atisañcaya-dhī) *f.* thought of too much hoarding नातिसंचयधीः कार्या (v. l.) PañcT. 2. 28 (220. 3); KathāSaSāg. x. 5. 100.

**अतिसंचयलुब्ध** (atisañcaya-lubdha) *adj.* greedy of hoarding or amassing अतिसंचयलुब्धेन धनुषात्मा निपातितः PañcT. 2. 28 (v. l.) (220. 4); अतिसंचयलुब्धानां वित्तमन्यस्य कारणे Pañcā. 155. 15; SūktiRa. 171. 12.

**अतिसंचयशील** (atisañcaya-śīla) *adj.* given to excessive hoarding अतिसंचयशीलोऽयं धनुषा जम्बुको हतः Tantrākhyā. 61. 2 = PañcT. 2. 28 (220. 4)

**अतिसंचित** (ati-sañcita) *adj.* accumulated in abundance (अङ्गना) अर्थान् व्ययीचक्रेऽतिसंचितान् RājTa.(Ka.) 8. 1955.

**अतिसंचितदोष** (atisañcita-doṣa) *adj.* having excessive accumulation of the humours of the body अतिसंचितदोषस्य ··· हिक्का हन्त्याशु जीवितम् RugVi. 12. 12.

**अतिसञ्ज्** (ati-sañj-) I. P. (*pass.*) to be attached very much भक्तियुक्तस्तु पुरुषः ···। नातिसज्येत भोगेषु ParaS. 30. 73.

**अतिसंजपतस्** (atisañjapa-tas) *adv.* by muttering very frequently तव मन्त्रातिसंजपतः सचरतरति नरः SuvarṇaMā. 86. 31.

**अतिसंजातरोष** (atisañjāta-roṣa) *adj.* greatly enraged (ददर्श) सेना वानराणाम् ···। अतिसंजातरोषाणाम् Rāmā. vi. 46. 2.

**अतिसंजातहर्ष** (atisañjāta-harṣa) *adj.* greatly exhilerated, exceedingly jubilant (ददर्श) सेना वानराणाम् ···। अतिसंजातरोषा(v. l. हर्षा)णाम् Rāmā. vi. 46. 2.

**अतिसती** (ati-satī) *adj.* (*f.*) surpassing all devoted wives, extremely chaste भीतभीतयातिसत्यारुन्धत्या पृष्टः कृतो भगवान् वसिष्ठः AvantiKa. 117. 13.

**अतिसत्कार** (ati-satkāra) *m.* excessive honour तं चाहमतिसत्कारमन्येऽतिविडम्बनाम् BṛKathāS'loSaṁ. 18. 541; तुल्योत्साहासहिष्णुत्वादस्मै कुप्यन्तु डामराः। एप एवातिसत्काराद्बद्धास्तु विशदाशयः RājTa.(Ka.) 8. 20.

**अतिसत्कृ** (ati-satkṛ-) VIII. U. to honour greatly ततस्तं विक्रमः सामिप्रायं दृष्टिविकारतः। परिज्ञायातिसच्चक्रे वक्राशयशिरोमणिः PrabhāC. 200. 23.

**अतिसत्कृत** (ati-satkṛta) *adj.* [*f.*-ā] highly honoured or respected ताम् ··· मातृमध्येऽतिसत्कृताम्। रामः ··· मातरं वाक्यमब्रवीत् Rāmā. ii. 34. 29; ii. 99. 1; स्थित्वा दिनानि कतिचिद् गृहे तस्यातिसत्कृतः। विदर्भराज्ञा संमंत्र्य ततो गन्तुं प्रचक्रमे BrahmāṇḍP. ii. 49. 4; अतिसत्कृता अपि शठाः सहसुवमुज्झन्ति जातु न प्रकृतिम् Subbāṣi. 404.

**अतिसत्कृत्य** (ati-satkṛtya) *ger.* having accorded great respect (very reverentially) उक्तलक्षणान् ब्राह्मणान् सम्यगतिसत्कृत्य निमन्त्रयेत् ManvaMu. 124. 22 (*on* 3. 187)

**अतिसत्क्रिया** (ati-satkriyā) *f.* great honour or hospitality मौलानसौ वालिवधप्रलीनान्।··· इदानीमुत प्रतीच्छत्यतिसत्क्रियाभिः RāmC. 3. 44.

**अतिसत्तटा** (ati-sattaṭā) *adj.* (*f.*) possessed of a very beautiful bank पुष्पैर्मरकतच्छायाकोमलैश्चातिसत्तटा (वापी) PadmP.(Ra.) 105. 47.

**अतिसत्त्व** (ati-sattva) *adj.* [*f.*-ā] **i** possessing extraordinary or very noble character अतिवाक्यक्रियोपेतमतिसत्त्वातिभावकम्।··· यदीदृशं भवेन्नाट्यं नाट्यधर्मी तु सा स्मृता NāṭyaS'ā. 13. 73; **ii** very mighty or strong, of a very noble nature विदर्भो नाम जनपदः। तस्मिन् ··· अतिसत्त्वः ··· पुण्यवर्मा नामासीत् (राजा) DaśKuC. 129. 12; परितो विभरांबभूव हंसाञ्जलवेगं च बभार यातिसत्त्वा। पूतना Rāvaṇā. 8. 43; (नरः) पित्तोद्भवायाः प्रकृतेः सकाशात् ··· तेजोऽधिकः सत्यपरोऽतिसत्त्वः(? त्वः) KalyāKā. 3. 22; वासयति हीनसत्त्वानतिसत्त्वानुद्वतान् विवासयति।··· नीतिविदामग्रणीर्नराधिपतिः RasGaṅ. 433. 2; स वारणेन्द्रः ···। अतुल्यवीर्यः ··· अतिसत्त्वः VarāṅgaC. 16. 8; *n.* supreme virtue (of generosity) एवं वारत्रयं मुनये भक्तं दत्तम्। ततोऽतिसत्त्वेन परितुष्टो देवः KathāK. 44. 21.

**अतिसत्त्वता** (atisattva-tā) *f.* quality of having supreme nobility or courage अतिसत्त्वतया विक्रमरसतिरस्कृतस्वजनविरहदुःखः नि(वे ? वृं)तेन चेतसा तमपरभाग(म)ङ्कः समग्रां च यामिनीमनैषीत् AvantiKa. 51. 22; 102. 4; 177. 5.

**अतिसत्त्वबल** (atisattva-bala) *n.* strength of supreme resoluteness or nobility असुकरमपि तद्वचस्तदानीं धृतमतिसत्त्वबले व्यपाश्रयात् Rāmā. ii. 373*(2)

**अतिसत्त्वयुक्त** (atisattva-yukta) *adj.* **1** possessing great courage अतिसत्त्वयुक्त इति पुंभिरयमतिशयेन वर्ण्यते S'iśuVa. 15. 38 (+15); (comm.

महता सत्त्वेन धैर्येण युक्तः); 2 endowed excessively (i. e. exclusively) with *sattva* (the best of the three constituents of Prakṛti–Primordial Matter), S'iśuVa. 15. 38 (+15) (comm. अथ च सत्त्वीजनिर्वाजसमाधौ पुंभिर्योगिभिः 'सत्त्वेन गुणेन युक्त' इति कथ्यते)

**अतिसत्त्ववत्** (atisattva-va(n)t) *adj.* I noble-minded योऽसौ सुवर्णकारस्तु दरिद्रोऽप्यतिसत्त्ववान्। न मूल्यमाददे्रियातः MatsyaP. 92. 29; PadmP. v. 21. 14; II very powerful विचारयत्यविषमगेविरोधितां स कृष्णभूपतिरतिसत्त्ववानिव Raghunā. 10. 63.

**अतिसत्त्वाढ्य** (atisattvāḍhya) *adj.* endowed with great strength तत्र गत्वातिसत्त्वाढ्यो दिङ्नीन्द्राद्दासवाञ्छियन् ParamāKā. 37. 9.

**अतिसत्त्वौजस्** (ati-sattvaujas) *adj.* very strong and powerful गरुडश्चातिसत्त्वौजा भास्करप्रतिमद्युतिः MatsyaP. 171. 50.

**अतिसत्प्रिय** (ati-satpriya) *adj.* very dear to good men सुग्रीवाख्योऽयमीश्वरः ··· गुणवानतिसत्प्रियः। केनापि दुष्टमायेन खगेनानर्थमाहृतः PadmP.(Ra.) 47. 34.

**अतिसत्य** (ati-satya) *adj.* very truthful दुर्धरो दुःसहः पापी योऽतिसत्येषु निष्ठुरः। मामेव पश्यते नित्यम् PadmP. ii. 56. 19.

**अतिसत्रपा** (ati-satrapā) *adj* (*f.*) greatly abashed पृच्छ(च्छय?)-माना यदा देवैर्नाहं तारातिसत्रपा। तदा सा शमुमारब्धा कुमारेणातितेजसा SkandP. iv. 15. 44.

**अतिसत्वर** (ati-satvara) *adj.* very quick देवाधिपग्राहः ··· पप्रच्छ च महाक्षुब्धो मारीचमतिसत्वरः PadmP.(Ra.) 14. 5; सोऽयं गतोऽपि दूरमतिसत्वरः पितुराज्ञया राज्ञोऽस्य कुसुमशेखरस्य साहायकं कर्तुन् ··· काञ्चीमनुप्राप्तः TilaMañ. 95. 7; (सः) अतिसत्वरैः पदैरागत्य मुखं प्रतीहारस्य ··· क्षणं तस्थौ UdaySuKa. 51. 7.

**अतिसत्वरगत्वर** (atisatvara-gatvara) *adj.* running very rapidly अतिसत्वरगत्वरैस्तुरङ्गैरतिरम्यं रथमारुरोह कृष्णः HariVi. 4. 29 (136)

**अतिसत्वरम्** (ati-satvaram) *adv.* very rapidly or quickly अहंकारघने शान्ते तृष्णा नवतडिल्लता। शान्तदीपशिखावृत्त्या क्वापि यात्यतिसत्वरम् YogVā. i. 15. 13; चन्पेश्वरोऽपि सिंहवर्मा ··· साहाय्यदानायातिसत्वरमापततां धरापतीनां ··· प्रतिबलं प्रतिजग्राह DaśKuC. 36. 6; प्रतिपथमतिसत्वरं प्रधावद्भिरन्वेषकजनैरन्त्यकुलीभूतेव राजधान्यपि मुहूर्तमेकं बभूव UdaySuKa. 107. 7; राजा तु सुदूरमभिवर्ध(? र्धि)तानुरागरञ्जितरतिसत्वरमिदानीमेव भवन्तमीहते द्रष्टुम् UdaySuKa. 156. 8; 156. 8; 137. 8; 127. 23; 111. 15.

**अतिसद्** (ati-sad-) I. P. [P. vii. 3. 78] to be exhausted, to be destroyed completely ततो दुर्भिक्षमाहात्म्याद्भिक्षयात्यल्पलब्धया। सारयित्वा गुरूणां तौ सुज्ञानावत्यसीदताम् PariPar. 8. 383; मन्त्राणां देवतानां च वैरिकरणमीश्वरि। कथयामि शृणु प्राज्ञे येन लोकोऽतिसीदति TantrRā. 35. 84; AnaṅgaRa. 4. 23.

**अतिसदन** (ati-sadana) *n.* excellent mansion तत्रापि मेऽतिसदनं किल मध्यभागे DevīBhāP. iv. 24. 50.

**अतिसदय** (ati-sadaya) *adj.* very compassionate प्रमुदितहृदयं हरिमतिसदयं नमत GītGo. v. 11. 8.

**अतिसदाचार** (ati-sadācāra) *adj.* very virtuous, having very good conduct ज्यायानतिसदाचारो द्यूतादिव्यसनी लघुः PariPar. 1. 271.

**अतिसदृश** (ati-sadṛśa) *adj.* very similar, very much alike न च अतिसदृशस्वरवहुवक्तृप्रयुक्तेषु ···व्यभिचार इति साम्प्रतम् TattvBi. 68. 3; तं चातिसदृशं दृष्ट्वा सर्वेऽप्यत्रैवमब्रुवन् KathāSaSāg. xii. 34. 81.

**अतिसदृशता** (atisadṛśa-tā) *f.* extreme similarity कान्ते क्षोणीधरेऽसित्रतिसदृशतया दुर्गमा भूविभागाः PadmP.(Ra.) 42. 60.

**अतिसद्गुणा** (ati-sadguṇā) *adj.* (*f.*) possessed of many good qualities मम कृतिरियं हित्वा दोषान्भवत्त्वतिसद्गुणा AdvaiSi. 900. 7.

**अतिसद्भक्ति** (ati-sadbhakti) *f.* great devotion रुद्राक्षाञ्छिववल्लभान्। धारयस्त्वातिसद्भक्त्या S'ivaP. ii(1). 4. 66 (42A. 4)

**अतिसद्वंश** (ati-sadvaṃśa) *m.* very noble family (महासाध्वी) अतिसद्वंशजाता च सुशीला कुलपालिका BrahmVaiP. iv. 57. 12.

**अतिसनाथता** (atisanātha-tā) *f.* the state of having many protectors प्रभूतमातापितृपक्षामित्यनेनातिसनाथतां दर्शयति JayaMa. 191. 9 (*on* 3. 1)

**अतिसनामन्** (ati-sanāman) *adj.* having exactly the same name (as of the tree) सदा ह्यतिसनामानि··· । फलान्यमृतकल्पानि VarāP. 77. 18.

**अतिसंतत** (ati-santata) *adj.* greatly extended, widely spread, uninterrupted क्षेत्रज्ञशक्तिः ··· संतारतापानखिलानवाप्नोत्यतिसन्ततान् ViṣṇuP. vi. 7. 62; तवाभ्यासोऽस्ति सद्गुणैः। ··· पद्मस्येवातिसन्ततैः YogVā. ii. 12. 5; स्वजनाश्रुकिलातिसन्ततं दहति प्रेतम् RaghuVa. 8. 48; कालसमुद्रस्य न लक्ष्यन्तेऽतिसन्तताः। ··· युगान्ताः DaśāvaC. 8. 1; निःश्वासैरतिसन्ततैर्बुंबुकणाजालं खले विक्षिपन्तृक्षाः SubhāRaK. 35. 39; ताम्बूलीवल्लीद्राक्षावितानैरतिसन्ततैः।···तन्वन्तं रतिमण्डपान् TrisaS'aPuC. ii. 1. 103.

**अतिसंतपन** (ati-santapana) *n.* a kind of expiation पृथक्त्वप्रत्ययाभ्यस्तमतिसन्तपनं स्मृतम् ViṣṇuDhaP. ii. 42. 32.

**अतिसंतप्त** (ati-santapta) *adj.* [*f.* -ā] I extremely distressed, very much excited अहमेकोऽभि(v. l. ति)सन्तप्तो माता च प्रतिविन्ध्यतः MahāBhā. iii. 36. 15; ब्राह्मणी शूद्रभोग्या ··· । निवसेदतिसन्तप्ता यमदूतेन ताडिता BrahmVaiP. ii. 31. 23; तथोद्विग्नोऽतिसन्तप्तो न भक्ष्यैर्मन्यते सुखम् S'ivaP. v. 10. 55 (418A. 11); ब्रह्मा ··· । आजगामातिसन्तप्तः SkandP. v(2). 83. 42; भुशुण्डिरतिसन्तप्तः ··· जज्वाल वह्निवत् GaṇeP. i. 58. 28; II very hot सरोवरैकदेशेऽतिसन्तप्तमुदकमस्ति SiṃhāDvā. 160. 4(6)

**अतिसंतर्पण** (ati-santarpaṇa) *n.* extreme satiation सर्वेव हि वृद्धिः प्रायोऽतिसन्तर्पणनिमित्तत्वाच्छ्लेष्मणानुगता AṣṭāSaṃ. i. 102. 14 (1. 19)

**अतिसंतर्पित** (ati-santarpita) *adj.* very much satisfied सह्चरि चकोरयुगलं दिवसे मद्वक्त्रचन्द्रिकया। अतिसन्तर्पितनयनं पश्यति निशि नैव चन्द्रमसम् SṛṅgāMañ.(A.) 31. 8

**अतिसंतानक** (ati-santānaka) *m.* name of one of the sixty planets अतिसन्तानकास्त्वन्ये षष्टिर्योऽपि सुता ग्रहाः AVPari. 52(5). 5.

**अतिसंताप** (ati-santāpa) *m.* I excessive heat व्यायाममतिसन्तापमतिभुक्त्वा निषेविणाम् (कुप्यन्) CaraS. vi. 7. 5 (1941 Ed.); विरराामातिसन्तापे क्षिप्रवर्षीव वारिदः RāmāMañ. 258. 26; II great anguish वृश्चिकाख्यः ··· अतिसन्तापनष्टच्छायो ज्वराभिधः SamaMā. 5. 56.

**अतिसंतापद** (atisantāpa-da) *adj.* who torments very much अतिसन्तापदाञ्जातः स जनाह्लादकोऽभवत् RājTa.(Ka.) 1. 327.

**अतिसंतुष्ट** (ati-santuṣṭa) *adj.* greatly pleased, very much satisfied ततो भूपोऽतिसंतुष्टः संमान्य व्यसृजद् द्विजम् PārśvC. 2. 70; वस्त्राभरणानि परमप्रीत्या दत्तानि श्रेणिकेनातिसंतुष्टेन SamyaKau. 2. 15; प्रियां दृष्ट्वातिसंतुष्टः Siṃhā-Dvā. 31. 8(2); 95. 2(4); 143. 6(8)

**अतिसंतुष्टमनस्** (atisantuṣṭa-manas) *adj.* very much satisfied in mind मुनयः सर्वे ··· अतिसन्तुष्टमनसो नत्वा जग्मुः स्वमाश्रमन् GaṇeP. ii. 137. 39; i. 73. 25; अतिसंतुष्टमना गृहेश्वरः ···स्वगृहं प्रविशेत् MayaMa. 28. 35.

**अतिसंतोष** (ati-santoṣa) *m.* great satisfaction, great delight, extreme joy अतिसंतोषेण कातराक्षीति भावः LalitāTriBh. 290. 9 (*on* 20); PrabhāC. 97. 12; अतिसंतोषश्च विरोधीत्यर्थः S'rīBh. 12. 5 (*on* i. 1. 1) = Yatīndra Dī. 63. 5.

**अतिसंतोषराहित्य** (atisantoṣa-rāhitya) *n.* absence of great delight हर्षहेतुपुप्रश्चितेप्यप्यतिसंतोषराहित्यमनुद्धर्षः NītiMā. 65. 9.

**अतिसंतोषित** (ati-santoṣita) *adj.* caused to be greatly delighted, very much pleased स्त्रीवैरेव चरित्रकैः शुभतरैस्तातोऽतिसन्तोषितः ParamāKā. 19. 134(? 136)

**अतिसंत्रस्त** (ati-santrasta) *adj.* [*f.* -ā] I very much frightened or alarmed आजग्मुरतिसंत्रस्ता ब्रह्मविष्णुशिवादयः BrahmVaiP. iv. 86. 108; II very much infuriated or agitated इत्युक्त्यातिसंत्रस्तया नद्या प्रसादितः। भूभागे प्लाविते तत्र मुमोच यमुनां बलः BrahmP. 198. 14.

**अतिसंत्रास** (ati-santrāsa) *m.* great fear इत्युक्तयातिसंत्रासात्तया नद्या प्रसादितः (बलरामः) ViṣṇuP. v. 25. 14.

**अतिसंदधान** (ati-sandadhāna) *adj.* overreaching, deceiving (i. e. covering or hiding secretly) अनन्यसाधारणपारमैश्वर्यादन्यानशेषानतिसंदधानात्। गोपायितुं पारयति त्रिलोकीम् ··· न त्वदन्यः Yādavā. 7. 96.

**अतिसंदिग्धत्व** (atisandigdha-tva) *n.* great ambiguity or uncertainty अर्थस्यातिसंदिग्धत्वात्संदेहः AṇuBh. 67. 19 (*on* i. 2. 24)

**अतिसंदिग्धवस्तु** (atisandigdha-vastu) *n.* very doubtful or dubious matter वितर्कस्तु विचारः स्यादतिसंदिग्धवस्तुनि SāhiSā. 5. 33.

**अतिसंदीप्ता** (ati-sandīptā) *adj.* (*f.*) very much ablaze or afflicted शोकाग्निनातिसंदीप्ता निराशा पुत्रदर्शने (चेनुरगच्छत्) PadmP. v. 18. 417.

**अतिसंदुष्ट** (ati-sanduṣṭa) *adj.* very wicked शर्मोऽप्यतिसंदुष्टो नित्यं प्राणिवधे रतः MahāBhā. xii. 117. 38.

**अतिसंदेहग्रन्थि** (atisandeha-granthi) *m.* knot of extreme doubt विच्छिन्नो मेऽतिसंदेहग्रन्थिश्चैवदनुग्रहात् AdhyāRā. i. 2. 1.

**अतिसंधम्** (ati-sandhám) *adv.* wrongly, deceivingly योऽयं देवः पशूनामीष्टेऽतिसन्धं वा अयं(?यं) चरति य इत्थं स्वां दुहितरस्माकं स्वसारं करोति S'atBr. I. vii. 4. 3.

**अतिसंधा** (ati-sandhā-) III. U. I to overreach, to cheat, to outwit सुदारालिकव्यञ्जना वा प्रणिहिता दूष्यं रसेनातिसंदध्युः ArthS'ā. ii. 138. 6

(5.1); मध्यमोदासीनयोर्बलांशदाने यः शूरं कृतास्त्रं दुःखसहमनुरक्तं वा दण्डं ददाति सोऽतिसंधीयते। विपरीतोऽतिसंधत्ते ArthSʼā. ii. 289.7 (7.8); सत्त्वासत्त्वव्यवस्थितम्। बुध्यात्मना मया व्याप्तं को मां लोकेऽतिसंधयेत् VāyuP. ii. 6.20; अस्मानपि रहस्येनातिसंधत्ते PādaTā. 14.5; समानदुःखावेगावेवावां भवावः। मूर्च्छया किं मामेवमतिसंधत्से VeṇiSaṁ. 6.334; आत्मानं योऽतिसंधत्ते सोऽन्यस्मै स्यात्कथं हितः TantrVā. 116.16 (*on* i. 3.4); वज्रावर्तं धनुर्मित्रमिवाकृष्य निपीडितम्। तं (रामम्) नातिसंदधे RāghPāṇ.(Dha.) 9.35; वेश्यां यो नातिसंधत्ते मूढोऽसाविति साध्यते ViṭVṛ. 80; निर्जराः …। अतिसंदधिरे सुखेन मूढम् SʼivLī. 3.28; स्वभक्तान्पुरा। काकुत्स्थोऽप्यतिसंदधे स भुवनान्यन्यानि सृष्ट्वा तदा SʼivotkaMañ. 5; (*pass.*) द्विषद्भिश्चातिसंधीयते (राजा) ArthSʼā. i. 94.3 (1.19); त्वया चन्द्रमसा च विश्वसनीयाभ्यामतिसंधीयते कामिजनसार्थः (v. l.) Sʼāk. 3.3(1); YaśasCam. i. 373.2; एवमेतेन कल्पेन स्थिता वेश्या परिग्रहे। नातिसंधीयते गम्यैः KāmSū. 332.23 (6.3); अनवसर्पो हि राजा स्वैः परैश्चातिसंधीयेत NītiVā. 14.6; किमाश्चर्यं यदुज्जयनिको जनः। नातिसंधीयते धूर्तैः BṛKathāSʼloSaṁ. 22.177; **ii** to outdo, to surpass मूलद्वारं नान्यैर्द्वारैरति(? अभि)संदधीत रूपद्धर्या BṛSaṁ. 53.82; न नियमानसमीक्ष्य बुद्ध्या यमबहुलेष्वतिसंदधीत बुद्धिम् ManuBh. i. 397.20 (*on* 4.204)

**अतिसंधातव्य** (ati-sandhātavya) *adj.* to be over-reached, cheated or outwitted स वक्ष्यत्येवं, तस्येदं प्रतिवाक्यम्, एवमतिसंधातव्यम् इत्यधीयानो गच्छेत् (दूतः) ArthSʼā. i. 78.5 (1.16); कुमारो मलयकेतुरतिसंधातव्य इत्यहो दुष्करम् MudrāRā. 5.3(8)

**अतिसंधातुकाम** (atisandhātu-kāma) *adj.* wishing to overcome or to deceive शत्रुमतिसंधातुकामः … परिच्छिद्रमासाद्य प्रहरेत् ArthSʼā. ii. 271.10 (7.6); सत्रि(? त्रि)णो मित्रव्यञ्जना वा बाह्यानां चारमेषां ब्रूयुः 'अयं वो राजा दूष्यव्यञ्जनैरतिसंधातुकामो बुध्यध्वम्' इति ArthSʼā. iii. 75.2 (9.5); मत्स्वामिनमतिसंधातुकामः परो मां विलम्बयितुमिच्छतीत्यविज्ञातोऽपि दूतोऽपसरेत् NītiVā. 13.6.

**अतिसंधातुम्** (ati-sandhātum) *inf.* in order to overcome or to deceive तदपि नाम दुरात्मा चाणक्यबटुः … अतिसंधातुं शक्यः स्यात् MudrāRā. 4.3(3); अयं बटुरशक्य इवातिसंधातुम् AdbhuDa. 2.21(11); शास्त्रज्ञसमाज्ञातो हि यद्ददाति यन्मानयति यच्च प्रियं ब्रवीति तत्सर्वमतिसंधातुमित्यविश्वासः DaśKuC. 133.2; स एव तमतिसंधातुं वञ्चयितुं समर्थः AbhinBhā. iii. 51.11 (*on* 19.87); तद्विटस्यातिसंधातुं न्यायं तत्रेदमुत्तरम् ViṭVṛ. 76.

**अतिसंधातृ** (ati-sandhātṛ) *adj.* who cheats or outwits उपनिविष्टसमासयोरुपनिविष्टं पृथग्यानस्थानमतिसंधातारं युध्येत, न समासमरिणैकस्थानयानम् ArthSʼā. iii. 37.5 (8.5)

**अतिसंधान** (ati-sandhāna) *n.* over-reaching, cheating or tricking परातिसंधानमधीयते (v. l.) यैर्विद्येति ते सन्ति किलाप्तवाचः Sʼāk. 5.26; परोपजापातिसंधानोपधिभ्यश्च रक्षेत् ArthSʼā. ii. 212.6(5.5); सङ्घाश्चाप्येवमेकराजादेतेभ्योऽतिसंधानेभ्यो रक्षेयुः ArthSʼā. iii. 152.5 (11.1); तदत्र प्रतीकारेषु केवलमतिसंधानजृम्भितमवशिष्यते MahāviC. 6.8(1) (159.8); मृषानन्दो मृषावादैरतिसंधानचिन्तनम् MahāP. 21.50; कपटेनातिसंधानं ब्रुवतेऽतिबलं बुधाः NāṭyaSʼā. 19.87; कथमन्यथा तदतिसंधानमन्तरेणायमागन्तुं शक्तः स्यात् JānaPa. 4.35(8); अतिसंधानमाचार्या नाटकेऽतिबलं विदुः SāhiSā. 1.91; वंचनं चातिसंधानं व्यलीकं स्यात्प्रतारणम् AbhidhāRaMā. 4.63; Vaija. 194.35; प्रतारणातिसंधानवचनानि प्रलोभनम् SʼabdaRa.(Vā.) 2038.

**अतिसंधानपर** (atisandhāna-para) *adj.* intent on deceiving अन्या नु किं ते नु दृशीति चुम्बिता मिथोऽतिसंधानपरेण कामिना VasaViKā. 7.16.

**अतिसंधानप्रधान** (atisandhāna-pradhāna) *adj.* having cheating as (his) main motive बालो वा नैकदृष्टिरतिसंधानप्रधानो … वेत्यवेत्य संदध्यान्न वा KāmSū. 336.10 (6.4)

**अतिसंधानविरोध** (atisandhāna-virodha) *m.* inconsistency with (the use of) deception or fraud षाड्गुण्यस्यातिसंधानविरोधश्चैवं न भवति ManuBh. ii. 53.3 (*on* 7.180)

**अतिसंधानशील** (atisandhāna-śīla) *adj.* given to cheating कदर्यस्य … नातिसंधानशीलस्य स्वैरपि व्ययैस्तथाराधनम् KāmSū. 355.10 (6.6) (comm. अतिसंधानशीलस्य छलेन संधानपरस्य)

**अतिसंधानाधिक्य** (atisandhānādhikya) *n.* greater (possibility of) over-reaching द्वाभ्यां समाभ्यां (यानं) श्रेयः, ज्यायसा ह्यवगृहीतश्चरति समाभ्यामतिसंधानाधिक्ये वा तौ हि सुखौ भेदयितुम् ArthSʼā. ii. 266.5 (7.5)

**अतिसंधानार्थम्** (atisandhānārtham) *adv.* in order to deceive मुग्धे मुनीनामतिसंधानार्थं मम रूपेण राक्षसाः संचरन्ति ĀścaCū. 3.33 (25)

**अतिसंधापटु** (atisandhā-paṭu) *adj.* expert in deceiving बहुशो हरति स नीविबन्धानतिसंधापटुरादिमः स चोरः YātrāPra. 7.51.

**अतिसंधाय** (ati-sandhāya) *ger.* having deceived or over-reached अस्मान् वाप्यतिसंधाय कुर्युर्मेत्स्येन संगतम् MahāBhā. iv. 42.12; सार्थयानपात्राणि च मदनरसयोगेनातिसंधायावहरेत् ArthSʼā. i. 91.5 (1.18); प्रायेण निरुन्धन्तमसत्परिजनमतिसन्धायागतोऽस्मीति JānaP. 4.35 (7); जनं विद्वानेकः सकलमभिसंधाय (v. l. अतिसंधाय) कपटैः … मौनं च भजते MālaMā. 1.105 = SūktiRa. 82.29; चतुःषष्ट्या तन्त्रैः सकलमतिसंधाय भुवनम् SaundL. 31; यदि तु मित्रेण सह तुल्यफलायां यात्रायामवष्टब्धो रिपुरशक्तो भूम्यादि प्रयच्छेत् तदा किं मित्रमतिसंधाय स्वकार्यं न क्रियते BālaKrī. i. 196.21 (*on* 1.348); कथमिवैतानतिसंधाय भग्नपायैः SʼṛṅgāBhū. 69; अतिसंधाय दानवाननुगृह्णीयाममरानिति कृतनिश्चयः सद्य एव तिरोदधे … कमललोचनः NīlaVi. 122.17; (इयम्) मत्कृतस्नेहानुबन्धा बन्धुजनमतिसंधाय मामनुसंगता वर्तते इति Mukundā. 146 (5); 184 (11)

**अतिसंधायक** (ati-sandhāyaka) *adj.* very deceitful or very cunning बकवृत्तिरतिसंधायकः स्वार्थनिष्ठश्च BālaKrī. i. 106.2 (*on* 1.129)

**अतिसंधारण** (ati-sandhāraṇa) *n.* total rejection, non-fulfilment, completely witholding प्रार्थनासंधारणाद्धि (PW reads प्रार्थनातिसंधारणाद्धि) वायुः प्रकुपितोऽन्तःशरीरमनुचरन् गर्भस्यापद्यमानस्य विनाशं वैरूप्यं वा कुर्यात् CaraS. iv.4.19 (1941 Ed.)

**अतिसंधि** (ati-sandhi) *m.* **i** over-reaching pact (much more advantageous to oneself than to the opposite party) तेषां ज्यायसोऽधिकांशेन समात्समेन हीनाद्धीनेनेति समसंधिः। विपर्यये विषमसंधिः। तयोर्विशेषलाभादतिसंधिः ArthSʼā. ii. 279.4 (7.7); ii. 292.6 (7.9); **ii** deception अपकारमिवातिसंधयस्तमसत्पक्षमित्रापहेतवः। उपसेदुः … सनाभयः RāmC. 33.35.

**अतिसंधिक** (atisandhi-ka) *adj.* deceiver, deceitful person अतिसन्धिकमित्येव पुरुषं सामवादिनम्। असाधवो विजानन्ति तस्मात्तत्तेषु वर्जितम् ViṣṇuDhaP. ii. 67.9.

**अतिसंधिकृत्** (atisandhi-kṛt) *adj.* causing deception छलं स्याद्वाच्यमन्यार्थं हास्यरोषातिसंधिकृत् NāṭaLaRaK. 2975; अतिसंधिकृच्छलमेतत् NāṭaLaRaK. 2980.

**अतिसंधित** (ati-sandhita) *adj.* [*f.* -ā] deceived, cheated धर्मवादी शठो भर्ता … शुद्धभावे न जानीषे तेनैवमतिसंधिता Rāmā. ii. 7.20; अम्ब लक्ष्मणेनातिसंधितोऽहमभिवादये Prati. 3.15 (9); सोऽयं ग्रामेयकेनेव धिया धूर्तोऽतिसंधितः BṛKathāSʼloSaṁ. 19.10; 22.178.

**अतिसंधित्सत्** (ati-sandhitsat) *adj.* wishing to deceive अतिसंधित्सतो विष्णुं कः सहायो भविष्यति SkandP. i(3B). 12.12.

**अतिसंधित्सित** (ati-sandhitsita) *adj.* intended to be deceived अतिसंधित्सितो गोविन्दमहाराजः स्वयमस्मानतिसंधातुमवाप्ताभिसंधिरासीत् GadyaCin. 142.3.

**अतिसंधीयमान** (ati-sandhīyamāna) *adj.* who is being deceived पठन्तश्चापठद्भिरतिसंधीयमाना बहवः DaśKuC. 133.13.

**अतिसंधेय** (ati-sandheya) *adj.* improper, violating convention देवराज कथमप्रतिसन्धेयं (v. l. अतिसन्धेयं) तुमुलम् MahāviC. 6.30 (6); **ii** to be deceived or over-reached न खल्वतिसंधेयाः केनापि मायाविनो मारीचप्रभृतयः JānaPa. 4.40 (3)

**अतिसन्ध्या** (ati-sandhyā) *f.* time about the twilight अतः … नातिसन्ध्यासमीपपर्यन्तो वासरतृतीयांशो ग्राह्यः CaturCin. iii(2). 577.13.

**अतिसंनद्ध** (ati-sannaddha) *adj.* well-armoured, well-equipped तारकवीरभद्रौ … युयुधातेऽतिसंनद्धौ SʼivaP. ii(4). 8.18 (202A. 9)

**अतिसन्ना** (ati-sannā) *adj.* (*f.*) very feeble वाचातिसन्नया रामं जटायुरिदमब्रवीत् Rāmā. iii. 64.8.

**अतिसंनिकर्ष** (ati-sannikarṣa) *m.* extreme closeness, too much proximity or nearness षड्भिः प्रकारैः सतां भावानामनुपलब्धिर्भवत्यतिसंनिकर्षात् MahāBh. ii. 197.9 (*on* iv. 1.3); PadMañ. *on* KāśiVṛ. *on* P. iv. 1.3; सतां च रूपाणामतिसंनिकर्षात् … प्रत्यक्षानुपलब्धिः CaraS. i. 11.8; प्रायः प्रभूणामतिसंनिकर्षः क्षुराग्रधारे नवपादचारः DaśāvaC. 7.154.

**अतिसंनिकृष्ट** (ati-sannikṛṣṭa) *adj.* [*f.* -ā] **i** extremely proximate, very near न वातिसंनिकृष्टां विप्रकृष्टाम् … वा सूचीं पातयेत् AṣṭāSaṁ. i. 187.22 (1.38); अतिसंनिकृष्टेषु वस्तुषु गतिकालभेदः … मा नाम अवसायि PrakaPañ. 130.8; आसीने च मयि नातिसंनिकृष्टमध्यास्य विष्टरम् … समागत्य चतुरिका साकूतमवदत् TilaMañ. 352.11; **ii** close neighbour बलादापदि चातिसन्निकृष्टाः प्रवृत्तप्रवेशाश्चादण्ड्याः अन्यत्र प्रतिषेधात् ArthSʼā. ii. 177.7 (4.13)

**अतिसंनिधान** (ati-sannidhāna) *n.* extremely close proximity अधुनातिसन्निधाने पलायितुमक्षमः Hitop. 1.43; पूर्वपक्षस्तु … अतिसंनिधानादुत्थितः VedāntKa. 153.2 (*on* i. 3.8)

**अतिसंनिवेश** (ati-sanniveśa) *adj.* having a very near place, very close इति निवारितो वारंवारमपसृत्य नातिसंनिवेशो तस्यैव मत्तवारणस्यैकपार्श्वे

-निषसाद (गन्धर्वकः) TilaMañ. 223. 10.

**अतिसंनिहित** (ati-sannihita) *adj.* extremely near सर्वतः प्रसरतातिसंनिहितमुखरमणिनूपुरस्वनेन … श्रूयमाणराजहंसरवम् …उपदर्शयन्तीम्…कन्यकामद्राक्षम् TilaMañ. 160. 1; यदा सन्तमसान्धकारे विद्युत्सम्पातमात्राद् व्याघ्रमभिमुखमतिसंनिहितं पश्यति SāṁkhyaTaKau. 364. 5 (*on* 30); अतिसंनिहितमदनचेष्टानुवादिन उक्तिरेव ते ग्राम्या LaṭaMe. 2. 21 (1); स्वयमतिसंनिहितोऽप्यलक्षितः ।…अधिकाशिगृह्यते … तस्कराग्रणीः YātrāPra. 2. 81; 5. 9.

**अतिसंनिहितदेश** (atisannihita-deśa) *m.* very close region चिरकालमतिसंनिहितदेशे वासः संवसनम् CaturCin. iii(1). 513. 20.

**अतिसन्मण्डल** (ati-saumaṇḍala) *adj.* quite nicely rounded (i. e. well built) जङ्घादिषु धृमत्वे चातिसन्मण्डलः … तुरङ्गरत्नं भद्रवाहनो नाम AvantiKa. 89. 16.

**अतिसन्मान** (ati-sanmāna) *m.* [? अतिसंमान] great honour or respect कायं म्लेच्छः …। क चायमतिसन्मानः PadmP.(Ra.) 34. 94.

**अतिसफल** (ati-saphala) *adj.* very fruitful अहोऽतिसफलं जन्म लक्ष्मणस्य महात्मनः AdhyāRā. ii. 8. 32.

**अतिसम** (ati-sama) *adj.* 1 absolutely equal or impartial त्वं भव खमिवातिसमः सदोपशान्तः YogVā. iv(1). 61. 25; (तौ) मुनी ।…समसमेऽतिसमौ शमिनौ स्वतः YogVā. vi(1). 75. 21; 11 very level or plain अतिसमः सुविभक्तः … रमणीयश्च भूभागो यत्र तत्तथा JñāDhaṬ. 42B. 9.

**अतिसमञ्जसा** (ati-samañjasā) *adj.* (*f.*) quite proper, extremely upright धृतराष्ट्रस्य बुद्धिर्नातिसमञ्जसी (v. l. °सा) MahāBhā. i. 136. 12.

**अतिसमञ्जसी** (ati-samañjasī) *adj.* (*f.*) quite proper, extremely upright धृतराष्ट्रस्य बुद्धिर्नातिसमञ्जसी MahāBhā. i. 136. 12.

**अतिसमधिकता** (atisamadhika-tā) *f.* great abundance साधीयोधीधनर्द्धेरतिसमधिकतां सा क्रियात्सिद्धगीर्वः JinaS. 4. 4.

**अतिसमय** (ati-samaya) *m.* generally accepted principle नातिसमयं जह्यात्, न नियमं भिन्द्यात् CaraS. i. 8. 25.

**अतिसमर्घता** (atisamargha-tā) *f.* the state of being very cheap (lacking in cost) सागरदत्तः … अतिसमर्घतां गतम् … तत्केवलावन्तिसोमसहायमाहरति YaśasCam. ii. 368. 13.

**अतिसमर्थ** (ati-samartha) *adj.* 1 very powerful, all-powerful स एवास्मत्प्रभुः महाप्रतापोऽतिसमर्थश्च Hitop. 3. 15 (9); तस्मै सर्वतः प्रकाशायातिसमर्थाय विष्णवे नित्यया वेदवाचा साध्वीं स्तुतिं प्रेरय TattvPrakā. 81B. 13 (*on* ii. 1. 4); 11 virile यदा त्वनुत्पन्नपुत्रोऽविरक्तोऽतिसमर्थश्च सवर्णां न लभते ViraMi. (Saṁskāra.) 748. 11.

**अतिसमस्तार्थ** (atisamastārtha) *adj.* with meaning expressed in a long compound श्रव्यं नातिसमस्तार्थं काव्यं मधुरमिष्यते Kāvyālaṅ.(Bh.) 2. 3.

**अतिसमाकुल** (ati-samākula) *adj.* [*f.* -ā] very much disturbed or worried मेदिनी … दुष्टराजन्यसैन्यानां भारेणातिसमाकुला DeviBhāP. vii. 8. 33; ततो हिमालयस्तत्राजगामातिसमाकुलः SivaP. ii(3). 44. 40 (176B. 10)

**अतिसमानार्थत्व** (atisamānārtha-tva) *n.* the state of having exactly the same meaning, perfect synonymity विग्रहसमासयोरतिसमानार्थत्वनियमो नास्त्येव VaiyāBhū. 183. 25 (*on* 33); 185. 20 (*on* 33)

**अतिसमावृत** (ati-samāvṛta) *adj.* completely surrounded तौ तेन सैन्येन महतातिसमावृतौ । जग्मतुः SkandP. v(2). 82. 27.

**अतिसमासेवित** (ati-samāsevita) *adj.* taken in excess (तिक्तः) धातुबलयक्षयमूर्च्छाग्लानिभ्रमवातरोगपरुषत्वम् । खरविशदरौक्ष्यभावैः सोऽतिसमासेवितः कुर्यात् AṣṭāSaṁ. i. 98. 1 (1. 18)

**अतिसमाहित** (ati-samāhita) *adj.* very much self-controlled वरताश्चिरसामन्त सारतातिसमाहित । … अवसि ĪśvaS. 83.

**अतिसमीचीनत्व** (atisamīcīna-tva) *n.* great propriety or suitability एतेषु भेदेषु स्वाधीनपतिकाया अतिसमीचीनत्वात् SṛṅgāMañ.(A.) 15. 12.

**अतिसमीप** (ati-samīpa) *adj.* nearest, very close ते हि एनत् नेदिष्ठम् अतिसमीपं ब्रह्मविद्यया ब्रह्म प्राप्ताः सन्तः पस्पृशुः KenUBh. 94. 14 (*on* 4. 2); ViraMi. (Tirtha.) 104. 7; *n.* close proximity अग्नेरतिसमीपमनवहितः सन्नुपसर्पति ManvaMu. 248. 31 (*on* 7. 9)

**अतिसमीपता** (atisamīpa-tā) *f.* extreme proximity न विभावयत्यनिशमक्षिगतामपि मां भवानतिसमीपतया SiśuVa. 9. 81.

**अतिसमीपम्** (ati-samīpam) *adv.* quite closely सर्वथोच्छिष्टस्यातिसमीपं न कार्यम् BālamBha. i. 527. 13 (*on* 1. 242)

**अतिसमीपसंस्थ** (atisamīpa-saṁstha) *adj.* situated very closely, which is in a very close vicinity विदूरमवलोकयत्यतिसमीपसंस्थं पुनः … पुस्तकम् SubbhāRaK. 35. 32 = SaduktiKa. 312. 4.

**अतिसमीपस्था** (atisamīpa-sthā) *adj.* (*f.*) situated quite near मुष्टेर्नातिसमीपस्थां वामहस्तात् कनिष्ठिकाम् । दक्षिणाङ्गुष्ठपार्श्वेन दंष्ट्रावत्परिभावयेत् । … गणेश्वरस्य मुद्रैषा LakṣmīT. 34. 66.

**अतिसमीरित** (ati-samīrita) *adj.* 1 excessively blown पांशवोऽपि कुरुक्षेत्रे वायुनातिसमीरिताः PadmP. i. 27. 88; 11 fanned in excess मिथ्याभिशस्तो गार्ग्यस्तु मन्युनातिसमीरितः BrahmP. 14. 48.

**अतिसमुच्छ्रय** (ati-samucchraya) *adj.* possessing a very high position अत्यायासेन नात्मानं कुर्यादतिसमुच्छ्रयम् SūktiRa. 123. 15.

**अतिसमुच्छ्रित** (ati-samucchrita) *adj.* 1 raised to a great height, hoisted very high (a flag) (देवी) चिच्छेद च धनुः सद्यो ध्वजञ्चातिसमुच्छ्रितम् MārkP. 83. 4; यत्र ध्वजश्चातिसमुच्छ्रितः SkandP. iv. 7. 132; 11 raised to a very high position अत्यायासेन नात्मानं कुर्यादतिसमुच्छ्रितम् । पातो यथा हि दुःखाय नोच्छ्रायः सुखकृत्तथा AṣṭāSaṁ. i. 55. 4 (1. 8)

**अतिसमुज्ज्वल** (ati-samujjvala) *adj.* excessively bright or radiant अनेकशतसंख्यांश्च दीपानतिसमुज्ज्वलान् । धारयन्तो जनाः PāraS. 17. 143.

**अतिसमुत्कृष्ट** (ati-samutkṛṣṭa) *adj.* raised very high ततो हर्षसमुद्भूतो (v. l. हर्षेणातिसमुत्कृष्टो) निस्वनो दिवमस्पृशत् Rāmā. vi. 115. 26.

**अतिसमुत्क्रुष्ट** (ati-samutkruṣṭa) *adj.* very shrill ततो हर्षसमुद्भूतो (v. l. हर्षेणातिसमुत्क्रुष्टो) निस्वनो दिवमस्पृशत् Rāmā. vi. 115. 26.

**अतिसमुत्तप्त** (ati-samuttapta) *adj.* greatly heated भ्रान्तीः सप्ताधिकानां प्रविदधदरुणैरर्चिषां चक्रवालैः प्राचीराणामलक्ष्यप्रसृतिरतिसमुत्तप्तरौक्ममालयेषु MahāviC. 6. 4.

**अतिसमुद्धत** (ati-samuddhata) *adj.* 1 excessively agitated मकरतिमितिमिंगिलावृतः प्रलय इवातिसमुद्धतोऽर्णवः MatsyaP. 133. 70; 11 very insolent or proud तारकारातिरिव दैत्यबलमतिसमुद्धतं त्रैराज्यकाञ्चीपतिबलमवष्टभ्य EI. xxv. 23. 15.

**अतिसमुद्भूत** (ati-samudbhūta) *adj.* arising in excess आनन्देऽतिसमुद्भूतं रुदितं द्विविधं स्मृतम् ViṣṇuDhaP. iii. 28. 41.

**अतिसमुद्रगाम्भीर्य** (atisamudra-gāmbhīrya) *n.* depth surpassing that of the ocean अत्र प्रतापरुद्रस्य … अतिसमुद्रगाम्भीर्यम् … व्यज्यते PratāYaBhū. 71. 1.

**अतिसमृद्ध** (ati-samṛddha) *adj.* very rich, very wealthy, too prosperous तस्य प्रभूतेऽपि वित्ते परान् बन्धूनतिसमृद्धानवलोक्य पुनरर्थवृद्धिः करणीयेति मतिर्बभूव Hitopa. 2. 1(3); न तावद् अतिसमृद्धोऽपि मर्त्यधर्मा कश्चनापि कारयितुमिदमीश्वरः TilaMañ. 220. 15; अतिसमृद्धं प्रत्यधिकाम्यनुज्ञानार्थमाह CaturCin. iii(1). 1141. 16; ViśvaPra. 82. 5; सर्वोऽप्यतिसमृद्धो भवत्यायत्साध्यः कृच्छ्रसाध्यः स्वामिपदाभिलाषी वा NītiVā. 18. 46; *m.* 1 name of a *muhūrta* (i. e. division of time) आदित्ये उदयति … पञ्चपौरुष्यायां छायायामतिसमृद्धो नाम मुहूर्तो भवति Divyāva. 337. 1; 337. 19; 2 kind of womanly pride मानः … अतिसमृद्धः । यत्र विभावना वक्रवचनं प्रसुप्तमिति त्रयमप्यस्ति NāṭaLaRaK. 2403; 2416.

**अतिसमृद्धि** (ati-samṛddhi) *f.* very great prosperity करोति स्वे गेहे ध्रुवमतिसमृद्ध्योत्सवमसौ Subhāṣi. 451.

**अतिसमृद्धिमत्** (atisamṛddhi-ma(n)t) *adj.* very prosperous (धनञ्जयः) पञ्चनदमासाद्य…अतिसमृद्धिमत् । … निवासमकरोत् MahāBhā. xvi. 8. 43.

**अतिसंपतत्** (ati-sampatat) *adj.* clashing together अतिसम्पतन्तस्तीव्रं विषं विषधराः परिनिर्वपन्ति RākṣaKā. 8.

**अतिसंपद्** (ati-sampad) *f.* abundant wealth चन्द्रे लग्नेऽतिसम्पत्स्यात् VasiS. 25. 3.

**अतिसंपन्न** (ati-sampanna) *adj.* very much enriched, very well developed भावा एवातिसम्पन्नाः प्रयान्ति रसतामभी SṛṅgāTi.(Ru.) 1. 16.

**अतिसंपर्क** (ati-samparka) *m.* excessive (sexual) intercourse [MW]

**अतिसंपीडित** (ati-sampīḍita) *adj.* very much troubled अतिसम्पीडितो विप्रः शङ्करं मनसागमत् SkandP. v(3). 198. 27.

**अतिसंपुष्ट** (ati-sampuṣṭa) *adj.* extremely well-nourished दैत्यान्दृष्ट्वातिसम्पुष्टांश्चुकोप मघवा तदा DeviBhāP. iii. 12. 26.

**अतिसंपूरण** (ati-sampūraṇa) *n.* excessive filling (of the stomach) अतिस्थौल्यमतिसम्पूरणात् CaraS. i. 21. 4 (comm. अतिसंपूरणमतिभोजनम्)

**अतिसंपूर्ण** (ati-sampūrṇa) *adj.* over-loaded पोतो यथातिसम्पूर्णो मज्जत्येव महोदधौ MalliC. 7. 414.

**अतिसंप्रीता** (ati-samprītā) *adj.* (*f.*) greatly pleased ब्रह्मक्षत्रे तु सम्पृक्ते…निवसत्यतिसंप्रीता (लक्ष्मीः) AhirbuS. 16. 21.

**अतिसंप्रीति** (ati-samprīti) *f.* extreme pleasure सौमुख्यादपतिसम्प्रीतिरर्थिनां दर्शने सदा । सत्कृतिश्चानसूया च तदा श्रद्धेति कीर्त्यते CaturCin. i. 15. 1.

**अतिसंबद्ध** ( ati-sambaddha ) *adj.* I closely connected ( with one another ) नातिसम्बद्धं किञ्चित्सम्बद्धं वस्त्विच्छन्ति AbhinBhā. ii. 438. 22 ( *on* 18. 69 ); II well-united धरायामतिसम्बद्धाः खलास्ताम्राः ParamāKā. 169. 21.

**अतिसंबन्ध** ( ati-sambandha ) *m.* direct connection ( i. e. without joints ), well-joined ( मुसलम् ) मूले चान्तेऽतिसम्बन्धः पातनं पोथनं द्वयम् NītiPra. 5. 38.

**अतिसंबाध** ( ati-sambādha ) *adj.* extremely crowded अयोध्यायां राजमार्गाः ··· । बभूवुरभि( v. l. ति )सम्बाधाः Rāmā. ii. 5. 15; आस्ते तत्राति-सम्बाधो मगधाभिधमण्डलः SāliC. 2. 12.

**अतिसंभव** ( ati-sambhava ) *m.* [ Abl. ] because of excessive capacity or accomodation ( अधिकर्मे ) पञ्चाङ्गुलप्रमाणात्तु कार्यमेवातिसम्भवात् Hastyāyur. 330. 23 ( 2. 70 )

**अतिसंभावना** ( ati-sambhāvanā ) *f.* great hospitality प्रविश्य वैकुण्ठ-मिवाप निर्वृतिं तवातिसम्भावनया तु किं पुनः Nārāy. x. 87. 4.

**अतिसंभूति** ( ati-sambhūti ) *f.* extreme glory अतिसम्भूतिभव्येन स्तोत्रे-नाथ प्रजापतिः । तुष्टाव देवम् SkandP. v(i). 4. 73.

**अतिसंभृत** ( ati-sambhṛta ) *adj.* A I over-crowded, extremely saturated ततश्चिविष्टपे शून्ये मर्त्ये चैवातिसम्भृते BrahmP. 116. 5; A II too much congested नैवातिसम्भृतं कुर्यात्स्वल्पमल्पामरालयम् SamarāSū. 10. 144; B stored to an excess यत्र भाति तदङ्गेषु लावण्यमतिसंभृतम् SārṅgaPa. 3342 = Subhāṣi. 1533.

**अतिसंभृतक्रोध** ( atisambhṛta-krodha ) *adj.* whose wrath has accumulated to a high degree एवमतिसंभृतक्रोधेषु युष्मासु खिद्यते गुरुः VeṇīSam. 1. 94.

**अतिसंभृतसंभार** ( atisambhṛta-sambhāra ) *adj.* who has excessively collected ( all requisite ) materials ( of worship ) अतिसम्भृतसम्भारो मरी-चिस्तत्पुरोहितः BrahmVaiP. iv. 16. 117.

**अतिसंभोगजन्मन्** ( atisambhoga-janman ) *adj.* caused by excessive sexual intercourse अतिसम्भोगजन्मना । जगाम संक्षयं क्ष्माभृत् क्षयरोगेण RājTa.( Ka. ) 4. 398.

**अतिसंभोगजात** ( atisambhoga-jāta ) *adj.* caused by excessive sexual intercourse अतिसम्भोगजातेन धातुक्षैण्येन सोऽर्दितः RājTa.( Ka. ) 7. 698.

**अतिसंभ्रम्** ( atisam-bhram- ) I. P., IV. P. ( *caus.* ) to move or to revolve swiftly मुरमिद्रथस्य मध्येऽपि चक्रमतिसम्भ्रमयाञ्चकार BhārCam. 9. 36.

**अतिसंभ्रम** ( ati-sambhrama ) *m.* 1 A great excitement ( प्रचीरः ) आधीयमानमतिसम्भ्रमवेपमानविस्रस्तबाहुलतया बुबुधेऽन्तरायम् HarVi. 40. 59; ततान तारस्तरलोऽतिसम्भ्रमम् RāmC. 5. 48; चारैर्विलोकयामास रामस्तामति-सम्भ्रमात् SkandP. iii(2). 31. 80; स्तोतुमुत्सहते मेऽद्य मनो रामातिसम्भ्रमात् AdhyāRā. iii. 9. 30; 1 B I great haste कथमतिसंभ्रमात्पार्श्वस्थापि देवी नोपलक्षिता Ratnā. 4. 15(2); अतिसम्भ्रमभ्रमद्भ्रमरनिकुरम्ब इव ··· ( सः ) यथा-वासमयासीत् NalaCam. 2. 30(29); पतद्भिश्चातिसम्भ्रमात् । सोऽन्वगामि नृपैः TriṣaṣaPuC. ii. 4. 12; 1 B II high speed, swift motion अतिसम्भ्रमभ्रमित-पांशु° ··· विहङ्गमम् ··· आलम्ब्य युगविगमोचितं रूपम् NīlaVi. 22. 8; 2 great respect, great honour तज्ज्ञातिषु चातिसम्भ्रमः KāmSū. 244. 2 ( 4. 2 ); अयं मवद्भ्यामतिसम्भ्रमेण मयि प्रयुक्तः शिरसा प्रणामः KundaMā. 5. 11; अलमलमति-सम्भ्रमेणास्यतां वासु भद्रे PādaTā. 13. 22; अतिसम्भ्रमेण । पितरौ ··· सुरेशः स गिरानर्च SivLī. 3. 71; 3 great embarrasment प्रक्ष्वेदितं यमतिसम्भ्रमनष्टगत्या । दृष्ट्वा Rāvaṇā. 1. 17; 4 great fear राजा ··· अथातिसंभ्रमाश्चर्यखिन्नास्मृतिमुखो बभौ YogVā. iii. 105. 19 ( comm. अतिसंभ्रमेण भयेन ); *adj.* [ *f.* -ā ] greatly excited or agitated पतिमागतमाकर्ण्य पत्न्युद्धर्षातिसम्भ्रमा । निश्चक्राम BhāgP. x. 81. 25; लघवो ह्यथवा कार्ये लवावप्यतिसम्भ्रमाः YogVā. iii. 78. 22; मूर्तिमर्ददि-भूद्भीमस्वामी सोऽन्तर्मुखस्तदा । अभूच्छ्रीशारिका देवी पुरस्तस्यातिसंभ्रमा RājTa.( Jo. ) 767.

**अतिसंभ्रमम्** ( ati-sambhramam ) *adv.* with great haste कल्ये प्रस्था-नाय तामतिसम्भ्रमं लङ्घयामास VidaMā. 7. 6 ( 3 )

**अतिसंभ्रमश्रान्त** ( atisambhrama-śrānta ) *adj.* exhausted due to over-wandering or much running यत्रातिसंभ्रमश्रान्ताः सूर्यबाधाः प्रपीडिताः । विश्रामं यान्ति मध्याह्ने प्रासादशिरसि स्थिताः PadmP. vi. 4. 31.

**अतिसंभ्रमाकुल** ( atisambhramākula ) *adj.* confounded ( i. e. faltering ) due to great speed or haste यान्वीनामतिसंभ्रमाकुलपदन्यासं मरौ नीरसैः । किं किं कण्टकिभिः कृतं न तरुभिस्त्वद्वैरिवामभ्रुवाम् AlaṅkāSa. 89. 16.

**अतिसंभ्रमानन्द** ( atisambhramānanda ) *m.* joy due to great astonishment ( in the attainment of the most beloved one ) यथातिसंभ्रमानन्दे ··· । दृश्यते क्षीयते चैव रूपं सदसतोश्चलम् YogVā. v. 53. 42 ( comm. अतिसंभ्रमहेतौ अतिप्रियतमलाभादिप्रयुक्ते आनन्दे )

**अतिसंभ्रमोपसृत्वर** ( atisambhramopasṛtvara ) *adj.* approaching in great haste or flurry अतिसंभ्रमोपसृत्वरम् ··· आत्मजं जयन्तमवरुध्य NīlaVi. 17. 16.

**अतिसंभ्रान्त** ( ati-sambhrānta ) *adj.* [ *f.* -ā ] I greatly disturbed, agitated or excited एतान्यतिसंभ्रान्तविविधमृगयूथानि ··· दक्षिणां दिशमभिवर्तन्ते MahāvīC. 5. 26 ( 1 ); तच्छ्रुत्वा सा( कलिङ्गसेना )तिसंभ्रान्ता विद्धेव हृदि पत्त्रिणा KathāSaSāg. vi. 7. 203; चीभत्सुरेकतो वेगादन्यतस्तु वृकोदरः । प्रत्याशमतिसंभ्रान्तौ तोयहेतोरधावताम् PāṇḍaC. 7. 333; II extremely quick, very hasty तपिता तदा । जजागरातिसंभ्रान्तः काव्यं श्रुत्वेत्युवाच च । स्थाने त्वं सुभ्रुशब्दस्य चण्डीला-ख्यामुदाहरेः PrabhāC. 114. 13.

**अतिसंभ्रान्तचित्त** ( atisambhrānta-citta ) *adj.* whose mind is extremely excited or agitated ( नृपः ) अतिसंभ्रान्तचित्तश्च समाहूय विभीषणम् । ··· अभाषत PadmP.( Ra. ) 81. 81.

**अतिसंमत** ( ati-sammata ) *adj.* [ *f.* -ā ] very much acceptable, extremely agreeable अतिसंमता परमभीष्टतमाभिमुखी जाता महीश तव योषिदियं सुरूपा PadmP. v. 20. 17; ( विभीषणः ) शास्त्रानुगतमत्यन्तं शिष्टानामतिसंमतम् । ··· वाक्यम् ··· अब्रवीत् PadmP.( Ra. ) 55. 7.

**अतिसंमद** ( ati-sammada ) *adj.* greately delighted पुनर्जन्मोत्सवं तस्य तस्यां चक्रेऽतिसंमदः । पुनर्नृपाभिषेकं च परिवर्गो महर्द्धिभिः PadmP.( Ra. ) 24. 123; *m.* great or extreme joy मुजेऽपसर्पत्यपि दक्षिणे गुणं महेषुणादाय पुरः प्रसर्पिणे । धनुः परीरम्भमिवातिसंमदात्तवाहवे दित्सति वामवाहवे Subhāṣi. 2525.

**अतिसंमर्द** ( ati-sammarda ) *m.* extreme crowding or congestion शिवसरणसंसृष्टो मन्दं दद्यात्पदं बुधः । मनूनां चरतामग्रे देवानां च सहस्रशः ।··· संघट्टमतिसंमर्दं मार्गरोधं विचिन्तयन् SkandP. i(3). 9. 40.

**अतिसंमर्दतस्** ( atisammarda-tas ) *adv.* due to great congestion or crowding दूरे चास्तु रथाश्वमेतदखिलं यस्यातिसंमर्दतो निष्क्रामत् प्रविशच्च नागरकुलं न स्वैरमाचेष्टते PratāYaBhū. 196. 4.

**अतिसंमान्** ( ati-sammān- ) X. P. to hold in great regard, to have much respect for न ह्यतिसंमानयेत्प्रमदाम् UpadeS'. 66.

**अतिसंमानना** ( ati-sammānanā ) *f.* great honour अतिमोहनविभ्रमा तदानीं मदयन्ती खलु वारुणी निरागात् । तमसः पदवीमदास्त्वमेनामतिसंमाननया महासुरेभ्यः Nārāy. viii. 28. 9.

**अतिसंमानवत्** ( atisammāna-va(n)t ) *adj.* deserving great honour or regard अतिसंमानवद्दिष्टस्वजनो भीमोऽपि नीतिमानवद्दिष्ट YudhiVi. 6. 86.

**अतिसंमानित** ( ati-sammānita ) *adj.* greatly honoured, much respected अतिसंमानितस्तेन जामात्रा वरुणः प्रभुः BrahmP. 129. 5; कैलासं गन्तु-कामास्ते कश्यपस्याश्रमं ययुः । अतिसंमानितास्तेन पूजिताश्च यथाविधि GaṇeP. ii. 9. 4.

**अतिसंमुग्धा** ( ati-sammugdhā ) *adj.* ( *f.* ) very naive, extremely trivial अतिसंमुग्धां वाचोयुक्तिं निराकर्तुमुपन्यस्यति TantrVā. 793. 9 ( *on* iii. 2. 21 )

**अतिसंमूढ** ( ati-sammūḍha ) *adj.* much deluded शैलूषवेष्टितं सर्वं परि-गृह्य द्विजोत्तमः । वञ्चयत्नतिसंमूढान् दैत्यान् DevīBhāP. iv. 13. 62.

**अतिसम्यक्** ( ati-samyak ) *adv.* extremely well तच्चेन्नातिसम्यगवधारितं न धर्मपरिज्ञाने महती क्षतिः ManuBh. i. 51. 9 ( *on* 2. 1 )

**अतिसर** ( ati-sará ) *adj.* over-runner ( Whitney ) इम ऐन्द्रा अतिसरा आकूतिं सं नमन्तु मे AV. v. 8. 2; अति धावतातिसरा इन्द्रस्य वर्चसा हत AV. v. 8. 4; यान्सावतिसरांश्चकार कृण्वच्च यान् AV. v. 8. 7; leader, foremost, fore-runner, who gets beyond or exceeds [ APTE ]; *m.* run, start, strain [ PW, APTE ]

**अतिसरण** ( ati-saraṇa ) *n.* excessive purging सोऽतिसारोऽतिसरणादाशु-कारी स्वभावतः AṣṭāSam. i. 280. 7 ( 3. 8 ); क्रुद्धोऽनिलोऽतिसरणाय च कल्पितोऽग्निं हत्वा मलं शिथिलयन्नपि तोयधातून् RasRaSa. 14. 4; तन्द्रातीव ततस्तृषातिसरणम्··· यस्य स्यात्स हि तन्द्रिको निगदितः BhāvPra.( Bhā. ) 8 ( 1 ). 494; KośaKaTa. 2. 4985.

**अतिसरल** ( ati-sarala ) *adj.* [ *f.* -ā ] I extremely straight नतवपुर-प्यतिसरला मन्थरगमनापि नर्मदा यस्मिन् KuṭṭaMa. 192; II extremely plain or honest, KuṭṭaMa. 192; III very simple तस्यातितीव्रनियमात् ··· अतिसरल-निजमुनिव्रतपरिगतकुत्से च कूणिते कौत्से KalāVi. 1. 76.

**अतिसरलता** ( atisarala-tā ) *f.* extreme honesty, uprightness नार्जितं धनं प्रभूतं जरसि सुखदमतिसरलतया ChandaśCū. 2. 349 ( 3 )

**अतिसरलोन्नत** ( ati-saralonnata ) *adj.* I extremely straight and elevated उदारचित्तत्वत्रासावंशोऽतिसरलोन्नतः PārśvC. 1. 219; II extremely

plain and dignified, PārśvC. 1. 219.

**अतिसरस्** ( ati-saras ) *adj.* wherein there are many lakes यस्मिन्नतिसरसो जनो जनपदाश्च इति तुल्ययोगितापि संगच्छते RasGaṅ. 660. 8.

**अतिसरस** ( ati-sarasa ) *adj.* [ *f.* -ā ] i extremely charming or attractive तालफलादपि गुरुमतिसरसम् । किं विफलीकुरुषे कुचकलशम् GitGo. ix. 18. 2; ii extremely delightful or charming पुण्यतमामतिसरसां मनोऽभिरामां हरेः कथां त्यक्त्वा । श्रोतुं श्रवणद्वन्द्वं ग्राम्यं कथमादरं भवति PraboSu. 192; क्षितिपतिः ... अतिसरसान् दिवसाननैषीत् HammiMaKā. 9. 188; iii full of poetic charm or sentiments अतिसरसं पद्यं ते रचयन्ति YātrāPra. 3. 50; iv most appreciative यस्मिन्नतिसरसो जनो जनपदाश्च इति तुल्ययोगितापि संगच्छते RasGaṅ. 660. 8; [ very tasty, pw. ]

**अतिसरूप** ( ati-sarūpa ) *adj.* extremely similar or alike बिम्बानुबिम्बौ हि विहाय धातुर्न जातु दृष्टातिसरूपसृष्टिः NaiṣC. 8. 46.

**अतिसरस्वती** ( ati-sarasvatī ) *adj.* ( *f.* ) very rich in lakes नानापत्रका-(क)सा देवी पुष्टिश्चातिसरस्वती । अरिं देवीं प्रपद्येयमुपवर्त्तयतु मे धनम् MānGS. ii. 13. 6.

**अतिसर्ग** ( ati-sargá ) *m.* i granting permission अतिसर्गं ददतो मानवा॑योर्ध्वं पन्थानमनुपश्यमानाः।अंजुपन्त मरुतो यज्ञमेतं वृष्टियावानममृतं स्वर्विदम् MaiS. ii. 13. 22; तवातिसर्गाद्विवेश प्राजापत्यमिदं पदम् । मयाधितिष्ठता दत्तो दानवेभ्यो महान्वरः MahāBhā. viii. 24. 54; ते प्रहृष्टाः मधुवनं पालानाक्रम्य वीर्यतः । अतिसर्गाच्च पटवो दृष्ट्वा श्रुत्वा च मैथिलीम् । पपुः सर्वे मधु तदा Rāmā. v. 60. 6 ( 1288* comm. अभ्यनुज्ञा अङ्गदस्य ); प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च P. iii. 3. 163; अतिसर्गोऽनुमतिः KātanVṛ. *on* iv. 5. 110; तं राजा दूष्यद्रव्योपभोगातिसर्गेण दूष्ये विक्रमयेत् ArthS'ā. ii. 184. 4 (5. 1); अतिसर्गः कामचारानुज्ञा JaineVyā. ii. 3. 139 (135. 10)*; SaraKaṇṭhā. (Gr.) i. 3. 184; PrakriKau. ii. 461. 6; SiddhāKau. 475B. 11; ii bestowing, granting, great generosity वरातिसर्गं श्रुत्वैव कश्यपादुत्तमं च ते MahāBhā. i. 14. 7 ( Nilakaṇṭha दानम् ); वरातिसर्गः शतपुत्रता मम त्वयैव दत्तो ह्रियते च मे पतिः MahāBhā. iii. 281. 58; दुष्करम् ...। अतिसर्गश्च लुब्धेन ब्रह्मचर्यं च रागिणा Saund. 11. 13; त्वष्टुर्वरातिसर्गात्तु मया तस्य दुरात्मनः । अत्यारूढं रिपोः सोढं चन्दनेनेव भोगिनः RaghuVa. 10. 42; अनुग्रहार्थं स्वस्यातिसर्गो दानं विशुद्धिकम् MahāP. 20. 135; आज्ञा अतिसर्गं उपदेशश्च दिक् SaraKaṇṭhā. 294. 12; त्यागोऽतिसर्गः प्रतिपादनम् । उत्सर्जनं वितरणम् S'abdaRa. (Vā.) 250. 1; विलम्भस्त्वतिसर्गः स्यात् KośaKaTa. 2. 733; iii abandonment, surrendering स्त्रीणां दासविक्रयातिसर्गा विद्यन्ते न पुंसः Nir. 3. 4 (60. 16); स चेदाचारक्रमं दर्शयेत न विक्रेतारं तस्य द्रव्यस्यातिसर्गेण मुच्येत ArthS'ā. ii. 95. 6 (3. 16); ii. 145. 1 (4. 6); iv showing, exhibiting (enmity etc.) दुरासदं सुदुर्धर्षं बहुरत्नसमाकुलम् । महाप्राज्ञेन पुत्रार्थे निर्मितं विश्वकर्मणा । तस्य वैरातिसर्गेण बिलेऽस्मिन्वज्रदारिते Rāmā. iv. 1104*(5); v pouring out (of water) अस्तु वो विदितं यथा ... त्रिसंगमकग्रामः ... ब्रह्मदेयस्थित्या उदकातिसर्गेण निसृष्टः EI. xvi. 19. 6; मङ्कणाग्रामे ... °कुमारशर्मजरभट्टियभ्याम् ... मया ... उदकातिसर्गेण ब्रह्मदायो निसृष्टः EI. xi. 107. 22; iii. 321. 29; xvii. 107. 17; xv. 257. 18; xix. 126. 5; x. 75. 12; xi. 84. 31; श्रीशङ्करगणः सर्वानेव ... समाज्ञापयति ... अस्माभिः भूमेर्निर्वर्तनशतम् ... आहणस्वामिने ... उदकातिसर्गेणातिसृष्टम् EI. iv. 298. 23; आचन्द्रार्कार्णवक्षितिस्थितिसमकालीनं पुत्रपौत्रान्वयभोज्यमुदकातिसर्गेण प्रतिपादितम् EI. ii. 20. 1; xii. 37. 23; मया ... चतुश्चत्वारिंशते ब्राह्मणेभ्यः ... भोण्डानकग्रामः ... उदकातिसर्गेण धर्मदायो निसृष्टः EI. xi. 180. 28; vi. 298. 24; viii. 193. 46; ii. 21. 1; यथा मया ... ब्राह्मणकुमारस्वामिभ्याम् ... भक्तीशतप्रमाणक्षेत्रम् ... उदकातिसर्गेण धर्मदायो निसृष्टः EI. viii. 199. 49; v. 40. 18; i. 88. 45; xxi. 211; 58; iv. 81. 63; xxii. 119. 57; ii. 24. 10; x. 88. 47; xxii. 185. 49; xxii. 109. 55; iii. 109. 62; श्रीवल्लभनरेन्द्रदेवः कुशली सर्वान् ... समादिशति ... यथा ... मया ... परमेश्वरभट्टाय ... रत्तज्जुननामग्रामः ... स्नात्वाद्योदकातिसर्गेण प्रतिपादितः EI. vi. 246. 65; xxiii. 221. 59; xxi. 144. 50; xxii. 85. 63; vi. 32. 45; vi. 293. 66; iii. 56. 43; xxii. 75. 51; ix. 5. 14; i. 55. 42; नित्यवर्धनरेन्द्रदेवः ... सर्वानेव ... समादिशति ... यथा ... मया ... प्रभाकरभट्टाय ... उम्बरनामग्रामः: ... अद्योदकातिसर्गेण दत्तः ix. 33. 58; ix. 37. 56; xii. 264. 45; xxv. 62. 77; xxiii. 272. 14; xxii. 272. 16; xxiii. 281. 16; मया ... महिन्दारामः ... सगुलस्वामिदीक्षितस्य बलिचरुवैश्वदेवाग्निहोत्राय ... उदकातिसर्गेण ... दत्तः xiv. 151. 34; [ *adj.* everlasting, permanent, emancipated ( = मुक्त ), APTE ]

**अतिसर्जन** ( ati-sarjana ) *n.* A ( seeking or granting ) permission स्तोत्रेष्वतिसर्जनाद्या वषट्कारात् ĀśvaS'S. I. i. 12. 21; ओमुन्नेष्यामीत्यतिसर्जनम् ĀśvaS'S. I. ii. 4. 25; B giving away, consigning, bestowal, liberality विधुरां ज्वलनातिसर्जनान्ननु मां प्रापय पत्युरन्तिकम् KumāSaṁ. 4. 32; तत्तदीयविशिखातिसर्जनादस्तु वां गुरु यदृच्छयागतम् । ... प्रेम युक्तमितरेतराश्रयम् Kirātā. 13. 57; प्रार्थनार्थरहितं तदाभवद्दीयतामिति वचोऽतिसर्जने S'iśuVa. 14. 48; निस्तारकोत्तमायेह भूहेमाश्वतिसर्जनम् MahāP. 38. 38; अन्यथा साधकं हन्यात्क्रमेण रिपुतो भयात् । ... व्यसनेष्वतिसर्जनम् TantrRā. 35. 88; सद्दिष्यः प्रशस्तातिसर्जनाः श्रद्धादिदानाङ्गयुक्ताः Sāyaṇa *on* ṚV. vii. 18. 23; अतिसर्जने त्यागः KṣīraTa. *on* vi. 3; [ Kośas give the meanings विलम्भ AmaK. 2305; Vaija. 193. 19; AbhidhāCin. 1519; KalpaK. 242. 72; S'abdaRa. (Vā.) 3418; दान AnekāSa. 724; AnekāSaṁ. 5. 23; ViśvaPra. 101. 202; AnekāK. 528; NānārthāSaṁ. iii. 90. 2; MediK. 105. 229; KośaKaTa. 2. 6741; वध AnekāSa. 724; AnekāSaṁ. 5. 23; ViśvaPra. 101. 202; AnekāK. 528; NānārthāSaṁ. iii. 90. 2; MediK. 105. 229; ViśvaLoK. 222. 227; KośaKaTa. 2. 6741; S'abdaRaSaK. 208. 1; प्रदेशन KalpaK. 79. 101; deception; separation from, parting with, APTE ]

**अतिसर्पण** ( ati-sarpaṇa ) *n.* displacement (of vulnerable joints) गर्भसंक्रमणे चापि मर्मणामतिसर्पणे । तादृशीमेव लभते वेदनां मानवः पुनः MahāBhā. xiv 17. 19; [ violent motion or movement (of the child in the womb), PW, APTE ]

**अतिसर्पिता** ( ati-sarpitā ) *adj.* ( *f.* ) drawn out or ejected excessively जिह्वामतिसर्पितां कटुकलवणचूर्णप्रघृष्टाम् ... वान्तः पीडयेत् SuśruS. iv. 34. 12.

**अतिसर्व** ( ati-sarva ) *adj.* transcending or excelling all, above all, supreme अतिसर्वेण हास्य परस्मै कृतं भवति AitBr. 37. 3 (911); अतिसर्वाय देहि MahāBh. i. 87. 9 (*on* i. 1. 27); अतिक्रान्तः सर्वमतिसर्वस्तस्मै अतिसर्वाय JaineVyā. 9. 9 (*on* i. 1. 35); ( शूर्पणखा ) वाक्त्वचेनातिसर्वेण चन्द्रलेखेव पक्षतौ ( पतीयन्ती रघूत्तमं प्रार्थयाञ्चक्रे ) Bhaṭṭi. 4. 16; अतिक्रान्तः सर्वमतिसर्वः । तस्मा अतिसर्वाय देहीति Nyās. i. 75. 1 (*on* i. 1. 27) = PadMañ. *on* KāśiVṛ. *on* P. i. 1. 27; तुभ्यं नमोऽतिसर्वाय सर्वाभ्यन्तरवर्तिने KathāSaSāg. ix. 4. 31; भवादृक्षीदृगेतस्मिन्नतिसर्वे यदीर्ष्यसि ( राजन् ) DvyāśraKā. 1. 149; अतिसर्वाय ... कालेन पूर्वाय जगतो नमः MugdhaBo. 3. 38 (14. 23); तत्तदन्तस्य भवन्ती परमसर्वादिवद् अतिसर्वादेरपि स्यात् PadMañ. *on* KāśiVṛ. *on* P. i. 1. 27; अतिक्रान्तः सर्वमतिसर्वः तस्मै अतिसर्वाय देहि PrakriKau. i. 140. 4 = SiddhāKau. 52B. 2.

**अतिसर्वंसह** ( ati-sarvaṁsaha ) *adj.* extremely enduring all शूरोऽतिसर्वंसहो यौधो नाम ... प्राप्तो दशां पञ्चमीम् MātaLī. 5. 15.

**अतिसर्वकालम्** ( ati-sarvakālam ) *adv.* for all the time, for ever, always मही भात्यतिसर्वकालम् VarāṅgaC. 7. 5; विद्याधरेन्द्रनगरादतिसर्वकालं तद्दर्शनाय करवाणि गतागतानि PṛthvīVi. 4. 66 ( comm. अतिसर्वकालं जातु जातु )

**अतिसर्वतोमुख** ( ati-sarvatomukha ) *adj.* superior to *sarvatomukha* (facing in all directions, turned everywhere (i. e. the wind)) स एतत्सर्वं निरूह्य ... अतिसर्वतोमुखः ... भूत्वा स्वे महिम्नि सदा समास्ते ( ? स्ते ) NṛsiṁhoTāU. 7.

**अतिसर्वसुखावह** ( ati-sarvasukhāvaha ) *adj.* giving all the pleasures in excess कथितमावृतिसप्तकमच्युतार्चण(? न)विधयातिसर्व्व(? र्व)सुखावहम् PañcaRā. (Nā.) iii. 8. 5.

**अतिसर्वानवद्याङ्गी** ( ati-sarvānavadyāṅgī ) *adj.* ( *f.* ) exceedingly faultless in every limb अतिसर्वानवद्याङ्गीम् ... सुदेष्णा पर्यपृच्छत् MahāBhā. iv. App. I. 6. 31.

**अतिसर्वापुत्र** ( atisarvā-putra ) *m.* son of her who surpasses all अतिसर्वापुत्र इत्यादौ च न ( सर्वनामत्वं दृष्टम् ) LaS'abdS'e. ii. 101. 3.

**अतिसविधम्** ( ati-savidham ) *adv.* in close proximity अतिसविधमुपागतेषु हंसोऽव( ? °वद )दिति तत्र कनिष्ठमात्मबन्धुम् PrabhāC. 67. 26.

**अतिसविधसंचरत्** ( atisavidha-sañcarat ) *adj.* moving very near or close by अतिसविधसंचरत्सुरसुन्दरीकरचापलविलुप्तकेतुकाण्डचिन्हैः ... चैत्यालयैः ... उपशोभितं राजपुरं नाम नगरम् YaśasCam. i. 18. 3.

**अतिसविधसैन्य** ( atisavidha-sainya ) *n.* army which is very near or close by ततोऽतिसविधसैन्यसमालोकनोत्तालविलासिनीसंकुलसौधशृङ्गम् ... पुरमवलोक्य YaśasCam. i. 341. 1.

**अतिसस्नेहम्** ( ati-sasneham ) *adv.* with great affection प्रभुञ्जानोऽतिसस्नेहं कदाचित्स्पृशते द्विजः AtriS. 293.

**अतिसस्पृहा** ( ati-saspṛhā ) *adj.* ( *f.* ) full of intense desire अङ्कारोपितबालासु वानरीष्वतिसस्पृहाम् । धारिणीनृपभद्रत्तः ... गिरिमारोपयामास PariPar. 2. 32.

**अतिसह्** ( ati-sah- ) I. Ā. to overcome अति॒ नि॒हो अति॒ स्रिधोऽत्यचि॑त्ति॒मत्य॑रातिमग्ने । विश्वा॒ ह्य॑ग्ने दुरि॒ता सह॑स्व TaiS. IV. i. 7. 3 = VājaS. 27. 6 = VājaS. (K.) xxix. 1. 6.

**अतिसह** ( ati-saha ) *adj.* very powerful, extremely overpowering or overcoming अयं महात्मा ... समाहितश्चातिसहश्च संयुगे Rāmā. v. 45. 27.

**अतिसहनवत्** ( atisahana-va(n)t ) *adj.* possessed of great forbea-

**अतीतकालावस्था** (atītakālāvasthā) *f.* existence in the previous time (i. e. period) एकदा च राजा ... तैजसं सूर्या पावनं चरितैः आप्यं पुण्यैः पार्थिवमतीतकालावस्थया विद्याधरमुनिमपश्यत् TilaMañ. 25. 8.

**अतीतकालीन** (atīta-kālīna) *adj.* belonging to the past time न च वाच्यं कर्मविरोधाभाववदयमपि विरोधः परिहर्तव्य इति । अतीतदेवताप्रवाहे प्रमाणसद्भावेनातीतकालीनविरोधस्यैव परिहर्तुं शक्यत्वात् TattvPrakā. 56A. 5 (*on* i. 3. 28)

**अतीतकालीनाध्ययन** (atītakālīnādhyayana) *n.* study (carried out) in the past अतीतकालीनाध्ययनपक्षीकारे चांशतः सिद्धसाधनत्वात् TattvPradī. (Ci.) 157. 4.

**अतीतकालोद्भावन** (atītakālodbhāvana) *n.* suggesting the fallacy in which the subject is proved to be devoid of the probandum (the proper time for which is over) तदिदं सदुत्तरप्रकरणसमातीतकालोद्भावनाभ्यामतिव्याप्तेः TārkiRa. 248. 2.

**अतीतकुलकोटि** (atītakula-koṭi) *f.* crore(s) of families (generations) in the past अतीतकुलकोटीनां सप्तद्वीपनिवासिनाम् । आब्रह्मभुवनाल्लोकादिदमस्तु तिलोदकम् VāyuP. ii. 48. 22=SkandP. iv. 35. 183.

**अतीतकुलसप्तक** (atītakula-saptaka) *n.* group of seven preceding generations (सुधीः) भोगान्ते च व्रजेन्मोक्षमतीतकुलसप्तकैः SkandP. ii(4). 33. 63.

**अतीतकृत** (atīta-kṛta) *adj.* laid down or stated heretofore यदतीतकृतविविधलक्ष्मयुतैर्मात्रालमादिपादैः कलितम् । ... पादाकुलकम् VṛttaRa. 2. 37.

**अतीतकृत्य** (atīta-kṛtya) *n.* action (carried out) in the past 'दण्डी भुङ्क्ते, भाविकृत्यमासीत्' इत्यादौ गत्यभावात् ... द्वितीयेऽतीतकृत्यमासीदित्यन्वयासंभवात् GuruCandr. ii. 19. 16.

**अतीतकृत्स्नाधिकरण** (atīta-kṛtsnādhikaraṇa) *n.* all the sections completed heretofore अन्याधिकरणस्यातीतकृत्स्नाधिकरणन्यायातिदेशरूपस्य विशिष्य नैतस्मिन्पादे सङ्गत्यपेक्षा इति च वक्ष्यामः SīvārkaMaDī. i. 518. 18 (*on* i. 4. 7)

**अतीतक्रिय** (atīta-kriya) *adj.* who has completed the action सर्वत्रैव ... प्रवृत्तक्रिय एवाततायी नत्वतीतक्रियो भाविक्रियो वेति सिद्धान्तमाहुः DaṇḍaVi. 235. 13; कर्तृकर्मणोरन्वये चातीतक्रिये कर्तरि पचतीत्यापत्तेः VaiyāBhū. 21. 22 (*on* 2)

**अतीतक्रोधसंताप** (atīta-krodhasantāpa) *adj.* who has overcome anger and distress तस्मात्सत्याश्रया विप्राः ... । अतीतक्रोधसंतापा नियता धर्मसेतवः MahāBhā. xiv. 35. 25.

**अतीतक्षणविषय** (atītakṣaṇa-viṣaya) *m.* object of the past moment एवं पूर्वज्ञानविशेषितस्य स्तम्भादेर्विशेषणमतीतक्षणविषय इति मानसी प्रत्यभिज्ञा NyāyMañ. ii. 33. 16.

**अतीतक्षणानन्त्य** (atītakṣaṇānantya) *n.* infinity of the past moments अतीतक्षणानन्त्यमस्मिन्कल्प इव पूर्वकल्पेऽप्यस्ति SīvārkaMaDī. i. 159. 26 (*on* i. 1. 3)

**अतीतक्षणालम्बन** (atītakṣaṇālambana) *adj.* having the past moment as object तेहि ... स्तन्त्यमानेषु भावेष्वतीतक्षणालम्बनमेव ज्ञानमाश्रिताः Kāśi. ii. 160. 11 (*on* 5(3). 164)

**अतीतगमना** (atīta-gamanā) *f.* one of the thousand names of Rādhikā अतीतगमना गौरी परानुग्रहकारिणी ... इति राधिकानामसहस्रम् PañcaRā.(Nā.) v. 5. 56.

**अतीतगुणा** (atīta-guṇā) *f.* one of the thousand names of Rādhikā मद्रकल्पद्रुमातीता तथातीतगुणा ... इति राधिकानामसहस्रकम् PañcaRā.(Nā.) v. 5. 44.

**अतीतगोचरा** (atīta-gocarā) *adj.* (*f.*) beyond the reach or range of यातीतगोचरा वाचां मनसां चाविशेषणा । ... तां वन्दे स्वेश्वरीं पराम् ViṣṇuP. i. 19. 77.

**अतीतगोत्रज** (atīta-gotraja) *adj.* who is outside the kinsmen belonging to a particular *gotra* पितृवंशे मृता ये च मातृवंशे तथैव च । अतीतगोत्रजास्तेभ्यः पिण्डोऽयमुपतिष्ठतु SkandP. iii(2). 29. 66.

**अतीतग्रन्थोक्त** (atītagranthokta) *adj.* stated in the previous part of the book एवमतीतग्रन्थोक्तन्यायेन ... नेदे निश्चितेऽपि NyāySu.(Ja.) 435B. 11 (*on* ii. 3. 14)

**अतीतग्रह** (atīta-graha) *m.* start of the Tāla (beat) before (the beginning of the song) ततोऽतीतग्रहे शम्यातालौ द्वादश ताः कलाः SaṃgīRa. iii. 268. 2 (6. 189) (comm. ततोऽतीतग्रह इति तत एकादशीद्वादश्योः कलयोः शम्यातालौ योजयेत् । अतीतग्रह इति । गीतादेः पूर्वमेव तालस्य किंचिन्निवृत्तावित्यर्थः । एवं द्वादश कलाः प्रयुज्य, अनन्तरम्)

**अतीतग्राहित्व** (atītagrāhi-tva) *n.* the state of being the cogniser of the past नन्वतीतग्राहित्वादस्मरणप्रामाण्यं कल्पयितुं युक्तमस्या बुद्धेरिन्द्रियस्यातीतेऽपि सामर्थ्यमदृष्टमिति NyāyMañ. ii. 33. 4.

**अतीतघटादि** (atīta-ghaṭādi) *adj.* jar etc. belonging to the past time नापि ज्ञानत्वे न ज्ञाननिवर्त्यत्वमिति तृतीयः । अतीतघटादावव्याप्तेः Nyāyāmṛ. 39A. 8; ब्रह्मज्ञानप्रयुक्त एव स इति नातीतघटादावव्याप्तिः AdvaiSi. 162. 1; या अतीतघटादौ ज्ञाननाश्यत्वलक्षणस्याव्याप्तिः सा ज्ञानप्रयुक्तेत्यादिकरणान्नेत्यर्थः LaCandr. 162. 26.

**अतीतचतुर्विंशति** (atīta-caturviṃśati) *f.* twenty-four past (Tīrthaṅkaras) पापामठे अतीतचतुर्विंशतिमध्यात् अष्टौ पुण्यनिधयः TīrthaKa. 85. 8.

**अतीतचतुर्विंशतिका** (atīta-caturviṃśatikā) *f.* the period in which the 24 past Tīrthaṅkaras lived भारते क्षेत्रेऽतीतचतुर्विंशतिकायां तृतीयतीर्थंकरसागरसमये उज्जयिन्यां नरवाहनो नृपः PurāPraSaṃ. 97. 10; अतीतचतुर्विंशतिकायां नमीश्वराद्यानामष्टजिनानां कल्याणकत्रयमभूत् KumāPraPra. 105. 25.

**अतीतचरित** (atīta-carita) *adj.* (one) whose age of achievements is over अतीतचरिते वृद्धे विपुलं वक्तुमुद्यते । हसन्ति यदि नो बालास्तदिदं श्रूयते मम RāmāMañ. 225. 1.

**अतीतचाक्षुष** (atīta-cākṣuṣa) *n.* past visual perception चैत्रादेरतीतचाक्षुषस्य घटादिविषयकत्वेऽपि समयविशेषे चैत्रो घटं न पश्यति इति प्रयोगात् VyutpaVā. 134. 5.

**अतीतजन्मकृत** (atītajanma-kṛta) *adj.* committed in the past birth(s) न तु ... अतीतजन्मकृतानां च दाहः युक्तः (कर्मणाम्) GītāBh.(Śaṅ.) 396. 17 (*on* 13. 23); अतीतं अतीतजन्मकृतम् (पापम्) ViraMi. (Tīrtha.) 161. 18.

**अतीतजन्मन्** (atīta-janman) *n.* past birth मर्त्येषु जन्मलाभश्च स्मृतिश्चातीतजन्मनां । आवयोरन्तिकं गत्वा बदरीभूतयोस्तत: PadmP. vi. 174. 35.

**अतीतजन्मसूचिका** (atītajanma-sūcikā) *adj.* (*f.*) suggestive of the previous birth अनूकम् अतीतजन्मसूचिका आकृतिः ViraMi. (Lakṣaṇa.) 24. 2.

**अतीतजन्मस्मरण** (atītajanma-smaraṇa) *n.* remembrance of past birth(s) योगी प्राप्नोति ... अतीतजन्मस्मरणं च दीर्घम् Saund. 16. 2.

**अतीतजन्मानुभूत** (atītajanmānubhūta) *adj.* experienced in the past births अतीतजन्मानुभूतपदार्थस्मरणमपि तस्य भवेत् NyāyMañ. ii. 39. 18.

**अतीतजन्मान्तरकृत** (atītajanmāntarakṛta) *adj.* committed in the other births of the past (कर्माणि) अतीतजन्मान्तरकृतानि वा अप्रवृत्तफलानि ज्ञानेन दह्यन्ते ChāndoUBh. 403. 2-3 (*on* vi. 14. 2)

**अतीतजन्मान्तरानुभूत** (atītajanmāntarānubhūta) *adj.* experienced in the other births in the past अतीतजन्मान्तरानुभूतस्तन्यपानदुःखानुभवस्मृतिर्गम्यते ChāndoUBh. 393. 12-13 (*on* vi. 11. 3)

**अतीतजन्मोपार्जित** (atītajanmopārjita) *adj.* accomplished in the past birth(s) हरिवाहनः ... अतीतजन्मोपार्जितेन पुण्यानुबन्धिना प्राज्यपुण्यसंभारेण पुञ्जितं पालयन्नेकातपत्रं राज्यम् ... तिलकमञ्जर्यां कलत्रिणमात्मानममन्यत TilaMañ. 427. 12.

**अतीतज्ञ** (atīta-jña) *adj.* who has knowledge of the past पृथ्वीन् ... पृथोर्भार्यामित्यतीतज्ञा जानन्ति ManvaMu. 371. 26 (*on* 9. 44)

**अतीतज्ञान** (atīta-jñāna) *n.* past cognition कथम् प्रतिपिण्डम् ... संस्कारादतीतज्ञानप्रबन्धप्रत्यवेक्षणाद् यदनुगतमस्ति तत्सामान्यमिति PadārthaSaṃ. 311. 19.

**अतीतज्योतिस्** (atīta-jyotis) *adj.* which is without a flame गुरूपदेशश्च नाम पुरुषाणाम् ...अतीतज्योतिरालोकः Kād. 103. 23.

**अतीततत्ता** (atīta-tattā) *f.* the state of being that namely a past fact घटो नष्ट इत्यादाविवातीततत्तारूपस्वार्थत्यागात् Nyāyāmṛ. 472A. 6; इन्द्रियाणामतीततत्तांशे सामर्थ्याभावात् SīvārkaMaDī. ii. 89. 26 (*on* ii. 2. 24)

**अतीतता** (atīta-tā) *f.* the state of being past प्रत्यक्षविज्ञानम् ... स्मृतिवदतीततया चावभासेत TātpaṬ.(U.) 278. 10 (*on* 5(4). 160); अतीततयानागततया च तावत्यवापि विवेते (पदार्थौ) ĀtmaSi. 62. 4; यद्यप्येकस्य महतः संयोगोऽतीततामापन्नस्तथापि TattvVai. 92. 13 (*on* 2. 22); याश्चातीततयानागततया च स्वसंवेद्यं गृह्णन्ति (संविदः) SatDū. 216. 30; Aparā. 1005. 1 (*on* 3. 148); दण्डस्यातीततया विशेषणत्वासंभवान्मतुबाद्यनुपपत्तिः VyutpaVā. 167. 14.

**अतीततादशा** (atītatā-daśā) *f.* the state of being past (शब्दस्य) अतीततादशायां चातीतेदनेच्छाविरहेणेष्टसाधनत्वाभावात् TattvCin. iv(2). 108. 2; तस्यातीततादशायाम् ... अप्युक्ताज्ञाननिवर्तकत्वस्याव्याप्यत्वात् GuruCandr. i. 143. 20; सत्ताभावकाले अतीततादशारूपे दण्डादेः कारणत्वादसत् कारणम् LaCandr. 446. 41.

**अतीतताभाज्** (atītatā-bhāj) *adj.* reaching the past stage अतीतभाक्

अतीततांभाक्‌ GuruCandr. ii. 402. 16.

**अतीततारक** ( atīta-tāraka ) *adj.* which has crossed the (region of) stars सानुमानयमतीततारकः Yādavā. 6. 106.

**अतीततारापथ** ( atīta-tārāpatha ) *adj.* which has crossed the path of the stars अतीततारापथैः ··· शबरवृन्दानि ··· शिखरैर्धारयन्तम्‌ ( पर्वतम्‌ ) Tila-Mañ. 239. 21.

**अतीततारूपत्व** ( atītatārūpa-tva ) *n.* the state of having the form of pastness वर्तमाननाशप्रतियोगी यो नाशस्तत्प्रतियोगित्वस्याप्यतीततारूपत्वात्‌ GuruCandr. ii. 190. 2; ii. 190. 15.

**अतीततालक्षण** ( atītatā-lakṣaṇa ) *n.* characteristic of being a past thing वर्धमानको वर्तमानतालक्षणं हित्वातीततालक्षणमापद्यते SyādvāMañ. 5(80)

**अतीततीर्थनायक** ( atīta-tīrthanāyaka ) *m.* previous or past Tīrthaṅkara शेषानतीततीर्थनायकान्‌ ··· प्रणमामि TattvPradī.(A.) 4. 11 (*on* 1. 2)

**अतीततृप्ति** ( atīta-tṛpti ) *f.* past satisfaction ( भोजने ) अतीततृप्ताविच्छा नास्ति TattvCin. iv(2). 167. 1.

**अतीततृष्णा** ( atīta-tṛṣṇā ) *f.* past desire अतीततृष्णादाविच्छाविरहात्‌ TattvCin. iv(2). 170. 3.

**अतीतत्रिवार्धायुस्‌** ( atīta-trivārdhyāyus ) *adj.* who has passed three *vārdhi* years of his life तत्रातीतत्रिवार्ध्यायुर्विजयेऽत्र पुरेऽत्र च SamarāSam. 3. 132.

**अतीतत्रैगुण्या** ( atīta-traiguṇyā ) *adj.* ( *f.* ) who is beyond the three *guṇas* अतीतत्रैगुण्यामशरणशरण्यां भगवतीमहं तामालम्बे NīlaVi. 94. 6.

**अतीतत्व** ( atīta-tva ) *n.* **i** the state of being beyond (the sphere of objects) सर्वभावेष्वतीतत्वात्‌ सर्वेषाम्‌ ··· योजयेत्‌ PauṣkS. 6. 72; प्राङ्स्तु धर्माच्चातीतत्वात्‌ अन्यत्र धर्मादिति प्रश्नमर्हति BrahmSūBh.(S'aṅ.) 237. 6 (*on* i. 4. 6); **ii** the state of being past प्रत्यक्षबुद्धीनां नातीतो विषयो भवेत्‌। अतीतत्वात्‌ S'lokaVār. 5(3). 162 (313. 1); न तावत्क्रमोत्पन्नयोर्विज्ञानयोर्मेयमानत्वेन ग्राह्यग्राहकभावः उपरितनज्ञानकाले पूर्वस्यातीतत्वात्‌ TātpaṬ.(U.) 275. 15 (*on* 5(4). 149); न हि प्रत्यक्षविज्ञानादतीतत्वं समीक्ष्यते BṛĀraUBhVā. i. 4. 302; i. 4. 1530; जन्यज्ञानसमये जनकस्यार्थक्षणस्यातीतत्वात्‌ कथमर्थस्य प्रत्यक्षग्राह्यता PrakaPañ. 139. 3; NyāyKa. 257. 14; अनुमानादिषु प्रमेयस्यातीतत्वादिना तद्दत्ताविरहात्‌ TātpaṬ.(Vā.) 25. 6 (*on* i. 1. 1); NyāyKuA. ii(2). 19. 1; NyāyVārPari. 618. 5; NyāyRa. 283. 22 (*on* 5(3). 51); Bhām. 443. 19 (*on* ii. 2. 28); KāvyPra. 171. 4; Kiraṇā. 9. 5; अकार्योत्‌ पटमित्यादौ धर्म्यवस्थानेऽपि फलसिद्धौ तदुत्पादानुगुणव्यापारप्रध्वंसस्थितिरतीतत्वम्‌ Kiraṇā. 121. 10; नष्टो घट इत्यादौ धर्मिस्वरूपनिवृत्तिरेव अतीतत्वम्‌ Kiraṇā. 121. 11; वर्तमाना अतीतत्वं भाविनो वर्तमानताम्‌। पदार्थाः प्रतिपद्यन्ते TrisaS'aPuC. iv. 4. 277; SmṛtiCan. iv. 512. 3; CaturCin. i. 73. 1; S'rutaPra. iA. 138. 26; NyāyKu. 78. 10; SyādvāMañ. 16(130); Ekāva. iii. 1. 68 (94. 2); NyāyPari. 377. 18; अतीतत्वं नाम वर्तमानकालव्यावृत्तभूतकालयोगित्वम्‌ VivaPraSam. 103. 3; NyāySu.(Ja.) 495B. 10 (*on* iii. 2. 1); Upask. 392. 10 (*on* ix. 2. 1); वर्तमानत्वेन हि गृहीतोऽर्थः स्मृतावतीतत्वेन भासते SarvaDaKau. 51. 23; स्मर्यमाणसुखस्यातीतत्वेन स्मृतिरूपान्तःकरणवृत्तेः वर्तमानत्वेन भेदात्‌ VedāntPari. 49. 5; लुङोऽर्थः उत्पत्तिभूतत्वं च। भूतत्वमतीतत्वम्‌ Tarkāmṛ. 22. 11; BhāṭṭDi. ii. 174. 7 (*on* v. 1. 16); अतीतत्वं वर्तमानध्वंसप्रतियोगित्वम्‌ VyutpaVā. 205. 26; LaCandr. 6. 2; अतीतानामतीतत्वादेव नाशासंभवात्‌ BhāṭṭCin. i. 53. 16 (*on* i. 1. 4)

**अतीतत्वधी** ( atītatva-dhī ) *f.* knowledge of pastness घटप्रागभावेऽतीतत्वधीः GuruCandr. ii. 190. 3.

**अतीतत्वप्रतीति** ( atītatva-pratīti ) *f.* perception of pastness अज्ञासिषमित्यतीतत्वप्रतीतिः S'rutaPra. iA. 145. 25 (*on* i. 1. 1)

**अतीतत्वबोधक** ( atītatva-bodhaka ) *adj.* expressing pastness कृतोपवास इति अतीतत्वबोधकनिष्ठया उपवासपरदिने गणेशपूजादिकं कुर्यादित्यर्थो लभ्यते ViraMi.(Tīrtha.) 24. 8.

**अतीतत्वमात्र** ( atītatva-mātra ) *n.* merely being past न च तत्ताया अतीतत्वमात्रेण तत्पदस्य लक्षणा NyāyāMṛ. 472A. 5.

**अतीतत्ववर्तमानत्वविरोध** ( atītatvavartamānatva-virodha ) *m.* contradiction between the past and present states एकस्य कालद्वयासम्बन्धे चदतोऽतीतत्ववर्तमानत्वविरोधो विवक्षितः S'rutaPra. iB. 211. 14 (*on* i. 1. 13)

**अतीतत्वविशेषित** ( atītatva-viśeṣita ) *adj.* characterised by pastness प्रत्यक्षं मानसं चैव यदातीतार्थगोचरम्‌। तदा स्मृतिप्रमाणत्वमतीतत्वविशेषितम्‌ AnuVyā. 41A. 9 (*on* 3. 2); यदा यस्मादतीतत्वविशेषितमर्थं स्मृतिर्विषयीकरोति NyāySu.(Ja.) 495B. 4 (*on* iii. 2. 1)

**अतीतत्वसामान्य** ( atītatva-sāmānya ) *n.* pastness in general अनन्तरातीतः पक्षः अतीतत्वसामान्यं च हेतुरिति NyāyRa. 313. 10 (*on* 5(3). 162)

**अतीतत्वाकार** ( atītatvākāra ) *m.* form of a past event यदा 'वृष्टिरासीत्‌' इत्यनुमीयते तदा वृष्टिरतीतत्वाकारेण वर्तते VivaPraSam. 102. 11; अतीतत्वाकारो यद्यपि न गृहीतस्तथापि स्मृतित्वाभाव्यात्तथा भास इति स्मृतिर्यथार्थैवेति SarvaDaKau. 51. 27.

**अतीतत्वादि** ( atītatvādi ) *adj.* the state of being a past event etc. तेन नातीतत्वादिसंदेहः क्षतिमावहति TālpaṬ.(Vā.) 175. 23 (*on* i. 1. 5); पदेषु अतीतत्वादि चोच्चारणक्रियानाशादिना नष्टत्वम्‌ VaiyāSiMañ. 150. 5; गुणादौ नात्मनः संयोगः। द्रव्येऽपि तस्यातीतत्वादिकाले उत्पत्तिकाले वा न सः LaCandr. 453. 6; अतीतत्वादिदशायामपि शुक्तिरूप्यादौ नाभानापादकाज्ञानविषयतावच्छेदकत्वं साक्ष्यसंबन्धादेव LaCandr. 289. 5; GuruCandr. i. 144. 7.

**अतीतत्वानुपपत्ति** ( atītatvānupapatti ) *f.* unreasonableness of pastness असतोऽतीतादेः तत्त्वतः संक्रमायोगात्‌ सत्त्वे वातीतत्वानुपपत्तेः PramāMī. 16. 15.

**अतीतत्वानुविद्ध** ( atītatvānuviddha ) *adj.* mixed with (i. e. characterised by) pastness अतीतत्वानुविद्धो हि स्मृत्या ग्राह्योऽनुभूयते S'lokaVār. 5. 159 (312. 4); Kāśi. ii. 158. 20 (*on* 5. 160); स्मृतिवदेव तु शक्यर्पणद्वारेण ज्ञायमानमतीतत्वानुविद्धमेव पूर्वं गृह्येत NyāyRa. 312. 16 (*on* 5(3). 160); यदुक्तं भवतातीतत्वानुविद्धस्मृत्यानुभूयते इति तन्न, स्वप्ने प्रत्युत्पन्ननिर्भासात्‌ Kāśi. ii. 159. 8 (*on* 5. 160)

**अतीतदर्शन** ( atīta-darśana ) *adj.* gone out of sight (i. e. dead) सुहृदः समागताः···शयने न्यवेशयन्निरीक्ष्य राजानमतीतदर्शनम्‌ Rāmā. ii. 1548*(8)

**अतीतदर्शा** ( atīta-darśā ) *adj.* ( *f.* ) which has crossed the new-moon day अतीतदर्शामिव चन्द्रलेखाम्‌ ··· अमंस्त ··· यूरकुलेश्वरस्ताम्‌ Yādavā. 13. 33.

**अतीतदशाह** ( atīta-daśāha ) *adj.* ten days old देशान्तरस्थपदेनातीतदशाहसपिण्डमरणश्रवणे एकाहाशौचिनां सद्यः शौचमुक्तम्‌ HārLa. 33. 12; Manva. Vi. 655. 17 (*on* 5. 99)

**अतीतदिन** ( atīta-dina ) *n.* yesterday सोऽप्यूचे यत्‌ त्वयातीतदिने मे कथितं पुरः PārśvC. 3. 530.

**अतीतदिवस** ( atīta-divasa ) *m.* earlier day अतीतदिवसे वृत्तं प्रशंसन्ति न वा पुनः MahāBhā. xii. 216*(1); PañcT. (v. 1.) 3. 45(2) (298. 33)

**अतीतदुःख** ( atīta-duḥkha ) *adj.* who has overcome grief, free from grief यस्यां ( वाराणस्याम्‌ ) मृताः कीटपतङ्गभृङ्गाः ··· गच्छन्ति कैलासमतीतदुःखाः PadmP. iv. 17. 75; *n.* misery which is over or past ननु नासौ पुरुषार्थः अतीतदुःखध्वंसस्य सिद्धत्वात्‌ अनागतदुःखस्य ध्वंसयितुमशक्यत्वात्‌ TattvCin. ii(2). 156. 11; दुःखनिवृत्तिर्न पुरुषार्थः ··· अतीतदुःखस्यातीतत्वात्‌ Upask. 14. 6 (*on* i. 1. 4); तदपि न शोभनम्‌। तत्रातीतदुःखस्य स्वत एव निवृत्तत्वेनासाध्यत्वात्‌ SarvaDaKau. 135. 8.

**अतीतदेवताप्रवाह** ( atīta-devatāpravāha ) *m.* series of past deities न तेषां वेदविद्याधिकारः ··· अतीतदेवताप्रवाहे प्रमाणसद्भावेनातीतकालीनविरोधस्यैव परिहर्तुं शक्यत्वात्‌ TattvPrakā. 56A. 5 (*on* i. 3. 28)

**अतीतदोष** ( atīta-doṣa ) *adj.* free from faults अनन्तविज्ञानमतीतदोषम्‌ ··· जिनमाप्तमुख्यं स्वयंभुवं स्तोतुमहं यतिष्ये MahāvīSt. 1 (H.) 1; अतीतदोषमित्यनेनापायदशसंक्षया भिधानादपायापगमातिशयः SyādvāMañ. 1( 37 ) ; 1( 43 ) ; 1 (126)

**अतीतदोषता** ( atītadoṣa-tā ) *f.* faultlessness अतीतदोषता चोपशान्तमोहगुणस्थानवर्तिनामपि संभवतीत्यतः ···जिनमिति विशेषणम्‌ SyādvāMañ. 1(88); 1(127)

**अतीतद्वैतभानतस्‌** ( atītadvaitabhāna-tas ) *adv.* due to the disappearance of the cognition of duality अथतोऽप्यद्वयानन्दानतीतद्वैतभानतः। गुरुमाराध्य वेदान्तसारं वक्ष्ये VedāntSā.(Sa.) 1. 4.

**अतीतधर्म** ( atīta-dharma ) *m.* past attribute न चानुभवानन्तरं यदा ज्ञानान्तरेणातीतधर्मवैशिष्ट्यभानं तदा स्मृतौ तत्तोल्लेखः TattvCin. i. 841. 16.

**अतीतधिष्ण्य** ( atīta-dhiṣṇya ) *n.* past asterism प्रोच्यन्ते लिप्तिका भानां स्वभोगोऽथ दशाहतः। भवन्त्यतीतधिष्ण्यानां भोगलिप्तायुता ध्रुवाः SūrySi. 8. 1.

**अतीतनक्षत्रपथ** ( atīta-nakṣatrapatha ) *adj.* which has over-reached the path of the stars (i. e. the sky) वधूजनश्चन्द्रमधश्चकार अतीतनक्षत्रपथानि यत्र प्रासादशृङ्गाणि वृथाध्यरुक्षत्‌ S'iśuVa. 3. 52.

**अतीतनिमित्तभाव** ( atīta-nimittabhāva ) *adj.* forecast of the past event अनागतातीतनिमित्तभावैर्वशीकृतः सूरवरैः स साहिः। भक्तिं विधत्ते Kālakā-Ka. 26.

**अतीतनिषेध** ( atīta-niṣedha ) *m.* negation of a past event अशेषनूनाशस्तु नैव क्वचिद्‌ दृष्ट इत्यतीतनिषेधः NyāySu.(Ja.) 287B. 4 (*on* ii. 1. 4)

**अतीतनु** ( atīta-nu ) *adj.* gone out of a ship, landed from a ship त्रिष्वतीतनु यन्नावमतिक्रान्तं भवेदिह KośaKaTa. 1. 2354.

**अतीतनौक** ( atīta-nauka ) *adj.* gone out of a ship, landed from a ship अर्धनावं तु नावोऽर्धेऽप्यतिसंप्रचलं तथा। अतीतनौके चागाधा त्रिष्वेते परिकीर्तिताः ParyāS'aRa. 3. 44; अतीतनौकेऽतिनु त्रिषु KalpaK. 351. 69.

**अतीतपञ्चरात्र** ( atīta-pañcarātra ) *adj.* five-nights old निःशेषजलवाप्यादौ यत्प्रविष्टं नवोदकम्। नातीतपञ्चरात्रं तत् कालदुष्टमिहोच्यते VṛHāriSm. 11. 129.

**अतीतपञ्चाशद्वर्षा** ( atīta-pañcāśadvarṣā ) *adj.* (*f.*) who has passed fifty years (of age) न···योषितश्चोनद्वादशातीतपञ्चाशद्वर्षाया रजःस्तन्यादयः AṣṭāSaṁ. i. 196. 17 (2. 1)

**अतीतपरमार्थ** ( atīta-paramārtha ) *adj.* the real meaning of which is the past आचक्षीरन् इत्यादयोऽत्र संभावनाविषया लिङ्प्रयोगा अतीतपरमार्था एव पर्यवस्यन्ति Loc. 4. 11 (*on* 1. 1)

**अतीतपरमेश्वर** ( atīta-parameśvara ) *m.* former lord or king अतीतपरमेश्वरप्रसादासादितश्रीरा ··· सूरिपरिषत् ··· मन्मुखेनैवं विज्ञापयति YaśasCam. i. 291. 2.

**अतीतपर्वभाग** ( atīta-parvabhāga ) *m.* part of the fortnight which has elapsed अतीतपर्वभागेभ्यः शोधयेत् द्विगुणां तिथिम् JyotiVe. 22.

**अतीतपाक** ( atīta-pāka ) *m.* cooking which is completed अतीतपाके च कृतिसाध्यतोत्तीर्णे न व्यभिचारः TattvCin. iv(2). 107. 4.

**अतीतपाकवत्** ( atītapāka-vat ) *adv.* like the completed cooking अनुमानं च वर्तमानपाकः पाकपूर्वकालीनः पाकत्वादतीतपाकवत् AdvaiSi. 342. 4.

**अतीतपात्रसंचार** ( atīta-pātrasañcāra ) *adj.* at which the plates (in which food is eaten) are already removed अतीतपात्रसंचारे काले विगतभिक्षुके। एककालं चरन्भैक्ष्यम् MahāBhā. xii. 9. 22; xiii. 129. 53.

**अतीतपादानुपपत्ति** ( atītapādānupapatti ) *f.* irrelevance of the previous section गुरुप्रसादसहितोपासनेन यथाकथंचिज्ज्ञानोपपत्तेर्व्यर्थं भक्त्यादीत्यतीतपादानुपपत्तिः TattvPrakā. 180A. 5 (*on* iii. 3. 51)

**अतीतपितृ** ( atīta-pitṛ ) *m.* deceased ancestor प्रयान्ति वैष्णवं लोकम्··· मनुजाः। तेषामतीतपितरः पितॄणां पितरस्तथा SkandP. ii(7). 12. 14.

**अतीतपुत्रमरण** ( atīta-putramaraṇa ) *n.* death of a son in the past शोकवस्तु शोकनिमित्तं वस्तु अतीतपुत्रमरणादि S'rutaPra. iA. 65. 8 (*on* i. 1. 1)

**अतीतपुरुष** ( atīta-puruṣa ) *m.* previous kinsman, ancestor or predecessor पूर्व्वजैरग्रहारस्थित्या एतदीयातीतपुरुषाणां प्रतिपालितो वि[रुध]रि[दा]नीं [?प्रतिपादिताविरुद्धमिदानीम्] सर्व्वपरिहारान्विधाय मया···श्रीचन्द्रभट्टसुताय परमया भक्त्या ··· प्रदत्तः EI. xxv. 170. 26.

**अतीतपुरुषव्यवहार** ( atītapuruṣa-vyavahāra ) *m.* activities of the earlier persons सचिवलोकोऽपि श्रुतत्वाद्धर्मशास्त्राणामपेक्षितत्वादतीतपुरुषव्यवहाराणाम् ··· परिहरन्प्रजाखेदमखिलान्यपि राजकार्याणि चक्रे TilaMañ. 20. 1.

**अतीतपुष्टितस्** ( atītapuṣṭi-tas ) *adv.* due to the previous strengthening कुशलमूलाद्वातीतपुष्टितः MaYānaSū. 15. 3 (4. 8)

**अतीतप्रतिष्ठ** ( atīta-pratiṣṭha ) *adj.* which has been already installed प्रतिष्ठितं पूजयेदिति विधिवाक्येन प्रतिष्ठायाः कारणत्वं न बोध्यते किन्तु भूतार्थक्तानुशासनादतीतप्रतिष्ठे पूज्यत्वं बोध्यते TattvCin. ii(2). 144. 10.

**अतीतप्रत्युत्पन्नोत्पत्ति** ( atītapratyutpannotpatti ) *f.* origination (of something) in the past and present सन्ति ते धर्माः येषां प्रतिसंख्यानिरोध एव लभ्यते तद्यथा अतीतप्रत्युत्पन्नोत्पत्तिधर्माणां सास्रवाणाम् AbhidhKoBh. 4. 16 (*on* 1. 7); अनुत्पत्तिधर्मग्रहणमतीतप्रत्युत्पन्नोत्पत्तिधर्मनिरासार्थम् Sphuṭā. i. 21. 2 (*on* 1. 6)

**अतीतप्रपञ्च** ( atīta-prapañca ) *m.* worldly life of the past तत्कालवर्तिप्रपञ्चमात्रं जीवानां नियम्यं न त्वतीतप्रपञ्चोऽपि PūrvottaVāNaMā. 203. 5; जीवानामतीतप्रपञ्चशरीरकत्वमपि अस्त्येव PūrvottaVāNaMā. 203. 9; सुषुप्तौ जीवस्येव प्रलये ईश्वरस्याविद्यावृत्तिसिद्धिः। अतीतप्रपञ्चस्मृतेरेव तत्र मानत्वात् GuruCandr. i. 369. 12.

**अतीतप्रयोग** ( atīta-prayoga ) *m.* past performance तेन सहितौ वक्तव्यौ। कुतः। अस्मिन्प्रयोगे स्विष्टस्य करिष्यमाणत्वेऽप्यतीतप्रयोगे कृतत्वेन योगसंभवे क्लृप्तयोगं परित्यज्य कल्प्यरूढ्याश्रयणायोगात् NyāyMāVi. 543. 22 (*on* x. 4. 19)

**अतीतप्रलय** ( atīta-pralaya ) *m.* past world-dissolution प्रकृतौ संस्थितं विश्वमतीतप्रलये तु यत् ViṣṇuP. i. 2. 25.

**अतीतप्रलयापाय** ( atītapralayāpāya ) *m.* end of the past dissolution अतीतप्रलयापाय उत्थिताय स वेधसे। हत्वासुरं हयग्रीवं वेदान्प्रत्याहरद्धरिः BhāgP. viii. 24. 57.

**अतीतप्रसवकाला** ( atīta-prasavakālā ) *adj.* (*f.*) whose time for delivery is overdue रक्तगुल्मे पुनरतीतप्रसवकालाया योषितः स्वेदपूर्वं स्नेहविरेचनं वितरेत् AṣṭāSaṁ. ii. 95. 8 (4. 16)

**अतीतप्रागभाव** ( atīta-prāgabhāva ) *adj.* whose antecedent non-existence is over (i. e. which has come into existence) अतीतप्रागभावोऽनागतध्वंसः घटो वर्तमानो न च तथा आत्मा TātpaṬ.(Vā.) 500. 1 (*on* iii. 1. 1)

**अतीतप्राप्ति** ( atīta-prāpti ) *f.* past attainment ता अपि हि तदानीमतीतप्राप्तिवत् प्राप्यन्ते Sphuṭā. ii. 160. 16 (*on* 2. 59)

**अतीतप्राय** ( atīta-prāya ) *adj.* almost over or past अष्टाविंशतितममनोश्चतुर्युगमतीतप्रायं वर्तते ViṣṇuP. iv. 1. 76.

**अतीतप्रोक्षण** ( atīta-prokṣaṇa ) *adj.* sprinkling which is already done अतीतप्रोक्षणे व्रीहावपघातान्वयः TattvCin. ii(2). 136. 5.

**अतीतबाल्य** ( atīta-bālya ) *adj.* i whose childhood is over पिता चास्याचिन्तयदयमतीतबाल्यः सुबुद्धिमान् भविष्यतीति ViṣṇuP. iv. 4. 9; सोऽपि यावदतीतबाल्यो भवति तावत्तस्य धनं रक्षेत् ManvaMu. 293. 22 (*on* 8. 27); ii when the childhood has passed अतीतबाल्ये सा काले विध्वस्तपितृमातृका SkandP. iii(3). 3. 67.

**अतीतबुद्धि** ( atīta-buddhi ) *f.* past cognition भाष्यकारेण त्वतीतबुद्धेर्ग्राह्यत्वनिराकरणार्थं क्षणिकत्वं कारणमुक्तम् Kāśi. ii. 155. 8 (*on* 5(3). 149)

**अतीतब्रह्मकल्प** ( atītabrahma-kalpa ) *m.* aeon of past Brahmā अतीतब्रह्मकल्पस्य वृत्तान्तं वेत्सि त्वं किल BṛNāraP. 37. 84.

**अतीतब्रह्मन्** ( atīta-brahman ) *m.* past Brahmā (creator) अतीतब्रह्मणामस्थ्नां स्रक् कण्ठे तव भासते SkandP. iv. 31. 92; अतीतब्रह्मणः कल्पे सर्गः कीदृग्विधः स्मृतः BṛNāraP. 37. 74.

**अतीतब्रह्मसृष्टि** ( atīta-brahmasṛṣṭi ) *adj.* who is beyond the creation of Brahmā अतीतब्रह्मसृष्टिनेश्वरेणात्रानेहाध्यवसायः PratāYaBhū. 398. 6.

**अतीतभय** ( atīta-bhaya ) *adj.* fearless (*lit.* who has overcome fear) ये च वीतभया नित्यं हरस्य भ्रुकुटीभटाः( v. l. ये चातीतभयातीतरहस्यभ्रुकुटीतटाः ) MahāBhā. x. 7. 39.

**अतीतभव** ( atīta-bhava ) *m.* past life or birth अतीतभवनामार्थभावनावासनान्वयात्। सद्योजातोऽपि यद्योगादितिकर्तव्यतापटुः TattvSaṁ. 1216; अहं पुरातीतभवेऽभवं मुने दास्यास्तु कस्याश्चन वेदवादिनाम्। निरूपितो बालक एव योगिनां शुश्रूषणे BhāgP. i. 5. 23; इतरस्तमथावोचदतीतभवसंचितम्। इष्टानिष्टफलं कर्म दैवमाहुर्विचक्षणाः BṛKathāS'loSaṁ. 21. 50; अतीतभवनिष्पादितसकलब्रह्मविचारस्य ··· वामदेवादेरिव विचारानपेक्षत्वेऽप्यक्षतेः SiddhāSi. i. 6. 10.

**अतीतभवप्रारब्ध** ( atītabhava-prārabdha ) *n.* active or fructifying *karma* of the past births इदं किल किमपि ··· अतर्कितोपनतमतीतभवप्रारब्धमिव समाक्रम्य जगत्त्रयम् ··· किञ्चिदधरोत्तरयति विश्वमिदम् NīlaVi. 99. 6.

**अतीतभाज्** ( atīta-bhāj ) *adj.* pertaining to the past कालाद्यव्यवधानत्वान्न ह्यात्मस्थमतीतभाक् BṛĀraUBhVā. i. 4. 300.

**अतीतभाविविज्ञान** ( atītabhāvi-vijñāna ) *n.* knowledge of the past and future अतीतभाविविज्ञानमस्ति जन्मान्तरेऽपि च SkandP. iii(1). 34. 20.

**अतीतभुवनानन्द** ( atītabhuvanānanda ) *m.* joy that was in the bygone world अतीतभुवनानन्दरत्नाढ्यां पादुकां यजेत् AgniP. 144. 7.

**अतीतभूतजा** ( atītabhūta-jā ) *adj.* (*f.*) arising from past elements क्षणादूर्ध्वमविज्ञप्तिः कामाप्तातीतभूतजा AbhidhK. 4. 4 (comm. अतीतानि महाभूतान्युपादाय )

**अतीतभूयिष्ठा** ( atīta-bhūyiṣṭhā ) *adj.* (*f.*) greater part of which has elapsed अतीतभूयिष्ठायां च शर्वर्यामाहते प्रयाणपटहे ··· बाह्यास्थानमण्डपमगच्छन् TilaMañ. 123. 20.

**अतीतभोगक** ( atītabhoga-ka ) *adj.* (motion) of the previous day ह्यस्तनाद्यतनयोर्यो विशेषोऽतीतभोगकः MaBhāsk. 4. 18.

**अतीतमनु** ( atīta-manu ) m. period of Manu which has elapsed सार्धमतीतमनूनां सन्धिभिराद्यन्तरान्तगतैः BrāhmSphuSi. 1. 27.

**अतीतमनुष्यभाव** (atīta-manuṣyabhāva) *adj.* transcending the state of being a human being संजातपरमनिर्वृतेरतीतमनुष्यभावमिव ··· आत्मानं मन्यमानस्य ( पार्थिवस्य ) TilaMañ. 61. 20.

**अतीतमनोरथवर्त्मन्** ( atīta-manorathavartman ) *adj.* which has exceeded the course of desire कथमतीतमनोरथवर्त्मभिर्विषहसे विरहैरनुनान्तरम् RāmC. 7. 23.

**अतीतमन्वन्तर** ( atīta-manvantara ) *n.* period of Manu which is over अतीतमन्वन्तरे ये ··· महर्षयः GītāBh.(Rā.) 503. 5 (*on* 10. 6)

**अतीतमान** ( atīta-māna ) *adj.* who has transcended pride ( वैम्नत्व ): अतीव( ? त )मानरोषादिक्षुत्पिपासादिविग्रहः BṛBrahmaS. iii. 4. 5.

**अतीतमानुष** ( atīta-mānuṣa ) *adj.* surpassing men, superhuman इदं च तत्राद्भुतरूपमुत्तमं जगाद विप्रर्षिरतीतमानुषम् MahāBhā. i. 190. 14; viii. 60. 30; TantrVā. 135. 21 (*on* i. 3. 7)

**अतीतमास** ( atīta-māsa ) *m.* month which is over शशाङ्कमासैरभिताडितान् हरेदतीतमासानथवार्कसंभवैः (लब्धः ··· अहर्गणः) MaBhāsk. 1. 7; 1. 13; 1. 18; अतीतमाससंबन्धिजननक्रियाकर्तुरिव ··· प्रतीत्यापत्तिः LaS'abdeS'e. ii. 28. 13

**अतीतमासता** ( atītamāsa-tā ) *f.* the state of a month which has elapsed अतीतमासतया चान्द्रा एव विनियोज्यन्ते Govindasvāmin. *on* MaBhāsk. 1. 13.

**अतीतमुक्त** ( atīta-mukta ) *m.* name of a disease (of elephants) (अवशिष्टान् ··· रोगान् वक्ष्यामि) संतापोऽतीतमुक्तो य ऊष्मापरिगतश्च यः Hastyāyur. 52. 12 (1. 7)

**अतीतमूल्या** ( atīta-mūlyā ) *adj.* (*f.*) beyond value, invaluable अधिगम्य गिरामतीतमूल्याम् ··· सुतजन्मसूचकस्य Acyutarā. 2. 24.

**अतीतमृति** ( atīta-mṛti ) *adj.* who has transcended death ततामितमतेतातमतातीतमृतेऽमित Alaṅkā Cin. 35. 14 ( comm. अतीतमृते हीनमरण )

**अतीतमोक्ष** ( atīta-mokṣa ) *m.* past liberation कैश्चिदतीतमोक्षस्यानङ्गीकृतत्वात् NyāySu.(Ja.) 492B. 1 (*on* iii. 2. 1)

**अतीतयौवन** ( atīta-yauvana ) *adj.* i (time) beyond the period of youth ते पुनर्जन्मनि शुभे भूत्वा दुःखपरिप्लुताः। अतीतयौवने काले स्थविरत्वमुपागताः MahāBhā. xiii. App. 1. 15 (1650); ii who is past youth जीर्णाश्चातीतयौवनाः (पुनर्नवांस्तान् कुरुते योगोऽयममृतोपमः) BhelaS. 131. 17 (6. 4)

**अतीतर** ( atītara ) *adj.* which excels others अन्यद्वलं किल महोऽन्यतरद्रवीन्द्रोः ··· अतीतरमस्य सर्वम् DvyāśraKā. 1. 198.

**अतीतरस** ( atīta-rasa ) *adj.* flavourless, tasteless अतीतरसमकालं चान्नं नानुभवेत् NītiVā. 25. 39.

**अतीतरहस्य** ( atīta-rahasya ) *adj.* extremely mysterious ये च वीतभया नित्यं ह्रस्वा भ्रुकुटीभटाः ( v. l. ये चातीतभयातीतरहस्यभ्रुकुटीतटाः ) MahāBhā. x. 7. 39.

**अतीतराज्य** ( atīta-rājya ) *n.* previous regime, earlier rule °कोसलराज्याभिसि(षि)क्त श्रीअभिमन्युदि(दे)वस्यातीतराज्ये EL xii. 240. 5A; श्रीमल्लक्ष्मणसेनदेवपादानामतीतराज्ये सं 74 वैशाख वदि 12 गुरौ EI. xii. 30. 6.

**अतीतरात्रि** ( atīta-rātri ) *f.* previous night अतीतरात्रेरन्त्ययामेनागामिरात्रेराद्ययामेन च ··· सहितो दिवसोऽधवनः LaS'abdeS'e. ii. 252. 20; ii. 434. 9.

**अतीतरूप** ( atīta-rūpa ) *adj.* i beyond form अतीतरूपं शिवसामरस्यम् SāraTi. 25. 62; ii having the nature of the past तदथ चातीतरूपम् TattvMu. 3. 76 ( comm. वर्तमानत्वावस्थानान्तरमतीतावस्थम् )

**अतीतरूपत्व** ( atītarūpa-tva ) *n.* the state of being in the form of the past ताद्रूप्यमतीतरूपत्वं वर्तमानावभासिनो ग्राह्यस्य संविद्विरुद्धम् Kāśi. ii. 158. 16 (*on* 5(3). 159)

**अतीतरूप्य** ( atīta-rūpya ) *n.* silver which no more exists अतीतरूप्यादिविषयकत्वेन ··· नासंभवः GuruCandr. i. 129. 3.

**अतीतलक्षण** ( atīta-lakṣaṇa ) *n.* nature of a past event अतीतोऽतीतलक्षणयुक्तोऽनागतवर्तमानाभ्यां लक्षणाभ्यामवियुक्तः YogBh. 130. 1 (*on* 3. 13); 127. 2 (*on* 3. 13); यदा खल्वयं सुवर्णकारो वर्धमानकं भङ्क्त्वा रुचकं रचयति तदा वर्धमानको वर्तमानलक्षणं हित्वातीतलक्षणमापद्यते TātpaṬ.(Vā.) 608. 24 (*on* iv. 1. 32); पिण्डस्य वर्तमानलक्षणापायेऽतीतलक्षणोत्पत्तिः YogSūVṛ. *on* 3. 13; *adj.* possessed of the characteristic of pastness परिणामः···अतीतलक्षणः स्वरूपाभिभवरूपः Nāgojibhaṭṭa *on* YogSū. 3. 13.

**अतीतलाभ** ( atīta-lābha ) *m.* previous or earlier gain or profit अतीतलाभस्य सुरक्षणार्थं भविष्यलाभस्य च संगमार्थम् ।··· यन्मन्यतेऽसौ परमो हि मन्त्रः PañcT. 2. 182 (BSS Ed.)

**अतीतलावण्य** ( atīta-lāvaṇya ) *adj.* whose beauty has passed away अतीतलावण्यजलप्रवाहा प्रावृट् जरां प्राप शरच्छलेन SūktiMu. 62. 4.

**अतीतलिङ्ग** ( atīta-liṅga ) *n.* past sign or reason क्वचित् अतीतलिङ्गादिस्थले LaCandr. 445. 40.

**अतीतलोक** ( atīta-loka ) *adj.* i who has surpassed all the people नमस्ते ··· तेजसातीतलोकाय कृतार्थाय महात्मने PadmP.(Ra.) 9. 176; जलधिसमीपगतावतीतलोकौ ··· दिनकरराघवनन्दनौ Bhaṭṭi. 10. 64; ii gone beyond (this) world, Bhaṭṭi. 10. 64 ( comm. अतीतलोकावेकत्र लोकान्तरगमनादन्यत्र लोकोत्तरत्वादिति भावः )

**अतीतवत्** ( atīta-va(n)t ) *adj.* [ *f.* -vatī ] i which has elapsed तदन्यतीतवतीषु कियतीषु चित्कालकल्पसु YaśasCam. ii. 298. 1; ii who has passed or overcome द्रोहैः ··· स फाल्गुने। पञ्च पञ्चाशतं वर्षाणायुषोऽतीतवान्हतः RājTa.(Ka.) 8. 1348; वयस्य, सा तव पुरातनपुण्यविभवेन विपदमिमामतीतवती नितम्बिनी Mukundā. 44 (14)

**अतीतवत्सर** ( atīta-vatsara ) *m.* year that has passed अतीतवत्सराणां मासानामानन्त्येऽपि विशेषवदत्राप्युपपत्तेः TattvPrakā. 183B. 7 (*on* iii. 3. 60)

**अतीतवयस्** ( atīta-vayas ) *adj.* whose young age has passed (who has grown old) विज्ञायातीतवयसं रुषङ्गुं ते तपोधनाः। तं वै तीर्थमुपानिन्युः MahāBhā. ix. 38. 26.

**अतीतवरुणावास** ( atīta-varuṇāvāsa ) *m.* beyond the abode of Varuṇa (i. e. western quarter) अतीतवरुणावासं सहस्रारं निवेशयेत्। विष्णुप्रहरणं चक्रम् AṣṭāSaṁ. ii. 194. 17 (6. 5)

**अतीतवर्ण** ( atīta-varṇa ) *m.* letter (which is) already pronounced अन्त्यस्य वर्णस्य अतीतवर्णैरुपानुगृहीतस्य ··· अर्थप्रतिपादनसामर्थ्यमस्ति TātpaṬ.(U.) 458. 18 (*on* 5(11). 68); न चेन्द्रियमतीतवर्णग्रहणसमर्थं न संस्कारो वर्तमानग्राही भवति NyāyMañ. i. 338. 6.

**अतीतवर्तमानकालद्वय** ( atītavartamānakāla-dvaya ) *n.* pair of the past and the present (time) न तावदेकस्यातीतवर्तमानकालद्वयसम्बन्धविषयं प्रत्यक्षज्ञानं प्रत्यभिज्ञा VivaPraSaṁ. 94. 4.

**अतीतवर्तमानकालवर्तिन्** ( atītavartamānakāla-vartin ) *adj.* existing in the past and the present (time) प्रत्यभिज्ञा हि नामातीतवर्तमानकालवर्त्येकवस्तुविषयमेकं प्रत्यक्षज्ञानम् VedāntDi. 108. 5 (*on* ii. 2. 25)

**अतीतवर्तमानकालविशिष्ट** ( atītavartamānakāla-viśiṣṭa ) *adj.* characterised by the past and the present तदेवेदम् इति हि सामानाधिकरण्येनातीतवर्तमानकालविशिष्टं वस्तु एकम् इति प्रतीयते VedāntSā.(Rā.) 179. 5 (*on* ii. 2. 24); सामानाधिकरण्येनातीतवर्तमानकालविशिष्टं वस्त्वेकमिति हि विज्ञायते BrahmSūBh.(S'rī.) ii. 90. 2 (*on* ii. 2. 24)

**अतीतवर्तमानत्व** ( atītavartamāna-tva ) *n.* nature of both the past and the present (time) अतीतवर्तमानत्वधर्मिणी सा(प्रत्यभिज्ञा) च दृश्यते AnuVyā. 41A. 11 (*on* 3. 2)

**अतीतवर्तमानविषय** ( atītavartamāna-viṣaya ) *adj.* object of (both) the past and the present (time) तथा च विज्ञानमप्येकमतीतवर्तमानविषयं न स्यात् NyāyVārPari. 617. 10.

**अतीतवर्तमानषडाकारोपभोग** (atītavartamāna-ṣaḍākāropabhoga) *m.* experience of the six types (of *vijñāna* i. e. sight, hearing, smell etc.) of the past and the present किमुपादाय धातवोऽष्टादशैव, द्राभ्यां देहपरिग्रहाभ्यामतीतवर्तमानषडाकारोपभोगधारणतामुपादाय AbhidhSa. 2. 2.

**अतीतवर्तमानावस्था** ( atītavartamānāvasthā ) *f.* state characterised by both past and present अविषयश्चातीतवर्तमानावस्थाव्याप्येकं द्रव्यमिन्द्रियाणाम् PramāMī. 36. 3 (*on* i. 2. 4)

**अतीतवर्त्स्यच्चेष्टा** ( atītavartsyac-ceṣṭā ) *f.* movements in the past and those about to take place (in near future) यत्वतीतवर्त्स्यच्चेष्टापेक्षया घटशब्दोऽचेष्टावत्यपि प्रयुज्येत SyādvāMañ. 28(137)

**अतीतवस्तु** ( atīta-vastu ) *n.* thing of the past तदलमतीतवस्तुनिर्बन्धेन। विधेहि ··· सांप्रतकालोचितं कृत्यम् TilaMañ. 421. 13; ते हि विकल्पाः ··· वर्तमाननिष्ठा वा अतीतवस्तुविश्रान्ता वा PratyabhiVi. i. 403. 7 (*on* i. 8. 2); अतः कथं तेनातीतवस्तुसादृश्यं वर्तमानवस्तुनि स्यात् SāṁkhyaPraBh. 138. 11 (*on* 5. 97)

**अतीतवाक्पथ** ( atīta-vākpatha ) *adj.* i beyond the power of words, दमयन्ती तु दुःखार्ता ··· अतीतवाक्पथे काले शशापैनं रुषा किल MahāBhā. iii. 60. 36 (Nīlakaṇṭha अतीतवाक्पथे वाचाप्यनिवार्ये सति काले धूम्रवर्णं व्याघे); ii having no scope for words ध्येयमेकम् ··· स्तुत्यमुत्तममतीतवाक्पथम्। आमनन्ति यमुपास्यमादराद् दूरवर्तिनमतीव योगिनः S'iśuVa. 14. 60.

**अतीतवाचित्वभ्रम** ( atītavācitva-bhrama ) *m.* wrong notion (that the word भूत) is expressive of the past भाष्ये भूतशब्दस्यातीतवाचित्वभ्रमं निरस्यति VedāntKa. 38. 23 (*on* i. 1. 1)

**अतीतवात्सरीय** ( atīta-vātsarīya ) *adj.* of the past or previous year अतीतवात्सरीयाणां स्नानादीनां हि कर्मणाम्। ··· अपूर्णानां हि शान्तये PauṣkS. 30. 104.

**अतीतवार्षिका** ( atīta-vārṣikā ) *adj.* (*f.*) i where the rainy season has been over वलेषु वर्धमानेषु तेषु यातीतवार्षिका। लोत्रप्रतिग्रहोपात्ता भूर्हृता तैर्नियोगिभिः RājTa.(Prā.) 412; ii obtained during the previous year, RājTa.(Prā.) 412.

**अतीतवासकर्तृ** ( atītavāsa-kartṛ ) *m.* agent of past act of residing वसन् ददर्श। भूते लट्। अतीतवासकर्तृकर्तृकं दर्शनमर्थः SiddhāKau. 476B. 8.

**अतीतवासर** ( atīta-vāsara ) *m.* previous day अतीतवासरेऽन्येष भक्ष्या-

-लामेऽतिलक्षुधः । दूरादपि महर्षि तमद्राक्षीत् PārśvC. 4. 147.

**अतीतवासस्** ( atīta-vāsas ) *n.* old garment स्रजं छत्रोपानहौ कनकमतीतवासांसि न चान्यैर्धृतानि धारयेत् SuśruS. iv. 24. 101.

**अतीतविज्ञान** ( atīta-vijñāna ) *n.* **1** instruction given earlier परमात्मविषयत्वादतीतविज्ञानस्य KenUBh. 59. 11 (*on* 4. 7); **2** knowledge of the past अतीतविज्ञानविशिष्टता अपरोक्षतया प्रत्यक्षे 'तदयम्' 'सराम्यहमेतत्' इति प्रतिभासनात् TātpaṬ.(U.) 177. 22 (*on* 4. 233)

**अतीतविज्ञानकर्मता** ( atītavijñānakarma-tā ) *f.* the state of being the object of the knowledge of the past अपरोक्ष एवार्थोऽतीतविज्ञानकर्मतया स्मृतौ प्रतिभासते TātpaṬ.(U.) 177. 21 (*on* 4. 233); स्मरणेऽप्यनधिगतावगमोऽप्यस्त्येव अतीतविज्ञानकर्मतया हि तत्र घटः प्रतिभासते तद्विशिष्टतया वा गृहीत इति TātpaṬ.(U.) 371. 19 (*on* 5(6). 104)

**अतीतविद्या** ( atīta-vidyā ) *f.* lore or knowledge previously taught अतीतविद्याप्राप्त्युपसर्गशमनार्था शान्तिं पठति 'शं नो मित्र' इत्यादि TaiUBh. 225. 9 (*on* 1. 12)

**अतीतविपर्यास** ( atīta-viparyāsa ) *adj.* who is free from errors अत्रातीतविपर्यासः केवलामनुपश्यति । छन्दस्यश्छन्दसां योनिमात्मा छन्दोमयी तनुम् VākyaP. 1. 17.

**अतीतविशेषण** ( atīta-viśeṣaṇa ) *adj.* distinguishing the past अनिरुद्धग्रहणमतीतविशेषणार्थम् Sphuṭā. i. 49. 4 (*on* 1. 20)

**अतीतविशेषणावच्छेद** ( atītaviśeṣaṇāvaccheda ) *m.* delimitation by the attribute of the past यदि ह्यतीतविशेषणावच्छेदेन विद्यमानस्यैव विशेष्यस्य ध्वंसः स्यात् TattvCin. ii(2). 94. 7.

**अतीतविषय** ( atīta-viṣaya ) *adj.* [ *f.* -ā ] having for its object a past thing संस्काराद् दृष्टश्रुतानुभूतेष्वर्थेषु शेषानुव्यवसायेच्छानुस्मरणद्वेषहेतुरतीतविषया स्मृतिः PadārthaSaṁ. 256. 20; अतीतविषया न प्रत्यक्षबुद्धयः Kāśi. ii. 159. 23 (*on* 5(3). 161); NyāyKa. 257. 15; न च स्मृतिरतीतविषयाननुभूतपूर्वं वर्तमानं गोचरयितुमर्हति TātpaṬ.(Vā.) 137. 3 (*on* i. 1. 4); अतीतविषयो हि शोकः S'rutaPra. iA. 65. 9 (*on* i. 1. 1); अतीतविषयाः ··· मायापरिणामा भवन्ति VivaPraSaṁ. 258. 10; 258. 8; न चेयं श्रुतिरतीतविषयैव TattvPrakā. 56A. 9 (*on* i. 3. 28)

**अतीतविषयक** ( atītaviṣaya-ka ) *adj.* having a past thing for its object अज्ञानस्य रूप्याकारज्ञानात्मना परिणामे रूप्यमिति प्रतीतेः ··· अतीतविषयकज्ञानन्यायेन वोपपत्तौ रूप्यरूपाविद्यापरिणामकल्पना न युक्ता AdvaiSi. 652. 13; भाविविषयमनुमितिरूपमतीतविषयकं वा स्मृतिरूपं च विवरणोक्तम् LaCandr. 309. 16.

**अतीतविषयग्रहण** ( atītaviṣaya-grahaṇa ) *n.* cognition of a past object उक्त एवेन्द्रियस्य अतीतविषयग्रहणे सामर्थ्यविरहः NyāyMañ. ii. 33. 8.

**अतीतविषयग्राहिणी** ( atītaviṣaya-grāhiṇī ) *adj.* (*f.*) comprehending a past object तद्यथा युधिष्ठिरभीमसेनावास्ताम्, अतीतविषयग्राहिणी बुद्धिः MāṭhVṛ. 50. 3 (*on* 33)

**अतीतविषयज्ञत्व** ( atītaviṣayajña-tva ) *n.* the nature of cognizing a past thing तत्प्रतिबिम्बितानुभवेन अतीतविषयज्ञत्वमपि सिध्यति VivaPraSaṁ. 258. 11.

**अतीतविषयता** ( atītaviṣaya-tā ) *f.* the state of having a past thing as object आत्मांश एव प्रमा पर्यवसितेति किमतीतविषयतया Kāśi. ii. 161. 19 (*on* 5(3). 168); न ह्यनुव्यवसायरूपं प्रत्यक्षमिष्टं, अतीतविषयतया प्रत्यक्षत्वानुपपत्तेः S'rutaPra. iA. 114. 26 (*on* i. 1. 1); न च भारतादिवदतीतविषयतया वेदस्य प्रामाण्योपपत्तिः TattvPrakā. 56A. 6 (*on* i. 3. 28)

**अतीतविषयत्व** ( atītaviṣaya-tva ) *n.* the state of having a past thing as object तस्मादतीतविषयत्वात् क्रियाया व्यापारानुबन्धितयापि संस्कारस्य स एव विषयः NyāyVārPari. 610. 3; न चाप्रामाण्येनोपपत्तिः । तदभावादेव । नापि भारतादिवदतीतविषयत्वेन TattvPrakā. 56B. 5 (*on* i. 3. 29); NyāySu.(Ja.) 496A. 1 (*on* iii. 2. 1)

**अतीतविषयानुमान** ( atītaviṣayānumāna ) *n.* inference the subject of which is a past thing अतीतविषयानुमानादिषु विषयाभावेऽपि विषयित्वदर्शनाद् S'atDū. 135. 29.

**अतीतविषयोल्लेख** ( atītaviṣayollekha ) *m.* reference to past things or objects साक्षिज्ञाने मोक्षसुखपुष्पयोरतीतविषयोल्लेखरूपोपप्लवापाताच्च Nyāyāmṛ. 72A. 7.

[1]**अतीतवृत्त** ( atīta-vṛtta ) *n.* past incident or event नातीतमर्थं ( v. l. °वृत्तं ) वै पश्चात्तापेन युज्यते MahāBhā. xi. 1. 28.

[2]**अतीतवृत्त** ( atīta-vṛtta ) *n.* earlier or previous metre अनन्तरमतीतवृत्तलघुगुरुसंख्यं गुरुलघुविन्यासं कुर्यात् Jānāśra. 6. 7.

**अतीतवृत्तान्त** ( atīta-vṛttānta ) *m.* past event or incident राज्ञोक्तम् अलमतीतवृत्तान्तचर्चया PrabaK. 34. 32.

**अतीतवेदिन्** ( atītaved-in ) *adj.* one who knows the past अनागतातीतवे( दी मुनिस्तद् )युक्तं मन्यमानः ··· वक्ष्यति AbhinBhā. i. 140. 12 (*on* 4. 176)

**अतीतव्यक्ति** ( atīta-vyakti ) *f.* past individual entity अतीतव्यक्तेस्तद्व्यक्तित्वेन हेतुताख्ले कारणता न स्यात् GuruCandr. ii. 18. 13.

**अतीतव्यभिचारिन्** ( atīta-vyabhicārin ) *adj.* one who commits the sin or crime already mentioned or referred to अतीतव्यभिचार्यादिकं उपस्थितः क्रमप्राप्तसर्वोपस्थाने वा अहन्यतीते एकदिनात्यये BālamBha. iii. 169. 33 (*on* 3. 281)

**अतीतव्यवहार** ( atīta-vyavahāra ) *adj.* beyond (i. e. incapable of) carrying on transactions अतीतव्यवहारान् ग्रासाच्छादनैर्बिभृयुः BaudhDS. ii. 2. 38; ( न सिध्येयुः ) कृताः ( व्यवहाराः ) अप्राप्तातीतव्यवहाराभ्याम् ArthS'ā. ii. 3. 8 (3. 1); स्थविरो लुप्तस्मृतिः जराभिभूतोऽतीतव्यवहारः ManuBh. ii. 154. 9 (*on* 8. 163); अतीतव्यवहाराः मूकादयः SmṛtiCan. iv. 632. 16.

**अतीतव्यसन** ( atīta-vyasana ) *n.* past calamity खलु कृत्वा नातीतव्यसनशोचनम् KaumuMi. 9. 4(1)

**अतीतव्याधि** ( atīta-vyādhi ) *m.* past disease अतीतव्याधौ तु न शक्यमेवद् ज्ञातुमवश्यमशितेनानेन जीवतीति ManuBh. i. 434. 23 (*on* 5. 27)

**अतीतशरीर** ( atīta-śarīra ) *n.* body of the previous life अननुसंधानस्य च शरीरभेदादेव अतीतशरीरेष्विव संभवात् TattvPradī.(Ci.) 380. 8; अतीतशरीरादाविवाननुसंधानापत्तेः SarvaDaKau. 141. 3.

**अतीतशान्ति** ( atīta-śānti ) *f.* name of one of the five Kalās of the goddess Tripurā भूमौ निवृत्तिरुदिता पयसि प्रतिष्ठा विद्यानले मरुति शान्तिरतीतशान्तिः । व्योम्नि DevīPañ. 4. 26.

**अतीतशैशव** ( atīta-śaiśava ) *adj.* who is past childhood (i. e. grown up, a major) बालदायादिकं रिक्थं तावद्राजानुपालयेत् । ··· यावच्चातीतशैशवः ManuSm. 8. 27; AgniP. 222. 19; ViṣṇuDhaP. ii. 61. 46; ii. 72. 6; अतीतशैशवस्य तु गुरुपत्नीवत् संग्रहणम् ManuBh. i. 143. 9 (*on* 2. 133); ii. 84. 14 (*on* 8. 27); तत्राप्यतीतशैशवस्य 'परिपूर्णं सर्वेषाम्' इति वचनात् ( स्तनकम् ) ManuBh. i. 446. 20 (*on* 5. 58); i. 446. 23 (*on* 5. 58); क्षत्रियवैश्ययोस्त्वतीतशैशवयोः एकादशद्वादशयोः ManuBh. ii. 329. 18 (*on* 10. 3)

**अतीतश्यामता** ( atīta-śyāmatā ) *f.* past darkness नन्वतीतश्यामताप्रत्ययस्तत्र यथार्थ एव NyāySu.(Ja.) 251A. 5 (*on* ii. 1. 2)

**अतीतश्लेष्मकाल** ( atīta-śleṣmakāla ) *m.* [ Loc. ] when the time for (preponderence of) phlegm is over (i. e. after the third part of the day) ततः सुखोषितं पूर्वोक्तेन विधिनातीतश्लेष्म(?ष्म)काले निरन्नं विभज्य कोष्ठं यथार्हौषधमात्रां पाययेत् AṣṭāSaṁ. i. 141. 9 (1. 27)

**अतीतश्लोकार्थ** ( atītaślokārtha ) *m.* meaning of the preceding verse अतीतश्लोकार्थस्यैव संक्षेपः उच्यते GītāBh.(S'aṅ.) 419. 14 (*on* 14. 16)

**अतीतसंवेदन** ( atīta-saṁvedana ) *n.* cognition of a past thing प्रतिभाससिद्धा तावच्चेतनसमवायिनी त्रितिः । अनागतातीतसंवेदने च व्यक्तमेव विषयानाश्रितत्वम् PrakaPañ. 329. 3.

**अतीतसंसृति** ( atīta-saṁsṛti ) *adj.* who has gone beyond transmigration (i. e. is liberated) मुक्ता स्त्री मौक्तिके त्रिस्तु विमुक्तेऽतीतसंसृतौ Nānārthāsaṁ. i. 129. 1006.

**अतीतसंस्कार** ( atīta-saṁskāra ) *m.* **1** past (i. e. missed) sacrament (i. e. sacrament not yet performed even though the prescribed time for it is over) एतद्बहूनामपत्यानां युगपत्संस्कारकरणविषयमिति वोपदेवः । अतीतसंस्काराणां युगपत्करण इत्यन्ये NirṇaSi. 196. 22 = BālamBha. i. 14. 30 (*on* 1. 11); **2** obsequial rite performed for the dead अथातीतसंस्कारः स चेदन्तर्दशाहं स्यात्तत्रैव सर्वं समापयेत् NirṇaSi. 397. 22.

**अतीतसकलवस्तु** ( atīta-sakalavastu ) *n.* all past things ब्रह्मणः ··· अतीतसकलवस्त्ववभाससिद्धिः SiddhāLeSaṁ. 120. 4.

**अतीतसंख्य** ( atīta-saṅkhya ) *adj.* innumerable अतीतसंख्या विहिताः ··· शिलीमुखाः Kirātā. 14. 19; राक्षसयोर्बवयोः ···। साहायकं मेनुरतीतसंख्याः प्रपत्रसंख्यस्य जगत्त्रयारेः RāmC. 27. 34.

**अतीतसंगर** ( atīta-saṅgara ) *adj.* who has broken his promise प्रमत्तमात्मंभरिमप्रतिष्ठितं धिगस्तु मां शत्रुमिमं सुहृन्मुखम् । निमित्तमात्रेऽर्थिकस्य देऽस्तुना यदेव जातोऽहमतीतसङ्गरः RāmC. 5. 62.

**अतीतसंग्रह** ( atīta-saṅgraha ) *adj.* who is beyond hoarding (i. e. without covetousness) विषदे विमुखो धीरो मनसोऽतीतसंग्रहः PadmP. ii. 61. 15.

**अतीतसत्ता** ( atīta-sattā ) *f.* past existence अतीतसत्तायां दण्डस्य विशेषणत्वेऽपि व्यावृत्तिबुद्धावविशेषणत्वात् LaCandr. 451. 13; अतीतसत्तासंबन्धांश एव तस्य विशेषणत्वव्यवहाराद् GuruCandr. ii. 37. 10.

**अतीतसंनिहित** (atīta-sannihita) *adj.* pertaining to the immediate past संनिहितवाचि नैतच्छब्देनातीतसंनिहितस्येवागामिसंनिहितस्यापि परामर्शसंभवात् NyāyMāVi. 88. 5 (*on* ii. 2. 8)

**अतीतसप्ततिवर्ष** (atīta-saptativarṣa) *adj.* who has passed his seventieth year तथैव नोनषोडशातीतसप्ततिवर्षस्य पुंसः शुक्रसेकादयः AṣṭāSaṁ. i. 196. 16 (2. 1)

**अतीतसप्तमादिका** (atītasaptamādikā) *adj.* (*f.*) beyond the seventh generation etc. in relation (i. e. who is not a *sapiṇḍa*) सातीतसप्तमादिका प्रकर्षेण शस्ता VīraMi.(Saṁskāra.) 709. 3.

**अतीतसमय** (atīta-samaya) *adj.* 1 who has transgressed the (set) time (-limit) अतीतसमयानसान्द्रक्ष्य स हरिसत्तमः । शङ्कमानश्च मां दृष्ट्वा वधायाज्ञापयिष्यति Rāmā. iv. 1336*(1); 2 the agreed time-limit of which was over अर्जुनः...अतीतसमये काले प्रियां भार्यामभाषत MahāBhā. iv. 623*(3); *m.* past time अतीतसमयावच्छेदानुमाने तत्ताधीन्यपदेशयोरभावात् TattvCin. i. 840. 3.

**अतीतसमस्तवेदन** (atīta-samastavedana) *adj.* who is beyond all kinds of sensations तमतीतसमस्तवेदनं लभेत् KalyāKā. 20. 38.

**अतीतसंभूति** (atīta-sambhūti) *f.* past birth नारायणेन चातीतसंभूतौ तस्मै वरो दत्तः ViṣṇuP. iv. 8. 18.

**अतीतसर्वब्रह्माण्ड** (atīta-sarvabrahmāṇḍa) *adj.* beyond (i. e. greater than) the entire universe तं नमस्कुर्महे कूर्मं यः कवाटमसंकटम् । अतीतसर्वब्रह्माण्डमवशेषमिवावहत् DaśāvaC. 1. 4.

**अतीतसर्वावरण** (atīta-sarvāvaraṇa) *adj.* transcending all enclosures or covers अतीतसर्वावरणोऽखिलात्मा तेनास्तृतं यद्भुवनान्तराले ViṣṇuP. vi. 5. 83 = BrahmP. 233. 71; अतीतसर्वावरणः । आवरणं प्रकृतिसंबन्धकर्मवासनादिकम् । तत्सर्वमतीतं येन सः SrutaPra. iA. 211. 19 (*on* i. 1. 1)

**अतीतसाध्यकानुमान** (atītasādhyakānumāna) *n.* inference in which the probandum is a past thing न चैवं शतेन दशानुमानानुपपत्तिः । तादृशस्थले शतबोधोत्तरं दशव्यक्तिविशेष्यकोक्तबोधरूपकारणस्य नियमेनोपधमानत्वेन दशत्वोत्पत्तावनुमित्सायां सत्याम् अतीतसाध्यकानुमानोपपत्तेः MīmāKau. i. 257. 14 (*on* i. 4. 17)

**अतीतसिद्धि** (atīta-siddhi) *f.* establishment of (the existence of) the past (time) नाप्यनागतापेक्षातीतसिद्धिः NyāyBh. 109. 6 (*on* ii. 1. 42)

**अतीतसूत्र** (atīta-sūtra) *n.* previous or preceding *sūtra* अतीतसूत्रे तदप्युक्तम् TattvPrakā. 75B. 7 (*on* i. 4. 26); 191A. 7 (*on* iii. 4. 22)

**अतीतस्तुतिगोचरा** (atīta-stutigocarā) *adj.* (*f.*) beyond the range of praise अश्रेयस्त्वचित्रां तामतीतस्तुतिगोचराम् । अद्भुतमिव सर्वेषामद्भुतानाममन्यत Yādavā. 10. 108.

**अतीतस्मरण** (atīta-smaraṇa) *n.* remembrance of past (things or events) भवतु तावदतीतस्मरणे, अनागता(त)बोधे तु कथम् Kāśi. ii. 67. 14 (*on* 5(2). 116)

**अतीतस्मृति** (atīta-smṛti) *f.* remembrance of past (things or events) न ह्यतीतस्मृतावनागतानुमाने स्वप्ने कृष्णविषाणावभासे वाधंसंसर्गोऽस्ति NyāyRa. 283. 12 (*on* 5(3). 51)

**अतीतस्वरूप** (atīta-svarūpa) *n.* nature of the past (time) तदनेन वर्तमानाभावेऽतीतस्वरूपाक्षेपः कृतः TātpaṬ.(Vā.) 407. 4 (*on* ii. 1. 41)

**अतीतस्वार** (atīta-svāra) *m.* circumflex accent on a long vowel and pronounced between an acute and a grave वर्णस्वारोऽतीतस्वारः स्वरितो द्विविधः स्मृतः । मात्रिको वर्ण एवं तु दीर्घस्तूच्चरितादनु NāraSi. i. 8. 3 (comm. उदात्तानुदात्तमध्ये उच्चार्यते इति स्वारः स्वरितविशेषः रूढ्या अध्येतृभिरुच्यते)

**अतीतहायना** (atīta-hāyanā) *adj.* (*f.*) (cow) which is more than a year (or years) old अतीतहायना गौः CāndraVṛ. *on* ii. 3. 11.

**अतीतहिरण्यगर्भ** (atīta-hiraṇyagarbha) *m.* Hiraṇyagarbha (i. e. Brahmā) of the past epoch अतीतहिरण्यगर्भमुक्तेः श्रुत्यादिसिद्धत्वेनेदानीं संसार्युपलंभायोगाच्च Nyāyāmṛ. 296B. 6.

**अतीतहोम** (atīta-homa) *m.* offering which is missed संस्थितायामिष्टावतीतहोमान् जुहोति VaikhāSS. 20. 15.

**अतीतहोमद्रव्य** (atītahoma-dravya) *n.* material (remaining) from the past sacrifice (i. e. sacrifice that has already taken place) अतीतहोमद्रव्यं द्विजाय दत्त्वा BālamBha. i. 240. 12 (*on* 1. 89)

**अतीतागमन** (atītāgamana) *n.* recurrence or relapse of the past (ailments) एभिः प्रसिद्धवचनैरतीतागमनं मतम् CaraS. iv. 1. 88 (1941 Ed.)

**अतीतागतवस्तु** (atītāgata-vastu) *n.* past and future episode or event विष्कम्भकस्तु संक्षेपादतीतागतवस्तुनोः । सूचकः SāhiSā. 4. 2.

**अतीतागामिहर्षहेतु** (atītāgāmi-harṣahetu) *m.* past and future cause of joy एतद्वाक्यश्रवणानन्तरभाविनो मुखविकासस्यातीतागामिहर्षहेत्वन्तरश्रवणमूलत्वशङ्कानुदयात् SrutaPra. iB. 90. 24 (*on* i. 1. 1)

**अतीताग्निविषयानुमानवत्** (atītāgniviṣayānumāna-vat) *adv.* like the inference about fire which is an object of the past प्रत्यक्षपूर्वकमपि भविष्यद्विषयं भविष्यति भस्मदर्शनादतीताग्निविषयानुमानवत् TātpaṬ.(U.) 143. 15 (*on* 4. 92)

**अतीतातीतभाव** (atītātītabhāva) *adj.* who has completely gone beyond (all) the past dispositions (of the mind) अतीतातीतभावो यो वैदेही मुक्त एव सः TejoBiU. 4. 53; अतीतातीतभावो यो विदेहो मुक्त एव सः Sarva-VeSāSaṁ. 984.

**अतीतादि** (atītādi) *adj.* (a thing) belonging to the past and the like न चेन्द्रियस्यातीतादौ सामर्थ्यम् TātpaṬ.(U.) 177. 7 (4. 233); कश्चित्किञ्चिद्देवातीतादि गृह्णाति TattvVai. 30. 24 (*on* 1. 25); 172. 13 (*on* 3. 48); न चातीतायपि न संविदितम् PramāMā. 16. 11; अथ नातीतादिरर्थः स्वसामर्थ्येनानुमितादिकं व्यावर्तयति NyāySu.(Ja.) 48A. 6 (*on* i. 1. 1); 69B. 9 (*on* i. 1. 1); तीतादावतिव्याप्तिः TattvPrakā. 9A. 11 (*on* i. 1. 2); अतीतादिः प्रकारो दृश्यते Upask. 420. 6 (*on* x. 1. 4); ज्ञातताया मम घटादौ परस्याप्यतीतादावभावात् Nyāyāmṛ. 59B. 7; 98B. 5; 193B. 6; अतीतादिरपि कदाचिद्वर्तते AdvaiSi. 334. 14.

**अतीतादिक** (atītādi-ka) *adj.* (what is) past and the like कालविप्रकृष्टे अतीतादिके योगजधर्मानुग्रहरूपात् सामर्थ्यात् ज्ञानमुत्पद्यते Kiraṇā. 285. 13; वीक्ष्यातीतादिकान् भावान् संविग्नोऽतिशयेन सः SamarāSaṁ. 9. 302; सत्कार्यवादिनां ह्यतीतादिकमपि स्वरूपतोऽस्तीति तत्संबन्धः संभवेदिति SāṁkhyaPraBh. 46. 1 (*on* 1. 91)

**अतीतादिकला** (atītādi-kalā) *f.* *kalās* (limiting factors) called *atītā* etc. अतीतादिकलानां स्यादेवमुद्दीपनं यतः ĪśānSiPa. ii. 18. 23; प्रणवपूर्वम् ... अतीतादिकलाबीजान्युच्चार्य ĪśānSiPa. ii. 18. 23 (2); ii. 18. 23 (3)

**अतीतादिकार्य** (atītādi-kārya) *n.* past effect and so on अतीतादिकार्याणामपि ... तत्त्वधीप्रयुक्तत्वप्रतीतेः GuruCandr. i. 99. 15.

**अतीतादिकाल** (atītādi-kāla) *m.* past time etc. अतीतादिकाले घटाद्यभावेन घटादेरतीतादिधर्मकत्वानुपपत्तेः SāṁkhyaPraBh. 53. 32 (*on* 1. 113); योगिनोऽतीतादिकालं प्रत्यक्षतः पश्यन्ति VīraMi.(Samaya.) 8. 22.

**अतीतादिगोचरत्व** (atītādigocara-tva) *n.* the state of cognising the past and the rest साक्षिणोऽतीतादिगोचरत्वाभावे ... अनुमानमात्रोच्छेदः स्यात् NyāySu.(Ja.) 495A. 7 (*on* iii. 2. 1)

**अतीतादिचतुर्विंशति** (atītādi-caturviṁśati) *f.* twenty-four (Jinas) of the past etc. (i. e. past, present and future) तत्रातीतादिचतुर्विंशतिजिन ७२ समलंकृतः प्रासादः कारितः PurāPraSaṁ. 126. 26.

**अतीतादिज्ञातृ** (atītādi-jñātṛ) *adj.* knower of the past etc. ततः प्रभृति ... चूडामण्यादिज्ञानैरतीतादिज्ञाता ... (देवयोधिद्विजः) ... सुखासनमधिरोहति KumāCaSaṁ. 89. 30.

**अतीतादिज्ञान** (atītādi-jñāna) *n.* knowledge of the past etc. अतीतादिज्ञानस्येश्वरज्ञानस्य च कर्मकारकाजन्यत्वेनाविषयत्वप्रसङ्गात् TattvPradī(Ci.) 47. 3; अतीतादिज्ञानस्य निर्विषयत्वापातात् NyāySu.(Ja.) 42B. 9 (*on* i. 1.1); येनातीतादिज्ञाने ... व्यभिचारः स्यात् Nyāyāmṛ. 72B. 6; 73A. 8; 123B. 7; 183B. 10; अतीतादिज्ञानस्य ईश्वरज्ञानस्य च उत्पत्त्यर्थमर्थानपेक्षत्वेऽपि तन्निरूप्यत्वदर्शनेन ज्ञानस्य ज्ञातृज्ञेयनिरूप्यत्वं स्वभावः AdvaiSi. 303. 5.

**अतीतादिज्ञानवत्** (atītādijñāna-vat) *adv.* like the knowledge of the past etc. भ्रमस्य चातीतादिज्ञानवदर्थाभावेऽपि संभवात् Nyāyāmṛ. 425A. 13.

**अतीतादिज्ञानस्थल** (atītādijñāna-sthala) *n.* case of the knowledge of the past etc. अतीतादिज्ञानस्थलेऽप्यतीतादिविषयस्य ... सत्त्वात् LaCandr. 775. 18.

**अतीतादिज्ञानापेक्षा** (atītādijñānāpekṣā) *f.* expectancy of the knowledge of the past etc. अस्त्वतीतादिज्ञानापेक्षा शक्तिग्रहस्य NyāySu.(Ja.) 495A. 3 (*on* iii. 2. 1)

**अतीतादित्वप्राप्ति** (atītāditva-prāpti) *f.* contingency of (having the nature of) being past etc. शब्दस्य चातीतादित्वप्राप्तिः NyāySu.(Ja.) 76A. 4 (*on* i. 1. 1)

**अतीतादिदशा** (atītādi-daśā) *f.* the state of being past etc. अतीतादिदशायाम् ... कल्पनमावश्यकम् GuruCandr. i. 137. 17; अतीतादिदशायाम् ... उक्तज्ञानविषयकवृत्त्यव्याप्यत्वात् LaCandr. 288. 5.

**अतीतादिधर्मकत्व** (atītādidharmaka-tva) *n.* the state of having the attribute past etc. अतीतादिकाले घटाद्यभावेन घटादेरतीतादिधर्मकत्वानुपपत्तेः SāṁkhyaPraBh. 53. 32 (*on* i. 113)

**अतीतादिधूम** (atītādi-dhūma) *m.* the past smoke and the like अतीतादिधूमेषु ··· कारणस्याभावात् GuruCandr. i. 228. 15.

**अतीतादिनिमित्तभाषक** (atītādinimitta-bhāṣaka) *adj.* prognosticator of past and other things दमनको नाम जटी ··· वसति ··· अतीतादिनिमित्तभाषकः Bharat. 46. 10.

**अतीतादिनिष्ठ** (atītādi-niṣṭha) *adj.* present in what is past etc. अतीतादिनिष्ठस्य ज्ञानादिसंबन्धस्य ज्ञानादिमत्कालो नावच्छेदकः GuruCandr. ii. 71. 24.

**अतीतादिबुद्धि** (atītādi-buddhi) *f.* knowledge of the past etc. अतीतादिबुद्धिस्तत्सहिता VedāntKa. 19. 7 (*on* i. 1. 1)

**अतीतादिभेदभिन्न** (atītādibheda-bhinna) *adj.* differentiated because of the difference of the past etc. न चासंस्कृतमतीतादिभेदभिन्नं रूपादिवद्यतस्तत्सर्वमैकध्यमभिसंक्षिप्यासंस्कृतस्कन्ध इति संख्यां गच्छेत् AbhidhKoBh. 15. 2 (*on* 1. 22)

**अतीतादिरूप** (atītādi-rūpa) *adj.* having the nature of past etc. बाह्याभ्यन्तराखिलगुणदोषादिकमतीतादिरूपं पश्यन्तीति विशेषः YogSā. 10. 13(1)

**अतीतादिरूपता** (atītādirūpa-tā) *f.* the state of having the nature of the past etc. नातीतादिरूपता कालस्य कारकव्यङ्ग्या TātpaṬ.(Vā.) 406. 9 (*on* ii. 1. 40)

**अतीतादिरूपत्व** (atītādirūpa-tva) *n.* the state of having the nature of the past etc. विशेषाणां हि शब्दवाच्यत्वे तेषामतीतादिरूपत्वात् NyāySu.(Ja.) 493A. 13 (*on* iii. 2. 1)

**अतीतादिलक्षण** (atītādi-lakṣaṇa) *n.* character of the nature of past etc. अस्य ह्यतीतादिलक्षणवृत्तिलाभापेक्षो व्यवहार इति पूर्वकाङ्क्षेदः TattvSaṁPañ. 504. 16 (*on* 1787–1790)

**अतीतादिलिङ्गादि** (atītādi-liṅgādi) *adj.* the indicatory mark etc. regarding the thing of the past etc. अतीतादिलिङ्गादेर्ज्ञानेनानुमित्यादिदर्शनेन Nyāyāmṛ. 212A. 5.

**अतीतादिवस्तु** (atītādi-vastu) *n.* thing of the past etc. अतीतादिवस्त्वनुमाने विषयस्याविद्यमानस्य ज्ञानजनकत्वायोगात् VivaPraSaṁ. 94. 19.

**अतीतादिविकल्प** (atītādi-vikalpa) *m.* concept in relation to past etc. तयोर्भावेऽप्यतीतादिविकल्पो यः प्रवर्तते TattvSaṁ. 1932.

**अतीतादिविभाग** (atītādi-vibhāga) *m.* the division such as past and others) कालेऽप्यतीतादिविभागः NyāyRa. 807. 17 (*on* 6. 305) = YuktiSnoh. 150. 20 (*on* i. 1. 6)

**अतीतादिविशेषणक** (atītādiviśeṣaṇa-ka) *adj.* having past etc. as a qualifying adjunct अतीतादिविशेषणकं ज्ञानम् GuruCandr. i. 233. 14.

**अतीतादिविषय** (atītādi-viṣaya) *m.* object which is past etc. कथमिन्द्रियाण्यतीतादिविषयसाक्षात्काराय कल्पेरन् ĪśvaSi.(Yā.) 70. 23; तस्य चातीतादिविषयसाध्यप्रयोजनज्ञानं चित्तम् VedāntKa. 151. 20 (*on* i. 3. 8); अन्यथा अतीतादिविषयस्मृत्यनुमानादिभङ्गप्रसङ्गात् SatDū. 197. 17; अतीतादिविषयानुमित्यादिव्यावर्तकत्वं च प्रमेयस्य न स्यात् NyāySu.(Ja.) 48A. 5 (*on* i. 1. 1); न द्वितीयः । अतीतादिविषयप्रमाणाव्याप्तेः NyāySu (Ja.) 247B. 11 (*on* ii. 1. 2); तथा अतीतादिविषयावच्छेदेन ज्ञानस्य ··· तादृशसम्बन्धाभावसिद्धिः GuruCandr. ii. 71. 20; प्रमाया अतीतादिविषये विषयित्वासंभवः LaCandr. 446. 21; [Loc.] in case of past etc. सोऽयं देशकालविप्रकर्षः ··· अतीतादिविषये ज्ञानस्य तदीयकालिकाधिकरणतानवच्छेदकत्वरूपः LaCandr. 463. 27; *adj.* having 'past' etc. for its object नातीतादिविषयस्य प्रत्यक्षतोपपत्तिः Kāśi. i. 123. 6 (*on* 2. 115); अतीतादिविषयस्य निरालम्बनतापातश्च NyāySu.(Ja.) 42B. 5 (*on* i. 1. 1)

**अतीतादिविषयक** (atītādiviṣaya-ka) *adj.* having past etc. as its object इदानीमतीतादिविषयकमित्यादिव्यवहारानुपपत्तिः GuruCandr. i. 233. 14.

**अतीतादिविषयत्व** (atītādiviṣaya-tva) *n.* the state of being the past and other objects of knowledge अवश्यं चैतदनुमन्तव्यम्, अतीतादिविषयत्वानुरोधात् NyāyKuA. ii(2). 12. 6.

**अतीतादिविषयीभाव** (atītādi-viṣayībhāva) *m.* becoming of the past things etc. as object (of knowledge) अतीतादिविषयीभाववत् परचित्तमपि विषयीभवतीत्यभ्युपगन्तव्यम् Bhāsk. i. 172. 14 (*on* i. 4. 5)

**अतीतादिवृष्टि** (atītādi-vṛṣṭi) *f.* past rain etc. नदीपूरनयनसन्निकर्षे अतीतादिवृष्टिविज्ञानं भवति Kāśi. i. 211. 2 (*on* 4. 2)

**अतीतादिव्यवहार** (atītādi-vyavahāra) *m.* usage as *past* etc. तदुपाधेरेवातीतादिव्यवहारहेतुत्वोपपत्तौ कालापलापप्रसङ्गात् TattvPradī.(Ci.) 321. 11; अतीतादिव्यवहारहेतुः कालः TarkSaṁ.(A.) 11. 23; कालस्त्वतीतादिव्यवहारहेतुः GoviBh. 134. 2 (*on* ii. 2. 33)



**अतीतादिव्यावर्तिका** (atītādi-vyāvartikā) *adj.* (*f.*) excluding the past etc. कृत्युद्देश्यतैवेष्टोपायस्यातीतादिव्यावर्तिका NayaVi. 39. 3 (*on* i. 1. 2)

**अतीतादिव्यावृत्ति** (atītādi-vyāvṛtti) *f.* I exclusion of past (deeds) etc. वर्तमाननिर्देशादतीतादिव्यावृत्तिमात्रं व्यवसीयते ViraMi. (Vyavahāra.) 136. 29; II distinction from the past etc. अनेनैवातीतादिव्यावृत्तिसिद्धावहीन इति व्यर्थम् LaŚabdeŚe. ii. 1046. 2.

**अतीतादिशरीर** (atītādi-śarīra) *n.* past body etc. नाप्यतीतादिशरीरेष्विव शरीरभेदस्तत्र तन्त्रम् Nyāyāmṛ. 580A. 9.

**अतीतादिसंविद्** (atītādi-saṁvid) *f.* consciousness of the *past* etc. अतीतादिसंविदामर्थसद्भावसिद्धेः VedāntKa. 19. 11 (*on* i. 1. 1)

**अतीतादिसाध्य** (atītādi-sādhya) *n.* past probandum etc. अतीतादिसाध्ये ··· तदवच्छिन्नविषयत्वस्य सत्त्वात् LaCandr. 672. 32.

**अतीतादिसुख** (atītādi-sukha) *n.* past happiness etc. अतीतादिसुखे मानसत्वारणासंभवाच्च LaCandr. 783. 32.

**अतीतादिस्मृति** (atītādi-smṛti) *f.* recollection of the past (things) etc. अतीतादिस्मृत्यादेर्दुःखादिजनकत्वेऽपि अतीतादेस्तदजनकत्ववत् AdvaiSi. 444. 20; अतीतादिस्मृत्यादेर्दुःखादिकं प्रति ··· हेतुत्वेऽपि Nyāyāmṛ. 180B. 5.

**अतीताद्यनुमान** (atītādy-anumāna) *n.* inference of past thing etc. अतीताद्यनुमाने ज्ञानसिद्धिर्न स्यात् ŚāstrDi. 52. 16 (*on* i. 1. 5)

**अतीताद्यभिधा** (atītādy-abhidhā) *f.* signification such as past etc. नासावेव विकल्पो हि तमर्थं प्रतिपद्यते । अतीताद्यभिधात्यागात्तन्नामघटनाश्रितः TattvSaṁ. 1244.

**अतीताद्यभिधान** (atītādy-abhidhāna) *n.* concept as past etc. कः पुनर्भावस्तेनेष्टः । गुणविशेषः यतोऽतीताद्यभिधानज्ञानप्रवृत्तिः TattvSaṁPañ. 504. 13 (*on* 1788)

**अतीताद्यर्थ** (atītādy-artha) *m.* objects like the past यथेष्टचरितं ज्ञानमतीताद्यर्थगोचरम् SarvaSiSaṁ. 10. 66; लक्ष्यज्ञानशब्देन लक्ष्यकर्मकं स्फुरणं किं वा तद्विषयम् ··· विवक्ष्यते । नाद्यः । अतीताद्यर्थलक्षकपदेषु व्यभिचारात् TattvPradī.(Ci.) 19. 4.

**अतीताद्यसंबन्ध** (atītādy-asambandha) *adj.* absence of relation with past etc. अतीतादिनिष्ठस्य ज्ञानादिसंबन्धस्य ज्ञानादिमत्कालो नावच्छेदकः अतीताद्यसंबन्धात् GuruCandr. ii. 72. 5.

**अतीताद्याकारा** (atītādy-ākārā) *adj.* (*f.*) of the form of (the things of) past etc. द्वयी ह्युपायधीः अतीताद्याकारा कार्याकारा च NayaVi. 39. 3 (*on* i. 1. 2)

**अतीताधिकमास** (atītādhikamāsa) *m* the last intercalated month अतीताधिकमासादारभ्य द्वात्रिंशन्मासादुपरि षोडशदिनेषु घटिकाचतुष्टयाधिकेषु गतेष्वधिमासो भवति SmṛtiCan. v. 103. 19.

**अतीताधिकरण** (atītādhikaraṇa) *n.* preceding topic or section एवंशब्देनातीताधिकरणत्रयात्मकपेटिकाद्वयकृतनिरसनप्रकारो विवक्षितः ŚrutaPra. ii. 159. 18 (*on* i. 4. 23); अतीताधिकरणे व्यवहारमभ्युपेत्य चेतनाचेतनव्यवहारो निरूपितः TattvPrakā. 87B. 5 (*on* ii. 1. 18); अतीताधिकरणे निर्णयः कृतः NyāySu.(Ja.) 146B. 2 (*on* i. 1. 7); अतीताधिकरणद्वयेन 'युगपत्सर्वं ब्रह्मणे समर्पयेत्' इत्युक्तम् NyāyMāVi. 496. 19 (*on* x. 2. 6); अतीताधिकरणे पूर्वपक्षतया शङ्काद्वयं प्रसक्तम् SivārkaMaDi. i. 535. 3 (i. 4. 16)

**अतीताधिकार** (atītādhikāra) *m.* scope of the condition *atīta* (Kātan. iv. 3. 81) (in the sense of past) अतीताधिकारः किम् । श्रुसदवसामतीतमात्रे क्वन्सुरभिधातव्यः KātanVṛ. *on* iv. 4. 1.

**अतीताध्याय** (atītādhyāya) *m.* preceding chapter अतीताध्यायान्ते भावानां लक्षणं रसलक्षणमेव AbhinBhā. i. 343. 5 (*on* 7. 1); अस्याध्यायस्यातीताध्यायेन ···संगतिः सूचिता NyāySu.(Ja.) 229B. 10 (*on* ii. 1. 1); अतीताध्यायार्थस्य कारणत्वमेतदध्यायार्थस्य कार्यत्वम् NyāySu.(Ja.) 229B. 12 (*on* ii. 1. 1)

**अतीताध्वपरिग्रह** (atītādhva-parigraha) *m.* accepting the status (*lit.* path) of the past लक्षणपरिणामो यथा तस्यैव घटस्यानागताध्वपरित्यागेन वर्तमानाध्वस्वीकारः । तत्परित्यागेनातीताध्वपरिग्रहः RājMār. 47. 1.

**अतीताननुसंधान** (atītānanusandhāna) *n.* no consideration for the past अतीताननुसंधानं भविष्यदविचारणम् ।··· जीवन्मुक्तस्य लक्षणम् ViveCū. 434.

**अतीतानन्तकल्प** (atītānanta-kalpa) *m.* endless past periods of time अतीतानन्तकल्पेषु ··· संसारो न कस्यचित् स्यात् NyāyMa. 332. 12.

**अतीतानन्तकाल** (atītānanta-kāla) *adj.* of endless past time अतीतानन्तकाले संसारसागरे भ्रमितोऽयं जीवः TātpaVṛ. 197. 7 (*on* 2. 47); *m.* endless past time अतीतानन्तकाले दुर्लभायाः -- सिद्धगतेः काललब्धिरूपेण बहिरङ्गसहकारी भवति कालः TātpaVṛ. 203. 18 (2. 51)

**अतीतानन्तर** ( atītānantara ) *adj.* [in Cpd.] immediately preceding अतीतानन्तरजन्मनि मर्कटत्वमेव आसीत्तस्य ChāndoUBh. 301. 16 (*on* v. 10. 5); अतीतानन्तरोपाधिजनिता सा, न स्वाभाविकी BrahmSūBh.(S'aṅ.) 53. 12 (*on* i. 1. 12); अतीतानन्तरवाक्यनिर्दिष्टो यो ब्रह्मलोकः···सोऽत्र जीवघन इत्युच्यते BrahmSūBh.(S'aṅ.) 163. 11 (*on* i. 3. 13); इदं च पूर्वमेवोपन्यस्तम् अतीतानन्तरब्राह्मणसमाप्तौ BṛĀraUBh. 569. 14 (*on* iv. 3. 21); अतीतानन्तरश्लोकेन उक्तमर्थं परामृशति GītāBh.(S'aṅ.) 339. 14 (*on* 12. 1); स सदृशसंतानजननस्वभावो घटक्षणत्वात् अतीतानन्तरघटक्षणवत् BrahmSūBh.(Bhā.) 119. 17 (*on* ii. 2. 20); अतीतान्तरसूत्रोपक्रमे वर्णितं तत् VedāntKa. 162. 10 (*on* i. 3. 14); अतीतानन्तरभाष्ये च न स एव पुनरुत्थातुमर्हतीत्यभिहितत्वात् VedāntKa. 371. 3 (*on* iii. 2. 9)

**अतीतानागत** ( atītānāgata ) *adj.* (belonging to the) past and future अतीतानागता भावा ये च वर्तन्ति सांप्रतम्। तान् कालनिर्मितान् बुद्ध्वा न संज्ञां हातुमर्हसि MahāBhā. i. 1. 190; कीर्तनात् सुखमेधते। अतीतानागतानां वै महर्षीणां सदा नरः HariVaṁ. 7. 46; अतीतानागताश्चैते मनवः परिकीर्तिताः MatsyaP. 9. 37; पितृणां मानुषाणां वै अतीतानागतेषु च। मन्वन्तरेषु सर्वेषु निमित्तानि भवन्ति हि BrahmāṇḍP. i. 8. 26; i. 23. 36; i. 29. 78; प्रत्यक्षादन्यविज्ञानमतीतानागतैरपि (अर्थैः)। जन्यते S'lokaVār. 5(3). 202 (326. 1); न ततः पूर्वापरौ क्षणावतीतानागतौ भवतः NyāyMañ. ii. 35. 11; ii. 34. 27; न चातीतानागताभ्यां लक्षणाभ्यां वियुक्तम् YogBh. 127. 6 (*on* 3. 13); लक्षणं प्रोक्तं युगानां वै समासतः। अतीतानागतानां वै KūrmaP. 309. 5 (1. 30); 428. 2 (1. 51); TātpaṬ.(Vā.) 87. 25 (*on* i. 1. 2); LiṅgaP. i. 40. 94; देवीपुराणे ··· अतीतानागतो भोगः CaturCin. iii(1). 231. 13; अतीतानागते कार्ये BhāvPra.(S'ā.) 202. 10 (7); TattvCin. i. 844. 12; अनुमानशब्दादिषु ज्ञानस्य न प्रमेयजन्यत्वनियमः अतीतानागतवस्तुज्ञानेषु तदसंभवात् VivaPraSaṁ. 319. 16; सामान्यं चातीतानागतविशेषेष्वेकमेव NyāySu.(Ja.) 493A. 11 (*on* iii. 2. 1); SiddhāBi. 37. 1; अतीतानागतगवादौ व्यभिचारमुद्भाव्य गोत्वादेर्ज्ञाने तदङ्गीकुर्वन्ति तार्किकाः LaCandr. 419. 14; 344. 23; 445. 39; LalitāSaBh. 21. 3 (*on* 52); अतीतानागतानां पदानां वृत्त्यनाश्रयतया वृत्त्याश्रयत्वेन ज्ञानस्य दुरुपपादत्वम् VaiyāSiMañ. 150. 3; *n.* (rarely) *m.* [sg. du; rarely pl.] the past and the future (time, event, object) अतीतानागते विद्वान् ···। अन्वशासत् सः ··· भरतर्षभान् MahāBhā. iii. 155. 23; इन्द्रियेभ्यश्च पञ्चभ्यो मनसश्चैव भारत। अतीतानागतेभ्यश्च मुक्तो ह्येतैः सुखी भवेत् MahāBhā. v. 43. 21; (दिव्यं मे प्राप्तम्) परचित्तस्य विज्ञानमतीतानागतस्य च MahāBhā. vi. 16. 8; vii. 122. 39; अतीतानागतं स्वरूपतोऽस्त्यध्वभेदाद् धर्माणाम् YogSū. 4. 12; नातीतानागतयोरितरेतरापेक्षा सिद्धिः NyāySū. ii. 1. 42; यद्यतीतानागतावितरेतरापेक्षौ सिध्येतां प्रतिपद्येमहि वर्तमानविलोपम् NyāyBh. 109. 5 (*on* ii. 1. 42); यथा त्वद्यत्वे भोक्तृभोग्ययोर्विभागो दृष्टः तथातीतानागतयोरपि कल्पयितव्यः BrahmSūBh.(S'aṅ.) 306. 19 (*on* ii. 1. 13); तथा चातीतानागतमात्रदर्शनाद् वर्तमानाभावेन न त्रैकाल्यविषयमनुमानम् TātpaṬ.(Vā.) 406. 5 (*on* ii. 1. 39); (स्निह्यत्कटाक्षे दृशौ) अत्र ··· शतृप्रत्ययः क्रामम्यतीतानागतविभ्रमविरहिताम् ··· प्रस्तुतौचित्यविच्छित्तिं समुल्लासयन् ··· प्रत्ययवक्रतामावहति VakroJī. 109. 10.

**अतीतानागतकाल** ( atītānāgata-kāla ) *m.* the past and the future times नासौ क्रियावच्छेदलक्षणः प्रकारोऽतीतानागतकाले वर्तते KhaṇḍanKhā. 1241. 12; तस्मात् ··· अतीतानागतकालतत्संबन्धिपदार्थानां च ग्रहणम् ··· परैणैवेष्टव्यम् NyāySū.(Ja.) 493A. 8 (*on* iii. 2. 1)

**अतीतानागतगोचर** ( atītānāgata-gocara ) *adj.* having for its range the past and the future नदीपूरस्य पिपीलिकाण्डसंचरणस्य चातीतानागतवर्षलिङ्गस्य शब्दस्यातीतानागतगोचरस्यार्थसहकारिताविरहिणोऽप्रमाणत्वप्रसङ्गात् TātpaṬ.(Vā.) 20. 24 (*on* i. 1. 1)

**अतीतानागतज्ञ** ( atītānāgata-jña ) *adj.* [*f.* -ā] knowing the past and the future भवानपि ··· नः पितामहः। अतीतानागतज्ञश्च HariVaṁ. 115. 22; तस्याः ··· सोमिका नाम सारिका अतीनानागतज्ञा बभूव VetāPañ. 72. 42.

**अतीतानागतज्ञान** ( atītānāgata-jñāna ) *n.* knowledge of the past and the future परिणामत्रयसंयमादतीतानागतज्ञानम् YogSū. 3. 16; RājMār. 48. 11; आविर्भूतप्रकाशानामनुपप्लुतचेतसाम्। अतीतानागतज्ञानं प्रत्यक्षान्न विशिष्यते VākyaP. 1. 37 = Pradī. v. 261A. 40 (*on* vi. 3. 109); योगिनां चातीतानागतज्ञानस्य सत्यत्वात् BṛĀraUBh. 18. 18 (*on* i. 2. 1); अदृष्टमप्यतीतानागतज्ञानं कल्प्यम् NyāyMañ. ii. 34. 30; अतीतानागतज्ञानं मिथ्येशस्य प्रसज्यते BṛĀraUBhVā. i. 2. 109; अतीतानागतज्ञाननिधिर्मुनिरुवाच तम् SkandP. ii(2). 22. 17; स सम्यक् पालयामास प्रजाः ···। अतीतानागतज्ञानपरिनिष्ठितमानसः SkandP. v(2). 73. 3; KhaṇḍanKhā. 1054. 16; AnuVyā. 56A. 5 (*on* 3. 4); VaiyāBhū. 100. 23 (*on* 24); अतीतानागतज्ञानविषये का गतिः।···ज्ञानेन विषये प्राकट्यजननायोगात् SarvaDaKau. 32. 19; *adj.* having knowledge of the past and the future अतीतानागतज्ञानो वसिष्ठो गुरुरेव नः PadmP. vi. 198. 15.

**अतीतानागतज्ञानिन्** ( atītānāgatajñānin ) *adj.* who knows the past and the future पाराशर्यो महामुनिः। अतीतानागतज्ञानी GaṇeP. i. 10. 1; ii. 141. 33.

**अतीतानागतत्व** ( atītānāgata-tva ) *n.* A the state of being past and future विद्यमान एव देवदत्ते तद्गवीनामतीतानागतत्वप्रतिपादनाय 'गोमानासीत्', 'गोमान् भविता' इति प्रयुज्यते Pradī. iv. 342A. 31 (*on* v. 2. 94); नाप्यद्भुतदर्शनादतीतानागतत्वप्रत्यक्षत्वप्रतीतेः काव्यलिङ्गमिदम् AlaṅkāSa. 180. 6; निमित्तत्वे चार्थक्रियाकारित्वेन सत्त्वादतीतानागतत्वक्षतिः SyādvāMañ. 16 (142); B the state of being past and future (time) नित्यमेकं विभु द्रव्यं यदि कालोऽभ्युपेयते। अतीतानागतत्वादिभेदः स्यात् किंनिबन्धनः BṛĀrāUBhVā. ii. 1. 406; यदि तु वर्तमानत्वाभावादतीतानागतयोरसत्त्वं हन्त भो वर्तमानस्याप्यभावोऽतीतानागतत्वाभावात् TattvVai. 194. 12 (*on* 4. 12)

**अतीतानागतधी** ( atītānāgata-dhī ) *f.* cognition of the past and the future ज्ञानीयं फलं ज्ञातता वा व्यवहारो वा। आद्येऽतीतानागतधीभ्रमाद्यर्थव्याप्तिः KhaṇḍanKhā. 1124. 19.

**अतीतानागतपर्याय** ( atītānāgata-paryāya ) *m.* past and future modification अतीतानागतपर्याया वर्तमानज्ञाने साम्प्रता इव दृश्यन्ते TātpaVṛ. 49. 18 (*on* 1. 37); 50. 13 (*on* 1. 37)

**अतीतानागतप्रतिपत्ति** ( atītānāgata-pratipatti ) *f.* cognition of the past and the future उपाध्यवच्छिन्नस्यातीतानागतप्रतिपत्तिविषयत्वम् KhaṇḍanKhā. 1241. 4.

**अतीतानागतप्रतीति** ( atītānāgata-pratīti ) *f.* knowledge of the past and the future अतीतानागतप्रतीतिकालेऽपि क्रियावच्छिन्नः प्रतीयते KhaṇḍanKhā. 1238. 4; 1241. 9.

**अतीतानागतप्रत्यय** ( atītānāgata-pratyaya ) *m.* knowledge of the past and the future प्रागुत्पत्तेरपि सदेव कार्यम्। अतीतानागतप्रत्ययभेदाच्च BṛĀraUBh. 18. 15 (*on* i. 2. 1)

**अतीतानागतप्रमा** ( atītānāgata-pramā ) *f.* true knowledge of the past and the future विषयता च विषये न ज्ञानाहिता ज्ञाततारूपा विवक्षितापसिद्धान्तादसिद्धेः अतीतानागतप्रमायां तदभावाच्च TattvCin. i. 388. 1.

**अतीतानागतवर्तमान** ( atītānāgata-vartamāna ) *adj.* (belonging to the) past, future and present योगप्रवृत्तेरतीतानागतवर्तमानतत्त्वदर्शनं भवति BhagAjju. 45 (13). 3; स्वभावत एवातीतानागतवर्तमानार्थग्रहणशक्त आत्मा TātpaṬ.(U.) 79. 15 (*on* 2. 141); न च शक्यन्तेऽतीतानागतवर्तमानास्तार्किका एकस्मिन् देशे काले च समाहर्तुम् BrahmSūBh.(S'aṅ.) 304. 14 (*on* ii. 1. 11); 304. 18 (*on* ii. 1. 11); TātpaṬ.(Vā.) 184. 18 (*on* i. 1. 5); अतीतानागतवर्तमानपर्यायपरंपरानुसंधायकं चान्वयि द्रव्यम् SyādvāMañ. 19 (36); PrabaCin. 56. 22; TattvCin. iii. 51. 3; अतीतानागतवर्तमानं सर्वमपि लिङ्गमनेन साध्येन व्याप्तम् NyāySu.(Ja.) 495A. 5 (*on* iii. 2. 1); YogSūVṛ. *on* 1. 49; *n.* the past, the future and the present तत्र धर्मस्य धर्मिणि वर्तमानस्यैवाध्वस्वतीतानागतवर्तमानेषु भावान्यथात्वं भवति, न तु द्रव्यान्यथात्वम् YogBh. 128. 4 (*on* 3. 13); यद्येकः कालः कथमतीतानागतवर्तमानभेदेन व्यवह्रियते Kiraṇā. 120. 10; 321. 3; Upask. iii. 15 (*on* ii. 2. 8)

**अतीतानागतवर्तमानता** ( atītānāgatavartamāna-tā ) *f.* the state of being the past, the future and the present यद्येकः कालः कथमतीतानागतवर्तमानभेदेन ( v. l. °वर्तमानतया ) व्यवह्रियते Kiraṇā. 120. 10.

**अतीतानागतवस्तु** ( atītānāgata-vastu ) *n.* past or future thing तथाप्यतीतानागतवस्तुविषयज्ञानं न सिद्ध्यति S'ivārkaMaDī. i. 160. 11 (*on* i. 1. 3)

**अतीतानागतविद्** ( atītānāgata-vid ) *adj.* who knows the past and the future परिपृच्छामो मुनिं कञ्चिदिहागतम्। अतीतानागतविदम् GaṇeP. i. 54. 10; अतीतानागतविदां महतां श्रुतिसंवादिनो देवप्रभवनियमग्राहकप्रत्यक्षस्य सत्त्वात् TattvPrakā. 56A. 12 (*on* i. 3. 28)

**अतीतानागतविषय** ( atītānāgata-viṣaya ) *adj.* pertaining to the past and the future यदि चातीतानागतविषयं तदुच्यते तदा तत एवाभिलापस्मृतादिवत्तेषां तत्प्रत्यक्षमेव न भवति TātpaṬ.(U.) 127. 13 (*on* 4. 30); यत्प्रसादाद्धि योगिनामपि अतीतानागतविषयं प्रत्यक्षं ज्ञानमिच्छन्ति योगशास्त्रविदः BrahmSūBh.(S'aṅ.) 39. 3 (*on* i. 1. 5); अतीतानागतविषयेष्विष्टसाधनज्ञानेषु प्रवर्तकत्वव्यभिचारात् TattvPradi.(Ci.) 92. 6; *m.* past or future thing अतीतानागतविषयग्रहणस्मरणेषु ··· प्रागेव विदितत्वप्रतीतेः नानुमानिकी तत्र विषयसिद्धिः SiddhiTra. 18. 8; चित्तं चेतयितृत्वम् ··· अतीतानागतविषयप्रयोजननिरूपणसामर्थ्यं च तत्संकल्पादपि भूयः ChāndoUBh. 429. 7 (*on* vii. 5. 1)

**अतीतानागतविषयता** ( atītānāgataviṣaya-tā ) *f.* the state of having past and future object नातीतानागतविषयतया प्रत्यक्षानुपपत्तिं ब्रूमः अपि त्वतीतानागताधारतयेत्यर्थः TātpaṬ.(Vā.) 407. 21 (*on* ii. 1. 42)

**अतीतानागतविषयत्व** ( atītānāgataviṣaya-tva ) *n.* the state of being

a past or future object of knowledge अतीतानागतविषयत्वेन योगिप्रत्यक्षे विद्यमानोपलम्भनत्वस्यासिद्धत्वमाशङ्क्य तत्परिहारार्थम् ... सत्संप्रयोगग्रहणमर्थवद्भवति TātpaṬ.(U.) 126. 16 (*on* 4. 26); अतीतानागतविषयत्वं च विज्ञानस्य न स्यात् अतीतानागतयोरसत्त्वेनाकारणत्वात् TātpaṬ.(Vā.) 87. 24 (*on* i. 1. 2)

**अतीतानागतवृष्टि** (atītānāgata-vṛṣṭi) *f.* past and future rain अस्ति हि तस्यापि नदीपूरजलदचक्षुःसन्निकर्षः न चातीतानागतवृष्टिपरिचयो भवति Kāśi. i. 211. 10 (*on* 4. 21); नन्वतीतानागतवृष्टिविषयकज्ञानोत्पत्तिस्थले सत एव वृष्टिरूपविषयस्य स्वज्ञानजनकत्वदर्शनात् तथापि संभाव्यमिति चेन्न VedāntRaMañ. 1. 4 (66. 20)

**अतीतानागतव्यपदेश** (atītānāgata-vyapadeśa) *m.* designation or term as the past and future गुणधर्मस्य च प्रधान आरोपादासीद्भविष्यतीति प्रत्यार्थस्यातीतानागतव्यपदेश इति चोदको मन्यते Pradi. iv. 342A. 34 (*on* v. 2. 94)

**अतीतानागतादि** (atītānāgatādi) *adj.* past, future etc. अतीतानागताद्यर्थज्ञानोत्पत्तौ च हेतुताम् । योगिनां मन एव स्यात् BṛĀraUBhVā. i. 4. 87; न हि क्षणलवादिवद् वर्षादिवद्वातीतानागतादयोऽपि उपाधिभेदाः सन्ति Kiraṇā. 120. 11; NyāyVi. 2. 177; न तर्हि वर्तमानसामान्यज्ञानेऽप्यतीतानागतादिज्ञानम् NyāyKuA. ii(2). 13. 2; असाधारणकारणत्वं पदानां, तदर्थानां त्वतीतानागतादिरूपतया कारणत्वमेव नास्ति NyāyVārPari. 312. 7; योगिज्ञानम्...अतीतानागतादिविषयमपि कल्पनापोढत्वात्प्रत्यक्षमेव NyāyRa. 160. 19 (*on* 4. 85); विद्यमानोपलम्भनत्वमेवासिद्धं, योगिनां मुक्तात्मनां चातीतानागतादिविषयज्ञानोत्पत्तेः Kāśi. i. 213. 21 (*on* 4. 28)

**अतीतानागताधारता** (atītānāgatādhāra-tā) *f.* the state of being a locus of the past and future नातीतानागतविषयतया प्रत्यक्षानुपपत्तिं ब्रूमः अपि त्वतीतानागताधारतया TātpaṬ.(Vā.) 407. 22 (*on* ii. 1. 42)

**अतीतानागतानुमान** (atītānāgatānumāna) *n.* inference of the past and future न च विषयोऽपि ज्ञप्तिसामग्र्यनुप्रविष्ट इति वाच्यम्, अतीतानागतानुमानादिषु तदयोगात् SatDū. 133. 9; आद्ये अतीतानागतानुमानादिकरणव्याप्तिः KhaṇḍanKhā. 514. 6.

**अतीतानागतानुमिति** (atītānāgatānumiti) *f.* inference of the past and future यदैवार्थस्तदा ज्ञानम् ... नाद्यः, अतीतानागतानुमित्याद्यव्यापनात् KhaṇḍanKhā. 428. 13.

**अतीतानागतानुरोध** (atītānāgatānurodha) *m.* [Abl.] in accordance with the past and future न तथैनिष्ठं ज्ञानसंबन्धित्वं, अतीतानागतानुरोधात् GuruCandr. i. 231. 16.

**अतीतानागताभिज्ञता** (atītānāgatābhijña-tā) *f.* the nature of knowing the past and future सर्वसर्वज्ञतापत्तिरतीतानागताभिज्ञतापत्तिश्चेत्यपि द्रष्टव्यम् NyāyVārPari. 417. 2.

**अतीतानागतार्थ** (atītānāgatārtha) *m.* event of the past or future, past and future things कुतो भवेत् । व्यपदेशो विना योगमतीतानागतार्थयोः BṛĀraUBhVā. iv. 3. 684; न चातीतानागतार्थगोचरायाः संविदोऽर्थसद्भावोऽपि Bhām. 20. 16 (*on* i. 1. 1); योगिनां चातीतानागतार्थग्रहणे किमर्थस्य निमित्तत्वम् PramāMī. 20. 3 (*on* i. 1. 25); (रुद्रशक्तिं परां शृणु) अतीतानागतार्थस्य कुर्याद्यः कथनादिकम् MāliniT. 3. 54; अतीतानागतार्थेषु जाते शक्तिग्रहेऽखिलम् । विशेषं ज्ञापयेद्वाक्यम् AnuVyā. 41A. 1 (*on* 3. 2); योगिनां चातीतानागतार्थग्रहणे किमर्थस्य निमित्तत्वम् । तयोरसत्त्वात् SyādvāMañ. 16 (139); योगिनामिन्द्रियैर्णैवातीतानागतार्थसाक्षात्कारः NyāySū.(Ja.) 277B. 8 (*on* ii. 1. 2); न च साक्षिप्रत्यक्षेण सर्वज्ञता ... अतीतानागतार्थग्राहित्वाभावात् VivaPraSaṁ. 258. 4; अतीतानागतार्थानां हेतुत्वासंभवात् ... लिङ्गस्येव ज्ञानसंबन्धेनार्थस्य हेतुत्वं वा बोध्यम् LaCandr. 702. 22.

**अतीतानागतार्थज्ञ** (atītānāgatārtha-jña) *adj.* who knows the past and future objects अतीतानागतार्थज्ञो वर्तमानविचक्षणः Rāmā. vi. 111. 70 (GPP. Ed.)

**अतीतानागतावस्थ** (atītānāgatāvastha) *adj.* relating to the past and future states यच्चेदमिष्यते रूपं दाहपाकादिकार्यकृत् । अतीतानागतावस्थं किं तदेवाभ्युपेयते TattvSaṁ. 1811; असतो जनकत्वसंभवादतीतानागतावस्थासत्त्वधर्मांश्रयत्वेनैवाभ्युपगमात् AdvaiSi. 405. 14.

**अतीतानागतावस्था** (atītānāgatāvasthā) *f.* past and future states निवृत्तिश्च न नाशोऽपि त्वतीतावस्था, ध्वंसप्रागभावयोरतीतानागतावस्था स्वरूपत्वात् सत्कार्यवादिभिरभावानङ्गीकारात् SāṁkhyaPraBh. 6. 22 (*on* 1. 1)

**अतीतानागतास्तित्ववादिन्** (atītānāgatāstitva-vādin) *m.* upholder of the theory of the existence of the past and future यदि धर्मेऽतातोऽतीतानागतास्तित्ववादी स इति न सौत्रान्तिकः Sphuṭā. i. 50. 12 (*on* 1. 20)

**अतीतानागतेहत्य** (atītānāgatehatya) *adj.* past, future and present अतीतानागतेहत्यजन्मनाशादिहेतुतुत् । यस्तु धीपूर्वको ध्वंसस्तदर्थेयं परा श्रुतिः BṛĀraUBhVā. ii. 4. 399.

**अतीतानुभव** (atītānubhava) *m.* past experience नापि संभूय तत्तात्वकम्, अतीतानुभवस्य वर्तमानस्मृतेश्च यौगपद्यायोगात् VivaPraSaṁ. 96. 3; तस्मादतीतानुभवकालः...अपेक्षणीयः PratyabhiVi. i. 157. 5 (i. 4. 2); एकस्य समानविषयत्वं अतीतानुभवकालावच्छिन्नवस्तुविषयत्वाद्यन्यस्य TārkiRa. 27. 5; अतीतानुभवविषयत्वस्यानुभवाविषयत्वेन स्मृत्या तदुल्लेखानुपपत्तेश्च TattvCin. i. 840. 14; अतीतानुभवव्याघृत्यर्थं वर्तमानदशायामित्युक्तम् SrutaPra. iA. 134. 23 (*on* i. 1. 1); तद्सत्कर्मणो भोगादतीतानुभवस्मृतेः । स्थितिर्निरन्वये नाशे न स्मृतेर्नापि कर्मणः MṛgendraT. i. 2. 25.

**अतीतानुसंधान** (atītānusandhāna) *n.* recollection of the past स्मृतेः अतीतानुसन्धानरूपायाः हेतुः परिणामिकारणं संस्कार इति यावत् PramāMī. 22. 2 (*on* i. 1. 29)

**अतीतानुस्मृति** (atītānusmṛti) *f.* remembrance of the past मेधा अतीतानुस्मृतिः । तथा चोक्तम् – अतीतानुस्मृतिर्मेधा तत्कालग्राहिणी मतिः ViraMi. (Lakṣaṇa) 79. 5.

**अतीतानेकजन्मन्** (atītāneka-janman) *n.* past several births अतीतानेकजन्मकृतानि च तान्येव सर्वाणि भस्मसात् कुरुते GitāBh.(Śaṅ.) 144. 15 (*on* 4. 37)

**अतीतानेकभव** (atītāneka-bhava) *m.* past several existences or births इह खलु तावदतीतानेकभवपरंपरासमर्जितसुकृतसंपदावर्जितभगवदनुग्रहासादितसत्त्वप्रसादतया पुरुषार्थकाष्ठामभिलषन् SiddhāSi. i. 3. 14.

**अतीतान्त** (atītānta) *adj.* that has gone beyond (both) the extremes रूपं न नित्यं नानित्यमतीतान्तं विशुद्धकम् । अनुत्पन्नानिरुद्धानि व्योमाभं लेपवर्जितम् AbhisaAlaṅ. 3. 12.

**अतीतान्तेत** (atītānteta) *adj.* who has reached (emancipation) which is beyond the (two) extremes (of pleasure and pain etc.) अतीतान्तेत एतां ते तन्तन्तु ततताततिम् NemiC. 12. 37.

**अतीतापद्** (atītāpad) *adj.* gone beyond calamities, free from calamities तं नेमिं नमः ... चक्रे यदूनां च यः ... राजीमतीतापदम् CaturJiStu. 85.

**अतीतापाश** (atītā-pāśa) *m.* fetters of the *kalā* known as *śāntyatītā* रेचकेनातीतापाशात् संहृत्य ĪśānSiPa. ii. 18. 112 (12) (183. 27)

**अतीतापेक्षा** (atītāpekṣā) *adj.* (*f.*) depending on the past नातीतापेक्षानागतसिद्धिः नाप्यनागतापेक्षातीतसिद्धिः NyāyBh. 109. 6 (*on* ii. 1. 42)

**अतीताभाव** (atītābhāva) *n.* absence in the past time नासीदत्र देवदत्तः इति ज्ञानमुत्पद्यमानमतीताभावग्राहकत्वेन कथमक्षजं स्यात् TātpaṬ.(U.) 416. 20 (*on* 5(9). 28)

**अतीताभिधायिन्** (atītābhidhāyin) *adj.* expressive of the past अतीताभिधायिनोऽपि पूर्ववत् प्रयोक्तव्याः KātaoVṛ. *on* iv. 4. 1.

**अतीतारम्भकाला** (atītārambhakālā) *adj.* (*f.*) the (proper) time of commencement of which is over अतीतां अतीतारम्भकालां उपासीत (सन्ध्याम्) ViraMi. 78. 2 (*on* 1. 24)

**अतीतार्थ** (atītārtha) *m.* I past object, thing or event in the past सर्वदा चापि पुरुषाः प्रायेणानृतवादिनः । यथाद्यत्वे न विस्रम्भस्तथातीतार्थकीर्तने SlokaVār. 2. 144 (88. 6); TattvSaṁ. 2793; 3286; अक्षबुद्धिरतीतार्थं वेत्ति Laghīya. 1. 45; वर्तमानात्मगं ज्ञानमतीतार्थं स्पृशेत् कथम् BṛĀraUBhVā. i. 4. 459; संतोषस्तस्य सततमतीतार्थस्य चास्मृतिः LiṅgaP. i. 8. 38; अतीतार्थे परस्परया तत्कार्यतयापि शब्दलिङ्गादेरर्थसंबन्धोऽस्ति NyāyVārPari. 157. 9; सोऽयमतीतार्थप्राधान्यादितिहासः SaraKaṇṭhā. 305. 4; पूर्वोदाहरणेष्वतीतार्थकीर्तनेन ... धर्मप्रत्यप्रामाण्यमुक्तम् NyāySu.(So.) 7. 30 (*on* i. 2. 2); प्रत्यक्षं मानसं चैव यदातीतार्थगोचरम् AnuVyā. 41A. 9 (*on* 3. 2); सोऽरोदीदित्यादावप्यतीतार्थकथनेन योग्यानुपलब्ध्यभावान्न स्वार्थसत्यत्वनिश्चयः MimāKau. iii(1). 7. 7 (*on* i. 2. 2); VyutpaVā. 189. 2; II having missed one's aim, object or profit [DBHS]; III meaning of past tense नु प्रश्नेऽनुज्ञयेऽप्यतीतार्थे AnekāSaṁ. 7. 11; प्रश्नातीतार्थयोश्च नु DharK. 2911.

**अतीतार्थक** (atītārtha-ka) *adj.* having the sense of the past प्रागतीतार्थकं नूनमवश्यं निश्चये द्वयम् AgniP. 360. 31 = SabdaRa.(Vā.) 4598.

**अतीतार्थविषय** (atītārtha-viṣaya) *adj.* [*f.* -ā] pertaining to the past object यच्चातीतार्थविषयं मानसमित्युक्तम् PrakaPañ. 143. 1; तथा स्वविन्धात्मन्यसत्त्वातीतार्थविषया स्मृतिर्न कस्यचित् स्यात् Aparā. 1005. 7 (*on* 3. 149)

**अतीतालम्बन** (atītālambana) *adj.* depending upon a past object प्रत्यक्षविज्ञानमपरोक्षतयार्थमवभासयति तत्कथमतीतालम्बनं स्यात् TātpaṬ.(U.) 277. 24 (*on* 5(4). 158); 278. 10 (*on* 5(4). 159)

**अतीतावच्छिन्न** (atītāvacchinna) *adj.* conditioned by the past अतीतावच्छिन्नवस्तुग्रहणं प्रत्यभिज्ञानम् SaptaPa. 167 (49)

**अतीतावस्थ** (atītāvastha) *adj.* belonging to the past state अतीता-

वस्थः प्रत्युत्पन्नावस्थश्च सभागहेतुर्नानागतावस्थः Sphuṭā. ii. 130.6 (*on* 2.52); एवमिन्द्रियस्यापि यद्यतीतावस्थस्यैव व्यापारवतो विषयस्तदा पुरोवर्तिविषयस्फुरणं न स्यात् NyāyVārPari. 610.6; अनागतावस्थानां बीजशक्तिदाह एव ज्ञानादिभिः क्रियते न त्वतीतावस्थानाम् YogSā. 33.8 (2); अतीतावस्थसुखादौ उक्तभेदस्यासत्त्वात् GuruCandr. i. 368.20.

**अतीतावस्था** (atītāvasthā) *f.* past state नन्वतीतावस्थाविशिष्टत्वमस्य नेन्द्रियसंनिकृष्टम् TātpaṬ.(Vā.) 139.15 (*on* i. 1.13); यदि पुरोवर्ती विषयस्तदातीतावस्थास्फुरणं न स्यादेव NyāyVārPari. 610.2; अतीतावच्छिन्न( v. l. अतीतावस्थावच्छिन्न )वस्तुग्रहणं प्रत्यभिज्ञानम् SaptaPa. 167 (49); AdvaiSi. 639.2; निवृत्तिश्च न नाशोऽपि त्वतीतावस्था SāṁkhyaPraBh. 6.22 (*on* 1.1)

**अतीतावस्थातस्** (atītāvasthā-tas) *adv.* from the past state प्रधानव्यापारविषयतया ह्यवान्तरव्यापारविषयतया व्याप्ता सा चातीतावस्थातो निवर्तमाना तामपि निवर्तयति NyāyVārPari. 611.10.

**अतीतावेक्षण** (atītāvekṣaṇa) *n.* observation of prescriptions made only earlier (one of the 36 Tantrayuktis) (अतीतानागतावेक्षास्वसंज्ञोह्यसमुच्चयाः) अतीतावेक्षणं नाम यदतीतमेवोच्यते, यथा सा कुटी तच्च शयनं ज्वरं संशमयत्यपि Cakrapāṇi on CaraS. viii. 12.44 (1941 Ed.)

[**अतीतावेक्षा** (atītāvekṣā) *f.* Cf. अतीतावेक्षण CaraS. viii. 12.44 (1941 Ed.)]

**अतीताशिस्** (atītāśis) *adj.* who is beyond wishes (केतुमतीः) तैः (ऋषैः) ··· अतीताशीः ··· ईशिता ··· अयुक्त HarVi. 43.224.

**अतीताशीतिवत्सर** (atītāśītivatsara) *adj.* who is beyond eighty years, who is more than eighty years old न नस्यमूनसप्ताब्दे नातीताशीतिवत्सरे AṣṭāSaṁ. i. 157.24 (1.29)

**अतीताशीतिवर्ष** (atītāśītivarṣa) *adj.* who is past eighty years, more than eighty years old कश्चित्सार्थवाहोऽतीताशीतिवर्षः ··· तरुणं भार्यामाप्तवान् Tantrākhyā. 138.12; PañcT. 3.66 (4) (325.9)

**अतीताशेषजन्मन्** (atītāśeṣajanman) *n.* all the previous births किं काशीप्रवेशादतीताशेषजन्मार्जितं पापं नश्यति TristhaSe. 98.22.

**अतीताशौच** (atītāśauca) *adj.* whose (period of) impurity is over सन्नकेष्वतीताशौचानां सपिण्डानां त्रिरात्रविध्यसंभवात् SmṛtiCan. vi. 50.1.

**अतीताष्टमवर्षत्व** (atītāṣṭamavarṣa-tva) *n.* the state of having completed the eighth year (of life) अष्टवर्षं ब्राह्मणमुपनयीत ··· अष्टवर्षत्वं चाष्टमवर्षसंबन्धेन, नातीताष्टमवर्षत्वेन VīraMi.(Saṁskāra.) 339.23.

**अतीतासद्विषयक** (atītāsadviṣaya-ka) *adj.* pertaining to the object that is past or unreal अतीतासद्विषयकज्ञानव्यवहारादौ चातीतासतोरेव व्यावर्तकत्वम् AdvaiSi. 448.21.

**अतीतास्पृष्ट** (atītāspṛṣṭa) *adj.* not being in touch with what has gone before (i. e. not returning to the initial point) अतीतास्पृष्टमन्यान्यग्रहणं त्वनवस्थितिः MānaMe. 38.4.

**अतीति** (atīti) *f.* the nature of being past or bygone, non-existence (at present) द्वि विभक्त्यभ्यासदर्थ्यर्थाभावातीत्यसंप्रतिव्युद्धिशब्दप्रभवपश्चाद्यथानुपूर्व्ययौगपद्यसंपत्त्यसाकल्यकल्पान्तोक्तौ JaineVyā. i. 3.5; अतीतिरतीतत्वम्। स्वत एवातिक्रान्तत्वमित्यर्थः JaineVyā. 47.24 (*on* i. 3.5)

**अतीतेच्छा** (atītecchā) *f.* past desire अतीतेच्छाधीनपाककृतिरपि तत्र वर्तते VyutpaVā. 138.33.

**अतीतेषुपथ** (atīteṣupatha) *adj.* beyond the range of an arrow वीरः ···। अतीतेषुपथे काले जहार गदया शिरः MahāBhā. vii. 236*(2)

**अतीतैककाल** (atītaikakāla) *adj.* things that are simultaneously past शक्तिप्रवृत्त्या न विना रसः सैवा[न्य]कारणम्। इत्यतीतैककालानां गतिस्तत्कार्यलिङ्गजा PramāVāSvopVṛ. 5.16.

**अतीतैष्य** (atītaiṣya) *adj.* [du.] past and future गत्यन्तरेण लब्धौ द्वियोगकालावतीतैष्यौ Āryabh. 2.31 (46)

**अतीतैष्यग्रहान्तर** (atītaiṣyagrahāntara) *n.* distance between planets of yesterday and tomorrow (*lit.* past and future) स्फुटभुक्तिरतीतैष्यग्रहान्तरं वर्तमानेऽह्नि BrāhmSphuSi. 2.29.

**अतीतैष्यन्मितघट** (atītaiṣyanmita-ghaṭa) *m.* jar known as past or future one अतीतैष्यन्मितघटप्रतिषेधस्तथाविधः BṛĀraUBhVā. i. 2.113.

**अतीतोत्तमर्ण** (atītottamarṇa) *m.* creditor who has passed away (i. e. dead) अथातीतोत्तमर्णऋणापाकरणविषयाणि SmṛtiCan. iv. 414.16.

**अतीतोपध** (atītopadha) *adj.* free from deceit or cheating (i. e. trustworthy) तानतीतोपधान् ··· पूजयेथाः MahāBhā. xii. 112.24.

**अतीतोपाधि** (atītopādhi) *m.* past delimiting condition अतीतोपाध्यवच्छिन्नत्वं तस्य पूर्वत्वम् KhaṇḍanKhā. 1211.6; अतीतोपाधिमत्कालसंबन्धिनो वर्तमानत्वविरोध उच्यते SrutaPra. iB. 211.5 (*on* i. 1.13); अतीतोपाधिविशेषसंबन्धितया हि तत्त्वं न त्वतीततया NyāyPari. 377.20.

**अतीतोपालम्भ** (atītopālambha) *m.* finding fault with the past (event) अलमतीतोपालम्भेन Hitopa. 3.30 (1)

**अतीतौदनेच्छा** (atītaudanecchā) *f.* past desire for food अतीततादशायां च अतीतौदनेच्छाविरहेण इष्टसाधनत्वाभावात् TattvCin. iv(2). 108.2.

**अतीत्य** (atītya) *ger.* **A**i having gone beyond, having crossed, having passed through, having penetrated **ii** having exceeded, having transcended **B**i having surpassed, having excelled **ii** having set aside, disregarding, overlooking **iii** having overcome, got over or subdued, leaving behind **iv** having transgressed or gone beyond (the limit) **C** having spent or passed (time) **D** having finished or concluded **E** having caused to cross. **A**i having gone beyond, having crossed, having passed through, having penetrated अतीत्याद्यः स्वरार्भैरेह TaiBr. III. xi. 4.2; SatBr. VI. iii. 3.1; JaimiBr. 1.247; अतीत्य तमसः पारं स्वर्गे लोके महीयते DevaBr. 3.24; तच्चाप्यतीत्य नृपतिः ··· जगामान्यन्महद्वनम् MahāBhā. i. 64.3; अतीत्य (यन्त्रे) लक्ष्यं यो वेद्धा स लब्धा मत्सुताम् MahāBhā. i. 176.11; ii. 18.26; (भीष्मः) अतीत्य सेनां पार्थानामवतस्थे चमूमुखे MahāBhā. vi. 113.27; अतीत्य च ततः कक्ष्याश्चतस्रः ··· विवेशास्थानमण्डपम् AhirbuS. 49.44; 57.48; नैर्ऋत्यामिपुविक्षेपमतीत्याभ्यधिकं भुवः। ··· मूत्रं पुरीषं च विसर्जयेत् ViṣṇuP. iii. 11.9; v. 37.75; अत्यतिष्ठद्दशाङ्गुलम्। अतीत्य भुवनं समधितिष्ठति SvetāUBh. 166.2 (*on* 3.14); अतीत्य तमुद्देशमश्रौषम् ··· वाचं कुलवधिरुत्थाः BṛKathāSlSam. 20.53; रोधसः पुलिनमब्जिनीं ततस्तामतीत्य भजते कुमुद्वतीम् ···विहङ्गमः RāmC. 2.31; 6.8; लब्ध्वा वैरोचनाङ्घ्रिमं पद्भ्यां द्राभ्यामतीत्य यः BṛNāraP. 2.35; सूर्यमार्गादभिगता तारामार्गमतीत्य च ··· प्राप ब्रह्माण्डखर्परम् YogVā. iii. 53.8; संसारसागरमतीत्य हरिं व्रजामि AdhyāRā. vi. 10.61; विमीपणः ··· चतुर्भिरमात्यैः सममतीत्य वारिधिम् RāmāCam. 6.16 (4); यस्याचक्राक्ति नृकपालमतीत्य भालमाग्नेयमन्यदिव लोचनमुज्जिहानम् SriKaC. 5.27; मृत्युं मरुमिवातीत्य याति मुक्तिपुरीम् सुखम् PāṇḍaC. 5.467; अतीत्याङ्गणवेदीं तामस्तां ममतामपि ··· तस्थतुः सुखितौ पुरः SāliC. 6.132; मध्यमतीत्य दिक्षु रचयेद्द्वाराणि TantrSa. 2.26; पत्नीयजमानौ ··· ग्रामसीमामतीत्य एकरात्रं चेद्वसतस्तदा पुनराधानं प्रायश्चित्तं भवति VīraMi.(Saṁskāra.) 1011.15; अतीत्य देशः अतिदेशः MayūMāli. 526.25 (*on* vii. 1.1); बभ्राम यस्य लवणाब्धिमतीत्य कीर्तिः EI. viii. 210.14 = xii. 278.101; महीमतीत्य विमला यत्कीर्तिरब्धिं गता EI. xii. 154.56; **A**ii having exceeded, having transcended तस्मात् त्रीनतीत्यैषा संख्या SābaBh. 1092.10 (*on* iii. 7.27); यद्वाचां विषयमतीत्य ··· ब्रह्मर्पौ तदिह ··· तेजोभिर्ज्वलति महत्त्वमप्रमेयम् MahāviC. 4.15; नामाद्याशान्तमतीत्य वदनशीलो भवति ChāndoUBh. 452.13 (*on* vii. 15.4); अन्तमतीत्य वर्तते इति अत्यन्तम् GītāBh. (Śaṅ.) 200.10 (*on* 6.28); अपि बुद्धिगोचरमतीत्य संस्थितः ··· निरूप्यसे HarVi. 6.59; ईशानतीत्य शान्तान्तं तत्त्वं सादाशिवं स्मृतम् MṛgendraT. i. 13.163; Bhām. 200.11 (*on* i. 3.8); (मूर्तिर्मे) अस्पृष्टा च सदा पड्भिः सप्तातीत्य व्यवस्थिता BhaviP. 230A.22 (i. 154.22); सत्त्वादीन् गुणान् ···अतीत्य···ब्रह्मभूयाय ब्रह्मत्वाय कल्पते GītāBh.(Rā.) 596.24 (*on* 14.26); एतद्द्वितयमतीत्यानन्दमयमवस्थितम् तत्त्वम् YogSā. 12.49; नेत्रं सद्योऽतीत्य सीमानमेतद् वाणी नैवं वक्ति वाच्यं जनेषु GopāKeCan. 97.14; अतीन्द्रियग्राह्यः इन्द्रियमतीत्य वर्तमानेन शास्त्रेणैव ग्राह्यः SrutaPra. ii. 208.28 (*on* ii. 1.1); अतीत्य कृच्छ्रात् समुदायशोभां प्रत्यङ्गसौन्दर्यपरा दिदृक्षा। पर्यभ्रमत् Yādavā. 12.66; ये तु ··· महत्तत्त्वपर्यन्तावरणान्यतीत्य प्रकृत्यावरणं गताः YogSā. 19.16 (1); दध्यवस्थामसंप्राप्य दुग्धावस्थामतीत्य च ··· मन्दं तच्च BhojanKu. 136.4; यस्येयत्तामतीत्य प्रभवति महिमा कोऽपि MahāN. 1.1; **B**i having surpassed, having excelled ह्रिया तथा सर्वभूतान्यतीत्य यशश्च तेजश्च तवापि दीप्तम् MahāBhā. iii. 26.16; वपुश्च दीप्तं पुरुषानतीत्य BuddhaC. 10.3; Saund. 4.6; नृपः अतीत्य सर्वभूतानि बभौ भानुपराक्रमः MārkP. 69.4; लोकानतीत्य लालित्याल्ललिता तेन चोच्यते MatsyaP. 60.11; कथमतीत्य हरिणं हरयो वर्तन्ते Sāk. 1.8 (1); सा चमूरतीत्य भूयांसि पुराण्यवर्तत SiśuVa. 12.65 (comm. शोभयातिशय्य स्थितेति गम्यते); तावतीत्य तपस्तेऽस्य वर्तते निस्पृहस्य वै PāraS. 10.235; अतीत्य भूतानि तिष्ठतीत्यतिष्ठा: BṛĀraUBh. 219.16 (*on* ii. 1.2); अतीत्य सर्वान्न्यान्वदितुं शीलमस्येत्यतिवादी MuṇḍaUBh. 346.16 (*on* iii. 1.4); अतीत्येन्द्र स्थितो ज्ञानैश्वर्यादिभिः ··· इति अतीन्द्रः ViṣṇuSaBh. 57.20 (*on* 30); इतश्च निद्रानिभृतां कुमुद्वतीमतीत्य रक्ताम्बुजिनी विराजते RāmC. 4.12; दैवतान्यतीत्य वर्तन्ते तथा ··· दैवतानपि तैस्तैर्गुणैरतीत्य वर्तमान जगत्पते GītāBh.(Rā.) 516.3 (*on* 10.15); **B**ii having set aside, disregarding, overlooking अतीत्य ता (स्त्रियः) महाबाहुः क्रोशन्तीः कुररीरिव। ववन्दे पितरं ज्येष्ठं धर्मराजो युधिष्ठिरः MahāBhā. xi. 11.10; अतीत्य तस्य संदेशं विनाशो गमने भवेद् Rāmā. iv. 64.31; vii. 26.25; विशेषतः पूजयति कौसल्यामप्यतीत्य माम् Rāmā. ii. 140*(2); अतीत्य

बन्धूनवलङ्घ्य मित्राण्याचार्यमागच्छति शिष्यदोषः PañcRā. 1.19; स्रोतोवहां पथि निकामजलामतीत्य जातः सखे प्रणयवान् मृगतृष्णिकायाम् S'āk. 6.17; ततो मामतीत्य सा त्वया प्रशस्ता Ubhayābhi. 2.8; दारुभित्तिमुखोऽतीत्य किमन्यत्तत्र कल्प्यते Kāvyālan.(Bh.) 6.10; ब्रह्म उ नात्येति नातीत्य तदात्मकतां तदन्यत्वं गच्छति कश्चन KāṭhUBh. 155.13 (on 4.9); ब्रह्मक्षत्रादिरूपाणि यतोऽतीत्यास्तु जन्मप्रभुः BṛĀraUBhVā. i. 4.1615; iii. 9.99; स्थाविरोऽपि शिष्यसङ्घमतीत्य ··· शङ्कराचार्यमिदमाह S'aṅkaVi.(Ā.) 228.11; धर्मकार्यपुत्रलाभयोः सिद्धिर्यया सह न सम्भवति तामतीत्य भार्यान्तरं विन्देदिति SmṛtiCan. iv. 573.9; जातीमतीत्य तगरं विगणय्य भृङ्गैरङ्गीकृतं वदनसौरभमेव तस्याः Surath. 7.53; स्वार्थसम्प्रतिपत्त्यर्थं पुरुषस्येन्द्रियाणि हि । तमप्यतीत्य वर्तन्ते SūktiRa. 196.6; राज्ञोऽतीत्य बहून्महीध्रवमापज्जयापीडमेनम् RājTa.(Jo.) 417; **B iii** having overcome, got over or subdued, leaving behind एषा प्रवासं कथमप्यतीत्य याता पुनः संशयमन्यथैव MālaMā. 10.91; तत् धावतः द्रुतं गच्छतः अन्यान् आत्मविलक्षणान् मनोवागिन्द्रियप्रभृतीन् अत्येति अतीत्य गच्छतीव ĪśopBh. 10.14 (on 4); शोकमतीत्य गच्छतीति शोकातिगः सन् KāṭhUBh. 109.6 (on 1.12); अतीत्यायं संव्यवहारविषयमन्नान्नादादिलक्षणमविद्याकृतं विद्यया ब्रह्मत्वमापन्नः विद्वान् TaiUBh. 298.18 (on 3.10); स्वाभाविकं ज्ञानं कर्म च अभिभूय अतीत्य ··· अत्येष्यन्ति BṛĀraUBh. 45.19 (on i. 3.2); प्राणः ··· मृत्युमतीत्य अवहत् प्रापयत् BṛĀraUBh. 56.10 (on i. 3.11); सर्वाणि ··· दुःखान्यतीत्य गच्छतीति सर्वदुःखातिगः ViṣṇuSaBh. 5.4 (on 6); अतीत्य दुःखहेतून्याहन्ति दुःखान्यशेषतः BṛĀraUBhVā. ii. 1.350; मधुलिहामसुखायत संहतिर्वृतिमतीतिमतीत्य कृतस्थितिः HarVi. 3.6; इमां देवीं स्तुवन्नित्यम् ··· । क्लेशानतीत्य सकलानैश्वर्यं महदश्नुते LakṣmīT. 9.48; 17.100; Hitopa. 1.15; दोषज्ञानादतीत्यैतां (अविद्यां) विद्ययामृतमश्नुते AnuVyā. 33B.11 (on ii. 2.12); अविद्यां तत्कार्यं दुःखादिकं चातीत्य तीर्त्वा NyāySu.(Ja.) 429A.4 (on ii. 2.12); अतीत्य हि गुणान् सर्वान् स्वभावो मूर्ध्नि तिष्ठति Subhāṣi. 2713; जातो विघ्नगणानतीत्य कृषिनामग्राहमग्रेसरः PārvPa. 5.6; **B iv** having transgressed or gone beyond (the limit) संधां संहितामतीत्य नमुचेरासुरस्य शिरः प्राच्छैत्सीत् JaimiBr. 2.134; सोऽतीत्य तेजसां वृत्तिम् RaghuVa. 17.34; आत्मसंमितमन्नपरिमाणमतीत्याश्नतः ··· न योगः अस्ति GītāBh.(S'aṅ.) 194.1 (on 6.16); मातीत्य प्रश्नविषयं गार्गि प्राक्षीः कथंचन BṛĀraUBhVā. iii. 6.22; **C** having spent or passed (time) संवत्सरं हि व्रतं नातीत्यैतस्मिंस्त्वेवैतत् संवत्सरेऽधीयीत BaudhGS. iii. 2.39; अतीत्यैकादशाहं तु नामकर्म तथाकरोत् Rāmā. i. 17.11; वयश्च कौमारमतीत्य सम्यक् ···जग्राह विद्याः BuddhaC. 2.24; मुक्तो यथा बन्धनाद् मुक्त्वा वेश्मसुखान्यतीत्य समयं भूयो विशेद्बन्धनम् Saund. 11.60; अतीत्योन्मीलनादिन्दोर्दृक्सिद्धिर्गणितागतात् SūrySi. 1.63; अतीत्य गणितानीतं यदा स्यातामुपप्लुती LaBhāsk. 1.30; अष्टाशीतिमब्दानतीत्य निष्ठिते महापद्मे ··· चाणक्येन मौर्यचन्द्रगुप्तः प्रतिष्ठापितः AvantiKa. 183.17; द्वित्राणि दिनान्यतीत्य मत्तकाशिनीं तामवादिषम् DaśKuC. 83.13; तस्माद्रात्रिमतीत्य या समाप्तिः सा फलेन संबध्यते TantrVā. 117.8 (on iii. 6.43); रामोऽपि रजनीमेकामतीत्य तमसातटे RāmāMañ. 73.6; ततः स राजा विमना निर्गत्यातीत्य वासरम् ··· देव्या वासगृहं ययौ KathāSaSāg. vii. 8.67; पूर्वोक्तानां दातॄणामभावे ऋतुत्रयमतीत्यैव स्वयं कुर्यात् (कन्या) DīpKa. 10.5 (1.64); अतीत्य बाल्यं जगतां पते त्वमुपेत्य पौगण्डवयो मनोज्ञम् Nārāy. x. 53.1; अथ चेत्पञ्चमीं रात्रिमतीत्य पतेत्तर्हि परतो भवेत् VīraMi.(S'uddhi.) 77.20; एकं दिनमतीत्य द्वितीये सायं भुञ्जानश्चतुर्थकालिकः । एवं त्रीण्यतीत्य चतुर्थे सायं भुञ्जानोऽष्टमकालिकः BālamBha. iii. 92.1 (on 3.50); **D** having finished or concluded अतीत्यैतान्यवस्यन्ति प्लुतादिप्रभृतीनि च ṚPrāti. 10.4; 10.12; अतीत्य तेषां पदतां प्रदर्शयेत् ṚPrāti. 11.14; अतीत्य निष्क्रमणम् KātyS'S. i. 8.25 (comm. तत्रातीत्य तत्कर्मातिक्रम्य समाप्य); मन्त्रस्य तु ··· स्वार्थमतीत्य मुख्यं युक्तो हि गौणार्थनिमित्तभावः TantrVā. 770.21 (on iii. 2.3); तदतीत्य व्यवहितेन संबन्धः BrahmSūBh.(Bhā.) 207.10 (on iii. 4.25); पादपांसुकृतपुत्तलिहोमान्मारयेत्परमतीत्य तु विप्रम् ĪśānS'iPa. i. 9.147; अतीत्य मैथिलं युद्धम् ··· स पूर्तं चक्रे महासरः DvyāśraKā. 15.114; **E** having caused to cross अज्ञानपापादीनतीत्य ··· विष्णुः स्वभक्तानतिवहति KarmaNi. 6B.9.

**अतीत्वरी** (atītvarī) *adj.* (*f.*) unchaste (woman) इद्वावत्सरायातीत्वरीम् VājaS. 30.15; इद्वत्सरायातीत्वरीन् (आलभते) TaiBr. III. iv. 11.1.

**अतीदम्** (atīdam) *adj.* surpassing this (a lamp) दीपा इमे रव्युदये न राजन्त्यतीदमो हव्यभुजोऽपि नाम्नी DvyāśraKā. 2.31.

**अतीदेश** (atīdeśa) *m.* transference (of a future) किदतीदेशात् Vār. on P. i. 2.18; cf. अतिदेश.

**अतीद्धवर्णना** (atīddha-varṇanā) *f.* very exciting description अधिविधमतीद्धवर्णनागुणमुग्धेषु गणेषु नाकिनाम् । ख(स)मसूच्यत चित्रलेखया RāmC. 13.12.

**अतीनानस्** (atīnānas) *adj.* who has surpassed the master's chariot अतीनाना नाना न नूनना । सः ··· ऐरिरत् HarVi. 43.3 (comm. इनस्य प्रभोः अनो रथमतिक्रान्तः)

**अतीन्दिरा** (atīndirā) *adj.* (*f.*) superior to Lakṣmī (सीतायाः) कः स्तोतुमर्हो महत्या वपुश्रियः स्फीतिमतीन्दिरायाः Rāgh. 9.15.

**अतीन्दुसार** (atīndusāra) *adj.* which has excelled the lustre of the moon अतीन्दुसारैर्मणिभिः किलाहमपूजयं दैवतमस्मदीयम् PratāYaBhū. 152.4 (comm. अत्युज्ज्वलैः)

**अतीन्द्र** (atīndra) *adj.* superior to Indra, surpassing Indra युवयोरिदमेव भिद्यते यदुपेन्द्रस्त्वमतीन्द्र एव सः S'iśuVa. 16.70 (comm. इन्द्रविजयीति यावत्); अतीन्द्रमपि माहात्म्यं राज्ञस्तस्याधितिष्ठतः । अयमन्योऽपि दोषोऽभूत् RājTa.(Ka.) 4.322; अतीन्द्रमतिकिंनराधिपमशेषलोकोन्नतं न किं किमधितिष्ठति त्रिभुवने स सर्वाधिकः PratāYaBhū. 421.11; *m.* **i** a name of Viṣṇu अतीन्द्रः (केशवस्य ··· नाम्नां सहस्रम्) MahāBhā. xiii. 135.30; PañcaRā.(Nā.) iv. 3.97; अतीत्य इन्द्रं स्थितः ज्ञानैश्वर्यादिभिः स्वभावसिद्धैरिति अतीन्द्रः ViṣṇuSaBh. 57.20 (on 30); **ii** name of a Vidyādhara king विद्याभृतां पतिस्तस्मिन्नतीन्द्रो नाम विश्रुतः PadmP.(Ra.) 6.3; **iii** one of the thousand names of a Jina अतीन्द्रोऽतीन्द्रियः MahāP. 25.148.

**अतीन्द्रपात्र** (atīndra-pātra) *adj.* having a hero superior to Indra कुर्वन् कवीन्द्रः कवितामतीन्द्रपात्रं कथामात्रमुपाददीत VasaViKā. 1.41.

**अतीन्द्रपुर** (atīndrapura) *adj.* which surpasses the capital of Indra इतश्च लाटभूपालमुक्तौ ···।··· आस्तेऽतीन्द्रपुरं पुरम् VasaViKā. 4.17.

**अतीन्द्रमन्त्रिन्** (atīndramantrin) *adj.* excelling or surpassing Indra's minister (Bṛhaspati) आगतेषु च मन्त्रेणातीन्द्रमन्त्रिषु मन्त्रिषु TriṣaS'aPuC. ii. 3.166.

**अतीन्द्रावरुण** (atīndrāvaruṇa) *adj.* who surpasses Indra and Varuṇa स्वसादुहित्रोः क्षपकं पितापुत्रयोश्च नामुं (गजम्) शुकपिच्छपुच्छम् । निष्क्षतो दक्षिणयापि होतापुत्रावतीन्द्रावरुणः किमु त्वम् DvyāśraKā. 6.33.

**अतीन्द्रिय** (atīndriya) *adj.* [*f.* -ā] **A** beyond (the range of) the sense-organs, not cognizable by the senses, not perceptible by the senses, supersensuous यदतीन्द्रियम् ··· परं ज्योतिः VaikhāDS. i. 9.15; प्राप्तं ज्ञानम् ···। दृष्टिश्चातीन्द्रिया MahāBhā. vi. 16.8; सुखमात्यन्तिकं यत्तद् बुद्धिग्राह्यमतीन्द्रियम् MahāBhā. vi. 28.21; सूक्ष्मं ह्येतदतीन्द्रियम् MahāBhā. xiii. 1.8; अतीन्द्रियं पुनर्मनः सत्त्वसंज्ञकम् CaraS. i. 8.4; तद्वदतीन्द्रियाणां पुनः सत्त्वादीनाम् CaraS. iii. 5.7; अर्थादिविहितं ज्ञानमिन्द्रियाणामतीन्द्रियम् BhelaS. 104.19 (5.7); नमस्ते देव देवेश ··· अतीन्द्रिय ViṣṇuSm. 1.51; 97.2; सामान्यतस्तु दृष्टादतीन्द्रियाणां प्रतीतिरनुमानात् SāṁkhyaKā. 6; अतीन्द्रियाणामिन्द्रियाण्यतीत्य वर्तमानानां सिद्धिः SāṁkhyaKāBh. 5.17 (on 6); अत्र प्रधानपुरुषावतीन्द्रियौ तयोः सामान्यतोदृष्टादनुमानात्सिद्धिः MāṭhVṛ. 14.5 (on 6); अतीन्द्रियमिन्द्रियं भ्रान्तानामधिष्ठानम् SāṁkhyaPraSū. 2.23; अतीन्द्रियेष्वप्युपपन्नदर्शनो बभूव भावेषु (रघुः) RaghuVa. 3.41; गुरुत्वधर्माधर्मभावना ह्यतीन्द्रियाः PadārthaSaṁ. 98.4; अत एवातीन्द्रियः सत्तादीनामिव प्रत्यक्षेषु वृत्त्यभावात् स्वात्मगतसंवेदनभावाच्च PadārthaSaṁ. 329.2; (सान्दीपनिः) सोऽप्यतीन्द्रियमालोक्य तयोः कर्म ViṣṇuP. v. 21.25; ततः परमनिर्वाणमतीन्द्रियमगोचरम् ।··· समश्नुते MārkP. 43.46; अतीन्द्रियः । ब्रह्मा नारायणाख्यः स सुष्वाप सलिले तदा VāyuP. i. 6.3; i. 14.9; योऽतीन्द्रियः परो व्यक्तादणुर्ज्यायान् सनातनः MatsyaP. 2.27; 23.3; 52.20; BrahmāṇḍP. i. 5.3; i. 5.140; यदस्य दर्शनात्तेऽद्य जातं ज्ञानमतीन्द्रियम् BrahmāṇḍP. ii. 35.6; ii. 22.80; बृहद्द्वारोपरिस्थं च संविदक्षादतीन्द्रियम् PauṣkS. 9.138; अस्तीति परमं वस्तु निरालम्बमतीन्द्रियम् JayāS. 5.29; 16.277; रूपादीनामन्वयदर्शनात् प्रकृतिविकारयोः पृथिव्यादीनां नित्यानामतीन्द्रियाणां कारणभावोऽनुमीयते NyāyBh. 246.19 (on iv. 1.11); यां सूक्ष्मां नित्यामतीन्द्रियां वाचमृषयः ···पश्यन्ति VākyaP. 24.2 (on 1.5); अतीन्द्रियानसंवेद्यान् पश्यन्ति ··· ये भावान् VākyaP. 1.38; शास्त्राधिकारेऽसंबद्धा बहवोऽर्था अतीन्द्रियाः PramāVār. 1.202 [text as in PramāVāSvopVṛ. on 1.202]; सोऽतीन्द्रियमर्थं दर्शयन् कथं न प्रतिपत्तेर्भेदकः PramāVāSvopVṛ. 48.5; तस्मादकर्तृको वेदः प्रमाणं स्यादतीन्द्रियैः PadmP.(Ra.) 11.167; अतीन्द्रियं तु मनः KāśyaS. 67A.33; AṣṭāSaṁ. i. 222.19 (2.5); ते (परमाणवः) चातीन्द्रियाः BrahmSi. 70.18; वासुदेवात् ···। अतीन्द्रियात् PāraS. 7.479; रूपादिविषयव्यतिरिक्तान्यच्छान्यतीन्द्रियाणि स्वविज्ञानानुमेयानीन्द्रियाणि Sphuṭā. i. 27.14 (on 1.9); अतीन्द्रियं तु तं योगं नैव कश्चिद्व्यवस्यति TattvSaṁ. 2382; न चातीन्द्रियानर्थान् श्रुतिमन्तरेण कश्चिदुपलभत इति शक्यं संभावयितुम् BrahmSūBh.(S'aṅ.) 284.9 (on ii. 1.1); अतीन्द्रिया कस्यचिच्छक्तिरात्मविर्भवति BrahmSūBh.(S'aṅ.) 758.4 (on iii. 4.51); किंतु वक्तव्यमतीन्द्रियमात्मतत्त्वम् KenUBh. 42.11 (on 2.1); अतीन्द्रियम् ··· पुरुषाख्यम् ···वक्तव्यम् PraśnaUBh. 268.10 (on 4.1); TaiUBh. 279.15 (on 2.9); अतीन्द्रियम् इन्द्रियगोचरातीतम् अविषयजनितमित्यर्थः GītāBh.(S'aṅ.) 196.17 (on 6.21); अतीन्द्रियं हि सुखं सर्वोत्तमं स्यात्

(Ja.) 211A. 6 (*on* i. 4. 6)

**अतीन्द्रियार्थसाक्षात्कार** (atīndriyārtha-sākṣātkāra) *m.* direct perception of super-sensuous objects अतीन्द्रियार्थसाक्षात्कारसमर्थस्य कपिलस्य VedāntDī. 81. 5 (*on* ii. 1. 2)

**अतीन्द्रियार्थसाधक** (atīndriyārtha-sādhaka) *adj.* which establishes super-sensuous objects अनुमानमिति संबद्धस्यातीन्द्रियार्थसाधकस्यैतन्नाम NyāyVār. 253. 4 (*on* ii. 1. 35)

**अतीन्द्रियार्थाधिगति** (atīndriyārthādhigati) *f.* perception of super-sensuous objects अतीन्द्रियार्थाधिगतिश्च कथं यद्यनुमानं नास्ति NyāyVār. 349. 1 (*on* iii. 1. 1)

**अतीन्द्रियार्थोपदेशिन्** (atīndriyārthopadeśin) *adj.* who teaches super-sensuous objects नार्थे प्रामाण्यमतीन्द्रियार्थोपदेशिनाम् BrahmSi. 87. 10.

**अतीन्द्रियाश्रय** (atīndriyāśraya) *adj.* of super-sensuous locus, residing in super-sensuous object स(संचयः)च गृह्यमाणाश्रयो गृह्यते, नातीन्द्रियाश्रयः NyāyBh. 295. 1 (*on* iv. 2. 14)

**अतीन्द्रियाश्रित** (atīndriyāśrita) *adj.* residing in super-sensuous (things) यदि क्रियापरिस्पन्दः स तर्हि अतीन्द्रियाश्रितोऽतीन्द्रियः NyāySu.(Ja.) 24A. 4 (*on* i. 1. 1); अतीन्द्रियाश्रितयोस्तयोरैन्द्रियकत्वानुपपत्तिः NyāySu.(Ja.) 390B. 3 (*on* ii. 2. 7)

**अतीन्द्रियासिद्धि** (atīndriyāsiddhi) *f.* non-establishment of a super-sensuous thing त्वन्मते सर्वस्य योगीन्द्रियग्राह्यत्वेन अतीन्द्रियासिद्धौ असंभावितत्वात् नोक्तमिन्द्रियं सिध्यति TarkSaṁ.(Ā.) 34. 5.

**अतीन्द्रियेन्द्रिया** (atīndriyendriyā) *adj.* (*f.*) possessing super-sensuous sense-organ दिव्येयमादिसृष्टिस्तु रजोगुणसमुद्भवा। अतीन्द्रियेन्द्रिया तद्वदतीन्द्रियशरीरिका MatsyaP. 4. 3.

**अतीन्द्रियेश्वरभेद** (atīndriyeśvara-bheda) *m.* difference from super-sensuous Supreme Being नन्वेवमपि अतीन्द्रियेश्वरभेदः कथं प्रत्यक्षः स्यात् BhedaDhi. 10. 1.

**अतीन्द्रियोच्छेद** (atīndriyoccheda) *m.* disappearance of super-sensuous things अनुपलब्धिमात्रस्य बाधकत्वे अतीन्द्रियोच्छेदात् TattvCin. ii(2). 33. 2.

**अतीन्द्रियोदाहरण** (atīndriyodāharaṇa) *n.* example of a super-sensuous object अतीन्द्रियोदाहरणसूत्रं सिद्धान्ते पूर्वपक्षे वा TātpaṬ.(Vā.) 52. 18 (*on* i. 1. 1)

**अतीन्द्रियोपराग** (atīndriyoparāga) *m.* eclipse as super-sensuous तथा सर्वज्ञतामन्तरेणापि भवतीदानींतनज्यौतिषिकाणामिवातीन्द्रियोपरागादिज्ञानमित्यभिप्रायः DharmoPra. 246. 18.

**अतीन्द्रियोपादान** (atīndriyopādāna) *n.* super-sensuous material cause नात्र शरीरपूर्वकत्वं साधनीयं शरीरे सत्यवश्यमिन्द्रियप्राप्तावतीन्द्रियोपादानोपकरणादिकारकशक्तिपरिज्ञानासंभवे सति कर्तृत्वासंभवात् NyāyKa. 55. 18; किं विपुलकार्याणां कर्तृकालैक्यनियममन्तर्भाव्य तदुच्यते … उतातीन्द्रियोपादानादिदर्शनवशात् S'rutaPra. iB. 127. 24 (*on* i. 1. 3)

**अतीन्द्रियोपादानक** (atīndriyopādānaka) *adj.* having a super-sensuous thing for its material cause अतीन्द्रियोपादानकस्यापि द्रव्यस्यैन्द्रियकत्वं त्र्यणुकादेरिवोपपद्यते NyāySu.(Ja.) 24A. 6 (*on* i. 2. 1)

**अतीन्द्रियोपाधि** (atīndriyopādhi) *m.* super-sensuous extraneous or delimiting condition (too wide a middle term in a syllogism) अतीन्द्रियोपाधिनिषेधे किं प्रमाणम् NyāyKuA. i. 181. 1; अतीन्द्रियोपाध्यादिलिङ्गानाम् … अनभिधानम् KhaṇḍanKhā. 823. 10; 714. 21; नन्वतीन्द्रियोपाधिशङ्कायां कथं साध्यनिश्चयः NyāyPari. 113. 4.

**अतीन्द्रियोपाध्यन्तर** (atīndriyopādhy-antara) *n.* another super-sensuous extraneous or delimiting condition अथ तेनैवाप्यतीन्द्रियेणातीन्द्रियोपाध्यन्तरप्रयुक्तः संबन्ध इति शङ्क्येत NyāyPari. 115. 3.

**अतीन्धनावृत** (atīndhanāvṛta) *adj.* piled over with excessive quantity of fuel (न दीप्यते) यथा निरिन्धनो वह्निरल्पो वातीन्धनावृतः CaraS. vi. 15. 212 (1941 Ed.); AṣṭāSaṁ. ii. 76. 11 (4. 12)

**अतीप** (atīpa) *n.* place abounding in water अतीपम् MugdhaBo. 6. 70 (62. 16)

**अतीपान** (atī-pāna) *n.* drinking of water superseding (gods, *pitṛs* etc.) अत्याशनादतीपानाद् यच्च उग्रात् प्रतिग्रहात्। तन्नो वरुणो राजा पाणिना ह्यवमर्शतु TaiĀ. x. 1. 13 (778. 4) (comm. देवर्षिपितृतर्पणमतीत्य पीतमुदकम् अतीपानम्)

**अतीभ** (atībha) *adj.* superior to an elephant अथ क्षितीशो रतिपालशौर्यं अतीभमाकर्ण्य लसत्प्रमोदः।… अमुष्य पादेऽक्षिपत् काञ्चनशृङ्खलानि HammīMaKā. 10. 63.

**अतीमोक्ष** (atī-mokṣa) *m.* [pl.] name of a number of Mantras (TaiS. III. v. 4. 12; MaiS. i. 4. 3); तानि ह त्वा एतानि कुश्माण्डानीत्याचक्षते…अतीमोक्षा इति वा BaudhS'S. i. 52. 13; i. 242. 2; अन्तर्वेद्यासीनोऽतीमोक्षान् जपति BhārS'S. iv. 22. 1; विष्णुक्रमान् … अतीमोक्षानिति व्यतिषक्तानेके समामनन्ति ĀpaS'S. iv. 14. 9; ये देवा यज्ञहन इत्यतीमोक्षाः ĀpaS'S. iv. 14. 10; iv. 16. 8; xiii. 25. 1; अतीमोक्षैरन्वीनुपतिष्ठते MānS'S. 28. 9.

**अतीयाय** (atīyāya) *ger.* having spent मुहूर्तमतीयाय जपेदिह रतिरिह रमध्वम् PāraGS. iii. 14. 10.

**अतीयिवस्** (atīy-ivas) *adj.* who has surpassed दधदुर्वरावलयमेकतोऽपि यः किरिकच्छपोरगपतीनतीयिवान् Surath. 14. 26; शिशुनापि शुनासीरवीरवृत्तिमतीयुषा। रुषा मुजिष्यतां नीताः पिशुना येन भूभुजः PrabaCin. 76. 9.

**अतीर** (a-tīra) *adj.* **1** without a shore, vast अतः परमतीरोऽयं सागरः सरितां पतिः Rāmā. vi. 4. 69 (comm. अलभ्यपरतीरः); **2** not growing on the bank मुक्ताद्रुमनूराणामतीरैर्जाङ्गलैस्तथा।… यूपैः पुराणगोधूमयवशाल्यन्नमभ्यसेत् ViṣṇuDhaP. ii. 56. 40.

**अतीरशुष्क** (a-tīraśuṣka) *adj.* not dry on the bank (रेवा क्रमेणाप्यत पार्थिवेन) या … अतीरशुष्कांश्च दधार वृक्षान् Rāvaṇā. 4. 29.

**अतीरात्र** (atī-rātra) *m.* **1** dead of night, midnight पूर्वांशे द्वितये ज्ञेयः पक्ष एव मनीषिभिः। तृतीयांशे पुनर्मृत्युरतीरात्रात् प्रजायते HāriS. ii. 6. 43; **2** name of a son of Cākṣuṣa Manu and Naḍvalā (चाक्षुषात्) मनोरसूत … नड्वला सुतान्। पुरं कुत्सम् …। अग्निष्टोममतीरात्रम् BhāgP. iv. 13. 16; cf. **अतिरात्र**.

**अतीरुच्** (atī-rúc) *m.* fetlock or knee (of a horse) अग्निमतीरुग्भ्याम् MaiS. iii. 15. 3; JaineVyā. 315. 27 (*on* iv. 3. 219); cf. **अतिरुच्**.

**अतीरुत** (atī-ruta) *n.* name of a metal प्रागादौ रजतं ताम्रं त्रपु वंगमतीरुतम्।… मध्ये हेम निवेदय च JayāS. 20. 311.

**अतीरेक** (atī-reká) *m.* [DEBRU. p. 102] surplus, excess, redundancy नेत्त्वेवातीरेकोऽस्ति S'atBr. IV. v. 10. 8.

**अतीरोक** (atī-roka) *m.* interspace, space between the strings नक्षत्राणामतीरोकाः KapiKaS. 35. 7; अथैषौदुम्बरी राजासन्दी। तस्यै…वाकोवाक्यमतीरोका(ः) JaimiBr. 2. 25; परिश्रयन्तः स्रक्तिष्वतीरोकान् कुर्वन्ति HirS'S. vii. 1. 25; LāṭyāS'S. iii. 12. 7.

**अतीर्ण** (á-tīrṇa) *adj.* not covered, not traversed प्रेमायुस्तारीदतीर्णम् ṚV. viii. 79. 6; जन्यार्णवोऽरिजनितः सुमहानिदानीं तीर्णोऽप्यतीर्ण इति निश्चिनुते मनो मे Jīvān. 433. 3.

**अतीर्णपराभव** (atīrṇa-parābhava) *adj.* one who has not overcome defeat स्फुरसि न त्वमतीर्णपराभवस्तव तमो बत मोक्षपथोऽप्यसौ RāmC. (App. 1) 37. 60.

**अतीर्ति** (a-tīrti) *f.* not overcoming रक्षसामतीर्त्यै KapiKaS. 29. 8.

**अतीर्त्वा** (a-tīrtvā) *ger.* without settling the issue नाभियुक्तोऽभियुञ्जीत तमतीर्त्वार्थमन्यतः NāraSm. 21. 55.

**अतीर्थ** (a-tīrtha) *n.* **1** place other than the regular path (between the Cātvāla and Utkara) तेनान्तरेण प्रतिपद्यन्ते चात्वालं चोत्करं च। एतद्ध देवानां तीर्थम्।… अतीर्थं ह्येव यज्ञस्यातोऽन्यत् ṢaḍviBr. iii. 1. 7; संस्थितेऽतीर्थेन निर्हृत्यावभृथे प्रेतालङ्कारान् कुर्वन्ति ĀśvaS'S. I. vi. 10. 1; MānS'S. 180. 6; 199. 12; LāṭyāS'S. iii. 4. 5; **2** improper occasion अतीर्थं वै प्रातःसवनं दक्षिणानाम् JaimiBr. 2. 130; **3** part (of the palm of the hand) other than the tīrtha (i. e. the region used for the flow of water) (यद् यन्मीमांस्यं स्यात्तदद्भिः संस्पृशेत्।… नोपस्पृशेद् व्रजन्। नाङ्गुलीभिः। नातीर्थेन GobhiGS. i. 2. 17; नातीर्थेन विहिततीर्थान्येन पित्र्यादिना न (आचामेत्) VīraMi.(Āhnika.); 93. 25; **4** unworthy person अतीर्थे ब्रह्मणस्त्यागो तीर्थे चाप्रतिपादनः (एतान्येनांसि सर्वाणि) MahāBhā. xii. 35. 5; अनर्हे ब्राह्मणे दत्तमज्ञानात्तत्र दूषकम्। सकारणं तथा तीर्थेऽतीर्थे वा प्रतिपादनम् MahāBhā. xii. 35. 29; सुवृत्तस्यावदातस्य कलापूर्णस्य सत्पतेः। क्षणलेशमहेऽपि स्यादतीर्थस्यापि तीर्थता SubhāNī. 8. 1; **5** not a ford, not a proper landing place अकाले अतीर्थे च तरतः पूर्वः साहसदण्डः ArthS'ā. i. 309. 1 (2. 28); अभूमावतीर्थेऽवतारणे तत्पण्ड इत्यवस्थानानि ArthS'ā. i. 336. 2 (2. 32); पूर्वे राजानः पोतपात्रेष्वन्यदेशाद्देशान्तरव्रजत्सु दुर्वातेन समापतितेषु नद्येष्वतीर्थसंगतेषु च संभृतानि कनककरितुरगरत्नादीनि वस्तूनि सकलानि बलादपहरंति EI. xii. 195. 143; **6** improper course (of action) धनधान्यरत्नानि देवो दातुमर्हति न स्वचक्षुः … तत्र देवं वयमतीर्थे प्रतारयामः JātaMā. 10. 15 (2. 24); तदयुक्तं मामतीर्थे प्रतारयितुम् JātaMā. 85. 8 (13. 25); **7** not a holy place, not a place of pilgrimage तीर्थविशेषणं च दुःखावतरत्वाद् दुःखावतारादतीर्थाद् व्यावर्तयत्पुरुषस्योपकरोति TantrVā. 962. 13 (*on* iii. 4. 20);

तीर्थेऽप्यतीर्थे मरणे विशेषो नास्ति कश्चन । मन्मन्त्रोपासकानाम् BrahmVaiP. ii. 10.84; सुतीर्थे वाप्यतीर्थे वा जलमध्येऽपि वा वसन् । पराप्रासादमन्त्रज्ञो मुक्त एव KulārT. 16.117; **8** period of time when no Tīrthaṅkara lives तीर्थे सति सिद्धाः निर्वृतास्तीर्थसिद्धा ऋषभसेनगणधरादिवत् ... अतीर्थे तीर्थान्तरे साधुव्यवच्छेदे जातिस्मरणादिना प्राप्तापवर्गमार्गा मरुदेवीवत् सिद्धा अतीर्थसिद्धाः SthānṬ. 33B. 1; **9** not the usual way, something unusual, Anupadasūtra 1.8 [pw]; **10** [Loc.] at an improper place ये ... मृगयाविहारा अतीर्थे च मृगान् निघ्नन्ति तानपि संपरेतांल्लक्ष्यभूतान् यमपुरुषा इषुभिर्विध्यन्ति BhāgP. v. 26.24; ये ... मृगयारसिका नित्यमतीर्थे मृगघातकाः DevīBhāP. viii. 22.45; **अतीर्थेन** (á-tīrthena) [Inst.] not in the correct manner, following a wrong way अतीर्थेन त्वा अयमध्वर्युराहुतीः प्रारौत्सीत् S'atBr. XI. iv. 2.14; *adj.* not sanctifying, not purifying दानमिज्या तपः शौच तीर्थसेवा श्रुतं तथा । सर्वाण्येतान्यतीर्थानि यदि भावो न निर्मलः SkandP. iv. 6.39 (comm. पवित्रत्वासाधकानि)

**अतीर्थकरसिद्ध** (atīrthakara-siddha) *m.* one who is a Siddha but not a Tīrthakara तीर्थकराः सन्तो ये सिद्धास्ते तीर्थकरसिद्धा ऋषभादिवत् ... अतीर्थकरसिद्धाः सामान्यकेवलिनः सन्तो ये सिद्धा गौतमादिवत् SthānṬ. 33B. 4.

**अतीर्थगता** (atīrtha-gatā) *adj.* (*f.*) committed at places that are not holy सर्वा च तीर्थातीर्थगता हिंसैव Kāśi. i. 188.9 (*on* 2.252)

**अतीर्थगमन** (atīrtha-gamana) *n.* cohabitation outside the prescribed period called *ṛtu* or *tīrtha* अनीर्थगमनात्पुंसस्तीर्थे(ऽ)संगाहनात् स्त्रिया । उभयोर्धर्मलोपः स्यात् BhaviP. 271B 5 (i. 182.73)

**अतीर्थता** (atīrtha-tā) *f.* the state of not being a holy place एषां शापं प्रदास्यामि तीर्थस्य नगरस्य तु । तीर्थं चातीर्थतां यातु नगरं शापयाम्यहम् MatsyaP. 185.21.

**अतीर्थप्रपन्न** (atīrtha-prapanna) *adj.* who has entered by the improper or wrong passage अतीर्थप्रपन्ना ऋत्विजः पुरायुषः प्रमायुका भवन्ति । तीर्थप्रपन्नाः सर्वमायुर्यन्ति MānS'S. 184.10.

**अतीर्थसर्पण** (a-tīrthasarpaṇa) *adj.* not going to a sacred place अनर्थितर्पणं वित्तं चित्तमध्यानदर्पणम् । अतीर्थसर्पणं देहं पर्यन्ते शोच्यतां व्रजेत् RājTa.(Jo.) 909 = Subhāṣi. 3038.

**अतीर्थसिद्ध** (atīrtha-siddha) *m.* one who has attained liberation in a period of time when no Tīrthaṅkara lives अतीर्थे तीर्थान्तरे साधुव्यवच्छेदे जातिस्मरणादिना प्राप्तापवर्गमार्गा मरुदेवीवत् सिद्धा अतीर्थसिद्धाः SthānṬ. 33B. 1.

**अतीर्थस्नान** (atīrtha-snāna) *n.* bath at a place which is not a ford निमज्जनं च नदीतडागादावतीर्थस्नानमङ्गपरिघर्षणादिवर्जनम् ManuBh. i. 455.7 (*on* 5.72)

**अतीर्थीकृत** (a-tīrthīkṛta) *adj.* not given to worthy persons वित्तं त्वतीर्थीकृतम् ... रक्षति दुःखदुःखी BhāgP. xi. 11.19.

**अतीर्यसत्त्व** (atīrya-sattva) *adj.* whose prowess cannot be overcome कुरुबलाब्धिमनन्तपारमेको रथेन ततरेऽहमतीर्यसत्त्वम् BhāgP. i. 15.14.

**अतीव** (átīva) *ind.* [GaṇRa. 1.15 (34); JaineVyā. i. 1.74] **AI** as if high above, as if surpassing अतीव यो मरुतो मन्यते नः AV. ii. 12.6; बृहस्पते अति यदर्यो अर्हादित्येतया परिदध्यात् तेजस्कामो ब्रह्मवर्चसकामोऽतीव वान्यान् ब्रह्मवर्चसमर्हति AitBr. 17.5 (466) (comm. अत्र पादे योऽयमतिशब्दस्तत्प्रसादादनुष्ठातान्यपुरुषानतीवातिक्रम्यैवाधिकं ब्रह्मवर्चसमर्हति प्राप्नोतीत्यर्थः); शिष्यस्ते शासिता सोऽस्तु धृतराष्ट्र युधिष्ठिरः । अतीव सर्वान्पुत्रांस्ते MahāBhā. v. 34.82; (MahāBhāraDī. अतीव अतिक्रम्य); देवराज सुदेवोऽयं मम सेनापतिः पुरा । आसीद्योधः प्रशान्तात्मा सोऽयं कस्मादतीव माम् । नानेन क्रतुभिर्मुख्यैरिष्टं नैव द्विजातयः । तर्पिता विधिवच्छक्र सोऽयं कस्मादतीव माम् MahāBhā. xii. 99.10-11; **AII** as if beyond या हुता अतिनेदन्ति मनुष्यलोकमेव ताभिर्जयत्यतीव हि मनुष्यलोकः S'atBr. XIV. vi. 1.10; अतीव हि पितृलोकः BṛĀraU. iii. 1.8; **B** very much, excessively [अतीव च निर्भरे AmaK. 2853; अतीवेत्यत्रेवशब्दो वाक्यालंकारे तं च प्रायोऽतिशब्दात् किंवृत्तेश्च प्रयुञ्जते शाब्दिकाः SyādvāMañ. 7(4)] (with verbs) स यद्यतीव वर्षेद् एतदेव निधनमुपेयात् JaimiBr. 1.117; यः सर्वभूतप्रशमे निविष्टः ...। अतीव संज्ञायते ज्ञातिमध्ये MahāBhā. v. 33.101; सोऽतीव बालबुधवृद्धतमान् बभार VarāṅgaC. 1.51; वेदार्थज्ञानरत्ने मे तृष्णातीव विजृम्भते S'lokaVār. 1.9 (3.6); मेयाभावस्य मेयता । न्यायं न सहतेऽतीव BṛĀraUBhVā. (Sambandha.) 938; कुवलयमतीव वापीं विभूषयति EI. i. 360.60; केऽपि काका इव ... कवित्वकर्पूरवनीः कवीनामतीव ... द्विपन्ति VasaViKā. 1.25; शुभसंभावनोत्कर्षादतीव मुमुदे हृदि PārśvC. 1.244; प्रद्योतते नूनमतीव भास्वान् Yādavā. 11.59; प्रशशंसुरतीव शंकरम् S'aṅkaDigVi.(Mā.) 4.31; कमले किल तव नयने संमोहयतो ह्यतीव मे चेतः AlaṅkāMañ. 35.9; (with nouns) यदा शीते भवत्युष्णमुष्णे शीतमतीव च । नवमासात् परं विद्यात् तेषु देशेषु वै भयम् AVPari. lxxi. 2.5; पश्यन्ति हि भवन्तोऽद्य मय्यतीव व्यतिक्रमम् MahāBhā. ii. 42.13; पश्चाच्छान्तिं न च गच्छत्यतीव MahāBhā. iii. 254.11; पुरीषमानाहमतीव कुर्यात् रेतोऽवरोधः कुरुतेऽथ षण्डः(म्) BhelaS. 10.1 (1.6); नायकविदितं च प्रादोषिकं विधिमतीव यत्नादस्याः कारयेत् KāmSū. 243 11 (4.2); क्षुद्रेऽपि नूनं शरणं प्रपन्ने ममत्वमुच्चैःशिरसां सतीव (v. l. अतीव) KumāSaṁ. 1.12; SāhiDa. 426.7; Kuval. 123(22); अतीव मे कौतुकं वर्तते UttaRāC. 4.20(3); ईदृशस्य भवतः कथमेतल्लाघवं मुहुरतीव रतेषु S'iśuVa. 10.77; भिनत्ति भीमं करिराजकुम्भं बिभर्ति वेगं पवनादतीव (सिंहः) NītiRa. 7; Indische Sprüche 2047; अतीव शङ्कं कुर्वन्ति मांसाद्याहुतयः BṛĀraUBh. 366.10 (*on* iii. 1.8); एतौ द्वावप्यर्थौ न शास्त्रादृते अन्येन प्रतिपादयितुं शक्येते इत्यतीव शास्त्रविषयः TantrVā. 231.3 (*on* i. 3.25); ManuBh. i. 364.22 (*on* 4.91); निहतेषु ... सत्त्वेषु ...। एता वहन्ति संतापमतीवारण्यभूमयः NavaSāC. 2.59; कर्षकाणां वै तदेवातीव दुर्दिनम् । ... सुखदम् DevīBhāP. iii. 9.17; अनुरागातिशयसूचकमालतीकटाक्षाभियोगे माधवस्य रतिरतीवोत्पद्यते SaraKaṇṭhā. 601.6; पितामहो यत्खलु सिंहवर्म्मा पिता च यद्वीरवरस्सधन्वः । जगत्यतीवातिशयोऽमुनैव महानुभावत्वमतो[ऽ]पि यत्तु EI. i. 258.15; विधुरतीव तनोति ... हृदये मदनव्यथाम् GītGo. vii. 14.9; तर्कं ज्ञानमतीव यस्य EI. xix. 299.24; (अमावास्यायाः) अपराह्णे सूर्याचन्द्रमसोरतीव संनिकर्षात् BhaṭṭCan. 15.15 (*on* xiii. 2.11); जनप्रवादमाकर्ण्य ...। अतीव भवनिर्वेदो बभूव मम चेतसि SamarāSaṁ. 2.228; तदाप्यनम्रं तमतीव गर्वात् । विपक्षमालोक्य विशामधीशः ... रोषारुणवीक्षणोऽभूत् Raghunā. 8.85; अमलद्युतिसंध्या । भासते ... अतीव सतीव PadyaVe. 559; अतीव सौन्दर्यादिकृतो गर्वो यस्याः संजातः ... अतिगर्विता LalitāSaBh. 119.14 (*on* 155); (with adjectives, adjectivals and adverbs) कर्णस्तु तद्वाक्यमतीव हृष्टः । संपूजयामास हसन् सशब्दम् MahāBhā. ii. 60.38; राममतीव प्रियदर्शनम् । ...न ततर्प समायान्तं पश्यमानो नराधिपः Rāmā. ii. 3.12; अतीव हि समालक्ष्य भ्रातरं क्षुभितेन्द्रियम् । कुम्भकर्णः शनैर्वाक्यं बभाषे Rāmā. vi. 51.28; भवतः शरण्यानतीव सन्दर्शितपक्षपातान् । यास्यामि BuddhaC. 7.47; सत्त्वानि ... स्वजातिषु प्रीतिपराण्यतीव Saund. 16.20; (मुखाब्जं तन्वङ्ग्याः) किंपाकद्रुमफलमिवातीव विरसम् S'atTrayī. 96; 339; वयांसि तेषां स्तनपानबाल्यव्रतस्थिता यौवनमध्यवृद्धाः । अतीव वृद्धा इति चन्द्रभौमज्ञशुक्रजीवार्कशनैश्चराणाम् BṛSaṁ. 96.17; अंशुपाणिभिरतीव पिपासुः पद्मजं मधु ... पतङ्गः Kirātā. 9.3; कुलवधूर्यदि ... अतीव प्रियमिति वा विप्रियं वदति DhūrtaViSaṁ. 26.6; अतिमलिने कर्तव्ये भवति खलानामतीव निपुणा धीः । तिमिरे हि कौशिकानां रूपं प्रतिपद्यते चक्षुः VāsaDa. 6.1; Subhāṣi. 928; कौमारकं विहन्तुं रतिसमये मदनसेनायाः । इच्छामि किन्तु तस्या मात्रातीव प्रसारितं वदनम् KuṭṭaMa. 350; अतीव कुत्सिताचारोऽपि भजते माम् GītāBh.(S'aṅ.) 273.6 (*on* 9.30); संसारोऽयमतीव विचित्रः MohaMu. 8; वाम्या ये च विपातुराः । अतीव चोल्बणकफास्ते च स्युर्मधुकाम्बुना SiddhYo. 73.21; न जाने का च सा माया किं स्वित् सातीव दुष्करा DevīBhāP. i. 15.25; त्वमतीव गुणश्लाघी YogVā. ii. 11.51; दुराराध्या हि नरपतयः पर्वता इव (v. l. अतीव कर्कशाः स्तब्धाः ईश्वराः पर्वता इव) PañcT. 1.26(1) (25.3); अन्तर्गूढविषो बहिर्मधुमयश्चातीव मायापटुः ... यः शिक्षितो दुर्जनैः PañcT. 1.107 (106.9) = Hitopa. 2.150; याश्राजीवनम् ... अतीव गर्हितम् Hitopa. 1.101(1); राजा जातोऽतीव विवेकवान् EI. iii. 299.31; परुषं निष्ठुरार्थं तु यदतीव विगर्हितम् । विरुद्धलक्षणाद्यासु तदुक्तिषु न दुष्यति SaraKaṇṭhā. 133.8; (पान्थौ) अतीव विस्मितौ BṛKathāMañ. i. 2.19; अतीव युक्तं मतम् ... भवद्भिरुक्तम् Daśāvac. 3.18; तवेदमीदृशं रूपं दृष्ट्वातीव व्यथिता भवामः GītāBh(Rā.) 548.24 (*on* 11.23); ध्यानलयेन पुरः परिकल्प्य भवन्तमतीव दुरापम् GītGo. iv. 8.7; EI. iii. 193.10; VasaViKā. 2.48; सः ... अतीव भोजने गृद्धः PrabhāC. 34.4; अयं प्रत्येकपदव्युत्पादनप्रयासः ... भवद्भिरतीव परिहरणीयः NyāyKu. 4.12; अतीव चित्राणि वीर भवतश्चरितानि Ekāva. 8.46(3) (297.11); काचिद्विधवातीव रूपवती PrabaCin. 98.20; द्विषन्तः । वरं विहाय सह चेरुरतीव हृष्टाः S'aṅkaDigVi.(Mā.) 2.73; त्वयापि ... यदेव सत्त्वेन व्यवस्थापितम् ... तदतीव मन्दम् NyāySu.(Ja.) 39A.8 (*on* i. 1.1); बिभ्रदतीव विलोचनहारि वपुः । हरिरस्तु मदीयहृदम्बुजमध्यगतः ChandoMañ. 2.373; सा कन्या अतीव रूपिणी VetāPañ.(S'i.) 22.13; राजा ... तासां पृष्ठे वस्त्रलग्नांस्तिलान् दृष्ट्वातीव चमत्कृतः MādhavāĀ. 25(3); कालक्रमेण परिणामवशादनन्या भावा भवन्ति खलु पूर्वमतीव तुच्छाः DṛṣṭāKaS'. 99; राधा ... अतीव सहना तूष्णीमसौ तिष्ठति UjjvaNīMa. 90.5; कन्दुकद्वयमतीव सुन्दरं राधिकोरसि HariVi. 1.13; PurāPraSaṁ. 13.32; 79.32; KathāK. 1.7; 93.15; श्रीरङ्गराजपुत्रः कनकसभापतिरतीव मेधावी EI. iii. 246.154; महाकैलासो नाम कैलासादतीव परतो लोकः LalitāSaBh. 126.7 (*on* 168); 203.24 (*on* 242); **C** (with negative particle) (not) much, (not) quite (with verbs) तत्र यल्लोकवाक्यस्थं कथयेच्छब्दलक्षणम् । वेदं व्याख्यातुकामस्य तन्नातीवोपयुज्यते S'lokaVār. 5(5).8 (407.8); सर्यमाणस्य चांशस्य विवेकेनाप्रमाणता । श्रुतातिदेशवाक्यत्वं न चातीवोपयुज्यते S'lokaVār. 5(6).10 (436.2); ग्रन्थारम्भः स्वप्रतिपत्त्यर्थमिति नातीव शोभते TātpaṬ.(U.) 3.15 (*on* 1.9); (with nouns) तस्मान्नातीव वाच्यानां वाचकाधी-

-नता भवेत् SlokaVār. 4. 205 (196. 3); नातीव पुनरुक्तता महान् दोषः NyāySu. (So.) 68. 27 (on i. 2. 19); पूर्णालुप्ताविभागः ··· नातीवालंकारशास्त्रे व्युत्पादयितुमर्हति CitraMi. 27. 8; आद्यादिपदे तु ··· अतिरिक्तशक्तिकल्पनमपि ··· नातीव दोषमावहति MimāKau. i. 187. 8 (on i. 4. 3); निमित्तनूतस्य नातीव प्रयोजनम् MayūMāli. 2. 26 (on i. 2. 1); तत्र प्रत्यक्षागमसिद्धेष्वर्थेषु नातीव विसंवादः Govi-Bh. 114. 9 (on ii. 2. 1); (with adjs.) उत्सन्नवेदमूलत्वं तु वेदचतुष्टयप्रसिद्धेर्नातीव पेशलम् BālaKrī. i. 18. 17 (on 1. 7); जैमिनीयानां प्रमाणलक्षणादिनिरूपणं नातीव··· संगतम् NyāySu. (Ja.) 91A. 6 (on i. 1. 1); नातीव श्रद्धेया सा (योजना) SivārkaMaDī. i. 261. 21 (on i. 1. 22); उक्तिरपि वार्त्तिककारीया नातीवादर्तव्या MimāKau. ii. 359. 18 (on iii. 3. 14); काव्यप्रकाशटीकाकारैरुक्तं नातीव श्रद्धेयम् RasGaṅ. 160. 12; MayūMāli. 877. 32 (on xii. 4. 1) [ अतीव forms cpds with words following it optionally; as there are no formal criteria to distinguish cpds. from phrases, only compounds with atīva syntactically connected with a member of the following cpd. are enlisted.]

**अतीवकृश** (atīva-kṛśa) *adj.* extremely lean त्वामतीवकृशतनुं दृष्ट्वा ··· अहम् ··· दुःखिता VetāPañ. (Jam.) 128. 23.

**अतीवक्षुभित** (atīva-kṣubhita) *adj.* greatly agitated तं च श्रुत्वातीवक्षुभितहृदय आकाशमाच्छाद्य मण्डलवटप्रदेशे ··· अवस्थितः Tantrākhyā. 4. 6; सः ··· तच्च श्रुत्वातीवक्षुभितहृदयः ··· तूष्णीमवस्थितः PañcT. 1. 5 (13. 4); इति श्रुत्वा हस्तिराजोऽतीवक्षुभितहृदयः चिरं विचिन्त्याब्रवीत् Pañcā. 186. 22.

**अतीवजातनिर्वेद** (atīvajāta-nirveda) *adj.* full of great detachment (towards worldly things) आयाम् ··सुदत्तभगवद्भर्पितपुरावृत्तवृत्तान्तश्रवणेनातीवजातनिर्वेदौ YaśasCam. ii 259. 14.

**अतीवतराम्** (atīva-tarām) *adv.* exceedingly, excessively उल्लिप्तम् ··· अतीवतरां शिरोभिः ··· । श्रद्धेयनिर्झरजलव्यपदेशमस्य विष्वक्तटेषु पतति स्फुटमन्तरिक्षम् SiśuVa. 4. 25; ते तरवो दिवसेऽपि जज्वलुरतीवतराम् BhārCam. 3. 121.

**अतीवतीक्ष्ण** (atīva-tīkṣṇa) *m.* extremely sharp (अहन्) अविकटाभिपतितनातीवतीक्ष्णविषाणविनिर्मितमर्मप्रहारः ··· प्रेतभावमनुसरन् YaśasCam. ii. 219. 2.

**अतीवतीव्र** (atīva-tīvra) *adj.* very fierce or intense तं वीक्ष्यातीवतीव्रक्रुद्धरिष्टिरसौ जवात् । ··· एकेनैव प्रहारेणास्योत्तमाङ्गमपातयत् SamarāSam. 5. 584.

**अतीवत्रस्त** (atīva-trasta) *adj.* extremely troubled तस्मात्कथंचिदपेतोऽतीवत्रस्तहृदयः (गर्दभः) Tantrākhyā. 129. 1; गर्दभः ··· अतीवत्रस्तहृदयः ··· पलायितः PañcT. 4. 17 (389. 2)

**अतीवत्वरगलम्** (atīvatvara-galam) *adv.* in such a manner that the words were coming out very quickly from the throat क्षितिपतिना ··· मुञ्च मुञ्चेमं चित्रपिङ्गलमतीवत्वरगलं गिरता ··· भण्डिलस्तामेव ··· अवस्थामनुससार YaśasCam. ii. 191. 3 (comm. अतिशयेन वेगवद्गलशब्दं यथा भवति)

**अतीवपाक** (atīva-pāka) *m.* too much cooking किलिञ्जकनामधेयः किमपि मामनुभुजत् ··· अतीवपाकोपहतवृहतीवार्ताकफलसोभाजनकन्दशालनकावतारम् YaśasCam. i. 405. 4.

**अतीवपाण्डुर** (atīva-pāṇḍura) *adj.* extremely white दिग्वधूमुखमाभाति विना चन्दनचर्चया । अतीवपाण्डुरच्छायं सान्द्रं चन्द्रमरीचिभिः Mānaso. iv. 2. 260.

**अतीवपितृवल्लभा** (atīva-pitṛvallabhā) *adj.* (*f.*) very dear to (her) father तस्य सुताहं सुन्दरी नाम अतीवपितृवल्लभा VetāPañ. (Si.) 31. 22.

**अतीवप्रसन्नरोचिस्** (atīvaprasanna-rocis) *adj.* of a very clear brilliance or brightness अतीवप्रसन्नरोचिषि चन्द्रमण्डले YaśasCam. i. 571. 3.

**अतीवफलभोगिन्** (atīva-phalabhogin) *adj.* enjoying worldly pleasures to a great extent तथान्तर्ध्याननिरता प्रियाः शंभोर्न कर्मिणः । वहिस्करा (? वहिश्चराः) यथा लोके नातीवफलभोगिनः SivaP. vii. 39. 32 (598B. 1)

**अतीवममता** (atīva-mamatā) *f.* extreme possessiveness (नरः) हिरण्यधान्यतनयभार्याभृत्यगृहादिषु । एते कथं भविष्यन्तीत्यतीवममताकुलः BrahmP. 233. 38.

**अतीवरम्य** (atīva-ramya) *m.* very attractive or charming तत्सर्वं रसशृङ्गारं चकार रसिकेश्वरः । अतीवरम्यदेशे च सर्वजन्तुविवर्जिते DeviBhāP. ix. 19. 7.

**अतीवरी** (atīvarī) *f.* a kind of medicinal plant, ApūNā. 42B. 3.

**अतीवरूपसंपन्न** (atīvarūpa-sampanna) *adj.* endowed with extreme beauty कन्याद्वयमपश्यत । अतीवरूपसंपन्नम् VarāP. 10. 53.

**अतीवललिताकल्प** (atīvalalitākalpa) *adj.* having very beautiful decorations प्रसुः ··· जगाम ··· रासमण्डलम् ··· अतीवललिताकल्पतल्पयुक्तैः सुशोभितम् BrahmVaiP. i. 5. 23.

**अतीवव्याकुल** (atīva-vyākula) *adj.* very much perturbed सः··· अतीवक्षुभितहृदयः (v. l. अतीवव्याकुलहृदयः) PañcT. 1. 5(4) (13. 8); दण्डप्रहारसंभ्रान्तमतीवव्याकुलेन्द्रियम् ··· निगडे स्थापयित्वा तं स्वयं सुष्वाप विज्वरः DeviBhāP. vii. 24. 3.

**अतीवव्याकुलित** (atīva-vyākulita) *adj.* very much perturbed तं चापदयन्तोऽतीवव्याकुलितचित्ताः संप्राप्ताः Tantrākhyā. 82. 26; तं चापश्यन्तस्ते तत्कालसमुपजातविपरीतनिमित्तव्याकुलितचित्ताः (v. l. तं चापश्यन्तोऽतीवव्याकुलितचित्ताः संप्राप्ताः) PañcT. 2. 77 (36) (252. 3)

**अतीवशुभद** (atīva-śubhada) *adj.* extremely auspicious कान्याः स कलयन्नतीवशुभदान् प्रौढान्कटाक्षक्रमान् ParamāKā. 132. 61.

**अतीवश्लक्ष्णता** (atīva-ślakṣṇatā) *f.* extreme smoothness अतीवश्लक्ष्णतावशात् । न कांचिदुपमां सेढुमूरू शक्नोति सुभ्रुवः Subhāṣi. 1564.

**अतीवसमयोपात्त** (atīvasamayopātta) *adj.* obtained after a long time अतीवसमयोपात्तं पुण्यं मुञ्चन्ति येऽखिलम् PārśvC. 6. 1250.

**अतीवसाधुसंलाप** (atīvasādhu-saṁlāpa) *adj.* conversing exceedingly well अतीवसाधुसंलापो वदेत् संसदि बुद्धिमान् SirS. 5. 232.

**अतीवसुख** (atīva-sukha) *n.* great deal of happiness मुनीन्द्रा ये तु धर्मिष्ठाः ··· अतीवसुखसंपन्नाः प्रयान्ति यममन्दिरम् BṛNāraP. 29. 21.

**अतीवसुखसाध्य** (atīva-sukhasādhya) *adj.* to be accomplished very easily अतीवसुखसाध्यो हि धर्मो वैशाखगोचरः SkandP. ii(7). 22. 10.

**अतीवसौख्य** (atīva-saukhya) *m.* great pleasure साप्यतीवसौख्यपरा जाता SiṁhāDvā. (App.) 243. 0 (69)

**अतीवस्नेह** (atīva-sneha) *m.* extreme affection शिशुमारोऽप्यतीवस्नेहाक्षिप्तहृदयः स्वगृहगमनकालक्षेपमकरोत् PañcT. 4. 1 (16) (373. 2)

**अतीवस्फुरद्वदन** (atīvasphurad-vadana) *adj.* whose mouth was very much shaking नकुलोऽपि ··· अपश्यन्महाभोगिनम् ··· तं च दृष्ट्वा अतीवस्फुरद्वदनदशनचरणः सहसोत्थाय तस्योपरि संनिपतितः Tantrākhyā. 133. 6; PañcT. 5. 2 (56) (403. 7)

**अतीवहृतहृदया** (atīvahṛta-hṛdayā) *adj.* (*f.*) whose heart is greatly captured तेनातीवहृतहृदया ··· प्रत्युतमातुः पूर्वार्जितधनमक्षपयत् Tantrākhyā. 136. 1.

**अतीवाकार्यकारिणी** (atīvākāryakār-iṇī) *adj.* (*f.*) doing very improper deeds भवतो दुहितातीवाकार्यकारिणी VetāPañ. (Jam.) 33. 24.

**अतीवाद** (atī-vāda) *m.* name of a ṛc (verse) VaitāSū. 32. 26 [Viśva ? PW, MW] cf. अतिवाद.

**अतीवादा** (atī-vādā) *f.* name of a ṛc (verse) प्रवह्लिका: प्रतीराधानतीवादामाहनस्याः सर्वा वाचो वदति KausīBr. 30. 7 (145. 1) (comm. वीमे देवा इत्येषातीवादा = AV. xx. 135. 4); SāṅkhāSS. xii. 23. 4 (comm.)

**अतीवाद्भुतदर्शन** (atīvādbhuta-darśana) *adj.* whose appearance was very wonderful कन्याद्वयमपश्यत ··· अतीवाद्भुतदर्शनम् VarāP. 10. 53.

**अतीवानन्दकारिन्** (atīvānandakārin) *adj.* causing extreme delight ततश्चत्वारि खण्डानि दिव्यरूपधराणि च । अतीवानन्दकारीणि BṛKathāK. 126. 225.

**अतीवायतेक्षणा** (atīvāyatekṣaṇā) *adj.* (*f.*) having very long eyes विनीय दुःखमबला सा त्वतीवायतेक्षणा । उवाच प्राञ्जलिर्भूत्वा MahāBhā. xii. 250. 1.

**अतीवार्तमनस्ता** (atīvārtamanas-tā) *f.* the state of having a very depressed mind असौ ··· बान्धवजनमरणाद्विगसंद्रवणाच्चातीवार्तमनस्तया छातच्छायकायः YaśasCam. ii. 346. 7.

**अतीवार्द्रतनू** (atīvārdra-tanū) *adj.* (*f.*) having very wet form (thoroughly drenched) सा सुधुवे सरस्वती । विहारमारम्य सरस्वतीः सुधासरःस्वतीवार्द्रतनूरनूत्थिताः NaiṣC. 12. 4.

**अतीवासक्त** (atīvāsakta) *adj.* greatly attached or addicted to मगधसुन्दरीनामया पण्याङ्गनयात्यन्तमतीवासक्तचित्तवृत्तिप्रसरो मृगवेगनामा वीरः ···एवमुक्तः YaśasCam. ii. 304. 27.

**अतीवोत्तुङ्ग** (atīvottuṅga) *adj.* very high or tall ततो गन्धर्वस्त्या सार्धं ददर्श पुरतो वटम् । अतीवोत्तुङ्गशाखाग्रम् BrahmVaiP. iv. 29. 30.

**अतीवोत्फुल्लनयन** (atīvotphulla-nayana) *adj.* with eyes very much widened (wide open) राजातीवोत्फुल्लनयनः ··· किमिदमिति विस्मितवान् Pañcā. 117. 24.

**अतीवोदार** (atīvodāra) *adj.* exceedingly magnanimous सुरेश्वरः । सत्यशौचक्षमाचारमतीवोदारमानसम् । जिज्ञासुस्तमृषिश्रेष्ठम् MārkP. 3. 20.

**अतीवोद्वर्तन** (atīvodvartana) *n.* excessive application of fragrant substances 'अतीवोद्वर्तनकुलप्रवृत्त्यादिनिरुपायैः ··· उत्पद्यते (व्याधिः) KāśyaS

331B. 25.

**अतीवोद्विग्न** (atīvodvigna) *adj.* very much depressed कन्यामलभमानोऽसौ ··· चिन्तामवाप महतीमतीवोद्विग्नमानसः MārkP. 96. 2.

**अतीव्र** (a-tīvra) *adj.* [*f.* -ā] not sharp or acute (mild) रुजाकरमतीव्रवेदनं भवति SuśruS. iii. 6. 22; शिशोस्तीव्रामतीव्रां च रोचनाल्लक्षयेद्रुजम् RugVi. 68. 4; [blunt, not pungent, MW]

**अतीव्रत** (a-tīvrata) *adj.* not hasty, slow न विद्यते तीव्रता त्वरावत्ता यस्यासावतीव्रतः, अत्वरित इति यावत् VīraMi. (Saṁskāra.) 447. 13.

**अतीव्रता** (atīvra-tā) *f.* lack of sharpness or intensity माधुर्यमुक्तमाचार्यैः क्रोधादावप्यतीव्रता SaraKaṇṭhā. 75. 1; 721. 7; तिग्मांशुर्धत्ते ग्रीष्मेऽप्यतीव्रताम् RājTa. (Ka.) 1. 41; तीव्रातीव्रतया वायोः ··· कुर्वन्त्येकत्र रन्ध्रेऽपि तज्ज्ञा नानास्वरोदयम् SaṁgīRa. iii. 328. 1 (6. 454)

**अतीव्रत्व** (atīvra-tva) *n.* absence of intensity तेजसस्तु प्राणनैकट्यादुभयथा तीव्रातीव्रत्वेन प्राणानुग्रह इति द्विधा स्वेदो वैवर्ण्यं च Kāvyānu. (He.) 120. 1 (comm. अतीव्रत्वेन तु वैवर्ण्यं यथा)

**अतीव्रप्रयत्नत्व** (atīvraprayatna-tva) *n.* the state of possessing not very intense articulation एषु अतीव्रप्रयत्नत्वं संयोगस्य गुरुत्वाभावे हेतुः ChandaśCū. 1. 7 (17)

**अतीव्ररक्षस्** (a-tīvrarakṣas) *adj.* not having a demon more terrible than herself रन्तुमास्वयन तद्विदादयोऽतीव्ररक्षसि पतत्रिकेशिकौ RāmKṛViKā. 6 (comm. न विद्यते तीव्रं रक्षः यस्मात्तत्)

**अतीव्रारम्भ** (a-tīvrārambha) *m.* beginning or origin of the low (note) तीव्रेणापि शनैरेवमतीव्रारम्भसम्भवः NyāyMañ. i. 210. 4.

**अतीशय** (atīśaya) *m.* name of a Kinnara अतीशयः सप्रयोगो गीतज्ञश्चैव किन्नराः । शिवप्रणामसम्पन्ना व्यपोहन्तु मलं मम LiṅgaP. i. 82. 56.

**अतीशशक्ति** (atīśa-śakti) *f.* power surpassing (that of) the god ध्रुवं विनान्यानखिलानधस्थानतीशशक्त्या प्रवहः पराशाम् । प्रचालयति SiddhāTaVi. 25. 12.

**अतीशेष** (atī-śeṣa) *m.* supernatural power of a Jain prophet चतुस्त्रिंशदतीशेषैरिद्धर्द्धिं त्रिजगत्प्रभुम् (त्वां तोष्ये) MahāP. 25. 7 (F. N. अतिशयैः)

**अतीशोक** (atī-śoka) *m.* extreme heat यदि शोको यद्यतीशोको रुद्रस्य प्राणो यदि [वा]वारुणोऽसि AV. (P.) i. 32. 3.

**अतीष्** (atīṣ-) I. P. to pass by तं मरुतोऽध्यैयन्त तेऽत्यैषन् MaiS. i. 10. 14; KāṭhS. 36. 8.

**अतीषङ्ग** (atī-ṣaṅga) *m.* name of a Sāman (recited by mingling two different *ṛcs*) रैवतो वैराजः शाक्वरः इतीन्द्रियस्य त्रयोऽतीषङ्गाः ĀrṣeBr. vi(1). 4. 4; सौर्योऽतीषङ्गः ĀrṣeBr. vi(4). 2. 5 (comm. अतीषङ्गो नाम परस्परमिश्रणम् । उभयोः ऋचोः सौर्यत्वाद्व्यतिषज्यते); अतीषङ्गानां वा प्रथमम् Kṣudra. 2 (91); अतीषङ्गो यदिन्द्रेन्द्रायाहि PuṣpSū. ii. 5. 7; येषां जपैश्च होमैश्च द्विजातयः पापेभ्यः पूयन्ते अतीषङ्गाः ViṣṇuSm. 56. 10.

**अतीषद्धास्य** (atīṣaddhāsya) *adj.* very slight smile दुर्गाम् ··· अतीषद्धास्ययुक्तास्याम् ··· मुदिता ददृशुः सर्वे BrahmVaiP. iv. 44. 48.

**अतीसार** (atī-sāra) *m.* dysentery or diarrhoea यदि यूपः सुषिरः स्यादतीसारेण यजमानो म्रियेत ĀpaŚS. ix. 20. 1; वातातीसाराभ्यां कुक् च P. v. 2. 129; अतीसारो व्याधिः MahāBh. ii. 144. 5 (*on* iii. 3. 17); JaineVyā. iv. 1. 52; CāndraVṛ. *on* i. 3. 7; KātanVṛ. *on* iv. 5. 2; SiddhāKau. 568B. 8; षडतीसारा इति वातपित्तकफसन्निपातभयशोकजाः CaraS. i. 19. 7 (1922 Ed.); अतीसारशूलार्ताः ··· सर्वे एते दिवास्वप्नं सेवेरन् CaraS. i. 21. 40 (1922 Ed.); उपोदिका तिलकल्कसिद्धा हेतुरतीसारस्य CaraS. i. 26. 86 (1922 Ed.); स्कन्दापस्मारलक्षणम् ··· स्रस्ताङ्गत्वमतीसारः AṣṭāSaṁ. ii. 188. 13 (6. 3); दोषैर्व्यस्तैः समस्तैश्च भयाच्छोकाच्च षड्विधः । अतीसारः AṣṭāHṛ. iii. 8. 1; पक्वोऽसकृदतीसारः SiddhYo. 3. 23; क्रिमिदोषतः ··· नृणां भवत्यतीसारः RugVi. 3. 3; प्रवाहणातीसाराभ्यां निर्गच्छति गुदं बहिः RugVi. 55. 54; अतीसारे पुरुषं (? पुरीषं) च ततो मूत्रं प्रवर्तते KāśyaS. 78A. 43; तन्द्रातीसारपाण्डुत्वं भृशं स्निग्धस्य लक्षणम् ŚārṅgaS. iii. 1. 31; सारसस्य तथा मांसम् ··· मोहातीसारपित्तघ्नम् BhojanKu. 172. 13; इह खलु द्विविधोऽतीसारः Hastyāyur. 155. 8 (2. 2); अतीसारस्तृषा मूर्च्छा ··· शूलस्योपद्रवा दश HāriS. iii. 7. 67; अतीसारे सुशंसन्ति पिण्डोऽयं वाजिनः शुभः AśvaCi. 13. 35; अतीसारप्लीहागुल्मादिकैः ··· क्षयं (नीयते) ViṣṇuP. i. 17. 88; रोध्रत्वङ्मधुना सार्धं अतीसारविनाशिनी ViṣṇuDhaP. ii. 52. 68; षष्ठे मासे नृपोऽतीसारान्मृतः PurāPraSaṁ. 20. 29; मोदकभुक्त्यनन्तरं तस्या अतीसार उत्पन्नः KathāK. 133. 30; अङ्गारैः शाकवृक्षस्य ··· दत्तैर्नश्यत्यतीसारः ŚāraṅgaPa. 2850; अतीसारसंभूतबीभत्सभावना ··· अवनीपतिभवनमभजत् YaśasCam. ii. 295. 2; अतीसारैः ··· नष्टा पुष्टिः Deśopa. 7. 21; लिङ्गस्तम्भो ह्यतीसारः Rasā. 18. 138; उष्णोदकानुपानं च दद्यात् ··· अतीसारे RaseCin. 9. 17 (115. 7); अन्त्रग्रन्थिरतीसारः ParyāRaMā. 1401; Vaija. 183. 129 = KośaKaTa. 1. 7335; AnekāSaṁ. 3. 220 = ViśvaPra. 53. 79; ViśvaLoK. 113. 81; KalpaK. 54. 311; cf. अतिसार.

**अतीसारक** (atīsāra-ka) *m.* dysentery or diarrhoea दाहमूर्च्छाप्रलापाश्च छर्द्यतीसारकभ्रमाः ।··· पैत्तिकज्वरलक्षणम् ĪśānŚiPa. i. 45. 29.

**अतीसारकारक** (atīsāra-kāraka) *adj.* causing dysentery or diarrhoea उभौ वस्ती ··· अतिमात्रौ ··· क्रमातीसारकारकौ ŚārṅgaS. iii. 5. 19.

**अतीसारकिन्** (atīsārak-in) *adj.* [Debru. p. 542] suffering from or afflicted with dysentery or diarrhoea गुदे पक्वे गतोष्माणमतीसारकिणं त्यजेत् SuśruS. vi. 40. 21; वात - अतीसारशब्दाभ्यां मत्वर्थे इन् भवति ··· अतीसारकी JaineVyā. 252. 35 (*on* iv. 1. 52); अतीसारक्यपीदृक् स्यात् KātanVṛ. *on* ii. 6. 15; आत्रस्य भृत्या लुलुधु(ठु)श्च भूमौ । वातक्यतीसारकिणश्च पिशाचकिनो यथा DvyāśraKā. 18. 90; चादिनिः । वातकी । अतीसारकी SiddhāKau. 307B. 22; अतीसारक्यप्यतिसारकी NāmŚil. 1783; KośaKaTa. 1. 7336; cf. अतिसारकिन्.

**अतीसारक्रिया** (atīsāra-kriyā) *f.* treatment of diarrhoea or dysentery विकारान् साधयेत् ··· विड्वृद्धिजानतीसारक्रियया AṣṭāHṛ. i. 11. 32.

**अतीसारगद** (atīsāra-gada) *m.* disease of diarrhoea or dysentery लिङ्गैरसाध्यो ग्रहणीविकारो यैस्तैरतीसारगदो न सिध्येत् RugVi. 4. 19; अतीसारगदारम्भस्तत्रैवास्य विलोकितः RājTa. (Śrī.) 3. 526.

**अतीसारचिकित्सित** (atīsāra-cikitsita) *n.* therapeutics of dysentery or diarrhoea अथातोऽतीसारचिकित्सितं व्याख्यास्यामः CaraS. vi. 19. 1 (1941 Ed.); Hastyāyur. 155. 7 (2. 2)

**अतीसारतस्** (atīsāra-tas) *adv.* due to dysentery or diarrhoea विपूचिकान्नकवलदवातीसारतो मृताः ŚātāSm. 6. 3; शृङ्गाटकेन वैधव्यं दुहितॄणां प्रजायते । वाप्या कूपेन वा विद्धे स्यादतीसारतो भयम् SamarāSū. 39. 54.

**अतीसारदुष्ट** (atīsāra-duṣṭa) *adj.* suffering from dysentery or diarrhoea छर्द्यतीसारदुष्टानामतिस्विन्नतनोरपि ··· सिरामोक्षो न शस्यते ŚārṅgaS. iii. 12. 21.

**अतीसारनाशन** (atīsāra-nāśana) *adj.* curing dysentery or diarrhoea कोरदो(दू)पा(पौ)दनो योज्यस्तथातीसारनाशनः BhelaS. 252. 18 (8. 4); मकरो दीपनो हृद्यो ग्राही चोष्णविकारहा । मूत्राश्मरीणां शमनो गुल्मातीसारनाशनः HāriS. i. 22. 8; पटोलयवधान्याकक्वाथः पेयः सुशीतलः । शर्करामधुसंयुक्तश्छर्द्यतीसारनाशनः SiddhYo. 3. 32; 3. 32 (1); अमृतातिविषा तथा । एभिः कृतं पिबेत्क्वाथं ज्वरातीसारनाशनम् ŚārṅgaS. ii. 2. 62; रालो हिमो गुरुस्तिक्तः ··· शूलातीसारनाशनः BhāvPra. (Bhā.) 6 (3). 49; 6(7). 17; (आम्रबीजम्) लघ्वतीसारनाशनम् BhojanKu. 105. 6.

**अतीसारनिपीडित** (atīsāra-nipīḍita) *adj.* affected by dysentery or diarrhoea अतीसारनिपीडितम् । शूनमुष्कोदरं चैव यक्ष्मिणं परिवर्जयेत् RugVi. 10. 11.

**अतीसारनिबर्हण** (atīsāra-nibarhaṇa) *adj.* eradicating dysentery or diarrhoea तस्याग्निदीपनान् योगानतीसारनिबर्हणान् ··· कुर्यात् CaraS. vi. 8. 124 (1941 Ed.)

**अतीसारनिवर्तक** (atīsāra-nivartaka) *adj.* curing dysentery or diarrhoea सर्वांश्चैवौषधिगणानतीसारनिवर्तकान् । एवं यथास्वं युञ्जीत Hastyāyur. 607. 11 (4. 5)

**अतीसारनिवृत्ति** (atīsāra-nivṛtti) *f.* cure or stopping of dysentery or diarrhoea जम्ब्वाम्रमध्यं बिल्वं च सकपित्थं सनागरम् । पेयामण्डेन पातव्यमतीसारनिवृत्तये CaraS. vi. 8. 127 (1941 Ed.)

**अतीसारपीडित** (atīsāra-pīḍita) *adj.* afflicted by dysentery or diarrhoea गृहीत्वा सज्वरं श्वासच्छर्द्यतीसारपीडितम् । हन्त्राभिहस्तपादेषु शोथः कर्षति गुल्मिनम् RugVi. 28. 19; 35. 28.

**अतीसारप्रतिषेध** (atīsāra-pratiṣedha) *m.* prevention of dysentery or diarrhoea अथातोऽतीसारप्रतिषेधं व्याख्यास्यामः SuśruS. vi. 40. 1.

**अतीसारप्रवृद्धि** (atīsāra-pravṛddhi) *f.* increase of diarrhoea or dysentery सलिलमुपयुञ्जनात्स्यादतीसारप्रवृद्धिहेतुरिति तस्मै दूर्वामधूलिकां मेषपर्णीं च संकुट्य ··· कवलान् दद्यात् Hastyāyur. 156. 10 (2. 2)

**अतीसारभेषज** (atīsāra-bheṣaja) *n.* the plant *Symplocos racemosa* तदेव वल्कलाह्वं च तथातीसारभेषजम् । श्वेतलोध्रं हि कथितं शब्दैः पर्यायवाचकैः AbhidhāMañ. 87. 10; अतीसारभेषजं रोध्रे ApūNā. 15A. 4.

**अतीसारमृत** (atīsāra-mṛta) *adj.* died of (chronic) diarrhoea or dysentery अतीसारमृते लक्षं सावित्र्याः संयतो जपेत् ŚātāSm. 6. 45.

**अतीसाररोगघ्न** (atīsāraroga-ghna) *adj.* curing the disease of diarrhoea or dysentery ज्वरातीसाररोगघ्नः ···। सूतिकाघ्नो रसो नाम ब्रह्मणा परिकीर्तितः RaseCin. 9. 355 (270. 20)

**अतीसारवत्** (atīsāra-vat) *adv.* as in the case of dysentery or

diarrhoea (प्रवाहिकानाम्) तासामतीसारवदादिशेच्च लिङ्गं क्रमं चामविपक्वतां च RugVi. 3. 22.

**अतीसारवर्ज** (atīsāra-varja) *adj.* excepting dysentery (श्लेष्मा तु) छर्दतीसारवर्जानि यथोक्तानि शूलादीन्युपजनयत्यतिमात्राणि AṣṭāSaṁ. i. 70. 14 (1. 11)

**अतीसारविज्ञान** (atīsāra-vijñāna) *n.* knowledge of diarrhoea अथातीसारविज्ञानं भेषजं शृणु पुत्रक HāriS. iii. 3. 1.

**अतीसारविनाशिनी** (atīsāra-vināśinī) *adj.* (*f.*) curing diarrhoea or dysentery रोध्रत्वङ्मधुना सार्धमतीसारविनाशिनी ViṣṇuDhaP. ii. 52. 68.

**अतीसारशमन** (atīsāra-śamana) *adj.* curing diarrhoea or dysentery (शुण्ठीचूर्णम्) किराताब्दामृतानिम्बचन्दनोदीच्यवत्सकैः। शोपातीसारशमनं विशेषाज्ज्वरनाशनम् SiddhYo. 2. 23; 37. 70.

**अतीसारशान्ति** (atīsāra-śānti) *f.* removal of diarrhoea लाजोत्पलं वा स्तन्येन प्रियङ्ग्वोध्रकं लिहेत्। कृष्णां समङ्गां वालोड्य ज्वरातीसारशान्तये ĪśānŚiPa. i. 46. 2; i. 45. 177.

**अतीसारसाधन** (atīsāra-sādhana) *n.* medical treatment for diarrhoea (उपाचरेत्) शकृद्वृद्धिजानतीसारसाधनेन AṣṭāSaṁ. i. 103. 10 (1. 19)

**अतीसारहर** (atīsāra-hara) *adj.* curing diarrhoea बिल्वम् … °कफप्रशमनानाम्। उदीच्यं निशांपगदीपनीयच्छर्द्यतीसारहराणाम् AṣṭāSaṁ. i. 81. 6 (1. 13)

**अतीसाराग्रवेदना** (atīsārāgra-vedanā) *f.* pain preceding diarrhoea वातकर्मनिवृत्तिश्चेत्यतीसाराग्रवेदना: KāśyaS. 34A. 9.

**अतीसारातङ्कतस्** (atīsārātaṅka-tas) *adv.* due to the disease of diarrhoea यशोधरापि मे मातातीसारातङ्कतो मृता SamarāSaṁ. 4. 348.

**अतीसारातिवर्तक** (atīsārātivartaka) *adj.* complete destroyer of or cure for diarrhoea एष संवर्तनो वर्गो ह्यतीसारातिवर्तकः Hastyāyur. 302. 24 (2. 60)

**अतीसारानुबन्ध** (atīsārānubandha) *m.* continuity of dysentery अतीसारानुबन्धे पिच्छावस्तयो योज्याः AṣṭāSaṁ. ii. 69. 16 (4. 11)

**अतीसारिन्** (atīsār-in) *adj.* suffering from dysentery एते हि … अविरेच्याः पुनर्नवज्वरातीसार्यधोरक्तपित्त° … °शल्याभिहतातिस्निग्धरूक्षक्रूरकोष्ठाः AṣṭāSaṁ. i. 138. 12 (1. 27); व्यायामप्रमदाध्ववाहनरतान् क्लान्तानतीसारिणः … कामं दिवा स्वापयेत् BhāvPra.(Bhā.) 5. 218.

**अतीसारोक्तविधि** (atīsārokta-vidhi) *m.* treatment prescribed for dysentery ग्रहणीमाश्रितं दोषमजीर्णवदुपाचरेत्। अतीसारोक्तविधिना तस्यामं च विपाचयेत् SiddhYo. 4. 1.

[1]**अतु** (a-tu) (Gr.) other than the suffix *tu* (Uṇādi. तुन् and तु) तादौ च निति कृत्यतौ P. vi. 2. 50.

[2]**अतु** (atu) (Gr.) word ending in *atu*(=*at*) अत्वसन्तस्य चाधातोः P. vi. 4. 14; अत्वसन्तस्य दीर्घत्वे पित उपसंख्यानम् Vār. 1 (*on* vi. 4. 14); MahāBh. iii. 183. 21 (*on* vi. 4. 14); अत्वसोऽधोः JaineVyā. iv. 4. 12; सावतोश्च ŚākaṭāVyā. i. 2. 137; iii. 2. 128; अभ्वादेरत्वसः सौ SiddhaHe. i. 4. 90; vi. 4. 132; इदंकिमोऽतुरियकिय् चास्य SiddhaHe. vii. 1. 148; vii. 1. 161; vii. 2. 155; अत्वसोऽधोः सौ धोंऽधौ MugdhaBo. 3. 108 (26. 23); 3. 24 (13. 1); 7. 42 (71. 8); अतु, इति लुप्तषष्ठीकं पृथक् पदम् LaŚabdeŚe. i. 344. 12.

**अतुकुली** (atukulī) *f.* a kind of musical instrument मृदंगमुरजाश्चैव पटहोऽतुकुलीगणाः (दध्वनुः) BrahmāṇḍP. iii. 16. 3.

**अतुङ्ग** (a-tuṅga) *adj.* **I** not puffed up (i. e. flat) अतुङ्गमनपूपाकृतिं कूर्मस्येव प्रतिकृतिमश्वशफमात्रं करोति BhārŚS. i. 26. 2 = ĀpaŚS. i. 25. 4; HirŚS. i. 6. 45; **II** not tall मेरोः सं(शृं)गमतुङ्गमेव मनुते चित्रीयमाणोऽरुणः EI. i. 145. 26; अतुङ्गस्तु भवेत् खर्वे ŚabdaRaSaK. 63. 6; **III** not being in the house of exaltation कक्ष्याह्रासः … तस्मिन्पापे नीचेऽतुङ्गेऽशुभसंयुक्ते JaimiUpaSū. ii. 1. 28.

**अतुच्** (atuc) (Gr.) the suffix *atuc* (*atu*) एधिवह्योरतुच् SaraKaṇṭhā. (Gr.) ii. 1. 65.

**अतुच्छ** (a-tuccha) *adj.* [*f.* –ā] **A** not insignificant, not small (i. e. abundant, considerable, large, vast, deep) [objects] अभ्यवाञ्छदतुच्छमच्छमशेषम् … अमृतमातृप्ति पातुम् (राजमहिषी) NalaCam. 3. 22 (32); बिभ्राणः स्वर्णतूणीरावतुच्छौ सरलाकृती TriṣaŚaPuC. i. 4. 258; ii. 4. 113; संपदा निर्विशेषाणां परस्परमतुच्छया। पूज्यमाणां तत्र भेदो राजाश्रयकृतो यदि TriṣaŚaPuC. ii. 1. 7; मत्स्यस्यातुच्छं छित्वास्य पुच्छकम् SamarāSaṁ. 4. 380; YogVā. i. 23. 42; अतुच्छं क्षरन्तः सप्तधा मदम् …इभाः वसुः PāṇḍaC. 12. 232; मा भूत्क्षुभ्यदतुच्छदुग्धजलधिस्वच्छोच्छलद्वीचिरुक्तत्र(नः) शक्तपूर्वपूरुषयशस्तत्संकुच [द्]वृत्तिमत् …कुम्भनृपतिस्ताने कलिंगे व्यधात् रम्यान् मंडपहेमदंडकलशान् EI. xxi. 286. 37; **B I** not insignificant, not mean or low (i. e. great, intense, important) पिङ्गलकः …असहमानस्त्वयंग्राहि … अतुच्छम् … राजत्वमनुभवन्नास्ते Tantrākhyā. 4. 16; Pañcā. 4. 30; नालिकेरफलसलिलविलुप्यमानमिथुनमन्मथकलहावसानपयःपानातुच्छवाञ्छे (उद्याने) YaśasCam. i. 103. 5 (comm. प्रचुरतरा); i. 123. 2; ii. 173. 8; क्लेशावेशमतुच्छमुपगच्छन्ती … शैलेन्द्रमधिरोहसि KaumuMi. 4. 2 (5); वत्स चित्तं तवातुच्छमतुच्छं दुस्तपं तपः SamarāSaṁ. 1. 139; 7. 12; 7. 199; ममाथ … मूर्च्छातुच्छा समागच्छत् SamarāSaṁ. 5. 299; SyādvāMañ. 24 (54); अहो अतुच्छं वात्सल्यं मातुः PrabhāC. 127. 21; ŚāliC. 1. 39; लोकपाला इमे लोकं रक्षन्ति शुद्धवृत्तयः। मर्यादाभिरतुच्छाभिर्गोपाला गोगणं यथा YogVā. iii. 86. 45; **B II** deep, dense (abstract ideas) यच्छत्वतुच्छां सुरलोकलक्ष्मीम् HammiMaKā. 2. 65; वाञ्छामतुच्छां दधौ HammiMaKā. 5. 71; 7. 119; 13. 32; हरिदासमणिवर्माणौ क्व पुनरतुच्छया मुदा गच्छतः Damaru. 81(2); **C I** what is other than void नेयं चेत् तदप्यतुच्छं घटादिवत् IṣṭaSi. 118. 6; 141. 7; 141. 11; 156. 20; सारमिति यत् अतुच्छं रूपं तत् इयमेव विमर्शशक्तिः PratyabhiVi. i. 261. 6 (*on* i. 5. 14); SarvaDaSaṁ. 14. 58; अभावत्वं हि…अतुच्छोऽखण्डधर्मः LaCandr. 271. 12; **C II** not false, real यच्छ्रेयो यदतुच्छं च यदपायविवर्जितम्। तत्तदाचर यत्नेन पुत्रेति गुरवः स्थिताः YogVā. ii. 7. 13 (comm. अतुच्छं परमार्थसत्यम्); iv. 20. 8.

**अतुच्छक** (atuccha-ka) *adj.* not insignificant (considerable), great स्वदवश्यायसलिलशीकरक्षेपैर्वितरन्नतुच्छकं छ(छां)टक(?)मतिस्फुटम् UdaySuKa. 114. 19.

**अतुच्छकलना** (atuccha-kalanā) *adj.* (*f.*) having a considerable size (लहर्यः) अतुच्छकलनाः काश्चित् YogVā. iv. 11. 71 (comm. अतुच्छा महती कलना देहसंस्थानकल्पना यासां ताः)

**अतुच्छकान्तिच्छटा** (atucchakānti-cchaṭā) *f.* streak of great splendour धारागृहमतुच्छकान्तिच्छटानाम् (राजा उदयसुन्दरी ददर्श) UdaySuKa. 133. 11.

**अतुच्छकीर्ति** (atuccha-kīrti) *adj.* of great repute तस्य च्छत्रं यशःस्वच्छमतुच्छकीर्तेः RāmāMañ. 406. 9.

**अतुच्छकोपा** (atuccha-kopā) *adj.* (*f.*) very wrathful अतुच्छकोपापरिहार्या तद्भार्या घण्टाख्या … निर्विवरमरं प्रदायास्थात् YaśasCam. ii. 338. 13.

**अतुच्छख्याति** (atuccha-khyāti) *f.* knowledge of what is not void न तावदन्यथाख्यातिवादिना अयमतुच्छे तुच्छभ्रमः अतुच्छे अतुच्छख्याती वा तुच्छख्यातिभ्रम इति शक्यं वक्तुम् IṣṭaSi. 141. 8; न हि तुच्छस्य तत्त्वं बोधयन् बाधोऽतुच्छख्यातिस्स्यात् IṣṭaSi. 158. 5; 162. 14.

**अतुच्छगुणाश्रय** (atucchaguṇāśraya) *m.* abode of great qualities ऊचे च जननी वत्स त्वमतुच्छगुणाश्रयः SamarāSaṁ. 9. 314.

**अतुच्छगूर्जरभू** (atuccha-gūrjarabhū) *f.* great land of the Gūrjaras. गच्छोऽगच्छदतुच्छगूर्जरभुवि प्रष्ठां प्रतिष्ठामिमान् PārśvC.(Praśasti.) 5.

**अतुच्छचित्त** (atuccha-citta) *adj.* not mean-minded, noble-minded निरुत्तरीकृत्य ततो हठेनानिच्छन्तमप्येनमतुच्छचित्तम्। हम्मीरदेवं नृपतित्वलक्ष्मीममीमनह्यातुमिलाविलासी HammiMaKā. 8. 55.

**अतुच्छच्छदसंपद्** (atucchacchda-sampad) *adj.* rich in large leaves लूताजालकरालायामतुच्छच्छदसंपदि। निहितान्यायुधान्यस्यां कोऽप्यत्रेक्षिप्यते न हि PāṇḍaC. 10. 23.

**अतुच्छच्छाया** (atuccha-cchāyā) *f.* abundant lustre इतस्ततो विदूरतरचराचपच्छदमूर्च्छदतुच्छच्छायाच्छाद्यमानमेचकरचनैः … महाभागभवनैरुपशोभितं राजपुरं नाम नगरम् YaśasCam. i. 20. 2 (comm. अतुच्छा प्रचुरा या छाया कान्तिः)

**अतुच्छत्व** (atuccha-tva) *n.* the state of not being void नापि शून्यख्यातिप्रसङ्गः प्रकारस्य अतुच्छत्वात् IṣṭaSi. 46. 16; तस्य तुच्छस्वभावस्य कार्यत्वेनातुच्छत्वप्रसङ्गात् Bhām. 753. 8 (*on* iv. 4. 1)

**अतुच्छदेवच्छन्द** (atuchha-devachhanda) *m.* large necklace of pearls (composed of 100, 103, 81 or 108 strings) अतुच्छदेवच्छन्दाविच्छिन्नकर्णीरथस्यन्दनद्विपतुरगनरनिकीर्णशयननिचयैः … रमणीनिकरैः …सः … स्तूपं तत्रातिष्ठपत् YaśasCam. ii. 315. 9.

**अतुच्छद्रव्य** (atuccha-dravya) *n.* not negligible property एवं विभज्य ग्रहणमतुच्छद्रव्यविषयं, तुच्छद्रव्यं तु निस्स्वादिभ्यः समूहेन देयम् SmṛtiCan. iv. 532. 13.

**अतुच्छधर्म** (atuccha-dharma) *m.* property of a real thing तुच्छनिष्ठस्य सर्वदेशकालनिष्ठात्यन्ताभावप्रतियोगित्वादेरतुच्छत्वनेव, अधिकरणस्वरूपत्वात्, तुच्छस्यातुच्छधर्मासंभवात् LaCandr. 271. 10; यदि तुच्छेऽप्यतुच्छधर्मसंसर्ग इति कस्यचिदाग्रहः तदा LaCandr. 272. 8.

**अतुच्छधी** (atuccha-dhī) *adj.* possessing great wisdom, very intelligent (द्विजः) अत्रजकुब्जकाम्यर्णे प्रच्छं प्रच्छमतुच्छधीः। निषण्णश्च विषण्णश्च

नात्यन्तपीडितरतुरुष्कपार्थिवः पृथ्वीराजम् … संजहार PrabaCin. 118. 2.

**अत्यन्तपीडितव्रत** ( atyantapīḍita-vrata ) *n.* religious vow observed by one severely afflicted ( with diseases etc. ) पयःपानादीन(मन्नतन्त्वं स्त्री-बालात्यन्तपीडितव्रतविषयम् CaturCin. ii(1). 333. 18.

**अत्यन्तपीतिमन्** ( atyanta-pītiman ) *m.* deep yellow colour सुवर्ण तैजसमेवास्तु शुद्धसुवर्णे दृश्यमानस्यात्यन्तपीतिम्नः … लौहित्य एव अवान्तरविशेषत्वोपपत्तेः PūrvottaVāNaMā. 81. 6.

**अत्यन्तपीन** ( atyanta-pīna ) *adj.* i extremely robust or muscular राज्ञामत्यन्तपीनत्वमुच्चता दीर्घबाहुता AlaṅkāS'e. 14. 1; ii extremely corpulent or swollen निम्नं क्वाप्युन्नतं क्वाप्यतिकृशमपरत्रान्यतोऽत्यन्तपीनम् … अङ्गम् ( रुग्णाम् ) MadaKeC. 54.

**अत्यन्तपीवर** ( atyanta-pīvara ) *adj.* very great or abundant लभ्यतेऽयमुपाध्यायः पुण्यैरत्यन्तपीवरैः PāṇḍaC. 3. 218.

**अत्यन्तपुण्य** ( atyanta-puṇya ) *n.* great religious merit अत्यन्तपुण्यकारिणः … कल्पान्तरे पूर्वजातिस्मरणपूर्वकं जन्म VivaPraSaṁ. 266. 22; मदीयं मतमत्यन्तपुण्यदम् SaṅkaVi.(Ā.) 164. 12; शिवस्योपासनमत्यन्तपुण्यवर्धनम् SaṅkaVi.(Ā.) 265. 14; 184. 7.

**अत्यन्तपुरुषार्थ** ( atyanta-puruṣārtha ) *m.* highest goal or aim of human beings अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः SāṁkhyaPraSū. 1. 1; इष्टसाधनजन्यायां दुःखनिवृत्तावत्यन्तपुरुषार्थत्वमेव नास्ति SāṁkhyaPraBh. 8. 10 (*on* 1. 3); 41. 22 (*on* 1. 82)

**अत्यन्तपूति** ( atyanta-pūti ) *adj.* very putrid अत्यन्तपूतिबीजस्य कर्षकः किं करिष्यति PramāVāBh. 397. 21; MahāP. 4. 147.

**अत्यन्तपूर्णता** ( atyantapūrṇa-tā ) *f.* extreme fulness or plenitude पूर्णपूर्णेति वीप्सयात्यन्तपूर्णतोच्यते SetuBa. 332. 4.

**अत्यन्तपेलवा** ( atyanta-pelavā ) *adj.* ( *f.* ) very delicate मन्ये मौर्व्यमयी सृष्टिरियमत्यन्तपेलवा YogVā. v. 13. 109.

**अत्यन्तपेशल** ( atyanta-peśala ) *adj.* very tender न्यस्तं मयि मनः पात्यमेतदत्यन्तपेशलम् BṛKathāMañ. ix. 2. 823; xvi. 189; Mānaso. iii. 15. 1633.

**अत्यन्तपैत्तिक** ( atyanta-paittika ) *adj.* very bilious ( person ) अत्यन्तपैत्तिको वापि कदुष्णं पातुमर्हति KāśyaS. 177B. 12.

**अत्यन्तपोषण** ( atyanta-poṣaṇa ) *n.* excessive nourishment अपोषितो भवेत् क्षीणो ( वाजी ) रोगी चात्यन्तपोषणात् S'ukraNī. 4(7). 121.

**अत्यन्तपौनरुक्त्य** ( atyanta-paunaruktya ) *n.* excessive repetition अत्यन्तपौनरुक्त्यं मा भूदिति कश्चिद्विशेष आश्रयितव्यः ManuBh. ii. 97. 23 (*on* 8. 55)

**अत्यन्तप्रकर्ष** ( atyanta-prakarṣa ) *m.* complete superiority ननु भवत्वन्यासः स तु कथमत्यन्तप्रकर्षनिष्ठः । किंचिन्मात्रस्य विशेषस्य दर्शनात् PramāVāBh. 105. 32; Bhām. 133. 19 (*on* i. 1. 12); VedāntKa. 109. 24 (*on* i. 1. 12); S'rutaPra. ii. 197. 5 (*on* i. 4. 29)

**अत्यन्तप्रकाश** ( atyanta-prakāśa ) *adj.* very bright आदित्यादिषु हि सत्त्वं अत्यन्तप्रकाशम् अत्यन्तभास्वरम् GītāBh.(S'aṅ.) 441. 6 (*on* 15. 12)

**अत्यन्तप्रकृतिपरिशुद्ध** ( atyanta-prakṛtipariśuddha ) *adj.* extremely pure by nature आलयविज्ञानसंशब्दितः … नित्यमव्युच्छिन्नशरीरः प्रवर्ततेऽनित्यतादोषरहित आत्मवादविनिवृत्तोऽत्यन्तप्रकृतिपरिशुद्धः LaṅkāSū. 6. 0 (90. 11)

**अत्यन्तप्रक्षीयमाणा** ( atyanta-prakṣīyamāṇā ) *adj.* ( *f.* ) exceedingly diminishing अत्यन्तप्रक्षीयमाणा अविद्या BṛĀraUBh. 566. 10 (*on* iv. 3. 20)

**अत्यन्तप्रगुण** ( atyanta-praguṇa ) *adj.* exceedingly capable पाण्डवानां स विग्रहः । अरातिश्रियमादातुमत्यन्तप्रगुणोऽभवत् PāṇḍaC. 13. 520.

**अत्यन्तप्रचण्ड** ( atyanta-pracaṇḍa ) *adj.* very fierce अत्यन्तप्रचण्डौ तौ दुष्टौ रक्तकलोचनौ । … सुयक्षेण निरीक्षितौ PadmP.(Ra.) 109. 98.

**अत्यन्तप्रचलिता** ( atyanta-pracalitā ) *adj.* ( *f.* ) greatly shaken अक्षरस्य…ईषत्प्रचलितावस्था अन्तर्यामी अत्यन्तप्रचलितावस्था क्षेत्रज्ञः BṛĀraUBh. 453. 7 (*on* iii. 8. 12)

**अत्यन्तप्रतिकूल** ( atyanta-pratikūla ) *adj.* exceedingly unfavourable अयं परामर्शः … ते अत्यन्तप्रतिकूलः S'atDū. 81. 29.

**अत्यन्तप्रतिपत्ति** ( atyanta-pratipatti ) *f.* extreme knowledge अत्यन्तप्रतिपत्त्या तु दुर्लभोऽलङ्कृतो जनः PañcT. 1. 156 (153. 12); Pañcā. 109. 5.

**अत्यन्तप्रतिभासलय** ( atyanta-pratibhāsalaya ) *m.* total loss of knowledge देहाद्यनुबन्धः … स्वयमेव च कदाचिच्चक्रभ्रमस्यप्रमादिवदत्यन्तप्रतिभासलयमेष्यति S'atDū. 137. 5.

**अत्यन्तप्रतियोगिभिन्नत्व** ( atyantapratiyogibhinna-tva ) *n.* total difference from the counter-correlative ( निवृत्तेः ) तस्या अत्यन्तप्रतियोगिभिन्नत्वात् GuruCandr. ii. 188. 21.

**अत्यन्तप्रतिषेध** ( atyanta-pratiṣedha ) *m.* i absolute negation सद्रूपप्रतीतस्य वा कथमत्यन्तप्रतिषेधोपपत्तिः TantrVā. 323. 14 (*on* i. 4. 22); ii complete prohibition तत्तयोरत्यन्तप्रतिषेधार्थं न वैदग्ध्यादिप्राप्त्यर्थम् Aparā. 87. 18 (*on* 1. 56); CaturCin. iii(2). 334. 4; SaṅkarKāBh. 33. 12 (*on* i. 3. 29)

**अत्यन्तप्रत्यासत्ति** ( atyanta-pratyāsatti ) *f.* very close proximity अत्यन्तप्रत्यासत्त्युपस्थितधात्वर्थातिक्रमकारणाभावात् … विज्ञायते TantrVā. 354. 7 (*on* ii. 1. 1); Kāśi. i. 235. 27 (*on* 4. 73); BhaṭṭDī. ii. 162. 20 (*on* v. 1. 6)

**अत्यन्तप्रत्यासन्न** ( atyanta-pratyāsanna ) *adj.* [ *f.*–ā ] very close or proximate संख्यादयः शेषाः संभवेयुस्ते त्वत्यन्तप्रत्यासन्नप्रधानभूतेन कारकेणापहृत्य क्रियायै नीयन्ते TantrVā. 930. 19 (*on* iii. 4. 12); विधेरत्यन्तप्रत्यासन्ना भावनैव विधेयतया धनेशब्दवाच्यतामश्नुवीत Kāśi. i. 158. 20 (*on* 2. 192); ii. 127. 6 (*on* 5(3). 69); NyāyRa. 508. 17 (*on* 5(10). 41)

**अत्यन्तप्रदीप्त** ( atyanta-pradīpta ) *adj.* set ablaze intensely ततो यातौ वह्वयमा( ? पा )नौ प्राणमुष्णस्वरूपकम् । तेनात्यन्तप्रदीप्तेन ज्वलनो देहजस्तथा YogKuU. 1. 44; तेनात्यन्तप्रदीप्तस्तु ज्वलनो देहजस्तथा HaṭPra. 3. 67.

**अत्यन्तप्रदेश** ( atyanta-pradeśa ) *m.* general rule तत्रैषोऽत्यन्तप्रदेशः BhārS'S. i. 1. 9; ĀpaS'S. xii. 7. 12; xv. 2. 8; ĀpaS'uS. i. 3. 17.

**अत्यन्तप्रबल** ( atyanta-prabala ) *adj.* very powerful सेवयात्यन्तप्रबलं नत्या चारिं प्रसाधयेत् S'ukraNī. 4(7). 187.

**अत्यन्तप्रयत** ( atyanta-prayata ) *adj.* exceedingly purified or pious अध्येयामाणोऽन्नमक्षन्नित्यत्यन्तप्रयतसाध्यकर्मारम्भोपलक्षणम् ManvaVi. 679. 24 (*on* 5. 138)

**अत्यन्तप्रलय** ( atyanta-pralaya ) *m.* complete dissolution अत्यन्तप्रलयं कृत्वा मोहनीयस्य कर्मणः । ( सः ) अवाप केवलज्ञानम् PadmP.(Ra.) 87. 15; VedāntRaMañ. 1. 3 (27. 17)

**अत्यन्तप्रवणा** ( atyanta-pravaṇā ) *adj.* ( *f.* ) greatly devoted अत्यन्तप्रवणां सतीम् … परित्यज्य भूभार्याम् … प्रतिपेदे विशुद्धात्मा श्रामण्यम् PadmP.(Ra.) 11. 287.

**अत्यन्तप्रवृत्त** ( atyanta-pravṛtta ) *adj.* exceedingly inclined तत्पुण्यपापयोरत्यन्तप्रवृत्तजीवविशेषविषयम् NyāyKu. 121. 3.

**अत्यन्तप्रवृद्धद्वेष** ( atyantapravṛddha-dveṣa ) *m.* hatred which has grown excessively योऽत्यन्तप्रवृद्धद्वेषो न हिंस्याद्भूतानीत्यतिक्रान्तनिषेधाधिकारः ManuBh. i. 62. 7 (*on* 2. 6)

**अत्यन्तप्रशस्त** ( atyanta-praśasta ) *adj.* very commendable or laudable अत्यन्तप्रशस्तयोरपि वाङ्मनसयोः स्तेनानृतवादयोगाद् हिरण्यादूनत्वम् MīmāKau. iii(1). 34. 2 (*on* i. 2. 11)

**अत्यन्तप्रसन्नता** ( atyantaprasanna-tā ) *f.* extreme limpidity, great pellucidity अपां कतकसंपर्कोद्यथात्यन्तप्रसन्नता BṛĀraUBhVā. iv. 3. 975.

**अत्यन्तप्रसन्नास्वाद** ( atyantaprasannāsvāda ) *adj.* who greatly relishes the taste प्रसन्नास्वादमत्यन्तप्रसन्नास्वादमेककम् । विधायाथ निजं स्थानं गम्यतेऽथ विरम्यते PrabbāC. 192. 19.

**अत्यन्तप्रसिद्ध** ( atyanta-prasiddha ) *adj.* [ *f.*–ā ] very well-known इत्यत्यन्तप्रसिद्धेऽपि सिद्धे सर्वागमैरपि । दृष्टेऽप्यकालमरणे विचिकित्सेत् कथं बुधः AṣṭāSaṁ. i. 63. 7 (1. 9); या त्वादिमती नात्यन्तप्रसिद्धा नासौ शास्त्रेणानुगम्यते TantrVā. 701. 14 (*on* iii. 1. 8); ब्रह्मवित्परिषद्यत्यन्तप्रसिद्धाम् उपलभमानाः … पृच्छन्ति AitUBh. 287. 4 (*on* 5. 0); अतिस्थवीयानयं सर्वज्ञवादः येनात्यन्तप्रसिद्धैरपि प्रमेयत्वादिहेतुभिः शक्यते निराकर्तुमित्याह Kāśi. i. 130. 25 (*on* 2. 132); तत्रैवात्यन्तं प्रसिद्धं निदर्शनमाह TattvVai. 81. 14–15 (*on* 2. 17); इत्यनुमानवैधर्म्यमत्यन्तप्रसिद्धमेव NyāyKu. 9. 1; उदाहरणभूतानामत्यन्तप्रसिद्धानां पङ्क्तित्वादुभयत्र पङ्क्तिग्रहणम् SmṛtiCan. iv. 731. 7.

**अत्यन्तप्रसिद्धत्व** ( atyantaprasiddha-tva ) *n.* the state of being very well-known द्वित्वश्रवणाविशेषात् अत्यन्तप्रसिद्धत्वाच्च हुतप्रहुते इति प्रथमः पक्षः BṛĀraUBh. 170. 17 (*on* i. 5. 2); प्रथमदिनेऽत्यन्तप्रसिद्धत्वान्मनुना स्नानं नोक्तम् HārLa. 157. 21; गोमहिषयोरिवार्थभेदस्यात्यन्तप्रसिद्धत्वान्नामतं न युक्तम् NyāyMāVi. 55. 1 (*on* i. 4. 13); सोमादिपदवत् अर्थान्तरे अत्यन्तप्रसिद्धत्वात् LaCandrī. 372. 15; 375. 33.

**अत्यन्तप्रसिद्धविषय** ( atyantaprasiddha-viṣaya ) *m.* very well-known or commonplace subject अत्यन्तप्रसिद्धविषयसत्याभिधानमात्रेण प्रज्ञाप्रकर्षदुरवगाहगहनेऽपि निरत्ययिनां साधयितुकामो बन्धकीमपि प्रागल्भ्येन विजयते PramāVāSvopVṛ. 117. 18.

**अत्यन्तप्रसिद्धार्थ** ( atyantaprasiddhārtha ) *m.* most popular or well-known meaning अत्रात्यन्तप्रसिद्धार्थभेदादाग्नेयशब्दो न ब्राह्मणस्य नामधेयम् NyāyMāVi. 55. 12 (*on* i. 4. 14)

**अत्यन्तप्रहाण** ( atyanta-prahāṇa ) *n.* complete abandonment or total

relinquishment चतुर्विधा प्रहाणसंपत्। सर्वक्लेशप्रहाणम् अत्यन्तप्रहाणं सर्ववासनप्रहाणं सर्वसमाधिसमापत्त्यावरणप्रहाणं च AbhidhKoBh. 416.1 (*on* 7.34)

**अत्यन्तप्रहृष्टधी** (atyantaprahṛṣṭa-dhī) *adj.* whose mind was exceedingly delighted श्रुत्वा हनूमतो वाक्यं रामोऽत्यन्तप्रहृष्टधीः AdhyāRā. v. 5.59.

**अत्यन्तप्रागल्भ्य** (atyanta-prāgalbhya) *n.* extreme boldness or adventurousness प्रौढनायकेष्वत्यन्तप्रागल्भ्यात्तासामपि कतिपयोऽप्यनुरागो वर्तत इति प्राचीना लिखितवन्तः S'ṛṅgāMañ (A.) 6.18.

**अत्यन्तप्राच्य** (atyanta-prācya) *adj.* very old व्यथन्ते तद्विनात्यन्तप्राच्यान्यपि फलानि माम् PāṇḍaC. 1.143.

**अत्यन्तप्रातिलोम्य** (atyanta-prātilomya) *n.* excessively inverse order (of castes) उत्तरश्चण्डालः। स प्रतिलोमोऽत्यन्तप्रातिलोम्यात् सत्यपि क्षेत्रप्राधान्ये पितृदोषात् ManuBh. ii. 350.7 (*on* 10.68); BālamBha. i. 284.22 (*on* 1.94)

**अत्यन्तप्राप्ति** (atyanta-prāpti) *f.* full knowledge पूर्ववत्त्वाद्यनुवादो भवेदत्यन्तप्राप्ताविति इत्यर्थः TantrVā. 912.10 (*on* iii. 4.3)

**अत्यन्तप्रायश्चित्तभेद** (atyantaprāyaścitta-bheda) *m.* great difference of atonement or expiation सत्यम्। यदि सुरामद्ययोर्मद्यपानेऽत्यन्तप्रायश्चित्तभेदो न स्यात् ManuBh. ii. 415.6 (*on* 11.146)

**अत्यन्तप्रायसाधर्म्य** (atyantaprāya-sādharmya) *n.* complete or near complete similarity अत्यन्तप्रायसाधर्म्यविकल्पादिनिबन्धनः। क्षिप्तः सूत्रकृतः साक्षादुपमानस्य विप्लवः NyāyMañ. i. 132.1.

**अत्यन्तप्राशस्त्यार्थम्** (atyantaprāśastyārtham) *adv.* for the purpose of excessive praise सर्वबीजपदेन यवप्राप्तेः पुनरुपादानमत्यन्तप्राशस्त्यार्थम् ViraMi.(Pūjā.) 251.10.

**अत्यन्तप्रिय** (atyanta-priya) *adj.* extremely dear, very much pleasing राज्ञोऽत्यन्तप्रियस्त्वं हि तारापुत्रोऽतिवल्लभः AdhyāRā. iv. 7.12; ध्यानार्चनप्रणामस्तुतिकीर्तनादीनि स्वयमेवात्यन्तप्रियाणि प्राप्य समानि कुर्वन्तः मामुपासत इत्यर्थः GītāBh.(Rā.) 563.8 (*on* 12.6); राजन्नभिनिविष्टोऽसि कष्टेऽत्यन्तप्रियोऽसि च KathāSaSāg. xii. 12.4; चणकाः अश्वानामत्यन्तप्रियाः SmṛtiCan. v. 213.16.

**अत्यन्तप्रियतम** (atyantapriya-tama) *adj.* extremely dear सः … राज्ञोऽत्यन्तप्रियतमः परोपकारी सर्वलोकस्यातिप्रियः SiṁhāDvā. 128.0(6)

**अत्यन्तप्रियदर्शन** (atyantapriya-darśana) *adj.* of very agreeable looks, of pleasing appearance ददर्श सुतमात्मनः। … दीर्घबाहुं महासत्त्वमत्यन्तप्रियदर्शनम्। … गुणैः प्रद्योतयन्तं तम् Rāmā. ii. 29(A.)*.4.

**अत्यन्तप्रीत** (atyanta-prīta) *adj.* very much delighted विवाहविधिरत्यन्तप्रीतलोकसमाकुलः PadmP.(Ra.) 12.17; इत्युक्तवन्तमत्यन्तप्रीतस्तं पवनात्मजः। पप्रच्छ PāṇḍaC. 8.141.

**अत्यन्तप्रीति** (atyanta-prīti) *f.* great satisfaction or pleasure तृतीयस्य विधा योऽसौ संयमो नाम वर्णितः। (उपायः) भोगैः शुद्धैस्त्रिधोद्भूतैरत्यन्तप्रीतये मम LakṣmīT. 16.40; अत्यन्तप्रीतिकरत्वात् ManuBh. i. 329.5 (*on* 4.5); गयाख्ये च देशविशेषे क्रियमाणे पार्वणेऽत्यन्तप्रीतिजनकेऽपि मातुरंशहारित्वमस्ति SmṛtiCan. v. 99.4; अत्यन्तप्रीतिविषयः आनन्दः LalitāTriBh. 318.1 (*on* 38)

**अत्यन्तप्रीतिद** (atyantaprīti-da) *adj.* giving great delight देवानां च पितॄणां च ऋषीणां राजसत्तम। अत्यन्तप्रीतिदं सत्यं प्रपादानं न संशयः SkandP. ii(7). 2.15.

**अत्यन्तप्रीतिमानस** (atyantaprīti-mānasa) *adj.* whose mind is greatly pleased केवलिरविणो[द्]द्योतितमत्यन्तप्रीतिमानसाः समशंसन् PadmP. (Ra.) 105.267.

**अत्यन्तप्रेतोपकार** (atyanta-pretopakāra) *m.* great service to the departed प्रेतेषु दुर्लभमित्यनेनात्यन्तप्रेतोपकार इति प्रदर्शितम् HārLa. 160.7.

**अत्यन्तप्रेमन्** (atyanta-preman) *n.* great or deep love सर्वेषामङ्गेषु ब्रह्मस्वरूपतया अत्यन्तप्रेमविषयत्वेन सुन्दरपदार्थवदविनाभाववाञ्छाविषयत्वात् LalitāTriBh. 295.12 (*on* 25); अत्यन्तप्रेमसंभारसंसक्तमनसोस्तयोः। बभूव लकुचः पुत्रो युवराजो विचक्षणः BṛKathāK. 50.2; अत्यन्तप्रेमाविच्छेदप्रदायिनि परात्परे। कन्यां प्रदाय देवाय त्वं कृती भव पर्वत BrahmVaiP. iv. 42.74; पुत्रकार्श्येन दुःखं तु तस्यात्यन्तप्रेमास्पदत्वात् Nyāyāmṛ. 397A.9.

**अत्यन्तप्रौढवाक्य** (atyantaprauḍha-vākya) *adj.* whose utterances are very ostentatious or flamboyant अत्यन्तप्रौढवाक्याः परिलघुधृतयः क्रोधना मध्यवेगा उक्षाणः (नायकाः) PañcSā. 2.9.

**अत्यन्तफल** (atyanta-phala) *adj.* conducive to great reward, yielding eternal fruit शिवे दत्तं हुतं जप्तम् …। एकान्ततोऽत्यन्तफलं तद्भवेन्नात्र संशयः SaurP. 47.37; (कुपुत्राः) एतेन नात्यन्तफला एवेत्युक्तम् ManvaVi. 1197.31 (*on* 9.161)

**अत्यन्तफलद** (atyantaphala-da) *adj.* [*f.* -ā] yielding great (permanent) fruit शीर्षोदये लग्नगते …। अत्यन्तफलदा यात्रा तदीशश्चेच्छुभग्रहः VasiS. 37.67; तदुपासनमत्यन्तफलदमिति कृत्वा S'aṅkaVi.(Ā.) 220.5.

**अत्यन्तफलप्रदा** (atyantaphala-pradā) *adj.* (*f.*) yielding great (permanent) fruit गजच्छाया तदा ज्ञेया श्राद्धेऽत्यन्तफलप्रदा NāraS. 4.35.

**अत्यन्तफलप्रदायिन्** (atyantaphala-pradāyin) *adj.* habitually giving great (permanent) fruit हेमाद्रिरत्यन्तफलप्रदायि नानातिथीनां व्रतवृन्दमाह CaturCin. ii(2). 258.5.

**अत्यन्तफलभूयिष्ठ** (atyantaphala-bhūyiṣṭha) *adj.* plentiful or abundant in great results स तु पैतामहो धर्मो बहुवित्तक्रियान्वितः। नात्यन्तफलभूयिष्ठः क्लेशायाससमन्वितः S'ivaP. vii. 10.20 (555A.2)

**अत्यन्तफलसमृद्धम्** (atyantaphalasamṛddham) *adv.* full of endless consequencess अत्यन्तफलसमृद्धं भ्रमन्ति TātpaVṛ. 362.17 (*on* 3.71)

**अत्यन्तफलसंपत्ति** (atyantaphala-sampatti) *f.* opulence in the form of abundant produce (corn) अत्यन्तफलसंपत्तिनवशाल्यादिभूषिता। धरणी जायते तस्मिन् समेते सस्यकारणम् PadmP.(Ra.) 2.99.

**अत्यन्तबल** (atyanta-bala) *adj.* having great strength ऊर्जस्यूर्जस्वलोऽत्यन्तबलपर्यायवत्यपि KalpaK. 116.246.

**अत्यन्तबलवत्** (atyantabala-va(n)t) *adj.* very strong or powerful अत्यन्तबलवन्तोऽपि पौरजानपदा जनाः।… बाध्यन्ते TantrVā. 863.9 (*on* iii. 3.14); यस्मात्तायं नियमो दृश्यते यो जयति सोऽत्यन्तबलवानवश्यम् ManuBh. ii. 59.26 (*on* 7.199); अत्यन्तबलवतोद्देश्यसामर्थ्येन निर्णयो दुरपह्नवः MīmāKau. i. 299.25 (*on* i. 4.30)

**अत्यन्तबलिन्** (atyanta-balin) *adj.* very strong or powerful भवन्तोऽत्यन्तबलिनः शूराश्च कृतविक्रमाः AdhyāRā. iv. 9.4.

**अत्यन्तबलीयसी** (atyanta-balīyasī) *adj.* (*f.*) (*comp.*) very strong or compelling तत्त्वज्ञानवासनया अत्यन्तबलीयस्यास्याः समूलकाषं कषितत्वात् TātpaṬ.(Vā.) 94.24 (*on* i. 1.2); यत्त्वत्यन्तबलीयस्या श्रुत्या संयुक्तम् S'āstrDī. 581.11 (*on* ix. 1.5)

**अत्यन्तबहिर्भूत** (atyanta-bahirbhūta) *adj.* completely external अतो मनुष्योऽहमित्यत्यन्तबहिर्भूतमनुष्यत्वादिविशिष्टपिण्डात्माभिमानवज्ज्ञातृत्वमप्यध्यस्तम् S'rīBh.(Rā.) 26.9 (*on* i. 1.1)

**अत्यन्तबहिर्मुद्र** (atyanta-bahirmudra) *adj.* totally outside authentication, having absolutely no aunthentication 'वचनव्याख्यानं तदत्यन्तबहिर्मुद्रम् ViraMi.(Vyavahāra.) 17.30.

**अत्यन्तबहु** (atyanta-bahu) *adj.* I very many, innumerable (दमकानाम्) अत्यन्तबहवस्तेषां भेदाः सम्भेदयोनयः Kāvyāda. 3.3 = SaraKaṇṭhā. 198.14; अत्यन्तबहवोऽप्येते भोगा हि न सुखावहाः YogVā. v. 22.47; II very abundant योषिद्ग्राह्यापेक्षयात्यन्तबहुधनो यः पुत्रस्तस्य धनग्राहानन्तर्यार्थम् SmṛtiCan. iv. 403.6.

**अत्यन्तबहुत्व** (atyantabahu-tva) the state of being extremely abundant एकविषयत्वे विकल्पः प्राप्नोति। स च न युक्तो द्विगुणस्यात्यन्तबहुत्वात् ManuBh. ii. 133.12 (*on* 8.139)

**अत्यन्तबहुल** (atyanta-bahula) *adj.* very frequent or profuse कार्मारव्याम् … गान्धारोऽत्यन्तबहुलः SaṁgīRa. i. 252.3 (1(7).102)

**अत्यन्तबहुव्याप्ति** (atyantabahu-vyāpti) *f.* very large coverage or inclusion एकैकश इति शस्प्रत्ययाद्वीप्सात्यन्तबहुव्याप्तिप्रदर्शनार्था NyāyKa. 27.7.

**अत्यन्तबाध** (atyanta-bādha) *m.* I complete denial (of one's nature) गुणादीनां च नात्यन्तबाधः SāṁkhyaPraSū. 5.26; सदसद्भ्यां भिन्नमेव जगद् भवतु तथाप्यत्यन्तबाधप्रतिषेधानुपपत्तिः SāṁkhyaPraBh. 127.24 (*on* 5.54); II complete annulment or sublation, complete contradiction इतरथा हि प्रैषेऽत्यन्तबाध एव स्यात् TantrVā. 1178.5 (*on* iii. 8.24); युष्मच्छब्दश्रुतिवृत्ते गृह्यमाणेऽत्यन्तबाध आत्मने(पदस्य स्यात्) ṬupṬ. 162.4 (*on* vii. 3.36); तत्र (पीलुशब्दविषये) म्लेच्छोक्तस्यात्यन्तबाधः NyāyRa. 643.20 (*on* 5(15).17); आहवनीयवन्तं बाधित्वा … होमस्तत्रानादरे सत्याहवनीयविधेरत्यन्तबाधप्रसङ्गात् NyāyRaMā. 116.16; तत्र श्रुतेरप्यत्यन्तबाधो वाक्यस्य च S'āstrDī. 242.22 (*on* iii. 3.7); PadMañ. *on* KāśiVṛ. *on* P. i. 1.21; प्रतिषिद्धं परित्यज्यान्यत्रापि शक्यं कर्तुमिति प्रतिषेधेऽपि नात्यन्तबाधः Aparā. 558.10 (*on* 1.260); परेणोद्धात्रप्रच्छेदनिमित्तादक्षिण्येन बाधेऽपि नात्यन्तबाधः Nyāyāmṛ. 115B.7; कान्येनाग्निलोचरवेणा बाधेऽपि नात्यन्तबाधः VidhiRa. 32 (177.23); तस्मादत्यन्तबाधादपि पार्थिवान्विकल्पः SivārkaMaDī. i. 118.22 (*on* i. 1.2); न निषेधेन विधेरत्यन्तबाधो युक्तः MīmāNyāPra. 265.7; ननु तत्राप्येकत्वस्य नात्यन्तबाधः MayūMāli. 711.16 (*on* x. 4.18)

**अत्यन्तबाधक** (atyantabādha-ka) *adj.* extremely obstructive (आबाधकः) अभिव्याप्तो बाधकोऽत्यन्तबाधकः JīvanVi. 160.18; *n.* great impediment

अथ प्रश्नोत्तराभ्यामत्यन्तबाधकं प्रदर्श्य तद्वर्जनमाह JīvanVi. 160. 10.

**अत्यन्तबाधन** (atyanta-bādhana) *n.* total annulment S'lokaVār. 5.(15) 17 (643.5); न बहुवचनस्यात्यन्तबाधनं युक्तम् SāstrDī. 287.13 (*on* iii. 5.7); भूयसां शेषकार्याणां मा भूदत्यन्तबाधनम् SāstrDī. 480.14 (*on* vi. 3.21)

**अत्यन्तबाधानुपपत्ति** (atyantabādhānupapatti) *f.* impossibility of complete sublation or rejection निषेधस्य प्राप्तिसापेक्षत्वेनोपजीव्यत्वादत्यन्तबाधानुपपत्तेः BhāṭṭDī. i. 259.1 (*on* iii. 3.7)

**अत्यन्तबाधापत्ति** (atyantabādhāpatti) *f.* contingency of total sublation or rejection न चैवमाचमनादिभिः क्रमादिबाधे श्रुतेरत्यन्तबाधापत्तिरिति वाच्यम् MīmāKau. i. 33.14 (*on* i. 3.7)

**अत्यन्तबाधायोग** (atyantabādhāyoga) *m.* impropriety of total annulment or rejection अनपनीतस्य च शास्त्रस्यात्यन्तबाधायोगाद्विकल्पो दुःपरिहरः NyāySu.(So.) S. 25 (*on* i. 2.2); दुर्बलप्रमाणप्रापितस्यापि च प्रबलप्रमाणप्रापितेनात्यन्तबाधायोगादुभयोरपि ... विकल्पः BhāṭṭDī. iv. 91.6 (*on* x. 7.15); तस्य च शाखत्वेनात्यन्तबाधायोगात् MīmāKau. iii. 264.70 (*on* ii. 2.23); शास्त्रेण ... शास्त्रान्तरस्यात्यन्तबाधायोगात् MīmāNyāPra. 264.27; निर्दोषशास्त्रकारिततयात्यन्तबाधायोगात्तदानीमपि विकल्पो दुर्वारः MayūMāli. 881.10 (*on* xii. 4.10); 508.14 (*on* vi. 5.19)

**अत्यन्तबाधित** (atyanta-bādhita) *adj.* [*f.* -ā] completely annulled or rejected समाख्या ... इतरथा त्रैधेऽत्यन्तबाधिता स्यात् SāstrDī. 339.9 (*on* iii. 3.12); चुमूर्धत्वादिकं हि जाठरेऽत्यन्तबाधितम् S'rutaPra. iB. 344.13 (*on* i. 2.27)

**अत्यन्तबाल** (atyanta-bāla) *adj.* [*f.* -ā] very young स यथा कुमारो वा अत्यन्तबालो वा ... अतिघ्नीम् ... प्राप्य गत्वा शयीत BṛĀraUBh. 245.5 (*on* ii. 1.19); अत्यन्तबालम् अत्यन्तवृद्धं च वर्जयित्वा ... न कश्चित्पुरुषोऽस्ति यः स्त्रीभिर्नाकृष्यते ManuBh. i. 186.15 (*on* 2.214); स्पृहा यस्या नोत्पन्ना सा चाष्टवर्षा षड्वर्षा वा न त्वत्यन्तबालैव ManuBh. ii. 268.8 (*on* 9.88); अत्यन्तबालम् ... श्रीमदिन्दीवराक्षम् (दुग्धेन संप्रीणयेत्) SkandP. ii(5). 16.3; PañcaRā.(Nā.) iii. 10.17; नात्यन्तबालवृद्धांश्च श्रुतवृत्तादिभूषितान्।...अष्टौ वरयित्वा ĪśānS'iPa. ii. 45.45; अत्यन्तबालम् ... कृष्णं नमामि KṛṣṇaKa. 2.19; प्राचीनैरुपदेशैस्तावदवगन्तुमसमर्थोऽत्यन्तबालः SīvārkaMaDī. i. 174.20 (*on* i. 1.4)

**अत्यन्तबालकपुत्र** (atyantabālaka-putra) *m.* very young son देशान्तरस्थेऽत्यन्तबालकपुत्रेऽपुत्रपत्नीसंभवे पुत्रिण्याः पत्न्या जलमात्रं विधत्ते HārLa. 174.13.

**अत्यन्तबाह्य** (atyanta-bāhya) *adj.* extreme stranger to (completely ignorant of) (स्वामी) युष्मद्विधैः ... षाड्गुण्योपायेऽत्यन्तबाह्यैः ...असमीक्ष्य मन्त्रयते Tantrākhyā. 44.17; PañcT. 1.147 (149.7); Pañcā. 102.20.

**अत्यन्तबीभत्स** (atyanta-bībhatsa) *adj.* exceedingly hideous or disgusting अनेकाशुचिसंघातत्वादत्यन्तबीभत्सं कुलायं नीडं शरीरम् BṛĀraUBh. 550.12 (*on* iv. 3.12); कृमिकुलनिलयेऽत्यन्तबीभत्सरूपे रज्यन्नङ्गे वधूनां व्रजति गतमतिः श्वभ्रगर्मे कृमित्वम् SubhāRaSaṁ. 122.

**अत्यन्तबीभत्सित** (atyanta-bībhatsita) *adj.* exceedingly hideous अत्यन्तबीभत्सितमपि स्थ्यादिदेहम् ... गृध्यन्तः ... धावन्ति SanatBh. 199.18 (*on* 1.14)

**अत्यन्तबुद्धि** (atyanta-buddhi) *adj.* extremely intelligent विप्रयोगात् प्रियस्य च। मनुष्या मानसैर्दुःखैर्युज्यन्ते येऽल्पबुद्धयः (v. l. क्लिश्यन्तेऽत्यन्तबुद्धयः) MahāBhā. xi. 2.18.

**अत्यन्तबुद्धिमान्द्य** (atyanta-buddhimāndya) *n.* extreme dullness of intellect अत्यन्तबुद्धिमान्द्यात् ...।यो विचारं न लभते ब्रह्मोपासीत सोऽनिशम् PañcDa. 9.54.

**अत्यन्तभक्त** (atyanta-bhakta) *adj.* [*f.* -ā] extremely devoted प्रह्लादः ...। अत्यन्तभक्तो देवेशं जगाम मनसा हरिम् MatsyaP. 245.8; विजयतां ममात्यन्तभक्ता दयिता Tantrākhyā. 111.3; PañcT. 3.69 (336.8); (रामः) जानकं पालयत्(न्) सत्यम् ... प्राविक्षद्दण्डकं वनम् PadmP.(Ra.) 102.17; सोदरौ। अत्यन्तभक्तौ च पितुर्ध्यवर्तेतां पदातिवत् TriṣaS'aPuC. iv. 5.86; प्रारब्धकर्मण्येवात्यन्तभक्तेन भवता ... पुरुषप्रयत्नस्य वैयर्थ्यं मनसापि चिन्तयितुमशक्यम् JīvanVi. 10.18; त्वं तु यदि तयोर्विरोधेऽत्यन्तभक्तः GuruCandr. i. 81.17.

**अत्यन्तभक्ति** (atyanta-bhakti) *f.* extreme devotion अन्याचने स्वेष्टेश्वरेऽत्यन्तभक्तिप्राप्तिपूर्वकान्येशप्रीतिद्वारा ... अर्चयिष्य एवं संकल्पयेत् PārāSū. 47.6; त्रिपुरकुमारः परमगुरुचरणकमलयुगलमत्यन्तभक्त्या ... प्रणम्य दिग्विजयार्थम् ... ययौ S'aṅkaVi.(Ā.) 271.5.

**अत्यन्तभक्तिभाज्** (atyantabhakti-bhāj) *adj.* extremely devoted तत्रापि धारिणी सा च पत्यावत्यन्तभक्तिभाक्। तल्पं प्रकल्पयामास PariPar. 1.112.

**अत्यन्तभक्षण** (atyanta-bhakṣaṇa) *n.* eating too much पथामन्यतमस्यात्यन्तभक्षणाभ्यासे प्रत्येकं भक्षणसमुदाये वैतत् Aparā. 1165.25 (*on* 3.289)

**अत्यन्तभग्न** (atyanta-bhagna) *adj.* completely destroyed राज्यम् ... सेवस्व मुदितोऽत्यन्तभग्ननिःशेषकण्टकम् PadmP.(Ra.) 47.95.

**अत्यन्तभङ्ग** (atyanta-bhaṅga) *m.* i complete destruction होमस्य ... अत्यन्तभङ्गे संस्कार्याभावात् ... कपाले दृष्टे सत्ययं होमः NyāyMāVi. 331.5 (*on* vi. 4.4); ii great humiliation, defeat तुण्डीराणामीशिता दुर्नयेन प्राप्स्यैतं पाण्डयमत्यन्तभङ्गम् Raghunā. 10.35.

**अत्यन्तभद्रा** (atyanta-bhadrā) *adj.* (*f.*) extremely blessed or happy (सूर्यः) नृणां दृष्टिं विजिह्मां विदधदपि करोत्यन्तरत्यन्तभद्राम् SūryaS. 86.

**अत्यन्तभय** (atyanta-bhaya) *n.* excessive fear (राजकुमारोऽपि) पूर्वारूढं भल्लूकं दृष्ट्वा पुनरत्यन्तभयं प्राप्तः SiṁhāDvā. 35.4(10)

**अत्यन्तभयदायक** (atyantabhaya-dāyaka) *adj.* greatly awe-inspiring अत्यन्तभयदायकम् ... तमालोक्य जगन्नाथं भूयोभूयो ववन्दिरे SkandP. ii(1). 38.14.

**अत्यन्तभयसंपत्ति** (atyantabhaya-sampatti) *f.* good deal of excessive fear अत्यन्तभयसंपत्तिरेतस्माज्जायते मम SkandP. ii(3). 2.40.

**अत्यन्तभवनिवृत्ति** (atyanta-bhavanivṛtti) *f.* total cessation of worldly life तर्हि मिथ्याभूतस्य मोक्षो नामात्यन्तभवनिवृत्त्यात्मा स्वरूपनिवृत्तिपर्यवसितः S'atDū. 194.23.

**अत्यन्तभवभीत** (atyanta-bhavabhīta) *adj.* exceedingly afraid of worldly life अत्यन्तभवभीतानां भक्तानां भावितात्मनाम्। इदं रहस्यं वक्तव्यम् JayāS. 12.136 = PāraS. 5.183.

**अत्यन्तभागिनी** (atyanta-bhāginī) *adj.* (*f.*) ever sharing, always suffering दुःखानामेव पुत्राहं विहितात्यन्तभागिनी Rāmā. ii. 430*(2)

**अत्यन्तभारत्व** (atyantabhāra-tva) *n.* excessive heaviness क एनान्धारयति यतोऽग्नीषोमविष्णुतेजःकूटात्मकत्वेनात्यन्तभारत्वात् S'aṅkaVi.(Ā.) 48.8.

**अत्यन्तभाव** (atyanta-bhāva) *m.* eternality, unending (perpetual) existence (सर्गस्य) अकारणत्वे ह्यत्यन्ताभावोऽत्यन्तभावो वा स्यात् SāṁkhyaTaKau. 460.6 (*on* 56)

**अत्यन्तभावन** (atyanta-bhāvana) *n.* very deep contemplation स्नेहस्यैव विकारः प्रिययोरत्यन्तभावनादनिशम् BhaktiRa. 2.59.

**अत्यन्तभावम्** (atyanta-bhāvam) *adv.* totally, completely, absolutely अत्यन्तभावं नष्टास्ते MahāBhā. iv. 24.13.

**अत्यन्तभाष्यानुग्रह** (atyanta-bhāṣyānugraha) *m.* complete favour or concurrence of the Bhāṣya एवं 'ञोऽविदर्थस्य' इति सूत्रेऽपि तत्संबन्धेनात्यन्तभाष्यानुग्रहः LaS'abdeS'e. ii. 8.18–19.

**अत्यन्तभासुर** (atyanta-bhāsura) *adj.* very shining, splendid भवनद्वारे ... गजान्। ... अत्यन्तभासुरान्। ... दृष्ट्वा पादचरास्त्रस्ताः PadmP.(Ra.) 71.19; तदेतदत्यन्तभासुरम् ... अविविधाय रूपं नैशाचरमनेन गगनाध्वनैव धावितः पृष्ठे UdaySuKa. 112.18; 77.28.

**अत्यन्तभास्वर** (atyanta-bhāsvara) *adj.* [*f.* -ā] very brilliant, excessively shining अत्यन्तभास्वरा स्वच्छा तयोर्मध्ये स्थली मुने BrahmāṇḍP. iii. 33.51; आदित्यादिषु हि सत्त्वम् अत्यन्तप्रकाशम् अत्यन्तभास्वरम् GītāBh.(S'aṅ.) 441.6 (*on* 15.12)

**अत्यन्तभिदा** (atyanta-bhidā) *f.* [P. iii. 3.104] entire difference, difference in every respect अग्रहोऽननतिभेदाच्चेदंशेऽत्यन्तभिदा क्व वः IṣṭaSi. 268.11.

**अत्यन्तभिन्न** (atyanta-bhinna) *adj.* [*f.* -ā] entirely or radically different, totally distinct अत्यन्तभिन्नावात्मानौ तावितौ व्यवसीयते TattvSaṁ. 704; तेन नात्यन्तभिन्नोऽर्थः सारूप्यमिति वर्णितम् S'lokaVār. 5(12).76 (565.6); अत्यन्तभिन्नमपि मीमांसकस्यासिद्धम् TātpaṬ.(U.) 218.17 (*on* 5(2).61); 208.22 (*on* 5(2).61); यद्यपि जातिर्व्यक्तेरत्यन्तभिन्ना नोपलभ्यते TantrVā. 268.24 (*on* i. 3.26); 269.5 (*on* i. 3.26); यदि अत्यन्तभिन्ना एव एताः स्रुतयः स्युः BrahmSūBh.(S'aṅ.) 822.10 (*on* iv. 3.1); 89.10 (*on* i. 1.31); कथं च अत्यन्तभिन्नानां रूपरूपिभावः IṣṭaSi. 19.15; पराधीनं यस्य कर्तृत्वं निरूपितं किमसौ ततोऽत्यन्तभिन्नः BrahmSūBh.(Bhā.) 140.21 (*on* ii. 4.43); यद्येवं निमित्तान्तरमनपेक्ष्यैकव्यवहारोऽत्यन्तभिन्नैः ... किं न साध्यते ĀtmaTaVi. 388.12; एवं चेदत्यन्तभिन्नोऽसंबद्धः कथं संबन्धिनौ संबन्धयेत् Bhām. 401.8 (*on* ii. 2.13); अत्यन्तभिन्नयोरैक्यं येषां चित्तशरीरयोः। ... नमस्यास्ते सुपण्डिताः YogVā. iii. 110.37; ते च क्रिये शास्त्रादत्यन्तभिन्ने NyāyRa. 7.17 (*on* 1.22); 632.17 (*on* 5(14).75) = YuktiSneha. 4.27 (*on* i. 1.1); किं पुनरत्यन्तभिन्नशब्दप्रत्यय्यमानस्य लिङ्गभेदावगतिर्न स्यात् Pradī. iv. 120B.35 (*on* iv. 1.92); किमयं जीवः परस्मादत्यन्तभिन्नः S'rīBh. 539.9 (*on* ii. 3.42); तस्मादत्यन्तभिन्नं चिदचिद्वस्तुशरीरकं ब्रह्म NītiMā. 41.16; तथा ह्यत्यन्तभिन्नयोरश्वमहिषयोरिव नोपादानोपादेयभावः TattvPradī.(Ci.) 335.4; गुणगुणिनोः ... अत्यन्तभिन्नयोस्तदनुपलम्भात् TarkSaṁ.(Ā.) 59.17–18; अत्यन्त-

भिन्नयोः प्रकारप्रकारिभावरहितयोरित्यर्थः S'rutaPra. iB. 63.24 (*on* i. 1.1); न खल्वत्यन्तभिन्नयोः क्वचिदपि विशेषणविशेष्यभावो दृश्यते NyāyKu. 129.14; नायं जीवः श्रीपुरुषोत्तमादत्यन्तभिन्नः VedāntKau. 236.3 (*on* ii. 3.42); अत्यन्तभिन्नधात्वर्थसंबन्धे तु तेनैव णमुल् भवति PadMañ. *on* KāśiVr̥. *on* P. iii. 4.37; अस्तु तर्हि परस्परमत्यन्तभिन्नानां द्रव्यजातिगुणादीनां ... स्वरूपमात्रग्रहणं निर्विकल्पकम् S'atDū. 84.7; 179.7; अत्यन्तभिन्नधर्मपरम्पराया अप्रामाणिकत्वात् NyāySu.(Ja.) 363A. 8 (*on* ii. 2.6); ननु वृत्तितद्बोधौ यदि घटदीपाविवात्यन्तभिन्नौ YogVār. *on* i. 4; अथ तादृशविशिष्टरूपमत्यन्तभिन्नं तर्हि भाषान्तरेणातिरिक्तविषयैव स्वीकृता GuruCandr. i. 232.2; अर्थेन ज्ञानादत्यन्तभिन्नेन घटादिरूपेण विषयेणाभिन्नो धियां विशेषः LaCandr. 40.4; 678.33.

**अत्यन्तभिन्नता** (atyantabhinna-tā) *f.* absolute or total difference अत्यन्तभिन्नतास्याभिर्नैव कस्यचिदिष्यते S'lokaVār. 5(3).105 (297.7); 7.192 (899.2); तस्माद्यथैव सूर्यादेरिन्द्रादत्यन्तभिन्नता TantrVā. 398.15 (*on* ii. 1.17); विकारे सांख्यसिद्धान्त आरम्भेऽत्यन्तभिन्नता BrĀraUBhVā. iv. 3.656; अत्यन्तभिन्नतयैतावन्तं कालमनुभूतेषु सर्वेष्वात्मसु ... समदर्शनरूपो योगः GītāBh.(Rā.) 349.3 (*on* 6.33)

**अत्यन्तभिन्नत्व** (atyantabhinna-tva) *n.* the state of being entirely different, total difference तस्याप्यत्यन्तभिन्नत्वं न स्यादवयवैः सह S'lokaVār. 5(14).75 (632.5); अत्यन्तभिन्नत्वाद् द्रव्यादिषूपचारो न युक्तः TantrVā. 1183.5 (iii. 8.43); अत्यन्तभिन्नत्वमङ्गीकृत्य ... धर्ममभ्युपगच्छति PrakaVi. 508.18; तत्र न डित्थशब्दो जातिवदर्थस्यात्मा अत्यन्तभिन्नत्वात् S'āstrDi. 42.7–8 (*on* i. 1.4); तयोरत्यन्तभिन्नत्वेऽपि तत्कल्पनाया पदार्थान्तरधर्माणामपि विवक्षितधर्मधर्मित्वापत्तेः Syādvā-Mañ. 7 (9–10); कार्यस्य कारणानन्यत्वमस्ति न त्वत्यन्तभिन्नत्वम् VedāntPāSau. 159.18 (*on* ii. 1.14); 188.4 (*on* ii. 2.13); तदा जडेभ्योऽत्यन्तभिन्नत्वात् जडधर्मत्वं वक्तुमशक्यम् LaCandr. 335.13.

**अत्यन्तभिन्नत्वसाम्य** (atyantabhinnatva-sāmya) *n.* similarity in complete difference (being completely different) समवायः ... संबध्येतात्यन्तभिन्नत्वसाम्यात् VedāntKau. 188.18 (*on* ii. 2.13)

**अत्यन्तभिन्नमति** (atyantabhinna-mati) *adj.* having entirely different view, having widely different opinion अत्यन्तभिन्नमतयः ... निरीश्वरमिदं प्राहुः SivS. 1.13.

**अत्यन्तभिन्नरूप** (atyantabhinna-rūpa) *adj.* having a totally different form अत्यन्तभिन्नरूपयोरभिन्नस्वभावत्वमसंभावयन् पृच्छति Nyās. iii. 976.1 (*on* viii. 2.18);

**अत्यन्तभिन्नरूपत्व** (atyantabhinnarūpa-tva) *n.* the state of being of an entirely different form अत्यन्तभिन्नरूपत्वाल्लक्ष्याणां लक्षणाद्विना नैकमालम्बनम् TantrVā. 197.18 (*on* i. 3.18)

**अत्यन्तभिन्नविषय** (atyantabhinna-viṣaya) *adj.* having an entirely different object अयं गौरिति प्रत्यक्षमपि यद्यत्यन्तभिन्नविषयं स्यात्तर्हि इदं गोत्वे इति प्रतीतिः स्यात् MānaMe. 43.1.

**अत्यन्तभिन्नार्थ** (atyantabhinnārtha) *adj.* having an entirely different meaning रूपादिशब्दाश्चन्दनशब्दादत्यन्तभिन्नार्थाः NyāyVār. 170.6 (*on* i. 2.45); न चात्यन्तभिन्नार्थेन आमन्त्रवाच्यस्यार्थस्य संबन्धिनः साधनादयः शक्यन्तेऽभिव्यक्तुम् Nyās. i. 532.22 (*on* iii. 1.40); सामानाधिकरण्यं चात्यन्तभिन्नार्थयोः ...न संभवति MayūMāli. 56.3 (*on* i. 4.2)

**अत्यन्तभिन्नार्थत्व** (atyantabhinnārtha-tva) *n.* the nature of having a totally different meaning अत्यन्तभिन्नार्थत्वस्य ...दूषितत्वात् न्यूनबोधनमवशिष्यते S'atDū. 192.8.

**अत्यन्तभिन्नैकनिष्ठत्व** (atyantabhinnaikaniṣṭha-tva) *n.* the nature of being present only in absolutely different things साहित्यस्यात्यन्तभिन्नैकनिष्ठत्वात् NyāyKu. 135.14.

**अत्यन्तभीकर** (atyantabhī-kara) *adj.* causing excessive fear, extremely terrific अथ क्रुद्धो दानवेन्द्रः खड्गं चिक्षेप ...अत्यन्तभीकरम् S'ivaP. ii(5). 38.21 (364B.6)

**अत्यन्तभीत** (atyanta-bhīta) *adj.* [*f.* –ā] extremely afraid of, terribly frightened लोकत्रयं सर्वं प्रव्यथितमत्यन्तभीतम् GītāBh.(Rā.) 547.22 (*on* 11.20); मा मा पतेति चात्यन्तभीताः प्राहुर्द्विजातयः BrKathāMañ. ii. 2.127; तच्छ्रुत्वात्यन्तभीतेन तेन मुक्तो वृषः क्षणात् PārśvC. 2.646; दृष्टिर्भयानकात्यन्तभीता ज्ञेया भयानके BhāvPra.(S'ā.) 126.5(5)

**अत्यन्तभीतमनस्** (atyantabhīta-manas) *adj.* greatly afraid of in the mind त्वां दृष्ट्वा प्रव्यथितान्तरात्मा अत्यन्तभीतमना धृतिं न विन्दामि GītāBh. (Rā.) 549.11 (*on* 11.24)

**अत्यन्तभीम** (atyanta-bhīma) *adj.* very dreadful, extremely terrific दृष्ट्वा दक्षिणतोऽत्यन्तभीमनिःस्वानकारिणो भल्लुका(? न्) गगने गृध्रा भ्रमन्ति छन्नभास्कराः PadmP.(Ra.) 74.14; मृतिजननजरावर्तमत्यन्तभीमं ... व्याधिसिन्धुप्रवाहम् । नीयन्ते प्राणिवर्गाः ... यैः SubhāRaSaṁ. 643; 74; अत्यन्तभीमा नरकाः सुघोराः ViṣṇuDhaP. ii. 119.55.

**अत्यन्तभीरु** (atyanta-bhīru) *adj.* extremely timid यैरगृहीतसंबन्ध एव लिङ्गादिः स्वरूपसामर्थ्येनैव प्रेरक इष्यते तेऽत्यन्तभीरव इत्युपेक्षणीयाः NyāyMañ. i. 320.14; अदृष्टद्वारेणोपयोगस्तु अत्यन्तभीरुभिः परैः ... परित्यक्तः S'rutaPra. iB. 152.28 (*on* i. 1.4)

**अत्यन्तभीरुता** (atyantabhīru-tā) *f.* extreme timidity अपि भर्तुः प्रभावज्ञा कथं मिथ्या विमूर्छसि । स्वभावसुलभा सत्यं स्त्रीणामत्यन्तभीरुता Rāmā-Mañ. 317.25.

**अत्यन्तभीषण** (atyanta-bhīṣaṇa) *adj.* [*f.* –ā] very dreadful, extremely terrific नेष्यामो भवतीरद्य प्रेतनाथनिकेतनम् ।...बाणैरत्यन्तभीषणैः Brahmāṇḍ̣P. iii. 24.25; यावच्च तत्तयोर्युद्धं वर्ततेऽत्यन्तभीषणम् PadmP.(Ra.) 6.465; अन्येनाशीविषेणेव पतताऽत्यन्तभीषणा । दृष्टिरुल्कानिभाक्षेपि प्रतिपक्षस्य विग्रहे PadmP.(Ra.) 12.294; (तार्क्ष्यः) उपसंहृत्य देहमत्यन्तभीषणम् ... मातुरन्तिकमगात् SkandP. iii(1). 38.25; भुजङ्गमः ... तत्रैवाजनि दृष्टश्च स मयाऽत्यन्तभीषणः SamarāSaṁ. 4.370; सा (सरित्) ... कल्लोलकलिता त्यक्तमर्यादात्यन्तभीषणा SamarāSaṁ. 8.499.

**अत्यन्तभूतत्व** (atyantabhūta-tva) *n.* absolute past तदर्थश्चेदवयवो भाविनो भूततागतिः । न स्यादत्यन्तभूतत्वमेवैकं तत्र संभवेत् VākyaP. iii. 9.94 (95)

**अत्यन्तभूयसी** (atyanta-bhūyasī) *adj.* (comp.) much more perfect, complete in all aspects अत्यन्तभूयसी किल योगवशादात्मसंवित्तिः RasRaSa. 1.48.

**अत्यन्तभेद** (atyanta-bheda) *m.* I absolute or total difference (between two or more entities) प्रत्येकं व्यञ्जका भिन्ना वर्णवाक्यपदेषु ये । तेषामत्यन्तभेदेऽपि सङ्कीर्णा इव शक्तयः VākyaP. 1.88; एकत्वं तु स्वरूपत्वाच्छब्दयोर्गौणमुख्ययोः । प्राहुरत्यन्तभेदेऽपि भेदमार्गानुदर्शिनः VākyaP. 2.259; एवमत्यन्तभेदेऽपि केचिन्नियतशक्तितः । तुल्यप्रत्यवमर्शादेर्हेतुत्वं यान्ति नापरे TattvSaṁ. 726; परार्थानुमानं शब्दात्मकम्, स्वार्थानुमानं तु ज्ञानात्मकम् । तयोरत्यन्तभेदात् नैकं लक्षणमस्ति NyāyBiṬ. 87.5 (*on* 2.1); अत्यन्तभेदाद्धि स्तोत्रशस्त्रापूर्वयोः ... सम्बन्धवचनम् TantrVā. 411.10 (*on* ii. 1.27); अत्यन्तभेदस्तु घटतज्ज्ञानयोरस्माभिर्निवेद्यः TātpaṬ.(U.) 257.16 (*on* 5(4).69); अत्यन्तभेदो विज्ञेयः संसारीश्वरयोरतः Br-ĀraUBhVā. i. 4.1240; वस्तुनोरत्यन्तभेदे सति शब्दसाधारणतामात्रेण तदनुमानमुपपद्यते NyāyMañ. i. 179.11; गौरिवाश्व इति । अत्यन्तभेदविवक्षायामिदमुच्यते Pradi. ii. 394A. 19 (*on* ii. 1.54); एवमेव हि लोके निमित्तोपादानयोरत्यन्तभेदो दृश्यते S'rīBh. 384.5 (*on* i. 4.23); 161.4 (*on* i. 1.4); तत्र न तावत्तादात्म्यं शब्दार्थयोः अत्यन्तभेदेन प्रतिभासनात् TarkBhā.(Mo.) 4.18; न च साधनस्य कर्मणः क्रियया सादृश्यमुपपद्यते । अत्यन्तभेदात् Nyās. i. 554.26 (*on* iii. 1.87); प्रमाणान्तरे गोवाहीकयोरत्यन्तभेदमवगम्य व्यपदेशगौणत्वमवसीयते Aparā. 1003.20 (*on* 3.144); न च प्रयोजनसहितमेव लक्ष्यं लक्षणाया विषयः विषयप्रयोजनयोरत्यन्तभेदात् Kāvyānu.(He.) 49.10; अत्यन्तभेदः अभेदासहो भेद इत्यर्थः S'rutaPra. iB. 156.34 (*on* i. 1.4); न गोपुरुषवदत्यन्तभेदो जीवपरयोः BrahmSūBh.(Bhā.) 74.1 (*on* i. 4.5); यत्तन्निवृत्यात्यन्तभेदनिवृत्तिस्स्यात् NyāyKu. 130.15; यावद् ब्रह्मणः परस्परं च जीवानामत्यन्तभेदः पारमार्थिको नाङ्गीक्रियते S'atDū. 173.29; जगद्ब्रह्मणोरत्यन्तभेदे कथं त्रिविधपरिच्छेदराहित्यम् NyāySiA. 229.18; इयं च श्रुतिरत्यन्तभेददर्शननिन्दापरा भवतु NyāySu.(Ja.) 452A. 4 (*on* ii. 3.14); अत्यन्तभेदेऽत्यन्ताभेदे च सामान्याधिकरण्यानुपपत्तेः Upask. 286.13 (*on* vii. 1.6); तार्किकादिपक्षवदत्यन्तभेदनिषेधाय पुनरुक्तः (जीवपुरुषोत्तमयोः संबन्धः) VedāntKau. 291.19 (*on* iii. 2.28); अत्यन्तभेदसत्त्वे ज्ञानानन्दयोरैक्यासंभवेन नाखण्डार्थत्वम् LaCandr. 806.37; एकोदुम्बरबीजोपादेयानामपि फलपत्रकृमिकाष्ठादीनामत्यन्तभेददर्शनात् SetuBa. 236.16; अत्यन्तभेदेऽश्वपुरुषयोरिव तद्व्यवहाराभावात् VaiyaSiMañ. 38.12; वृत्तिवाक्ययोरत्यन्तभेदात् LaS'abdeS'e. ii. 400.2; II (between a thing and its attributes etc.) अत्यन्तभेदात् स्तुतिस्तुत्ययोः S'ābaBh. 2004.11 (*on* x. 6.35); पर्यायेणाथ कर्तृत्वं स किं तस्यैव वस्तुनः । अत्यन्तभेदाभेदौ तु स्यातां तद्वति वस्तुनि PramāVār. 1.177; न त्वष्टाकपालस्तुत्या द्वादशकपालस्य स्तुतिः, विशेषणविशेष्ययोरत्यन्तभेदात् TantrVār. 312.15 (*on* i. 4.16); धर्मधर्मिणोरत्यन्तभेदे च कौटस्थ्याविरोधः NyāyKuA. i. 55.6; केन वा धर्मेभ्योऽत्यन्तभेदो धर्मिण उपेयते Kāśi. i. 265.10 (*on* 4.152); अत्यन्तभेदेऽपि च स्वभावनियमादेव धर्मधर्मिभावनियमोपपत्तेः Kiraṇā. 258.20; संस्थानतद्वतोः संस्थानयोश्चात्यन्तभेदात् NyāyKu. 149.17; तत्र प्रकारप्रकारिणोः प्रकाराणां च मिथोऽत्यन्तभेदेऽपि NyāySiA. 187.14; किं च धर्मधर्मिणोरत्यन्तभेदे गवाश्ववत् सामानाधिकरण्यप्रत्ययो न स्यात् SarvaDaKau. 91.1; III (between cause (means) and effect (result)) साध्यसाधनयोरत्यन्तभेदात् Pradi. iii. 117A. 40 (*on* iii. 1.87); अत्यन्तभेदो ग्राह्यग्राहकयोरनिष्ट एव Kāśi. ii. 126.22 (*on* 5(3).69); उपादानेऽपि हि कार्यकारणयोरत्यन्तभेद एव दृश्यते S'atDū. 209.15; पूर्वत्र कार्यकारणयोरत्यन्तभेदो निराकृतः

VedāntKau. 164. 19 (*on* ii. 1. 20); **iv** (between general and particular) तेन नात्यन्तभेदोऽपि स्यात्सामान्यविशेषयोः S'lokaVār. 5(11). 11 (*on* 548. 4); वस्त्रौदुम्बरीजातिव्यक्तिस्पर्शानामत्यन्तभेदात् TantrVā. 98. 19 (*on* i. 3. 3); अस्तु वात्यन्तभेद एव जात्यादेः YuktiSneha. 39. 32 (*on* i. 1. 4); **v** (between part and whole) न च ब्रह्मांशानां ब्रह्मणोऽत्यन्तभेदं वा ब्रह्माध्यस्तत्वं वा स्वप्नेऽप्यङ्गीकरोषि SatDū. 202. 12; अवयवानामवयविना सहात्यन्तभेदो नास्ति S'arka. 14. 2; किमभेदांश एव जीवः किं वा भेदांश एव।… न द्वितीयः। अत्यन्तभेदप्रसङ्गात् VivaPraSaṁ. 312. 12; उपकार्योपकारकभावस्य दर्शपूर्णमासप्रयाजादौ भिन्नायतनत्वेनात्यन्तभेदात् SarvaDaSaṁ. 15. 169; **vi** (between a thing and its modifications) सांख्या हि प्रकृतिविकारयोरत्यन्तभेदमनिच्छन्तः…सङ्गिरन्ते Kāśi. ii. 148. 18 (*on* 5(3). 123); न तूदकं कूपस्य विकृतिः। अत्यन्तभेदात् Prasā. i. 840. 20.

**अत्यन्तभेदकता** (atyantabhedaka-tā) *f.* nature of causing total or absolute difference तथा च मिलितयोरुपाध्योर्भेदकत्वेऽपि नात्यन्तभेदकता अमिलितयोस्तु सा LaCandr. 468. 26.

**अत्यन्तभेदकत्व** (atyantabhedaka-tva) *n.* nature of causing total or absolute difference अनिरपेक्षोपाध्योरत्यन्तभेदकत्वमेतद्ग्रन्थविरुद्धम् LaCandr. 468. 34; मिलितोपाध्योर्नात्यन्तभेदकत्वम् GuruCandr. ii. 90. 8.

**अत्यन्तभेदग्राहक** (atyantabheda-grāhaka) *adj.* causing the cognition of absolute difference न च जगद्ब्रह्मणोरत्यन्तभेदग्राहकं किं चन प्रमाणमस्ति Aparā. 1003. 21 (*on* 3. 144)

**अत्यन्तभेदतस्** (atyantabheda-tas) *adv.* **A** on account of absolute difference एकस्य कार्यमन्यस्य न स्यादत्यन्तभेदतः PramāVār. 1. 165; प्रत्यक्षो गम्यते मात्रा प्रतीचोऽत्यन्तभेदतः BṛĀraUBhVā. iv. 3. 184; **B** by total removal or destruction निकृत्या परिवद्धस्य पाशस्यात्यन्तभेदतः।…चैतन्यं स्वच्छं मन्येत S'ivaP. vii(2). 18. 17 (566B. 13)

**अत्यन्तभेदपक्ष** (atyantabheda-pakṣa) *m.* view subscribing to absolute difference धर्मधर्मिणोरत्यन्तभेदपक्षः … निरस्तः Nyāyāmṛ. 274B. 8; अत्यन्तभेदपक्षेऽपि विशेषोऽङ्गीकार्यः AdvaiSi. 807. 14.

**अत्यन्तभेदवत्** (atyantabheda-va(n)t) *adj.* absolutely different बद्धः पुनरत्यन्तभेदवत् (मेयं मन्यते) ĪśvaPraSū. iv. 1. 13.

**अत्यन्तभेदवाद** (atyantabheda-vāda) *m.* theory or doctrine of absolute difference अत्यन्तभेदवादः प्रबन्धेन निरस्तः PrakaVi. 444. 16; अत्यन्तभेदवादे भेदाभेदवादे वा 'शुक्लो घटः' इति प्रथमं तादात्म्यं प्रतिपाद्य VivaPraSaṁ. 46. 24.

**अत्यन्तभेदवादिन्** (atyantabheda-vādin) *adj.* upholder of the theory of absolute difference तयोरत्यन्तभेदवादिनश्च कथं तर्हि 'नीलो घटः' इत्यादिप्रतीतिव्यवहारौ इत्याशङ्क्य PūrvottaVāNaMā. 78. 2.

**अत्यन्तभेदव्यापक** (atyantabheda-vyāpaka) *adj.* pervading absolute difference ननु न पृथगनुपलम्भोऽत्यन्तभेदव्यापकः NyāyKu. 130. 14.

**अत्यन्तभेदसाम्य** (atyantabheda-sāmya) *n.* equality in having absolute difference एवं समवायोऽपि समवायिभ्योऽत्यन्तभिन्नः सन् समवायलक्षणेनान्येन संबन्धेन समवायिभिः संबध्येत, अत्यन्तभेदसाम्यात् BrahmSūBh.(S'aṅ.) 371. 8 (*on* ii. 2. 13) = VedāntPāSau. 188. 5 (*on* ii. 2. 13)

**अत्यन्तभेदाभाव** (atyantabhedābhāva) *m.* absence of total or absolute difference आकृतिव्यक्त्योरत्यन्तभेदाभावात् … द्रव्यमभिधीयते TantrVā. 279. 2 (*on* i. 3. 26); वाच्यवाचकयोरत्यन्तभेदाभावात् विश्वम् … ब्रह्म ViṣṇuSaBh. 32. 16 (*on* 14); अंशान्तराग्रहोऽपि इदमंशाग्रहः, तयोरत्यन्तभेदाभावात् IṣṭaSi. 268. 13; अत्यन्तभेदाभावादिति वक्ष्यमाणोऽभिसन्धिः TattvVai. 128. 23 (*on* 3. 13); सामान्यम्…विकल्पाकारेभ्योऽत्यन्तभेदाभावेनाभावरूपम् NyāyKa. 319. 4; व्यापारस्य च व्यापारवतोऽत्यन्तभेदाभावात् NyāySu.(So.) 31. 25 (*on* i. 2. 7); संयोगाप्राप्त्यभावश्चात्यन्तभेदाभावादुपपत्स्यते NyāySu.(Ja.) 319B. 11 (*on* ii. 2. 1); प्रयोजनविषयसंबन्धानां स्वरूपतोऽत्यन्तभेदाभावात् पृथग्वक्तव्यत्वाभावः VivaPraSaṁ. 226. 6; द्रव्यस्य क्रियातोऽत्यन्तभेदाभावात् BhāṭṭDi. ii. 252. 13 (*on* vi. 3. 3); व्रीह्यवयविनः स्वावयवैरत्यन्तभेदाभावात् BhāṭṭDi. ii. 263. 3 (*on* vi. 3. 11); MayūMāli. 624. 20 (ix. 3. 5); शरीरशरीरिणामत्यन्तभेदाभावेन BhāṭṭCin. i. 131. 4 (*on* i. 1. 5); कार्यकारणयोरत्यन्तभेदाभावात् GuruCandr. iii. 155. 22; अत्यन्तभेदाभावात् अत्यन्ताभेद उपचर्यते LaCandr. 468. 32; आहारार्थशेऽत्यन्तभेदाभावात् BālamBha. ii. 280. 13 (*on* 2. 160)

**अत्यन्तभेदावसिति** (atyantabhedāvasiti) *f.* ascertainment of absolute difference अनेकदेहानुस्यूतमात्मानं पश्यतः स्वस्य ततोऽत्यन्तभेदावसितिरेव युक्ता NyāySu.(Ja.) 491A. 4 (*on* iii. 2. 1)

**अत्यन्तभेदाश्रय** (atyanta-bhedāśraya) *m.* locus of absolute difference (i. e. absolutely different) स्तोकप्रविभागापेक्षं नैवेदमत्यन्तभेदाश्रयसदृशमभिधीयमानं शोभते TantrVā. 202. 24 (*on* i. 3. 18)

**अत्यन्तभेदिन्** (atyanta-bhedin) *adj.* absolutely different (in nature) अत्यन्तभेदिनोऽप्येते तुल्यप्रत्यवमर्शने। शक्ताः शब्दास्तदर्थाश्चेत्यसकृच्चर्चितं पुरा TattvSaṁ. 2612.

**अत्यन्तभेदोक्ति** (atyanta-bhedokti) *f.* statement of absolute difference विवक्षा नैगमोऽत्यन्तभेदोक्तिः स्यात्तदाकृतिः Laghīya. 1. 68.

**अत्यन्तभेदोपलक्षण** (atyantabhedopalakṣaṇa) *n.* adventitious mark of absolute difference युष्मद्ग्रहणमत्यन्तभेदोपलक्षणार्थम् Bhām. 3. 20 (*on* i. 1. 1)

**अत्यन्तभैक्ष** (atyanta-bhaikṣa) *n.* continual alms अरण्यं व्रजति मूलफलभक्षोऽत्यन्तभैक्षभक्षो वा MānS'S. 183. 20.

**अत्यन्तभैरव** (atyanta-bhairava) *adj.* very dreadful or formidable अयम् … वारणः … अत्यन्तभैरवाकारः PadmP.(Ra.) 85. 153.

**अत्यन्तभोग** (atyanta-bhoga) *m.* great enjoyment or pleasure अत्यन्तभोगौपयिकमैश्वर्यमिव देहिनाम् Gaṅgāva. 1. 14.

**अत्यन्तभोजन** (atyanta-bhojana) *n.* excessive eating उष्णादत्यन्तभोजनात् … नागानां कुप्येते वातशोणिते Hastyāyur. 125. 12 (1. 17)

**अत्यन्तभ्रान्ति** (atyanta-bhrānti) *f.* too much rotation (सा गङ्गा) न ससादार्थमत्यन्तभ्रान्तिश्रान्तेव मूर्च्छिता RāmāMañ. 22. 18.

**अत्यन्तम्** (atyantam) *adv.* **A i** for ever, during the whole life, to the end of life **ii** till the end or completion of a ritual act etc. **iii** necessarily **iv** for a very long time **B** absolutely, perfectly, completely, entirely **C** exceedingly, excessively, extremely, immensely **A i** for ever, during the whole life, to the end of life देवमीडयं विदित्वा निचाय्येमां शान्तिमत्यन्तमेति KāṭhU. 1. 17 (*but* comm. अतिशयेन) = S'vetāU. 4. 11; तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन् ChāndoU. ii. 23. 1; S'vetāU. 4. 14; अत्यन्तं तु गतश्रियः ĀśvaS'S. I. ii. 1. 36; परीक्ष्यकारिणं धीरमत्यन्तं श्रीर्निषेवते MahāBhā. v. 34. 56 = KātySm. 3 = Subhāṣi. 2649; स्वर्गं गच्छेयुरत्यन्तं सर्वे मे प्रपितामहाः Rāmā. i. 41. 18; सर्वेषामपि तु न्याय्यं दातुं शक्त्या मनीषिभिः। ग्रासाच्छादनमत्यन्तं पतितो ह्यददद्भवेत् ManuSm. 9. 202; अत्यन्तमेव सदृशेक्षणवल्लभाभिराहो निवत्स्यति समं हरिणाङ्गनाभिः S'āk. 1. 26; सत्यमत्यन्तमुदितं धर्मशास्त्रेषु धीमताम्। तारणाय MārkP. 8. 20; (ते खल्वत्यन्तं व्यावृत्तिहेतुत्वाद्विशेषा एव) 'अत्यन्तं' सर्वदा NyāyKa. 14. 4; अत्यन्तमिति। … अथवान्तमतिक्रान्तमिति … क्रियाविशेषणं चैतत् Nyās. ii. 62. 10 (*on* v. 2. 11); कस्यात्यन्तं मित्रमेकान्ततो वा शत्रुः क्वायं शत्रुमित्रत्वहेतुः RāghPāṇ. (Dha.) 11. 8; दग्धे बीजे यथात्यन्तं प्रादुर्भवति नाङ्कुरः YaśasCam. ii. 399. 9; अत्यन्तं यावज्जीवम् ViraMi. (Vyavahāra.) 559. 7 = VyavaMa. 165. 1 = BālamBha. ii. 175. 3 (*on* 2. 132); ii. 186. 30 (*on* 2. 134); अत्यन्तं शान्तिमात्यन्तिकीं दुःखनिवृत्तिम् S'ivārkaMaDi. i. 97. 29 (*on* i. 1. 1) **A ii** till the end or completion of a ritual act etc. अप्यत्यन्तं गुणभूतानाम् ĀśvaS'S. I. iii. 14. 5; क्रतुपशवो वात्यन्तम् ĀśvaS'S. II. vi. 7. 2; **A iii** necessarily इति प्रागार्थीं पूर्वाह्णे काण्वीमपराह्णेऽन्यतरां वात्यन्तं ĀśvaS'S. I. iv. 7. 4; सुब्रह्मण्या त्वत्यन्तम् ĀśvaS'S. II. vi. 4. 19; अत्यन्तमेके सुवर्णप्राशनमुदके निघृष्य VārāGS. 2. 8; **A iv** for a very long time कथं जीवेयुरत्यन्तं कथं वर्धेयुरित्यपि MahāBhā. iii. 10. 22; आत्मा …दुःखसहस्रैः सदा अभिधृतो भ्रमत्यत्यन्तम् TattvPradī(A.) 14. 5 (*on* 1. 12); TātpaVṛ. 15. 11 (*on* 1. 12); **B** absolutely, perfectly, completely, entirely अर्थमप्रतियतो नात्यन्तं स्वरसंस्कारोद्देशः Nir. 1. 15 (37. 17); नात्यन्तमेवानुवृत्तिः श्रूयते पुत्ररक्षणे MahāBhā. i. 1. 185; यथा नोऽत्यन्तमव्ययम्। राज्यं निर्द्वन्द्वम्…चिरं भवेत् MahāBhā. iv. 25. 7; अत्यन्तभावं नष्टास्ते (v. l. अत्यन्तं वा नष्टास्ते) MahāBhā. iv. 24. 13; जयत्यजितमत्यन्तम् ArthS'ā. i. 47. 4 (1. 9); अत्यन्तमपि संहारो नाहारस्य प्रशस्यते Saunda. 14. 8; युञ्ज्यात् य एनमत्यन्तमायुषा च सुखेन च CaraS. i. 16. 12; नात्यन्तं संस्कृतेनैव नात्यन्तं देशभाषया। कथां गोष्ठीषु कथयँल्लोके बहुमतो भवेत् KāmSū. 60. 9 (1. 4) = SaraKaṇṭhā. 142. 20; योऽत्यन्तं न विनश्यति ViṣṇuP. ii. 7. 20; अपरिग्रहाच्चात्यन्तमनपेक्षा BrahmSū. ii. 2. 16; तदेवमेकस्यानेकशरीरयोगः शरीरादिवियोगश्चात्यन्तं न स्यादिति NyāyBh. 53. 14 (*on* i. 1. 40); 225. 9 (*on* iii. 2. 47); वाक्यात्पदानामत्यन्तं प्रविवेको न कश्चन VākyaP. 1. 73 = VaiyāBhū. 66 (249. 5); शब्देष्वत्यन्तमाश्रितः VākyaP. 2. 104; 2. 218; अत्यन्तं यानभिज्ञा क्षणमपि तमसा साकमेकत्र वस्तुम् SūryaS'. 24; अत्यन्तमसदार्याणामनालोचितचेष्टितम् Kāvyāda. 2. 250 = SaraKaṇṭhā. 327. 20; आशातन्तुर्न च कथयतात्यन्तमुच्छेदनीयः MālaMā. 9. 152; S'lokaVār. 5(17). 30 (696. 1); 5(8). 19 (479. 4); प्रवृत्तिः शुक्तिशकले तथा च रजतार्थिनः। आभासते कथंचिच्च तन्नात्यन्तं न भासते VibhraVi. 80; भिन्नधर्मत्वे भेदोऽत्यन्तं प्रसज्यते TattvSaṁ. 134; 266; 560; यथाकामित्वं तु विदुषोऽत्यन्तमप्राप्तम् AitUBh. 248. 8 (*on* 1. 0); ऋक्सामनी नात्यन्तं भिन्ने अन्योन्यम् ChāndoUBh. 45. 13 (*on* i. 6. 1); 238. 13 (*on* iv. 11. 1); क्रियाणां तत्साधनानां च अत्यन्तमेव निवृत्तिः BṛĀraUBh. 321. 12 (*on* ii. 4. 14); अत्यन्तमेव अस्पृष्टं समम् एकम् अविक्रियं तद्ब्रह्म GītāBh.(S'aṅ.) 168. 17 (*on* 5. 18);

त्वम् Sphuṭā. 20. 26 (*on* 1. 6)

**अत्यन्तविचित्ररचन** (atyantavicitra-racana) *adj.* composition of which is extremely diverse अत्यन्तविचित्ररचनस्य जगतो निरतिशयज्ञानशक्तियुक्तबहुकर्तृकत्वकल्पनं युक्तमिति चेत् NītiMā. 10. 11.

**अत्यन्तविच्छेद** (atyanta-viccheda) *m.* complete cessation तेषामत्यन्तविच्छेद इह मन्वन्तरक्षयात् VāyuP. i. 61. 174.

**अत्यन्तविजातीय** (atyanta-vijātīya) *adj.* of absolutely different category ईदृशेष्वत्यन्तविजातीयेषु समाख्यानमन्तरेण नान्यः कश्चिदनुगतो धर्मोऽस्ति NyāyMāVi. 71. 12 (*on* ii. 1. 7)

**अत्यन्तविजातीयत्व** (atyantavijātīya-tva) *n.* the state of belonging to an absolutely different category हस्तादिवृत्तीनामत्यन्तविजातीयत्वात् BrahmSūBh.(S'aṅ.) 501. 5 (*on* ii. 4. 6); श्रवणाद्यवान्तरव्यापारोपेताः प्राणा न संभूय प्राण्युरिति युक्तम् प्रमाणाभावात्, अत्यन्तविजातीयत्वाच्च श्रवणादिभ्यः प्राणनस्य BrahmSūBh.(S'aṅ.) 507. 4 (*on* ii. 4. 10); अश्मकाष्ठतृणादेरचेतनस्येव जीवस्याप्यज्ञत्वादिना सर्वज्ञत्वादियुक्तादीश्वरात् अत्यन्तविजातीयत्वश्रवणात् तयोरेकभावानुपपत्तेः BrahmSūBh.(S'rī.) ii. 32. 6 (*on* ii. 1. 23)

**अत्यन्तविजातीयारम्भकत्व** (atyantavijātīyārambhaka-tva) *n.* the state of producing extremely dissimilar (things) तन्तुवीरणयोरपि कटारम्भः स्यात् । तथा सति धर्मविशेषविपर्ययः प्राप्नोति । अत्यन्तविजातीयारम्भकत्वं द्रव्याणां प्राप्नोतीत्यर्थः Sphuṭā. 107. 22 (*on* 3. 100)

**अत्यन्तविजिगीषा** (atyanta-vijigīṣā) *f.* excessive desire to conquer कामदेवेन कृतं तेषां हृदयं यदत्यन्तविजिगीषाज्वलनजाज्वल्यमानमभूदिति यावत् Kāvyānu.(He.) 56. 22.

**अत्यन्तविज्ञानत्व** (atyantavijñāna-tva) *n.* the state of possessing infinite knowledge दोषात्ययं विनात्यन्तविज्ञानत्वस्यानुपपत्तेः SyādvāMañ. 1 (44)

**अत्यन्तविडम्बन** (atyanta-viḍambana) *n.* **1** mere play, sport or amusement जन्म कर्म च विश्वात्मन्नजस्याकर्तुरात्मनः । तिर्यङ्नृ(? नृ)षिषु यादःसु तदत्यन्तविडम्बनम् BhāgP. i. 8. 30; AdhyāRā. iv. 6. 72; **2** extreme mockery, matter of great ridicule (मोहिन्युवाच ब्रह्माणम्) स्वकन्यायां यत स्पृहा स(? त्वम्) कथं हससि नर्तकीम् । सतां कर्म विरुद्धं यत्तदत्यन्तविडम्बनम् BrahmVaiP. iv. 33. 36; कृष्णानुग्रहतो विद्वान् लब्ध्वा च जन्म भारते । न भजेत् कृष्णपादाब्जं तदत्यन्तविडम्बनम् PañcaRā.(Nā.) ii. 2. 65.

**अत्यन्तविडम्बना** (atyanta-viḍambanā) *f.* extreme mockery सापह्नवं मम मनो यदेतत्त्वयि जायते । देवक्याश्चात्मजप्रीत्या तदत्यन्तविडम्बना ViṣṇuP. v. 20. 99 = BrahmP. 193. 84.

**अत्यन्तवितत** (atyanta-vitata) *adj.* very vast, very extensive अत्यन्तविततेषु प्रधानेष्वष्टसु नागकुलेषु लब्धप्रसूतयः प्रचरन्ति भोगिनो लोकाः UdaySuKa. 93. 26; अहम् (ब्रह्मा) । यावत्पश्यामि गगनं न तमोभिर्न तेजसा । व्याप्तमत्यन्तविततं शून्यमन्तविवर्जितम् YogVā. iii. 85. 8; न चात्यन्तविततस्य जगतः कथमात्मा कर्तेति वाच्यम् Aparā. 975. 3 (*on* 3. 68)

**अत्यन्तविततव्यवहार** (atyantavitata-vyavahāra) *adj.* of very wide use, having very extensive usage अत्यन्तविततव्यवहाराः पदार्था दृश्यन्ते VakroJī. 140. 15.

**अत्यन्तवित्रस्त** (atyanta-vitrasta) *adj.* very much frightened, extremely afraid of ततस्तेऽत्यन्तवित्रस्ता म्लेच्छाः पतितकार्मुकाः । कुर्वन्तः परमं रावं गत्वा पत्ये न्यवेदयन् PadmP.(Ra.) 34. 70.

**अत्यन्तवित्रास** (atyanta-vitrāsa) *m.* great fear or terror वीक्षितं परमं रूपं मनोद्रवणकारणम् । पुनश्चात्यन्तवित्रासकारणम् PadmP.(Ra.) 32. 90.

**अत्यन्तविद्** (atyanta-vid) *adj.* greatly learned, very erudite या भक्तिरत्यन्तविदां[ दा ] च पश्चाच्छ्रीवीरभानुप्रभुणा व्यधायि VīraBhā. 1. 60.

**अत्यन्तविद्या** (atyanta-vidyā) *f.* highest knowledge (i. e. realization of the Supreme Being) अव्यक्त(v. l. अत्यन्त)विद्यामिति यत् सनातनीं ब्रवीषि त्वं ब्रह्मचर्येण सिद्धाम् MahāBhā. v. 44. 3 (Nīla. अन्तस्त्रिविधपरिच्छेदः तमतिक्रान्तं ब्रह्म तद्विषयां विद्याम्)

**अत्यन्तविद्युति** (atyanta-vidyuti) *adj.* completely deprived of its glory, totally lacking in lustre तस्या मुखे मुखं तासां जातमत्यन्तविद्युति KīcaVa. 2. 5 (comm. अतिशयविगतशोभम्)

**अत्यन्तविद्वस्** (atyanta-vidvas) *adj.* profoundly learned (person) (राजलक्ष्मीः) न गच्छति प्रणयितामत्यन्तविद्वत्स्वपि MudrāRā. 3. 5 = SūktiRa. 167. 23.

**अत्यन्तविधर्मन्** (atyanta-vidharman) *adj.* absolutely different in qualities or properties सत्त्वात् परिणामिनोऽत्यन्तविधर्मा विशुद्धोऽन्यश्चितिमात्ररूपः पुरुषः YogBh. 159. 2 (*on* 3. 35); तयोः (सत्त्वपुरुषयोः) अत्यन्तासंकीर्णयोस्तमःप्रकाशवदत्यन्तविधर्मणोरपि यः परस्परप्रतिबिम्बवशात् प्रत्ययाविशेषः — स भोगः YogSā. 54. 11(3)

**अत्यन्तविधर्मिन्** (atyanta-vidharmin) *adj.* totally different or opposed in qualities or properties अत्यन्तविधर्मिणोरन्यतरार्थानुचिन्तनं न तदितरस्य साक्षात्काराय कल्पते TattvVai. 34. 24 (*on* 1. 29)

**अत्यन्तविनत** (atyanta-vinata) *adj.* very much low, extremely bent down (अश्वाः ताजिका मताः) अत्यन्तविनतं येषां निर्मांसं च मुखं भवेत् AśvaVai. 6. 6

**अत्यन्तविनय** (atyanta-vinaya) *m.* excessive modesty or humility अयि वत्स । कृतं कृतमतिविनयेन (v. l. अत्यन्तविनयेन) UttaRāC. 6. 12(10) (NSP. 1949)

**अत्यन्तविनयिन्** (atyanta-vinayin) *adj.* very polite, extremely humble or modest (चित्राङ्गदः) सोऽत्यन्तविनयी नीचैर्निविष्टो विष्टरे पुनः PāṇḍaC. 9. 114.

**अत्यन्तविनष्ट** (atyanta-vinaṣṭa) *adj.* absolutely lost, totally disappeared (invisible) त (भ्रूक्षेपकटाक्षप्रभृतयः) एवात्यन्तविनष्टाः सन्त इदानीं स्मृतिगोचरतया निरपेक्षभावत्वप्राणं कर(? रु)णमुद्दीपयन्ति Loc. 131. 19 (*on* 3. 4); (निरपेक्षत्वभावप्राणम्) Kāvyānu.(He.) (comm.) 63. 20.

**अत्यन्तविनष्टचित्त** (atyantavinaṣṭa-citta) *adj.* whose mind is completely lost अचिरविनश्वरे संसारे सारस्य स्थिरस्य मार्गणमन्वेषणं यः करोति स संमूढः अत्यन्तविनष्टचित्तः Mitā. 329. 12 (*on* 3. 8)

**अत्यन्तविनाश** (atyanta-vināśa) *m.* utter destruction, (annihilation) न हि प्रलयोऽस्माभिरत्यन्तविनाशोऽभिप्रेयते BrahmSūBh.(Bhā.) 64. 15 (*on* i. 3. 30); ननु सतो नात्यन्तविनाशः TattvVai. 60. 14 (*on* 2. 4); अहमर्थस्य चात्यन्तविनाशो मोक्षे भवद्भिरिष्यते S'atDū. 123. 2; दैवराजव्यतिरेकेण अत्यन्तविनाशं गते ... तथाविध एव बन्धदात्रे देयः (आधिः) DīpKa. 45. 20 (*on* 2. 59); शब्दोऽत्र अत्यन्तविनाशानुसारेण शब्दकल्पकैः कल्पितः SmṛtiCan. iv. 492. 14; आकाशवदन्तःकरणस्यात्यन्तविनाशाभावात् SāṁkhyaPraBh. 121. 31 (*on* 5. 25)

**अत्यन्तविनीता** (atyanta-vinītā) *adj.* (*f.*) extremely obedient or modest तस्मात्त्वमनया देव्या सहात्यन्तविनीतया । भास्कराराधने यत्नं कुरु BhaviP. 170A. 14 (i. 116. 93); अत्राश्रमे हरिषेणमुनिरासीत्, तस्य ऋषिदत्ता पुत्री अत्यन्तविनीता बभूव KathāK. 81. 24.

**अत्यन्तविपरीत** (atyanta-viparīta) *adj.* [*f.* –ā] **1** entirely opposite, totally contradictory अत्यन्तविपरीतोऽपि यदा योऽर्थोऽवधार्यते । ... शब्दस्तत्र मुख्यः प्रवर्तते VākyaP. 2. 287; श्रुतिबलीयस्त्वादस्य द्रव्यसंबन्ध उच्यते । तदेवात्यन्तविपरीतम् TantrVā. 721. 19 (*on* iii. 1. 13); यत्त्वनिष्टं तत्र पुरुषप्रवृत्त्यसंभवादत्यन्तविपरीत एव विध्युपन्यासः TantrVā. 988. 7 (*on* iii. 4. 23); ज्ञानस्य कारणान्तरानपेक्षस्य स्वत एव प्रामाण्यमप्रामाण्यं च अत्यन्तविपरीतरूपं न संभवति NyāyRa. 55. 22 (*on* 2. 36); शाक्यादिष्विदमत्यन्तविपरीतम् S'āstrDī. 27. 9 (*on* i. 3. 3); न च ज्ञानाभावस्य ज्ञानात्मता संभवति, अत्यन्तविपरीतत्वात् S'āstrDī. 55. 20 (*on* i. 1. 5); **2** very much changed or transformed ब्रह्मणो दिवसस्यान्ते कालीक्रोडात् शुचिस्मिते । राधासमीपं देवेशि यदा यास्यति बालकः । अत्यन्तविपरीता सा भविष्यति दिनान्तरे KāliViT. 23. 29.

**अत्यन्तविपरीतत्व** (atyantaviparīta-tva) *n.* the state of being totally contradictory कर्मविनाशप्रभवं हि सदेतत् न कथंचित्कर्मसंबन्धीति शक्यं वदितुम् । अत्यन्तविपरीतत्वात् TantrVā. 370. 13 (*on* ii. 1. 5)

**अत्यन्तविपरीतदर्शन** (atyantaviparīta-darśana) *n.* totally opposite (i. e. wrong) perception अत्यन्तविपरीतदर्शनभाविततया मोमुह्यमानो लोकः GītāBh.(S'aṅ.) 123. 12 (*on* 4. 18)

**अत्यन्तविपरीतनिषेवण** (atyantaviparīta-niṣevaṇa) *n.* use of completely opposite (things) मधुरस्निग्धसौहित्यैर्यत् सौख्येन विनश्यति । कृशिमा स्थविमात्यन्तविपरीतनिषेवणैः AṣṭāHṛ. i. 14. 33; AṣṭāSaṁ. i. 127. 2 (1. 24)

**अत्यन्तविपरीतस्वभाव** (atyantaviparīta-svabhāva) *adj.* of a completely contradictory nature अत्यन्तविपरीतस्वभावयोश्च भावाभावयोरेकत्वाभिधानं साहसमात्रम् S'āstrDī. 145. 12 (*on* i. 1. 6); अत्यन्तविपरीतस्वभावयोरपोह्यापोह्योः संकरः समाश्रितः स्यात् NyāyRa. 591. 17 (*on* 5(13). 97)

**अत्यन्तविपर्यय** (atyanta-viparyaya) *n.* completely opposite condition (i. e. incurable) (व्याधिः) अनुपक्रम एव स्यात् स्थितोऽत्यन्तविपर्यये AṣṭāHṛ. i. 1. 32; (व्याधिः) तस्मादुपेक्ष्य एवासौ स्थितोऽत्यन्तविपर्यये AṣṭāSaṁ. i. 6. 20 (1. 3)

**अत्यन्तविपर्यस्त** (atyanta-viparyasta) *adj.* **1** of a totally opposite nature (i. e. false or unreal) आभ्यां प्रमाणाभ्यामन्येन च ज्ञानेन दर्शितोऽर्थः कश्चिदत्यन्तविपर्यस्तः । यथा मरीचिकासु जलम् NyāyBiṬ. 22. 1 (*on* 1. 1); **2** totally mistaken अत्यन्तविपर्यस्तः दुर्ज्ञानावलेपदुर्विदग्ध इति यावत् TātpaṬ.(Vā.) 64. 23 (*on* i. 1. 1)

**अत्यन्तविपुल** (atyanta-vipula) *adj.* extremely vast or wide जनकोऽ-

वोचदत्यन्तविपुलः क्षारसागरः। न तत्करोति यद्राप्यः स्तोकत्वादुपयोभृतः PadmP. (Ra.) 28. 146; इक्ष्वाकूणां कुलं श्रीमद्भूपय ···। अत्यन्तविपुलं भ्रातः शशी गृ(?ग्र)हकुलं यथा PadmP.(Ra.) 31. 162; (रत्नकम्बलाः) अत्यन्तविपुलाश्चित्तचारा इव महात्मनान् S'āliC. 4. 13.

**अत्यन्तविप्रकर्ष** (atyanta-viprakarṣa) *m.* extreme remoteness न तु क्रत्वन्तरस्थं परिहर्तव्यमत्यन्तविप्रकर्षेणैवाप्रसक्तत्वात् TantrVā. 916. 20 (*on* iii. 4. 9(1)); इति गौण्यामत्यन्तविप्रकर्षः MayūMāli. 68. 18 (*on* i. 4. 5); 439. 16 (*on* v. 4. 2)

**अत्यन्तविप्रकृष्ट** (atyanta-viprakṛṣṭa) *adj.* [*f.* -ā] **i** very distant, very remote इतश्चात्यन्तविप्रकृष्टे देशे परित्यक्तायाः सीतायाः आगमनं न संभाव्यते KundaMā. 3. 7 (16); **ii** very much removed or unconnected वत्सर्थोपादानेन कर्मणि प्रवृत्तौ च अत्यन्तविप्रकृष्टा गौणता स्यात् TantrVā. 298. 3 (*on* i. 4. 5); अत्यन्तविप्रकृष्टं वा किंचिद्भवेदित्याशङ्कितत्वान्न नियोगतोऽर्थापत्तिः TantrVā. 426. 2 (*on* ii. 1. 46); पदान्तरत्वेन अत्यन्तविप्रकृष्टविशेषणतां दर्शयति Kāśi. iii. 123. 21 (*on* 5 (5). 59); करणत्वं चार्थवत्त्वशब्देनाभिप्रेतन् ··· अत्यन्तविप्रकृष्टलाङ्गलाद्यपेक्षया साधकतमत्वेन विवक्ष्यते NyāySu.(So.) 87. 16 (*on* i. 2. 26); अस्मादेव वचनात् कुलवृत्तादिसंदेहाभावे अत्यन्तविप्रकृष्टोऽपि पुत्रीकार्य इति गम्यते ViraMi. (Saṁskāra.) 210. 9; अत्यन्तविप्रकृष्टार्थविधानात् केवलवाक्यं स्यादित्यर्थः MayūMāli. 452. 3 (*on* vi. 1. 5); **iii** far remote (in time) तदत्यन्तविप्रकृष्टनाडीनां पुण्यत्वं नास्तीति व्यतिरेकमात्रपरम् SmṛtiCan. v. 130. 18.

**अत्यन्तविप्रकृष्टता** (atyantaviprakṛṣṭa-tā) *f.* the state of being extremely distant or remote तद्धि (प्रत्यक्षम्) योगिनां स्यात् अस्मदादीनां वा। नाद्यम्। अत्यन्तविप्रकृष्टतया श्रद्धामात्रगम्यत्वात् SyādvāMañ. 16 (178)

**अत्यन्तविप्रकृष्टत्व** (atyantaviprakṛṣṭa-tva) *n.* the state of being very far away तारारूपाणि यानीह दृश्यन्ते द्युतिमन्ति हि। दीपवत् (v. l. अत्यन्त)-विप्रकृष्टत्वादणूनि सुमहान्त्यपि MahāBhā. iii. 43. 30.

**अत्यन्तविप्रकृष्टदेश** (atyantaviprakṛṣṭa-deśa) *m.* very distant place अत्यन्तविप्रकृष्टदेशस्थानां गवामानयनयोग्यताभावमालोच्य तत्परित्यागः NyāySu. (Ja.) 372B. 11 (*on* ii. 2. 6)

**अत्यन्तविप्रकृष्टार्थ** (atyantaviprakṛṣṭārtha) *adj.* the meaning of which is very remotely connected श्रुतेरत्यन्तविप्रकृष्टार्थात् प्रकरणाद् बलीयस्त्वात् Bhām. 187. 10 (*on* i. 2. 23)

**अत्यन्तविप्लव** (atyanta-viplava) *m.* great damage or loss खातमध्यौ निपतितं नष्टतोयं चिरोपितम्। अपि रुद्रप्रभावेण प्रायान्नात्यन्तविप्लवन् BrahmāṇḍP. ii. 58. 30.

**अत्यन्तविप्लुता** (atyanta-viplutā) *adj.* (*f.*) gone totally astray, very much immoral अत्यन्तविप्लुतायामगुप्तायां क्षत्रियायां वैश्यस्य पञ्चशतिको दण्डः Aparā. 857. 11 (*on* 2. 286)

**अत्यन्तविफल** (atyanta-viphala) *adj.* completely unprofitable or futile वरमत्यन्तविफलः सुखसेव्यो हि सज्जनः Subhāṣi. 385.

**अत्यन्तविभक्त** (atyanta-vibhakta) *adj.* totally separate, distinct or different भोग्यशक्तिर्बुद्धिः भोक्तृशक्तिः पुरुषः तयोरत्यन्तविभक्तयोः TattvVai. 64. 20 (*on* 2. 6); आत्मनोऽत्यन्तविभक्तसिद्धये व्यवहारजीवत्वहेतवः पुद्गलप्राणा एवमुच्छेत्तव्याः TāttvPradi.(A.) 213. 2 (*on* 2. 59); ज्ञानिनः प्राप्यं तु तस्मादत्यन्तविभक्तमित्याह GītāBh.(Rā.) 436. 3 (*on* 8. 22); अत्यन्तविभक्तस्वभावयोः प्रकृत्यात्मनोः संसर्गस्यानादित्वम् ··· उच्यते GītāBh.(Rā.) 582. 21 (*on* 13. 19)

**अत्यन्तविभक्तत्व** (atyantavibhakta-tva) *n.* the state of being totally separate or different कुतोऽत्यन्तविभक्तत्वमित्यत आह TattvVai. 64. 20 (*on* 2. 6); आत्मनोऽत्यन्तविभक्तत्वाय व्यवहारजीवत्वहेतुमालोचयति TattvPradi. (A.) 206. 6 (*on* 2. 53)

**अत्यन्तविभव** (atyanta-vibhava) *m.* great pomp (wealth) ततो भर्ता मया सार्धमुद्युक्तश्चैत्यवन्दने। जिनेन्द्रातिशयस्थानेष्वत्यन्तविभवान्वितः PadmP.(Ra.) 98. 44.

**अत्यन्तविभागवत्** (atyantavibhāga-va(n)t) *adj.* possessed of absolute difference बाढमस्त्येव तद् द्वयं न त्वत्यन्तविभागवत् BṛĀraUBhVā. iv. 3. 1611.

**अत्यन्तविभिन्न** (atyanta-vibhinna) *adj.* completely distinct यथा धात्र्यामलकादयः परस्परमत्यन्तविभिन्नमूर्तयोऽपि प्रत्येकं समुदिता वा नानाविधव्याधिव्यावर्तनसामर्थ्याध्यासिता भवन्ति TattvSaṁPañ. 239. 27 (*on* 723-726); होत्रध्वर्युशब्दयोरत्यन्तविभिन्नपुरुषवचनयोर्मुख्यसामानाधिकरण्याभावात् TantrVā. 1170. 24 (*on* iii. 8. 21)

**अत्यन्तविभिन्नार्थ** (atyantavibhinnārtha) *adj.* having entirely different objects न चात्यन्तविभिन्नार्थे विरोधेऽन्यतरत् प्रमा NyāyPari. 308. 3.

**अत्यन्तविभीतचित्त** (atyantavibhīta-citta) *adj.* very much frightened in mind मृगान्वराका(?कां)श्चलतोऽपि तूर्णान्निरागसोऽत्यन्तविभीतचित्ता:(?त्तान्)। येऽश्नन्ति मांसानि निहत्य पापाः SubhāRaSaṁ. 542.

**अत्यन्तविमल** (atyanta-vimala) *adj.* [*f.* -ā] extremely pure ततस्तुष्टाव देवेन्द्रः ···। गुणैरवितथैर्दिव्यैरत्यन्तविमलैरिति PadmP.(Ra.) 2. 126; 10. 135; 24. 4; आर्जवादिगुणश्लाघ्यामत्यन्तविमलां सतीन्। अपोह्य तादृशीं लोको दुःखं प्रेत्येह चाश्नुते PadmP.(Ra.) 102. 38; गुणैरत्यन्तविमलैः सा ··· पर्युन्मीलीयत हृदि PariPar. 2. 9; विविदिषन्त्यत्यन्तविमलस्वान्ता ब्राह्मणा यद्ब्रह्म तत्त्वमसि तत्त्वन् S'aṅkaDigVi.(Mā.) 10. 54.

**अत्यन्तविमुक्त** (atyanta-vimukta) *adj.* completely released or freed तेनात्यन्तविमुक्तश्च मुक्तः पुरुष उच्यते MahāBhā. xii. 166*(8); जीवाः···देहाद्युपाधिभिरत्यन्तविमुक्ताः NyāySu.(Ja.) 504A. 11 (*on* iii. 2. 9)

**अत्यन्तविमुख** (atyanta-vimukha) *adj.* extremely averse or opposed नरेन्द्रा भूयिष्ठं गुणवति जनेऽत्यन्तविमुखाः Tantrākhyā. 31. 20 = PañcT. 1. 113 (109. 1) = Pañcā. 75. 5; अत्यन्तविमुखे दैवे ···। मनस्विनो दरिद्रस्य वनादन्यत्कुतः सुखन् Hitopa. 1. 99 = SūktiMu. 7. 4; अत्यन्तविमुखे दैवे ···। न वैराग्यादन्यदस्ति पण्डितस्यावलम्बनम् BrahmP. 139. 4.

**अत्यन्तविमूढता** (atyantavimūḍha-tā) *f.* extreme foolishness सन्धतां कुपितोऽकोचदहोऽत्यन्तविमूढता PadmP.(Ra.) 11. 164.

**अत्यन्तविमूढार्थ** (atyantavimūḍhārtha) *adj.* meant for the very stupid or dull यदप्रमाणताभावे लिङ्गं तस्यैव कथ्यते। तदत्यन्तविमूढार्थमागोपालमसंवृते: PramāVār. 3. 99.

**अत्यन्तविमोक्ष** (atyanta-vimokṣa) *m.* complete or final release or deliverance अक्षपादाभिहितोऽपवर्गः श्रेयांस्तदत्यन्तविमोक्ष एव NyāyMañ. ii. 81. 30; असावेव चास्य दुःखानामत्यन्तविमोक्षाय यदपवर्गप्रतिष्ठा नाम AmṛUda. 5. 2(2)

**अत्यन्तवियोग** (atyanta-viyoga) *m.* final separation किं वा तवात्यन्तवियोगमोघे कुर्यामुपेक्षां हतजीवितेऽस्मिन् RaghuVa. 14. 65; तस्मात्पुरुषादत्यन्तवियोग इति यावत् YogaSā. 65. 9 (4)

**अत्यन्तविरत** (atyanta-virata) *adj.* completely disinterested or indifferent अत्यन्तविरतः ···। व्योमवत्तिष्ठ नीरागः YogVā. iv. 46. 15.

**अत्यन्तविरल** (atyanta-virala) *adj.* very few, scanty अत्यन्तविरला जाताः क्ष्माजा मन्दफलाः MahāP. 3. 114.

**अत्यन्तविरह** (atyanta-viraha) *m.* complete absence or negation स्वाश्रयेऽत्यन्तविरहः तद्विलक्षणता तथा Nyāyāmṛ. 41B. 5 = GuruCandr. i. 109. 17.

**अत्यन्तविरुद्ध** (atyanta-viruddha) *adj.* completely opposed or contradictory धर्मस्य चात्यन्तविरुद्धमेतत् VarāṅgaC. 19. 9; तदिदं गीताशास्त्रम् ··· अत्यन्तविरुद्धानेकार्थत्वेन लौकिकैः गृह्यमाणमुपलभ्य ··· विवरणं करिष्यामि GītāBh. (S'aṅ.) 3. 2 (*on* 1. 0); इत्यत्यन्तविरुद्धं तां ब्रुवाणामसमंजसन्। ···विजया निरकासयत् SkandP. i(3B). 19. 13; अत्र तदिदंशब्दादिना स्मृत्यनुभवयोरत्यन्तविरुद्धविषयतासूचनेनाश्चर्यविभावता योजिता Loc. 159. 18 (*on* 3. 16); संबन्धयोग्यच्छागत्वपरिकल्पनमत्यन्तविरुद्धम् BrahmSūBh.(Rā.) 357. 18 (*on* i. 4. 10); अत्यन्तविरुद्धानि त्वनादेयानि NyāySiA. 193. 24; लोकेऽत्यन्तविरुद्धवचनविरोधाच्च न्यायस्य तत्राप्रवृत्तेः BālamBha. ii. 249. 6 (*on* 2. 139)

**अत्यन्तविरुद्धत्व** (atyantaviruddha-tva) *n.* the state of being completely contradictory भोः शबर अनर्हं भवता प्रतिपादितं कथमत्यन्तविरुद्धत्वात् S'aṅkaVi.(Ā.) 157. 12.

**अत्यन्तविरूपता** (atyantavirūpa-tā) *f.* extreme ugliness or deformity अत्यन्तविरूपतया परिचितः PrabaCin. 30. 22.

**अत्यन्तविरोध** (atyanta-virodha) *m.* complete incompatibility or opposition शुद्ध्यशुद्ध्योरत्यन्तविरोधात् TattvVai. 184. 10 (*on* 4. 3); वीररौद्रयोस्त्वत्यन्तविरोधोऽपि नास्ति Loc. 177. 27 (*on* 3. 26) = Kāvyānu.(He.) 99. 25; 100. 22; अद्वैतभेदयोरत्यन्तविरोधात् PramāMā. 19. 8; एकस्मिन्विषय एकस्य विधिप्रतिषेधयोरत्यन्तविरोधात् Pradi. iii. 192A. 38 (*on* iii. 2. 118); iii. 104B. 33 (*on* iii. 1. 67); अतोऽत्यन्तविरोधे ··· उभयबाधोऽन्यतरबाधो वावश्यंभावी S'atDū. 129. 17; 220. 1; प्रमातृनिष्ठस्य हि विषयचैतन्यविषयत्वेनात्यन्तविरोधः SiddhāTa. 54. 7; न वा ··· अत्र विषययोरत्यन्तविरोधः BhāṭṭDī. i. 38. 19 (*on* i. 3. 2)

**अत्यन्तविरोधाभाव** (atyantavirodhābhāva) *m.* absence of absolute contradiction विकल्पाश्रयणेऽप्यत्यन्तविरोधाभावात् TantrVā. 82. 21 (*on* i. 3. 3); जीवन्निति शक्त्यपेक्षयाप्युपसंहारे तेषामत्यन्तविरोधाभावात् NyāyRaMā. 116. 20.

**अत्यन्तविरोधिन्** (atyanta-virodhin) *adj.* wholly or completely contradictory, totally opposed इतरद् भोगात्यन्तविरोधि AvantiKa. 39. 9; त्रयीमार्गस्य सिद्धस्य ये ह्यत्यन्तविरोधिनः। अनिराकृत्य तान्सर्वान्धर्मशुद्धिर्न लभ्यते TantrVā. 115. 17 (*on* i. 3. 4); ईदृशो नामायन् ··· शुक्लः कर्माशयो यदेकोऽपि सन् ··· अत्यन्तविरोधिनः कर्माशयान्भूयसोऽप्यपहन्ति TattvVai. 72. 11 (*on* 2. 13)

**अत्यन्तविलक्षण** (atyanta-vilakṣaṇa) *adj.* [*f.* -ā] **i** of a complete-

ly different or separate nature वाक्येऽत्यन्तविलक्षणे सदृशस्येव संज्ञानमसतोऽर्थस्य मन्यते VākyaP. 2.94; अन्यथा निरुपाख्यवत् सन्तोऽप्यत्यन्तविलक्षणाः प्रकाशेरन् BrahmSi. 97.19; अत्यन्तविलक्षणानां मधुरतिक्तश्वेतपीतादीनामपि परस्पराध्यासदर्शनात् S'vetāUBh. 54.23 (on 1.0); न हि मैत्रायणी शाखा काठकस्यात्यन्तविलक्षणा BālaKrī. i. 18.16 (on 1.7); तच्चेदमन्यव्यावृत्तिरूपम् … अत्यन्तविलक्षणानां सालक्षण्यापादनाच्च TātpaṬ(Vā.) 486.7 (on ii. 2.65); ĀtmaTaVi. 308.3; जातिः … नानाव्यक्तिषु स्वयमेकाकारतया ताभ्योऽत्यन्तविलक्षणा … प्रकाशते TantrRaha. 18.13; अत्यन्तविलक्षणानामपि सर्पवृक्षसिंहादीनामप्यश्वादिव्यावृत्तिसामान्यात् सजातीयत्वं स्यात् NyāyRa. 586.16 (on 5(13).77); 566.9 (on 5(13).1); कथं चात्यन्तविलक्षणानि स्वलक्षणान्येकरूपं विज्ञानं जनयन्ति S'āstrDī. 103.16 (on i. 1.5); वेद्यभूतादस्मात्क्षेत्रादत्यन्तविलक्षणः … आत्मा GītāBh.(Rā.) 587.15 (on 13.33); उक्तदोषभयादत्यन्तविलक्षणानामेव क्षणानां कार्यकारणभावोऽभ्युपगम्येत PrakaVi. 522.23; यदि द्रव्यादिभ्योऽत्यन्तविलक्षणा सत्ता तदा द्रव्यादीन्यसद्रूपाण्येव स्युः SyādvāMañ. 80.(155); न खलु शिशुवृद्धदेहयोरत्यन्तविलक्षणयोरैक्यप्रत्यभिज्ञा S'ivārkaMaDī. ii. 89.32 (on ii. 2.24); अत्यन्तविलक्षणानामेकोपलक्षणं विना एकविधिविधेयत्वायोगात् MīmāKau. i. 44.17 (on i. 3.7); ii completely opposed to each other, having exactly opposite features न च सदसतोरत्यन्तविलक्षणयोः सारूप्यमस्ति TātpaṬ.(Vā.) 84.4 (on i. 1.2); भावाभावात्मना ह्यत्यन्तविलक्षणानामपि यदि कथंचित् … कारणत्वं निर्वोढुं शक्यते NyāyKu. 163.16; किंतु वक्तव्यमत्यन्तविलक्षणेनाचेतनवर्गेण S'ivārkaMaDī. ii. 22.15 (on ii. 1.15); iii very strange, very unusual कारणभेदादेवात्मभेदमत्यन्तविलक्षणमनुभवन्तोऽध्यक्षत एवावसीयन्ते HetuBiṬ. 82.10; आत्मा यजमान इत्यारभ्य पुरुषसंबन्धिरात्मादिभिर्यज्ञसंपादनमत्यन्तविलक्षणम् BrahmSūBh.(Bhā.) 183.22 (on iii. 3.24); न भौतिकं शरीरं नाप्यशरीरस्य यातनाः, किं तर्हि अत्यन्तविलक्षणे ते मानुषशरीरेऽतोन्यान्येतानि मृदुस्निग्धसुकुमारशरीरारम्भकाण्यत्यन्तविलक्षणानि ManuBh. ii. 461.25 (on 12.21); ii. 208.24 (on 8.324); यदप्यत्यन्तविलक्षणानामित्यादि तदपि सन्दिग्धानैकान्तिकम् ĀtmaTaVi. 347.1; न पुनरत्यन्तविलक्षणं सर्वज्ञत्वम् TarkBhā.(Mo) 25.8; व्यभिचार्यादयस्तु … न ततोऽत्यन्तविलक्षणाः VyaktiVi. 18.20; यदि द्रव्यादत्यन्तविलक्षणं सत्त्वं तदा द्रव्यमसदेव भवेत् PramāMī. 27.17 (on i. 1.32); अथर्ववेदस्तु … अत्यन्तविलक्षण एव PrasthāBhe. 6.16; उत्कृष्टतमः पुरुषस्तु अन्यः। अत्यन्तविलक्षणः आभ्याम् VīraMi. (Bhakti) 148.6.

**अत्यन्तविलक्षणत्व** (atyantavilakṣaṇa-tva) *n.* i the state of being totally different in nature अभिधेयव्यक्तेस्तत्राभावादत्यन्तविलक्षणत्वाच्च TantrVā. 274.6 (on i. 3.26); केवलं वस्तुशून्यं तु तत् (सादृश्यं) शाबलेयबाहुलेययोः स्वरूपेणात्यन्तविलक्षणत्वात् S'arka. 20.22; न चात्यन्तविलक्षणत्वेन शाखान्तरत्वोपपत्तिः BālaKrī. i. 18.15 (on 1.7); तदेवमत्यन्तविलक्षणत्वात् … न … एकोपनिपातः PañcPā. 62.3 (on i. 1.1); अत्यन्तविलक्षणत्वात् … सुखामृतं तत्सर्वथा प्रार्थनीयम् TattvPradī.(A.) 15.8 (on 1.13); न च तदस्ति महदादीनां परस्परमत्यन्तविलक्षणत्वात् PrakaVi. 342.26; भूतलस्य गगनेन सादृश्ये गजानां मेघानां च बिम्बप्रतिबिम्बभाव इत्यत्यन्तविलक्षणत्वात् CitraMī. 37.10; ज्ञानादत्यन्तविलक्षणार्थमपलप्य(v. l. अत्यन्तविलक्षणत्वमालम्ब्य) ज्ञानस्वीकारो न संभवति GuruCandr. i. 117.13; स्वाङ्गाकारदेवताया अग्न्यादेश्चात्यन्तविलक्षणत्वेन गौणसामर्थ्यस्याप्यभावात् MayūMāli. 653.15 (on x. 1.7) ii the state of being completely opposite न च संविद्विषयावभिन्नौ प्रत्यक्त्वाप्रत्यक्त्वरूपेण अनुवृत्तव्यावृत्तरूपेण चात्यन्तविलक्षणत्वात् VivaPraSaṁ. 92.6; चिदचिद्वस्तुनोरत्यन्तविलक्षणत्वात् BrahmSūBh.(S'rī.) ii. 22.1-2 (on ii. 1.15)

**अत्यन्तविलक्षणस्वभाव** (atyantavilakṣaṇa-svabhāva) *adj.* completely different in nature वस्तुमात्रं ह्यनुमेयादत्यन्तविलक्षणस्वभावमग्न्यादेरिव धूमादि VyaktiVi. 18.18.

**अत्यन्तविलक्षणाकार** (atyantavilakṣaṇākāra) *adj.* having totally dissimilar forms लोके च शरीरशब्दः … कृमिकीट° … °पशुप्रभृतिषु अत्यन्तविलक्षणाकारेषु द्रव्येष्वगौणः प्रयुज्यमानो दृश्यते BrahmSūBh.(Rā.) 413.1 (on ii. 1.9)

**अत्यन्तविलक्षणार्थ** (atyantavilakṣaṇārtha) *m.* extremely dissimilar object ज्ञानादत्यन्तविलक्षणार्थमपलप्य ज्ञानस्वीकारो न संभवति GuruCandr. i. 117.13.

**अत्यन्तविलज्जिता** (atyanta-vilajjitā) *adj.* (*f.*) extremely shy or bashful इति प्रियस्य वचनं श्रुत्वात्यन्तविलासिनी (v. l. °विलज्जिता) सहसा निजमास्थाय रूपं भेजे रतोत्सवम् BṛKathāMañ. ix. 1.21.

**अत्यन्तविलम्ब** (atyanta-vilamba) *m.* excessive delay (स्वामिनः) समागमस्यात्यन्तविलम्बे षष्ठो भागः। अतिविलम्बे तु दशमो भागः (नृपेण आदेयः) SmṛtiCan. iii. 313.4; यदि जातकर्मणः प्रागेव वैश्वानरेष्टिर्निरूप्येत तदा स्तनप्राशनस्यात्यन्तविलम्बात्पुत्रो विपद्येत NyāyMāVi. 252.25 (on iv. 3.18)

**अत्यन्तविलम्बित** (atyanta-vilambita) *adj.* exceedingly prolonged or slowed न कुर्वीत पदं दीर्घं न चात्यन्तविलम्बितम् YājñaS'i. 45; प्रोक्तः प्लुतोऽत्यन्तविलम्बितः (स्थायः) SaṁgiRa. ii. 185.4 (iii. 0.167)

**अत्यन्तविलय** (atyanta-vilaya) *m.* total dissolution मोक्षे तु चित्तस्यात्यन्तविलयात् संस्कारोऽपि न तिष्ठति YogSūVṛ. on 1.18.

**अत्यन्तविलासरूप** (atyantavilāsa-rūpa) *adj.* possessing extremely graceful form नृत्यन्तमत्यन्तविलासरूपं गोक्षीररूपं तरुणं त्रिनेत्रम् (शिवं समीक्ष्य) PadmP. iv. 104.16.

**अत्यन्तविलासिनी** (atyanta-vilāsinī) *adj.* (*f.*) given to excessive sportiveness इति प्रियस्य वचनं श्रुत्वात्यन्तविलासिनी। … भेजे रतोत्सवम् BṛKathāMañ. ix. 1.21.

**अत्यन्तविलुप्तदर्शन** (atyantavilupta-dars'ana) *adj.* completely disappearing from sight (रतिः) न विवेद तयोरतृप्तयोः (लोचनयोः) प्रियमत्यन्तविलुप्तदर्शनम् KumāSaṁ. 4.2.

**अत्यन्तविलोकनीय** (atyanta-vilokanīya) *adj.* quite worth beholding नृत्यन्तमत्यन्तविलोकनीयं कृष्णं मणिस्तम्भगतम् KṛṣṇaKa. 2.67; अपास्य वृन्दावनरासलास्यमुपास्यमत्यन्तविलोकनीयम् (कृष्णमुखम्) GopāKeCan. 43.14.

**अत्यन्तविवश** (atyanta-vivaśa) *adj.* utterly helpless तथापि मम भक्ता ये नात्यन्तविवशाः पुनः S'ivaP. vii(2). 13.59 (569B.13); राज्याभिषेकं संभूय तत्रत्या ब्राह्मणा ददुः। नृपमत्यन्तविवशम् RājTa.(Ka.) 7.1386.

**अत्यन्तविविक्त** (atyanta-vivikta) *adj.* completely different, quite separate or distinct अत्यन्तविविक्तयोर्धर्मधर्मिणोः मिथ्याज्ञाननिमित्तः … 'ममेदं' इति लोकव्यवहारः BrahmSūBh.(S'aṅ.) 2.3 (on i. 1.0); अत्यन्तविविक्तः स्वयंज्योतिरात्मा स्वप्ने भवतीत्यभिप्रायः BṛĀraUBh. 552.4 (on iv. 3.14); KāthUBh. 172.11 (on 6.5); प्रत्यगात्मनि खलु अत्यन्तविविक्ते Bhām. 25.3 (on i. 1.1); PrakaVi. 5.24; न च जीवब्रह्मैक्यवदात्मदेहैक्यमनुभूयमानमपि वास्तवं भवितुमर्हति। सत्यानृतरूपेण अत्यन्तविविक्तयोः वास्तवैक्यस्यायोगात् VivaPraSaṁ. 17.13; NyāySu.(Ja.) 52B.9 (on i. 1.1)

**अत्यन्तविविक्तत्व** (atyantavivikta-tva) *n.* the state of being totally different, absolute distinctness सर्वं पश्यतोऽध्यवस्यतश्चात्यन्तविविक्तत्वं भावयति TattvPradī.(A.) 42.2 (on 1.32); प्रपञ्चादत्यन्तविविक्तत्वेन विषयभूतः NyāySu. (Ja.) 15B.11 (on i. 1.1)

**अत्यन्तविवृद्धतापा** (atyantavivṛddha-tāpā) *adj.* (*f.*) 1 the heat in which (season) has tremendously increased कृशाशयात्यन्तविवृद्धतापया विपाण्डुरीभूतपयोधरश्रिया … तवारिनारी शरदा विडम्ब्यते Subhāṣi. 2487; 2 whose affliction has greatly increased, Subhāṣi. 2487.

**अत्यन्तविवेक** (atyanta-viveka) *m.* A extreme discrimination अत्यन्तविवेकचित्तचतुराः सन्तः प्रशस्ता जनाः। सेवध्वं चरितं पुराणपुरुषैरासेवितं सर्वतः PadmP.(Ra.) 1.102; B total or complete distinctness or separateness तौ चेद्धर्मिणौ अत्यन्तविवेकेन गृह्यमाणावसंभिन्नौ Bhām. 4.16 (on i. 1.1); यमलयोरत्यन्तविवेकं पश्यन्तोऽपि मात्रादयः … न परान्प्रतिपादयितुं क्षमन्ते NyāySu.(Ja.) 491B.6 (on iii. 2.1)

**अत्यन्तविवेकिन्** (atyantavivek-in) *adj.* highly discerning or discriminating धीराः अत्यन्तविवेकिनः युक्तात्मानो नित्यसमाहितस्वभावा सर्वमेव समस्तं शरीरपातकालेऽपि आविशन्ति MuṇḍUBh. 356.11 (on iii. 2.5)

**अत्यन्तविशद** (atyanta-viśada) *adj.* absolutely clear, pure or bright चकासामास … मुक्तालंकरणैरपि … अत्यन्तविशदैर्वृषभात्मजः TriṣaS'aPuC. i. 3.15; अत्यन्तविशदं वज्रं तारकाभं कवेः प्रियम् S'ukraNī. 4(2).44.

**अत्यन्तविशदता** (atyantaviśada-tā) *f.* absolute purity or transparency अत्यन्तविशदतया च सुरभीप्रश्नवेने(? स्रवेणे)व स्नपितैः (मुक्ताफलैः) TilaMañ. 121.13.

**अत्यन्तविशदत्व** (atyantaviśada-tva) *n.* absolute clarity, purity, or transparency अत्यन्तविशदत्वाद्विमलं सत् … पारमार्थिकसुखं भण्यते TātpaVṛ. 78.13 (on 1.59)

**अत्यन्तविशदस्वरूप** (atyantaviśada-svarūpa) *adj.* of absolutely clear nature स्वयंप्रकाशतयात्यन्तविशदस्वरूपे च वस्तुनि NyāySiA. 227.2.

**अत्यन्तविशाल** (atyanta-viśāla) *adj.* exceedingly broad or spacious अत्यन्तविशालेषु कपालेषु चतुर्षु पुरोडाशानां शतेष्ववस्थापितेषु NyāyMāvi. 660.5 (on xi. 4.12)

**अत्यन्तविशिष्ट** (atyanta-viśiṣṭa) *adj.* highly special, very particular स च दुष्प्रापः अत्यन्तविशिष्टकर्मज्ञानसाध्यत्वात् KāṭhUBh. 172.18 (on 6.5)

**अत्यन्तविशिष्टता** (atyantaviśiṣṭa-tā) *f.* very special status अथ यतेरत्यन्तविशिष्टतया श्राद्धनियोग उच्यते CaturCin. iii(1). 416.17.

**अत्यन्तविशीर्ण** (atyanta-viśīrṇa) *adj.* utterly decayed यच्चात्यन्तविशीर्णमुषितं कीटामयाद्याहतम् … एतद्धान्यमनुत्तमम् KalyāKā. 4.26.

**अत्यन्तविशुद्ध** ( atyanta-viśuddha ) *adj.* absolutely pure ( मन्दोदरी ) जातात्यन्तविशुद्धधर्मनिरता शुक्लैकवस्त्रावृता PadmP.(Ra.) 78. 94; आत्मानमेवात्यन्तविशुद्धं निरन्तरं पश्यतो न घृणानिमित्तमर्थान्तरमस्ति ĪśopBh. 12. 5 (*on* 6); KāṭhUBh. 173. 5 (*on* 6. 6); तदेतत् ... अत्यन्तविशुद्धप्रज्ञोपाधिसंबन्धेन सर्वज्ञम् AitUBh. 293. 2 (*on* 5. 3); BrĀraUBh. 247. 9 (*on* ii. 1. 19); AupaSūT. 21. 3; अत्यन्तविशुद्धाध्यवसायेन ... रसस्य बन्धात् JñānBiPra. 3. 27.

**अत्यन्तविशुद्धि** ( atyanta-viśuddhi ) *f.* absolute purity नोपलम्भकृदत्यन्तविशुद्धिर्व्योधसंभवः AbhisaAlaṅ. 3. 14.

**अत्यन्तविशेष** ( atyanta-viśeṣa ) *adj.* having extreme distinctiveness or speciality भावांश्चात्यन्तविशेषान् विनियोजयेदीश्वरे समर्पयेद्यः SvetāUBh. 223. 8 (*on* 6. 4); *m* absolute distinction अपहृतपाप्मत्वेन च जीवब्रह्मणोरत्यन्तविशेषात् VedāntPāSau. 53. 18 (*on* i. 2. 8)

**अत्यन्तविशेषस्थत्व** ( atyantaviśeṣastha-tva ) *n.* the state of dwelling in a very special condition सर्वान्यस्य केवलस्य ( पशोः ) ... अत्यन्तविशेषस्थत्वाद्बाधकत्वं भवेत् TantrVā. 1112. 26 (*on* iii. 6. 42)

**अत्यन्तविश्रान्त** ( atyanta-viśrānta ) *adj.* brought to a complete stand-still, completely absent अत्यन्तविश्रान्तमनुष्यसञ्चारतया दुरवतारास्तटप्रदेशाः KundMā. 1. 5 (9)

**अत्यन्तविश्लेष** ( atyanta-viśleṣa ) *m.* complete separation or detachment जीवप्रदेशकर्मप्रदेशानामत्यन्तविश्लेषो द्रव्यमोक्षः TātpaVṛ. 106. 15 (*on* 1. 84); मुक्तिः प्राणाक्षदेहादिभिरुपधिभिरत्यन्तविश्लेषरूपा TattvMu. 2. 73.

**अत्यन्तविश्वसनीयता** ( atyantaviśvasanīya-tā ) *f.* the state of being most trustworthy सकलेष्टदा ... परदेवतायाः बहुफलप्रदात्वेन अत्यन्तविश्वसनीयतया अतिशयप्रतिभानाच्चेत्यर्थः LalitāSaBh. 334. 8 (*on* 46)

**अत्यन्तविश्वस्तत्व** ( atyantaviśvasta-tva ) *n.* the state of being highly trustworthy वादिप्रतिवादिनोः सत्यसंधत्वेन परस्परमत्यन्तविश्वस्तत्वादियं मदीया भूरियं मदीयेति स्वस्वचित्तानुसंधानपुरःसरं वाद्यात्राभिर्विरचितेत्यर्थः Subodhi. 78. 22 (*on* 2. 150)

**अत्यन्तविश्वास** ( atyanta-viśvāsa ) *m.* too much trust or confidence तदा तौ छद्मना विश्वासमानीतौ ( v. l. एवमत्यन्तविश्वासात्संनिहितौ ) PañcT. 3. 52 (308. 7); NalaCam. 4. 16; विश्वस्तेऽत्यन्तविश्वासो न कर्तव्यः GaṇeP. i. 3. 31.

**अत्यन्तविश्वास्य** ( atyanta-viśvāsya ) *adj.* very much worthy of trust राक्षसः ... नन्दानुरक्तानां प्रकृतीनामत्यन्तविश्वास्यः MudrāRā. 3. 24 (72)

**अत्यन्तविषघ्नी** ( atyanta-viṣaghnī ) *adj.* ( *f.* ) very much ( capable of ) destroying poison, strong antidote for poison सा च भगवतः सोमस्य सर्वासामोषधीनामधिपतेः प्रभावादत्यन्तविषघ्नी ... बभूव HarṣaC. 332. 17.

**अत्यन्तविषण्णात्मन्** ( atyantaviṣaṇṇātman ) *adj.* very much depressed in mind ततोऽत्यन्तविषण्णात्मा म्रियमाणस्य पक्षिणः । कर्णजापं ददौ PadmP. (Ra.) 44. 111.

**अत्यन्तविषम** ( atyanta-viṣama ) *adj.* 1 very difficult or complicated लोकप्रसिद्धानामेव शब्दानामत्यन्तविषमधातुगणोणादिसूत्रादिभिः ... यथावस्थितानुवादमात्रमेव क्रियते TantrVā. 209. 16 (*on* i. 3. 18); तदपि ... अत्यन्तविषमैश्च भाष्यवार्त्तिकादिभिः विपरीतगौरवाश्रवणादसंबद्धम् MīmāKau. i. 116. 18 (*on* i. 3. 24); **2i** very much uneven पादाश्चात्यन्तविषमा दन्तौ चान्योन्यविषमौ ... स गजाधमः YuktiKa. 24. 18; **2ii** very much dissimilar अत्यन्तविषमाकारतया प्रतीयमानेषु चात्मसु ... पण्डिताः समदर्शिनः GītāBh.(Rā.) 305. 7 (*on* 5. 18); तत्र तत्रात्यन्तविषमाकारे वर्तमानमात्मानं समानाकारं पश्यति VedāSaṃ. 117. 43; **3** very bad or evil अपश्यत् ... पुत्रान् ... अत्यन्तविषमोदन्तान् YogVā. v. 45. 15.

**अत्यन्तविषमीभाव** ( atyantaviṣamī-bhāva ) *m.* extreme wretchedness अत्यन्तविषमीभावं पश्य श्रेणिक कर्मणाम् PadmP.(Ra.) 28. 264.

**अत्यन्तविषयबाध** ( atyanta-viṣayabādha ) *m.* complete annulment of the object न चात्यन्तविषयबाधोऽपि येन देशान्तरेष्वपि तदभावात् ज्ञानस्य निरालम्बनत्वं स्यात् NyāyKu. 66. 10.

**अत्यन्तविषयसेवा** ( atyanta-viṣayasevā ) *f.* over-indulgence in sensual pleasures क्लेशानामन्यतमेन समुदाचरताभिभवादत्यन्तविषयसेवया वा विच्छिद्य विच्छिद्य तेन तेनात्मना समुदाचरन्ति TattvVai. 60. 20 (*on* 2. 4)

**अत्यन्तविषयाभिलाषिता** ( atyantaviṣayābhilāṣi-tā ) *f.* the state of having too much desire for sensual pleasures अहो अत्यन्तविषयाभिलाषिता नाम देहभाजामन्धकरणी काचन पिशाचिका RasSa. 83 (1)

**अत्यन्तविषयासक्त** ( atyanta-viṣayāsakta ) *adj.* very much attached to sensual pleasures ( शत्रुम् ) अत्यन्तविषयासक्तं प्रजाद्रव्यापहारकम् ... पीडयेत् SukraNī. 4 (7). 250.

**अत्यन्तविषयासक्ति** ( atyanta-viṣayāsakti ) *f.* extreme attachment to sensual pleasures अत्यन्तविषयासक्तिः कार्पण्यम् ... इत्येतैश्च नराः पापैरुपपातकिनः स्मृताः SkandP. i(2). 41. 46; BhaviP. 620A. 11 (iv. 5. 29); PadmP. ii. 67. 64; SivaP. v. 6. 2 (412A. 3); जगाद भरतोऽत्यन्तविषयासक्तिनिःस्पृहः PadmP.(Ra.) 83. 75; सोऽत्यन्तविषयासक्तिकृतकौटिल्यचेष्टितः MahāP. 5. 130.

**अत्यन्तविषयासङ्ग** ( atyanta-viṣayāsaṅga ) *m.* great attachment to sensual pleasures अत्यन्तविषयासङ्गो विप्रयोगस्तनूनपात् । दौर्भाग्यं प्रेत्य हेतुभ्य एतेभ्यो हरयोऽभवन् PadmP.(Ra.) 20. 213; *adj.* very much attached to sensual pleasures अत्यन्तविषयासङ्गो यथा दीक्षासमाश्रितः PadmP.(Ra.) 33. 48.

**अत्यन्तविषयिन्** ( atyanta-viṣayin ) *adj.* extremely attached to sensual pleasures अहमत्यन्तविषयी मोहितस्तव मायया ViṣṇuP. v. 23. 46 = BrahmP. 196. 44.

**अत्यन्तविषादिन्** ( atyanta-viṣādin ) *adj.* very much depressed महाभागावेतौ सीतासंकथायामत्यन्तविषादिनौ KundaMā. 6. 14 (1)

**अत्यन्तविसंस्थुल** ( atyanta-visaṃsthula ) *adj.* very much dishevelled अच्छभल्लवदत्यन्तविसंस्थुलशिरोरुहम् ... तदालोक्य सद्यो विष्णुश्रियो वपुः TriṣaSaPuC. iv. 7. 31.

**अत्यन्तविसजातीयता** ( atyantavisajātīya-tā ) *f.* the state of being of an entirely different nature जीवस्य ... इत्यादिनात्यन्तविसजातीयतयावगतस्य सर्वज्ञसर्वसंकल्पब्रह्मस्वरूपतानुपपत्तिः सिद्धेत्यर्थः VedāntSā.(Rā.) 155. 1 (*on* ii. 1. 23)

**अत्यन्तविसदृश** ( atyanta-visadṛśa ) *adj.* extremely dissimilar, quite different इह तु शब्दार्थयोरत्यन्तविसदृशवपुषोराकारसमारोपकारणानवधारणात्कथमितररूपेणेतरस्यावभासः NyāyMañ. ii. 102. 23; अपि चालीकस्य समस्तसामर्थ्यविरहिणः अत्यन्तविसदृशस्य समर्थेन सल्लक्षणेन विधिरूपेण किं सादृश्यम् TātpaṬ.(Vā.) 488. 3 (*on* ii. 2. 65); अत्यन्तविसदृशः कैवर्तानामाकारेण दृश्यते TilaMañ. 126. 20; तत्र ... सौमिको विध्यन्तः प्रवर्तेत न यागद्वयोमत्वेन । अत्यन्तविसदृशत्वात् SāstrDī. 570. 19 (*on* viii. 4. 2); Kiraṇā. 265. 18.

**अत्यन्तविस्तर** ( atyanta-vistara ) *adj.* having great expanse निर्गमे देहि देवेश कुक्षेरत्यन्तविस्तरात् GaṇeP. ii. 11. 27.

**अत्यन्तविस्तीर्ण** ( atyanta-vistīrṇa ) *adj.* of great expanse तं तमत्यन्तविस्तीर्णं नानावस्त्रविभूषितम् । पुनर्वसौ गते चन्द्रे तत्र यायान्नराधिपः ViṣṇuDhaP. ii. 161. 3.

**अत्यन्तविस्तृति** ( atyanta-vistṛti ) *f.* great expansion ज्वालामालिनिकानित्या द्वारस्यात्यन्तविस्तृतिम् । वितताना BrahmāṇḍP. iii. 29. 43.

**अत्यन्तविस्फारित** (atyanta-visphārita) *adj.* opened very much wide देवस्य ... प्रस्तूयमाने गुणे श्रुतिकौतुकेन ... पन्नगपतिर्धत्ते सहस्रं दृशाम् ... अत्यन्तविस्फारितम् SaduktiKa. 189. 20.

**अत्यन्तविस्मय** ( atyanta-vismaya ) *m.* great wonder अत्यन्तविस्मयाविष्टा ववृधुः पुष्पवर्षगाः BrahmāṇḍP. iii. 26. 112; अहो इत्येतस्मिन्नर्थेऽत्यन्तविस्मयख्यापनार्थम् TaiUBh. 297. 16 (*on* 3. 10); संवादम् ... श्रुतवान् अस्मि ... अत्यन्तविस्मयकरम् GītāBh.(Śaṅ.) 569. 10 (*on* 18. 74); स्मरणानि चात्यन्तविस्मयकराणि पूर्वजातेः TilaMañ. 45. 1; UdaySuKa. 111. 6.

**अत्यन्तविस्मरणशील** ( atyantavismaraṇa-śīla ) *adj.* very much forgetful by nature अत्यन्तविस्मरणशीलस्य ... मेदप्रमापत्तेः MīmāKau. iii. 169. 19 (*on* ii. 2. 3)

**अत्यन्तविस्मित** ( atyanta-vismita ) *adj.* very much amazed नन्दगोपोऽपि जग्राह बालमत्यन्तविस्मितः ViṣṇuP. v. 6. 6 = BrahmP. 184. 27; अत्यन्तविस्मिता दैत्यकुमाराः BrahmāṇḍP. iii. 26. 109; जनः किमेतदित्याह केनेत्यत्यन्तविस्मितः BrahmP. 207. 28; PadmP. iv. 72. 34.

**अत्यन्तविस्मृत** ( atyanta-vismṛta ) *adj.* totally forgotten अत्यन्तविस्मृतो योऽर्थः ... येन स प्राज्ञ इति कीर्त्यते PramāVāBh. 83. 31; अत्यन्तविस्मृतं विश्वं मोक्ष इत्यभिधीयते YogVā. iii. 21. 11; iii. 13. 26; NemiNir. 3. 27.

**अत्यन्तविहीनत्व** ( atyantavihīna-tva ) *n.* the state of being completely devoid of न च तेषां क्षान्तिसहसुखां त्यागात् । अनर्थत्वप्रसङ्गः । तद्लाभस्यात्यन्तं हतत्वात् । तस्याद्याभस्यात्यन्तविहीनत्वात् Sphuṭā. 74. 26 (*on* 2. 40)

**अत्यन्तविह्वल** ( atyanta-vihvala ) *adj.* [ *f.*-ā ] very much distressed or afflicted वानराङ्कबलं भग्नं निन्युरत्यन्तविह्वलम् PadmP.(Ra.) 70. 63; 118. 61; ततो मृगुः ... प्राह भूपतिम् । अत्यन्तविह्वलो दुःखं वीक्ष्य तनूद्भवमात्मजम् GaṇeP. i. 9. 1; रतिरत्यन्तविह्वला । विललाप SivaP. ii(3). 19. 21 (144A. 2)

**अत्यन्तवीर्य** ( atyanta-vīrya ) *n.* great strength or virility कान्तिर्गात्राणां स्थैर्यमत्यन्तवीर्यं मर्त्यः प्राप्नोति स्त्रीषु नित्यं जितात्मा KalyāKā. 6. 21; *adj.* very strong रोगान्सर्वान्हन्तुमत्यन्तवीर्यान् योगान्वक्ष्यामि KalyāKā. 6. 41.

**अत्यन्तवृत्त** ( atyanta-vṛtta ) *adj.* quite past स्वरूपाविर्भावविवक्षायामपि नियोगविशेषादत्यन्तवृत्ते प्रतिबन्धे स्वरूपमात्राधीनस्य स्वरूपाविर्भावस्य ... अनित्यत्वमनुपपद्यते SatDū. 59. 8.

**अत्यन्तवृद्ध** (atyanta-vṛddha) *adj.* [*f.* -ā] A extremely old क्वचिदवलम्बितवेत्रयष्टयोऽत्यन्तवृद्धाः ··· प्रत्यदृश्यन्त दारुणा दावाग्नय: HarṣaC. 82.5; अलं प्रव्रज्यया ··· इयमत्यन्तवृद्धानां पूज्यते न तु नैष्ठिकी PadmP.(Ra.) 122.44; अत्यन्तबालमत्यन्तवृद्धं प्राप्तयोगप्रकर्षणं च वर्जयित्वा ManuBh. i. 186.15 (*on* 2.214); VīraMi.(Saṁskāra.) 470.3; B greatly increased, HarṣaC. 82.5; उत्तमाङ्गे गृहीतश्च शिरोत्यत्यन्तवृद्धया KathāSaSāg. xiii. 1.109.

**अत्यन्तवृद्धि** (atyanta-vṛddhi) *f.* I abundant growth ये वा समानजातीयपूर्वोजप्रवृत्तयः। तेऽत्यन्तवृद्धिधर्माण: संस्कारोत्कर्षभेदत: TattvSaṁ. 3414; II great prosperity तत्र कर्ता हस्तमात्रं खनित्वा तत्र पूरयेत्। अत्यन्तवृद्धिरधिके, हीने हानि:, समे समम् NāraS. 31.5; धर्मे बुद्धिर्भवति धरणीलाभमत्यन्तवृद्धिर्हानि: क्षीणां हिमकरसुते लग्नभावादिसंस्थे VasiS. 32.148.

**अत्यन्तवृष्टि** (atyanta-vṛṣṭi) *f.* excessive rain अत्यन्तवृष्ट्यनावृष्टी अजीर्णातिक्षुधाविव। प्रभावेनागदेनेव जगतोऽप्यपसारयन् TriṣaS'aPuC. i. 6.57.

**अत्यन्तवृष्य** (atyanta-vṛṣya) *adj.* immensely increasing the virile power (दुग्धम्) तदपि मधुरशीतं स्निग्धमत्यन्तवृष्यम् KalyāKā. 5.22.

**अत्यन्तवेदना** (atyanta-vedanā) *f.* excessive pain चतुर्थे पटलेऽत्यन्तवेदना ··· नयनविनाशश्च भवति Hastyāyur. 143.4 (1.18)

**अत्यन्तवेदबाह्य** (atyanta-vedabāhya) *adj.* completely out of tune with the Vedas शिष्टै: परिगृहीतस्य सांख्यतर्कस्यैषा गतिस्तत्र परमाण्वादिवादस्यात्यन्तवेदबाह्यस्य ··· कैव कथा Bhām. 316.15 (*on* ii. 1.12); सांख्यनिरासानन्तरभावित्वे पाशुपतनिरासस्य प्राप्तेऽपि सौगताईतमतनिरासानन्तरं तन्निरतिक्षेप: तस्यात्यन्तवेदबाह्यत्वज्ञापनाय कृत: S'rutaPra. ii. 313.29 (*on* ii. 2.35)

**अत्यन्तवैकल्य** (atyanta-vaikalya) *n.* utter weakness कश्चिदत्यन्तवैकल्यं नाटयन् भक्तिसंभवम्। निश्चेष्टस्तिष्ठति चिरं संप्राप्त: शवतामिव NarmaMā 3.79.

**अत्यन्तवैक्लव्य** (atyanta-vaiklavya) *n.* extreme weakness (अधैर्यम्) अल्पेऽपचयेऽत्यन्तवैक्लव्यम् ManvaMu. 463.19 (*on* 11.70)

**अत्यन्तवैदेशिकत्व** (atyantavaideśika-tva) *n.* the state of belonging to absolutely different places सन्तानैक्यादविरोध इति चेन्न ··· जीवब्रह्मणोरत्यन्तवैदेशिकत्वप्रसङ्गाच्च SatDū. 172.29.

**अत्यन्तवैधर्म्य** (atyanta-vaidharmya) *n.* great dissimilarity ज्योतिपोऽत्यन्तवैधर्म्यप्रसिद्ध्यर्थं विशेषणम्। 'आस्त' इत्यादि सुबहु श्रुत्योपन्यस्तमादरात् BṛĀraUBhVār. iv. 3.45.

**अत्यन्तवैयर्थ्य** (atyanta-vaiyarthya) *n.* utter futility ननु त्रिदोषदुष्टापि परिसंख्या गत्यन्तराभावादङ्गीकर्तव्या अन्यथा श्रोतव्यवाक्यस्यात्यन्तवैयर्थ्यप्रसङ्गात् S'ivārkaMaDī. i. 63.18 (*on* i. 1.1); तत्सर्वमर्थवादानां प्रयोजनमिति ··· नात्यन्तवैयर्थ्यम् S'ivārkaMaDī. ii. 395.26 (*on* iii. 4.24); दुर्बलस्यापि पाठस्यात्यन्तवैयर्थ्यप्रसङ्गेन चमसिनां भक्षे ··· होपादिविधिकल्पकत्वस्याङ्गीकारात् MīmāKau. iii(2). 298.6 (*on* ii. 2.28)

**अत्यन्तवैर** (atyanta-vaira) *n.* extreme enmity आर्यस्त्वं न: सत्यमत्यन्तवैरादारम्भस्ते हन्त सर्वोऽप्यनार्य: Ragh. 10.73.

**अत्यन्तवैरस्य** (atyanta-vairasya) *n.* extreme distaste बुद्ध्वाप्यत्यन्तवैरस्यं य: पदार्थेषु दुर्मति:। बध्नाति भावनां भूय: YogVā. v. 8.16.

**अत्यन्तवैराग्यवत्** (atyantavairāgya-va(n)t) *adj.* possessing extreme desirelessness अत्यन्तवैराग्यवत: समाधि: समाहितस्यैव दृढप्रबोध: ViveCū. 377.

**अत्यन्तवैरिन्** (atyanta-vairin) *m.* bitter enemy सुयोधनश्च दुष्टात्मा कर्णश्च सहसौबल:। जानन्तो विषमं कुर्युरस्मास्वत्यन्तवैरिण: MahāBhā. iii. 299.5; स तु तं विरथं कृत्वा सयत्रत्यन्तवैरिणम्। समाचिनोद्वाणगणै: MahāBhā. vii. 108.40; सुतसोमस्तु तं दृष्ट्वा पितुरत्यन्तवैरिणम्। शरैरनेकसाहस्रैश्छादयामास MahāBhā. viii. 18.18; vi. 97.9.

**अत्यन्तवैरूप्य** (atyanta-vairūpya) *n.* absolute dissimilarity तत्किमिदानीं संशयादिभिरिवात्यन्तवैरूप्यं वादेन जल्पवितण्डयो: TātpaṬ.(Vā.) 64.19 (*on* i. 1.1); न च हेमपिण्डपरिणामो भवति लूतातन्तु:, तत्कस्य हेतो:। अत्यन्तवैरूप्यात् Bhām. 183.19 (*on* i. 2.21)

**अत्यन्तवैलक्षण्य** (atyanta-vailakṣaṇya) *n.* absolute distinction विशिनष्टि ··· अविनश्यन्तमिति, भूतानां परमेश्वरस्य चात्यन्तवैलक्षण्यप्रदर्शनार्थम् GitāBh.(S'aṅ.) 401.8 (*on* 13.27); सोऽन्य: परस्मात् नित्याभिव्यक्तज्ञानस्वरूपादत्यन्तवैलक्षण्यात् द्वैत्यमिवौप्यात् BṛĀraUBh. 621.8 (*on* iv. 4.6); ये पुनरमी जाग्रत्प्रत्यया: ··· किमायातं तेषामत्यन्तवैलक्षण्यादित्यत आह TātpaṬ.(Vā.) 655.16 (*on* iv. 2.32); परम्परानध्यासहेतावत्यन्तवैलक्षण्ये दृष्टान्त: तम:प्रकाशवदिति Bhām. 436.20 (*on* ii. 2.26); शरीरशरीरिणो: तद्धर्माणां चात्यन्तवैलक्षण्यमप्युक्तम् S'rīBh. 499.8 (*on* ii. 2.31); छायातपनिर्देशो जडचेतनतत्त्वरूपात्यन्तवैलक्षण्याभावेऽपि अज्ञत्वसर्वज्ञत्वादिवैषम्यमात्रावलम्बनस्यात् S'ivārkaMaDī. i. 349.22 (*on* i. 2.11)

**अत्यन्तवैशिष्ट्य** (atyanta-vaiśiṣṭya) *n.* great speciality एवमत्यन्तवैशिष्ट्ययुक्तधर्मोपलक्षण: यस्य योग: ViṣṇuP. vi. 7.32.

**अत्यन्तवैषम्य** (atyanta-vaiṣamya) *n.* great difference नेदं रजतमिति ज्ञानोदया इदं रजतमिति धी: प्रतिबध्नातु इति चेन्न; सत्तया ज्ञायमानतया च ज्ञापकयोरत्यन्तवैषम्यात् S'rutaPra. i. 196.14 (*on* i. 1.1)

**अत्यन्तवैसादृश्य** (atyanta-vaisādṛśya) *n.* total dissimilarity अत्यन्तवैसादृश्यरहितकतिपयाध्यास: एकाविज्ञाने दृष्ट:, यथा सर्पभूदलनाम्बुधाराद्यध्यासो रज्जुमात्रे S'rutaPra. iA. 80.11 (*on* i. 1.1); कर्मान्तरविधानामवश्यंभावे तेषां दृष्टार्थत्वान्न त्रित्ववत्वमात्रेणानूयाजकार्यापन्नत्वं, यागहोमयोरत्यन्तवैसादृश्याच्च BhāṭṭDī. iii. 277.19 (*on* x. 4.5)

**अत्यन्तव्यतिरिक्त** (atyanta-vyatirikta) *adj.* [*f.* -ā] completely different अथात्यन्तव्यतिरिक्तावेवोत्पादनिरोधौ स्यातामश्वमहिषवत् BrahmSūBh. (S'aṅ.) 386.2 (*on* ii. 2.20); अत्यन्तव्यतिरिक्तज्योतिष्ट्वप्रसिद्धताप्रदर्शनार्थमनेकविशेषणम् BṛĀraUBh. 516.11 (*on* iv. 3.2); द्रव्यगुणकर्मणां सामान्यमात्रमाकृतिरभिप्रेता नात्यन्तव्यतिरिक्तेति TantrVā. 269.6 (*on* i. 3.26); 694.9 (*on* iii.1.12); 512.19 (*on* ii. 2.18); यद्वैशेषिकादिभिर्विशेषेभ्योऽत्यन्तव्यतिरिक्तं सामान्यमङ्गीकृतं तदपि नास्तीत्याह S'arka. 4.7; अत्यन्तव्यतिरिक्तसहकारिकारणाभावादनुपादानत्वं साध्यते, तत: क्षीरादिभिर्व्यभिचार: Bhām. 368.5 (*on* ii. 1.24); आत्मग्रहणेन चात्यन्तव्यतिरिक्तद्रव्यपर्यायवादिकाणादयौगाभ्युपगतविषयनिरास: PramāMī. 25.6 (*on* i. 1.30); चैतन्यं ज्ञानम्। आत्मन: क्षेत्रज्ञादन्यत् अत्यन्तव्यतिरिक्तम् SyādvāMañ. 8.78; LaS'abdoS'e. ii. 128.8.

**अत्यन्तव्यतिरिक्तत्व** (atyantavyatirikta-tva) *n.* the state of being totally different श्रुतौ करणं निष्पादनम्। अत्यन्तव्यतिरिक्तत्वं स्वधर्मत्वेनानन्तर्भूतत्वम् VedāntKa. 244.3 (*on* ii. 1.24)

**अत्यन्तव्यतिरेक** (atyanta-vyatireka) *m.* total difference येषामत्यन्तव्यतिरेकवन्तो धर्मास्तेषामेवायं नैयायिकादीनां दोष:, अस्माकं नैष दोष: HetuBiṬ. 43.6; न चात्यन्तव्यतिरेकात्कालगता संख्या यागसामानाधिकरण्यनिर्देशार्हा भवति TantrVā. 465.14 (*on* ii. 2.3); वषट्कारस्य च याज्यातोऽत्यन्तव्यतिरेकादङ्गाङ्गिभावाच्च ··· होता वषट्कर्तृं भक्षयेत् TantrVā. 1059.10 (*on* iii. 5.44); 378.5 (*on* ii. 1.5); TantrVā. 259.17 (*on* i. 3.26); अत्यन्तव्यतिरेके तु नैष धर्मविधिविषयो व्यवतिष्ठेत; अत्यन्तव्यतिरेकस्त्ववयवविमोकाप्रतिपत्त्यैव न बुध्यते S'arka. 101.18; 101.14.

**अत्यन्तव्यपोह** (atyanta-vyapoha) *m.* total exclusion मिथ्याज्ञानानामत्यन्तव्यपोहो विशुद्धि: SarvaDaSaṁ. 6.33.

**अत्यन्तव्यभिचार** (atyanta-vyabhicāra) *m.* great infidelity स्त्रिया अत्यन्तव्यभिचारे जाते मौण्ड्यमध:शयनं च साधयेत् SmṛtiCan. iv. 569.1.

**अत्यन्तव्यभिचारिणी** (atyanta-vyabhicāriṇī) *adj.* (*f.*) very unfaithful or unchaste यदा पुनरेता एवात्यन्तव्यभिचारिणीर्गच्छति तदापीदमेव प्रायश्चित्तयुगलम् ··· द्रष्टव्यम् Mitā. 446.24 (*on* 3.260); हारीतोऽपि अत्यन्तव्यभिचारिण्या भरणमावश्यकमित्याह SmṛtiCan. iv. 569.5.

**अत्यन्तव्यभिचारित** (atyanta-vyabhicārita) *adj.* [*f.* -ā] extremely adulterous यत्तु संवर्तवचनम् ··· तदत्यन्तव्यभिचारितब्राह्मणीविषयम् Mitā. 463.21 (*on* 3.265)

**अत्यन्तव्यभिचारिता** (atyanta-vyabhicāritā) *adj.* (*f.*) very unfaithful or unchaste अत्यन्तव्यभिचारितासु पुन: ··· शङ्खलिखितोदितं वेदितव्यम् (प्रायश्चित्तम्) Mitā. 475.12 (*on* 3.280)

**अत्यन्तव्यवधान** (atyanta-vyavadhāna) *n.* extreme intervention केषांचिदत्यन्तव्यवधानं केषांचिदाव्यवधानं स्यात् MīmāNyāPra. 240.35; अत्यन्तव्यवधानाभावेन त्यागानन्तरं प्रक्षेपात्प्राक् द्रवद्रव्यनाशस्यासंभावितत्वया ··· न पक्षाधिकरणविरोध: MayūMāli. 279.20 (*on* iii. 4.18)

**अत्यन्तव्यवसितमति** (atyantavyavasita-mati) *adj.* of a very firm mind यस्त्वत्यन्तव्यवसितमति: संजिघृक्षेत धर्मं, खड्गाङ्गादेरिव न किमलं तस्य यामार्धमात्रु: S'āntiVi. 34.

**अत्यन्तव्यवस्थापरिवर्तन** (atyanta-vyavasthāparivartana) *adj.* totally changing the order कर्म चाद्भुतमत्यन्तव्यवस्थापरिवर्तनम्। शक्नोति बाधितुं सर्वान् PadmP.(Ra.) 14.118.

**अत्यन्तव्यवहित** (atyanta-vyavahita) *adj.* [*f.* -ā] very much separated, very remote नन्वेतावतापि बुद्धिरेवानेन दृश्येत, न वृक्षरेतश्शब्दादयोऽत्यन्तव्यवहिता इत्यत आह TattvVai. 79.24 (*on* 2.17); व्यवहाराक्षमत्वं चात्यन्तव्यवहितदेशान्तरस्थे पत्रे दुर्लेख्ये Mitā. 193.26 (*on* 2.91); स एव करुण: एवकारेणात्यन्तव्यवहितां परम्परां पराकरोति AbhiBhā. i. 298.11 (*on* 9.40); अत्यन्तव्यवहिते चानुभवेऽर्थस्मरणमुपलभमानस्य तद्विनाभावात् तदकार्यताध्यवसायो वा भवेत् NyāyKu. 81.15; तदत्र सोदरो भ्रातातिशयेन प्रत्यासन्न:, तत्पौत्रस्त्वत्यन्तव्यवहित: Aparā. 745.5 (*on* 2.136); इष्टिभ्य: ··· ताभ्य: प्राचीनेऽत्यन्तव्यवहिते कालेऽभिपेचनीय: NyāyMāVi. 638.24 (*on* xi. 2.14; 273.5 (*on* v. 1.12); (प्रयोजकत्वं धात्वर्थ:) न, ··· कृष्यादीनामप्यत्यन्तव्यवहितानां विक्लृप्तिप्रयोजकत्वेन संग्रहादपात्। MīmāKau. iii(2). 16.19 (*on* ii. 1.5); किं चात्यन्तव्यवहितविषयचैतन्यनिष्ठानाम्

or little मेदस्यात्यल्पत्वोक्त्या तस्य भानमात्रं न तु तत्त्वतः सोऽस्तीति ध्वनितम् SetuBa. 189. 28.

**अत्यल्पदर्शिन्** (aty-alpadarśin) *adj.* very much short-sighted पापेन क्रूरेणात्यल्पदर्शिना । श्रुत्वा निहतमाचार्यमश्वत्थामा किमब्रवीत् MahāBhā. vii. 166. 15.

**अत्यल्पदेह** (atyalpa-deha) *adj.* having a very thin or small body स्पृशी( ? पृश्नि )स्त्वत्यल्पदेहे स्यात् ParyāSaRa. 2. 112.

**अत्यल्पद्युज्यका** (atyalpa-dyujyakā) *f.* the smallest diameter of the circle (in the sky) made by an asterism in its daily revolution कदम्बमे स्फुटक्रान्तिज्यात्यल्पद्युज्यकासमा । वस्तुभूतापि तद्रीत्या नायात्येवं स्वलान्तरे SiddhāTaVi. 255. 19.

**अत्यल्पधनसंपद्** (atyalpa-dhanasampad) *adj.* having the acquisition of very little wealth अत्यल्पधनसंपदान् ।...साध्वसं नियतं तेषाम् BṛNāraP. 4. 73.

**अत्यल्पनरक** (atyalpa-naraka) *m.* very small hell तेषामत्यल्पनरका जम्बूद्वीपसमा मताः VarāṅgaC. 5. 17.

**अत्यल्पनरभेद** (atyalpa-narabheda) *m.* very little difference in the altitudes अत्यल्पनरभेदो( ? दे )ऽपि छायाभेदो न लक्ष्यते SiddhāTaVi. 229. 21.

**अत्यल्पपक्ष्मन्** (atyalpa-pakṣman) *adj.* the opening of which has very thin and scanty eyelashes नेत्रं चात्यल्पपक्ष्मास्यन् SarvaSiSaṁ. 11. 22.

**अत्यल्पपण्य** (atyalpa-paṇya) *n.* very small commodity अत्यल्पपण्यदानप्रश्नप्रतिवचनजल्पने मूकः SamaMā. 8. 54.

**अत्यल्पपरितुष्ट** (atyalpa-parituṣṭa) *adj.* satisfied with very little विपश्चितः । अत्यल्पपरितुष्टस्य संतुष्टस्य धनेन किम् DarpDa. 2. 59.

**अत्यल्पपरिवार** (atyalpa-parivāra) *adj.* whose retinue is very small प्रत्युदयौ तमत्यल्पपरिवारं कुरूद्वहः PāṇḍaC. 11. 252.

**अत्यल्पप्रजा** (atyalpa-prajā) *f.* very little progeny अचेतनाया अत्यल्पप्रजासर्गकर॰ ... ॰चेतनविशेषरूपच्छागस्वभावख्यापनाय तद्रूपत्वकल्पनं विरुद्धमेव BrahmSūBh.(Rā.) 357. 11 (*on* i. 4. 10)

**अत्यल्पप्रपञ्च** (atyalpa-prapañca) *m.* elaboration of very few cases अन्यथा समन्वयसूत्रेणैवालम् । किमनेनात्यल्पप्रपञ्चेनेति NyāySu.(Ja.) 125A. 10 (*on* i. 1. 6)

**अत्यल्पप्रयोजन** (atyalpa-prayojana) *n.* very limited purpose अचेतनायाः ... ॰चेतनविशेषैकरूपात्यल्पप्रयोजनसाधन॰ ... ॰चेतनविशेषरूपच्छागस्वभावख्यापनाय तद्रूपत्वकल्पनं विरुद्धमेव BrahmSūBh.(Rā.) 357. 12 (*on* i. 4. 10)

**अत्यल्पफल** (atyalpa-phala) *n.* very little fruit अहो महदिदं वैचित्र्यं यदेकस्मिन्नेव कर्मणि वर्तमानाः संकल्पमात्रभेदेन केचिदत्यल्पफलभागिनः GitāBh. (Rā.) 475. 2 (*on* 9. 25); *adj.* having very little fruit यत्तु ज्ञानम् ... एकस्मिन् कर्तव्ये कर्मणि ... अत्यल्पफले कृत्स्नफलवत्सक्तमहैतुकम् GitāBh.(Rā.) 676. 24 (*on* 18. 22)

**अत्यल्पबल** (atyalpa-bala) *adj.* with a very small army अत्यल्पबला अपि दुर्गाश्रिता महाबलैररिभिर्न सहसा शक्यन्तेऽभिभवितुम् ManuBh. ii. 23. 18 (*on* 7. 73); बलीयसात्यल्पबलः शूरेण न च विग्रहम् । कुर्यात् SukraNi. 4(7). 251.

**अत्यल्पबलवत्** (atyalpabala-va(n)t) *adj.* possessing a very small army अत्यल्पबलवान् राजा स्थिरो द्वन्द्वबलाद् भवेत् YuktiKa. 17. 7.

**अत्यल्पबहुग्राहिणी** (atyalpabahu-grāhiṇī) *adj.* (*f.*) catching very little or more न वातिसंनिकृष्टां विप्रकृष्टामत्यल्पबहुग्राहिणीं वा सूचीं पातयेद् AṣṭāSaṁ. i. 187. 22 (1. 38)

**अत्यल्पबान्धव** (atyalpa-bāndhava) *adj.* having very few kinsmen अल्पमित्रो गृही हीनवाहात्यल्पबान्धवः । स्यात् SamarāSū. 48. 30.

**अत्यल्पबिन्दु** (atyalpa-bindu) *m.* very few dots अत्यल्पबिन्दुसहिता यदि खेचरेन्द्राः केमद्रुयोगफलदा विबलाश्च सर्वे JātaPā. 7. 71.

**अत्यल्पबीजत्व** (atyalpabīja-tva) *n.* the state of possessing very little seed (semen or sperm) पित्रोरत्यल्पबीजत्वादासेक्यः पुरुषो भवेत् SuśruS. iii. 2. 38.

**अत्यल्पबुद्धि** (atyalpa-buddhi) *adj.* having very little intellect तेनास्ति ... अत्यल्पबुद्धिना ... दूषितः Mṛcch. 10. 28 (174); (कलौ) आसनस्वान्द्रिजान्द्रष्ट्वा चलन्त्यत्यल्पबुद्धयः SkandP. i(2). 40. 227.

**अत्यल्पबोध** (atyalpa-bodha) *m.* very little cognition or consciousness स्वापे देहपरिवर्तनादिस्तु ... अत्यल्पबोधे सति भवति SrutaPra. iA. 104. 6 (*on* i. 1. 1)

**अत्यल्पबोधन** (atyalpa-bodhana) *n.* very little knowledge जन्मकाले महज्ज्ञानं शैशवेऽत्यल्पबोधनम् PadmP. iv. 110. 450.

**अत्यल्पभक्षण** (atyalpa-bhakṣaṇa) *n.* eating very little अन्यत्रात्यल्पहरणे कणानां नात्यल्प( ? भ )क्षणम् ManvaVi. 1427. 13 (*on* 11. 167)

**अत्यल्पभाषिन्** (atyalpabhāṣ-in) *adj.* speaking very little अव्यक्तजल्पी (*v. l.* अत्यल्पभाषी) मध्वक्षो मध्यमः पाण्डवो बली MahāBhā. v. 50. 20.

**अत्यल्पभेदत्व** (atyalpabheda-tva) *n.* the state of having very little difference होमयागयोरत्यल्पभेदत्वाद्धोमात्मके श्राद्धे अनास्थया वर्जेदित्युक्तिर्युक्तेति SmṛtiCan. v. 345. 13.

**अत्यल्पम्** (aty-alpam) *adv.* very briefly अत्यल्पमिदमुच्यते मयेनेति MahāBh. i. 390. 21 (*on* ii. 1. 37); NyāyMañ. i. 5. 8; ii. 54. 18.

**अत्यल्पमात्र** (atyalpa-mātra) *adj.* of very little or very small measure अत्यल्पमात्रमपि कर्म कृतं कदाचित् NyāyMañ. ii. 117. 13.

**अत्यल्पमूल्य** (atyalpa-mūlya) *adj.* of very small value, costing very little अत्यल्पमूल्यो गोमेदो नोन्मानं तु यतोऽईति SukraNi. 4(2). 81.

**अत्यल्पमेधस्** (atyalpa-medhas) *adj.* of very poor intellect येऽत्यल्पमेधसस्तेऽपि साधवोऽध्येतुमागमम् । उपचक्रमिरे PariPar. 12. 187; अत्यल्पमेधसः सर्वे तत्र सब्रह्मचारिणः PariPār. 12. 213.

**अत्यल्पयष्टिका** (atyalpa-yaṣṭikā) *f.* the very minimum height from the horizon फलोनलम्बमौर्वी स्यात्स्वक्षानेऽत्यल्पयष्टिका । स्वदिग्लम्बोनलम्बज्या स्थूला वात्यल्पयष्टिका SiddhāTaVi. 198. 21.

**अत्यल्पर्षभगान्धार** (atyalparṣabhagāndhāra) *adj.* with very rare *ṛṣabha* and *gāndhāra* (notes) अत्यल्पर्षभगान्धारं पन्यासं मधभूरि च SaṁgīRa. i. 276. 9 (1(8). 8)

**अत्यल्पलब्धा** (atyalpa-labdhā) *adj.* (*f.*) received in a very small quantity ततो दुर्भिक्षमाहात्म्याद्भिक्षयात्यल्पलब्धया । सारयित्वा गुरूणां तौ मुञ्जानौ PariPar. 8. 383.

**अत्यल्पविभव** (atyalpa-vibhava) *m.* very little wealth or fortune भट्टः ... अत्यल्पविभवपरिच्छिन्नतमात्मगोचरं भवान्तरमाकर्ण्य YaśasCam. ii. 309. 27.

**अत्यल्पविषयाधिप** (atyalpaviṣayādhipa) *m.* ruler of very small territory स मेने विधिरात्मानमत्यल्पविषयाधिपम् BrahmVaiP. iv. 33. 74.

**अत्यल्पवृष्टि** (atyalpa-vṛṣṭi) *f.* 1 too much or too little rain प्रावृष्यत्यल्पवृष्टिभ्यां कालेऽप्येवं कुतः सुखम् PadmP. ii. 66. 153; 2 very little rain दोषेषु पादवितयेषु भीतिरत्यल्पवृष्टिर्महती गदा च VasiSaṁ. 2. 9.

**अत्यल्पशिल्पिन्** (atyalpa-śilpin) *adj.* having very little skill तं नृशंसेन पापेन क्रूरेणात्यल्पदर्शिना (*v. l.* अत्यल्पशिल्पिना) । श्रुत्वा निहतमाचार्यम् MahāBhā. vii. 166. 15.

**अत्यल्पश्रम** (atyalpa-śrama) *adj.* exerting very little सोऽत्यल्पश्रम एव मण्डलयुतो गम्भीरवेदी पृथुर्मन्देभानुकृतिः बलीरितवपुः स्यात्सान्द्रपर्वा नृपः YaśasCam. i. 493. 3.

**अत्यल्पसत्त्व** (atyalpa-sattva) *n.* possessing very little strength का कथात्यल्पसत्त्वाश्रिभूतां विचारचारणे PrabhāC. 58. 4.

**अत्यल्पसाध्य** (atyalpa-sādhya) *n.* very negligible objective ददाह तां पुरीं चक्रं सकलामेव सत्वरम् । अक्षीणामर्षमत्यल्पसाध्यसाधननिस्पृहम् BrahmP. 207. 43.

**अत्यल्पसुख** (atyalpa-sukha) *n.* very little pleasure अन्यत्सुखदात्त्वात्क्रनिष्ठोऽयं स्मृतो बुधैः DeviBhāP. v. 16. 20.

**अत्यल्पसैनिक** (atyalpa-sainika) *adj.* having very few soldiers तस्मिन्नत्यल्पसैनिके । न तैः प्रहृतम् RājTa.(Ka.) 8. 252.

**अत्यल्पहार** (atyalpa-hāra) *m.* the smallest divisor अत्यल्पहारं प्रबन्धं विलिख्याधिकक्रमाच्चे सकला विलेख्याः SiddhāTaVi. 406. 2.

**अत्यल्पहृदय** (atyalpa-hṛdaya) *adj.* extremely small-minded गोप्यं रहस्यमणितमत्यल्पहृदयातिथि । अमृतं पारतमिव नाल्पसत्त्वैः सुदुर्धरम् RājTa.(Ka.) 7. 1690.

**अत्यल्पागस्** (atyalpāgas) *adj.* who has committed a very slight offence मानिनि ... अत्यल्पागसि ... कान्ते पदान्तानते कोऽयम् ... कोपस्त्वयाङ्गीकृतः PadyaVe. 487.

**अत्यल्पान्तर** (atyalpāntara) *n.* difference between the smallest visible forms of heavenly bodies (like the sun and the moon) नवदर्शनेंतांशैरल्पात्यल्पान्तरयोरन्तरं तदेष्टैर्नतांशैः किमिति लब्धमुदयस्थितान्तरं युतं स्वेष्टान्तरं स्याद् दृश्यादृश्यबिम्बयोस्तदर्धमिते मासे प्रस्तं न लक्ष्यं नृभिः SiddhāTaVi. (Sewa.) 35. 4.

**अत्यल्पायुस्** (atyalpāyus) *adj.* who has a short (span of) life अत्यल्पायुरयं बालो भावी श्रुतधरः कथम् PariPar. 5. 82.

**अत्यल्पौषधत्व** (atyalpauṣadha-tva) *n.* very little quantity of medicine (अ)त्यल्पौषधत्वात् (दुर्योगादियोगौ) KāśyaS. 156A. 34.

**अत्यवगाढा** (aty-avagāḍhā) *adj.* (*f.*) 1 very advanced or deve-

loped सरसीमिवात्यवगाढां दशां चतुर्थीमुपस्तजन्तम् ···अपश्यत् ( हस्तिनम् ) HarṣaC. 103. 3; **ii** very much dived into, HarṣaC. 103. 3.

**अत्यवधान** ( aty-avadhāna ) *n.* extreme attention क्रियादिपरामर्शे सभ्यादीनामत्यवधानेन व्यवहारोपविचारः ViraMi. ( Vyavahāra. ) 71. 27.

**अत्यवनत** ( aty-avanata ) *adj.* bent very low अत्यवनतशिरसोऽतिदूरगमनात् AṣṭāSam. i. 156. 14 (1. 29); वडिशोऽत्यवनतमुखः ··· ग्रहणे AṣṭāSam. i. 172. 7 (1. 34); i. 140. 1 (1. 27)

**अत्यवपीड** ( aty-avapīḍa ) *m.* excessive use of nasal ointment दीर्घे महाह्नोऽतसि च ज्ञेयमत्यवपीडवत् SuśruS. iv. 36. 10.

**अत्यवश्यम्** ( aty-avaśyam ) *adv.* quite certainly [DBHS]

**अत्यवसृज्** ( aty-avasṛj- ) VI. P. to let loose, to let go, to discharge कार्मुकमादाय ··· । तत्राथाय शरम् ··· आचार्यः ··· अभ्य ( v. l. त्य )वासृजत् MahāBhā. vii. 101. 61; स्वरश्मीनभ्य ( v. l. त्य ) वसृजेत् ··· कालवित् MahāBhā. xii. 88. 32; धेनुं सवत्सामभ्य ( v. l. त्य GORR. Ed.) वासृजत् ( भरतः ) Rāmā. ii. 1812* (74)

**अत्यवसृत्य** ( aty-avasṛtya ) *ger.* having receded अभ्य ( v. l. त्य ) वसृत्यैव संग्रामादुत्तरां दिशम् । अतिष्ठदाहवे द्रोणो विधूम इव पावकः MahāBhā. vii. 161. 21.

**अत्यवसेचन** ( aty-avasecana ) *n.* causing excessive bleeding वायुः ··· मूर्त्तुं चात्यवसेचनात् कुर्यात् CaraS. vi. 29. 40 (1941 Ed.)

**अत्यवस्थ** ( aty-avastha ) *adj.* transcendent of all ( three ) stages ( wakeful, dream and sleep ) वक्ष्यामि वत्स तव वाञ्छितमत्यवस्थम् SaṁkṣeSā. 1. 93 (i. 85. 15)

**अत्यवस्था** ( aty-avasthā ) *f.* extremely ( bad ) condition कुमारावत्यवस्थया ··· आगल्यारक्षान्तिके स्थितौ PārśvC. 2. 835.

**अत्यवहन** ( aty-avahana ) *n.* complete absence of carrying ( burden ) वाजिनामत्यवहनात् मुदोषाः संभवन्ति हि । कृशः ··· जायतेऽत्यन्तवाहनात् S'ukraNi. 4(7). 120.

**अत्यवहित** ( aty-avahita ) *adj.* very harmful ( वृक्कादि मांसात् ) जुगुप्सया वा विपाकेऽत्यवहितं भवेत् BhelaS. 128. 20 (6. 4)

**अत्यवहितत्व** ( atyavahita-tva ) *n.* great attentiveness नन्वत्यवहितत्वे सत्यपि न शृणोत्येव Bhāsk. i. 378. 19 (*on* i. 7. 10)

**अत्यवहेला** ( aty-avahelā ) *f.* great disregard वीरेणात्यवहेलया विरचितोपेक्षो जडः ···विश्वं तृणं मन्यते RājTa.(Jo.) 934.

**अत्यवाक्शिरस्** ( atyavāk-śiras ) *adj.* whose head is extremely bent down अत्यवाक्शिरसो नस्यम् ··· मस्तुलुङ्गेऽवतिष्ठति CaraS. viii. 9. 101 (1941 Ed.)

**अत्यवाक्शीर्ष** ( atyavāk-śīrṣa ) *adj.* with too low a head ( of the bed ) उच्चैरत्यवाक्शीर्षम् ··· ( शयनम् ) परित्यजेत् AṣṭāSam. ii. 164. 14 (5. 7)

**अत्यवि** ( áty-avi ) *adj.* [AltGr. II. i. 311] passing through the strainer ( of sheep's wool ) सोमः ··· अर्षति ··· अत्यविः । वायोः ··· निष्कृतम् ṚV. ix. 13. 1; SV. II. v (1). 3. 1; धीभिर्हिन्वन्ति ··· वने क्रीळन्तमत्यविम् ṚV. ix. 106. 11; SV. II. iii(1). 18. 2; ṚV. ix. 6. 5; ix. 45. 5.

**अत्यवे** ( aty-ave- ) II. P. to know excellently सर्वैरेभिः समायुक्तं सात्यवैदुक्तिकौशलम् PadmP.(Ra.) 24. 35; Kapphiṇā. 8. 10.

**अत्यवेक्ष्** ( aty-avekṣ- ) I. P. to look after well संकीर्णानि च धान्यानि नात्यवेक्षत् कुटुम्बिनी MahāBhā. xii. App. 22 (10)

**अत्यव्यवस्थितत्व** ( atyavyavasthita-tva ) *n.* the state of being disorderly or deranged पौराणिकस्य वंशानुपूर्वीमध्यगतजन्मक्रमस्यात्यव्यवस्थितत्वात् तदनुरोधेन गोत्रप्रवरनिर्णयस्याकिञ्चित्करत्वात् ViraMi.(Saṁskāra.) 658. 12.

**अत्यश्** ( aty-aś- ) IX. U. **i** to eat violating the prescribed order यदु अश्नाति देवानत्यश्नाति ··· यस्य हविर्न गृह्णन्ति तेनो देवान्नात्यश्नाति S'atBr. I. i. 1. 9; अनवक्लृप्तं यो मनुष्यान् वसतोऽत्यश्नाद् अनवक्लृप्तमिदु तदसद्यो देवान् वसतोऽत्यश्नात् S'atBr.(K.) II. i. 4. 1; XI. i. 7. 1; (K.) II. i. 1. 6; ( गान्धारी ) बबन्ध नेत्रे स्वे ··· नात्यश्नीयां पतिमहमिति MahāBhā. i. 103. 13; अहं पतीन् ··· नात्यश्ने MahāBhā. iii. 222. 36; ( पितृमातृगुरून् ) नैतानतिशयेज्जातु नात्यश्नीयात् MahāBhā. xii. 109. 10; iii. 197. 13; **ii** to eat too much cf. **अत्यश्नत्**.

**अत्यशक्त** ( aty-aśakta ) *adj.* very much weak अत्यशक्तविषयमेवाशिरस्करनानं गौणम् BālamBha. i. 344 (? 324). 4 (*on* 1. 100)

**अत्यशक्ति** ( aty-aśakti ) *f.* excessive weakness आलस्यान्मूर्खसंयोगाद्व्याद्रोगनिपीडनात् । अत्याशक्त्याच ( ? अत्यशक्त्या च ) मानाच्च षड्भिर्विद्या विनश्यति MāṇḍūS'i. 16. 15.

**अत्यशक्य** ( aty-aśakya ) *adj.* extremely impossible अत्यशक्ये तु निद्रादो पुनरेव समाचरेत् AnuVyā. 49A. 9 (*on* 3. 3)

**अत्यशन** ( aty-aśana ) *n.* immoderate eating अतिधीनन्नपानेन भृत्यानत्यशनेन ( संभोज्य ) श्लेष्मशीमः ) MahāBhā. iii. 182. 19 ( BhārBhāDi. अशनादधिकेन दानमानादिना ); कार्शितस्यात्यशनात् ··· श्लेष्मा ··· प्रकोपमापद्यते CaraS. ii. 3. 10 (1941 Ed.); न चैवात्यशनं कुर्यात् ManuSm. 2. 56; BhaviP. 12A. 9 (i. 3. 48); ViṣṇuSm. 99. 19; अत्यशनं ज्ञेयमतिमात्रोपयोगतः KāśyaS. 260B. 14; AṣṭāSam. i. 130. 4 (1. 25); BālaKrī. ii. 118. 25 (*on* 3. 250 (? 256)); औवैस्यात्यशनं विधाय शिखिनः ··· प्राप्तास्तलं पर्वताः BālRā. 7. 48; अत्यशनम् ··· अध्यशनमत्र संत्याज्यम् YaśasCam. i. 513. 3; अत्यशनानशने योगविरोधिनी GītāBh.(Rā.) 335. 7 (*on* 6. 16); Aparā. 221. 7 (*on* 1. 154); SmṛtiCan. i. 115. 1; ManvaVi. 486. 8 (*on* 4. 62); अतिपानं चात्यशनम् ··· विवर्जयेत् RasaCin. 3. 86 (37. 1); मूर्च्छाश्च पश्चात्यशनाद्विदग्धाहारधान्यजाः Hastyāyur. 48. 24 (1. 7); 86. 10 (1. 12); 19. 21 (1. 2); 79. 4 (1. 11); 94. 10 (1. 13); 139. 1 (1. 18); 251. 2 (2. 44); *m.* the twelfth day of the Karmamāsa द्वादशोऽत्यशनः ··· चतुर्दशोऽभिवेदमा ( ? इयः ) पञ्चदश उपशमः एतानि दिवसानां क्रमेण नामधेयानि comm. on Sūryaprajñapati 147B. 10 (*on* 48); *adj.* eating immoderately अत्यशने ··· कन्या न दीयते PadmP. v. 49. 97.

**अत्यशनत्याग** ( atyaśana-tyāga ) *m.* abstention from overeating प्रणीतात्यशनत्यागाद् ब्रह्मचर्यं तु भावयेत् YogS'ā. 1. 31.

**अत्यशनप्रतिषेध** ( atyaśana-pratiṣedha ) *m.* prohibition of overeating इष्टमूलतामत्यशनप्रतिषेधस्याचष्टे ManuBh. i. 105. 3 (2. 57)

**अत्यशित** ( aty-aśita ) *adj.* superceded in eating अत्यशिता ह वा एतस्याग्नयो भवन्ति BhārS'S. vii. 23. 12; **ii** who has overeaten नात्यशितः ··· व्यवायं गच्छेत् CaraS. i. 8. 22; ii. 3. 6; नानाशितो नात्यशितो वृष्याणां तर्पितस्त्वहात् ( नारीं ) व्रजेत् AṣṭāSam. i. 60. 9 (1. 6); ( जठरं ) पूर्णं स्थूलं व्याधितेस्यात्तुन्दिलेऽत्यशिते तथा SaṁgīRa. iv. 126. 9 (7. 356)

**अत्यशितृ** ( aty-aśitṛ ) *adj.* eating in excess अत्यशितुर्दुःखेनान्नपरिणामः NītiVā. 25. 47.

**अत्यशुचि** ( aty-aśuci ) *adj.* extremely impure अत्यशुचिः स देहः शुध्यते कथम् PadmP. ii. 66. 73.

**अत्यशुभा** ( aty-aśubhā ) *adj.* ( *f.* ) very inauspicious न चैवात्यशुभा पृष्ठमुखी शतपदी मता S'ukraNi. 4 (7). 106.

**अत्यश्नत्** ( aty-aśnat ) *adj.* overeating नात्यश्नतस्तु योगोऽस्ति BhagGi. 6. 16; अत्यश्नतोऽतिपिबतः ··· दोषा घोराः प्रकुप्यन्ति BhelaS. 39. 19 (1. 25); न अत्यश्नतः आत्मसंमितमन्नपरिमाणमतीत्य अश्नतः अत्यश्नतः न योगः अस्ति GītāBh. (S'aṅ.) 194. 1 (*on* 6. 16)

**अत्यश्यानदशाञ्चल** ( atyaśyāna-daśāñcala ) *adj.* with the fringes and hem ( of the garment ) being not dry ( i. e. too wet ) ददर्श सा ··· ऋषिसत्तमम् ··· ह्यत्यश्यानदशाञ्चले वसानं वल्कलयुगे SkandP. i(3). 18. 37.

**अत्यश्रुपात** ( aty-aśrupāta ) *m.* too much shedding of tears अत्यश्रुपातकलुषीकृतगण्डदेशा नैच्छद्दरिद्रगृहिणी रजनीविरामम् SaduktiKa. 309. 25.

**अत्यश्वयत्** ( aty-aśvayat ) *adj.* crossing with the help of a horse अतिक्रामति तु तेन यः । अत्यश्वयत् KośaKaTa. 2. 263.

**अत्यष्ट** ( aty-aṣṭa ) *adj.* nine ( *lit.* beyond eight ) अत्यष्टाश्चाभिमुखा ग्रहाः ( अभवन् ) DvyāśraKā. 1. 195.

**अत्यष्टन्** ( aty-aṣṭan ) *adj.* nine ( *lit.* beyond eight ) अत्यष्टानोऽत्र निधयः DvyāśraKā. 1. 195.

**अत्यष्टि** ( aty-aṣṭi ) *f.* [DEBRU. p. 641] name of a metre ततो अष्टपष्टिः अत्यष्टिः ṚPrā. 16. 54; तथा सप्तदशात्यष्टिः NāṭyaS'ā. 14. 50; छन्दसां नामानि ··· अष्टिः अत्यष्टिः Jānāśra. 1. 2; अत्यष्टिर्नामाष्टपञ्चाक्षरं छन्दः Jānāśra. 4. 82; JayaChand. 4. 4; ChandaSū. 41. 5 (4. 7); VṛttaRa. 73. 2 (1. 19); ह्यष्टिरत्यष्टिरेव च ··· एतासां छन्दसां संख्या ĪśānS'iPa. i. 1. 86; Mānaso. iv. 2. 220; अत्युक्ता ··· अत्यष्टि-धृति-अतिधृतयः एकैकवृद्धाः Chandonu. 2. 4; अत्यष्टौ यम्नस्भला: शिखरिणी चैः Chandonu. 2. 286; KalpaK. 78. 90; **ii** the number seventeen अत्यष्टौ च प्रतिनियमिता वर्णतः स्पष्टरूपा NāṭyaS'ā. 15. 109; अष्टयत्यष्टिधृत्यतिधृतिसंख्या वा दर्भाः ĪśānS'iPa. ii. 9. 11; अत्यष्टकुलमानान्ते ब्रह्मवाय्वन्तरालगे VāstuVi. 42. 2 (4. 19); अत्यष्टिभिस्त्र्यर्कनवेषुदस्राः GrahaGa. 41. 24 (8. 13); अत्यष्टिसंख्यैरिपुवर्गसंख्यैर्द्वैत्यैरथैतैः क्रमवर्धितैश्च TantrSa. 8. 116; अत्यष्टयष्टिवृषार्कगोशरदृशः खण्डानि ( मन्दफलानयने ) GrahaLā. 7. 10; S'ilpaRa. i. 5. 63; SiddhāTaVi. 108. 19; GaṇiNā. 32.

**अत्यष्टिगदित** ( atyaṣṭi-gadita ) *adj.* called Atyaṣṭi यदा लौ गश्चान्ते भवति चरणेऽत्यष्टिगदिते ( शिखरिणी ) NāṭyaS'ā. 15. 102.

**अत्यष्टिभागतस्** ( atyaṣṭibhāga-tas ) *adv.* by ( measuring ) seventeen parts तस्मान्मेढ्रस्य मूलान्तमूरू चात्यष्टिभागतः S'ilpaRa. ii. 13. 3.

**अत्यष्टिभागयुक्त** ( atyaṣṭibhāga-yukta ) *adj.* consisting of seventeen

degrees अत्यष्टिभागयुक्तेऽस्मिन् केतुसंज्ञोऽपरो विषः VasiS. 42.64.

**अत्यष्टिमात्रक** (atyaṣṭimātra-ka) *adj.* of the measure of seventeen (*aṅgulas*) विकारांशैर्यन तस्मादधश्चात्यष्टिमात्रकैः ĪśānŚiPa. ii. 41.118.

**अत्यष्टिवर्ण** (atyaṣṭi-varṇa) *adj.* of seventeen syllables ठद्यं मनुः … अत्यष्टिवर्णस्तारादिरयं भूहृदयाह्वयः ĪśānŚiPa. i. 26.67.

**अत्यष्टिसंज्ञ** (atyaṣṭi-saṃjña) *adj.* which is termed Atyaṣṭi (i. e. a kind of metre consisting of 17 syllables) अत्यष्टिसंज्ञं छन्दश्च तथा सप्तदशाक्षरम् ViṣṇuDhaP. iii. 3.5.

**अत्यष्टिसंज्ञक** (atyaṣṭisaṃjña-ka) *adj.* which is termed Atyaṣṭi (i. e. metre Śikhariṇī) छन्दस्यत्यष्टिसंज्ञके । वृत्तभेदे शिखरिणी NānārthāSaṃ. ii. 207. 1836.

**अत्यष्टिहस्त** (atyaṣṭi-hasta) *m.* (measure of) seventeen cubits अत्यष्टिहस्तादारभ्य आ त्रिषष्टिकराततात् । छन्दानि पञ्च भौमादि भवन्त्याकंतलादिह ĪśānŚiPa. ii. 30.14.

**अत्यष्ट्यंश** (atyaṣṭy-aṃśa) *adj.* which consists of seventeen parts अत्यष्ट्यंशे तु लिङ्गामे भागं त्रेधा विभज्य तु ŚilpaRa. ii. 3.35; *m.* seventeen parts जङ्घादैर्घ्यं च तत्तुल्यमत्यष्ट्यंशैस्तलायतिः ĪśānŚiPa. ii. 42.30.

[1]**अत्यस्** (aty-as-) II. P. to excel, to surpass सेदुग्निरग्नीरँत्यस्त्वन्यान् RV. vii. 1.14; श्रिया समानानति सर्वान्स्याम AV. xi. 1.12.

[2]**अत्यस्** (aty-as-) IV. P. i to throw beyond यद् अत्यस्येद् अस्मिन् लोके प्रतितिष्ठेद् अव स्वर्गाल्लोकाच्छिद्येत JaimiBr. 1.86; ii to place over उपर्युपर्यक्षं पवित्रमत्यस्यति JaimiŚS. 9.

**अत्यसंस्थितात्मन्** (aty-asaṃsthitātman) *adj.* whose mind is extremely unsteady or wavering वन्धुवियुक्तोऽत्यसंस्थितात्मा च … मकरे बुधे पुरुषः Sārā. 26.20.

**अत्यसदृश** (aty-asadṛśa) *adj.* highly improper, very unbecoming or unbefitting तत् प्रसीद विश्वत न खेदं दूत्यमत्यसदृशं हि ममेदम् NaiṣC. 5.115.

**अत्यसद्भाव** (aty-asadbhāva) *m.* total or absolute negation अत्यसद्भावमिवात्मनः प्रतिपद्य निःसङ्गभावमव्रजम् UdaySuKa. 70.28.

**अत्यसन** (aty-asana) *n.* dropping or passing over (so as to intervene in the main action) अत्यसनेन तर्पणेन च गवां पानक्रिया व्यवधीयते KāśiVṛ. *on* P. iii. 4.57 = Prasā. ii. 697.12 = SiddhāKau. 584B. 23.

**अत्यसंतुष्ट** (aty-asantuṣṭa) *adj.* completely dissatisfied सहिष्णुरत्यसन्तुष्टः शीघ्रगोऽदितिधिष्ण्यजः NāraS. 52.7.

**अत्यसम** (aty-asama) *adj.* very uneven, very rough [MW]

**अत्यसंबद्ध** (aty-asambaddha) *adj.* very incongruous, absolutely unconnected तदत्यसंबद्धम् । न ह्याततायिहनने दोषः कस्यापि संमतः ViraMi. (Vyavahāra.) 20.27.

**अत्यसंबद्धप्रलापिन्** (atyasambaddha-pralāpin) *adj.* who speaks inconsiderately and extremely incoherently (सः) अवोचदत्यसंबद्धप्रलापी कल्पकद्विजः PariPar. 7 133.

**अत्यसह्य** (aty-asahya) *adj.* extremely unbearable ततो महामेघमहीध्राभं प्रभिन्नमत्यङ्कुशमप्रसह्यम् (v. l. अत्यसह्यम्) Rāmā. ii. 305*(16)

**अत्यसार** (aty-asāra) *adj.* absolutely worthless or insubstantial तदेतेनात्यसारेण सुकृतं यदुपार्ज्यते । तदेव सारं संसारे कृतबुद्धिभिरुच्यते KathāSaSāg. xii. 27.107.

**अत्यसित** (aty-asita) *adj.* very dark असित (v. l. अत्यरसित ? अत्यसित *nt*) धवलरक्तत्रिभागभासुरः DaśKuC. 110.20.

**अत्यसिद्ध** (aty-asiddha) *adj.* totally not established येनैव च प्रकारेणात्यसिद्धमनुमीयते । तेनैव शशशृङ्गादेः शक्यमस्तित्वकल्पनम् AnuVyā. 25B. 5 (*on* 2.2); अत्यसिद्धमित्यनेनागमानादरं दर्शयति NyāySu.(Ja.) 353A. 10 (*on* ii. 2.6)

**अत्यसूयक** (aty-asūyaka) *adj.* excessively jealous श्रेणिकस्य पुरं प्राप कोऽपि देवोऽत्यसूयकः BṛKathāK. 9.6.

**अत्यसूया** (aty-asūyā) *f.* excessive jealousy सरोषमोघौ निर्मुज्य पश्यन्त्येवात्यसूयया SkandP. i(2). 21.139.

**अत्यसृक्क्षय** (aty-asṛkkṣaya) *m.* excessive loss of blood वेगसंधारणाद्रौक्ष्याद् व्यायामादत्यसृक्क्षयात् ।… ज्वरः संजायते नार्याः KāśyaS. 307B. 8.

**अत्यस्त** (aty-asta) *adj.* casting beyond, overcoming द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः P. ii. 1.24; इष्टच्छितातीतपतितगतात्यस्तैः JaineVyā. i. 3.21; द्वितीया श्रितातीतपतितगतात्यस्तगमिगामिबुभुक्ष्वादिभिः SaraKaṇṭhā.(Gr.) iii. 2.34; प्रास्तं प्रत्यस्तमत्यस्तं सहसा निम्नतोऽपि च ।… सहसा परिणीतस्य दन्तिनः Hastyāyur. 342.22 (2.72); तरङ्गानत्यस्तः तरङ्गात्यस्तः तुहिनात्यस्तः KāśiVṛ. *on* P. ii. 1.24.

**अत्यस्तग** (atyastaga) *adj.* 1 dead, departed रक्तवक्त्रममलद्युतिसंध्या । भासते रविमनुव्रजमानात्यस्तगं पतिमतीव सतीव PadyaVe. 559; ii completely set, PadyaVe. 559.

**अत्यस्ति** (aty-asti) *adj.* beyond existence उपसर्जने मा भूत् ।— अत्यस्तिः JaineVyā. 17.23 (*on* i. 1.74)

**अत्यस्तिका** (aty-astikā) *f.* a certain posture, presumably of the hands [DBHS]

**अत्यस्त्र** (aty-astra) *n.* absence of occasion for weapons दुःसुराष्ट्रम् — विधायिपु । तेष्वत्यस्त्रं ब्रुवन्तोऽनुद्विपं जग्मुर्द्विपद्रुहाः DvyāśraKā. 5.40 (comm. शस्त्राणां ग्रहणे प्रस्तावाभावं ब्रुवन्तः)

**अत्यस्थि** (aty-asthi) *adj.* beyond (i. e. without) bones, boneless अत्यस्था KātanVṛ. *on* ii. 2.13.

**अत्यस्मद्** (aty-asmad) *adj.* [the forms and meanings of this adjectival form of the 1 per. pronoun are exactly parallel to those of **अतियुष्मद्** which should be referred to for them and also for references to grammatical works. Here only the forms are listed in the order in which the forms of *atiyuṣmad* are given. I. Singular number of the subordinate referent; Nom. sg. अत्यहम् Acc. sg. अतिमाम् Inst. sg. अतिमया Dat. sg. अतिमह्यम् Abl. sg. अतिमत् Gen. sg. अतिमम Loc. sg. अतिमयि Nom. du. अतिमाम् Acc. du. अतिमाम् Inst. du. अतिमाभ्याम् Dat. du. अतिमाभ्याम् Abl. du. अतिमाभ्याम् Gen. du. अतिमयोः Loc. du. अतिमयोः Nom. pl. अतिवयम् Acc. pl. अतिमान् Inst. pl. अतिमाभिः Dat. pl. अतिमभ्यम् Abl. pl. अतिमत् Gen. pl. अतिमाकम्, अतिमयाम् Loc. pl. अतिमासु II. Dual number of the subordinate referent; Nom. sg. अत्यहम् Acc. sg. अत्यावाम् Inst. sg. अत्यावया Dat. sg. अतिमह्यम् Abl. sg. अत्यावत् Gen. sg. अतिमम Loc. sg. अत्यावयि Nom. du. अत्यावाम् Acc. du. अत्यावाम् Inst. du. अत्यावाभ्याम् Dat. du. अत्यावाभ्याम् Abl. du. अत्यावाभ्याम् Gen. du. अत्यावयोः Loc. du. अत्यावयोः Nom. pl. अतिवयम् Acc. pl. अत्यावान् Inst. pl. अत्यावाभिः Dat. pl. अत्यावभ्यम् Abl. pl. अत्यावत् Gen. pl. अत्यावाकम्, अत्यावयाम् Loc. pl. अत्यावासु; III. Plural number of the subordinate referent; Nom. sg. अत्यहम् Acc. sg. अत्यस्माम् Inst. sg. अत्यस्मया Dat. sg. अतिमह्यम् Abl. sg. अत्यस्मद् Gen. sg. अतिमम Loc. sg. अत्यस्मयि Nom. du. अत्यस्माम् Acc. du. अत्यस्माम् Inst. du. अत्यस्माभ्याम् Dat. du. अत्यस्माभ्याम् Abl. du. अत्यस्माभ्याम् Gen. du. अत्यस्मयोः Loc. du. अत्यस्मयोः Nom. pl. अतिवयम् Acc. pl. अत्यस्मान् Inst. pl. अत्यस्माभिः Dat. pl. अत्यस्मभ्यम् Abl. pl. अत्यस्मद् Gen. pl. अत्यस्माकम्, अत्यस्मयाम् Loc. pl. अत्यस्मासु ]

**अत्यस्य** (atyas-ya) *ger.* A having driven out or turned out एवं तं दूतमत्यस्य दूरं वाक्यमपास्य सः ।… स्थितः कर्तव्यवस्तुनि PadmP.(Ra.) 108.22; Bi having gone over or crossed (distance) कालेषु इति किम् । योजनमत्यस्य गाः पाययति KāśiVṛ. *on* iii. 4.57; Bii having passed (time) (तृष्यस्तोः क्रियान्तरे काले) क्रियान्तर इति किम् । अहरत्यस्य गतः । अत्रास्यतिर्न क्रियान्तरे वर्तते किन्तु गतावेव JaineVyā. 142.24 (*on* ii. 4.42); C having discharged कृत्स्नमहरिपून्त्यस्य क्षिप्त्वा गत इत्यर्थः PadMañ. *on* KāśiVṛ. *on* P. iii. 4.57.

**अत्यस्यत्** (aty-asyat) *adj.* attacking, assailing बहुभिश्चैकमत्यस्यन्नेकेन च बहूञ्जनान् । विनियोक्ष्याम्यहं बाणान् नृवाजिगजमर्मसु Rāmā. ii. 20.31.

**अत्यहंकर्तृकर्मा** (atyahaṅkartṛ-karmā) *adj.* (*f.*) 1 whose object is exclusively ego as the subject अनेन गुणलेशेन ह्यत्यहंकर्तृकर्मया । लक्ष्यतेऽसावहंवृत्त्या NaiṣkaSi. 166.4 (comm. अतिशयेनाहंकर्तैव कर्म विषयो यस्याः); 2 (aty-ahaṅkartṛkarmā) transcending the ego as the subject and the object, NaiṣkaSi. 166.4 (comm. अहंकर्तारं प्रमातारं तत्कर्म च देहद्यादिकर्मातीत्य या वर्तते)

**अत्यहंकारदूषित** (atyahaṅkāra-dūṣita) *adj.* defiled by excessive egotism यदा यदा ममाज्ञानमत्यहंकारदूषितम् । तदा तदापनेतव्यं त्वयैव परमेश्वर LiṅgaP. i. 96.96.

**अत्यहंकृत** (atyaham-kṛta) *adj.* associated with great egotism तथाख्यातैः पुरावृत्तैर्यो मे नात्यहंकृतैः PrabhāC. 130.6.

**अत्यहस्कर** (aty-ahaskara) *adj.* excelling the sun निकरोऽभूत् पुमर्थेषु तेजसा सोऽत्यहस्करः DvyāśraKā. 11.59.

**अत्यहस्करतेजस्क** (atyahaskaratejas-ka) *adj.* surpassing solar effulgence or radiance अत्यहस्करतेजस्कः प्रतापविजितानलः । किंचिद्विज्ञप्तुकामाः स्मः SkandP. iv. 43.85.

**अत्यहःस्वप्न** (aty-ahassvapna) *m.* excessive sleep by day अत्यहःस्वप्नशीताम्बुश्लेष्मिकस्तन्यसेविनः । शिशोः AṣṭāSaṃ. ii. 182.4 (6.2)

**अत्यहित** (aty-ahita) *n.* greatest harm (स दैत्यः) प्रबुध्याहारकाले तु कुर्यादत्यहितं तव KathāSaSāg. xvi. 2.45; स एव निधनं गच्छेदिच्छेदत्यहितं

सताम् PāṇḍaC. 2. 216.

**अत्यहृद्य** ( aty-ahṛdya ) *adj.* most repulsive or unsavoury भवति जुगुप्साप्रकृतिर्बीभत्सः सा तु दर्शनाच्छ्रवणात् । संकीर्तनात्तथेन्द्रियविषयाणामत्यहृद्यानाम् Kāvyālaṅ.(Ru.) 15. 5.

**अत्यह्न** ( aty-ahna ) *adj.* exceeding a day अहरतिक्रान्तः अत्यह्नः KāśiVr. *on* P. v. 4. 88; MugdhaBo. 6. 50 (59. 15); SiddhāKau. 185A. 9; PrakriKau. i. 554. 1.

**अत्यह्नेन्दुमुखी** ( atyahnendu-mukhī ) *adj.* (*f.*) whose face is (beautiful) like the moon beyond the day-time (i. e. at night) ( गृहम् ) तयात्यह्नेन्दुमुख्या स पूर्वाह्णार्कप्रभोऽविशत् DvyāśraKā. 19. 132.

**अत्या** ( atyā ) *f.* mare (Grass.) तिस्रो मुहीरुपरास्तस्थुरत्याः ṚV. iii. 56. 2 [Geld. suggests *áty ā*]

**अत्याकरण** ( aty-ākaraṇa ) *n.* carrying away दक्षिणानामत्याकरण इति । सूत्रं शालीके: BaudhS'S. iii. 108. 3.

**अत्याकरालगोज्वाल** ( atyākarālagojvāla ) *m.* name of a tribe अत्याकरालगोज्वाला हीनाना वनपातकाः ।··· ते पिबन्ति महाभागाः प्रथमां तु महानदीम् VāyuP. i. 44. 12.

**अत्याकर्षण** ( aty-ākarṣaṇa ) *n.* excessive pulling or dragging अत्याकर्षणखिन्नाङ्गवाद्यकैर्युखफूत्कृतैः । हतौजसोऽतिखिन्नाश्च दैत्या निङ्गालवद्गसुः SkandP. ii(9). 11. 31.

[1]**अत्याकार** ( atyā-kāra ) *m.* utterance of the expression *atyā* (*ati-ā!*) (to show contempt, insult, blame etc.) गोत्रचरणाच्छ्लाघात्याकारतदवेतेषु P. v. 1. 134; अत्याकारः पराधिक्षेपः KāśiVr. *on* v. 1. 134; वृद्धचरणाच्छ्लाघात्याकारावेते JaineVyā. iii. 4. 124; S'ākaṭaVyā. iii. 3. 21; अत्याकारः परिभवः AbhidhāRaMā. 4. 19 = Vaija. 97. 171; आक्षेपोऽत्याकारः TrikāS'e. iii. 2. 29; अत्याकारो निकारश्च AbhidhāCin. 442; SiddhaHe. vii. 1. 75; श्लाघात्याकारौ गार्गिकाकाठिकाम्यां माषेतामात्यः DvyāśraKā. 18. 16; अत्याकारस्त्वधिक्षेपे परे पुनः अवज्ञायाम् NānārthāSam. iii. 27. 20–21; पराभवः ··· निवेदितः । अत्याकारनिराकारौ ParaNā. 188; अत्याकारोऽपि धिक्कारः KośaKaTa. 1. 1988.

[2]**अत्याकार** ( aty-ākāra ) *adj.* having very large form or body अत्याकारः ··· पुनरत्याकृतिनि NānārthāSam. iii. 27. 21.

**अत्याकीर्णजनता** ( atyākīrṇajana-tā ) *f.* the state of having overcrowded people अयं हि तावदत्याकीर्णजनतया प्रकीर्णरत्नीचिविलय इव सलिलनिधिः ··· कुसुमपुरराजमार्गः DhūrtaViSam. 6. 17.

**अत्याकुल** ( aty-ākula ) *adj.* [*f.* –ā] I greately confused or bewildered or confounded संशोपिते संयति मेघनादमहानदे ···। तदाश्रयैस्तत्पुरवासिलोकैरत्याकुलैर्मीनकुलायितं तैः RāmC. (App. 2) 39. 71; पुमानिति ···। विवेकरहिताशयः ··· न वेत्ति गतमप्यहो जगति कालमत्याकुलः SubhāRaSam. 256; अत्याकुला बभूवुस्ते वीराः परमवैरिणः PadmP. iv. 33. 4; इतश्च कौलिको मुक्तसुरतारम्भोऽत्याकुलः स्वमनसा पर्यालोचितवान् Pañcā. 54. 20; सर्वत्रालोकयामासात्याकुलः प्रेष्य पूरुषान् PārśvC. 3. 523; 6. 587; अत्याकुलेन राज्ञा तारादेवी स्मृता PurāPraSam. 87. 27; II greatly disturbed or disordered तस्मिन्नत्याकुले युद्धे दारुणे लोमहर्षणे MahāBhā. vi. App. I. 4(96); युगाख्यासुरसंपूर्णं ह्यासीदत्याकुलं जगत् MatsyaP. 47. 37; एवमत्याकुले युद्धे सास्फोटभयसंकुले YogVā. iii. 38. 1; किं नामाद्भुतमत्र कानन्तरोरत्याकुलात् पक्षिभिर्यन्नेत्रगलत्प्रतापनिहतात्यक्तं फलं भ्रश्यति SubhāRaSam. 294 (Schmidt); अत्याकुलां हरिबलैरवलोक्य लङ्काम् RāmāCam. 6. 32.

**अत्याकुलत्व** ( atyākula-tva ) *n.* the state of being greatly confused or agitated ( पिङ्गलायाः ) अत्याकुलत्वं दिशिकारशब्दे कुचाकुचेत्येवमुदाहृते वा BṛSam. 88. 45; दहतु दहतु घोरः शङ्करं कालकूटो न हि न हि तदपि स्यादित्थमत्याकुलत्वम् SamudraMa. 3. 8; अत्याकुलत्वादमयार्थिनस्ते रामानुतो रात्रिचरा इवासन् Raghunā. 7. 65.

**अत्याकुलम्** ( aty-ākulam ) *adv.* in a very confused manner, very agitatedly अत्याकुलं कथयसि । न शुद्ध्यति मेऽन्तरात्मा Mṛcch. 8. 37 (27); अत्याकुलं भ्रमद्विर्वातोद्भ्रामो भवति काकैः BṛSam. 95. 10.

**अत्याकुलमति** ( atyākula-mati ) *adj.* with an extremely agitated mind इत्थमत्याकुलमतिश्चिन्तयन्नेव बालकः । अवाप परमां विद्याम् PadmP. iv. 72. 102.

**अत्याकुलमानस** (atyākula-mānasa) *adj.* with an extremely agitated mind जगद्गुरो । परित्रायस्व पद्माभ मामत्याकुलमानसम् PadmP.(Ra.) 123. 71.

**अत्याकुलित** ( aty-ākulita ) *adj.* greatly confused or perplexed ततः पूर्वयात्याकुलितमूढया तत्पतिरेव समानीतः S'ukSa. 37. 17 [Lassen, Anthologia Sanscritica, 1815 Ed.]; ततोऽत्याकुलितश्चित्ते चिन्तयामास राजसुः PārśvC. 7. 141.

**अत्याकृ** ( atyā-kṛ- ) viii. ā. to censure, to insult गार्गिकयात्याकुरुते SiddhāKau. 293A. 2.

**अत्याकृति** ( aty-ākṛti ) *adj.* having a large form or body अत्याकारः··· त्रिषु पुनरत्याकृतिनि NānārthāSam. iii. 27. 21.

**अत्याकृष्** ( atyā-kṛṣ- ) vi. p. to drag excessively जन्तवोऽपि । देहानिवारयाचक्रुस्तुरंगाः स्कन्धान्तरन्यस्तयुगा रथौघान् RāghPāṇ.(Dha.) 5. 63.

**अत्याकृष्ट** ( aty-ākṛṣṭa ) *adj.* excessively pulled अत्याकृष्टं त्रुटयति सुदृढमपि प्रेमबन्धनं मूढे KuṭṭaMa. 673.

**अत्याक्रन्दरव** ( atyākranda-rava ) *m.* very loud cry अत्याक्रन्दरवो राजलोकवक्त्रादुदच्छलत् PārśvC. 7. 320.

**अत्याक्रम्** ( aty-ākram- ) i. p. I to cross, to pass beyond ताभ्यामेव प्रति प्रोच्यात्याक्रामति TaiBr. III. iii. 7. 7; III. iii. 7. 9; स उत्तरमाघारमाघार्यास्पर्शयन्नत्याक्रामति S'atBr.(Ka.) IV. vii. 4. 5; II. iv. 2. 10; इत्यसंस्पर्शयन् स्रुचावत्याक्रामति MānS'S. 20. 4; II to surpass श्रिया चेतरावत्याक्रामत् GopBr. i. 3. 15; ततः एनं महादेवः ··· तेजसा व्याक्रमत् ( v. l. अत्याक्रामत् ) MahāBhā. iii. 40. 49.

**अत्याक्रमण** ( aty-ākramaṇa ) *n.* stepping beyond, crossing अत्याक्रमण इति । सूत्रं बौधायनस्य BaudhS'S. iii. 65. 12.

**अत्याक्रमणविधि** ( atyākramaṇa-vidhi ) *n.* injunction about *atyākramaṇa* (stepping beyond or crossing) प्रस्थानस्य अत्याक्रमणविधिनैव प्राप्तत्वात् MīmāKau. ii. 3. 3 (*on* ii. 3. 6)

**अत्याक्रम्य** ( aty-ākramya ) *ger.* having crossed, having returned पुनरत्याक्रम्योपसदं जुहोति TaiS. VI. ii. 3. 3; पञ्चप्रयाजानिष्ट्वोदङ्ङत्याक्रम्य सच्छ्रावेणानुपूर्वं हवींष्यभिघारयति BaudhS'S. i. 24. 10; अग्नयेऽनुब्रूहीत्यत्याक्रम्याश्राव्याहाग्निं यजेति BaudhS'S. i. 24. 13; अत्याक्रम्य यथास्थानं स्रुचौ सादयति MānS'S. 22. 23; 20. 19; द्वौ हुत्वा सर्वं समानीयैकं हुत्वात्याक्रम्यानुपूर्वं हवींष्यभिघारयति MānS'S. 42. 7.

**अत्याक्रान्त** ( aty-ākrānta ) *adj.* overcome with, covered with अत्याक्रान्तो हि कायाग्निर्गुरुणान्नेन शाम्यति Saund. 14. 7.

**अत्याक्रामत्** ( aty-ākrāmat ) *adj.* stepping beyond, crossing over सव्येनात्याक्रामञ्जपति BaudhSS. i. 23. 10; संस्पर्शयन्स्रुचावुदङ्ङत्याक्रामञ्जपति BaudhS'S. i. 23. 16.

**अत्याक्षिपत्** ( aty-ākṣipat ) *adj.* insulting greatly दीनान् ··· पीडयति यो निर्हेतुमत्याक्षिपंस्तस्य ··· स्वविभवस्तापाय RājTa.(S'rī.) I(3). 78.

**अत्याक्षेप** ( aty-ākṣepa ) *m.* great delay नायमस्यात्याक्षेपस्य कालः Tantrākhyā. 113. 28.

**अत्याखण्डलविक्रम** (aty-ākhaṇḍalavikrama) *adj.* surpassing Indra's valour तमीशः कामरूपाणामत्याखण्डलविक्रमम् । भेजे RaghuVa. 4. 83; दर्पमित्राणाम् ··· अखण्डयदपर्यायादत्याखण्डलविक्रमः Yādavā. 22. 173.

**अत्याग** ( a-tyāga ) *m.* I not giving (gifts), niggardliness तथात्यागः ··· एत एवासयस्तीक्ष्णाः कृन्तन्त्यायूंषि देहिनाम् MahāBhā. v. 37. 9 ( BhārArthaPra. अत्यागः दानसमयेऽप्यदानम् )) संमोहोऽज्ञानमत्यागः ··· सर्व एते गुणाः विप्राः तामसाः संप्रकीर्तिताः MahāBhā. xiv. 36. 12; II not abandoning, not giving up, not disowning अत्यागेऽपि तनोरखण्डपरमानन्दावबोधस्पृशाम् अध्वा कोऽपि ··· संपत्स्यते S'atTrayī. 268; न चाप्यस्त्यागोऽस्ति ManuBh. i. 298. 17 (*on* 3. 202); i. 532. 13 (*on* 6. 95); न निर्वापवेलायामत्यागादस्त्वत्वम् TantrVā. 1023. 18 (*on* iii. 4. 47); मार्गमिदः ··· येन मार्गेण उपक्रमः तस्य अत्यागः KāvyālaṅSū. iii. 1. 12; नद्यो नांशी त्यजेदंशमत्यागे नाश एव न IṣṭaSi. 223. 2; तस्य स्थैर्यधैर्यात्यागवैशारद्यादिभिरनुभावैरभिनयः प्रयोक्तव्यः NāṭyaS'ā. 7. 30 (2–3); तावदिलनेन पूर्वप्रश्नितस्यात्याग उक्तः AbhinBhā. i. 48. 15 (*on* 2. 3); तत्रैकैकस्यात्यागे उत्तरोत्तरा इति चतुरवस्थोऽयं संप्रज्ञातः समाधिः RājMār. 8. 23; यदुक्तात्हस्य चात्यागस्तद्धि सत्पुरुषव्रतम् KathāSaSāg. xii. 34. 37; तस्य त्यागो हि दन्तस्य पतनात्प्राविनिश्चितः । तस्यात्यागे ह्यवाप्नोति मित्रार्थे(? र्थं)बलभूक्षयम् Hastyāyur. 492. 14 (3. 17); अत्यागश्च निषिद्धसंभाषणाद्याचरणम् DaṇḍaVi. 303. 24; वाचैकदेशस्यात्यागादसिन्पक्षे ··· न कोऽपि दोषः SiddhāBi. 45. 8; सामानाधिकरण्येन प्रतीयमानस्यैक्यस्यात्यागात् AdvaiSi. 374. 8; अर्थान्तरभानेऽपि शक्यार्थभानस्यात्यागात् MīmāKau. i. 275. 24 (*on* i. 4. 23); III non-exclusion आकाङ्क्षणादथात्यागस्तुल्यो द्रव्यक्रियादिषु S'lokaVār. 5 (13). 156 (609. 1)

**अत्यागकारण** ( atyāga-kāraṇa ) *n.* cause of non-abandonment जलाविलदोषवत्या अपि स्रजो यदत्यागकारणं तदिह वैधर्म्यद्वारेण प्रतिपादितम् SaraKaṇṭhā. 502. 1.

**अत्यागमनतस्** ( atyāgamana-tas ) *adv.* due to frequent arrivals or meetings अत्यागमनतो नित्यम् ··· अनयोः प्रेमसंबन्धो बभूव BṛKathāK. 46. 120.

**अत्यागवासना** ( atyāga-vāsanā ) *f.* desire of non-abandonment तत्ते केयं मदीयाया(? याः) कोऽप्यत्यागवासना PāṇḍaC. 6. 395.

**अत्यागशीलता** (atyāgaśila-tā) *f.* nature of being niggardly लोभः स्वकीयद्रव्यस्यात्यागशीलता GitāBh.(Rā.) 592.12 (*on* 14.12)

**अत्यागस्** (aty-āgas) *n.* great offence or sin अतिवादोऽतिमानश्च तथात्यागो नराधिपः(? प)।… एते … कृन्तन्त्यायूंषि देहिनाम् MahāBhā. v. 37.9 (Nila. अत्यागः उत्कृष्टोऽपराधः); न हि संवादत्यागः सज्जनरक्षासु मार्दवादत्यागः YudhiVi. 2.19 (comm. अत्यागः अतिशयेनागोऽपराधः); अत्यागः सूयते मौग्ध्याद्बालाभिर्यत्र कामिनाम् PṛthviVi. 5.159.

**अत्यागित्व** (atyāgi-tva) *n.* lack of liberality, niggardliness तथात्यागित्वमेव च। एते वै सप्तदोषास्तु सदा विद्यार्थिनां मताः MahāBhā. v. 240*(2) (comm. लुब्धता); कृतज्ञत्यागिनोस्त्यागिनि विशेषः प्रत्यक्षो द्रव्यदर्शनात्। न तु कृतज्ञे तस्यात्यागित्वात् JayaMa. 345.2 (*on* 6.5); अत्यागित्वमकारुण्यं सुखदुःखोपसेवनम्।… राजसस्य गुणाः प्रोक्ताः SarvaSiSaṁ. 11.23.

**अत्यागिन्** (a-tyāgin) *adj.* i not forsaking मित्रमत्यागि चेष्यते MahāBhā. v. 39.37; पतितात्याग्यपतितत्यागिनः पतिताः GautDS. iii. 3.1; अपतितत्यागी पुत्रादीनामपतितानां त्यागी, तेषामेव पुत्रादीनां पतितानामत्यागी Aparā. 1045.9 (*on* 3.227); ii not renouncing अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम्। भवत्यत्यागिनां प्रेत्य न तु संन्यासिनां क्वचित् BhagGi. 18.12; अत्यागिनां अज्ञानां कर्मिणामपरमार्थसंन्यासिनाम् GitāBh.(S'aṅ.) 499.13 (*on* 18 12); अत्यागिनां कर्तृत्वममताफलत्यागरहितानाम् GitāBh.(Rā.) 661.6 (*on* 18.12); अत्यागी जन्ममरणे प्राप्नोतीह पुनः पुनः SkandP. i(2). 46.36; रागिणि अत्यागिणि(? नि) रक्ते शक्यस्त्याग आधातुमुपायेन JayaMa. 344.7 (*on* 6.5)

**अत्याग्नेय** (aty-āgneya) *n.* name of a particular mystic formula (जातवेदस इत्यस्यास्त्रिष्टुभः) पादशः प्रतिलोमः स पावकास्त्रं निगद्यते।… स्वरशः प्रतिलोमोऽयमत्याग्नेयं निगद्यते AhirbuS. 57.53.

**अत्याग्रह** (aty-āgraha) *m.* excessive or extreme insistence यदि वात्याग्रहो वत्स प्रव्रज्याविषये तव PariPar. 2.118; अत्याग्रहेण चाक्कायाः प्रेरिता मगधान्यदा। पप्रच्छ वरसेनम् PārśvC. 7.133; अत्याग्रहेण पितरं तत्तीर्थोत्कण्ठिता तदापृच्छत् PrabhāC. 43.7; PrabaK. 54.5; तदात्याग्रहे मम नाम ब्रूयाः KumāPraPra. 53.24; वृद्धेनात्याग्रहं कृत्वा जामातृकोऽपि रक्षितः CampaS'reKa. 267; अत्याग्रहेणामरदत्तराज्ञा … मित्रानन्दो वसन्तपरे प्रहितः KathāK. 113.23; 120.8; करे गृहीत्वात्याग्रहेण गृहं नीतः MādhavāĀ. 83 (4); नातिक्रौर्यम् … धारयेन्नातिमार्दवम् … अत्याग्रहं न च S'ukraNi. 3.218.

**अत्याग्रहगृहीत** (atyāgraha-gṛhita) *adj.* prompted by too much insistence अत्याग्रहगृहीतस्तु तस्या वासांसि कल्पकः। रजकस्यार्पयत् PariPar. 7.54.

**अत्याग्रहपर** (atyāgraha-para) *adj.* given to too much insistence तथाप्यत्याग्रहपरान् वीक्ष्य सावददक्किका RatnaCūKa. 213.

**अत्याचर्** (aty-ācar-) I. P. to behave unfaithfully पातिव्रत्यं परो धर्मः श्रूयते योषितामिति। नाहमत्याचरामि त्वां मनसापि कदाचन BallāC. 29.17.

**अत्याचार** (aty-ācāra) *m.* 1 act of supererogation अनाचाराद्धर्महानिरत्याचारस्तु मूर्खता S'ukraNi. 3.221; B very subtle or shy conduct, Ind. Spr. 156 [nt.]; C performance of works not sanctioned by usage, irreligious conduct [APTE]; *adj.* negligent of or departing from the established customs [MW, APTE]

**अत्याचारदोष** (atyācāra-doṣa) *m.* offence of committing an act of supererogation ममात्याचारदोषादियं देवस्य नयनगोचरं प्राप्ता ĀścaCū. 7.16 (1)

**अत्याजन** (a-tyājana) *n.* not causing exclusion or abandonment यथा प्रतिज्ञाविरोधादिकम् …। तस्य तत्त्वनिर्णयविरोधित्वेन तदुद्भावनस्यात्याजनेन तत्त्वनिर्णयाङ्गत्वात् NyāySu.(Ja.) 465B.3 (*on* iii. 2.1)

**अत्याजि** (aty-āji) *m.* great battle अत्याजिलब्धविजयप्रसरस्त्वया किं विज्ञायते रुचिपदं न महीमहेन्द्रः NaiṣC. 13.28.

**अत्याजितस्वकुला** (atyājita-svakulā) *adj.* (*f.*) who has not been made to leave her family एते प्रच्छन्नयोगा अत्याजितस्वकुलासु स्त्रीषु JayaMa. 293.17 (*on* 5.5)

**अत्याज्य** (a-tyājya) *adj.* [*f.* -ā] not to be abandoned सत्यप्रतिज्ञता नाम धिङ् मम क्षत्रियव्रतम्। त्यजामि पुत्रमत्याज्यं यत्कृते निरपत्रपः Rāmā. ii. 882*(4); अत्याज्यमस्य जानामि प्राणैस्तुल्यं धनंजयम् MahāBhā. v. 85.12; i. 194.16; भजन्तं भक्तमत्याज्यमदुष्टं त्यजतः सुखम्। नेह नामुत्र पश्यामि MārkP. 8.251; अत्याज्यो हि यथा भर्ता स्त्रीणां भार्या तथा नृणाम् MārkP. 71.11; अत्याज्यानि न वै त्यजेत् BṛParāSm. 6.260; उपस्थिता च या योषिदत्याज्या रागिणामपि BrahmVaiP. iv. 32.10; राजा-वयस्य भौतिकं कारणवशात् परित्यक्तं न दोषाय, नैष्ठिकं पुनरत्याज्यम् TāpaVa. 3.13 (5); क्रमागतो महापुरुषमार्गः कुलाभिमानिभिरत्याज्यः TilaMañ. 318.10; एष मे शरणागतः। अत्याज्यस्तद्ददाम्यन्यन्मांसमेतत्समं तव KathāSaSāg. i. 7.92; तद्ब्रूहि शीघ्रमत्याज्यां कदा परिणयामि ताम् KathāSaSāg. vi. 5.61; iii. 3.60; vii. 5.164; xii. 17.65; भवान् कथम्। नात्याज्यं वेत्ति मानग्रहमहाव्रतम् RājTa.(Ka.) 7.324; तथा कुलयोषित्प्रभृतीनामत्याज्यानां ये त्यागिनस्तांश्चोद्दिश्य Aparā. 509.13 (*on* 1.504); भजन्तं भक्तमत्याज्यं त्यजतः स्यात्कथं सुखम् DeviBhāP. vii. 27.22; अत्याज्यं हि व्रतं राज्ञः प्रजानां परिपालनम् PuruṣPa. 98.23; कुर्यान्निषेकं पुमान्। अत्याज्ये च समूलभे शुभगुणे JātaPā. 3.16; पर-राष्ट्रोपप्लवादौ वा कथंचित् चोरहस्तगता हीनवर्णोपभुक्ताप्यत्याज्या स्यात् (नारी) BālaKri. ii. 133.16 (*on* 3.262)

**अत्याज्यजप** (atyājya-japa) *m.* muttering (of sacred words) which cannot be abandoned चण्डी नरपतेः पत्नी भाव्यर्थबलवत्तया। अत्याज्यजपमौनस्था तस्मिन्नवसरेऽभवत् RājTa.(Ka.) 7.329.

**अत्याज्यता** (atyājya-tā) *f.* the state of being unabandonable (i. e. acceptable) दोषे गुणत्वं तनुते दोषत्वं वा निरस्यति। भवन्तमथवा दोषं नयत्यत्याज्यतामसौ Candrā. 2 41.

**अत्याज्यत्व** (atyājya-tva) *n.* the state of being not fit to be abandoned कर्मत्यागो न विद्यत इत्यनेनात्य(? त्या)ज्यत्वविधानात् एकाहं द्व्यहं वा … वैतानहोमकर्म कर्तव्यम् HārLa. 24.14.

**अत्याज्ययाज्यसुभट** (atyājyayājya-subhaṭa) *m.* a distinguished warrior who is not to be dispensed with but to be respected राडहर्षयत् … सत्प्रयोज्यनवभोज्यगणेनात्याज्ययाज्यसुभटानुपरिस्थः DvyāśraKā. 8.106.

**अत्याज्यस्त्रीविषय** (atyājyastrī-viṣaya) *adj.* having reference to a woman who cannot be discarded अथात्याज्यस्त्रीविषयाणि (वचनानि) Smṛti-Can. iv. 575.13.

**अत्याटिन्** (atyāṭ-in) *adj.* excessively roaming about अत्याटिनं करालं भिक्षायुक्तं कपालशूलकरम्। महादारिद्र्यं भैरवरूपं कुरु ĀryāS'. 48.

**अत्याढ्य** (aty-āḍhya) *adj.* very rich अत्याढ्यांश्चातिशूरांश्च ब्राह्मणांश्च बहुश्रुतान्। एतान्सहायाल्लिँप्सेथाः MahāBhā. xii. 84.2; अत्याढ्ये चातिदुर्बले।… कन्या न दीयते BṛParāSm. 6.27; अत्यशने विदूरस्थेऽत्याढ्ये। कुलहीने च मूर्खे च षट्सु कन्या न दीयते PadmP. v. 49.97; अत्याढ्यानापणेषु वणिग्जनान्। अहमिन्द्रानिव पश्यन् TriṣaS'aPuC. i. 5.60; सर्वस्वोल्लुण्ठने तस्मिन्धनिनां दुःसहे पुरे। आसन्दरिद्रा अत्याढ्या आढ्या दारिद्र्यभागिनः RājTa.(S'ri.) 4.637.

**अत्यातप** (aty-ātapa) *m.* excessive heat of the sun अत्यातपे वापि तथान्धकारे … न क्वचिदभ्युपेयात् NitiSā. 7.38.

**अत्यातुर** (aty-ātura) *adj.* seriously ill इच्छानुविधायित्वस्यात्यातुरादिदेहेष्वसत्त्वेऽपि साक्षात्स्वस्वामिभावस्य वा … संबन्धान्तरस्य संभवात् Nyāyāmṛ. 400B.7.

**अत्यातुरभिन्न** (atyātura-bhinna) *adj.* different from the one who is seriously ill आतुरे अत्यातुरभिन्ने (रात्रौ दिवाशौचस्य चतुर्थांशः) ViraMi. 37.22 (*on* 1.17)

**अत्यात्तस्व** (atyātta-sva) *adj.* whose property is robbed (by another) परिक्षीणोऽत्यात्तस्वः कदर्यो व्यसन्यत्याहितव्यवहारश्चेति लुब्धवर्गः ArthS'ā. i. 68.4 (1.14)

**अत्यात्मप** (aty-ātmapa) *adj.* disregarding the body-guard (i. e. cowherd) दृष्ट्वाथ तत् स्नेहवशोऽस्मृतात्मा सगोत्रजोऽत्यात्मपदुर्गमार्गः।… अगात्कुकुरैरास्तुपया जवेन BhāgP. x. 13.30.

**अत्यात्मबल** (aty-ātmabala) *n.* more than the natural (i. e. superhuman) strength तस्येमानि रूपाणि भवन्ति, तद्यथा – अत्यात्मबलवीर्य° … °विज्ञानानि CaraS. ii. 7.13.

**अत्यादर** (aty-ādara) *m.* i great respect or regard आत्मज्ञातिषु नात्यादरः KāmSū. 244.2 (4.2); दृष्टिप्रसादविधिमात्रकृतो जनोऽयमत्यादरेण किमिति क्रियते विलक्षः PriyDa. 4.2; इत्यलं दुर्मतिविस्पन्दितेष्वत्यादरेण HetuBiṬ. 7.18; कुमार … कृतं कृतमत्यादरेण UttaRāC. v. 28 (1); सुवर्णोदकैः … अत्यादरात्स्नानं ते परिकल्पयामि जननि DeviCatuSt. 14; (कुरङ्गः) यो नित्यमत्यादरेण आधत्ते … अन्तरङ्गं समोदं सोमापीडस्य सोऽयं प्रदिशतु S'ivPāKeSt. 5; तमपत्यचतुष्टयैकपूज्यं पृथगत्यादरदीर्घरुद्धजन्यम्। अपरो नृपतिर्नुनाव RāmC. 8.78; अत्यादराद्दाशरथौ शरौघान् ववर्ष (तत्रैव) तथेन्द्रशत्रुः RāmC. (App. 2) 38.43; यान्तं मदाशयमवेत्य … अत्यादरेण भवतीमनुगच्छतीव RāmāCam. 6.103; सर्वजीवव्यापित्वादभेदोपदेशस्य तत्रात्यादरः प्रतीयते VedāntDi. 129.7 (*on* ii. 3.42); तेषां चात्यादरात् … गुरवस्ततः प्राहिण्वन्वप्पभट्टिम् PrabhāC. 82.20; ततस्ताम्बूलिकास्तोमम् … स अत्यादरेण संमान्य … ततश्चाभ्यर्थयामास PrabhāC. 159.10; 22.25; अत्यादरेण व्यासादिभिः परिग्रहविशेषाच्च NyāyPari. 474.2; अत्यादराच्छात्रगणैः सहासौ प्रत्युद्गतः … सत्यवतीसुतम् SaṁkaDigVi. (Mā.) 7.22; आत्मज्ञातिषु रचयेन्नात्यादरमावृता नत्रा KandaCū. iv. 2.9; निदेशवर्तिनि दासजने किमत्यादरेण … संह्रियतामयमञ्जलिः 35.18; ii great interest or attachment नात्यादरेण जगृहे फलमङ्घ्रिपाणाम् RāmC. 25.24; न हि विरक्ताः स्त्रियः … लेखानभिलिख्य तथात्यादरेण प्रेषयन्ति TilaMañ. 110.16; विरमात्यादरः कोऽयं कुरङ्गान्वेषणे

25. 16 (250B. 3); अदरिद्रा भवत्येषा सर्वार्थिजनसंहतिः KathāSaSāg. iv. 2. 30; iv. 2. 33; xii. 23. 26; गोहेमहयरत्नादिप्रदानैः ··· द्विजान् । ··· अदरिद्रांश्चकार सा RājTa.(Ka.) 7. 181; येनादरिद्रां जगतीं विधातुं हेमाद्रिरप्यस्य गृहेऽवतीर्णः CaturCin. ii(1). 2. 10; अदरिद्रा वसामोऽत्र सर्वहेतोरिवोदरे Yādavā. 6. 70; सकलां पृथिवीमदरिद्रां कुरु VotāPāñ.(S'i.) 39. 34; B ii free from misery, happy (कश्मीरमण्डलम्) करोति कृत्वा अदरिद्रमन्वयम् S'rīKaC. 3. 13 (comm. अदरिद्रं सुखितम्); C i rich in merit, noble दददेऽद्रोऽदरिद्रोऽरिरिद्रौरद्रोऽरुरादरी RāghPāṇ.(Dha.) 18. 51 (comm. अदरिद्रः पुण्यवान्); C ii rich in, possessed of पवित्रधरः ··· । धनैर्दरिद्रः स्वजनैरदरिद्रः कुलादिभिः KathāSaSāg. xii. 6. 22; D unchangeable, firm अदरिद्रानुरागिता । द्वादशेति गुणानाहुः SaraKaṇṭhā. 569. 1 (cf. f. n. 1 अदरिद्रेत्यनुरागिताया विशेषणम्, तेन स्थिरानुरागितेत्यर्थः)

अदरिद्रता (adaridra-tā) *f.* i the state of not being poor, absence of poverty यस्य पाणिनिबद्धेन वररूप्याञ्चितश्रिया । व्यज्यते कङ्कणेनेव लक्ष्मणेनादरिद्रता S'rīKaC. 25. 63; ii (*fig.*) the state of not being poor (i. e. wanting in wisdom), S'rīKaC. 25. 63; iii the state of not lacking (in courage) बहिः कोष्ठकभृत्येषु विद्रुतेष्वदरिद्रताम् । परं जनकचन्द्राख्यो धैर्येणोवाह डामरः RājTa.(Ka.) 8. 2331.

अदरिद्रा (a-daridrā) *adj.* other than (the root) *daridrā* आतोऽनोऽदरिद्रः MugdhaBo. 26. 198 (172. 15) (comm. दरिद्रावर्जादादन्तात्)

अदरिद्राणमुद् (adaridrāṇa-mud) *adj.* whose delight is not meagre (i. e. is great) एषादरिद्राणमुदददरिद्रायिका ददौ DvyāśraKā. 9. 158.

अदरिद्राति (a-daridrāti) *adj.* other than (the root) *daridrā* अदरिद्रातेः Kātan. iv. 5. 104.

अदरिद्रायक (a-daridrāyaka) *adj.* [*f.* -ikā] i in order to make oneself rich कोऽप्यदात् । कर्णरूपं लिखित्वास्या अदरिद्रायकोऽन्यदा DvyāśraKā. 9. 157 (comm. अदरिद्रिष्यत् ईश्वरीभवितुमित्यर्थः); ii not poor, rich एषादरिद्राणमुददरिद्रायिका ददौ DvyāśraKā. 9. 158 (comm. उदारा)

अदरिद्रालय (adaridrālaya) *m.* name of S'iva (*lit.* rich abode) अष्टोत्तरसहस्रं तु नाम्नां शर्वस्य मे शृणु । ··· अद्रिरद्यालयः (v. l. अदरिद्रालयः) कर्ता MahāBhā. xiii. 17. 37.

अदरिद्रीकृत (adaridrī-kṛta) *adj.* [*f.* -ā] relieved from poverty मेजे च पूर्णकोपश्रीर्हेम्ना तद्युक्तिजन्मना । सावरोधोऽसमान्भोगानदरिद्रीकृतद्विजः KathāSaSāg. vii. 1. 91; अदरिद्रीकृता भूमिः VikraDeC. 4. 52; दानैः क्षमाभुजा । अदरिद्रीकृता विप्राः RājTa.(Ka.) 7. 955.

अदरिद्रीकृत्य (adaridrī-kṛtya) *ger.* having relieved from poverty विहङ्गिके, प्रहिणु ··· अदरिद्रीकृत्य वैश्रवणयाचकवृन्दम् TilaMañ. 372. 10; राजा ··· मुख्यचौरम् ··· गजाश्वरत्नकांचनैरदरिद्रीकृत्य ··· प्रस्थापयामास PuruṣPa. 53. 20; 102. 28.

अदरिद्रोहिका (adaridrohikā) *adj.* (*f.*) having excellent reasoning अदरिद्रोहिका । ···तव भारती जिनपते CaturJiStu. 87.

अदरिन् (a-darin) *adj.* [*f.* -ṇī] fearless हंसम् ··· ग्रहीतुकामादरिणा शयेन यत्नादसौ निश्चलतां जगाहे NaiṣC. 3. 4 (comm. अदरिणा निर्भयेन); करेण वाञ्छेव विधुं विधर्तुं यमित्थमात्थादरिणी तमर्थम् । पातुं श्रुतिभ्यामपि नाधिकुर्वे···किम् NaiṣC. 3. 62.

अदर्प (a-darpa) *adj.* devoid of pride अदर्प कन्दर्पम् ··· कथमसि विधातुं व्यवसितः MālMā. 5. 202 = VakroJī. 12. 7 = SaraKaṇṭhā. 129. 15 = SuvṛTi. 2. 32 = SubhāRaK. 16. 22; *m.* absence of pride योगमर्थं ततोऽदर्पम् ··· धर्मस्वेतान् समादाय ··· आगतः KalkiP. iii. 6. 10; सर्वावस्थास्वकार्पण्यमदर्पः सति कारणे । ··· महापुरुषलक्षणम् SūktiRa. 168. 14; [given as the meaning of *vismaya*, AnekāK. 645]

अदर्पक (adarpa-ka) *adj.* i different from *darpaka* (i. e. Cupid) अदर्पकाः स्मः सविधे स्थितास्ते NaiṣC. 10. 46; ii devoid of pride, NaiṣC. 10. 46.

अदर्पकचित (adarpa-kacita) *adj.* shining with humility or modesty अदर्पकचितं बालं प्रौढा लक्ष्मीः ··· आलिङ्गत् RājTa.(Jo.) 788.

अदर्पणस्थ (a-darpaṇastha) *adj.* not reflected in the mirror ददर्श रामोऽनुजसङ्गमन्तिकाददर्पणस्थं प्रतिबिम्बमात्मनः RāmC. 4. 68.

अदर्पविशदा (adarpa-viśadā) *adj.* (*f.*) clear due to absence of pride अदर्पविशदा विद्या भवत्युन्नतचेतसाम् DarpDa. 1. 31.

अदर्पशौर्य (adarpa-śaurya) *n.* valour without pride अदर्पशौर्यस्पृहणीयसत्त्वाः ··· प्रयान्ति वीराः ··· अजरामरत्वम् DarpDa. 5. 45.

अदर्पसंपद् (adarpa-sampad) *f.* wealth without pride सर्गारम्भाञ्चिसर्गेण नैव दृष्टो न यः श्रुतः । अदर्पसंपत्प्रणयी ··· जनः DaśāvaC. 5. 47.

अदर्पित (a-darpita) *adj.* not proud, humble तैस्तथ्यकारिभिर्युक्तैः श्रद्धावद्भिरदर्पितैः VāyuP. ii. 39. 6; BrahmāṇḍP. iii. 2. 5.

अदर्पिन् (a-darpin) *adj.* having no pride पराभूतक्ष्माभुजा । ··· राज्यं स्वमर्पणीयमदर्पिना PrabhāC. 95. 19.

अदर्भकर (adarbha-kara) *m.* hand without *darbha* grass यदा यजमानो गन्धादि ब्राह्मणसात्करोति तदा सोऽप्यदर्भकरेणैव तिलकं कुर्यात् BālamBha. i. 511. 21 (*on* i. 231–32)

अदर्भपाणिक (adarbhapāṇi-ka) *adj.* not having *darbha* grass in hand चण्डालभाषिणं विप्रं सदैवादर्भपाणिकम् । ···तमाहुः पशुघातकम् SkandP. ii(1). 26. 21.

अदर्विहोम (a-darvihoma) *m.* oblation different from that made with a ladle आश्रुतप्रत्याश्रुते ··· याज्यानुवाक्ये वषट्कारश्चादर्विहोमानाम् ĀpaS'S. xxiv. 2. 13; अदर्विहोमं सन्तमित्यापद्यते S'ābaBh. 1626. 27 (*on* viii. 4. 3); अदर्विहोमानां वा लिङ्गात् SaṅkarKā. ii. 2. 14 (81. 17 Madras Ed.)

अदर्श (a-darśa) *adj.* which is without (the performance of) the new-moon sacrifice यस्याग्निहोत्रमदर्शम् ··· आ सप्तमांस्तस्य लोकान् हिनस्ति MuṇḍaU. i. 2. 3; अदर्शं दर्शाख्येन कर्मणा वर्जितम् MuṇḍUBh. 315. 7 (*on* i. 2. 3)

¹अदर्श (a-darśa) *m.* 1 other than *darśa* i. e. the full-moon sacrifice इज्येते स्वर्गलोकस्य दर्शादर्शौ BṛĀraUBhVā. (Sambandha.) 128; 2 disappearance अदर्शे तु गते देवे सर्वलोकपितामहे PadmP. v. 4. 86; 3 new-moon day भद्रमङ्गलवद् अदर्शः एव दर्शः TikāSe. i. 4. 9.

²अदर्श (adarśa) *m.* mirror [PW]

अदर्शता (adarśa-tā) *f.* the state of being invisible कुमारो नागपूर्वकः । जगामादर्शताम् BṛKathāK. 56. 410.

अदर्शत्व (adarśa-tva) *n.* i the state of being other than the new-moon-day sacrifice कालान्तरकरणे सत्यौपत्तिकरूपविसंवाददर्शत्वमपूर्णमासत्वं च स्यात् TantrVā. 471. 23 (*on* ii. 2. 3); ii the state of being other than the new-moon day इदमप्येकादशदिनस्यादर्शत्वे BālamBha. i. 594. 16 (*on* i. 255)

अदर्शन (a-darśana) *n.* 1 A absence of sight, non-observation, not seeing, lack of perception B absence of knowledge, lack of experience C invisible state, unknown state or condition 2 A disappearance, going out of sight, becoming invisible, concealment B power to become invisible 3 A absence, non-availability, not being found B absence of mention, not being available in a text 4 elision, omission 5 A destruction, end, vanishing completely B antecendent non-existence of perception 6 A failure to show oneself, not available to meet B failure to see or meet, neglect, disregard, not taking note of 7 A not the accepted view, not the correct stand-point or doctrine B nescience, erroneous knowledge 8 A not the organ of sight B meaning other than 'seeing' 9 desire to see 1 A absence of sight, non-observation, not seeing, lack of perception नादर्शनात् KātyS'S. i. 6. 22; अपराह्णे पिण्डपितृयज्ञश्चन्द्रादर्शनेऽमावास्यायाम् KātyS'S. iv. 1. 1; (सोमस्य) अदर्शनेऽरुणपुष्पाण्यर्जुनान्यभिषुणुयात् KātyS'S. xxv. 12. 18; xxvi. 2. 3; उपवसेत् ··· अदर्शनेऽमावास्याम् MānS'S. 25. 9; अदर्शने शरीराणाम् KauśiGS. v. 6. 5; स्त्रीशूद्रशवकृष्णशकुनिशुनां चादर्शनमसंभाषा च तैः PāraGS. ii. 8. 3; नार्यो रामादर्शनकर्शिताः Rāmā. ii. 53. 9; तवादर्शनजः शोको भूयो मां परितापयेत् Rāmā. v. 37. 22; यथा प्रकृते स्वरवर्णसंहिते तयोस्तयोरक्षरवर्णयोस्तया । अदर्शनेऽनाप्यविलोप उच्यते ṚPrāti. 11. 28; अन्तर्धौ येनादर्शनमिच्छति P. i. 4. 28; SaraKaṇṭhā.(Gr.) i. 1. 70; किं कारणम् । तस्यादर्शनात् । बलादेरित्युच्यते न चात्र वलादिं पश्यामः MahāBh. i. 134. 13 (*on* i. 1. 56); अदर्शनेन योगो नास्तीति कृत्वादर्शनसहचरितो योऽर्थस्तस्य गतिर्भविष्यति साहचर्यात् MahāBh. i. 227. 25 (*on* i. 2. 51); यश्चरुपुरोडाशाविर्वपति । तत्रादर्शनात् । न तत्र प्रत्ययो दृश्यते MahāBh. ii. 358. 4 (*on* v. 1. 72); सर्वशोऽदर्शनमयोगः CaraS. i. 11. 37 (Ed. 1941); सा दुःखिता भर्तुरदर्शनेन Saund 6. 10; मोहो नाम ··· तस्य निश्चैतन्यभ्रमणपतनाघूर्णनादर्शनादिभिरनुभावैरभिनयः प्रयोक्तव्यः NāṭyaS'a. 7. 77(3); सतः परमदर्शने विषयानागमात् MimāSū. i. 1. 13; उदितमात्रस्य लोकैरदर्शनात् BhaṭṭiCan. 16. 13 (*on* xiii. 2. 11); तमाहितौत्सुक्यमदर्शनेन प्रजाः ··· । नेत्रैः पपुः RaghuVa. 2. 73; आगते चादर्शनम् KāmSū. 331. 22 (6. 3); दूरभूयस्त्वाद्भूमस्याग्नेश्च चादर्शने गौणः शब्दः S'ābaBh. 128. 1 (*on* i. 2. 12); 404. 3 (*on* ii. 1. 5); 1355. 16 (*on* vi. 1. 4); अदर्शने दर्शनमात्रकामा SaTTrayī. 1. 22; न चैषा प्रोषितभर्तृका प्रवासचिह्नस्य वेण्यादेरदर्शनात् DaśKuC. 116. 3; न चात्रादर्शनं हेतुः S'lokaVār. 5(7). 13 (453. 6); निर्गतेष्वपि दृष्टत्वाच्चद्रतेष्वप्यदर्शनात् TantrVā. 188. 11 (*on* i. 3. 14); घटादिष्वदर्शनादिति निरस्ते Bṛha. 217. 9 (*on* i. 1. 5); किन्तु अदर्शनमात्रादेव

व्यतिरेकमाहुः HetuBiṬ. 52.26; अदर्शनाद्दर्शनं बलीयः ManuBh. ii. 332.2 (*on* 10.5); हीनातिरिक्तविकृतानां चात्र छायानां दर्शनमदर्शनमेव वा AṣṭāSaṁ. i. 45.12 (1.8); तथा हि नित्यसत्त्वोऽयं न चापेक्षास्य काचन। ध्वनिसंकेतवर्णैश्च तद्व्यक्तिर्नाप्यदर्शनात् TattvSaṁ. 2709; न चायमर्थः संभवति यत् प्रत्यक्षादिग्रहणार्हं न भवति, वाक्यं च तत्प्रमाणमिति। कुतः। अदर्शनात् TātptṬ.(U.) 33.11 (*on* 2.4); 306.19 (*on* 5(4).5); गृहाभावावधारणोपक्षीणेऽदर्शने वहिर्भावमतिर्भवति TātpaṬ.(U.) 391.17 (*on* 5(8).14); हितक्रियाद्यदर्शनादन्याय्या चेतनाज्जगत्प्रक्रिया BrahmSūBh.(S'aṅ.) 327.18 (*on* ii. 1.21); यदि च दर्शनादर्शने वस्तुन उत्पादनिरोधौ स्याताम् BrahmSūBh.(S'aṅ.) 386.5 (*on* ii. 2.20); कार्यस्य हि सतो जायमानस्य कारणे सत्युत्पत्तिदर्शनात्, असति चादर्शनात् BṛĀraUBh. 14.12 (*on* i. 2.1); न तावद्विधिरूपः, अदर्शनात् BālaKri. i. 14.5 (*on* 1.7); i. 21.8 (*on* 1.7); नादर्शनाभावतत्संबन्धानां प्रत्यक्षं मानम् IṣṭaSi. 348.5; दर्शनादर्शनाभ्यां हि नियमग्रहणं यदि NyāyMañ. i. 109.15; अग्निरेषोऽत्र धूमो वा दर्शयेन्न ह्यदर्शने S'ivDṛ. 5.55; चक्षुर्वेदपरामृष्टं न कारणमदर्शनम् PrakaPañ. 108.19; न च स्वाश्रयतयाभिव्यङ्ग्यप्रकाशनमभिव्यञ्जयितुः स्वभावः प्रदीपादावदर्शनात् ĀtmaSi. 29.2; तेषामनन्तरं फलस्यादर्शनात् JayaMa. 12.7 (*on* 1.2); भवतोऽदर्शनं यर्हि हृषीकाणामिवेशितुः BhāgP. i. 8.38; प्रायो विषादजनकं भवतोर्यददर्शनम् SkandP. iv. 88.22; न चासां दर्शनं देयं न चात्यन्तमदर्शनम् ViṣṇuDhaP. ii. 62.36; इहापि हि स्तो दर्शनादर्शने TātpaṬ.(Vā.) 158.22 (*on* i. 1.5); तस्मिन् सत्यपि सुखभेदस्यादर्शनात् Bhām. 57.19 (*on* i. 1.1); न च वास्तवं गुणप्रधानभावमाश्रित्य पदान्तरसंवन्धो दृष्टः। राजपुरुषेऽदर्शनात् Kāśi. iii. 3.12 (*on* 5(4).2); शतशोऽग्नौ धूमदर्शनमनग्नौ चादर्शनं शतशो व्याप्तिं विनानुपपन्नम् NayaVi. 126.5 (*on* i. 1.5); अन्यथाशुतरविनाशिनां क्षणान्तरेऽदर्शनात् NyāyVāPari. 526.2; 569.6; सपक्षासपक्षदर्शनादर्शनमात्रप्रमाणकत्वात् NyāyKuA. i. 169.5; दर्शनादर्शनयोश्चार्थप्रवणत्वाप्रवणत्वोपाधिग्रस्तत्वात् ĀtmaTaVi. 869.14; अर्थापत्तिरपि धर्मेण विनानुपपद्यमानस्य कस्यचिददर्शनादसमर्था S'āstrDī. 37.4 (*on* i. 1.4); तत्र सति गोप्याङ्गस्यादर्शनेन अनिर्यन्त्रणं निधुवनविलसितमिति KāvyPra. 251.3; Kāvyānu.(He.) 35.17; न चोपलभ्यत इति कथमदर्शनमात्रेण नास्त्येवोच्यते TarkBhā.(Mo.) 23.10; 24.7; 29.6; रात्रावदर्शनं व्यभ्रे VasiS. 45.45; अत्र कपोलयोः प्रकृतयोः … क्षामतागमनस्य हेतुरदर्शनमुत्प्रेक्षितम् AlaṅkāSa. 62.7; अदर्शनात्सुवद्धापि कन्दर्पप्रीतिराशयात्। राज्ञो जगाल कालेन RājTa.(Ka.) 7.999; अत्र गौर्याः पराङ्मुखीत्वेन कपोलस्यादर्शने तत्सदृशशशिखण्डविलोकनेनोत्कण्ठातिवाहनम् AlaṅkāRa. 20 (11); चन्द्रमसः … शुक्लद्वितीयायामप्यदर्शने च नोत्पातबुद्धिः कर्तव्या AdbhuSāg. 42.8; 277.1; अदर्शने पादयोश्च विदेशगमनं भवेत् YogS'ā. 5.172; न स्वेनादर्शनं दोषाभावे प्रमाणयितुमर्हति KhaṇḍanKhā. 925.9; अदर्शनादरत्यादिः कथं तेन निवार्यते AnuVyā. 57B.10 (*on* 3.4); अदर्शनेऽपि विशेषमाह स एव SmṛtiCan. iii. 152.2; तत्तु निस्श(?श्श)ङ्क्तो नैच्छल्लक्ष्येष्वदर्शनात् SaṁgīRa. iv. 51.7 (7.184); विशेषवत्त्वस्यैव तत्र अदर्शनात् TarkSaṁ.(Ā.) 32.6; अनुभावाः स्तम्भपातघूर्णनादर्शनविस्मरणादयः RasTa. 83.4; नात्रादर्शनं क्षयोपलक्षणपरम् CaturCin. iii(1). 178.21; जाड्यं विहाय स्वप्रकाशाभावस्य तं च त्यक्त्वा जाड्यस्य कचिदप्यदर्शनात् SyādvāMañ. 12 (88); 14 (27); विश्वासाद्धन्यते लोकस्तस्माच्छ्रेयो ह्यदर्शनम् SūktiRa. 108.2; पक्षे चातीन्द्रियस्य तस्याभावस्याप्यदर्शनात् NyāyPari. 114.15; किं परेषामदर्शनेऽपि तद्व्यामोहनम् S'atDū. 177.9; क्रमस्य चादर्शनात् TattvPrakā. 216B.1 (*on* iv. 3.15); न चरमः अदर्शनादेव Subodhi. 46.28 (*on* 2.14); नलस्य जामातुरदर्शनेन …। भीमो नृपः सा जननी तवापि कष्टां दशामन्वहमश्नुवाते Nalābhyu. 8.27; पटघटाद्यारम्भस्यादर्शनात् Upask. 100.3 (*on* ii. 1.25); न च प्रमाणवलेन तदतिरिक्ते व्याप्तिरिति वाच्यम्। अदर्शनात् AṇuBh. 133.2 (*on* ii. 2.15); संयुक्ताभावस्यादर्शनेन क्लृप्तैः संयोगध्वंसादिभिरेव सर्वोपपत्तौ Nyāyāmṛ. 423A.12; यत्नेनान्विष्यमाणेऽप्युपाधेरदर्शनात् TantrRaha. 10.23; 56.28; अदर्शनं तु विपक्षेषु लिङ्गस्यास्त्येव YuktiSneha. 62.24 (*on* i. 1.5); 137.29 (*on* i. 1.6); दाहादिशक्तिशून्यस्याग्न्यादेः क्वाप्यदर्शनात् SāṁkhyaPraBh. 6.27 (*on* 1.1); 72.4 (*on* 1.56); उभयोरप्यन्यतः प्राप्तिसंभवात्तद्व्यतिरेकेण च कचित्कस्यचित्प्रापणीयस्यादर्शनात् VidhiRa. 7 (37.2); दिवाग्नेरदर्शनादादित्यान्तर्गतिः MīmāKau. iii(1). 34.20 (*on* i. 2.12); पुण्यपापयोः सुखदुःखभोगमात्रनाश्यतया दर्शनादर्शनाभ्याम् … पूर्वयोर्निगरणं व्यज्यते RasGaṅ. 422.4; 696.1; योग्यानुपलब्धिश्च दर्शनयोग्यस्यादर्शनम् BhāṭṭCin. 47.3 (*on* i. 1.4); सीतायाश्चादर्शनादुत्थितोऽयं शोकाम्भोधिर्वर्धते त्वत्क्षयेण JānaPa. 6.34; भवतोरदर्शनाद् व्यथते संप्रति जम्भजित्सखः Ragh. 3.56; तस्य टाबेकादेशेनापहारेणादर्शनात् LaS'abdeS'e. i. 375.12; **1B** absence of knowledge, lack of experience तेष्वदर्शनाद्विरोधस्य समा विप्रतिपत्तिः स्यात् MīmāSū. i. 3.8; अपि वा कालमात्रं स्याददर्शनाद्विशेषस्य MīmāSū. iv. 4.6; एवमहमित्यात्मज्ञाने तामसलीना तथाहंकारस्यादर्शनमविद्या TattvSa. 13 (132.16); तत्र तत्र यथाभूतस्याज्ञानमदर्शनमनभिसमयः EI. xxi. 198.9; अदृष्टशब्देनादर्शनमुच्यते NyāyVār. 446.2 (*on* iii. 2.69); तदेवमदर्शनं शरीरसर्गहेतुः NyāyVār. 446.6 (*on* iii. 2.69); तत्रान्येषामदर्शनम् VākyaP. 2.69; तेषु क्रमकालपरिमाणेष्वदर्शनाद्विरोधस्येत्युच्यते TantrVā. 123.10 (*on* i. 3.7); शक्तेः शक्त्यन्तरायोगस्तत्र सत्यप्यदर्शनम् SphoṭSi. 52.2; 240.4; चक्षुषः संस्कारेण तिमिरे अपनीते ग्रहीतुरदर्शनात् न ग्रहीतुर्धर्मः GītāBh.(S'aṅ.) 363.6 (*on* 13.2) (Ānandagiri दोषाद्यनुपलम्भात्); सुषुप्तेऽदर्शनात् ज्ञानस्यापि सुषुप्तेऽभावात् PraśnaUBh. 292.18 (*on* 6.2); गुणे सति प्रामाण्यदर्शनात् असति चादर्शनात् TātpaṬ.(U.) 42.8 (*on* 2.30); यत्तव ममापि यथैकत्र दृष्टं स्यात् न केनचिद्विरुद्धमुक्तं स्यात्। अदर्शनात्तद्विरुद्धमित्युक्तम् S'arka. 16.23; तदयुक्तम् अदर्शनात् NyāyMañ. i. 149.8; दर्शनादर्शनयोर्लौकिकत्वेन तुल्यतया बाध्यबाधकभावेन विषयव्यवस्थोपपत्तेः TattvBi. 64.1; तत्रादर्शनाद् अन्यत्र च दर्शनात् VakroJī. 46.5; तस्य तस्याध्यात्मिकादेर्दुःखस्य निवृत्तेरदर्शनात् SāṁkhyaTaKau. 25.1 (*on* 1); ननु नित्यत्वेऽपि विषयानागमाददर्शनम् NayaVi. 232.4 (*on* i. 1.6); Loc. 25.21 (*on* 1.4); मुख्यरूपेण त्वदर्शनं सामान्यशब्दस्यापि विशेषेऽस्त्येव NyāyRa. 608.20 (*on* 5(13).155); 790.11 (*on* 6.234); स्वप्रकाशस्य कस्यचिदप्यदर्शनात् S'āstrDī. 123.30 (*on* i. 1.5); ज्ञानकार्यादर्शनात् S'rīBh. 155.10 (*on* i. 1.4); मृतशरीरे ग्रसनप्रभवादीनामदर्शनात् GītāBh.(Rā.) 581.22 (*on* 13.16); न हि निराश्रयाः प्राणाः क्वचित्तिष्ठन्ति गच्छन्ति वा जीवतोऽदर्शनात् S'aṅkaVi.(Ā.) 231.4; तत्र असिद्ध्यादेर्दोषान्तरस्य अदर्शनात् TarkSaṁ.(Ā.) 25.19; S'atDū. 86.10; इष्टानिष्टप्राप्तिपरिहारयोरदर्शनात् NyāySu.(Ja.) 12B.3 (*on* i. 1.1); 18A.1 (*on* i. 1.1); तिरश्चामविकारायोगोऽदर्शनाद्वा TattvPrakā. 52B.12 (*on* i. 3.26); कार्यस्य सुखस्य दुःखस्य वादर्शनात् Upask. 420.10 (*on* x. 1.5); अपरोक्षवृत्तौ सत्यां चिदप्रतिबिम्बनेनानिवृत्तेरदर्शनाच्च Nyāyāmṛ. 635A.6; ज्ञानादज्ञाननिवृत्तेरन्यत्रादर्शनमकिंचित्करम् SiddhāBi. 63.1; अदर्शनेन हि प्रायश्चित्ताभावोऽनुमेयः S'ivārkaMaDi. ii. 407.25 (*on* iii. 4.42); अभावस्य कारणत्वेऽपि भावसहकृतस्यैव तस्य कारणता न शुद्धस्य कचिदपि तथा अदर्शनात् MīmāKau. iii(2). 48.16 (*on* ii. 1.6); सा च व्यभिचारादर्शने सति सहचारदर्शनेन गृह्यते VedāntPari. 152.1; निपातातिरिक्तनामार्थधात्वर्थयोरन्वयस्यादर्शनात् AlaṅkāKau.(Vi.) 68.1; एवं रीतेरन्यत्र क्वाप्यदर्शनेन VaiyāSiMañ. 30.6; तदर्थभूते विधेये कदाप्यदर्शनात् LaS'abdeS'e. i. 17.2; **1C** invisible state, unknown state or condition अदर्शनादापतिताः पुनश्चादर्शनं गताः। न ते तव न तेषां त्वं तत्र का परिदेवना MahāBhā. xi. 2.8; xiv. 42.16; SūktiRa. 198.2; Subhāṣi. 3268; अव्यक्तादीनि अव्यक्तम् अदर्शनम् अनुपलब्धिः आदिर्येषां भूतानाम् GītāBh.(S'aṅ.) 43.10 (*on* 2.28); **1D** invisibility (as a quality) अनेकद्रव्यारब्धत्वाभावात् परमाणोरदर्शनमुक्तम् NayaVi. 74.7 (*on* i. 1.4); **2A** disappearance, going out of sight, becoming invisible, concealment मृतादर्शनयोः KātyS'S. xx. 3.21; शक्रो जगामादर्शनं ततः MahāBhā. iii. 38.45; तस्य संपश्यतः … वृषभध्वजः। जगामादर्शनम् MahāBhā. iii. 42.1; iii. 570*(3); iii. 168.27; iii. 185.51; iii. App. 25 (25); vii. 52.12; vii. 303*(2); ix. 241*(2); xii. 252.13; xiv. 14.12; दर्शनादर्शनेनैव सोऽपाकर्षत राघवम् Rāmā. iii. 42.8; अदर्शनमिवात्मानं भयान्नेतुं त्वमिच्छसि Rāmā. v. 18.2; निवृत्ते हयमेधे च गते चादर्शनं हरे Rāmā. vii. 90.20; vii. 98.5; अदर्शनं तूपगतश्च तस्याः Saund. 4.43; सा चात्यन्तमगोचरं (v. l. अदर्शनम्) नयनयोर्याता Vikramo. 4.9; देवी …। जगामादर्शनम् MārkP. 23.57; एवमुक्त्वा महादेवः…। अदर्शनमनुप्राप्तः VāyuP. i. 30.295; जगामादर्शनं देवी खे MatsyaP. 208.9; तेन तेऽदर्शनं नीताः सद्य एव बलाहकाः BrahmāṇḍP. ii. 40.8; उक्त्वेत्यदर्शनं याति देवी नारायणात्मिका JayāS. 27.120; अतोऽस्माकमदर्शनमेव श्रेयः Tantrākhyā. 55.10; तत्सर्वे हेलयोड्डीय…अदर्शनं गत्वा मुक्तिं प्राप्तुमः PañcT. 2.1 (21) (184.5); 2.2 (186.6); पुरुषस्यादर्शनमुपयाति SāṁkhyaKāBh. 32.6 (*on* 61); आशुगाः। ऐकागारिकवद्भूमौ दूराज्जग्मुरदर्शनम् S'iśuVa. 19.111; अदर्शनं ययौ मन्दं क्रुपयेव विरोचनः PadmP.(Ra.) 2.203; इत्युक्त्वा मामसौ देवस्तत्रैवादर्शनं गतः ParaS. 1.20; मृषा किमित्थं रसने ब्रवीषि गतैव सात्यन्तमदर्शनं मे RāmC. (App. II) 39.16; सादर्शनमुपेयुषी LakṣmīT. 57.26; अथ यत् … अदर्शनं जिगमिषति सवितरि तन्निधनम् ChāndoUBh. 100.10 (*on* ii. 9.8); यथा मरीचयः रश्मयः अर्कस्य आदित्यस्य अस्तम् अदर्शनं गच्छतः PraśnaUBh. 270.11 (*on* 4.2); ततश्च नष्टचर्याक्रीडयेवादर्शनमायान्तीषु दिक्कन्यकासु … शिबिरसंनिवेशमविशत् NalaCam. 6.42 (18); देवता … जगामादर्शनं क्षणात् BṛKathāK. 16.36; देवोऽथ … झगित्यदर्शनमगमत् TilaMañ. 45.12; भगवान् …। अदर्शनमनुप्राप्तः KūrmaP. 167.12 (1.15); 515.11 (2.11); उदयास्तमनं ज्ञेयं दर्शनादर्शनं रवेः AgniP. 120.27; 360.33; काले चकार तस्याश्च सपुत्राया अदर्शनम् BrahmVaiP. iv. 58.2; एवमुक्त्वा गतो देवः सद्योऽदर्शनम् VarāP. 3.24; माधवः। जगामादर्शनं तस्याः NaraP. 55.19; देवाः … जग्मुश्चादर्शनं तस्याः BrahmP. 35.3; 40.111; 50.16; 51.46; इत्युक्त्वा भगवान् ब्रह्मा जगामादर्शनं विभो BhaviP. 116A.22 (i. 66.1); (सूकरः) क्षणं दृष्टिपथं राज्ञः क्षणं चादर्शनं गतः DevīBhāP. vii. 18.40; viii. 15.24; तस्य योगबलाद् भूप गतस्यादर्शनं तदा। दृष्ट्वा तदद्भुतं कर्म वैष्णवब्रह्मचारिणः PadmP. i. 22.46; iv. 31.53; जगामादर्शनं देवी व्यक्ताव्यक्तस्वरूपिणी SaurP. 49.142; देवा जग्मुरदर्शनम् YogVā. iv. 25.30; उक्त्वेत्यदर्शनं याते मुजङ्गे मामसूत

सा BṛKathāMañ. i. 3. 9; 4. 114; अदर्शनं प्रयातायां तस्याम् ··· पुष्पवृष्टिः पपात च RāmāMañ. 503. 18; व्योम्नः ··· तारकाश्रुकणावली। बालमित्रकरोन्मृष्टा जगामादर्शनं शनैः RāmāMañ. 247. 12 = Subbāṣi. 2156; वारे प्राप्ते तृतीये च यान्तीष्वन्यास्वदर्शनम् SamaMā. 3. 16; दत्त्वा चास्मै स खड्गं स्वम् ··· अदर्शनं ययौ KathāSaSāg. ii. 2. 48; ii. 4. 59; ix. 6. 165; xiv. 1. 79; अस्तमिति शैलविशेषादर्शनयोः GaṇRa. 1. 16 (38); स महासाहसं कृत्वात एवागाददर्शनम् PariPar. 6. 219; अक्षभाष्ट्रहतियुक्तवाजिता अष्टगोमितलवा गजाद्रयः। तत्समे दिनमणौ च कुम्भभूर्याति दर्शनमदर्शनं क्रमात् KaraṇaKu. 6. 14 (28); पुरुषः ··· इत्युक्त्वादर्शनं गतः Pañcā. 161. 18; प्रापे क्विष्प्रत्ययेनेव तेन तूर्णमदर्शनम् Surath. 10. 111; जगामादर्शनं सुरः PārśvC. 2. 1002; अदर्शनं जग्मुतुरङ्गसा द्वौ SaṅkaDigVi.(Mā.) 8. 55; 10. 72; दर्शनादर्शने भानोरुदयास्तमयौ मतौ BṛBrahmaS. ii. 7. 97; प्राप्तां सद्योऽदर्शनं पार्थिवेन्दुः ··· विद्विषद्रूपसेनाम्। ··· ऐन्द्रजालीममस्त Raghuña. 10. 43; स्वस्वद्वयेन्द्राधरसंस्थयोश्च ···। अदर्शनादर्शनतो मिथोऽस्ति व्यत्यासतो रात्रिदिनप्रमाणम् SiddhāTaVi. 161. 10; 266. 3; 295. 8; KalpaK. 460. 22; ष्णुसु अदने। आदाने इत्येके। अदर्शने इत्यपरे SiddhāKau. 402A. 2; **2B** power to become invisible काव्यामृतादर्शनस्तम्भनोच्चाटनमारणादि ··· तेषां स्वयं जायते KulaCūT. 7. 34; दूरश्रुतिर्दूरदृष्टिस्तथात्यादर्शनं खलु SivaS. 3. 89; **3A** absence, non-availability, not being found धर्ममात्रे त्वदर्शनात् शब्दार्थेनापवर्गः स्यात् MimāSū. xi. 1. 28; आचार्याय गां दद्यात् अदर्शने ब्राह्मणेभ्यो गां दद्यात् JaimiGS. 1. 22 (24. 2); योगप्रमाणे च तदभावेऽदर्शनं स्यात् P. i. 2. 55 (KāśiVṛ. अदर्शनम्प्रयोगः); आर्तवक्षये यथोचितकालादर्शनमल्पता वा योनिवेदना च SuśruS. i. 15. 12; सुपुष्पवस्थायां तस्या आत्मनि बुद्धौ चादर्शनात् Bṛha. 75. 8 (on i. 1. 5); 128. 6 (on i. 1. 5); अन्नमयेऽदर्शनात् TaiUBh. 277. 3 (on 2. 8); अन्यस्य भजनीयस्यादर्शनात् GītāBh.(Śaṅ.) 222. 4 (on 7. 17); न हि लक्षणिकी गौणी वा वृत्तिः शाब्देनानुगम्यते। अग्निर्माणवकः इत्यादावदर्शनात् NyāyRa. 903. 9 (on 7. 206); न तावत् ज्ञातत्वमात्राद्पूर्वाज्ञातत्वसिद्धिः स्मृतत्वगतेऽदर्शनात् PrakaVi. 563. 3; तदनुगुणानां श्रुतिलिङ्गवाक्यादीनामदर्शनात् CaturCin. iii(1). 64. 1; iii(2). 611. 6; पीतशङ्खभ्रमादिष्वदर्शनात् NyāyPari. 486. 7; हीनसंधिनि एकस्य संधेः ··· अदर्शने चतुर्थस्य संधेरदर्शनम् NāṭaLaRaK. 449; कारणज्ञानतत्कार्यज्ञानादीनां युगपददर्शनात् SāhiDa. 91. 4; चिन्मात्रं मुक्तं स्यादितिच्छाया: कदाप्यदर्शनेन Nyāyāmṛ. 383A. 9; 629A. 3; 635B. 9; पूर्वपक्षसूत्रस्य चादर्शनेन ··· तात्पर्यस्य निर्णेतुमशक्यत्वात् SivārkaMaDi. i. 7. 6 (on i. 1. 1); अदर्शने निष्कृतेः स्मृतम् NayaMañ. III. iv. 11. 21; यथा तत्त्वामेदे घटः कुम्भ इति सामानाधिकरण्यप्रतीतेरदर्शनेन मिलितसिद्धिरुद्देश्या AdvaiSi. 78. 3; गौः -- इदानीं बहुक्षीरेत्यत्र यादृशी प्रीतिस्तादृशप्रीतेरदर्शनात् MayūMāli. 14. 10 (on i. 2. 3); तद्वतामपि ··· ब्रह्मजिज्ञासाया अदर्शनात् GoviBh. 5. 14 (on i. 1. 1); अविद्यावुद्धितद्धर्मभासकांशेतरावृतिः। कल्प्यते वस्तुतस्तेषु संशयादेरदर्शनात् VedāntSiSūMañ. 1. 96; **3B** absence of mention, not being available in a text आज्ये चादर्शनात् KātyŚS. i. 4. 11; न तावदाद्यः पक्षः सूत्रेष्वदर्शनात् MṛtaSam. 6. 8 (on 1. 10); वचनद्वयं प्रचरदपि संहितास्वदर्शनात् ··· नाद्रियन्ते ViraMi. 190. 16 (on 1. 100); तत्तन्त्रेषु· क्वाप्यदर्शनात्प्रामाणिका न मन्यन्ते LalitāSaBh. 5. 13 (on 3); तेषामष्टशत्यामदर्शनात् SetuBa. 7. 7; उक्तसत्यापाठस्य तद्ग्रन्थेऽदर्शनात् BālamBha. i. 176. 14 (on 1. 53); **4** (Gr.) elision, omission कृदन्तमर्थवत्प्रातिपदिकमदर्शनं प्रत्ययस्य नाम संपद्यते GopBr. i. 1. 26; विवृत्तिषु प्रत्ययादेरदर्शनम् ṚPrāti. 14. 26; वर्णस्यादर्शनं लोपः VājaPrāti. 1. 141; अदर्शनं लोपः P. i. 1. 60; सतोऽदर्शनस्य संज्ञया भवितव्यं संज्ञया चादर्शनं भाव्यते तदेतदितरेतराश्रयं भवति MahāBh. i. 158. 3 (on i. 1. 60); अदर्शनम् अश्रवणम्, अनुच्चारणम्, अनुपलब्धिः, अभावः, वर्णविनाशः इत्यनर्थान्तरम् KāśiVṛ. on P. i. 1. 60; अदर्शने लुक् तच्च अभावः Nyās. i. 191. 4 (on i. 2. 49); अदर्शनम् अभाव इत्येक एवार्थः Pradi. ii. 310A. 31 (on i. 4. 109); SaraKaṇṭhā.(Gr.) i. 1. 83; सतः अदर्शनस्य संज्ञा PadMañ. on KāśiVṛ. on P. i. 1. 60; वर्णानामदर्शनं लोपसंज्ञं स्यात् PrakriKau. i. 32. 2; अदर्शनं लोप इत्यतोऽदर्शनमित्यनुवर्तते LaSabdeSe. i. 245. 12; **5A** destruction, end, vanishing completely अविज्ञानाच्च भारत। शास्त्रं प्राज्ञस्य वदतः समूहे यात्यदर्शनम् MahāBhā. xii. 140. 20; सः ··· ध्वजः। सुदर्शनस्त्वदर्शनं जगाम धरणीतले Rāmā. iii. 532*(1); काम्बोजमखकुरुकैकयखशाद्याः। यास्यन्त्यदर्शनम् BhāgP. ii. 7. 35; इमा नद्यः ··· समुद्रं प्राप्य उपगम्य अस्तमदर्शनं नामरूपतिरस्कारं गच्छन्ति PraśnaUBh. 303. 7 (on 6. 5); विनाशमदर्शनमभावम् ··· न कर्तुमर्हति GītāBh.(Śaṅ.) 29. 16 (on 2. 17); तत्तामाप्त्र प्रणश्यामि नादर्शनमुपयामि GītāBh.(Rā.) 346. 4 (on 6. 30); णश अदर्शने DhātuPra. 4. 88 (97. 4); नाशोऽदर्शनम् Aparā. 773. 13 (on 2. 165); न नश्यति स्वयमदर्शनं न याति ManvaVi. 796. 10 (on 7. 83); णश अदर्शने, प्रणश्यति PrakriKau. ii. 244. 1; Prasā. ii. 242. 9; ii. 394. 10; नष्टा अदर्शनं गता स्वामिनः BālamBha. ii. 280. 22 (on 2. 161); AmaK. 2294; Vaija. 216. 31; NānārthāSam. i. 26. 69; SabdaRa.(Vā.) 3415; 3898; KalpaK. 242. 65; विनाशः स्याददर्शनम् KośaKaTa. 2. 727; **5B** antecedent non-existence of perception न चादर्शनेऽसिद्धे दृष्टदृष्टिः सिद्ध्येत् IṣṭaSi. 23. 22 (comm. दर्शनप्रागभावः); **6A** failure to show oneself, to be available to meet अदर्शनं कार्यनिर्वेदः (स्त्रीव्यसनस्य दोषाः) ArthŚā. iii. 22. 4 (8. 3); अदर्शनं वृथाभ्युपगमश्चेति विरक्तलिङ्गानि NītiVā. 32. 3; मृगयास्त्रीव्यसनयोः स्त्रीव्यसनं दुष्टम्। तत्र दर्शन(? नं) कार्याणां कालातिपातेन धर्मलोपादयः दोषाः ManvaMu. 256. 14 (on 7. 52); अदर्शने दोषमाह महाभारते कृष्णद्वैपायनः - अर्थिनामुपसन्नानां यस्तु नोपैति दर्शनम्। सुखेषु सक्तो नृपतिः ViraMi.(Vyavahāra.) 92. 22; **6B** failure to see or meet, neglect, disregard, not taking note of शका यवनकाम्बोजाः ···। वृषलत्वं परिगता ब्राह्मणानामदर्शनात् MahāBhā. xiii. 33. 19; क्षत्रियजातयः। वृषलत्वं गता लोके ब्राह्मणादर्शनेन च ManuSm. 10. 43; स्त्रीमृगयाव्यसनयोः स्त्रीव्यसनं गरीय। अदर्शनं कार्याणाम् ManuBh ii. 17. 5 (on 7. 52); अतश्चादर्शनेऽन्यथादर्शने वा राज्ञो दोषो न ब्राह्मणानाम् Mitā. 125. 15 (on 2. 1); तत्प्रयोजनमदर्शनान्यथादर्शनयोर्न तेषां दोषः किंतु राज्ञ एवेति बोधनम् ViraMi.(Vyavahāra.) 10. 20; **7A** not the accepted view, not the correct stand point or doctrine ज्ञातान् सृजत्यसौ तान्वा नेति ज्ञातेष्वदर्शनम् SivaDṛ. 2. 25; अदर्शनमेव दर्शनं प्रतिरूपयति दर्शनमिव दर्शयति TātpaṬ.(Vā.) 42. 21 (on i. 1. 1); न सूत्रं न च भाष्यं स्यात्स्वादेतदर्शनम् NyāyRaMā. 150. 4; **7B** nescience, erroneous knowledge तस्यादर्शनस्याभावाद् बुद्धिपुरुषसंयोगाभावः YogBh. 97. 6 (on 2. 25); अज्ञानमदर्शनमिति ब्रुवाणो विकल्पतः पर्यनुयोज्यः NyāyVār. 447. 9 (on iii. 2. 69); ऋतलामेऽस्य को हेतुर्न इतोऽन्योऽस्त्यदर्शनात् TaiUBhVā. 48. 2; अदर्शनमविद्या संयोगनिमित्तमित्युक्तम् TattvVai. 92. 26 (on 2. 23); न दृश्यतेऽनेन पुरुषत्वमिति अदर्शनं तमः VedāntKa. 258. 13 (on ii. 2. 10); **8A** not the organ of sight अक्ष्णोऽदर्शनात् P. v. 4. 76; **8B** meaning other than 'seeing' अदर्शनेऽर्थे शमो हस्वो भवति। शमयति रोगम्। अदर्शने इति किम्। निशामयति रूपम् CāndraVṛ. on vi. 1. 56; शमोऽदर्शने SākaṭaVyā. iv. 1. 203; SiddhaHe. iv. 2. 28; PrakriKau. ii. 324. 6; **9** desire to see दिदृक्षाविशेषोऽदर्शनमिति चेत्। अथ मन्यसे नादर्शनं दर्शनाभावः किं तु दिदृक्षादर्शनमित्युच्यते NyāyVār. 446. 18 (on iii. 2. 69); [Kośas give the meanings: piles (?) दुर्णामादर्शनं ज्ञेयम् DharK. 1478; (m.) darkness तमसं तमः।··· खलत्वग्ध्वान्तोऽप्यदर्शनः KalpaK. 361. 6]

**अदर्शन** (a-darśana) *adj.* [*f.* -ā] **i** which cannot be seen, invisible, absent अदर्शनाद् ग्रामात् KātyŚS. xxi. 3. 18 (comm. सप्तम्यर्थे पञ्चमी। ग्रामाददर्शने। यत्र क्षितिर्ग्रामो न दृश्यते); न दर्शने (v. l. अदर्शने) तिष्ठति रूपमस्य MahāBhā. v. 45. 17 = SanSu. 4. 23 (Śaṅ. दर्शनायोग्ये विषये); बभूवादर्शनः सूर्यः HariVaṁ. 54. 3; इत्युक्त्वा भगवानग्निः पद्मयतस्तस्य वै मुनेः। बभूवादर्शनः सद्यः MārkP. 100. 19; एभ्योऽधिकैःकालभागैर्द्वया न्यूनैरदर्शनाः। भवन्ति लोके खचरा भानुभाग्रस्तमूर्तयः SūryaSi. 9. 9; श्वानः सूकरकुक्कुटाः। रजःस्वला च चण्डालः श्राद्धे कार्यास्त्वदर्शनाः BṛhaspaSm. 333. 48; जन्तवोऽणवः। अपादवृत्तताश्च सौक्ष्म्यात् केचिददर्शनाः AṣṭāSaṁ. i. 299. 10 (3. 14); RugVi. 7. 11; भावा मूर्ताः सर्व एव सूक्ष्मसूक्ष्मतरादिना। ज्ञेया अत्रयवैनैते यावद् यावददर्शनाः SivDṛ. 5. 84; अष्टोत्तरशतं जप्त्वा अदर्शनः खेचरोऽमितगतिः संपद्यते PārāSū. 82. 1; यानं वैहायसं नाम दृश्यमानमदर्शनम्। आश्रितस्तद् विमानाग्र्यम् BhāgP. viii. 10. 17; सत्ये अदर्शना या च त्रेतायां सूक्ष्मरूपिणी BrahmVaiP. ii. 1. 117 = DeviBhāP. ix. 1. 111; PariPar. 2. 479; तस्य हुंकारमात्रेण जज्ञे लुब्धददर्शना SamarāSaṁ. 8. 369; PārśvC. 2. 295; नाशन्तं दर्शयेद् देयं न चात्यन्तमदर्शनम् VitaVṛ. 23; **ii** having no cognition तेनादर्शनमप्याहुः सर्वे सर्वविदं जिनम्। अनाभोगेन निःशेषसर्वविकार्यसंभवात् TattvSaṁ. 2050 (comm. नास्य दर्शनमुपलम्भोऽस्तीति अदर्शनः); **iii** making invisible, annihilating राम ते पादयुगलं दर्शितं मोक्षदर्शनम्। अदर्शनं भवार्णानां सन्मार्गपरिदर्शनम् AdhyāRā. iv. 6. 67; **iv** not possessing the right faith अव्रतस्तोऽपि मुक्तिस्थो न व्रतस्थोऽप्यदर्शनः YaśasCam. ii. 324. 16; **v** possessing the power of becoming invisible, YaśasCam. ii. 324. 16.

**अदर्शनकामता** (adarśanakāma-tā) *f.* desire not to see, lack of desire for being together [WBTF]

**अदर्शनकालभाविन्** (adarśanakālabhāv-in) *adj.* occurring at the time of its absence दृश्यमानस्यादर्शनकालभाविनमभावं प्रतिपद्यते नासीदयमिदेति PrakaPañ. 291. 9.

**अदर्शनकृत** (adarśana-kṛta) *adj.* caused by absence तथातु। वरमाबाभ्याम् ··· अदर्शनकृतान्क्लेशाननुभूतान् न पुनरस्य ··· वदनमीक्षितुम् Kād. 294. 5.

**अदर्शनगत** (adarśana-gata) *adj.* **i** gone out of sight अदर्शनगतौ ज्ञात्वा भ्रातरौ पार्थिवात्मजौ। गुहः सूतश्च सस्नेहौ न्यवर्तेतां ततः पुनः Rāmā. II. App. i. 17. 4; **ii** become invisible अदर्शनगतो मन्त्री किं न कुर्याच्च भूतले JayāS. 28. 124.

**अदर्शनज** (adarśana-ja) *adj.* caused by disappearance (i. e. departure) तस्यादर्शनजः शोकः ···। उच्छोषयति मे प्राणान् Rāmā. ii. 1490*(1)

**अदर्शनजन्मन्** (adarśana-janman) *adj.* caused by disappearance जामातुरदर्शनजन्मा शोकः पुनरस्माकमुपशमयितुमवशिष्यते AnarghaRā. 3. 12 (1)

**अदर्शनज्ञ** (a-darśanajña) *adj.* not versed in philosophy अदर्शनज्ञो देवानां प्रियः । नात्रोत्पत्त्यपेक्षया प्रयोज्यप्रयोजकभावो विवक्षितः NyāyMañ. ii. 138. 32.

**अदर्शनतप्त** (adarśana-tapta) *adj.* distressed at (his) absence तस्य दर्शनतृष्णं (v. l. तस्यादर्शनतप्तं) मां सानुजं वनमास्थितम् । याज्ञसेन्याः परामर्शः स च वीर दहत्युत MahāBhā. iii. 142. 4.

**अदर्शनतस्** (adarśana-tas) *adv.* due to non-observation यदि स्याद्विधिशब्दोऽत्र नैवादर्शनतो भवेत् । विशेषोऽस्येति भेदेन नोपात्तं स्यादिदं ततः S'lokaVār. 496. 5 ((5) 13. 11); यथा तथा निशाभ्रान्तिर्जातादर्शनतो रवेः VīraBhā. 3. 4; संदर्शनादेव कृतं दृगुत्थं योग्यं न चादर्शनतश्च तस्य (भानोः) SiddhāTaVi. 295. 16 (11); देव त्वद्दर्शनादेव लीयन्ते पुण्यराशयः । किं चादर्शनतः पापमशेषमपि नश्यति RasGaṅ. 422. 3; क्षणाददर्शनतो दीनाः सदा सहविहारिणः। ··· वयस्या व्रजवासिनः BhaktiRaSi. iii. 3. 8.

**अदर्शनता** (adarśana-tā) *f.* disappearance सहैव दीधितिभिरदर्शनतामुपगते भगवति गभस्तिमालिनि Kād. 205. 18.

**अदर्शनत्व** (adarśana-tva) *n.* non-observation सर्वथा तावद्राकाकुह्वोरेव चन्द्रमसः पूर्णत्वमदर्शनत्वं चेति ज्योतिश्शास्त्रे प्रसिद्धम् SmṛtiCan. v. 39. 10.

**अदर्शनदशा** (adarśana-daśā) *f.* the state of non-observance स एव कुतः, दर्शनदशायां भावनिश्चयात्, अदर्शनदशायामभावावधारणात् NyāyKuA. i. 166. 2.

**अदर्शनदेव** (adarśana-deva) *m.* name of a person ज्येष्ठस्वामि-अदर्शनदेव-धनदेव° EI. ix. 288. 14.

**अदर्शननिबन्धन** (adarśana-nibandhana) *adj.* depending on non-perception अनवस्थानं चादर्शननिबन्धनम् PrakaPañ. 372. 6.

**अदर्शननिमित्त** (adarśana-nimitta) *adj.* [*f.* –ā] I caused by non-perception किमयं प्राप्तिप्रत्ययः प्राप्तिनिमित्त आहो अप्राप्तेरदर्शननिमित्त इति सन्दिह्यते NyāyVār. 239. 8 (*on* ii. 1. 31); II caused by lack of discrimination अदर्शननिमित्ता चेत् शरीरोत्पत्तिर्भवति NyāyVār. 446. 9 (*on* iii. 2. 69); अदर्शनादभावेऽवगते पश्चादुपजायमाना बहिर्भावमतिर्नादर्शननिमित्ता NyāyRa. 453. 20 (*on* 5(7). 14); *n.* cause of non-cognition तस्याप्यदर्शननिमित्तं चेत्येव तस्य तस्यान्यदित्यनवस्था TantrVā. 382. 9 (*on* ii. 1. 5)

**अदर्शननिवृत्ति** (adarśana-nivṛtti) *f.* removal of ignorance न तस्य साधनं दर्शनमपि त्वदर्शननिवृत्तेरित्यर्थः TattvVai. 93. 11 (*on* 2. 23)

**अदर्शनपथ** (adarśana-patha) *m.* region beyond the reach of vision सोऽदर्शनपथं यात्वा मर्त्यानां भूमिचारिणाम् । ददर्शाद्भुतरूपाणि विमानानि MahāBhā. iii. 43. 28; किं पूर्वोचितमेतदत्र सहसा विस्मृत्य मन्योर्भरान्मय्युत्कण्ठमनस्यदर्शनपथं यातास्यहो कोपने Subhāṣi. 1372.

**अदर्शनपरीषह** (adarśana-parīṣaha) *m.* hindrance in the form of losing faith [JainL.]

**अदर्शनप्रयोग** (adarśana-prayoga) *m.* method of becoming invisible अदर्शनप्रयोगांश्च जानेऽहमुपयोगिनः KathāSaSāg. ii. 4. 42.

**अदर्शनप्रसङ्ग** (adarśana-prasaṅga) *m.* contingency of non-observation ननु चालोकापवारणे भूभागादेरदर्शनप्रसङ्गः PrakaPañ. 323. 12; परात्मा तु कथं परस्यायोग्यः। ··· स्वयमप्यदर्शनप्रसङ्गात् NyāyKuA. i. 154. 6.

**अदर्शनप्राप्ति** (adarśana-prāpti) *f.* attaining of non-perception अस्तमने अदर्शनप्राप्तेः वायुनिमित्तत्वात् ChāndoUBh. 213. 15 (*on* iv. 3. 1)

**अदर्शनमात्र** (adarśana-mātra) *n.* I mere non-perception व्यतिरेकसाधनस्यादर्शनमात्रस्य संशयहेतुत्वात् PramāVāSvopVṛ. 7. 5; न चादर्शनमात्रेण ताभ्यां प्रत्यायनं भवेत् TattvSaṁ. 936; S'lokaVār. 5(13). 75 (585. 5); Kāśi. i. 126. 8 (*on* 2. 117); iii. 78. 23 (*on* 5(4). 131); बाधाददर्शनं ब्रूयात्ततो निष्प्रमाणकं वदेदयं त्वदर्शनमात्रं वदति TantrVā. 1115. 14 (*on* iii. 6. 42); विपक्षेऽदर्शनमात्रान्नाविनाभावनियमः PrakaPañ. 198. 10; NyāyMañ. i. 102. 8; दृश्यादर्शनमभावे प्रमाणं, नादर्शनमात्रम् NyāyRa. 482. 18 (*on* 5(8). 27); असाधारणं संयोगहेतुमदर्शनविशेषं ग्रहीतुमदर्शनमात्रं विकल्पयति TattvVai. 93. 12 (*on* 2. 23); न ह्यदर्शनमात्रेण कर्त्रपलापः। त्वन्मतेऽपि सर्वज्ञकर्तुरसिद्ध्यापत्तेः AdvaiSi. 759. 13; न ह्यदर्शनमात्रेण भानोः संभाव्यते च्युतिः BṛKathāS'loSaṁ. 20. 297; न हि ··· जात्यन्धः तमोऽपि ग्रहीतुं शक्नोति, अदर्शनमात्रस्यैव तद्रूपत्वात् Bhāsk. 71. 18 (*on* i. 1. 4); II mere absence (of probandum and probans) of perception तदनुपपन्नमिवाशङ्क्यते – अशेषाविपक्षापेक्षित्वेनादर्शनमात्रावसेयत्वेन च सुखग्राह्यत्वादन्वयनिरपेक्षस्य व्यतिरेकमात्रस्यैवाङ्गत्वात् TātpaṬ.(U.) 337. 17 (*on* 5(4). 131); इदानीं पुनरर्थक्रियासमर्थता दिविशेषदर्शनशून्यचेतसामुपलब्ध्यनुपलब्ध्यदर्शनमात्रोपपत्तेस्संशयो वर्ण्यते NyāyMañ. ii. 125. 8.

**अदर्शनमात्रगम्य** (adarśanamātra-gamya) *adj.* cognizable by mere non-perception स (विपक्षव्यतिरेकः) ह्यदर्शनमात्रगम्यः सुकरं च सर्वधूमानामप्येकदेशस्थैर्नैवानग्निष्वदर्शनम् NyāyRa. 388. 9 (*on* 5(4). 132)

**अदर्शनमानिनी** (adarśana-māninī) *adj.* (*f.*) who thinks herself to be invisible उपास्यते किंनरगायनीभिः स्त्रीभिस्सहादर्शनमानिनीभिः।··· यथार्थिताशेषफलप्रदायी Rāvaṇā. 10. 42.

**अदर्शनमारुत** (adarśana-māruta) *adj.* (fanned by) the wind of lack of sight अयं तु मामात्मभवस्तवादर्शनमारुतः । ··· कर्शयित्वाधिकं पुत्र निःश्वासायाससंभवः (मां शोकाग्निः ··· प्रधक्ष्यति) Rāmā. ii. 527*(3)

**अदर्शनयोग्यभूत** (a-darśanayogyabhūta) *adj.* not subject to seeing, invisible असत् अदर्शनयोग्यभूतावाकाशवायू, तदादि(? नीं) तादृग्वस्तु नासीत् तदानीं प्रलये S'aṅkaVi.(Ā.) 30. 5.

**अदर्शनलक्षण** (adarśana-lakṣaṇa) *adj.* of the nature of ignorance तेऽदर्शनलक्षणं तमः प्रविशन्ति BṛĀraUBh. 631. 19 (*on* iv. 4. 11); इतरे तु प्राणं न पश्यन्तीत्यदर्शनलक्षणं कृष्णात्मानमेव पश्यन्ति PraśnaUBh. 247. 9 (*on* 1. 12)

**अदर्शनविशेष** (adarśana-viśeṣa) *m.* particular kind of ignorance असाधारणं संयोगहेतुमदर्शनविशेषं ग्रहीतुमदर्शनमात्रं विकल्पयति TattvVai. 93. 12 (*on* 2. 23)

**अदर्शनविषयत्व** (adarśanaviṣaya-tva) *n.* the state of being the object of non-perception (ignorance?) एवं तावद्यावदशक्यभङ्गत्वमदर्शनविषयत्वं च भवति NyāyMañ. ii. 72. 26.

**अदर्शनशोक** (adarśana-śoka) *m.* grief caused by not seeing (or disappearance) तवादर्शनशोकेन राघवः प्रविचाल्यते Rāmā. v. 33. 44; जामातुरदर्शनजन्मा शोकः (v. l. अदर्शनशोकः) AnarghaRā. 3. 12(1)

**अदर्शनश्रुति** (adarśana-śruti) *f.* Vedic text enjoining invisibility of the moon (as the proper occasion for performing the Pitṛyajña) अदर्शनश्रुतेः क्षयोपलक्षणत्वञ्चाह स एव CaturCin. iii(1). 179. 16.

**अदर्शनसंविग्न** (adarśana-saṁvigna) *adj.* frightened by the disappearance परित्यज्य च पाञ्चालं प्रयाताः ··· । राज्ञोऽदर्शनसंविग्ना वर्तमाने जनक्षये MahāBhā. ix. 24. 56.

**अदर्शनसंज्ञित्व** (adarśanasañjñi-tva) *n.* the state of being a technical term for disappearance or loss लुपोऽदर्शनसंज्ञित्वादर्थगतिर्नोपपद्यते Vār. 2 (*on* i. 2. 51) = (MahāBh. लुब्नामेयमदर्शनस्य संज्ञा क्रियते)

**अदर्शनसत्त्व** (adarśana-sattva) *n.* existence of absence of seeing त्रपु इत्यत्र क्विपोऽदर्शनसत्त्वेन प्रत्ययलक्षणेन तुगापत्तिर्दोषः LaS'abdeS'e. i. 87. 2.

**अदर्शनसदृशत्व** (adarśanasadṛśa-tva) *n.* the state of being equal to absence of seeing सद्योजातबालदीपदर्शनस्य यथादर्शनसदृशत्वं भवति तथाप्रकाशसदृशत्वादित्यर्थः Bhāsk. i. 24. 9 (*on* i. 1. 1)

**अदर्शनसंदिग्ध** (adarśana-sandigdha) *adj.* hesitant on account of the disappearance परित्यज्य च पाञ्चालं प्रयाताः ···। राज्ञोऽदर्शनसंविग्नाः (v. l. °संदिग्धाः) वर्तमाने जनक्षये MahāBhā. ix. 24. 56.

**अदर्शनसंभव** (adarśana-sambhava) *m.* possibility of the absence of perception विग्रहवतीनामपि तासामितरपदार्थेभ्यो विशेषसामर्थ्येनादर्शनसंभवात् TattvPrakā. 83A. 2 (*on* ii. 1. 6)

**अदर्शनसंभावना** (adarśana-sambhāvanā) *f.* possibility of non-appearance चन्द्रमसः शुक्लद्वितीयायां किंचिदूनार्धपर्यन्तमदर्शनसंभावना AdbhuSāg. 42. 7.

**अदर्शनसहचरित** (adarśana-sahacarita) *adj.* associated with non-appearance अदर्शनसहचरितो योऽर्थस्तस्य गतिर्भविष्यति MahāBh. i. 227. 23 (*on* i. 2. 51)

**अदर्शनसामान्य** (adarśana-sāmānya) *n.* common feature of disappearance तस्माददर्शनसामान्याल्लोपसंज्ञा लुमत्संज्ञा अवगाहते MahāBh. 1. 162. 11 (*on* i. 1. 62)

**अदर्शनस्थित** (adarśana-sthita) *adj.* invisibly present स पश्यति ··· डाकिनीभूतवेतालगणं चादर्शनस्थितम् JayāS. 28. 120.

**अदर्शनहेतुका** (adarśanahetu-kā) *adj.* (*f.*) caused by non-cognition अदर्शनादभावे च प्रमेयस्यावधारिते । बहिर्भावमतिर्नासौ तेनादर्शनहेतुका S'lokaVār. 454. 1 (*on* 5(7). 15)

**अदर्शनहेतुत्व** (adarśanahetu-tva) *n.* the state of being the cause of non-perception तस्मादतिदूरवदतिसामीप्यस्याप्यदर्शनहेतुत्वादग्रहणमेवोभयोरिति NyāyMa. 77. 11.

**अदर्शना** (adarśanā) *f.* name of a Mātṛ (Mother) (created by S'iva) पानार्थमन्धकास्रस्य सोऽसृजत् ··· अदर्शना हरतपापा MatsyaP. 179. 27.

**अदर्शनात्मक** ( adarśanātma-ka ) *adj.* of the nature of ignorance अन्धम् अदर्शनात्मकं तमः BṛAraUBh. 631. 9 (*on* iv. 4. 10); अन्धेन अदर्शनात्मकेनाज्ञानेन तमसा आवृताः आच्छादिताः ĪśopBh. 9. 2 (*on* 3)

**अदर्शनादि** ( adarśanādi ) *adj.* i lack of observation etc. व्रीडादिभिरदर्शनादिभिर्वैश्चनादिभिर्वैविध्यं प्रतीयते SaraKaṇṭhā. 613. 6; मोहः ··· तत्राज्ञानभ्रमापातघूर्णनादर्शनादयः SāhiSā. 5. 24; ii the country 'Adarśana' etc. अस्मिंस्तु अदर्शनादयः शब्दाः पश्चात्सिन्धुरित्याद्युदाहृतश्रुत्युक्तत्तद्देशपराः न ह्यन्ये ViraMi. (Paribhāṣā.) 57. 8.

**अदर्शनादिकृत्** ( adarśanādi-kṛt ) *adj.* causing lack of sight etc. मोहः ··· मूर्च्छनाज्ञानपतनभ्रमणादर्शनादिकृत् SāhiDa. 150. 12.

**अदर्शनादितस्** ( adarśanādi-tas ) *adv.* due to not being seen or shown etc. एवमविशेषेणादर्शनादितो लेख्यहानिप्राप्तावपवादमाह स एव SmṛtiCan. iii. 152. 8.

**अदर्शनानुपपत्ति** ( adarśanānupapatti ) *f.* impossibility of non-perception न च वचनमद्दृष्ट्वा पूर्वः पक्ष इति युक्तमधीतवेदस्य ब्रह्मजिज्ञासाधिकाराददर्शनानुपपत्तेः Bhām. 476. 15 (*on* ii. 3. 9)

**अदर्शनापत्ति** ( adarśanāpatti ) *f.* consequence of becoming invisible वटधानादीनाम् ··· अवयवानामपचयवशाद्दर्शनापत्तौ उच्छेदसंज्ञा BrahmSūBh. (Śaṅ.) 324. 3 (*on* ii. 1. 18)

**अदर्शनाभाव** ( adarśanābhāva ) *m.* absence of ignorance अदर्शनाभावादेव बन्धाभावः स मोक्ष इति YogBh. 93. 1 (*on* 2. 23)

**अदर्शनाभिधान** ( adarśanābhidhāna ) *n.* statement of non-perception दूरभूयस्त्वादिलदर्शनाभिधानालम्बनप्रतिपादनार्थं भाष्यम् ··· व्याचष्टे NyāySu. (So.) 63. 7 (*on* i. 2. 12)

**अदर्शनाभिमता** ( adarśanābhimatā ) *adj.* (*f.*) intended by the expression 'non-perception' या चानुत्पन्ने शरीरे दर्शनानुत्पत्तिरदर्शनाभिमता NyāyBh. 237. 2 (*on* iii. 2. 68)

**अदर्शनाभ्यास** ( adarśanābhyāsa ) *m.* frequency of not seeing क्वचित्व(तु)दर्शनाभ्यासः तिमिरं चक्षुषः क्वचित् NyāyMañ. i. 83. 35.

**अदर्शनायत्त** ( a-darśanāyatta ) *adj.* based on non-perception or non-experience तद्यवज्ञकृतदितरविभागस्ते कुतस्त्यः । दर्शनादर्शनायत्त इति चेत् NyāyPari. 501. 18.

**अदर्शनार्थत्व** ( adarśanārtha-tva ) *n.* the state of being expressive of elision or disappearance लुक्यपि प्रत्ययलक्षणं भवति लोपस्यादर्शनार्थत्वात् PariVṛ.(Sī.) 17. 10.

**अदर्शनावधारित** ( adarśanāvadhārita ) *adj.* ascertained through non-perception अदर्शनावधारितस्य चैत्राभावस्यैवान्यत्रानुपयुक्तस्य हेतुत्वं संभवति TātpaṬ.(U.) 391. 19 (*on* 5(8). 15) = Kāśi. iii. 166. 19 (*on* 5(7). 14–15)

**अदर्शनी** ( adarśanī ) *f.* name of a lore causing invisibility संक्षेपेण करिष्यामि विधानां नामकीर्तनम् । वज्रोदरी ··· अदर्शनी PadmP.(Ra.) 7. 328.

**अदर्शनीभूत** ( adarśanī-bhūta ) *adj.* i gone out of sight चित्रग्रीवोऽपि तं प्रतिनिवृत्तं दृष्ट्वा तानब्रवीत् ( v. l. लुब्धकमदर्शनीभूतं ज्ञात्वा तानुवाच ) PañcT. 2. 2 (187. 3); आषाढभूतिरपि तस्मिन्नदर्शनीभूते मात्रामादाय सत्वरं प्रस्थितः Pañcā. 25. 17; ii become invisible क्षणेनादर्शनीभूते तस्मिन् ··· अश्वसेनराट् ··· पृष्टो गन्तुमुद्यतः PārśvC. 6. 1025; 7. 462; तस्मिंश्चादर्शनीभूते तावयोध्यापुरीं प्रति । ससैन्यौ चलितौ SamarāSam. 8. 314; श्रुत्वेत्यदर्शनीभूतः खेचरो वानमन्तरः SamarāSam. 8. 527.

**अदर्शनीभूय** ( adarśanī-bhūya ) *ger.* having disappeared, having gone out of sight कर्कटोऽदर्शनीभूय तस्यावन्यत्र तोषतः BṛKathāK. 105. 64.

**अदर्शनीय** ( a-darśanīya ) *adj.* [*f.*-ā] 1A unpleasant to see, ugly to see, unsightly तस्मात्तेनोभयं पश्यति दर्शनीयं चादर्शनीयं च ChāndoU. i. 2. 4; दर्शनीयं चैनेन पश्यत्यदर्शनीयं च JaiUBr. i. 60. 3; अदर्शनीयात् ŚāṅkhāGS. iv. 7. 25; अदर्शनीयाश्रवणीयानिष्टाघ्राणे KauṣiGS. iii. 9. 23; 1B prohibited from being seen अदर्शनीयस्त्रीलोके मद्वाक्यात्त्वं ( चन्द्रः ) भविष्यसि GaṇeP. i. 61. 7; i. 72. 35; स मूर्त्या सद्भिरभूददर्शनीयः Yādavā. 15. 105; अदर्शनीयानपि नीचजातीन् स वीक्षते CaitaCa. 18S. 8; अथादर्शनीयान्यपि तत्रैव ViraMi.(Āhnika.) 22. 11; 1C which connot be seen, invisible, impossible to be seen भगवत्या प्रकाशितमिदमदर्शनीयमन्येषाम् ··· मानवानाम् ··· दिव्यमात्मीयं रूपम् TilaMañ. 55. 18; अदर्शनीयमशुभदर्शिभिः ··· वलमेदनपुरमेदनम् ··· परमास्रावती वसुमती सत्वरमवजगाहे ĀnandRa. 1. 8 (30); 2 not to be presented on the stage अङ्केष्वदर्शनीया या वक्तव्यैव च संमता ··· कथा SāhiDa. 292. 3.

**अदर्शनीयता** ( adarśanīya-tā ) *f.* i the state of being unfit to be seen अनेनादर्शनीयेन गतश्चादर्शनीयताम् GaṇeP. i. 72. 35; ii disappearance व्याघ्रोऽपि ··· अदर्शनीयतां प्राप्य यथास्वं निलयं गतः BṛKathāK. 157. 86.

**अदर्शनीयमानिन्** ( adarśanīya-mānin ) *adj.* regarding as not worthy to be seen इयेतायितायास्तददर्शनीयमानी स लाटो भवदीयकीर्तेः । ··· कुर्यां पदयन्दिदेश DvyāśraKā. 6. 38.

**अदर्शनीयोत्क्षेपणीय** ( adarśanīyotkṣepaṇīya ) *adj.* (ceremony) of suspension (from the order) which is not fit to be seen प्रतिसंहरणीयकर्माद्यादर्शनीयोत्क्षेपणीयं कर्म कुर्वन्ति । अधर्मकर्म पूर्ववत् GiMs. iii(2). 208. 18; iii(2). 208. 20–21.

**अदर्शनेच्छा** ( adarśanecchā ) *f.* 1 desire of not being seen, desire of concealment अदर्शनेच्छायां सत्यां सत्यपि दर्शने यथा स्यात् KāśiVṛ. *on* P. i. 4. 28 = SiddhāKau. 148B. 10; अदर्शनेच्छया तदनुकूलव्यापारकरणे दैववशाद्दर्शने सत्यपीत्यर्थः LaŚabdoŚe. i. 500. 11; Prasā. i. 482. 11; 2 absence of desire to see असौ परप्रेमपदं स्वभावात् ··· अदर्शनेच्छामितरेषु दत्ते Yādavā. 18. 93.

**अदर्शनेच्छु** ( a-darśanecchu ) *adj.* not desirous of seeing मद्याद्दत्वप्रौढिमदर्शनेच्छोः पालीव क्लृप्ता पटमण्डपानाम् Raghunā. 9. 58.

**अदर्शनोक्त्यालम्बन** ( adarśanokty-ālambana ) *adj.* reference to the statement of absence of knowledge अदर्शनोक्त्यालम्बने च ··· दुर्ज्ञेयत्वे दूरशब्देनोक्ते NyāySu.(So.) 9. 22 (*on* i. 2. 2)

**अदर्शनोपपादक** ( adarśanopapādaka ) *adj.* proving absence of sight यथैवादर्शनोपपादकं तदन्तर्गतप्रतिपादनमपेक्षितम् ŚivārkaMaDi. i. 554. 14 (*on* i. 4. 22)

**अदर्शमुख** ( adarśamukha ) *m.* name of a Nāga king [DBHS]

**अदर्शयत्** ( a-darśayat ) *adj.* i not showing प्राप्नोतीन्द्रस्य सालोक्यं शूरः पृष्ठमदर्शयन् MahāBhā. xii. 98. 31; नखपृष्ठमदर्शयन् । प्रोक्षयेदर्घ्यवारिणा PāraS. 7. 52; भोजनविरोधिनं दोषमदर्शयन् तं तथा कुर्वाणो दण्ड्यः DaṇḍaVi. 215. 17; राजा शौर्यशक्तिमदर्शयन् ··· अरिभिः परिभूयते PuruṣPa. 42. 21; ii not mentioning, not stating स्नानेनेतिकर्तव्यतायाः संहितान्तरे प्रपञ्चितत्वात्तामदर्शयन्नेव मध्याह्नकृत्यं ( स्मारयति ) ViraMi. 195. 22 (*on* 1. 100)

**अदर्शयित्री** ( a-darśayitrī ) *adj.* (*f.*) which does not manifest anything [Conze]

**अदर्शयित्वा** ( a-darśayitvā ) *ger.* i without parading, without making a show, without displaying ostentatiously अदर्शयित्वा शूरास्तु कर्म कुर्वन्ति दुष्करम् Rāmā. vi. 53. 4; ii without bringing forward (money for payment), without paying up or giving अदर्शयित्वा तत्रैव हिरण्यं परिवर्तयेत् ManuSm. 8. 155; अदर्शयित्वा ··· अदत्त्वा ManuBh. ii. 147. 24 (*on* 8. 155); ManvaVi. 972. 23 (*on* 8. 155); SmṛtiCan. iv. 379. 1; iii without showing, not having shown or exhibited अदर्शयित्वा स्वगुणम् ··· त्यागं ते त्यागकल्पद्रोऽपि गृह्णाम्यहं कथम् TriṣaŚaPuC. ii. 6. 267; शोणितमदर्शयित्वैव काष्ठादिभिः परस्य दुःखमुत्पादयन् ( त्रिंशतं पणान् दाप्यः ) Aparā. 815. 4 (*on* 2. 218); निहितन्यासो गृहस्वामिनेऽदर्शयित्वा तत्परोक्षमेव तदीयजनहस्ते प्रक्षेपः ViraMi. 494. 24–25 (*on* 2. 67); रूपसंख्ये अप्रदर्शयित्वा ( v. l. अदर्शयित्वा ) रक्षणार्थं यद्दीयते स उपनिधिः BālamBha. ii. 35. 15 (*on* 2. 25); iv without setting forth, without having indicated भवति चादर्शयित्वापि द्वौ पक्षौ ŚābaBh. 1854. 14 (*on* x. 2. 59)

**अदर्शरूपा** ( adarśa-rūpā ) *adj.* (*f.*) having an invisible form दिव्यानां देवयोनीनाम् ··· वज्रगराद्विप्रादिविषयागमनं तदाकाशेनैव ··· विमानेन मायया वा अदर्शरूपया अन्यामिर्वा कार्यम् AbhinBhā. ii. 201. 17 (*on* 13. 19)

**अदर्शविकारता** ( adarśavikāra-tā ) *f.* the state of being one in whom disturbance (of mind) is not visible केचित् ··· अदर्शविकारतया च निश्चिलं मां निश्चलमनसं समुत्पन्नकोपाः ··· निर्वातानधा(? पा)तयन् TilaMañ. 399. 17.

**अदर्शित** ( a-darśita ) *adj.* not stated, not set forth अप्रदर्शिते ( v. l. अदर्शिते ) पुनः समन्वयविशेषे तद्विरोधाशङ्का तन्निराकरणं च निर्विषयं स्यात् PañcPā. 2. 14 (*on* i. 1. 1) = VivaPraSam. 10. 13.

**अदर्शितत्व** ( adarśita-tva ) *n* the state of being not shown or stated व्यभिचारस्थलस्यादर्शितत्वात् NyāySu.(Ja.) 20B. 6 (*on* i. 1. 1)

**अदर्शितपथ** (adarśita-patha) *adj.* to whom no path has been shown or laid down अदर्शितपथं याति पयो ह्यधत्वदुत्पथे TriṣaŚaPuC. ii. 6. 542; *n.* path not shown before, unseen course "विशेषकन्यासमदर्शितपथप्रवृत्त" ··· "सुरतर(स)तृप्तिमन्वगच्छत् AvantiKa. 36. 15.

**अदर्शितमुख** ( adarśita-mukha ) *adj.* not showing the face अदर्शितमुखा एव दुर्जना मनेवेधिनः YogVā. iii. 70. 60.

**अदर्शितरुज्** ( adarśita-ruj ) *adj.* who has not shown or disclosed the disease इत्यदर्शितरुजोऽस्य मन्त्रिणः शश्वदूचुरघशङ्किनीः प्रजाः RaghuVa. 17. 52.

**अदर्शितसंभ्रम** ( adarśita-sambhrama ) *adj.* who has not shown agitation अदर्शितसंभ्रमस्तामपृच्छत् ( नृपतिः ) TilaMañ. 55. 11.

**अदर्शितस्पन्द** ( adarśita-spanda ) *adj.* who has not shown any

movement अदर्शितस्पन्दमथैषदप्युं नटेशबिम्बं कलयन्नरेश्वरः ... देवमाराधयितुं समैहत S'ivLi. 16. 20.

**अदर्शितान्तरङ्गा** ( adarśitāntarangā ) *adj.* ( *f* ) who has not disclosed the inner feeling अनुगच्छति या महीपतीनामनघां नीतिमदर्शितान्तरङ्गाम् YātrāPra. 5. 9

**अदर्शिताभ्यर्थन** ( adarśitābhyarthana ) *adj.* who has not disclosed his request कस्याप्यदर्शिताभ्यर्थनो बन्धुजनमभ्यनालपन् ... ( अहम् ) एतावन्ति दिनान्ययापयम् TilaMañ. 383. 16.

**अदर्शितार्थिभाव** ( adarśitārthibhāva ) *adj.* who has not shown or disclosed the state of being a beggar द्रव्यादादर्शितार्थिभावस्य वचनमात्रेणापि मे न कृता प्रतिपत्तिः TilaMañ. 250. 15.

**अदर्शिन्** ( a-darśin ) *adj.* not seeing, who does not see अनुरूपः शमस्यास्य तवायं वचनक्रमः । बहुना तु किमुक्तेन वञ्चितास्त्वददर्शिनः JātaMā. 127. 12.

**अदर्शितविच्छेदम्** ( adarśita-vicchedam ) *adv.* in an unbroken manner, in a continuous manner यददर्शितविच्छेदं पठतामोजः Kāvyānu.(He.) 240. 5 [ Bombay 1964, p. 287 ]

**अदल्** ( adal ) *ind.* included in the *cādigaṇa*, GaṇPā. 85. 180 *on* P. i. 4. 57.

**अदल** ( a-dala ) *adj.* [दलरहिते त्रि S'abdaKaDru.] leafless, [ PW; MW; Apte ] without parts, [ Apte ]; *m.* [न दल्यते भिद्यते यत्, न दल्+घञर्थे कन् । हिज्जलवृक्षः । इति शब्दचन्द्रिका S'abdaKaDru. ] name of a plant *Eugenia* or *Barringtonia acutangula*, [ PW, MW, Apte ]

**अदलत्** ( adalat ) *adj.* not breaking, not discontinued or given up (usage) ननु भातितरामुपाधिरत्रादलदेतद्व्यवहृत्वेतेति चेन्न S'aṅkaDigVi.(Mā.) 15. 118.

**अदला** ( a-dalā ) *f.* [ ( नास्ति दलं पत्रं यस्याः सा ) घृतकुमारी । इति शब्दचन्द्रिका S'abdaKaDru. ] i name of the plant *Aloe, Indica royle*, [ PW; Apte ]; ii name of the plant *Socotorine Aloe* ( *Perfoliate* or *Indica* ) [ MW ]

**अदलित** ( a-dalita ) *adj.* A not split apart or rent asunder कदाचिदप्यदलितानि यानपात्रैः पाटयन्ती शुक्तरेति शैवलपटलानि ... स्वल्पेनैव समयेन दूरं जगाम ( नौका ) TilaMañ. 146. 19; B not crushed, whole pulses दलितादलिताश्चैते पचनीया यथारुचि । चणका राजमाषाश्च मसूरा राजमुद्गकाः Mānaso. iii. 13. 1359.

**अदवा** ( a-davā ) *adj.* ( *f.* ) devoid of forests का सत्सरणिः ... अदवा KavindraKa. 2. 4 (4–5) ( comm. अदवा वनरहिता सरणिः सुगमा चौरादिभयाभावात् )

**अदविष्ठ** ( a-daviṣṭha ) *adj.* ( super. ) not very remote or far ( from each other ), closely arranged अदविष्ठानि काष्ठानि रचितानि चिता यथा SamarāSam. 4. 621.

**अदवीयःप्राक्काल** ( adavīyaḥ-prākkāla ) *m.* immediately preceding time अत एव प्रतीच्योदीच्यादीनां विवाहाददवीयःप्राक्काले वाग्दत्तायास्तदुद्देश्ये मृतेऽपि पुनरविगीतशिष्टैरन्येन सह विवाहः क्रियते ViraMi. ( Vyavahāra ) 472. 1.

**अदवीयस्** ( a-davīyas ) *adj.* ( compa. ) [ *f.* –ī ] A not very distant, quite near, short, proximate ( spatial sense ) [ predicative use ] अदवीयः पदं तस्य सर्वासां संपदामिह । कमलाकान्तकान्ताङ्घ्रिकमले यः सुशीलयेत् SkandP. iv. 19. 111; iv. 58. 190; [ attributive use ] तेयां च सादिनामेकः साश्वेन तरस्विना । अदवीयसि देशेऽगाचन्द्रगुप्तस्य गच्छतः PariPar. 8. 259; 8. 421; विमुच्य तदहं राजन् वाहिनीमदवीयसीम् । इत्यास्थातुमिहायातः PāṇḍaC. 12. 185; HammiMaMa. 5. 21(?22) (3); साधुधर्मैः ... । अदवीयानयं मार्गो लोकाग्रमुपतिष्ठते । श्राद्धधर्मात् परं मोक्षो भवति द्वित्रिजन्मतः MalliC. 7. 941; S'atDū. 168. 12; पदवीमदवीयसीं विमुक्तेः ... करुणां कारणमानुषीं भजामि Yādavā. 15. 89; 9. 80; Acyutarā. 9. 73; अलमिङ्गा मखान् मूर्खाः खड्गधारेयमस्ति नः । अदवीयानयं पन्थाः स्वर्लोकमुपतिष्ठते AnargbaRā. 2. 61; VasaViKā. 10. 10; काचिदवातरदपाङ्गयोः पदवीमदवीयसीम् S'ṛṅgāSar. 115(9); B not far away, nearby, not too remote ( in time ), approaching ( fast ), impending ( temporal sense ) पुरुषेषु न रेखापि साधुभिस्तस्य दीयते । यः स्त्रिग्धमदवीयस्यां मित्रमापदि मुञ्चति PāṇḍaC. 13. 788; C not very distant ( i. e. close in relationship ) शोच्यं किमपि तस्यास्ति शान्तनोस्तनुजन्मनः । येनैवमदवीयांसो वीरलोका विनेशिरे PāṇḍaC. 13. 279.

**अदवीयस्त्व** ( adavīyas-tva ) *n.* the state of not being far away पु( ? न्तु )ष्यन्तं या( ? चा )ददवीयस्त्वात्पैस्तीनैर्विवलतः । ... आसीदत् -- हस्तिनापुरमर्जुनः PāṇḍaC. 5. 411.

[1]**अदश** ( a-daśa ) *adj.* without a border or fringe पत्तोऽदशेनाहतेन वाससा प्रोर्णोति BaudhPiMe. i. 2. 8.

[2]**अदश** ( a-daśa ) *adj.* [ *f.* –ā ] A less than ten उर्वी निस्त्रिंशपाणिरदशैः स जिगाय मासैः DvyāśraKā. 19. 137; B other than the tenth state of life ( which is supposed to be the most wretched ) परेषामदशा: ( दशाः ) Purā. PraSam. 121. 17.

**अदशकण्ठोचित** ( a-daśakaṇṭhocita ) *adj.* not befitting Rāvaṇa रावणः - किं पुनरसंभावनागर्भमदशकण्ठोचितं व्याहरसि BālRā. 1. 43(3)

**अदशग्रीवोपसर्ग** ( a-daśagrīvopasarga ) *adj.* free from the affliction caused by Rāvaṇa कल्पान्तं च कृतं च विश्वमदशग्रीवोपसर्गं जगत् AnarghaRā. 7. 150 = BhāvPra.(S'ā.) 205. 21(7)

**अदशत्** ( a-daśat ) *adj.* not biting अदशन्नपि नागेन्द्र त्वं नो दशसि मानसम् TripuDi. 1. 33.

**अदशन्** ( á-daśan ) *num.* not ten तं वै दशभिरेव क्रीणीयान्नादशभिर्दशाक्षरा वै विराट् S'atBr. III. iii. 3. 18.

**अदशन** ( a-daśana ) *adj.* without a ( single ) tooth, toothless वदनमदशनम् ... । इति वहति दशापदं मृगेन्द्रे वत कलभैरपमुज्यतेऽटवीयम् SaduktiKa. 252. 12; मुखमदशनम्...शिव शिव जरा वाल्यं भूयः प्रसौति नवं नवम् KamVa. 4. 5.

**अदशनपङ्क्ति** ( a-daśanapaṅkti ) *adv.* without ( display of ) the row of teeth दिवसकरकराहतं तदानीमदशनपङ्क्ति कृतावभासहासम् । अमधुमदकृतामधत्त ताम्रत्विपमरविन्दमुखं कुशेशयिन्याः HarVi. 28. 73 ( comm. अविद्यमाना दशनपङ्क्तिर्यत्र तथाविधः कृतः प्रकाशो हासो यस्येति विभावना )

**अदशमास्य** ( á-daśamāsya ) *adj.* not ( yet ) ten months old तमेतदप्यदशमास्यं सन्तं ब्रह्मणैव यजुषा दशमास्यं करोति S'atBr. IV. v. 2. 4.

**अदशमीस्थ** ( a-daśamīstha ) *adj.* not living in the tenth decade ( of his life ) ( i. e. not having lived the full span of life ) अस्य...पिताऽपि ...अदशमीस्थ एवास्तमगमत् HarṣaC. 66. 4.

**अदशरथ** ( a-daśaratha ) *adj.* devoid of Daśaratha अदशरथमरामम् ... उर्वीवलयमिह विधत्ते रोषणो रैणुकेयः AnargbaRā. 4. 56.

**अदशरात्र** ( a-daśarātra ) *adj.* ( a sacrificial session ) other than the Daśarātra अदशरात्रेषु सत्रेषु पथ्या एवेति गौतमः LāṭyāS'S. vi. 2. 30.

**अदशा** ( a-daśā ) *f.* bad state, calamity जीवन्नप्यदशां प्राप्तः कालधर्मं गतोऽपि वा TrisaS'aPuC iii. 4. 10 ( comm. अदशां दुर्दशाम् )

**अदशावर्तिसंभव** ( adaśāvarti-sambhava ) *adj.* ( flame of fire ) produced without a wick अदर्शि किमपि ज्योतिरनुपाधिकवैभवम् । ... अदशावर्तिसंभवम् SkandP. i(3B). 20. 28.

**अदशाहव्यपेत** ( a-daśāhavyapeta ) *adj.* for which ten days are not over सर्वे च श्राद्धिकं द्रव्यमदसा( ? शा )हव्यपेतं प्रतिगृह्यानध्यायः KauśiSū. 141. 12.

**अदशील** ( ada-śīla ) *adj.* tending to devour or kill कः पुनरधीरो भयवान् । सिंहनादेनादशीले समरे कमनीयेनोन्नतवक्षसा क्रीडतीति Kāvyānu.(He.) 261. 23.

**अदश्छद** ( adaś-chada ) *m.* petal ( *lit.* covering ) of this ( i. e. of the lily ) कारानिभात् कमलकुड्मलतश्चिराय निर्गत्य षट्पदयुवा कुमुदे न्यवात्सीत् । तत्रापि सङ्कुचददश्छदपीडितोऽभूत् Acyutarā. 10. 4.

**अदःशिष्य** ( adaś-śiṣya ) *m.* his disciple तस्माल्लक्ष्मणसेनसन्मुनिरदःशिष्यो रविस्तु स्मृतम्( ? तः ) PadmP.(Ra.) 123. 167.

**अदःश्रित** ( adaś-śrita ) *adj.* i lying on it ( i. e. on the heart ) सत्कृतां हृदयस्य मुहुर्दशां बहु वदन्निव निःश्वसितानिलः । व्यधित वाससि कम्पमदःश्रिते ( भैम्याः ) NaiṣC. 4. 16 ( comm. निःश्वासवायुः भैम्याः ...अदो हृदयं श्रिते आश्रिते वाससि कम्पं व्यधित चकार ); ii lying in this ( i. e. the ocean ) ( यदेष सागरः ) अदःश्रितं हृदयमिवास्य निष्ठुरं परिस्फुटं स्फुटतुरतरं मणीकुलम् Rāgh. 16. 22.

**अदष्ट** ( a-daṣṭa ) *adj.* [ *f.* –ā ] not bitten मा प्रबोधय आशीविषम् ... नादष्टो वै मोक्ष्यसे MahāBhā. iii. 134. 3; पुष्पधूलिधूसरैरदष्टापि व्यचेष्टत मधुकरकुलैः HarṣaC. 48. 4; MahāP. 23. 174; 25. 23; अदष्टो वा जलत्रासी न कथंचन सिध्यति RugVi. 69. 64; सत्यैवादष्टेऽपि स्वात्मनि सर्वसंनिधानाद् दष्टबुद्धिः S'rīBh. 56. 12 ( *on* i. 1. 1 ); KāvyPra. 657. 1; PrakaVi. 421. 22.

**अदष्टसद्दशनवसन** ( adaṣṭa-saddaśanavasana ) *adj.* the excellent lips of which were not bitten वक्त्रमदष्टसद्दशनवसनमिव हसद् यस्य विभाति तं जिनमवनमत सुधियः MahāP. 23. 174.

**अदष्टोष्ठपुट** ( adaṣṭoṣṭhapuṭa ) *adj.* whose lips have not been bitten अदष्टोष्ठपुटं मुखम् । जिनाल्याति...तावकीं वीतरागताम् MahāP. 25. 23.

**अदष्ट्वा** ( a-daṣṭvā ) *ger.* without biting व्याघ्रीव च हरेत् पुत्रमदष्ट्वा मा पतेदिति MahāBhā. xii. 89. 5.

**[1]अदस्** ( adás ) *pron.* (demonstrative of remote or distant referent) [included in *sarvādigaṇa* 241. 22; four bases are used *asáu, adás, amū- amī-* and *avá-*, the last of Indo-Iranian origin found in *avoḥ* Gen. Loc. dual in R̥V. vi. 67. 11, vii. 67. 4, x. 132. 5 used with वाम् (though doubts are raised about it), Alt. Gr. III. 528–536 I. N. 193; Renou. Gramm Vedique p. 234; Mayr. 1. p. 29; cpd. base *adas* derivative base *amu-* / Nom. sg. M. F. P. vii. 2. 107; Kātan. ii. 3. 32; SiddhaHe ii. 1. 43; MugdhaBo. 3. 157 (36. 20); base *amu-* P. viii. 2. 80; JaineVyā. v. 3. 88; CāndraVyā. vi. 3. 112; Kātan. ii. 1. 54; ii. 2. 45; base *amī-* P. viii. 2. 81; Inst. pl. P. vii. 1. 11; JaineVyā. v. 1. 9; CāndraVyā. ii. 1. 3; SiddhaHe. i. 4. 3; प्रगृह्य ending P. i. 1. 12; meaning असावस्ततरोऽस्मात् Nir. 3. 16; इदमित्येतत् प्रत्यक्षे वर्तते, एवं तदित्येतत् परोक्षे वर्तते। तेनेहैव स्यात्तस्येदमिति, अस्यामुष्य इत्यत्र न स्यात् MahāBh. ii. 316. 9 (*on* iv. 3. 120); अदसस्तु विप्रकृष्टे (source ?) R̥V. has *asáu* [*ásau* ? AV. xviii. 4. 96], *amúm, amúṣmai, amúṣmāt, amúṣya, amīṣā́m, amū́m, amuyā́* (*adv.*) *amū́ḥ, adáḥ*; AV. adds. *amúnā, amúṣmin, amū́n, amī́bhyaḥ, amúṣyāḥ, amū́* (*n.* pl.); TaiS. *amúṣyai, amúṣyāḥ*] **1 Ai** that (referring to a distant object *ille-deixis*) **ii** that remote region (the sky) **iii** that beyond perception (referring to the other warld) **iv** that (referring to Brahman) **B i** that one (adding a deictic meaning to a relative pronoun for emphasis) **ii** that well-known one **C** that just mentioned **2** so and so (definite-indefinite meaning) **3** that (emphatic) **4** this (as a result of its anaphoric and deictic use) **5** he, she, it (as a third person pronoun) **6** specific forms of *adas* used to indicate any word in that particular case **7** this woman **8** as the first person (with *jana*) **1 Ai** that (referring to a distant object *ille-deixis*) स नो वृष न्नमुं चरुं सत्रादावन्नपा वृधि R̥V. i. 7. 6; अमूर्या उप सूर्ये R̥V. i. 23. 17 = AV. i. 4. 2 = VājaS. 6. 24; न मन्युं वयश्चनामी पतयन्त आपुः R̥V. i. 24. 6; i. 105. 3; iv. 18. 11; vi. 47. 31; यदा सूर्यममुं दिवि शुक्रं ज्योतिरधारयः R̥V. viii. 12. 30; viii. 91. 2; यत्रामूर्यह्वतीरापस्तत्र माममृतं कृधीन्द्रायेन्द्रो परि स्रव R̥V. ix. 113. 8; अदः सु मधु मधुनाभि योधीः R̥V. x. 120. 3 = AV. v. 2. 3 = AitĀ. I. iii. 4. 15; उदसौ सूर्यो अगात् R̥V. x. 159. 1 = AV. i. 29. 5; आरे ३ सावस्मदस्तु AV. i. 26. 1; अमूः पारे पृदाक्वस्त्रिषप्ता निर्जरायवः AV. i. 27. 1; यद् राजानो विभजन्त इष्टापूर्तस्य पोडशं यमस्यामी सभासदः AV. iii. 29. 1; त्वं तानिन्द्र वृत्रहन् प्रतीचः पुनरा कृधि यथामुं तृणहां जनम् AV. v. 8. 7; तक्मन्भ्रात्रा वलासेन स्वस्रा कासिकया सह। पाप्मा भ्रातृव्येण सह गच्छामुमरणं जनम् AV. v. 22. 12; मुह्यन्त्वद्यामूः सेना अमित्राणां परस्तराम् AV. vi. 67. 1; पूतिरज्जुरुपध्मानी पूतिं सेनां कृणोत्वमून् AV. viii. 8. 2; viii. 8. 14; viii. 8. 15; viii. 8. 17; viii. 8. 18; प्रतीचीः कृत्या आकृत्यामून्कृत्याकृतो जहि AV. x. 1. 6; x. 1. 31; उद्वेपय त्वमर्बुदेऽमित्राणाममूः सिचः AV. xi. 9. 18; xi. 10. 13; xiii. 2. 13; तस्यामू सर्वा नक्षत्रा वशे चन्द्रमसा सह AV. xiii. 4. 28; असावादित्यः क्षत्रम् AV. xv. 10. 7; xv. 15. 4; xv. 18. 2; गृध्राणामन्नमसौ अस्तु सेना SV. II. IX. iii. 6. 1; AitBr. 2. 1 (35); KauśiBr. 2. 8 (7. 7); तद् यथादः सोमस्य महाव्रतमेवमेवैतदिष्टि महाव्रतम् KauśiBr. 5. 5 (20. 4); तददश्चन्द्रमसि कृष्णम् TaiBr. I. i. 3. 3; यददश्चन्द्रमसि कृष्णं पृथिव्या हृदयं श्रितम् MantrBr. i. 5. 13 JaimiBr. 1. 23; सोऽसावेव बन्धुः S'atBr. I. i. 2. 22; XIV. i. 1. 10; ṢaḍviBr. i. 1. 4; AitĀ. I. iv. 2. 5; S'āṅkhāĀ. 1. 4 (3. 7); यथामूनि त्रीणि ज्योतींष्येवमिमानि पुरुषे त्रीणि ज्योतींषि S'āṅkhāĀ. 7. 4 (27. 7); अमुमाहुः परं मृत्युम् TaiĀ. i. 8. 4 (55. 3); अमूनि नक्षत्राणि। सर्वेषां भूतानां प्राणैरप प्रसर्पन्ति TaiĀ. i. 14. 2 (113. 3); i. 22. 3 (131. 7); i. 22. 8 (135. 1); iii. 15. 2 (354. 3); एभ्यो लोकेभ्योऽमुष्मादादित्यादन्नाद्यमवरुन्धते ĀpaS'S. xxiii. 3. 10; Prati. 2. 2; अमुष्यां क्रीडायां तव राज भवनस्थानानि रामणीयकानि दर्शयिष्यामि KāmSū. 291. 2 (5. 5); यदासावर्थो न दृश्यते PañcT. 1. 158(33) (158. 1); 2. 1(12) (183. 3); 3. 45(16) (300. 3); 3. 53(3) (310. 9); अपि प्रवृत्तयज्ञोऽसौ विदेहाधिपतिः सुखी MahāviC. 1. 19 (10. 1); असौ विद्याधारः शिशुरपि ··· इहायातः MālaMā. 2. 205; अयमसौ ··· कालिन्दीतटवटः श्यामो नाम UttaRāC. 1-23(2); 2. 4(1); 2. 11; क्वासौ क्वासौ दुरात्मा UttaRāC. 3. 15(2); 4. 13; EI. vi. 338. 28; वाक्यार्थलक्षणमदः पुनरत्र नेष्टम् SaṁkṣeSā. 1. 146 (121. 11); अर्धे यदग्रिमे लक्षणं भवेत्केवले तु चपलायाः। मुखचपलासौ गदिता JayaChand. 4. 9; तथासौ नकुलो ब्राह्मणमायान्तमवलोक्य Hitopa. 4. 98(4); श्रीमान्धवलचन्द्रोऽसौ जीयात् Hitopa. 4. 139; HammīMaMa. 2. 8; अतोऽमुष्यामुतोऽमुष्य भेदो दृष्टो द्विधर्मिकः AnuVyā. 26B. 6 (*on* 2. 2); StavMā. 99. 21; **1 Aii** that remote region (the sky) मन्त्रयन्ते दिवो अमुष्य पृष्ठे R̥V. i. 164. 10; ऋजीपी श्येनः ··· सोमं भरत् ··· दिवो अमुष्मादुत्तरादादाय R̥V. iv. 26. 6; यदेदस्तम्भीत् प्रथयन्नमूं दिवम् R̥V. viii. 51. 8; viii. 34. 1; उतामूं द्यां वर्ष्मणोप स्पृशामि R̥V. x. 125. 7 = AV. iv. 30. 7; यस्याद उर्व१न्तरिक्षम् AV. iv. 2. 4; उतेयं भूमिर्वरुणस्य राज्ञ उतासौ द्यौर्बृहती दूरेअन्ता AV. iv. 16. 3; कालोऽमूं दिवमजनयत् AV. xix. 53. 5; MaiS. i. 5. 5; इयं वै कृष्णाजिनमसौ पुष्करपर्णम् TaiS. V. i. 4. 3; V. iv. 7. 3; तस्मादसाविमां वृष्टयाभ्युनत्ति AitBr. 2. 1(36); यदमुष्यां यज्ञियमासीत् TaiBr. I. i. 3. 2; असौ बृहत् TaiBr. I. iv. 6. 2; सोऽसौ द्यौरभवत् JaimiUBr. i. 1. 5; इयं चासौ च रोदसी TaiĀ. i. 8. 2 (52. 1); अमूं दिवम्। अहं वेद TaiĀ. i. 13. 1 (107. 3); v. 4. 10 (607. 8); असौ द्यौर्ब्राह्मणी S'āṅkhāĀ. 1. 5 (3. 19); अमुष्मिन्नाकाशे वायुरायत्तो भवति S'āṅkhāĀ. 7. 4 (27. 6); को अद्धा अमूमभिचक्रमीति BāṣkaU. 3; **1 Aiii** that, beyond perception (referring to the other world) स उपहूत उपहूतः। आप्नोतीमं लोकमाप्नोत्यमुम् AV. ix. 6. 61; सर्वे तस्मै बालें हरान्मुष्मिल्लोक उत्तमे AV. xi. 4. 18; त्रयो लोकाः संमिता ब्राह्मणेन द्यौरेवासौ पृथिव्य१न्तरिक्षम् AV. xii. 3. 20; अग्निना लोकाच्छिनत्ति ब्रह्मगवी ब्रह्मज्यमस्माच्चामुष्माच्च AV. xii. 5. 38; लोके ३ मुष्मिन्प्र यच्छसि AV. xii. 5. 57; पावमानीर्दधंतु न इमं लोकमथो अमुम् SV. II. V. ii. 8. 4; आदित्या वा अस्माल्लोकादमुं लोकमायन्तेऽमुष्मिन् लोके व्यतृष्यन्त TaiS. I. v. 4. 4; I. v. 9. 4; मा मेक्षेष्ठा अमुत्रामुष्मिन् लोके TaiS. I. vi. 3. 3; अमुष्मिन् वा एतेन लोके राध्नुवन्ति नास्मिन् AitBr. 2. 5(48); अयं वाव लोको भद्रस्तस्मादसावेव लोकः श्रेयान् AitBr. 3. 2(53) तदमुं लोकमाप्नोति KauśiBr. 2. 2 (4. 13); 2. 9 (7. 22); प्राणानेव तद्यजमाने दधाति सर्वायुत्वायास्मिंल्लोकेऽमृतत्वायामुष्मिन् KauṣiBr. 7. 10 (33. 20); 11. 4 (50. 12); अमुष्मिन्नेवैनं लोके प्रतिष्ठितमाधत्ते TaiBr. I. i. 8. 2; अमुमेव तैर्लोकमन्नवन्तं करोति TaiBr. I. iii. 8. 4; प्रति ह तिष्ठत्यस्मिंश्चलोकेऽमुष्मिंश्च SāmaViBr. i. 1. 12; तेषां तप्यमानानां रसोऽजायत ··· सामवेदोऽमुष्मात् ṢaḍviBr. iv. 1. 2; अथात उत्तरः पक्षः। सोऽसौ लोकः AitĀ. I. iv. 2. 5; I. iv. 3. 9; प्राणेनामुं लोकं संतनोति AitĀ. I. iv. 3. 12; तस्मादसावादित्योऽमुष्मिंल्लोके रश्मिभिः पर्यूढः TaiĀ. v. 4. 9 (606. 14); मा पितॄणां क्षेष्ठा अमुत्रामुष्मिन् लोक इति BaudhDS. ii. 8. 12; अस्माल्लोकादमुं लोकं गतं त्वमनुशोचसि Rāmā. v. 31. 8; इच्छन्निमं लोकममुं च जेतुम् MahāBhā. iii. 27. 11; iii. 29. 23; सर्वे भवन्तः ···लोकादमुष्मादर्वाग् प्रपन्नाः MahāBhā. iii. 181. 39; उभौ लोकौ संचरसि इमं चामुं च देवत MahāBh. i. 283. 18 (*on* i. 3. 54); इह खलु पुरुषेण ··· हितमिह चामुष्मिंश्च लोके समनुपश्यता तिस्र एषणाः पर्येष्टव्या भवन्ति CaraS. i. 11. 3; असौ परलोकः SanatBh. 232. 12 (*on* 1. 41); उभयोर्लोकयोरिहामुष्मिंश्च VīraMi. (Paribhāṣā.) 63. 1; **1 Aiv** that (referring to Brahman) अद इति परोक्षाभिधायि सर्वनाम तत् परं ब्रह्मेत्यर्थः BṛĀraUBh. 686. 1 (*on* v. 1. 1); अदः तच्छब्दवाच्यं जगत्कारणं ब्रह्म SanatBh. 291. 13 (*on* 4. 3); **1 Bi** that one (adding a deictic meaning to a relative pronoun for emphasis) अमी य ऋक्षाः R̥V. i. 24. 10; अमी ये देवाः स्थन त्रिष्वा रोचने दिवः R̥V. i. 105. 5; i. 105. 9; i. 105. 10; अमी च ये मघवानः R̥V. i. 141. 13; असौ य एषि वीरको गृहं गृहं विचाकशत् R̥V. viii. 91. 2; x. 146. 1; अदो यद्दारु प्लवते सिन्धोः पारे अपूरुषम् R̥V. x. 155. 3; अमूर्या यन्ति योषितो हिरा लोहितवाससः। अभ्रातर इव जामयः AV. i. 17. 1; असौ यो अधराद् गृहः AV. ii. 14. 3; असौ या सेना मरुतः परेषाम् AV. iii. 2. 6; असौ या सेना परेषाम् SV. II. IX. iii. 4. 3; अमू ये दिवि सुभगे विचृतौ नाम तारके AV. iii. 7. 4; vi. 103. 3; अमी ये विव्रता स्थन तान्वः सं नमयामसि AV. iii. 8. 5; = vi. 94. 1; तैरमित्रास्त्रसन्तु नोऽमी ये यन्त्यनीकशः AV. v. 21. 8; अदो यत्ते हृदि श्रितं मनस्कं पतयिष्णुकम् AV. vi. 18. 3; vi. 75. 1; न्य १ स्मभ्यं स्वधिते यच्छ या अमूः AV. ix. 4. 6; असौ पन्थाः पृषती येन याति AV. xiii. 1. 23; यदमीषामदो मनस्तदैतूप मामिह AV. xix. 52. 4; अमुना सह निरर्थं गच्छ। योऽस्मान् द्वेष्टि TaiĀ. iv. 10. 3 (488. 1); TaiĀ. ii. 6. 1 (220. 2); ये वामी रोचने दिवः VājaS. 13. 8; तदसौ वै धर्मो योऽसौ तपति KauṣiBr. 2. 1 (3. 20); अथ यदग्निं प्रणयन्ति यमेवामुं वैश्वदेवे मन्थन्ति तमेव तत् प्रणयन्ति KauṣiBr. 5. 3 (19. 12); तद्योऽसौ क्रुष्टतम इव साम्नः स्वरस्तं देवा उपजीवन्ति SāmaViBr. i. 1. 8; य एवासौ तपति तमुद्गीथमुपासीत ChāndoU. i. 3. 1; योऽसावतीन्द्रियग्राह्यः ManuSm. 1. 7; हिंसारतश्च यो नित्यं नेहासौ सुखमेधते ManuSm. 4. 170; अनर्थकार्यप्रतिषेधनार्थं यो मन्यतेऽसौ परमो हि मन्त्रः PañcT. 1. 57 (60. 8); द्विषद्यो जीवति यो मृतोऽसौ PañcT. 1. 122 (122. 11); व्यालं बालमृणालतन्तुभिरसौ रोद्धुं समुज्जृम्भते ··· नेतुं वाञ्छति यः सतां पथि खलान् सूक्तैः सुधास्यन्दिभिः S'atTrayī. 67; 120; तेऽमी मानुषराक्षसाः परहितं स्वार्थाय निघ्नन्ति ये S'atTrayī. 221; 696; 701; 742; यस्य चेष्टितमीदृशम्। नासावपैति मनसः स्त्रीणामामरणादपि ViṭVṛ. 21; 80; योऽसौ वरद्वयन्यासस्तं त्वां माताद्य मध्यमा। यथेष्टं नाथते तात MahāviC. 4. 48 (111. 8); 4. 1(6) 86. 11); अस्ति ··· देवरातो नाम ··· योऽसौ यादृशश्चेति MālaMā. 2, 191; अयमसौ महानद्योः संभेदः य एषः MālaMā. 4. 147; योऽसावुपनिषत्स्वेवाधिगतः पुरुषोऽसंसारी BrahmSūBh.( S'aṅ. ) 28. 4 ( *on* i. 1. 4 ); योऽसौ चतुर्वर्गलक्षणः पुरुषार्थः VakroJī. 5. 7; दाता ··· योऽसौ श्रियो वल्लभः EI. iii. 107. 26; i. 36. 24; i. 79. 11; **1 Bii** that well-known one यस्यासौ पन्था

रजसो विमानः AV. iv. 2.3; यस्यासौ सूरो विततो महित्वा AV. iv. 2.4; अपि प्रभोर्वः कुशलं तस्य यस्यार्चयत्यसौ ··· शासनं पाकशासनः MahāviC. 1.29 (16.2); शास्त्रं चरित्रं च मे । येनैकेन हतान्यमूनि हरता चैतन्यमात्रामपि MahāviC. 4.22 (98.10); तेषां शुभानि कर्माणि यैर्दृष्टः पुण्यवानसौ EI. ii. 47.46; **1 C** that just mentioned आमुं ददे हरसा दैव्येन AV. ii. 12.4; आमुं नय नमसा रातहव्यम् AV. iii. 3.1; मामीषां मोचि कश्चन AV. iii. 19.8 = viii. 8.19; कृण्वे ऽहमधरांस्तथामूञ्छश्वतीभ्यः समाभ्यः AV. v. 8.8; अमूनश्वत्थ निः शृणीहि खादामून्खदिराजिरम् AV. viii. 8.3; viii. 8.8; viii. 8.11; viii. 8.24; स्वर उच्चः स्वरो नीचः स्वरः स्वरित उच्यते । व्यञ्जनान्यनु वर्तन्ते यत्रासौ तिष्ठति स्वरः MāṇḍūS'i. 5.11; ManuSm. 4.206; तदासौ वेदवित् प्रोक्तः AtriS. 143; दर्भानुपस्तीर्यापि उपनिनीयामीषां द्रप्सानान्निपृणुयात् LāṭyāS'S. iii. 2.11; सा···याश्चेष्टाः पूर्वमसौ दर्शितवांस्ता एव प्रतिकुर्वीत KāmSū. 157.25 (2.8); यदासौ मृगी तदा नैव शशतादोषः KāmSū. 277.1 (5.4); 278.5 (5.4); 338.5 (6.4); किमसौ नष्टविषोऽभिसंधितव्यः PañcT. 1.32 (28.12); लक्षितोऽस्म्यमुना PañcT. 1.50(9) (34.3); अथासौ दुष्टमतिः PañcT. 1.61(25) (69.3); 3.46(10) 303.5); असावपि रक्ताक्षः स्वकुटुम्बमाहूयोक्तवान् PañcT. 3.76(7) (346.5); न तानङ्गीकरोत्यसौ VākyaP. 2.156; गुणकल्पास्त्वमी कृताः S'lokaVār. 1.57 (19.2); विषयाः । वियोगे को भेदस्त्यजति । न जनो यत्स्वयममून् S'atTrayī. 157; 26; अकरिष्यदसौ पापमतिनिष्करुणैव सा । नाभविष्यमहं तत्र यदि तत्परिपन्थिनी MālaMā. 9.354; असौ दृष्टः सत्त्वं प्रबलयति पापं च नुदति MahāviC. 2.15; प्राज्ञः खल्वसौ MahāviC. 4.8 (6); 6.46; प्रथमोऽष्टाक्षरः पादः । चतुर्भिरभिवर्धिताः परेऽमुष्मात् JayaChand. 5.16; जडाजडानामप्येवं नास्त्यसाविति निश्चयः SiTrayī. 1.1; गदः । वह्निशत्रुविषैस्तुल्यः स्वल्पोऽपि विकरोत्यसौ SiddhYo. 1.14; शुश्रूषुसज्जनसमीपगतोऽपि वामुं शृण्वन् पठन् भवति शम्भुशरीरधारी BṛDharmaP. i. 39.65; श्रवणायत एवासौ धनी वैश्रवणोपमः Hitopa. 2.85; 2.99 (26); विक्रमौषध[नि]धिश्चक्रे चिकित्सामसौ EI. i. 270.11; यद्यदः सत्यं ततस्त्वमेव राजा KumāDeC.(So.) 45.3; MātaLi. 1.19; तथाप्यमीभिः प्रकाश्यते क्वापि नैवात्मा PraboSū. 139; (बुक्कमहीपालः) अहीनभोगसंसक्तिरसौ राजशिखामणिः EI. iii. 37.12; **2** so and so (definite indefinite meaning) तैस्त्वा सर्वैरभि ष्यामि पाशैरसावामुष्यायणामुष्याः पुत्र AV. iv. 16.9; न्वे ३ तेनारात्सीरसौ स्वाहा AV. v. 6.5; v. 6.7; इदमहमामुष्यायणस्यामुष्याः पुत्रस्य वर्चः ··· नि वेष्टयामि AV. x. 5.36; सो ३ मुमामुष्यायणममुष्याः पुत्रमन्नै प्राणे बधान AV. x. 5.44; इदमहमामुष्यायणे ३ मुष्याः पुत्रे दुष्वप्न्यं मृजे AV. xvi. 7.8; xvi. 8.1; एतास्ते असौ धेनवः कामदुघा भवन्तु AV. xviii. 4.33; असौ हा इह ते मनः कर्कुत्सलमिव जामयः AV. xviii. 4.66; MaiS. ii. 4.8; तामाशिषमा शासे ··· अमुष्मै ज्योतिष्मतीम् TaiS. I. v. 6.4; इदमहममुं भ्रातृव्यम् ··· निर्भजामि TaiS. I. vi. 6.1; I. vi. 2.4; बृहस्पतेष्ट्वा साम्राज्येनाभिषिञ्चाम्यसौ VājaS. 9.30; 9.38; एष वोऽमी राजा VājaS. 9.40 = 10.18; राष्ट्रममुष्मै देहि VājaS. 10.2; 10.4; इममुमुष्य पुत्रममुष्यै पुत्रमस्यै विशे VājaS. 9.40; असावस्य पिता VājaS. 10.20; अमुमावहामुमावहेत्यावाहयति AitBr. 1.2 (16); याभिरमुमावतम् AitBr. 4.4 (90); तस्माद्धाप्येतर्हि यो द्वेष्टि तस्याप्रियं भवति अमुष्यायं यूपोऽमुष्यायं यूप इति दृष्ट्वा AitBr. 6.1 (140); एताभ्य आग्रयणदेवताभ्य आहवनीये जुहुयात् स्विष्टकृच्चतुर्थीभ्योऽमुष्यै स्वाहामुष्यै स्वाहेति KauṣīBr. 4.14 (17.24); काम ··· समानयामुम् ChāndoUBr. i. 1.2; i. 3.10; i. 5.7; आहस्पत्यं मासं प्रविशासौ ChāndoUBr. i. 5.14; पूष्णो हस्ताभ्यां हस्तं गृह्णाम्यसौ ChāndoUBr. i. 6.19; असौ नामास्मि ChāndoUBr. i. 6.18; यं द्विष्यात्तं ब्रूयात्रामुं नामुमिति S'āṅkhāĀ. 1.8 (4.27); सा मेऽमुष्मादिदमवरुन्ध्यात् S'āṅkhāĀ. 4.3 (14.10); अधरो मत्पद्यस्वासौ TaiĀ. iv. 38.1 (557.3); iv. 8.1 (461.1); ĀśvaS'S. I. iii. 12.7; आमुष्मादिति कर्मसु तच्च KātyS'S. i. 3.24; अमुष्यावगम इति निरुद्धस्य नाम गृह्णीयात् MānS'S. 122.14; अमुष्मै स्वाहा S'āṅkhāGS. i. 9.18; ii. 2.5; ii. 4.2; iv. 12.5; मम चामुष्य च पाप्मानं हनोमीति PāraGS. i. 3.27; गच्छामुष्मिन्नसौ देशे ब्राह्मणो मां प्रतीक्षते MahāBhā. i. 166.25; असावहममुत्रेति प्रवदन्तो मुहुर्मुहुः MahāBhā. vii. 35.18; इदममुष्यामुष्य च सारभाण्डं फल्गुभाण्डं च न निगूहितव्यम् ArthS'ā. i. 274.8 (2.21); तं सत्री ब्रूयात् अमुष्य भार्यां स्नुषां दुहितरं वा कामये ArthS'ā. ii. 136.8 (4.4); उत्साहशक्तिमतो वा प्रेषयेत् 'अमुष्य राज्यं गृहाण यथास्थितो न संधिः' इति ArthS'ā. iii. 84.4 (9.6); अमुष्मात् इदन्नामकात् पितृपितामहादेः (जातः) ManuBh. i. 450.4 (*on* 5.60); यस्मादादावेव लेखकः स्वनाम निवेशयेदिदंनामाहममुष्य पुत्रो लिखामीदमिति ManuBh. ii. 74.12 (*on* 8.3); **3** that (emphatic) मणिना भूषितः सर्पः किमसौ न भयङ्करः S'atTrayī. 27; नीतो येन रसातलं बलिरसौ तस्मै नमः कर्मणे S'atTrayī. 716; जामदग्न्यः खल्वसौ MahāviC. 2.10(3); आर्ये, पश्य पश्य । अयमसावार्येण UttaRāC. 1.18 (8); भोगीन्द्रो नयनश्रुतिः कथमसौ द्रष्टुं क्षमो नौ भवेत् EI. i. 47.8; ऐश्वर्यं सारसूदनस्य परमं ग्रामं गुणानामिव । ग्राहं ग्राहमसौ दिदृक्षुरसृजत् पद्मोद्भवोऽयं भुवि EI. i. 47.21; विधुरपि विधियोगाद्ग्रस्यते राहुणासौ Hitopa. 1.21 [NS. Ed.]; यः स्वभावो हि यस्य स्यात्तस्यासौ दुरतिक्रमः Hitopa. 3.56; येनासावपि यस्य भृत्यबटुना हम्मीरवीरो जितः EI. i. 342.6; **4** this (as a result of its anaphoric and deictic use) अथ यदमू व्यतिचरतो नान्योन्यमनुप्रपद्येते अध्वर्यू तस्मादृतुर्ऋतुं नानुप्रपद्यते KauṣīBr. 13.9 (61.6); संवत्सरस्त्वायुषे जरायै परिददात्वसौ ChāndoUBr. i. 5.15; नि जानुका मे न्यङ्गुलिका । अमी वाचमुपासताम् TaiĀ. i. 6.2 (35.1); स्वरभक्तिरसौ ज्ञेया पूर्वमाक्रम्य पठ्यते YājñaS'i. 102; वेदः ··· वराहश्च ह्यमी दन्त्याः प्रकीर्तिताः AmoghS'i. 18; वत्सः श्रेयसि जातस्ते दिष्ट्यासौ तव राघवः Rāmā. ii. 2.29; तिष्ठन्ति वर्त्मानि नवान्यमूनि MahāBhā. iii. 253.16; असौ सिद्धः सामेधिकः ArthS'ā. i. 54.2 (1.11); अमुं च मन्त्रं ब्रूयात् ArthS'ā. i. 288.9 (2.24); असावहं पुत्र इति KāśyaS. 57B.11; पुरुषास्त्वमी प्रायेण सिद्धाः KāmSū. 260.21 (5.1); देव अहममुना भवत्सम्बन्धेन चरितार्थं माधवसेनं सभाजयितुमिच्छामि Mālvikā. 5.19 (10); अमी वेदिं परितः क्लृप्तधिष्ण्याः ··· वैतानास्त्वां वह्नयः पालयन्तु S'āk. 4.10; निष्पन्नोऽसावन्योन्यं भेदः PañcT. 1.127 (70) (140.4); वाक्यार्थस्याभ्युपायोऽसौ VākyaP. 2.250; दण्डद्रविणदुर्गैकसङ्गी रक्षति भूपतिः । आत्मानमेव सततं किमु रक्षत्यदो जगत् JānaHa. 10.40; वह्नयोऽमी त्रयोऽपि Ratnā. 1.3; नन्वमुमेव ··· शरत्समयमाश्रित्य VeṇīSaṁ. 1.45; बद्धस्तत्र निशाकरेण सहसा रोदित्यसौ मन्दधीः S'atTrayī. 480; 520; 810; स्वचित्तपरचिन्तयैव परितापमात्मन्यमी न बिभ्रति मनस्विनो यदमुना न तावत् क्षतिः S'atTrayī. 812; VijñāS'. 72; भवत्पक्षेऽप्यदः कुतः S'lokaVār. 5(13).109 (594.6); क्षेत्रज्ञो हि···प्रसिद्धः, नासौ श्रुत्या तात्पर्येण विवक्ष्यते BrahmSūBh.(S'aṅ.) 151.12 (*on* i. 3.7); नासावात्यन्तिको मोक्षः BrahmSūBh.(S'aṅ.) 217.8 (*on* i. 3.40); अमुया कण्ठस्थितया प्रश्नोत्तररत्नमालिकया PraśnoRaMāli. 1; असौ सन्ध्याशङ्खध्वनिरनिभृतः खे विचरति MālaMā. 2.219; 9.16; भवत्वमुष्माद्गिरिशिखरात्पाटलावत्यां निपत्य माधवस्य मरणाग्रेसरो भवामि MālaMā. 9.233; असौ···शिशुः MahāviC. 2.32; संप्रत्येष सहामुनैव धनुषा वत्सेऽधिकारः स्थितः MahāviC. 4.38; नूनमसौ जनस्थानपश्चिमः कुञ्जवान्नाम भवेत् ··· दण्डकारण्यविभागः MahāviC. 5.26; क्वान्यत्र रामदेवादमून्यक्षराणि MahāviC. 5.36(1); सौमित्रेर्बाणवज्रैरधिकतरममी ··· प्रविद्धाः ··· रजनिचराः शेरते युद्धसीम्नि MahāviC. 6.42; अहं किल ··· गन्धर्वराजाच्चित्ररथादमुं वृत्तान्तमुपलभ्य ··· सन्दिष्टा MahāviC. 7.1(3); असावस्याः स्पर्शो वपुषि बहलश्चन्दनरसः UttaRāC. 1.38; 2.23; अहमप्यमुं वृत्तान्तं भगवत्यै लोपामुद्रायै निवेदयामि UttaRāC. 3.3(17); 3.15(12); 6.17(1); जैत्रमस्त्रं जयत्यदः MahāP. 1.4; शौरिर्भुजैरिव चतुर्भिरदः सदा यो लक्ष्मीविलासभवनैर्भुवनं बभार Kapphiṇā. 1.39; तथा त एवार्थनिवेशनेऽपि स्थिता इवान्तर्बहिरप्यमुष्याः RāghPāṇ.(Dha.) 8.28; कोऽयं कविः कोविदानमून् ··· निजनिबन्धनेन कुतूहलयति SubhaDha. 1.1 (10); अविरतिभिरमीभिः कर्मभिः क्षीयमाणः स्वयमपि परिपीडामात्मनस्त्वं तनोषि SubhaDha. 2.2; 5.5 (3); न त्वमूषामन्योन्यमनुगन्तृतामीक्षामहे TātpaṬ.(Vā.) 141.23 (*on* i. 1.3); तत आत्मनो ज्ञानं शक्तिरित्यवसन्नमदः PratyabhiVi. i. 103.7 (*on* i. 2.7); उपसंहर विश्वात्मन्नदो रूपम् AdhyāRā. i. 3.29; कार्ये त्वमुष्मिन्सकले···सम्यक्साहायकैर्भाव्यं भवद्भिः SamarāSū. 2.9; कस्मादमी ··· तनुशोषमग्नाः । भवत्पदम् ··· तन्मुनयः प्रयान्ति DarpDa. 7.22; विद्रद्भिर्जयपालसी[शी]तकिरणोऽमून्यादराद्वन्दितो गौडः प्रोल्लिखदक्षराणि कुमुदाकाराणि सर्प्पत्करः EI. i. 147.34; जपावर्णकुसुमे ··· अहो किंस्विदमू अग्नी इत्युज्झ्येते इहार्भकैः DvyāśraKā. 1.28; 20.94; अमूनि सोमेश्वरदेवरीत्या संपूज्य पंचायतनानि पूर्वम् EI. i. 286.58; महाशीले शासनोदात्तप्रभावनोदर्कं भविष्यतीत्यदो भवद्भावितम् MudriKu. 2.7 (13); जगुर्विदोऽदः किल कालतन्त्रम् GrahaGa. 69.22 (9.1); PrasaRā. 7.84; अनामयीकर्तुमदः क्षमातलम् PṛthviVi. 2.7; उदयति मदलक्ष्मीर्दन्तिनोऽमुष्य सद्यः समिति पिशुनयन्ती वैरिवर्गस्य भङ्गम् RukmiHa. 2.21; निष्पन्नोऽसावन्योन्यभेदः Hitopa. 2.156 (3); 3.55 (16); त्वयैकेन मद्रीयोऽर्थः संप्रसाध्यस्तत्रसाविति Hitopa. 4.122; अम्भोजिनीभिरमुना तपनातपेन त्यक्ता ··· मूर्च्छा HammīMaMa. 3.8; बिभ्रते ··· पुष्पाण्यमी पादपाः HammīMaMa. 5.10; निवेद्यतामदः VasaViKā. 13.53; KṛṣṇaKa. 1.41; वाजपेयगतं खादिरमूर्ध्वं यत्षोडशिपात्रं तस्मिन्नद उन्मानं प्रथमं सम्बध्य तद्द्वारा कर्मणान्वेति NyāyMāVi. 116.2 (*on* iii. 1.9); नादो वादोचितं वचः S'ārṅgaPa. 529; यदभिधानाष्टकमिदम् । अमुष्मिन्प्रत्येकं प्रविचरति देव श्रुतिः Mahimna. 28; अमीषामपि नित्यत्वे श्रुतिसंभवात् BrahmSūBh.(S'rī.) ii. 166.10 (*on* ii. 4.1); PārvPa. 5.3 (1); सुहृदामुचितं ह्यदः HammīMaKā. 7.9; भवद्दृगालोकनमुक्तयोगं प्रपत्स्यतेऽद्दो नगरं नरेश HammīMaKā. 8.111; 12.5; Subhāṣi. 187; PurāPraSaṁ. 6.18; StavMā. 238.7; LaṭaMe. 2.14; AdbhuDa. 7.15; भूपैरमीभिर्मुदा Jīvān. 194.4; PadyaVe. 252; SetuBa. 303.20; Bhāsk. i. 1.16 (*on* i. 1.1); **5** he, she, it (as a third person pronoun) अमीषां चित्तं प्रतिलोभयन्ती गृहाणाङ्गान्यप्वे परेहि ṚV. x. 103.12; अमीषां चित्तानि प्रतिमोहयन्ती गृहाणाङ्गान्यप्वे परेहि AV. iii. 2.5; यममी पुरोदधिरे ब्रह्माणमपभूतये AV. v. 8.5; यानसावतिसरांश्चकार कृणवच्च यान् AV. v. 8.7; गावो घृतस्य मातरोऽमूं सं वानयन्तु मे AV. vi. 9.3; अमून्हेतिः पतत्रिणी न्येतु AV. vi. 29.1;

असौ मामनु शोचतु AV. vi. 130. 1; vi. 130. 2; vi. 130. 3; vi. 130. 4; इत्थं वज्रमा ददे । स्कन्धानमुष्य शातयन्वृत्रस्येव शचीपतिः AV. vi. 135. 1; vi. 135. 2; vi. 135. 3; vi. 138. 5; अमूं च मां च सं नुद AV. vi. 139. 3; यत्किं चासौ मनसा यच्च वाचा यज्ञैर्जुहोति AV. vii. 70 (73). 1; vii. 113 (118). 1; अमूंस्त आ दधामि AV. xi. 1. 20; परामीषाममून्दिदेश AV. xii. 2. 55; तस्मादमुं निर्भजामः AV. xvi. 8. 1; यास्तेऽमी अघोरास्तनुवः । ताभिरमुं गच्छ TaiBr. I. i. 7. 3; इदं ते परिददाम्यमुम् ChāndoUBr. i. 6. 26; एवं ममासौ वशमेतु ChāndoUBr. ii. 6. 7; ii. 8. 13; अद उ आविरधिदैवतम् AitĀ. I. iii. 3. 9; प्राणापानौ … अमुष्यासुना मा संगसाथाम् TaiĀ. iii. 14. 3 (350. 3); एतत् सम्यक् प्रकारेण ज्ञात्वासौ कम्पविद्भवेत् SvarāñSi. 7; राद्यस्य हन्तासौ AtriS. 9. 19; निष्कासितो मयासावन्यत्र गतो यत्नादानेतव्यः KāmSū. 6. 4 (337. 24); तदासौ साधकत्वेन योक्तव्यो गुरुणा तथा PauṣkS. 1. 18; यदासौ न कल्यतां लभते PañcT. 1. 13 (10) (10. 8); वाढमित्यसावाह PañcT. 1. 52 (22) (39. 3); अथासावातेरवमुच्चैः कृत्वा PañcT. 1. 55 (87) (58. 1); 1. 62 (11) (72. 7); अथासौ तं नादमाकर्ण्य PañcT. 1. 63 (38) (81. 4); 1. 85 (2) (93. 2); तथाप्यसौ यदि स्वयमनर्थं न करिष्यति PañcT. 1. 85 (4) (93. 4); 1. 117 (22) (119. 3); 1. 151 (16) (152. 5); 1. 164 (10) (171. 6); न चासौ तस्यापकरोति PañcT. 2. 15 (12) (199. 4); 2. 25 (16) (206. 4); पृष्टश्चासावागतः PañcT. 3. 33 (32) (289. 7); 3. 67 (1) (328. 4); 4. 1 (14) (372. 9); ततोऽसौ लगुडं गृहीत्वा PañcT. 5. 3 (408. 2); अमुष्मै तस्मै च देहि CāndraVṛ. on ii. 1. 12; अमुष्य मायाविहतं निहन्ति … आयुधम् Kirātā. 14. 60; इतीहारमतैवासौ स्नेहस्तस्याः स तादृशः UttaRāC. 2. 18; असौ पुनरभिनिविष्टया दृशा … विषमविरचितैकभागां तामेव बहु मन्यमाना MālaMā. 1. 30a; बुद्धरक्षिते क्वासौ MālaMā. 3. 210; सरसि रुदितैः स्नेहाकृतं तथा व्यतनोदसौ MālaMā. 9. 66; EI. vi. 291. 40; SubhaDha. 1. 13; BālBhā. 1. 78; आजावसौ चोडनृपस्य सेनामहावनस्य … दावानलोऽभूत् EI. iv. 316. 8; Hitopa. 1. 12 (2); 1. 42 (5); 3. 55 (4); 4. 8 (3); HariC. (Pa.) 6; पदं किम् … प्रयुज्य संसेयममुष्य दातृताम् Gaṅgāva. 1. 82; JānaPa. 6. 30; क्वामी क्वामी HammiMaMa. 3. 15 (11); 6 (Gr.) specific forms of *adas* used to indicate any word in that particular case असावित्यन्तः Vār. 6 on P. i. 2. 37; असावित्यन्त उदात्तो भवति । गार्ग्यो यजते । वात्स्यो यजते MahāBh. i. 211. 5 (on i. 2. 37); असाविति प्रथमान्तोपलक्षणम् Pradi. ii. 33A. 17 (on i. 2. 37); अमुष्येत्यन्तः Vār. 7 on i. 2. 37; अनुष्येत्यन्त उदात्तो भवति । दाक्षेः पिता यजते MahāBh. i. 211. 7 (on i. 2. 37); 7 this woman रे रे तन्त्रक मा रोदीः किं किं न भ्रामयत्यसौ । कटाक्षक्षेपमात्रेण करलग्ने तु का कथा S'atTrayi. 722; रे रे घरट्ट मा रोदीः कं कं न भ्रामयन्त्यमूः । कटाक्षवीक्षणादेव कराकृष्टस्य का कथा Subhāṣitaratnabhāṇḍāgāra 260. 101; 8 as the first person (with जन) तृष्णे त्वामनुबध्नता फलमियत् प्राप्तं जनेनामुना S'atTrayi. 649; अमुया (amuyā) [f. Inst.] 1 thus, so, in that way समिन्द्र गर्दभं मृण नुवन्तं पापयामुया ṚV. i. 29. 5 = AV. xx. 74. 5; ṚV. x. 85. 30; x. 135. 2; जिनाति वेदमुया ṚV. v. 34. 5; AV. vii. 56. 6; 2 there, far away अप द्वेषांस्यमुया भवन्तु AV. v. 22. 1; मा जामिं मोषीरमुया शयानाम् AV. vii. 99. 1; 3 in vain, for nothing (usually with *as* or *bhū*-) वितृन्नोऽयं मस्तिष्को मामुया भूत् JaimiBr. 1. 73; त(त्)स् सिच्यतेऽमुयैव तत् परासिच्यत इति JaimiBr. 1. 315; 3. 250; मामुया भुवम् S'atBr. I. vi. 3. 17; तदमुया स्यात् S'atBr. I. vii. 2. 13; उपजानीत यथेदं नामुयासत् S'atBr. I. vii. 4. 5; तदेतस्मिन् प्रतितिष्ठति तथा नामुया भवति S'atBr. III. viii. 1. 14; VI iii. 3. 26.

अदस् (adas) m. the other world तेषां तप्यमानानां रसोऽजायत … सामवेदोऽमुष्मात् ṢadviBr. iv(5). 1. 2; भक्तिरस्य भजनमिति, तदिहामुत्रोपाधिनैराश्येनैवामुष्मिन् मनःकल्पनम् VedāntRaMañ. 3. 9 (126. 14)

अदस् (adás) adv. 1 there, yonder उताद: परुषे गवि सूरश्चक्रं हिरण्ययम् । न्यैरयद् रथीतमः ṚV. vi. 56. 3; ṚV. i. 187. 7; यत्स्थो दीर्घप्रसद्मनि यद्वादो रोचने दिवः । यद्वा समुद्रे अध्याकृते गृहेऽत आ यातमश्विना ṚV. viii. 10. 1; यददो दिवो अर्णव इषो वा मदथो गृहे ṚV. viii. 26. 17; ये सोमासः परावति … सुन्विरे । ये वादः शर्यणावति ṚV. ix. 65. 22; यद्देवा अदः सलिले सुसंरब्धा अतिष्ठत । अत्रा वो नृत्यतामिव तीव्रो रेणुरपायत ṚV. x. 72. 6; यददो वात ते गृहे ऽमृतस्य निधिर्हितः । ततो नो देहि जीवसे ṚV. x. 186. 3; अदो यदवधावत्यवत्कमधि पर्वतात् AV. ii. 3. 1; अदो यदवरोचते चतुष्पक्षमिव छदिः AV. iii. 7. 3; iii. 13. 1; यददो देवा असुरांस्त्वयाग्रे निरकुर्वत AV. iv. 19. 4; x. 9. 5; xi. 8. 33; अदो यद्देवि प्रथमाना पुरस्तात् AV. xii. 1. 55; xvi. 7. 9; येऽदो रोचने दिवः … तेभ्यः सर्पेभ्यो नमः TaiS. IV. ii. 8. 3; सा वा असौ यददोऽमुष्यादित्यस्योपरिष्टाद् व्यवभाति ज्योतिरिव KauṣīBr. 3. 3 (10. 2); तद् यथैवाद उपस्तत्स्वेवमेवाप्यत्र सुत्याग्रामनवानमेवोपचारः KauṣīBr. 8. 7 (39. 3); अदः … स्यादिदमव्ययम् S'abdaRaSaK. 172. 5; 2 here (in this world) तद्यथैवादो मनुष्यराज आगतेऽन्यस्मिन् वाहंत्युक्षाणं वा वेहतं वा क्षदन्ते AitBr. 3. 4 (65); अनुवषट्करोति तद्यथादोऽश्वाग्ना वा पुनरभ्याकारं तर्पयन्त्येवमेवैतद्देवताः पुनरभ्याकारं तर्पयन्ति AitBr. 11. 5 (299); तद्यथादः पूर्वेषुः स्वष्टं तृणोदकमन्ववस्यन्तो यन्त्येवम् PañcBr. xi. 5. 20; अदः परस्मिन्नत्रापि AnekāK. 932 = Vis'vaPra. 174. 5; इदमेतददोऽपि च । बुद्धिस्थसन्निकृष्टार्थे KoṣaKaTa. 2. 469; 3 then (at that time) यददः संप्रयतीरहावनदता हते AV. iii. 13. 1; अमुनैवानूक्तेन यदद इन्द्रः सारथिरिव भूत्वोदजयत् AitBr. 9. 1 (240); 4 thus, so तददः सौत्रामणीतोष्टिस्तस्यां तद्व्याख्यायते S'atBr. I. vi. 3. 7.

²अदस् (adas) adj. who devours विश्वे हि ष्मा मनवे … मुर्वन्नृचे रिशादसः ṚV. viii. 27. 4; अस्ति हि वः सजात्यं रिशादसो देवासः ṚV. viii. 27. 10.

अदसीय (adas-iya) adj. [f. -ā] [P. iv. 2. 114; i. 1. 74 without *vṛddhi* AltGr. III. 443] pertaining to or relating to that or those त्यदादीनि शब्दरूपाणि वृद्धसंज्ञानि भवन्ति । त्यदीयम् तदीयम् … अदसीयम् KāśiVṛ. on P. i. 1. 74; अपारयन् सोढुमदसीयमविनयममर्षाकुलः सौमित्रिरमोघं माधवनममुत्रदक्षम् RāmāCam. 6. 75 (4); तुलयसि तुलसि किं मुधा राधाम् । यत्तव पदमदसीयं सुरभयितुं सौरभोद्भेदः ĀryāSaS'a. 431; नासादसीया तिलपुष्पतूणम् … कुसुमायुधस्य NaiṣC. 7. 36; 2. 108; 7. 51; 22. 14; SaduktiKa. 211. 10; पूर्वमेव महसा दुरतिक्रमेण व्याप्तं शरीरमदसीयम् S'ankaDigVi. (Mā.) 2. 59; 6. 69; 9. 78; MahāN. 9. 41; तं चाभिषिच्याश्वदसीयरक्षाविधौ व्यधादेष मखं सुखेन HammiMaKā. 1. 16; 3. 20; 5. 38; 8. 70; 9. 45; (अच्युतरायः) अवगाहते स्म मणिधाम हरेरदसीयचित्तमपि भक्तहितः Acyutarā. 5. 26; 1. 37; 2. 14; 5. 17; 6. 31; अदसीयसंप्रदायपरम्परान्तेवासिनम् … धर्मशिवदेशिकाभिधानम् … प्राणंसीत् YātrāPra. 1. 50 (2); 2. 61; 5. 5; 6. 87; पावनिः … प्रतिपादयन् रघुपतेः करोर्मिकामदसीयमौलिमणिमाददे ततः Raghunā. 4. 60; स जगाद … अदसीयगीतिगुणरीतिमाहताम् SīvLi. 18. 50; अदसीयरथानुपातिनी ननु मुग्धे सुरसिन्धुरेष्यति Gaṅgāva. 7. 9; Rāgh. 1. 54; अष्टश्रीदसीयशाश्वततिवज्जाता मयूखावलिः ĀnandRa. 5. 58.

¹अदस्त (á-dasta) adj. [f. -ā] inexhaustible, full सिञ्चामहा अवटमुद्रिणं वयं विश्वाहादस्तमक्षितम् TaiS. IV. ii. 5. 5; तस्मात्प्राणा अदस्ता अरिक्ता दक्षिणस्य हविर्धानस्याधस्तात्सादयत्येतद्वा KāṭhS. 27. 5; अदस्तमसि विष्णवे त्वा । यज्ञायापि दधाम्यहम् TaiBr. III. vii. 4. 17; वैश्वदेवीं वार्त्रघ्नाचा शिवामदस्तां जुष्टां देवेभ्यः TaiĀ. iv. 1. 4 (366. 1); अदस्तमसि विष्णवे त्वेति यवाग्वाः पिण्डमवधाति MānS'S. 11. 18.

²अदस्त (a-dasta) adj. not offering (worship etc.) ततस्तमच्छन्नमदस्तपूर्वबलिमेया स्थापित एव मन्ये DvyāśraKā. 10. 57 (comm. अदस्तपूर्वबलिर्मन्नमदत्तपर्यासपूजोपचारस्तम्)

अदस्त्व (adas-tva) n. thatness विमक्तावितिं किम् … अदस्त्वम् KātanVṛ. on ii. 2. 45.

अदस्य (adas-ya) [denom.] to desire that अद इच्छति, अदस्यति KāśiVṛ. on P. viii 2. 80; अदस्यति KātanVṛ. ii. 2. 45; अदस्यतीत्यत्र सकारान्तत्वात्र Prasā. i. 284. 20.

अदस्यु (a-dasyu) adj. free from (devoid of) miscreants राष्ट्रम् — निर्द्वन्द्वनीरोगमदस्यु तस्य यो लक्षकोटीहवनं विदध्यात् BṛParāSm. 11. 293.

अदस्युप्रवेश्य (a-dasyupraves'ya) adj. inaccessible to thieves अदस्युप्रवेश्यं ग्राममावसितुं यतेत धार्मिकः BaudhDS. ii. 3. 51.

अदःसंख्याभ्यर्ण (adassaṅkhyābhyarṇa) adj. approximating that (given) number, amounting to that quantity अदःसंख्याभ्यर्णं च मदीयं मणिगणमुपनिधिनिवेयं न प्रतिददाति YaśasCam. ii. 347. 7.

अदःसदृश (adas-sadṛs'a) adj. similar to that सिद्धापगे पुरविरोधिजटोपरोधक्रुद्धा कुतः शतमदःसदृशान्विधत्से S'ankaDigVi. (Mā.) 7. 68 (comm. अमुष्य शिवस्य सदृशान्)

अदःसमित् (adas-samit) f. that battle अदःसमित्संमुखवीरयौवतत्रुटद्दृजाकन्दुमृणालहारिणी । … यशोमरालावलिरस्य खेलति NaiṣC. 12. 35.

अदहत् (a-dahat) adj. 1 not scorching लोहेन चीमानदहन् हिताय SuśruS iv. 18. 17; 2 not burning यथैवादहत्यपि वह्नौ दाहकव्यपदेशः NyāyRaMā. 210. 22; यथैव च स एव दहनः पूर्वोक्तलक्षणं दाह्यमदहन् सन् तदाकारेण न परिणमति TātpaVṛ. 63. 12 (on 1. 48); स्नेहाददहति क्षमापे दुर्भदौकःस्थितान् रिपून् RājTa. (Ka.) 8. 465; जर्जरतृणाग्रमदहन् … कीटत्वमात्रतन्त्रः खद्योतः ख्यापयन् भाति Subhāṣi. 779.

अदहन (a-dahana) m. different from fire यदि अनूनमनतिरिक्तं वा दहनकारणमदहनस्यापि हेतुः NyāyKuA. i. 21. 1.

अदहनस्वभाव (a-dahanasvabhāva) adj. not of fiery nature अदहनस्वभावेभ्यो दारुनिर्मथनादिभ्यो वह्नेर्दाहातिशयोत्पत्तिवत् NyāyKa. 82. 11.

अदा (a-dā) (Gr.) other than the root *dā* उभयेषामीकारो व्यञ्जनादावदः Kātan. iii. 4. 44 (comm. दावर्जितानाम्); एषामीर्व्यञ्जनेऽदः SiddhaHe. iv. 2. 97; आद्यघोरा लोप्योऽणौ हसे ल्यदः MugdhaBo. 9. 32 (107. 13)

**अदाक्षिणात्य** (a-dākṣiṇātya) *adj.* not a southerner ओजः समासभूयस्त्वमेतद्गद्यस्य जीवितम् । पद्येऽप्यदाक्षिणात्यानामिदमेकं परायणम् Kāvyāda. 1. 80.

**अदाक्षिण्य** (a-dākṣiṇya) *n.* **1A** incivility, lack of courtesy, impoliteness इदं न प्रतिरूपं ते स्त्रीष्वदाक्षिण्यमीदृशम् BuddhaC. 4. 66; सुरूपामप्यदाक्षिण्यं दूषयति DhūrtaViSaṁ. 23. 15; एतावन्मात्रमप्यस्या अभ्यर्थितमनुवर्तनीयमेव । अन्यथा ह्यदाक्षिण्यमापत्स्येत RasSa. 129. 6; अदाक्षिण्यं परिच्छेदः कार्पण्यमुचितज्ञता ParamāKā. 48. 94; **1B** non-compliance with the wishes of others, non-considerateness स्नेहः ··· माधुर्यं मानयत्नवम् । यो धारयत्यदाक्षिण्यं स मान इति कीर्त्यते UjjvaNīMa. 432. 7; **2** the state of being without sacrificial fee यद्युद्गातृप्रतिहर्त्रोर्युगपदपच्छेदो भवति तत्र संदेहः किमदाक्षिण्यं सर्वस्वं वेति SābaBh. 1475. 26 (*on* vi. 5. 51); पुनर्यजेतेति प्रयोगद्वयसंभवात्पूर्वस्मिन्नदाक्षिण्यं उत्तरस्मिन् सर्ववेदसमपीत्युभयसंभवात्समुच्चयः SāstrDī. 502. 18 (*on* vi. 5. 18); एकस्मिन् ज्योतिष्टोमे शेषिणि पूर्वोद्गातृवि(? प)च्छेदनिमित्तादाक्षिण्यप्रतिहर्तृव(? प)च्छेदनिमित्तसर्वस्वदाक्षिण्यरूपशेषद्वयसमवाये पूर्वशेषविषयादाक्षिण्यश्रुतेः NyāySu.(So.) 1237. 33 (*on* iii. 3. 14); इत्यदाक्षिण्यसर्वस्वदाक्षिण्ययोर्निमित्तक्रमेण पौर्वापर्यप्राप्तौ VīraMi.(Paribhāṣā.) 26. 9; अथवा दक्षिणोत्कर्षविशिष्टपुनःप्रयोगमात्रं तत्रैमित्तिकं पुनरदाक्षिण्यमपि BhāṭṭDī. ii. 302. 12 (*on* vi. 5. 18); ii. 304. 20 (*on* vi. 5.20); यद्यदाक्षिण्ये सति सर्ववेदसं नोपपद्येत ततोऽर्थान्निवर्तेत MayūMāli. 504. 15 (*on* vi. 5. 20)

**अदाक्षिण्य** (a-dākṣiṇya) *adj.* [*f.* -ā] **I** who has not given the sacrificial gift or fee मा पुत्रमनुतप्यथाः । अयज्वानमदाक्षिण्यमपि चैत्येत्युदाहरत् MahāBhā. vii. App. 8 (359); **II** devoid of civility, lacking in obedience अयं सिंहः कुमारराट् ।··· त्वामदाक्षिण्यं कलयिष्यति मानसे SamarāSaṁ. 2. 36; अविवेकमनावेक्ष्यमदाक्षिण्यमनूर्जितम् । धिगहं(? गिदं) जन्म नारीणाम् (comm. दाक्षिण्यम् परच्छन्दानुवर्तित्वम्) ĀścaCū. 3. 30.

**अदाक्षिण्यप्राप्त्यभाव** (adākṣiṇyaprāpty-abhāva) *m.* absence of the possibility of not giving sacrificial fee पूर्वप्रयोगाङ्गभूतकर्त्रानत्यर्थं तस्मिन्नपि तस्या आवश्यकत्वेनादाक्षिण्यप्राप्त्यभावात् (? प्राप्त्यभावात्) BhāṭṭDī. ii. 305. 17 (*on* vi. 5. 55)

**अदाक्षिण्यम्** (a-dākṣiṇyam) *adv.* in an uncivil manner, rudely इत्थं यदा निषिद्धोऽपि मृगान् हन्ति स्म भूपतिः । रूक्षाक्षरमदाक्षिण्यं तदा तेन व्यभाषत PāṇḍaC. 1. 96.

**अदाक्षिण्यमात्र** (adākṣiṇya-mātra) *n.* only the non-payment of sacrificial fee अदक्षिणयागोत्तरम् ··· पुनः प्रयोगस्य सर्वस्वदक्षिणया स्फुटविरोधाभावात् अदाक्षिण्यमात्रमुक्तम् LaCandr. 382. 15.

**अदाक्षिण्यलोप** (adākṣiṇya-lopa) *m.* failure of non-payment of sacrificial fee अदाक्षिण्यलोपे पुनःप्रयोगलोपः BhāṭṭDī. ii. 305. 8 (*on* vi. 5. 55)

**अदाक्षिण्यविरोध** (adākṣiṇya-virodha) *m.* contradiction with (the injunction of) non-payment of sacrificial fee तत्र प्रथमप्रयोगेऽदाक्षिण्यविरोधात्सर्वस्वं बाध्यते SābaBh. 1478. 20 (*on* vi. 5. 55)

**अदाक्षिण्यसर्वस्व** (adākṣiṇya-sarvasva) *n.* extreme lack of considerateness यदपि चात्र सौवर्णानि गृहाणि सौवर्णास्तरवः श्रूयन्ते तद्विबुधानामदाक्षिण्यसर्वस्वम् DhūrtaViSaṁ. 29. 13.

**अदाक्षिण्यानुवृत्ति** (adākṣiṇyānuvṛtti) *f.* act of discourtesy न ह्यसावदाक्षिण्यानुवृत्तिः JātaMā. 40. 7 (8. 37)

**अदाक्षिण्याभाव** (adākṣiṇyābhāva) *m.* absence of non-payment of sacrificial fee सर्वस्वे क्रियमाणेऽदाक्षिण्याभावाद्विगुणः स्यात् SābaBh. 1476. 13 (*on* vi. 5. 53)

**अदातव्यता** (adātavya-tā) *f.* the state of not to be given, the state of being not liable to be given or paid अनेन व्यतिरिक्तस्य कृष्यादिलब्धस्यादातव्यतोक्ता ManuBh. ii. 301. 15 (*on* 9. 208)

**अदातुकाम** (a-dātukāma) *adj.* [*f.* -ā] unwilling to give, not desirous of giving मद्रका ··· अदातुकामा वचनमिदं वदति दारुणम् MahāBhā. viii. 27. 87; अदातुकामं देवेन्द्रं प्रणिपत्य तमर्जुनः । उवाच SkandP. v(1). 32. 29; मद्यमात्रश्रोपक्रतो हठाददातुकाममपि (नायकं दापयति) JayaMa. 327. 3 (*on* 6. 3); वल्लमेऽदातुकामेऽपि दृष्ट्वा संविद्व्यतिक्रमम् । प्रेषयामास दूतं सः BallāC. 17. 5.

**अदातृ** (a-dātṛ) *adj.* **I** non-giver, not liberal, miser, niggardly अदाता पुरुषश्च यः । नैते लोकानामनुवन्ति MahāBhā. iii. App. 1. 4 (20); अदातारः ··· दुःखानामेव भोक्तारः MahāBhā. xii. 12. 30; अदाता ह्यपि भूतानां मधुरामीरयन् गिरम् । सर्वलोकमिमं शक्र सान्त्वेन कुरुते वशे MahāBhā. xii. 85. 8; अदाता ह्यनतिस्नेहः ··· क्षिप्रमेव विनश्यति MahāBhā. xii. 93. 15; अदातृभ्यो हरेत्द्रव्यम् ··· नृपतिः MahāBhā. xii. 159. 10; समर्थाश्चाप्यदातारस्ते वै निरयगामिनः MahāBhā. xiii. 24. 78; xiii. 6. 17; अयोध्यायाम् ··· नानृष्टभोजी नादाता ··· दृश्यते Rāmā. i. 6. 11; i. 117*(1); नागौरवो बन्धुषु नाप्यदाता ··· आसीत् ··· तस्य राज्ये BuddhaC. 2. 11; आदाननित्याच्चादातुराहरेदप्रयच्छतः ManuSm. 11. 15; भाद्रपदाषाढ्विशः ··· पट्टदाता च Bṛbajjā. 16. 13; BṛSaṁ. 101. 13; अदाता च सदा लुब्धः श्वपचः परिकीर्तितः BṛParāSm. 8. 190; ParāSm. 2. 10; परोपघातक्रियया वर्जयेदर्जनं श्रियः । अर्थानां बहुनर्थानामदातापि ह्यसंभवात् । स्वर्गापवर्गविभवानयत्नेनाधितिष्ठति AṣṭāSaṁ. i. 13. 16 (1. 3); अदाता विषमश्नुते LaSātāSm. 18; अदातारं(? रः) समर्था ये ··· दीनानाथान्न पश्यन्ति ते वै निरयगामिनः VṛGautaSm. 582. 18 (10); न कदर्यः अदाता सति विभवे ChāndoUBh. 314. 9 (*on* v. 11. 5); अदाता पुरुषस्त्यागी धनं संत्यज्य गच्छति । दातारं कृपणं मन्ये VedaVyāSm. 4. 25 = SūktiRa. 170. 8 = SārṅgaPa. 468; अदातुरत्यागशीलस्य ManuBh. ii. 373. 19 (*on* 11. 14); अदातुः प्रियालापोऽन्यस्य लाभस्यान्तरायः NītiVā. 1. 17; अदातुस्तावत्स्नेहः ··· साधुता च यावन्नार्थावाप्तिः NītiVā. 32. 17; न ह्येतस्मिन् कुले ··· यो वादाता द्विजातये BhāgP. viii. 19. 3; VāmaP. 14. 92; उभावप्यदातारावकार्यकरौ च JayaMa. 311. 8 (*on* 6. 1); अहुताशी सहस्रेण अदाता च विशुध्यति (द्विजः) LiṅgaP. i. 15. 12; BhaviP. 717A. 1 (iv. 79. 6); अत्र जन्तुपदमदातर्यर्थे विवक्षितम् KāvyPra. 275. 3; अदातरि समृद्धेऽपि किं कुर्युरनुजीविनः SubhāRaK. 49. 10 = SārṅgaPa. 1372 = Subhāṣi. 472; किं वित्तं दत्त तुष्टयेमदातरि हरिप्रिया NaiṣC. 17. 81; अदातुः फलमीदृशम् PārśvC. 7. 506; 1. 125; ManvaVi. 1350. 18 (*on* 11. 15); SārṅgaPa. 274; मत्वा लोकमदातारं संतोषे यैः कृता मतिः SāhiDa 341. 2; नृपतिरदाता VetāPañ.(Si.) 19. 45; अदातुर्दाक्षिण्यं न हि भवति BhojPra. 10. 25; चारणदानमदातृमैन्त्रिणः पुरश्चारणेन पठितम् PurāPraSaṁ. 51. 14; नादातारो नाप्यधर्मे प्रसक्ताः । विप्राः ··· स्थातुं बाल्ये तस्य राष्ट्रे चकाङ्क्षुः SivLī. 13. 4; इतरथादातरि किञ्चिद्दातरि वा तस्मिन् ··· भक्तेरनुदयः स्यात् GoviBh. 216. 13 (*on* iii. 2. 39); Vaija. 205. 59; प्रजाशत्रुरदाता धनिकश्च यः SukraNī. 4(1). 17; **II** who does not pay, a defaulter अदातुः स्वाहस्तक्यं स्वयमभ्युपगमः ManuBh. ii. 75. 4 (*on* 8. 3); **III** (surety) not liable for payment अदातरि पुनर्दाता ··· ऋणम् । पश्चात्प्रतिभुवि प्रेते परीप्सेत्केन हेतुना ManuSm. 8. 161; संदेहहेतुः पदद्वयेनादातरि विज्ञातप्रकृताविति ··· अदातरि प्रतिभुवि ManuBh. ii. 150. 24 (*on* 8. 161); अदातरि दर्शयितरि SmṛtiCan. iv. 353. 29; **IV** who does not give (in marriage) कालेऽदाता पिता वाच्यः ManuSm. 9. 4.

**अदातृगृहज** (a-dātṛgṛhaja) *adj.* other than the one born in the house of (i. e. son of) a liberal person नादातृगृहजो लुब्धः ··· इति भूतार्थसंग्रहः RājTa.(Ka.) 4. 91.

**अदातृत्व** (adātṛ-tva) *n.* **A** the state of being niggardly or miserly, absence of liberality अदान्तत्वादातृत्वादयालुत्वैः अपराधित्वमात्मनो मन्यमानाः BṛĀraUBh. 699. 6 (*on* v. 2. 3); कदर्यादीनामदातृत्वात् JayaMa. 355. 22 (*on* 6. 6); अपराधशतं राजन्छुष्व ··· अदातृत्वमशौचं च BhaviP. 824A. 30 (iv. 146. 7); RasGaṅ. 428. 13; **B** the state of not being liable to repay (money) प्रतिभुवो मृतत्वात् तत्पुत्रस्य चादानप्रतिभूत्वेनादातृत्वादित्याशङ्क्याह ManvaMu. 319. 1 (*on* 8. 162)

**अदातृत्वप्राप्ति** (adātṛtva-prāpti) *f.* contingency of being a non-payer, non-liability for repayment (of money) पौत्रे मृते तत्पुत्रस्य तेनादातृत्वप्राप्तावप्यतिक्रान्तमित्युक्तेस्तेषां दातृत्वप्राप्तिर्भवति BālamBha. ii. 99. 28 (*on* 2. 90)

**अदातृमानस** (adātṛ-mānasa) *n.* mind of a non-liberal or niggardly person अदातृमानसं क्वापि न स्पृशन्ति कवेर्गिरः BhojPra. 24. 28.

**अदादि** (adādi) (Gr.) (roots) beginning with *ad*- (i. e. roots of the second conjugation) अदादेर्लुग् विकरणस्य Kātan. iii. 4. 92; शपोऽदादिभ्यः JaineVyā. i. 4. 143; अदादिभ्यो लुक् CāndraVyā. i. 1. 83 = Sarakaṇṭhā.(Gr.) i. 3. 109; ह्यादादेरदलुग्लुक् SākaṭāVyā. iv. 3. 21; अथादादय उच्यन्ते DhātuPra. 2. 1 (76. 1); अदादेः परस्यापो लुक् स्यात् MugdhaBo. 9. 2 (103. 8); PrakriKau. ii. 178. 4 (*on* ii. 4. 72); यत्त्वाशीर्लिङि लिटि चादादिषु जुहोत्यादिषु च शवाद्यभावात्तत्प्रतीतिर्न स्यात् VaiyāBhū. 24. 22 (*on* 3); तथा चादादिगणे 'हन हिंसागत्योः' अस्य प्रक्रियायां स्वयमेव वक्ष्यते Prasā. i. 227. 12.

**अदादित्व** (adādi-tva) *n.* the state of belonging to (the group of roots) beginning with *ad*- (i. e. roots of the second conjugation) अदादित्वाच्छपो लुकि ··· नलोपो न LaSabdeSe. i. 347. 24.

**अदादिमात्रत्वाभाव** (adādimātratvābhāva) *m.* absence of the state of only belonging to (the group of roots) beginning with *ad*- (i. e. roots of the second conjugation) उभयानुकरणेनादादिमात्रत्वाभावान्न शपो लुक् LaSabdeSe. ii. 440. 17.

**अदादिवत्** (adādi-vat) *adv.* like the roots belonging to (the group) beginning with *ad*- (i. e. roots of the the second conjugation) चर्करीतमिति यङ्लुगन्तं तत् परस्मैपदि अदादिवत् ज्ञेयम् PrakriKau. ii. 360. 5.

[1]**अदादेश** (ad-ādeśa) *m.* substitute *at* अभ्यस्ताज्झेरदादेशे दधतीत्यादयोऽपि च Kāvyālaṅ.(Bh.) 6. 58; तदादादेशो झकारस्य न स्यात् PariVṛ.(Si.)

-अदृष्टसंगतित्वेन सर्वेषां तुल्यता यतः S'lokaVār. 6. 249 (793. 3); 7. 4 (847. 5); नाप्यनुमानेन। केनचिल्लिङ्गेन सहादृष्टसंगतित्वात् TantrVā. 360. 13 (on ii. 1. 5)

**अदृष्टसंग्रामरङ्ग** (adṛṣṭa-saṅgrāmaraṅga) *adj.* who has not seen the battlefield जन्मारभ्यादृष्टसंग्रामरङ्गः ··· अदुद्रुवत् Raghunā. 10. 88.

**अदृष्टसत्य** (adṛṣṭa-sattya) *adj.* who does not see the truths [CONZE]

**अदृष्टसत्याश्रय** (adṛṣṭasatiyāśraya) *adj.* resorted to by one who has not known the truth (i. e. the Ārya Satyas) अदृष्टसत्याश्रयो हि तर्कः कश्चिदागमनिश्रितो भवति MaYānaSū. 5. 12 (1. 12)

**अदृष्टसदृश** (adṛṣṭa-sadṛśa) *adj.* [*f.* -ī] similar to which is not perceived न चादृष्टपूर्वस्यादृष्टसदृशस्य चोपमानविषयत्वम् TantrVā. 361. 5 (on ii. 1. 5); न चादृष्टस्यादृष्टसदृशस्य वोपमानप्रमेयत्वम् TātpaṬ.(U.) 445. 22 (on 5(11). 12); उपमानं तु अदृष्टे अदृष्टसदृशे वा न प्रवर्तते MīmāKau. i. 5. 7 (on i. 3. 1); अद्यापि त्वां जगति वर्णयितुं न कश्चिच्छक्नोत्यदृष्टसदृशीं च परिग्रहं मे CaurPañ. 38.

**अदृष्टसदृशत्व** (adṛṣṭasadṛśa-tva) *n.* similarity (of which) is not seen अदृष्टसदृशत्वाच्च स्वयं चानुपलम्भनात् S'lokaVār. 4. 100 (on 165. 3); अदृष्टपूर्वत्वाददृष्टसदृशत्वादिति यथासंख्येन हेतुद्वयम् TātpaṬ.(U.) 144. 23 (on 4. 100); धर्मो नोपमीयते अदृष्टसदृशत्वात् Kāśi. i. 245. 8 (on 4. 100); तथा नानुमेयोऽपि अदृष्टसदृशत्वात् YuktiSneha. 37. 25 (on i. 1. 4)

**अदृष्टसदृशद्वय** (adṛṣṭa-sadṛśadvaya) *adj.* who has not seen both the similar (objects) अस्ति चादृष्टसदृशद्वयस्यापि ··· सादृश्यविशिष्टे प्रत्ययः NyāyRa. 447. 21 (on 5(6). 45)

**अदृष्टसदृशप्रज** (adṛṣṭa-sadṛśapraja) *adj.* who has not seen (obtained) a befitting offspring वध्वां तवैतस्यामदृष्टसदृशप्रजम्। न मामवति ··· मेदिनी RaghuVa. 1. 65.

**अदृष्टसद्भावाभाव** (adṛṣṭa-sadbhāvābhāva) *m.* unperceived presence and absence न चान्वयव्यतिरेकवर्ती वाच्यप्रतीतिमपह्नुत्यादृष्टसद्भावाभावौ शरणत्वेनाश्रितौ मात्सर्यादधिकं किंचित्पुष्णीत इत्यभिप्रायः Loc. 184. 24 (on 3. 33)

**अदृष्टसंदर्शन** (adṛṣṭa-sandarśana) *n.* phenomenal cognition अदृष्टसंदर्शनमेवमख्यातिरूपमण्डं मायामलम् ParāTri. 250. 6.

**अदृष्टसंदेहप्रकार** (adṛṣṭa-sandehaprakāra) *m.* unknown variety of the figure of speech called Doubtful अलमदृष्टसंदेहप्रकारकल्पनया SāhiDa. 547. 4.

**अदृष्टसंनिकर्ष** (adṛṣṭa-sannikarṣa) *m.* contact which is not perceived नन्वदृष्टसंनिकर्षकल्पना कुतः क्रियते Upask. 360. 13 (on viii. 1. 4)

**अदृष्टसप्ति** (adṛṣṭa-sapti) *adj.* who has not found the horse (सागराः सगरपुत्राः) अदृष्टसप्तयस्तत्र पाताले गन्तुमुद्यताः BṛNāraP. 8. 96.

**अदृष्टसमवधान** (adṛṣṭa-samavadhāna) *n.* connection with the unseen effect यथा कारीरीजनितसंस्काराधारपुरुषसंयोगाज्जलमुचामदृष्टसमवधानम् TattvCin. ii(2). 141. 10.

**अदृष्टसमवाय** (adṛṣṭa-samavāya) *m.* inherence of the unseen merit एकशरीरावच्छिन्नात्मप्रदेशेऽदृष्टसमवायात् सुखादिव्यवस्था चायुक्ता S'rutaPra. ii. 386. 15 (on ii. 3. 52)

**अदृष्टसमविषमभाग** (adṛṣṭa-samaviṣamabhāga) *adj.* (road) in which even and uneven regions are not seen अदृष्टसमविषमभाग इव ··· अतिक्रान्तः ··· मार्गः NalaCam. 6. 72 (5)

**अदृष्टसमुपार्जन** (adṛṣṭa-samupārjana) *n.* obtainment of unseen merit ननु तान्यदृष्टसमुपार्जनेन करणानि NayaMañ. IV. i. 1. 1.

**अदृष्टसंपत्ति** (adṛṣṭa-sampatti) *f.* accomplishment of unseen merit नास्यस्य रचनाप्राधान्यादैचित्र्येण योजनीयमदृष्टसंपत्तये चेति मन्तव्यम् AbhinBhā. i. 220. 14 (on 5. 30)

**अदृष्टसंपादकत्व** (adṛṣṭasampādaka-tva) *n.* accomplishment of unseen merit यदा तु नृत्तस्यादृष्टसम्पादकत्वे प्राधान्यं क्रियते तदा तदनुसारेण गीतकादेराश्रयणम् AbhinBhā. i. 166. 1 (on 4. 252)

**अदृष्टसंपादन** (adṛṣṭa-sampādana) *n.* achievement of the unseen merit न तु पूर्वरङ्गवदृष्टसंपादनं विघ्नवारणम् Loc. 150. 13 (on 3. 14)

**अदृष्टसंबन्ध** (adṛṣṭa-sambandha) *adj.* of unseen relationship, the relation with which is not seen लिङ्गं चादृष्टसंबन्धं न तेषामनुमापकम् NyāyMañ. i. 147. 26; न हि पुरुषेणादृष्टसंबन्धो दण्डः पुरुषमुपलक्षयति TārkiRa. 90. 7; *m.* connection with the unseen merit अतः स्वाश्रयसंयोगसंबन्धेनैवादृष्टसंबन्धः शुक्रादिषु वक्तव्यः SāmkhyaPraBh. 161. 2 (on 6. 61)

**अदृष्टसंभावन** (adṛṣṭa-sambhāvana) *n.* possibility of an unseen (source) कथंचित्तेनादृष्टसंभावनेऽपि तद्विशेषासिद्धेः TattvPrakā. 55A. 9 (on i. 3. 28)

**अदृष्टसंभोगा** (adṛṣṭa-sambhogā) *adj.* (*f.*) who has not experienced sexual union बालामदृष्टसंभोगां मत्वा तां नरवाहनः। धूर्तो युक्तिमुपाश्रित्य प्राह निद्राकुलाक्षरम् BṛKathāMañ. ix. 1. 14.

**अदृष्टसंमुखाराति** (adṛṣṭa-sammukhārāti) *adj.* who has not met the foe face to face अदृष्टसंमुखारातेर्ममाप्यल्पतरो रिपुः। ··· प्रयातः कृच्छ्रसाध्यताम् RāmāMañ. 335. 5.

**अदृष्टसर्ववृत्तान्त** (adṛṣṭa-sarvavṛttānta) *adj.* who has not observed (i. e. known) all events अदृष्टसर्ववृत्तान्त एव विवेशोज्जयिनीम् Kād. 285. 7.

**अदृष्टसव्यपेक्ष** (adṛṣṭa-savyapekṣa) *adj.* expectant of the unseen merit and demerit अदृष्टसव्यपेक्षादेवात्ममनस्तद्विज्ञानं भवति PramāMī. 36. 5 (on i. 2. 4)

**अदृष्टसहकारिन्** (adṛṣṭa-sahakārin) *adj.* having the unseen merit as auxiliary केवलपृथिव्यवयवैरदृष्टसहकारिभिर्घटितं घ्राणेन्द्रियम् NyāyMañ. ii. 57. 17; नाप्यदृष्टसहकारिसहितमिन्द्रियमेकत्वविषयम् PramāMī. 36. 4 (on i. 2. 4)

**अदृष्टसहकृत** (adṛṣṭa-sahakṛta) *adj.* accompanied or helped by the unseen cause अदृष्टसहकृताद्वाक्यादनुभव उत्पद्यते PrakaVi. 964. 16; 964. 21; अदृष्टसहकृतत्वगिन्द्रियेण हि मनोवहनाडीनामुपलम्भेन तद्योगप्रयत्नात् TattvCin. ii(2). 30. 15; ii(2). 81. 11; ततस्तैरेव हेतुभिरदृष्टसहकृतैस्तत्तत्कार्योदयसंभवात् NyāyPari. 292. 3.

**अदृष्टसाजात्य** (adṛṣṭa-sājātya) *n.* generic sameness of unseen merit अदृष्टसाजात्येऽपि ··· तन्त्रत्वमेव BhaṭṭDī. iv. 229. 16 (on xii. 1. 8)

**अदृष्टसाद्गुण्य** (adṛṣṭa-sādguṇya) *n.* good qualities (perfection) of unseen merit अदृष्टसाद्गुण्ये मुमुक्षुत्वादेव ब्रह्मजिज्ञासोपपत्तौ कर्मविचारानर्थक्यात् SiddhāSi. i. 15. 19.

**अदृष्टसाधन** (adṛṣṭa-sādhana) *n.* supernatural means अदृष्टसाधनमाह नक्षत्रेति JayaMa. 20. 9 (on 1. 2); अदृष्टसाधनात्तु वैदिककर्मणः (अत्यन्तदुःखनिवृत्तिः) स्यात् SāmkhyaPraBh. 9. 2 (on 1. 6)

**अदृष्टसाधनता** (adṛṣṭasādhana-tā) *f.* the state of being the means of unseen merit अदृष्टसाधनताबोधकवाक्य उपलक्षणान्तराभावात् MayūMāli. 44. 40 (on i. 3. 9)

**अदृष्टसाधनत्व** (adṛṣṭasādhana-tva) *n.* the state of being the means of unseen merit नादृष्टसाधनत्वं प्रतीयते TantrVā. 383. 20 (on ii. 1. 6); अदृष्टसाधनत्वस्य हि अष्टकादौ प्रत्यक्षविषयत्वात् MīmāKau. i. 127. 23 (on i. 3. 27)

**अदृष्टसाधनरूप** (adṛṣṭasādhana-rūpa) *n.* nature of the means of unseen merit अदृष्टसाधनरूपेणापि भेदादावृत्तिः MayūMāli. 840. 23 (on xi. 4. 15)

**अदृष्टसाध्य** (adṛṣṭa-sādhya) *adj.* [*f.* -ā] I to be accomplished by unseen (means) ऋत्विक्कार्ये तु कर्मनिर्वृत्तिर्दृष्टैव सा कथमदृष्टसाध्या भविष्यति TantrVā. 1147. 3 (on iii. 7. 33); अदृष्टसाध्यस्वर्गादिफलं निवीतवन्न कल्प्यम् MayūMāli. 264. 36–37 (on iii. 4. 7); II to be accomplished by unknown means पश्यन्ति ये धर्ममदृष्टसाध्यम् YaśasCam. ii. 252. 23.

**अदृष्टसाध्यत्व** (adṛṣṭasādhya-tva) *n.* the state of being accomplished by unseen (means) अदृष्टसाध्यत्वे मोक्षस्यानित्यताप्रसक्तिः NyāySu.(Ja.) 24A. 12 (on i. 1. 1); नियमेन शब्दोपलम्भस्यादृष्टसाध्यत्वे तदनुपलम्भस्य शब्दे सत्यपि संभवेन तदभावानुभवायोगाच्च BhedaDhi. 72. 2.

**अदृष्टसापेक्ष** (adṛṣṭa-sāpekṣa) *adj.* [*f.* -ā] depending on the unseen effect नावरणापनयनं तस्याभिव्यञ्जकं, वायुना शब्दावरणासंभवात् किं त्वदृष्टसापेक्षेण PrakaPañ. 358. 22; द्वयोः परमाण्वोरदृष्टसापेक्षा क्रिया GoviBh. 120. 1 (on ii. 2. 10)

**अदृष्टसापेक्षत्व** (adṛṣṭasāpekṣa-tva) *n.* the state of being dependent on the unseen effect वयं तु वदामः-अदृष्टसापेक्षत्वाददोषः PrakaPañ. 130. 11.

**अदृष्टसामग्री** (adṛṣṭa-sāmagrī) *f.* assemblage of unseen means अदृष्टसामग्रीजन्यत्वे अदृष्टव्याप्तिरिति चेत् TattvCin. ii(2). 11. 11–12; तत्रादृष्टसामग्रीवैचित्र्यमेवानुमेयम् SarvaDaKau. 30. 22.

**अदृष्टसामर्थ्य** (adṛṣṭa-sāmarthya) *n.* I unperceived power or efficacy उभयत्राप्यदृष्टसामर्थ्यं कल्पनीयम् TātpaṬ.(U.) 80. 22 (on 2. 147); कर्मणोऽदृष्टसामर्थ्यं यज्ज्ञानापनुन्मतम् BṛĀraUBhVā. iii. 3. 97; II power of destiny दिग्योहेऽदृष्टसामर्थ्यादिक्स्वरूपानवग्रहात् PrakaPañ. 58. 1; *adj.* whose power is not seen or observed सच्छब्दौ च पृथगर्थेष्वदृष्टसामर्थ्यानामवेक्ता च न सिध्यति PramāVāSvopVṛ. 85. 27; क्रमकरणे तु को विरोधो येन ··· अदृष्टसामर्थ्यस्य विभागस्य विभागहेतुत्वमाश्रीयते NyāyKa. 157. 7; न ते प्रेक्षावद्भिरदृष्टसामर्थ्योपधिवत्प्रवर्तन्त इत्यप्रवृत्ताः JayaMa. 12. 8 (on 1. 2)

**अदृष्टसामर्थ्यत्व** (adṛṣṭasāmarthya-tva) *n.* the state of one whose power is not seen सर्वं सर्वत्र विनियुज्यते न वा किंचित् क्वचित् अदृष्टसामर्थ्यत्वात् BrahmSi. 54. 11.

**अदृष्टसामर्थ्यवैकल्य** ( adṛṣṭasāmarthya-vaikalya ) *n.* deficiency of the power of unseen (fruit) पुस्तकपाठादिलब्धवेदार्थज्ञानस्येव शास्त्रविरोधाददृष्टसामर्थ्यवैकल्यं च S'rutaPra. ii. 77. 30 (*on* i. 3. 33)

**अदृष्टसामानाधिकरण्य** ( adṛṣṭa-sāmānādhikaraṇya ) *n.* coexistence with the unseen ( effect ) स्थैर्याभ्युपगमात्तत्राप्यदृष्टसामानाधिकरण्यमेवास्ति SāṅkhyaPraBh. 18. 28 (*on* 1. 33)

**अदृष्टसाम्य** ( adṛṣṭa-sāmya ) *n.* similarity with the unseen (effect) अदृष्टसाम्यप्रतिपादनार्थमिति यद्युच्येत BrahmSūBh.(S'aṅ.) 494. 10 (*on* ii. 4. 1)

**अदृष्टसिद्धि** ( adṛṣṭa-siddhi ) *f.* A attainment of the unseen (result or fruit) धर्मानकुर्वतः प्रत्यवायेनावश्यमेव भवितव्यं, कुर्वतस्तु न कदाचिददृष्टसिद्धिः ManuBh. ii. 310. 15 (*on* 9. 249); अस्तु तन्निर्धारितरूपादृष्टसिद्धिः Kāśi. ii. 246. 17 (*on* 4. 105); पशुना यजेतेत्यादौ पशुनिष्ठताद्दृष्टैकत्वस्य विवक्षितत्वादनेकपशुकरणकयागानादृष्टसिद्धिः VyutpaVā. 16. 3; एकयजमानप्रकाशनेऽप्यदृष्टसिद्धेर्न बहुधूह इत्यर्थः MayūMāli. 595. 2 (*on* ix. 1. 13); B I establishment of the unseen thing दृष्टाददृष्टसिद्धिस्तवानुमानवादिन इतरथातिप्रसङ्गात् PrakaVi. 473. 19; II establishment of the unseen (cause or effect) तदिह न निगमादन्यतोऽदृष्टसिद्धिः TattvMu. 5. 77; न च जीवत्सवेशरीरे पतितं (रेतः) कार्यकरमतस्तत्तत्कर्मेकेश्वराद्दृष्टसिद्धिः TattvPrakā. 10A. 9 (*on* i. 1. 3); तत्राद्दृष्टसामग्रीवैचित्र्यमेवानुमेयं कारणवैचित्र्यं विना कार्यवैचित्र्यासंभवात्, अतोऽदृष्टसिद्धिरिति SarvaDaKau. 30. 23.

**अदृष्टसिद्ध्यर्थ** ( adṛṣṭa-siddhyartha ) *adj.* which is meant for the attainment of unseen (fruit) नियमः पुनरदृष्टसिद्ध्यर्थस्य वचनमन्तरेण पाक्षिकी प्राप्तिः ManuBh. i. 228. 22 (*on* 3. 45)

**अदृष्टसिध्यर्थम्** ( adṛṣṭasiddhy-artham ) *adv.* for the sake of attaining unseen (fruit) हविर्विनाशेऽपि हविरन्तरमुत्पाद्यादृष्टसिद्ध्यर्थम् स्विष्टकृद्यागः कर्तव्यः NyāyRaMā. 146. 3.

**अदृष्टसीमन्** ( adṛṣṭa-siman ) *adj.* the limits of which are not seen धुर्य मर्यादावतामदृष्टसीम्नां च ··· अम्भोनिधिमपश्यम् TilaMañ. 122. 18.

**अदृष्टसुखलेश** ( adṛṣṭa-sukhaleśa ) *adj.* who has not experienced (even) a bit of happiness स्वामिनिर्वाणकल्याणान्निर्वाणो दुःखपावकः। अदृष्टसुखलेशानां नारकाणामपि क्षणम् TriṣaS'aPuC. i. 6. 493.

**अदृष्टसुखवाञ्छा** ( adṛṣṭasukha-vāñchā ) *f.* desire for unseen or unknown pleasure स प्राह वञ्चितासि त्वमदृष्टसुखवाञ्छया SamarāSam. 2. 165.

**अदृष्टसुखेच्छा** ( adṛṣṭasukhecchā ) *f.* desire for unseen or unknown pleasures हित्वा साक्षाद्भवसुखं तददृष्टसुखेच्छया। तपश्श्रिकीर्षुस्त्वमसि PariPar. 3. 147.

**अदृष्टसुतवक्त्र** ( adṛṣṭa-sutavaktra ) *adj.* who has not seen the face of a son वृथैव चावयोः प्रीतिरदृष्टसुतवक्त्रयोः TriṣaS'aPuC. iii. 3. 30.

**अदृष्टसुधाकर** ( adṛṣṭa-sudhākara ) *adj.* during which the moon was not seen सितपक्षस्य प्रतिपद्दिनेऽदृष्टसुधाकरे ··· सोऽगान्नृपतिसंनिधौ RatnaCūKa. 282.

**अदृष्टसृष्ट** ( adṛṣṭa-sṛṣṭa ) *adj.* produced by the unseen (cause) तद्यथा कार्यत्वाददृष्टसृष्टमङ्कुरादि मीमांसकः शंसति KhaṇḍanKhā. 1288. 10; विग्रहादिकं खल्वदृष्टसृष्टं तदानीमदृष्टाभावात्तन्न संभवेत् GoviBh. 319. 6 (*on* iv. 4. 10)

**अदृष्टसेवक** ( adṛṣṭa-sevaka ) *adj.* whose servants are not seen (i. e. have disappeared) अदृष्टसेवकाः सार्कं धरायास्तनयैः कृताः PadmP.(Ra.) 91. 37.

**अदृष्टसैन्य** ( adṛṣṭa-sainya ) *adj.* losing sight of the army एकदादृष्टसैन्योऽसावनुगच्छन्मृगं रुरुम् BṛNāraP. 9. 11; अदृष्टसैन्य एकाकी पीड्यमानः क्षुधा तृषा BṛNāraP. 21. 59.

**अदृष्टसैन्यरजस्** ( adṛṣṭa-sainyarajas ) *adj.* who had not seen the dust raised by the army अदृष्टसैन्यरजसामवाणस्पर्शवेदिनाम्। पश्यन् कीचकमित्राणां स जिह्माय पलायनम् Yādavā. 22. 82.

**अदृष्टस्पर्शवर्जित** ( adṛṣṭasparśa-varjita ) *adj.* devoid of contact with the unseen (effect) अवघातादिविषयो नादृष्टस्पर्शवर्जिताः BrahmSi. 152. 10.

**अदृष्टस्पृष्ट** ( adṛṣṭa-spṛṣṭa ) *adj.* in contact with the unseen (merit and demerit) अदृष्टस्पृष्टोऽपि प्रसवितसुषुप्ताविव तदा समस्तो जीवात्मा कलयति न दुःखं न च सुखम् Vidvanmo. 4. 41.

**अदृष्टस्मरसंताप** ( adṛṣṭa-smarasantāpa ) *adj.* who has not felt the pangs of love अदृष्टस्मरसंतापः स्वस्रस्त्वं किं न जल्पसि KathāSaSāg. ix. 1. 203.

**अदृष्टस्वभावत्व** ( adṛṣṭasvabhāva-tva ) *n.* the state of having unseen nature नापि कार्यकारित्वं, तस्यादृष्टस्वभावत्वात् NyāySu.(Ja.) 109B. 6 (*on* i. 1. 3)

**अदृष्टस्वरूप** ( adṛṣṭa-svarūpa ) *adj.* I whose nature is not perceived सुमाकाराः प्रसुप्ते भगवति विबुधैरप्यदृष्टस्वरूपाः ··· केशाः ViṣṇuPādāSt. 33. 46; तत्रादृष्टस्वरूपाय श्रुतपूर्वाय वै विभो। स्तुतिममृत BhāgP. viii. 5. 25; II of the form of unseen (effect) अदृष्टार्थत्वे ह्यदृष्टस्वरूपं तस्य फलत्वमुच्चारणे जननसामर्थ्यं च कल्पनीयम् MayūMāli. 16. 14 (*on* i. 2. 4); *n.* nature or form of the unseen लोकोऽदृष्टस्वरूपेण स्वर्गार्थत्वेऽप्यानर्थक्याभावात् ··· तदर्थत्वेऽपि नानर्थक्यमिति भावः MayūMāli. 578. 8 (*on* ix. 1. 3)

**अदृष्टस्वरूपत्व** ( adṛṣṭasvarūpa-tva ) *n.* the state of having the nature of the unseen जीवः पर्जन्यदैवशक्तिमानीश्वरः स्मृतः। दैवशब्दोऽदृष्टस्वरूपत्वमाह NyāySu.(Ja.) 329B. 6 (*on* ii. 2. 2)

**अदृष्टस्वर्गार्थ** ( adṛṣṭasvargārtha ) *adj.* intended for the unseen heaven दृष्टार्थज्ञानार्थत्वमेव न त्वदृष्टस्वर्गार्थमिति ··· प्रपञ्चितम् MayūMāli. 7. 13 (*on* i. 2. 1)

**अदृष्टस्वलक्षण** ( adṛṣṭa-svalakṣaṇa ) *adj.* whose distinguishing nature is not observed कथं पुनरदृष्टस्वलक्षणे संबन्धिदर्शनम् Bṛha. 98. 3 (*on* i. 1. 5); अपरे पुनरदृष्टस्वलक्षणविषयं शक्तिक्रियानुमानं सामान्यतोदृष्टमुदाहरन्ति NyāyMañ. i. 121. 17; अदृष्टस्वलक्षणेऽपि क्रियाशब्दत्यादौ सामान्यरूपेण संबन्धग्रहणादेवानुमोत्पत्तेः NayaVi. 128. 10 (*on* i. 1. 5); कथं पुनरदृष्टस्वलक्षणेन संबन्धदर्शनम् Kāśi. iii. 82. 6 (*on* 5[4]. 138); अदृष्टस्वलक्षणविषयमप्यनुमानं क्रियादिविषयमस्ति S'āstrDi. 69. 8 (*on* i. 1. 5); नन्वदृष्टस्वलक्षणस्यापि कर्मणः संयोगविभागाभ्यामनुमानात् NyāyRa. 370. 20 (*on* 5(7). 75); अदृष्टस्वलक्षणे तु स्वरूपदर्शनाभावाद्युक्तमेव व्यावर्तकधर्मानुमानम् MānaMe. 243. 2.

**अदृष्टस्ववेदन** ( adṛṣṭa-svavedana ) *adj.* who has not experienced his own pain परव्यथां न जानाति यो ह्यदृष्टस्ववेदनः BṛKathāMañ. ix. 1. 701.

**अदृष्टहन्** ( adṛṣṭa-hán ) *adj.* slayor of unseen ( vermins etc. ) उत्पुरस्तात्सूर्य एति विश्वदृष्टो अदृष्टहा ṚV. i. 191. 8; AV. v. 23. 6.

**अदृष्टहननी** ( adṛṣṭa-hananī ) *adj.* ( *f.* ) destroying the invisible insect अदृष्टहननी वीरुद् असि भोज्या विषासहिः AV. (P.) v. 3. 4.

**अदृष्टहरण** ( adṛṣṭa-haraṇa ) *n.* taking away without being seen अधमैर्धमर्मूर्तीनामदृष्टहरणं तथा S'ukraNi. 4(5). 241.

**अदृष्टहविःसंस्कार** (adṛṣṭa-havissaṁskāra) *n.* consecration of an oblation productive of an unseen (effect) न चैवं दृष्टेनैव विधेश्चारितार्थ्याददृष्टहविःसंस्कारे मानाभाव इति वाच्यम् MayūMāli. 362. 13 (*on* iv. 1. 14)

**अदृष्टहस्तिजातीय** ( adṛṣṭa-hastijātīya ) *adj.* who has not seen the elephant-species कश्चिच्चादृष्टहस्तिजातीयो दृष्टतज्जातीयं प्रति ब्रवीति NyāyKu. 153. 7.

**अदृष्टहानि** ( adṛṣṭa-hāni ) *f.* loss of unseen (merit) यस्तु ऋणं नोपाकरोति तस्यादृष्टहानिः पुराणे दर्शिता SmṛtiCan. iv. 376. 12; न च पाणिनिसूत्रभेदे पारायणादावदृष्टहानिः LaS'abdeS'e. i. 12. 2.

**अदृष्टहारिन्** ( adṛṣṭa-hārin ) *adj.* attractive to him who has not seen it विद्याधरगणेन वारंवारमावेद्यमाननानाविधविशेषानवनितलजुषः पूर्वदृष्टानदृष्टहारिणस्तांस्तानुद्देशान् TilaMañ. 386. 12.

**अदृष्टहास** ( adṛṣṭa-hāsa ) *adj.* in which no smile was seen अदृष्टहासं व्ययसंनिरोधात्तस्याभवद्वेश्म सशोकमूकम् DarpDa. 2. 14.

**अदृष्टहास्य** ( adṛṣṭa-hāsya ) *n.* laughter from an unseen (source) योषितः ··· अदृष्टहास्यमाधाय क्षपिष्यन्ति बलिं ततः SkandP. vi. 189. 17.

**अदृष्टहिमद्युतिबिम्ब** ( adṛṣṭa-himadyutibimba ) *adj.* in which the disc of the moon is not seen अदृष्टहिमद्युतिबिम्बम् ··· नभः। ··· अभात् S'iśuVa. 9. 12; Subhāṣi. 1925.

**अदृष्टहेतु** ( adṛṣṭa-hetu ) *adj.* having an unseen or unknown cause अदृष्टहेतुरन्योऽप्यविशिष्टः संप्रतीयते PramāVār. 1. 246; अदृष्टहेतवोऽपि हि भावास्तदन्यैः ··· समुन्नीयन्ते PramāVārSvoVṛ. 81. 10; *m.* 1 cause in the form of unseen (merit) अदृष्टहेतूनामपि सर्वसाधारणत्वात्तेनापि न नियमः VedāntSā. (Rā.) 211. 4 (*on* ii. 3. 32); BrahmSūBh.(S'rī.) ii. 148. 4 (*on* ii. 3. 32); उपहानमशेषाणामुत स्यादेकपात्रिणाम्। अदृष्टहेतोरावः स्यात् NyāyMāVi. 176. 8 (*on* iii. 5. 17); 2 unseen cause न हि संनिहितहेतुपरित्यागेनादृष्टहेतुशङ्का धियमधिरोहति S'rutaPra. iB. 90. 25 (*on* i. 1. 1); **अदृष्टहेतोः** [Abl.] for the sake of unseen or uncertain result प्रसमीक्ष्य यायान्न नाशयेद् दृष्टमदृष्टहेतोः NitiSā. 16. 14.

**अदृष्टहेतुक** ( adṛṣṭahetu-ka ) *adj.* [ *f.* -ā ] 1 having unseen merit as the cause (रसः) कृत्स्नं शरीरम् ··· यापयति चादृष्टहेतुकेन कर्मणा SuśruS. i. 14. 3; i. 21. 10; अतोऽदृष्टहेतुकमेव स्वप्नादिज्ञानम् Bṛha. 72. 4 (*on* i. 1. 5); अदृष्टहेतुका ··· श्वासप्रश्वासलक्षणा प्रेक्षावतां क्रिया Bhām. 372. 16 (*on* ii. 1. 33); (संयोगः) न चादृष्टहेतुकः स्पर्शः ··· पुरुषाणां कर्तृत्वानभ्युपगमेनादृष्टासंभवाद् NitiMā. 44. 14; अदृष्टहेतुकं परमाणुषु तदा हि कर्म जायते VedāntKau. 187. 9 (*on* ii. 2. 12); II whose cause (in the form of the purpose in view) is

not seen न दृष्टः प्रयोजनोद्देशलक्षणो हेतुरस्या इत्यदृष्टहेतुका VedāntKa. 246.3 (*on* ii. 1.33); 328.12 (*on* ii. 3.43)

**अदृष्टहेतुकत्व** (adṛṣṭahetuka-tva) *n.* the state of having unseen (merit) as the cause अदृष्टहेतुकत्वस्य विवरणं प्रयोजनानुसन्धानमन्तरेण इति VedāntKa. 246.4 (*on* ii. 1.33)

**अदृष्टहेतुता** (adṛṣṭahetu-tā) *f.* the state of causality of the unseen merit आत्माश्रितादृष्टहेतुतासिद्धावपि शक्तिः कल्प्या NayaVi. 134.6 (*on* i. 1.5)

**अदृष्टहेतुभूत** (adṛṣṭahetu-bhūta) *adj.* having become the cause of unseen (merit) अदृष्टहेतुभूताभिसंध्यादिष्वपि…उपाधियुक्तं ब्रह्मैवेति न कश्चिद्विशेषः VedāntDī. 131.12 (*on* ii. 3.51); VedāntSā.(Rā.) 222.1 (*on* ii. 3.51); BrahmSūBh.(Śrī.) ii. 161.14 (*on* ii. 3.51)

**अदृष्टांश** (adṛṣṭāṁśa) *m.* part or portion of the unseen (fruit) शीतवातातुरस्येव नादृष्टांशस्तु हीयते BhaktiRa. 2.48 (comm. अदृष्टांशः अदृष्टफलभागः)

**अदृष्टाकर्षसंधान** (a-dṛṣṭākarṣasandhāna) *adj.* whose drawing (of the bowstring) and (fixing the arrow) are not noticed विचिच्छेद स नाराचैः समं शस्त्राणि विद्विषाम्। अदृष्टाकर्षसंधानैश्चक्रीकृतशरासनः PadmP.(Ra.) 24.114.

**अदृष्टाकारा** (adṛṣṭākārā) *adj.* (*f.*) sign or indication of whose willingness is not observed नासंस्तुतादृष्टाकारयोर्दूत्यमस्तीत्यौद्दालकिः KāmSū. 280.23 (5.4); JayaMa. 281.3 (*on* 5.4)

**अदृष्टाकारान्तर** (adṛṣṭākārāntara) *n.* another unseen form तस्य चैकस्यादृष्टाकारान्तराभावात्। तस्मान्नानवयवमनेकदेशे युगपदाधीयते PramāVāSvopVṛ. 50.19.

**अदृष्टाकृष्ट** (adṛṣṭākṛṣṭa) *adj.* drawn near by the unseen (merit) भोगायतनानामपि तत्रत्यैरेव भूतैरदृष्टाकृष्टैरारंभः संभवति ŚivārkaMaDī. ii. 196.34 (*on* iii. 1.1)

**अदृष्टाग्रह** (adṛṣṭāgraha) *m.* insistence on destiny, fatalism चेष्टमानः क्रियाः सर्वाः प्राप्नोति न पुनः स्थितः। दृष्ट्वैवं पौरुषीं शक्तिं को ह्यदृष्टाग्रहे ग्रहः YaśasCam. i. 379.5.

**अदृष्टाजनकत्व** (adṛṣṭājanaka-tva) *n.* the state of being the non-producer of the unseen (merit) प्रतिबन्धकमन्त्रपाठस्यानिषिद्धत्वेनाविहितत्वेन चादृष्टाजनकत्वात् TattvCin. ii(2). 113.12.

**अदृष्टातप** (adṛṣṭātapa) *adj.* under which the sun's heat is not felt मारुतिः। ददर्श शिंशपावृक्षम् … अदृष्टातपम् AdhyāRā. v. 2.8.

**अदृष्टातिशय** (adṛṣṭātiśaya) *m.* excellence in the form of unseen (merit) तस्यैवादृष्टातिशयोत्पादनं संस्कारः TantrRa. 34.5 (*on* iv. 1.3); BhāṭṭCin. i. 96.23 (*on* i. 1.4)

**अदृष्टात्मक** (adṛṣṭātma-ka) *adj.* **1** who has not seen or realised the self मिथ्यावादविचारचिन्तनमहो कुर्वन्त्यदृष्टात्मका भ्रान्ता एव Prauḍhā. 13; **2** having unseen merit as its nature तस्य च वायोः स्वभावाद्वा अदृष्टात्मकेश्वरसंकल्पाद्वा स्वारसिकं तिर्यक्प्रसरणम् NyāySiA. 199.5; वाजपेयादियज्ञाद्यो रसः सारो विकार उत्तमो विश्वनिदानतयादृष्टात्मकः संभूतः VīraMi. 868.27 (*on* 3.121); शब्दोच्चारणकार्यमपि यद्यदृष्टात्मकं स्यात् तदा तत्र नियमस्योपयोगः MayūMāli. 44.1 (*on* i. 3.9)

**अदृष्टात्मतत्त्व** (adṛṣṭātmatattva) *adj.* who has not perceived the (ultimate) reality of the self स्यादेतदग्निरेवैनं ब्रह्मभावाय वक्ष्यति। अदृष्टात्मतत्त्वमपि तच्च नैवोपपद्यते BṛĀraUBhVā. i. 4.1667.

**अदृष्टात्मन्** (adṛṣṭātman) *m.* nature of unseen merit (हविर्भोक्त्री) अदृष्टात्मना सूक्ष्मरूपाणि … भुनक्ति LalitāTriBh. 308.4 (*on* 32)

**अदृष्टादि** (adṛṣṭādi) *adj.* unseen merit etc. निद्रादिदोषोपप्लुतं मनोऽदृष्टादिसमुद्बोधितसंस्कारविशेषसहकार्यनुरूपं मिथ्याविषयं ज्ञानमुत्पादयति PañcPā. 10.18 (*on* i. 1.0); अदृष्टादयो धर्माः प्रधानस्यापि संभाव्यन्ते BrahmSūBh.(Bhā.) 44.22 (*on* i. 2.19); विवादास्पदीभूतान्यदृष्टादीनि कस्यचित् प्रत्यक्षाणि NyāySā. 6.16; इदं मया मत्सामर्थ्येन लब्धं नादृष्टादिना GītāBh.(Rā.) 611.10 (*on* 16.13); निमित्तकारणं सर्वेषामेवेश्वरेच्छादृष्टादीनि SaptaPa. 190 (55); अदृष्टादेः … कारणत्वापातात् KhaṇḍanKhā. 1229.2; कस्यचित् प्रत्यक्षम् अदृष्टादि TarkSaṁ.(Ā.) 92.24; 121.8; अदृष्टादि निमित्तकारणम् TarkBhā.(Ke.) 62.13; वेदस्याप्तप्रणीतत्वे मूलप्रमाणेन भाव्यम्।… न च तत्प्रत्यक्षम्। अदृष्टादौ तदप्रवेशात् TattvPrakā. 55A.8 (*on* i. 3.28); आत्ममनःसंयोगनाशादपि (कर्म) संस्कारादृष्टादीनां विनाशे बहु व्याकुलं स्यात् Upask. 344.13 (*on* vii. 2.21); अस्मदादेस्त्वदृष्टादिसाक्षात्कारासंभवान्न प्रेरकत्वम् SarvaDaKau. 122.10; न च प्रकृतिधर्मा एव सन्त्वदृष्टादय इति वाच्यम् YogSā. 71.8 (4); अदृष्टादौ साधारणकारणेऽतिव्याप्तिवारणाय असाधारणेति पदम् VedāntPari. 244.2; ब्रह्मज्ञानान्येनादृष्टादिनेत्यर्थः LaCandr. 162.28.

**अदृष्टादिक** (adṛṣṭādi-ka) *adj.* unseen merit etc. अदृष्टादिकं चात्र नियामकमध्यवसेयम् Kiraṇā. 19.22; अन्यदप्यदृष्टादिकमपेक्ष्य भवन्ती जिज्ञासा यस्मिन् सति भवत्येव VedāntKa. 26.17 (*on* i. 1.1); न हि कुलालादयोऽपि सामग्र्यन्तरभूतमदृष्टादिकम् … साक्षात्कुर्वन्ति NyāyPari. 285.12; अतस्तत्साध्यमदृष्टादिकमपि नास्ति SarvaDaSaṁ. 1.104; नन्वदृष्टादिकं कस्यचित् प्रत्यक्षं दृष्टम् SarvaDaKau. 97.13.

**अदृष्टादिकारण** (adṛṣṭādi-kāraṇa) *n.* cause like unseen force etc. नाभिव्यक्तिस्संस्कारोद्बोधिका। किं त्वदृष्टादिकारणवशात्तदुद्बोधे सति प्रथमाभिव्यक्तिरेव प्रत्यभिज्ञानरूपा परिणमते TantrRaha. 24.16; अदृष्टादिकारणसत्त्वात् LaCandr. 169.6; चिच्छक्तिः…नादृष्टादिकारणाधीननानापरिणामविशेषवती ŚivārkaMaDī. i. 160.21 (*on* i. 1.3)

**अदृष्टादिजन्या** (adṛṣṭādi-janyā) *adj.* (*f.*) arising from the unseen (merit) etc. प्रलयकाले अदृष्टादिजन्यायाः कार्यावस्थायाः तत्कालसाधकश्रुत्यादिसिद्धत्वात् LaCandr. 161.27.

**अदृष्टादिनिमित्तकारण** (adṛṣṭādi-nimittakāraṇa) *n.* instrumental cause in the form of unseen (merit) etc. अन्त्यचकारेण अदृष्टादिनिमित्तकारणसंग्रहः VīraMi. 880.17 (*on* 3.148)

**अदृष्टादिनियम** (adṛṣṭādi-niyama) *m.* constraint of the unseen merit etc. न चादृष्टादिनियमेन वैचित्र्यम् TattvPrakā. 160A.7 (*on* iii. 2.35)

**अदृष्टादिनिरपेक्ष** (adṛṣṭādi-nirapekṣa) *adj.* independent of the unseen merit etc. (आत्ममनोयोगः) तस्यादृष्टादिनिरपेक्षस्याजनकत्वात् TattvCin. ii(2). 180.9.

**अदृष्टादिपरिकर** (adṛṣṭādi-parikara) *m.* accessory in the form of unseen merit etc. शत्रूनहं शूरो धीरश्च हनिष्ये। किमत्र … अदृष्टादिपरिकरेण GītāBh.(Rā.) 611.16 (*on* 16.14)

**अदृष्टादिपुरःसर** (adṛṣṭādi-puraḥsara) *adj.* led by the unseen merit etc. (परमाणवः) ते च पश्चात् अदृष्टादिपुरःसराः … कार्यजातमारभन्ते BrahmSūBh.(Śaṅ.) 364.14 (*on* ii. 2.11)

**अदृष्टादिरूपकारणाभाव** (adṛṣṭādirūpa-kāraṇābhāva) *m.* absence of the cause in the form of unseen merit etc. (ईश्वरे) अदृष्टादिरूपकारणाभावात् न सुखदुःखाद्युत्पत्तिः SiddhāMu. 23.23 (*on* 47)

**अदृष्टादिवत्** (adṛṣṭādi-vat) *adv.* like unseen merit etc. ईश्वरो न प्रतीयतेऽव्यक्तस्वभावत्वाददृष्टादिवत् TattvPrakā. 157A.13 (*on* iii. 2.23)

**अदृष्टादिवश** (adṛṣṭādi-vaśa) *m.* **अदृष्टादिवशात्** [Abl.] due to the influence of unseen merit etc. एकवस्त्वनुपातित्वे चित्रा संवित्प्रसज्यते। अदृष्टादिवशाच्चो चेन्न स्याद्वस्त्वनुयायिनी TattvSaṁ. 38; अदृष्टादिवशात् कर्मकारकं विषयः तज्जनितं ज्ञानं विषयि NyāySā. 41.3; ŚatDū. 101.18; (सुषुप्त्याद्यवस्थासु) अदृष्टादिवशाच्च निःश्वसितादिसिद्धिः NyāySiA. 243.8; 196.17; **अदृष्टादिवशेन** [Inst.] due to the influence of unseen merit etc. अदृष्टादिवशेन क्वचिदुद्बोधेऽप्यन्यत्रानुद्बोधोपपत्तेः AdvaiSi. 496.7.

**अदृष्टादिव्यक्ति** (adṛṣṭādi-vyakti) *f.* particular instance of unseen merit etc. नो खल्वदृष्टादिव्यक्तीनाम् … एकेन प्रमाणेन धर्मत्वेन निश्चयः शक्यः कर्तुम् PrakaVi. 565.3.

**अदृष्टादिव्यतिरिक्त** (adṛṣṭādi-vyatirikta) *adj.* different from unseen merit etc. न द्वितीयः, अदृष्टादिव्यतिरिक्तकालासिद्धिप्रसङ्गात् TarkSaṁ.(Ā.) 48.11–12.

**अदृष्टादिव्यावृत्ति** (adṛṣṭādi-vyāvṛtti) *f.* exclusion of unseen merit etc. अपरोक्षत्वमदृष्टादिव्यावृत्त्यर्थम् VedāntKa. 278.25 (*on* ii. 2.21)

**अदृष्टादिसहकारिन्** (adṛṣṭādi-sahakārin) *adj.* accessory in the form of unseen merit etc. कारणस्य सदृशकार्यजनकत्वेऽप्यदृष्टादिसहकारिसामर्थ्यात्कदाचिद्विसदृशकार्यजननं भविष्यति NyāySu.(Ja.) 392A.12 (*on* ii. 2.7); 391A.12 (*on* ii. 2.7)

**अदृष्टादिसहकृत** (adṛṣṭādi-sahakṛta) *adj.* helped by unseen merit etc. सत्त्वप्रधानं मनः अदृष्टादिसहकृतम् … स्वकर्मदेशं सरीसर्ति PrakaVi. 34.4.

**अदृष्टादिसहित** (adṛṣṭādi-sahita) *adj.* assisted by unseen merit etc. इमं च मनोरथमहमेव प्राप्स्ये नादृष्टादिसहितः GītāBh.(Rā.) 611.11 (*on* 16.13)

**अदृष्टादिसाचिव्य** (adṛṣṭādi-sācivya) *n.* co-operation of unseen merit etc. आत्ममनसोः संयोगविशेषाददृष्टादिसाचिव्येन संयोगमात्रव्यावृत्तत्वात् स्वापः Kiraṇā. 272.17.

**अदृष्टादिसापेक्षता** (adṛṣṭādisāpekṣa-tā) *f.* expectancy of the unseen merit etc. नापि बाधातिरिक्ता निवृत्तिरिष्यते यत्रादृष्टादिसापेक्षता स्यात् ŚatDū. 222.21.

**अदृष्टादिहेतुका** (adṛṣṭādihetu-kā) *adj.* (*f.*) having unseen merit etc. as the cause अदृष्टादिहेतुका जीववैचित्री चेत्स्यमर्थनिचयः … उपपाद्यते

GoviBh. 142. 5 (*on* ii. 3. 1)

**अदृष्टादृश्यसीमन्** (adṛṣṭādṛśya-sīman) *adj.* whose limit was not seen (before) and cannot be seen at present and in future अदृष्टादृश्यसीम्नोऽन्तः सूर्यादीन्यखिलान्यपि । न तेजांस्युपकुर्वन्ति स्वसंविद्दिव्यचक्षुषः YogVā. v. 50. 48 (comm. प्राक् केनाप्यदृष्टाः सांप्रतमग्रे च अदृश्या द्रष्टुमशक्याः सीमानोऽवधयो यस्य)

**अदृष्टादेश** (adṛṣṭādeśa) *m.* explicit indication which is not seen अदृष्टादेशे नित्ये ĀśvaSS. I. ii. 1. 8.

**अदृष्टाद्यनियम** (adṛṣṭādy-aniyama) *m.* absence of restriction due to unseen merit etc. अदृष्टाद्यनियमेन न वैशेषिकमतं दूष्यम् VedāntKa. 328. 11 (*on* ii 3. 43)

**अदृष्टाद्यभाव** (adṛṣṭādy-abhāva) *m.* absence of unseen merit etc. अदृष्टादिकारणसत्त्वादग्रे भाविता यज्जातीयस्य कार्यस्य प्रसक्ता तज्जातीयस्यादृष्टाद्यभावात् ज्ञानप्रयुक्तादभावो न भविष्यतीत्यनेन बोध्यते LaCandr. 169. 7.

**अदृष्टाद्याधारता** (adṛṣṭādyādhāra-tā) *f.* the state of being the abode or support of unseen merit etc. नाप्यन्तःकरणं मध्यमपरिमाणमात्रं संभवति । प्रलये विनाशेनादृष्टाद्याधारतानुपपत्तेः YogSā. 71. 18 (4)

**अदृष्टाद्युपनीत** (adṛṣṭādy-upanīta) *adj.* brought about by unseen merit etc. अप्रत्यक्षैस्तदानीमपि अदृष्टाद्युपनीतैः (तैः) तेजोऽवयवैर्ज्वालारम्भः NyāySiA. 199. 29; 200. 5.

**अदृष्टाद्वारक** (adṛṣṭādvāra-ka) *adj.* not having unseen merit as the intermediate cause न चादृष्टाद्वारकजन्यज्ञानाजन्यत्वं हेतुः TattvCin. ii(2). 61. 2; मरणोद्देशेन कृतोऽदृष्टाद्वारकस्तदनुकूलव्यापारो हिंसा TattvCin. iv (2). 216. 2; अदृष्टद्वारकेति विशेषणं देयं कर्तृत्वनिरुक्तौ SarvaDaKau. 21. 10; अदृष्टद्वारकजन्यकृत्यजन्यानि जन्यानि अदृष्टाद्वारकापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यानि जन्यत्वात् S'ivārkaMaDī. i. 142. 26 (*on* i. 1. 3); अदृष्टाद्वारकोपजीवकत्वनिवेशनात् ... न क्षतिः GuruCandr. i. 284. 12; समवेतार्थत्वं चादृष्टाद्वारकसंबन्धेन स्वशक्यार्थस्यापूर्वसाधनीभूतसंबन्धित्वम् BhāṭṭDī. iii. 72. 16 (*on* ix. 1. 12); VyutpaVā. 161. 7.

**अदृष्टाद्वारकत्व** (adṛṣṭādvāraka-tva) *n.* the state of not having unseen merit as the intermediate cause श्येनवारणायादृष्टाद्वारकत्वेन विशेषणात् SiddhāMu. 78. 3 (*on* 151); न च कृतावदृष्टाद्वारकत्वं विशेषणम् S'ivārkaMaDī. i. 537. 9 (*on* i. 4. 16); श्येनस्यादृष्टाद्वारकत्वघटितहिंसालक्षणानाक्रान्ततया बलवद्दुःखाजनकत्वम् VyutpaVā. 211. 22; 159. 22; हिंसात्ववारणायादृष्टाद्वारकत्वविशेषणं वदन्तो मान्या एव BālamBha. i. 235. 31 (*on* 1. 86)

**अदृष्टाधारता** (adṛṣṭādhāra-tā) *f.* the state of being the support of unseen merit जीवस्य हि अदृष्टाधारतया निमित्तत्वम् NyāySu.(Ja.) 292B. 12 (*on* ii. 1. 4)

**अदृष्टाधिष्ठातृ** (adṛṣṭādhiṣṭhātṛ) *adj.* [*f.* -trī] controller of the unseen (effects of actions) किमपि हि तद् वस्तु नास्ति यत्र नैश्वर्यमदृष्टाधिष्ठातुः (v. l. °ष्ठात्र्याः) NītiVā. 1. 48 (comm. अत्राधिष्ठातृशब्देनैके आत्मानं कथयन्ति । अन्ये प्राक्तनं कर्म); न हि कुलालादिर्घटादिकारणानि ... साक्षात्कुरुते । कुलालादीनामकर्तृत्वप्रसङ्गात् । अदृष्टाधिष्ठात्रापि केनचिद्भाव्यमिति चेन्न, अधिष्ठातृकृत्याभावात् NyāySu.(Ja.) 109B. 4 (*on* i. 1. 3)

**अदृष्टाधिष्ठान** (adṛṣṭādhiṣṭhāna) *n.* control of the unseen (effect of actions) अथादृष्टाधिष्ठाने यत्नस्योपयोगः, तन्न, तस्य निष्क्रियत्वात् NyāyKu. 93. 12.

**अदृष्टाधिष्ठित** (adṛṣṭādhiṣṭhita) *adj.* controlled by the unseen cause (merit or demerit) प्रधानगुणवैषम्यात् सर्गकाले प्रवर्तते । अदृष्टाधिष्ठितात् पूर्वं तस्मात् सदसदात्मकात् BrahmāṇḍP. i. 4. 12.

**अदृष्टाधीन** (adṛṣṭādhīna) *adj.* dependent upon unseen cause (merit, demerit etc.) कार्यारम्भविरतिरपि भवति अदृष्टाधीनसंसर्गाणां सहकारिणामनवस्थानात् NyāyMañ. i. 210. 2; NyāyKu. 188. 21; अदृष्टाधीनं कर्म परिगणयन्नाह Upask. 229. 6 (*on* v. 1. 15); सर्वमेव हि कार्यजातमदृष्टाधीनम् SiddhāMu. 18. 4 (*on* 38); अदृष्टाधीनानां मनःपरिणामानां देहादिरूपाणां ज्ञानोत्तरमुत्पत्तिसंभवात् LaCandr. 256. 4.

**अदृष्टाधीनत्व** (adṛṣṭādhīna-tva) *n.* dependence on unseen cause (merit etc.) अदृष्टाधीनत्वात् तत्रापि न स्वत इति चेन्न, अदृष्टे ज्ञानत्वप्रसङ्गात् NyāyKu. 96. 6; न च वाच्यं सदृशकार्योपजननसमर्थमपि कारणं कार्यमुत्पाद्य पश्चाद् वैसादृश्यमुत्पादयतीति । न चातिप्रसङ्गः, अदृष्टाधीनत्वादिति TattvPrakā. 101A. 7 (*on* ii. 2. 20)

**अदृष्टाध्वर्युत्व** (adṛṣṭādhvaryutva) *n.* invisible status of the Adhvaryu priest न चादृष्टाध्वर्युत्वादिसद्भावे प्रमाणमस्ति वरणविधिर्हि दृष्टार्थतयोपपत्तेर्नादृष्टकल्पनायालम् SāstrDī. 323. 15 (*on* iii. 7. 9)

**अदृष्टानपेक्षत्व** (adṛṣṭānapekṣa-tva) *n.* non-dependence on unseen effect (merit etc.) पश्चादिस्वरूपस्य प्रतिग्रहाद्युपायान्तरदर्शनात् अदृष्टानपेक्षत्वात् S'āstrDī. 387. 17 (*on* iv. 3. 12)

**अदृष्टानाश** (adṛṣṭānāśa) *m.* non-destruction of the unseen effect (merit etc.) न च मुक्ते पुत्रे तददृष्टनाशात् पितरि न स्वर्गः स्यादिति वाच्यम् । अदृष्टस्य फलनाश्यतया पितरि स्वर्गाभावेनादृष्टानाशात् TattvCin. iv(2). 439. 1.

**अदृष्टानियम** (adṛṣṭāniyama) *m.* absence of restriction of the unseen effect (merit or demerit) अदृष्टानियमात् BrahmSū. ii. 3. 51 (50 in some editions); सर्वगतात्मवादेऽदृष्टमाश्रित्यापि व्यतिकरो दुर्वारोऽदृष्टानियमात् VedāntPāSau. 239. 11 (*on* ii. 3. 50); संकल्पश्रद्धादिष्वप्यदृष्टानियमवदनियम एव VedāntKau. 239. 23 (*on* ii. 3. 51); VedāntSiSūMañ. 2. 66.

**अदृष्टानिष्टि** (adṛṣṭāniṣṭi) *f.* non-acceptance (*lit.* undesirableness) of unseen effect (merit or demerit) नन्वदृष्टानिष्टौ जगद्वैचित्र्यमाकस्मिकं स्यादिति चेत्-न तद् भद्रम् । स्वभावादेव तदुत्पत्तेः SarvaDaSaṁ. 1. 104.

**अदृष्टानुगुण** (adṛṣṭānuguṇa) *adj.* in conformity with or according to one's unseen merit or demerit चेतनानामप्यदृष्टानुगुणदेहेन्द्रियसंयोजनमुखेन सुखदुःखज्ञानादिहेतुरीश्वर इत्येतावता तत्प्रेर्यत्वम् S'rutaPra. ii. 181. 17 (*on* i. 4. 28)

**अदृष्टानुत्पत्ति** (adṛṣṭānutpatti) *f.* non-origination of the unseen effect (merit or demerit) तत्त्वज्ञानात् ... दोषानुत्पत्तौ प्रवृत्त्यभावेऽदृष्टानुत्पत्तौ जन्माभावे तादृशदुःखध्वंसो भवति TattvCin. ii(2). 157. 11.

**अदृष्टानुत्पादकत्व** (adṛṣṭānutpādaka-tva) *n.* the state of not generating any unseen merit श्रवणादौ विध्यभावपक्षे तु संन्यासपूर्वकं कृतस्यापि श्रवणस्यादृष्टानुत्पादकत्वात् प्रतिबन्धके सति तस्य जन्मान्तरीयविद्याहेतुत्वमित्थमेव निर्वाह्यम् SiddhāLeSaṁ. 384. 9.

**अदृष्टानुपपन्नार्थ** (adṛṣṭānupapannārtha) *m.* unseen and unreasonable (imaginary) object न चैवमश्रुतान्वयकल्पनमयुक्तमिति वाच्यम्, अदृष्टानुपपन्नार्थकल्पनादन्वयमात्रवैपरीत्यकल्पनस्य लघीयस्त्वात् VivaPraSaṁ. 154. 1.

**अदृष्टानुमान** (adṛṣṭānumāna) *n.* inference of an unseen effect (i. e. merit) एवमल्पीयस्यदृष्टानुमानप्रसङ्गकल्पना भविष्यति S'ābaBh. 373. 2 (*on* ii. 1. 1); भिन्नवाक्यरूपे त्वाश्रीयमाणे भूयसी अदृष्टानुमानकल्पना स्यात् S'ābaBh. 1731. 16 (*on* ix. 2. 40); 449. 11 (*on* ii. 1. 47); 2005. 11 (*on* x. 6. 38)

**अदृष्टानुरोध** (adṛṣṭānurodha) *m.* [Inst.] in consideration of an unseen effect (merit) अत एव कृष्णलचरौ वैतुष्याभावेनादृष्टानुरोधेन अवघातानुष्ठानम् MīmāKau. iii(2). 66. 18 (*on* ii. 1. 9); ननु अदृष्टानुरोधेन पत्युः किञ्चिद् देहादिकं कल्प्यम् GoviBh. 139. 13 (*on* ii. 2. 40)

**अदृष्टानुविद्ध** (adṛṣṭānuviddha) *adj.* charged with the unseen effect (merit) तेनावघातेनादृष्टानुविद्धास्तण्डुला निष्पाद्यन्त इति कल्प्यते NyāyRaMā. 121. 24.

**अदृष्टानुसार** (adṛṣṭānusāra) *m.* [Abl.] in accordance with the unseen principle of merit and demerit आकाशादिभ्यो महाभूतेभ्योऽदृष्टानुसाराल्लाघवादीन् गुणान् ... आत्मा संसारं प्रपित्सुः ... गृह्णाति BālaKrī. ii. 35. 12 (*on* 3. 66.

**अदृष्टानुसारिन्** (adṛṣṭānusārin) *adj.* following the unseen merit and demerit मायामयैर्महाभूतैरदृष्टानुसारिपरमेश्वराधिष्ठितैरारभ्यमाणो देहः ... अज्ञानाज्जीवसंसृष्टतयैव आरभ्यते PrakaVi. 19. 23; न चादृष्टानुसारीश्वरेच्छा तत्क्रियाहेतुः तस्या नित्यत्वेन नित्यं तत्प्रसङ्गात् GoviBh. 122. 2 (*on* ii. 2. 12)

**अदृष्टान्त** (a-dṛṣṭānta) *adj.* **i** whose end is not seen अनिश्चयज्ञा धर्माणामदृष्टान्ते परे रताः MahāBhā. xii. 64. 4; अदृष्टान्तमभूद् युद्धमन्यदृष्टान्तवर्जितम् Yādavā. 16. 101; **ii** devoid of an illustration or an example मलयमिव चन्दनशिशिरवनमसत्साधनमिवादृष्टान्तम् ... अच्छोदं नाम सरो दृष्टवान् Kād. 124. 4; अदृष्टान्तस्यापि साधनविकलादेः प्रत्यक्षविषयत्वादित्यतिव्याप्तिः NyāyVārPari. 293. 4; **iii** whose other end (side or bank) is not seen, Kād. 124. 4; यस्या (अलकायाः) बाह्यमदृष्टान्तं कल्पपादपकाननम् BṛKathāS'loSaṁ. 5. 24; अद्राक्षम् ... अदृष्टान्तं रसातलम् BṛKathāS'loSaṁ. 18. 451; *m.* inappropriate example or analogue इह पुनर्द्रादशोपसत्त्वं नैव संघातधर्म इत्यपदिष्टो हेतुः । तस्माददृष्टान्तो द्रव्यवत् इति S'ābaBh. 1581. 11 (*on* vii, 4. 18); 2018. 21 (*on* x. 6. 75); शालिबीजमदृष्टान्तः NyāyVār. 356. 11 (*on* iii. 1. 4); TantrVā. 987. 1 (*on* iii, 4. 22); ज्योतिःशब्दोऽपि लौकिकेन प्रयोगेण ज्वलन एव रूढः अर्थवादकल्पितेन तु ज्वलनसादृश्येन क्रतौ प्रवृत्त इत्यदृष्टान्तः BrahmSūBh.(S'aṅ.) 45. 2 (*on* i. 1. 7); 650. 11 (*on* iii. 3. 21); IṣṭaSi. 54. 12; Kāśi. ii. 60. 18 (*on* 5(2). 95); न तावद् यो यः प्रत्यक्षविषयः स सर्वो दृष्टान्तोऽदृष्टान्तस्यापि प्रत्यक्षविषयत्वात् TātpaṬ.(Vā.) 52. 7 (*on* i. 1. 1); ततश्च न साध्यस्य दृष्टान्तः स्यात् । न चेदेवं तथापि वैलक्षण्यात् सुतरामदृष्टान्तः PramāMī. 60. 21 (*on* ii. 1. 29); TarkSaṁ.(Ā.) 99. 16.

**अदृष्टान्तक** (adṛṣṭānta-ka) *adj.* having no exmple or analogue (for

support) कथं तर्हि हेतोर्व्याप्तिनिश्चयो यदृष्टान्तको हेतुरिति चेत्। नोच्यते हेतुरदृष्टान्तक एव। अपि तु न हेतोः पृथग् दृष्टान्तो नाम। हेत्वन्तर्भूत एव दृष्टान्तः NyāyBiṬ. 234. 7 (*on* 3. 121)

**अदृष्टान्तता** (adṛṣṭānta-tā) *f.* the state of not being an illustration or an example यत् तद्वसानीयवदिति तत्रापि ... क्रियामात्राक्षेपाद् विधित्वमाश्रितमेवेत्यदृष्टान्तता TantrVā. 22. 5 (*on* i. 2. 7); प्रतिदृष्टान्तेन हि तेन मदीयस्यादृष्टान्तता साध्या। स चेन्न दृष्टान्तः मदीयस्यादृष्टान्तता साध्येति व्याहतम् TātpaṬ. (Vā.) 679. 5 (*on* v. 1. 9)

**अदृष्टान्तत्व** (adṛṣṭānta-tva) *n.* the state of not being an illustration or an example परिव्राजकानां भिक्षाचरणादिवत् उत्पन्नैकत्वप्रत्ययानामपि गृहस्थादीनामग्निहोत्रादिकर्मानिवृत्तिरिति चेत् न, प्रामाण्यचिन्तायां पुरुषप्रवृत्तेरदृष्टान्तत्वात् ChāndoUBh. 126. 7 (*on* ii. 23. 1); प्राणात्ययोपादानं च दृष्टान्तार्थत्वेऽप्यसिद्धस्यादृष्टान्तत्वाच्छाक्तत्वस्यासिद्धत्वात् विधीयत एव BālaKrī. i. 125. 15 (*on* 1. 178); मदीयस्यादृष्टान्तत्वे साध्ये प्रतिदृष्टान्तेन हि तेन मदीयस्यादृष्टान्तता साध्या TātpaṬ. (Vā.) 679. 4 (*on* v. 1. 9); NyāySu. (So.) 75. 4 (*on* i. 2. 20); GuruCandr. i. 102. 18.

**अदृष्टान्तदर्शित** (a-dṛṣṭāntadarśita) *adj.* not shown through an illustration or an example तथाप्यत्र नादृष्टान्तदर्शितशक्तिधर्मः स तस्मिन् धर्मिणि तथाविधो हेतुः स्यात् न वेति NyāyMañ. ii. 142. 17.

**अदृष्टान्तम्** (a-dṛṣṭāntam) *adv.* without having any example नेदमदृष्टान्तं पक्षीक्रियते यत् क्वचिद् व्यवस्था क्वचित् सङ्कर इति Kāśi. i. 267. 14 (*on* 4. 161)

**अदृष्टान्तर** (adṛṣṭāntara) *n.* **i** another unseen (merit) तेन गृहातौ तत्कृतादृष्टादृष्टान्तरमुत्पादयति ŚābaBh. 518. 4 (*on* ii. 2. 19); सर्वत्रैव चादृष्टकल्पनायां तादृशं कल्पयितव्यं यद् दृष्टं न विरुणद्धि न चादृष्टान्तरमासञ्जयति TantrVā. 74. 15 (*on* i. 3. 2); TattvBi. 28. 6; GuruCandr. ii. 196. 9; BhāṭṭDī. iii. 197. 4 (*on* x. 1. 5); **ii** different unseen (effect) शब्दव्यापारापूर्वादिविधिपक्षे कल्प्येतापि काममदृष्टान्तरम् NyāyKu. 94. 5; न च तत्र प्रतिभायाः प्रतिबन्धकमदृष्टान्तरं कल्प्यमिति वाच्यम् RasGaṅ. 10. 9.

**अदृष्टान्तरकल्पन** (adṛṣṭāntara-kalpana) *n.* assumption of a different unseen (merit) तत्र यदीदं यागान्तरं कल्प्यते ततः प्राप्तं रूपाज्ञानमदृष्टान्तरकल्पनं च TantrVā. 481. 17 (*on* ii. 2. 9)

**अदृष्टान्तरकल्पना** (adṛṣṭāntara-kalpanā) *f.* **i** assumption of another unseen (merit) तत्रैकापूर्वकल्पनयोपपन्ने नादृष्टान्तरकल्पनाप्रमाणमस्ति TantrVā. 339. 16 (*on* ii. 1. 1); तथापि वैचित्र्यमदृष्टस्य स्वाभाविकम्, अदृष्टान्तरकल्पनायामनवस्थाप्रसङ्गात् TātpaṬ. (U.) 145. 21 (*on* 4. 104); TattvBi. 27. 1; पूजानन्तरमिदं स्नानान्तरं विधीयते वाक्यमेदप्रसङ्गादृष्टान्तरकल्पनापत्तेश्च TristhaSe. 234. 3; MīmāKau. iii(1). 93. 6 (*on* i. 2. 44); iii(2). 8. 18 (*on* ii. 1. 3); **ii** assumption of another unseen (effect) सर्वगोचरज्ञानेच्छायत्नाधिकरणेश्वराभ्युपगममात्रेण सर्वादृष्टकार्योपपत्तेः कृतमदृष्टान्तरकल्पनया NyāyKu. 94. 7; 'अग्निर्वै प्रथमो देवतानाम् ...' इति मन्त्रेणोक्तरीत्या स्मृतिसंभवाददृष्टान्तरकल्पनानवकाशः स्यात् MayūMāli. 853. 12 (*on* xii. 1. 12)

**अदृष्टान्तरफलक** (adṛṣṭāntaraphala-ka) *adj.* having another unseen merit as the fruit तनू[न]पातं यजतीत्यादियजिना अदृष्टान्तरफलकस्य यागप्रयोगगतद्वितीयत्वादेः ... तत्परत्वायोगात् MīmāKau. iii(2). 149. 16 (*on* ii. 2. 2)

**अदृष्टान्तरमात्र** (adṛṣṭāntara-mātra) *n.* merely another unknown (cause) अदृष्टान्तरमात्रसाध्यत्वे यत्नविधिवैयर्थ्यप्रसङ्गादिति तर्को दर्शितः Kiraṇā. 221. 11.

**अदृष्टान्तरसाध्या** (adṛṣṭāntara-sādhyā) *adj.* (*f.*) which is to be established by another unseen (cause) न ह्यदृष्टानिवृत्तिरप्यदृष्टान्तरसाध्या एकस्याप्यनपवर्गप्रसङ्गादिति Kiraṇā. 10. 12.

**अदृष्टान्तरापेक्षा** (adṛṣṭāntarāpekṣā) *f.* dependence on another unseen (cause) दृष्टादृष्टकारणद्वयजन्यत्वात् सर्वस्य कार्यस्यादृष्टान्तरापेक्षा निषिध्यते तदानीम् ManuBh. i. 24. 16 (*on* 1. 28)

**अदृष्टान्तर्भाव** (adṛṣṭāntarbhāva) *m.* inclusion in the unseen (merit) ननु स्वर्गभूम्यादिप्रदेशवैशेष्यात् वैचित्र्यं स्यात्, नेत्याह ... तत्प्राप्तेरपि ... अदृष्टान्तर्भावात् GoviBh. 169. 10 (*on* ii. 3. 51)

**अदृष्टान्तर्यामिन्** (adṛṣṭāntaryāmin) *m.* unseen and inner controller (soul) 'नान्योऽतोऽस्ति द्रष्टा' इति जीवेनादृष्टान्तर्यामित्रिष्टवत् अन्तर्यामिणाप्यदृष्टद्रष्टन्तरनिषेधपरः VedāntDī. 36. 17 (*on* i. 2. 19)

**अदृष्टान्तसिद्ध** (adṛṣṭānta-siddha) *adj.* established without an example or an illustration अदृष्टान्तसिद्धोऽसाधारणः VedāntKa. 13. 11 (*on* i. 1. 1)

**अदृष्टान्तानुमान** (adṛṣṭāntānumāna) *n.* inference without an example अप्रतीतगवयगवान्तरसामान्यस्यादृष्टान्तानुमानासंभवात् KhaṇḍanKhā. 746. 8.

**अदृष्टान्तिका** (adṛṣṭāntikā) *adj.* (*f.*) devoid of an example, for which there is no example तदसत् कथमवगन्तव्यम्, येनेदं स्यात्। अनुपलब्धेरेवेति चेत्। तत्र कथमदृष्टान्तिकासत्तासिद्धिः। सदृष्टान्तत्वे चानवस्थाप्रसङ्गः PramāVāSvopVṛ. 69. 20.

**अदृष्टान्तीकृत** (a-dṛṣṭāntīkṛta) *adj.* which is not cited as an example अदृष्टान्तीकृतादिपक्षमात्रावृत्तित्वभावस्यापकत्वे तु विरोधः साधारण्यं वा NyāyPari. 249. 13.

**अदृष्टान्न** (adṛṣṭānna) *n.* unseen food, food that cannot be observed पिशाचाः कुम्भपात्रास्ते अदृष्टान्नानि भुञ्जते BrahmāṇḍP. ii. 7. 395.

**अदृष्टान्यक्लृप्ति** (adṛṣṭānyaklpti) *f.* assumption of something other than the unseen cause किं चादृष्टान्यक्लृप्तिर्ज्वलनपवनयोर्न क्रियायाम् TattvMu. 5. 34 (comm. किं चाग्नेरूर्ध्वज्वलनं वायोस्तिर्यक्पवन(गमन)मित्यादृष्टातिरेकेण गुणान्तरं भवद्भिर्न कल्प्यते)

**अदृष्टान्यसामर्थ्य** (adṛṣṭānyasāmarthya) *adj.* who has not seen or experienced other's strength अदृष्टान्यसामर्थ्यः को नाम न भवति सदर्पः NītiVā. 30. 47 (MYSORE 1957)

**अदृष्टापचार** (adṛṣṭāpacāra) *adj.* whose deviant nature is not seen यद्यपि तावदयं पराशब्दो दृष्टापचार उपसर्गश्चानुपसर्गश्चायं तु खलु विशब्दोऽदृष्टापचार उपसर्ग एव MahāBh. i. 279. 11 (*on* i. 3. 19); i. 445. 2 (*on* ii. 3. 4); अयं खल्वपशब्दोऽदृष्टापचारो वर्जनार्थ एव MahāBh. i. 447. 3 (*on* ii. 3. 8); i. 496. 4 (*on* ii. 4. 79)

**अदृष्टापेक्ष** (adṛṣṭāpekṣa) *adj.* dependent on the unseen (merit or demerit) तदनन्तरं भोगिनामदृष्टापेक्षादात्माणुसंयोगादुत्पन्नपाकजेष्वणुषु कर्मोत्पत्तौ तेषां परस्परसंयोगाद् द्व्यणुकादिक्रमेण कार्यद्रव्यमुत्पद्यते PadārthaSaṁ. 107. 2; NyāySu. (Ja.) 371B. 4 (*on* ii. 2. 6); ततः सर्गकाले च वायवीयेष्वणुष्वदृष्टापेक्षं कर्मोत्पद्यते BrahmSūBh. (Śaṅ.) 368. 13 (*on* ii. 2. 12); PrakaPañ. 332. 14; अदृष्टापेक्षात् धर्माधर्मापेक्षात् Kiraṇā. 186. 7; 97. 2.

**अदृष्टापेक्षण** (adṛṣṭāpekṣaṇa) *n.* dependence on the unseen (merit or demerit) नानपेक्षतया संयोगविभागहेतुत्वं कर्मणः। समवायिकारणेश्वरेच्छादेशकालादृष्टापेक्षणात् TattvPradī. (Ci.) 186. 1.

**अदृष्टापेक्षता** (adṛṣṭāpekṣa-tā) *f.* dependence on the unseen (merit or demerit) आकस्मिको विशेषश्चेददृष्टे क्वचिदिष्यते। सर्वत्राकस्मिकत्वं स्यात्त्वादृष्टापेक्षता भवेत् AnuVyā. 59A. 11 (*on* 3. 4)

**अदृष्टापेक्षत्व** (adṛṣṭāpekṣa-tva) *n.* dependence on the unseen (merit or demerit) न स्वर्गनरकभूम्यादिप्रदेशविशेषाद्वैचित्र्यम्। तत्प्राप्तेरप्यदृष्टापेक्षत्वात् BrahmSūBh. (Ma.) 39B. 7 (*on* ii. 3. 53); न च दृष्टफलस्यामुष्मिकफलत्वमदृष्टापेक्षत्वं चानुपपन्नम् VedāntKa. 506. 17 (*on* iii. 4. 51); GoviBh. 169. 10 (*on* ii. 3. 51)

**अदृष्टापेक्षा** (adṛṣṭāpekṣā) *f.* **i** expectancy of or dependance on the unseen (merit or demerit) अदृष्टापेक्षायां कल्पनागौरवं तत एव तदुत्पत्तेः ĀtmaTaVi. 872. 7; अदृष्टापेक्षया वैचित्र्यं समर्थयेत् Kiraṇā. 97. 5; 89. 11; **ii** expectancy or need of (getting) an unseen (result) उपासनात्मकस्य तु ज्ञानस्य कर्मणि पुरुषे च दृष्टप्रयोजनाभावात् अदृष्टापेक्षायां श्रुत्याभावेन क्रत्वर्थत्वाभावाद्वाक्यशेषोपनीताभ्युदयनिःश्रेयसफलतया रात्रिसत्रवत्पुरुषार्थत्वमेव NyāyRa. 670. 10 (*on* 5(15). 104); YuktiSneha. 131. 33 (*on* i. 1. 5); **iii** expectancy of or dependence on the unseen merit (as the cause) नन्वेवमपि ब्रह्मज्ञानस्य दृष्टप्रमाणसामग्रीजन्यस्य नादृष्टापेक्षा VivaPraSaṁ. 206. 17.

**अदृष्टाभाव** (adṛṣṭābhāva) *m.* absence of unseen (merit or demerit) न चोपकारेण तस्य प्रयोजनम्। अदृष्टाभावात् ViṣṇuTaNi. 1B. 11; TattvPrakā. 96A. 5 (*on* ii. 2. 6); विग्रहादिकं खल्वदृष्टसृष्टम्। तदानीमदृष्टाभावान्न संभवेत् GoviBh. 319. 6 (*on* iv. 4. 10)

**अदृष्टाभावबुद्धि** (adṛṣṭābhāva-buddhi) *f.* belief in the non-existence of the unseen (merit or demerit) नास्तिक्यमदृष्टाभावबुद्धिः DīpKa. 95. 25 (*on* 3. 236)

**अदृष्टाभिभव** (adṛṣṭābhibhava) *adj.* who has not experienced insult or subjugation अदृष्टाभिभवो मातुरानुकूल्यान्नवो नृपः। परितापं पितुस्तैस्तैर्दुःसंदेशैः सदाकरोत् RājTa. (Ka.) 7. 419.

**अदृष्टाभिव्यक्ति** (adṛṣṭābhivyakti) *f.* manifestation of the unseen (merit or demerit) करणानां प्रवृत्तिरपि पुरुषस्यादृष्टाभिव्यक्तेरेव भवतीत्यर्थः SāṁkhyaPraBh. 85. 18 (*on* 2. 36)

**अदृष्टाभिसंधि** (adṛṣṭābhisandhi) *m.* aim of (obtaining) unseen (merit) यद्यपि कृपया परं रक्षतः शास्त्रसिद्धमदृष्टं तथाप्यदृष्टाभिसंधिविरहितस्यैव परदुःखदर्शनानन्तरमवशात्पातादिमत्त्वदर्शनात् ... स्वार्थानपेक्षता युक्ता ŚrutaPra-

**अद्भुतधी** ( adbhuta-dhī ) *adj.* of wonderful intellect मूर्तिमन्तस्त्रयो वेदाः …। सुराः सङ्कल्पकामास्तु यत्राद्भुतधियोऽभवन् SkandP. ii(2). 21. 56.

**अद्भुतधैर्य** ( adbhuta-dhairya ) *adj.* of wonderful courage ( रामम् ) तं दृष्टवान्प्रथममद्भुतधैर्यवीर्यगाम्भीर्यमक्षणविमुक्तसमीपजानिम् RasGaṅ. 342. 13.

**अद्भुतनय** ( adbhuta-naya ) *adj.* of wonderful conduct or polity विविक्तासीनमितरे मितरेचितदिङ्मुखाः। परीगुरद्भुतनयं तनयं मातरिश्वनः RāmC. 10.8; स चमत्कारविस्मयं स्वानन्दवेशपेशलमद्भुतनयं तनयं विलोक्य … वाग्देवता … किञ्चिदपाठीत् CaitaCa. 27. 9 (1)

**अद्भुतनाटक** ( adbhuta-nāṭaka ) *n.* marvellous drama केनाप्यद्भुतनाटकेन कमपि श्रीमन्तमानन्दयन् NyāySiA. 224. 23.

**अद्भुतनाट्यविद्या** ( adbhuta-nāṭyavidyā ) *f.* marvellous dramaturgy अस्ति …। अपां निधेरद्भुतनाट्यविद्यागुरुश्चकोरीकुलबन्धुरिन्दुः Acyutarā. 1. 5.

**अद्भुतनिधि** ( adbhuta-nidhi ) *m.* treasure of wonders विधेरेवाद्भुतनिधेस्त्रैलोक्याश्चर्यकारिणी।… शक्तिर्दृष्टा तत्र RāmāMañ. 314. 7; DaśāvaC. 7. 214; विचित्रा किमिश्रत्तानमुखी कौम्मी नौरद्भुतनिधौ पयोधौ SamudraMa. 1. 61 (8); NityoNi. 59. 4.

**अद्भुतनिरूपण** ( adbhuta-nirūpaṇa ) *n.* explanation of wonders अथाद्भुतनिरूपणम्। तत्र वृद्धगर्गः AdbhuSāg. 4. 17.

**अद्भुतनिर्माणपर्याप्ति** ( adbhutanirmāṇa-paryāpti ) *f.* limit of wonderful creation प्रविष्टः सोऽप्यपश्यत्तां तत्र नेत्रोत्सवप्रदाम्। धातुरद्भुतनिर्माणपर्याप्तिमिव रूपिणीम् KathāSaSāg. v. 3. 47.

**अद्भुतनिष्पत्ति** ( adbhuta-niṣpatti ) *f.* origination of the marvellous sentiment वीराच्चाद्भुतनिष्पत्तिः स्याद्बीभत्साद्भयानकः AgniP. 338. 8; BhāvPra. (S'ā.) 58. 2 (3)

**अद्भुतनैपुण** ( adbhuta-naipuṇa ) *adj.* having extraordinary dexterity एतस्यावरस्तर्कनिष्णातोऽद्भुतनैपुणः EI. ii. 13. 28.

**अद्भुतपक्षिराज** ( adbhuta-pakṣirāja ) *m.* wonderful king of the birds (i. e. Jaṭāyu) रक्षः पिपेष गगनेऽद्भुतपक्षिराजम् MahāN. 3. 88.

**अद्भुतपञ्चक** ( adbhuta-pañcaka ) *n.* five wonderful things विद्युद्वर्षुधारादि देवाश्चाद्भुतपञ्चकम्। रत्नपीठं महेन्द्रस्तु यत्र तस्थौ जगत्पतिः TriṣoS'aPuC. iii, 5. 68.

**अद्भुतपद्म** ( adbhuta-padma ) *n.* wonderful lotus दृष्टा काञ्चनयष्टिरद्य नगरोपान्ते भ्रमन्ती मया तस्यामद्भुतपद्ममेकमनिशं प्रोत्फुल्लमालोकितम् SubhāRaK. 16. 4.

**अद्भुतपराक्रम** ( adbhuta-parākrama ) *adj.* of wonderful valour अयं स पुरुषव्याघ्रो रणेऽद्भुतपराक्रमः MahāBhā. i. 63. 7 = ii. App. I. 12 (108); रावणो हि महावीर्यो रणेऽद्भुतपराक्रमः Rāmā. vi. 47. 47; TilaMañ. 266. 16.

**अद्भुतपर्याय** ( adbhuta-paryāya ) *m.* synonym of the word *adbhuta* (wonderful) काम्राद्योरद्भुतपर्यायाः पूजनवचना भवन्ति Nyās. iii. 939. 10 (*on* viii. 1. 67) = LaS'abdeS'e. ii. 1112. 12.

**अद्भुतपवन** ( adbhuta-pavana ) *m.* wonderful breeze श्रीखण्डाद्रेरद्भुतपवनैर्मन्दान्दोला … सदृशी वासन्तीयम् ChandoMañ. 2. 196 (comm. अपूर्ववातैः)

**अद्भुतपुण्य** ( adbhuta-puṇya ) *m.* name of a poet, SārṅgaPa. 3528 (1); 3680 (1); SūktiMu. 78. 6 (1)

**अद्भुतपुष्पवत्** ( adbhutapuṣpa-vat ) *adv.* like a flower produced marvellously इह तु विभावादिचर्वणाद्भुतपुष्पवत्तत्कालसारैवोदिता न तु पूर्वापरकालानुबन्धिनी Loc. 58. 10 (*on* 1. 21)

**अद्भुतपूर्वक** ( adbhutapūrva-ka ) *adj.* wonderful, marvellous (*lit.* preceded or caused by wonders) नवमं पर्व निर्दिष्टमेतदद्भुतमर्थवत् ( v. l. °दद्भुतपूर्वकम् ) MahāBhā. i. 2. 176.

**अद्भुतपौरुष** ( adbhuta-pauruṣa ) *n.* wonderful prowess or valour यः सीमाद्भुतपौरुषस्य यशसां धाम श्रियामाश्रयः EI. xix. 280. 10; *adj.* endowed with wonderful valour नन्दस्य भवने कोऽपि बालोऽस्त्यद्भुतपौरुषः SāhiDa. 394. 3; BallāC. 52. 20.

**अद्भुतप्रकाशनव्यपदेश** ( adbhutaprakāśana-vyapadeśa ) *m.* pretext of revealing or manifesting a miracle तद् भवानद्भुतप्रकाशनव्यपदेशेन तस्य योगिनः स्वयमैहिकेषु विरक्तिमुत्पाद्य नः सन्त्रातुमर्हति MadaKeC. 17 (1)

**अद्भुतप्रख्य** ( adbhuta-prakhya ) *adj.* of wonderful fame ततस्तदद्भुतप्रख्यं भूतं परमभास्वरम्। संवर्तयित्वा तत्कर्म तत्रैवान्तरधीयत Rāmā. i. 15. 22; vii. 89. 7.

**अद्भुतप्रज्ञ** ( adbhuta-prajña ) *adj.* of wonderful intellect कविश्चाद्भुतप्रज्ञः श्रीजयसिंहसूरिः HammiMaMa. 1. 7.

**अद्भुतप्रताप** ( adbhuta-pratāpa ) *adj.* of wonderful valour अथाद्भुतप्रतापेन वेष्टयित्वा महाचमूम्। उच्चलेनाहवे बद्धः ससैन्यो मण्डलेश्वरः RājTa. (Ka.) 7. 1321; Rāṣtrau. 7. 25; जनं गुणैर्भूषयसि त्वमद्भुतप्रताप NemiNir. 7. 23.

**अद्भुतप्रतिभट** ( adbhuta-pratibhaṭa ) *adj.* having a wonderful rival अद्भुतप्रतिभटम् … आवभूव तुमुलं युद्धम् ParamāKā. 12. 84.

**अद्भुतप्रतिभा** ( adbhuta-pratibhā ) *f.* wonderful genius or inspiration वक्रतां कुरुते विदधाति कविरित्यद्भुतप्रतिभाप्रसारप्रकाशः VakroJī. 243. 9.

**अद्भुतप्रतिभाभू** ( adbhutapratibhā-bhū ) *adj.* who is the source of wonderful genius अयमद्भुतप्रतिभाभूर्भाभूः MudriKu. 5. 6 (9)

**अद्भुतप्रभ** ( adbhuta-prabha ) *adj.* having a wonderful light तस्य जन्मभवने प्रद्योधिताः … दीपकाः।… असुरद्भुतप्रभाः NemiNir. 4. 23.

**अद्भुतप्रयोग** ( adbhuta-prayoga ) *m.* wonderful performance यत्कर्णेऽनुगृहीतोऽसि … श्रीमुनिचन्द्रसूरिभिरद्भुतप्रयोगप्रदानेन MudriKu. 5. 4 (11)

**अद्भुतप्रसर** ( adbhuta-prasara ) *m.* spread of the marvellous sentiment अयमद्भुतप्रसरः…सहसैवावरोपित इव तिरोभूततामुपगतः AuciViCa. 16 (159)

**अद्भुतप्रसूति** ( adbhuta-prasūti ) *f.* of wonderful birth ( लक्ष्मणः ) आर्य सैयमद्भुतभूति( v. l. °प्रसूति )रार्या MahāviC. 1. 20 (2)

**अद्भुतप्रस्थिति** ( adbhuta-prasthiti ) *adj.* (a group-dance) having a wonderful circular motion तदद्भुतप्रस्थिति रासचक्रं जवादलक्ष्यान्तरमावभासे Yādavā. 8. 88 (comm. आश्चर्यभूतभ्रमणम्)

**अद्भुतप्रहरण** ( adbhuta-praharaṇa ) *adj.* having a wonderful weapon घ्नन्त्यद्भुतप्रहरणा विपिनेषु केऽपि घ्राणेन केचन दृशाथ रसज्ञयान्ये RājTa.(Ka.) 8. 2027.

**अद्भुतप्रहारिन्** ( adbhuta-prahārin ) *adj.* giving wonderful blows न तस्थुः समरे केऽपि तेनाद्भुतप्रहारिणा S'ivaP. ii(4). 16. 24 (212B. 10)

**अद्भुतप्राप्ति** ( adbhuta-prāpti ) *f.* (Drama.) occurrence of a wonderful event (as one of the 14 *aṅgas* in the *nirvahaṇa-sandhi*) कार्यदृष्ट्यद्भुतप्राप्ती पूर्वभावोपगूहने DaśRū. 1. 53 = BhāvPra.(S'ā.) 213. 4 (7); NāṭyaDa. 110. 5; NāṭaLaRaK. 889; उपगूहनमद्भुतप्राप्तिः RasāSu. 236. 9 (3. 73); (चतुर्दशनिर्वहणसन्ध्यङ्गानि) उपपन्नेतरप्राप्तिरद्भुतप्राप्तिरुच्यते SāhiSā. 1. 108.

**अद्भुतप्राभव** ( adbhuta-prābhava ) *m.* wonderful lordship or power स पाण्डवैः। अद्भुतप्राभवप्राज्ये यौवराज्ये न्ययुज्यत PāṇḍaC. 17. 243.

**अद्भुतप्राभृत** ( adbhuta-prābhṛta ) *n.* wonderful present or gift स चाद्भुतप्राभृततोषितः NavaSāC. 13. 27; *adj.* with wonderful present or gift अद्भुतप्राभृतं दूतं राज्यदातुर्व्यसर्जयत् RājTa.(Ka.) 3. 248.

**अद्भुतप्रायश्चित्त** ( adbhuta-prāyaścitta ) *n.* expiation for portents अथैतान्यद्भुतप्रायश्चित्तानि भवन्ति BhārGS. 2. 32 (66. 2) = HirGS. i. 17. 5.

**अद्भुतफल** ( adbhuta-phala ) *n.* effect of portents अथ ग्रहणनिर्मुक्तावद्भुतफलम्। तत्र वराहसंहितायाम् – परुषपवनाब्दगर्जितविद्युत्परिवेषभूमिकम्पाद्याः सप्ताहान्तर्ने शुभा ग्रहणनिवृत्तौ शुभा वृष्टिः AdbhuSāg. 82. 23; 3. 6.

**अद्भुतफलकल्प** ( adbhutaphala-kalpa ) *adj.* resembling a wonderful or astonishing result (of magic etc.) वीररसादावपि यथावसरमुद्दीपनप्रशमनाभ्यां विनापि झटित्येवाद्भुतफलकल्पे साध्ये लब्धे प्रकटीचिकीर्षित उपायोपेयभावो न प्रदर्शित एव स्यात् Loc. 150. 24 (*on* 3. 14)

**अद्भुतफुल्लन्याय** ( adbhutaphulla-nyāya ) *m.* maxim of the wonderful blooming (of flowers or plants out of season) यदा तु दूतीवचनाद्वा तल्लक्षणाभिज्ञानाद्वोपायान्तराद्वा तानुत्कर्षान् हृदयङ्गमीकरणेनामृशति तदा तत्क्षणमद्भुतफुल्लन्यायेनैव कामपि पूर्णतामभ्येति PratyabhiVi. ii. 314. 12 (*on* iv. 1. 17); Bhāsk. ii. 314. 25 (*on* iv. 4. 17)

**अद्भुतबल** ( adbhuta-bala ) *adj.* having wonderful strength भुजव(व)लमवलोक्य यस्य [मे]नेऽद्भुतवल( ? बल )भीमकथा जनैरमिथ्या EI. i. 198. 9.

**अद्भुतबाल** ( adbhuta-bāla ) *m.* wonderful child तं ददर्श जनताद्भुतबालम् ( श्रीशंकरम् ) SaṅkaDigVi.(Mā.) 3. 81; स्तनमम्ब दिशेत्युपासजन् भगवन्नद्भुतबाल ( कृष्ण ) पाहि माम् Nārāy. x. 46. 10.

**अद्भुतबाहुवीर्य** ( adbhuta-bāhuvīrya ) *adj.* possessing wonderful strength of arms सखे काम, चक्रेण विष्णोरपि यद् दुरापम् …। तत् साधयेत् पुष्पमयं तदस्त्रमहो भवानद्भुतबाहुवीर्यः PārvPa. 2. 11.

**अद्भुतबाहुसत्त्व** ( adbhuta-bāhusattva ) *adj.* possessing wonderful strength of arms जेतुं क्षमः किमयमद्भुतबाहुसत्त्वः सौमित्रिरेव JānaPa. 5. 4.

**अद्भुतबाहुसार** ( adbhuta-bāhusāra ) *adj.* having wonderful vitality of arms तदीश्वरः केशमिनायकोऽभूदभूतपूर्वाद्दु( ? द्भु )तबाहुसारः EI. xiv. 90. 9.

**अद्भुतबुद्धि** ( adbhuta-buddhi ) *adj.* having a wonderful intellect श्रुतेन पृष्टः सकलं जगाद द्वैपायनस्तत्र पुराणगुह्यम्। अयोनिजेनाद्भुतबुद्धिना वै श्रुतं मया तत्र महाप्रभावम् DeviBhāP. i. 3. 38; *f.* wonderful intellect, astounding talents चकार युद्धं गौरी …। कृत्वा रणे चाद्भुतबुद्धिशौण्डं सेनापतिं वीरकघोरवीर्यम् S'ivaP. ii(5). 45. 39 (275A. 1)

**अद्भुतभक्ति** (adbhuta-bhakti) *adj.* having wonderful devotion उपास्यमानः सिद्धार्थदेवेनाद्भुतभक्तिना । मासक्षपणमातेने ··· सः PāṇḍaC. 18. 161.

**अद्भुतभक्तिरस** (adbhutabhakti-rasa) *m.* sentiment of wonderful devotion आत्मोचितैर्विभावाद्यैः स्वाद्यतां भक्तचेतसि । सा विस्मयरतिर्नीताद्भुतभक्तिरसो भवेत् BhaktiRaSi. iv. 2. 1.

**अद्भुतभङ्गि** (adbhuta-bhaṅgi) *adj.* of wonderful charm (मीन्याभङ्गिः) संत्यज पापचरित्रमुदञ्चय सुचरितमालाम् । अद्भुतभङ्गिरियं पुरुषोत्तमसरणिरनिन्द्या ChandaśCū. 2. 319(5); मन्ये पार्वणचन्द्रमध्यशकलेनाद्भुत्रितैषा चिरादङ्गैरद्भुतभङ्गिभिः परिणतत्र्युरत्निना वेधसा SūktiMu. 49. 20; *f.* the wonderful metre called Bhaṅgi, ChandaśCū. 2. 319(5)

**अद्भुतभा** (adbhuta-bhā) *adj.* (*f.*) of wonderful brilliance आत्रः प्रवव्राज विमुच्य पत्नीपुत्रादिकानद्भुतभाश्च लक्ष्मीः Gurvā. 350.

**अद्भुतभागधेय** (adbhuta-bhāgadheya) *adj.* of wonderful fortune, most fortunate तस्मादभूदद्भुतभागधेयः श्रीसाहसीयार्जुननामधेयः Rāṣṭrau. 2. 3.

**अद्भुतभारती** (adbhuta-bhāratī) *f.* wonderful speech आकर्णयन्नद्भुतभारतीं तां ददर्श राजा पुरतस्तनूजम् Rāṣṭrau. 1. 30.

**अद्भुतभाव** (adbhuta-bhāva) *m.* **i** marvellous nature तद्दर्शनाद् वीतपरिश्रमः ··· । प्रहृष्टरोमाद्भुतभावशङ्कितः प्रष्टुं पुरस्तं प्रससार बालकम् BhāgP. xii. 9. 26; **ii** wonderful nature स चायं द्वितीयः कार्यकारणभावः ··· अतिदुर्घटकारित्वलक्षणैश्वर्यविजृम्भाभावितोद्भुतभावः PratyabhiVi. i. 27. 1 (*on* i. 1. 1); विजृम्भा विलसनं तया भावितः संपादितः अद्भुतभावः आश्चर्यकारित्वं यस्य तादृशः Bhāsk. i. 27. 14 (*on* i. 1. 1); **iii** feeling called marvellous अत्राद्भुतभावस्य मुख्यता दानवीरस्तो गौणः RasTa. 183. 5.

**अद्भुतभासमेत** (adbhutabhā-sameta) *adj.* accompanied with marvellous glory ब्रह्मोत्तरं त्रिदशवेशमवाप्य जातस्तत्कल्पलेखयतिरद्भुतमा(? भा)समेतः YaśasCam. ii. 263. 10.

**अद्भुतभीमकर्मन्** (adbhutabhīma-karman) *adj.* doing wonderful and fearful deeds ततस्तु भीमोऽद्भुतवीर्य(v. l. भीम)कर्मा ··· उत्पाट्य दोर्भ्यां द्रुममेकवीरो निष्पत्रयामास MahāBhā. i. 180. 15.

**अद्भुतभीमरूप** (adbhutabhīma-rūpa) *adj.* possessing a wonderful and terrifying form अलातकल्पाः करकाखिलोकीमापूरयन्नद्भुतभीमरूपाः Yādavā. 7. 40.

**अद्भुतभीमवेग** (adbhutabhīma-vega) *adj.* possessing an extraordinary and terrific speed आसीदतामद्भुतभीमवेगौ ··· वेलावने सैन्यमहासमुद्रौ Yādavā. 11. 19.

**अद्भुतभुज** (adbhuta-bhuja) *m.* wonderful (i. e. strong) arm अद्भुतभुजावलेपतः कृष्णवेणितटमाजगाम सः VikraDeC. 14. 50; सोऽपि तावदद्भुतभुजभुजङ्गराजकृष्णायमानकृपाणवशीकृतश्रीः ···मैन्यधुरामधिरूढोऽस्माकम् HammīMaMa. 3. 11(1)

**अद्भुतभूमिक** (adbhuta-bhūmika) *adj.* having a wonderful ground अकारयन्मन्दिरमिन्दुमौलेरिदम्मठेनाद्भुतभूमिकेन EI. ii. 12. 23.

**अद्भुतभूरिसाहस** (adbhutabhūri-sāhasa) *adj.* having wonderful and ample courage जगदद्भुतभूरिसाहसः प्रहसन्नुच्चलति स्म पार्थिवः VikraDeC. 15. 21.

**अद्भुतभोग** (adbhuta-bhoga) *m.* wonderful (aesthetic) enjoyment भुञ्जानस्याद्भुतभोगस्पन्दाविष्टस्य च मनःकरणं चमत्कार इति AbhinBhā. i. 279. 19–20; (*on* 6. 31); अद्भुतभोगात्मस्पन्दावेशरूपो हि चमत्कारः Kāvyānu. (He.) 75. 7 (comm.)

**अद्भुतभोगवत्** (adbhutabhoga-va(n)t) *m.* one of the thousand names of Viṣṇu (*lit.* having wonderful enjoyments) अद्भुतभोगवान् । ··· इति ··· विष्णोर्नामसहस्रकम् PañRā.(Nā.) iv. 3. 40 (? 50)

**अद्भुतभ्रमि** (adbhuta-bhrami) *f.* miraculous whirlpool स किलैवायम् ··· आवभ्रामाद्भुतभ्रमय इव AvantiKa. 164. 16.

**अद्भुतभोगिभोग** (adbhuta-bhogibhoga) *adj.* **1** who wears the wonderful bodies of the serpents धृतार्धसोमोऽद्भुतभोगिभोगो विभूतिधारी स्व इव प्रपेदे KumāSam. 9. 39; **2** on which the wonderful enjoyment of lovers existed, KumāSam. 9. 39.

**अद्भुतम्** (adbhutam) *adv.* wonderfully, in a wonderful or strange manner, strangely अद्भुतं चाप्यशङ्कं च नात्युच्चं नीचमेव च । यः पठेच्छास्त्रमित्थं च तस्य शास्त्रादिर्दृश्यते HāriS. i. 1. 28; तद्वन्नृणे('वंशे) ··· देवो नागमट्टः पुरातनमुनेर्मूर्तिर्व्व('र्ब्व)भूवाद्भुतम् EI. xviii. 107. 3; आर्द्रचित्तः । भूला तु कूर्मवपुरद्भुतमुद्धधार (पृथिवीम्) SātvaT. 2. 25; धर्माशोकनराधिपस्य समये श्रीधम(? 'धर्म')चक्रो जिनो यादृक् तन्नयरक्षितः पुनरयञ्चक्रे ततोऽप्यद्भुतम् । ···तया EI. ix. 325. 26; सुमनोवृष्टिरभूत्तदाद्भुतम् SaṅkaDigVi.(Mā.) 2. 77; हराणतुराणसमुद्भवाः । ··· सुचुकुशुरद्भुतमुच्चकैः ParamāKā. 15. 106; मुखात् पीयूषधारेयं निःसरत्यद्भुतं तव AlaṅkāMaṅ. 127. 5.

**अद्भुतमकराकल्प** (adbhuta-makarākalpa) *m.* wonderful decoration or ornament resembling a fish सिचयमुदञ्चय हृदयादल्पं विलिखाम्यद्भुतमकराकल्पम् StavaMā. 267. 17.

**अद्भुतमणि** (adbhuta-maṇi) *m.* wonderful jewel रूपन्यक्कृतकाममद्भुतमणित्वाभिरामं वपुः TilMañ. 6. 10.

**अद्भुतमणिच्छत्र** (adbhuta-maṇicchatra) *n.* wonderful bejewelled parasol युक्तं संचरणं तवाद्भुतमणिच्छत्रेण रात्रावपि BhojPra. 46. 26.

**अद्भुतमणिमय** (adbhutamaṇi-maya) *adj.* adorned with wonderful jewels स्तेयं कृत्वाद्भुतमणिमयैः कङ्कणैरावृतापि PadyāTa. 77.

**अद्भुतमति** (adbhuta-mati) *adj.* of astounding intelligence or talent ताभ्यामजायत ··· गङ्गाधरोऽद्भुतमतिः EI. xxi. 164. 17; xxi. 165. 27; *f.* extraordinary intelligence तदद्भुतमतिः पापे न कर्तव्या कदाचन BhaviP. i. 119. 18; अयमद्भुतमतिश्रीसागरः सागरः MudriKu. 5. 6(6); श्रीचन्द्रप्रभसूरिरद्भुतमतिज्योत्स्नानिधानं बभौ PrabhāC. 215. 2.

**अद्भुतमतिनिधि** (adbhutamati-nidhi) *m.* treasure of marvellous intelligence तातस्यैवाद्भुतमतिनिधेः ··· शिक्षा चेतोऽस्माकं सुरसरिदिव क्षालयामास शुद्धा HammīMaMa. 5. 49.

**अद्भुतमद** (adbhuta-mada) *adj.* of wonderful (or strange) intoxication यावदेव ललितेक्षणासवैर्माद्यतेऽद्भुतमदैर्न पूरुषः PadmP. i. 22. 41.

**अद्भुतमन्दिर** (adbhuta-mandira) *n.* type of mansion called Adbhuta सपादांशं स्तूपिकोच्चं कुर्यादद्भुतमन्दिरे SilpaRa. i. 37. 10.

**अद्भुतमय** (adbhuta-maya) *adj.* full of wonders तदद्भुततमं (v. l. अद्भुतमयं) दृष्ट्वा नलो राजाथ भारत । दमयन्त्यां विशङ्कां तां व्यपाकर्षत् MahāBhā. iii. 75. 16; आः कोऽयमद्भुतमयः समयस्तनोति दिक्चक्रमक्रममिलत्तिमिरप्ररोहम् TripuDi. 1. 36; पतत्किञ्चिदुदीयतेऽद्भुतमयं द्रव्यान्तरं किं नु वा SamudraMa. 1. 52.

**अद्भुतमहावीर्य** (adbhutamahā-vīrya) *adj.* possessing wonderful and great prowess स चाद्भुतमहावीर्यो वज्रसंहननो युवा MahāBhā. i. 62. 11; SkandP. v(2). 71. 3.

**अद्भुतमहिमभर** (adbhutamahima-bhara) *m.* great amount of astounding greatness वंशेऽस्मिन्नुत(? द्)भूवात(? द्)भुतमहिमभरभ्राजितस्याम(? सु)रारेरंशः EI. xviii. 35. 93.

**अद्भुतमानसा** (adbhuta-mānasā) *adj.* (*f.*) with an astonished mind अहल्याऽपि पुनः पार्के चकाराद्भुतमानसा GaṇeP. ii. 94. 36.

**अद्भुतमाहात्म्य** (adbhuta-māhātmya) *n.* extraordinary greatness क्षायिकं हि ज्ञानम् ··· प्रकटीकृताद्भुतमाहात्म्यं सर्वगतमेव स्यात् TattvPradī.(A.) 67. 4 (*on* 1. 51)

**अद्भुतमीढ्वस्** (adbhuta-mīḍhvas) *adj.* wonderful and bountiful देक्ष्यावी सुपुवे शूरं ख्यातमद्भुतमीढुषम् (? मीढ्वांसम्) MatsyaP. 46. 1; PadmaP. 5. 13. 108.

**अद्भुतमुग्ध** (adbhuta-mugdha) *adj.* wonderful and beautiful पपातान्नुतमुग्धस्य रघुनाथस्य पादयोः RāmC. 35. 112.

**अद्भुतमौलिरत्न** (adbhuta-mauliratna) *n.* wonderful crest-jewel आसीदद्भुतमौलिरत्नमिलितन्याचाननच्छायिकाम् आलोक्यात्मन एव मारसुभटः पर्यस्थैर्योदयः SubhāRaK. 1. 10.

**अद्भुतयुक्त** (adbhuta-yukta) *adj.* wonderful, strange (*lit.* possessing wonder) मत्तानेककरालकुम्भिकरस्पोरुढयष्ट्या[द्भु]त[यु]क्तं कर्दममुद्रया क्षितितलम् EI. 1. 149. 8; (अप्सरःसंहतिः) मुमोचाद्भुतयुक्तेषु स्थानेषु कुसुमाञ्जलीः PadmaP.(Ra.) 93. 30.

**अद्भुतयुद्धमूर्धन्** (adbhuta-yuddhamūrdhan) *m.* wonderful battlefront एकत्राद्भुतयुद्धमूर्धनि धनुःसन्धानवीरः करः EI. xxii. 60. 14.

**अद्भुतयौवना** (adbhuta-yauvanā) *adj.* (*f.*) with extraordinary youthfulness मन्दा गतिः किमपि चाद्भुतयौवनायाः SāhiDa. 112. 7; षोडशाब्दा भवेद्बाला त्रिंशताद्भुतयौवना BallāC. 70. 14.

**अद्भुतयौवनोष्मन्** (adbhutayauvanoṣman) *adj.* endowed with warmth of wonderful youth अन्वग्रहीदद्भुतयौवनोष्मा ग्रीष्मानुरूपामुपभोगलक्ष्मीम् VikraDeC. 12. 35.

**अद्भुतरचना** (adbhuta-racanā) *f.* marvellous formation अनेकाद्भुतरचनायुक्तब्रह्माण्डकोटिरूपस्य क्षितिभङ्गकरणं न लौकिकम् AṇuBh. 10. 6 (*on* i. 1. 2)

**अद्भुतरस** (adbhuta-rasa) *adj.* **i** possessing the poetic sentiment Marvellous आकर्ण्यतामस्य ··· चरितम् ··· अद्भुतरसम् AvantiKa. 146. 5; वीररौद्राद्भुतरसः शिशिरे भौमवल्लभः । गेयः SamgiRa. ii. 28. 20 (2(2). 32); प्रस्तावाद्वतेहिन्यां युक्तः षड्जादिमूर्छनः । वीररौद्राद्भुतरसः शांभवः षड्जकौशिकः SamgiRa.

ii. 61. 20 (2(2). 67); ii of wonderful or marvellous juice आदायातिमनोज्ञमद्भुतरसं किञ्चित्फलं पाणिना BhāvŚ. 59; m. i poetic sentiment called Marvellous राजा ··· किमप्यद्भुतरसेनावेशित इव विधूय शिरश्चिन्तयांचकार NalaCam. 4. 26 (1); अद्भुतरसस्य विभावाः RasTa. 43. 3; निर्वहणे चास्मिन् संधौ अद्भुतरसः कर्तव्यः NāṭaLaRaK. 915; वीरशृङ्गारयोरेकः प्रधानोऽङ्गी च नाटके । अङ्गमन्येऽद्भुतरसः सन्धौ निर्वहणे भवेत् BhāvPra.(Śā.) 236. 4(S); विचित्रवस्तुदर्शनादिविभावः ··· विस्मयोऽद्भुतरसः (v. l. for अद्भुतः) Ekāva. 3. 1 (137) (99. 10); अत्र मुनिविषयरतिरूपस्य भावस्याद्भुतरसोऽङ्गम् Kuval. 171 (14); अथाद्भुतरसः PadyaVe. 797; ii wonderful sentiment धन्यस्य कस्यचन हन्त वशंवदा गौः । सूते तमद्भुतरसम् ŚrikaC. 2. 28 (comm. अद्भुततरं रसं शृङ्गारादिकम्)

**अद्भुतरसध्वनि** (adbhutarasa-dhvani) *m.* suggestive poetry consisting in the poetic sentiment called Marvellous परं त्वसौ कथंकारं अद्भुतरसध्वनिव्यपदेशहेतुः RasGaṅ. 52. 15.

**अद्भुतरसपरिपोषकता** (adbhutarasaparipoṣaka-tā) *f.* the state of causing development of the poetic sentiment called Marvellous नीरसप्रायमप्यत्र निबद्धमद्भुतरसपरिपोषक तयात्यन्तसरसतावहमिति Loc. 176. 24 (*on* 3. 26)

**अद्भुतरसप्रोल्लास** (adbhutarasa-prollāsa) *m.* brilliant manifestation of the poetic sentiment called Marvellous अद्भुतरसप्रोल्लासलीलास्पृशम् ··· उपभोगार्वशिमिमां सोमेश्वरो भूपतिः ··· कथितवान् Mānaso. iii. 20. 1820.

**अद्भुतरसभार** (adbhutarasa-bhāra) *m.* fulness of the sentiment called Marvellous अयमविलोलतयाद्य सनातन कलिताद्भुतरसभारम् । निवसतु ··· विन्दन्मधुरिमसारम् StavMā. 274. 18.

**अद्भुतरसवश** (adbhutarasa-vaśa) *m.* influence of the poetic sentiment called Marvellous येयं वीराद्भुतरसवशप्रवृत्तेन ··· वाक्येन ··· 'विप्राय' इत्यादिपदविच्छित्तिः सा रसान्तरतिरस्कृतिरित्युच्यते SaraKaṇṭhā. 114. 7; **अद्भुतरसवशात्** (adbhutarasa-vaśāt) [abl.] due to the poetic sentiment called Marvellous अत्र वीराद्भुतरसवशात् 'वदन्त एव' इत्यादि वाक्यान्तरंमध्ये प्रविष्टं गुणाय Kāvyānu.(He.) 179. 6.

**अद्भुतरसस्रोतस्** (adbhutarasa-srotas) *n.* stream of the poetic sentiment called Marvellous तत्रास्माकमकुण्ठिताद्भुतरसस्रोतःप्लुते रूपके ··· संपाद्यतामुद्यमः PārthPa. 4.

**अद्भुतरसाकुल** (adbhutarasākula) *adj.* overwhelmed with the sentiment called Marvellous स्तोमः सः ···कपीनामन्योन्यमद्भुतरसाकुलमीक्षमाणः । ऊर्मिप्रगुणरत्नमणिसंकुलकूलमध्यमध्यास्त RāmC. 25. 43.

**अद्भुतरसाख्या** (adbhutarasākhyā) *f.* the designation of the Marvellous sentiment स चाद्भुतरसाख्यां तु लभते रस्यते च तैः BhāvPra.(Śā.) 44. 15(2)

**अद्भुतरसानुबन्धिन्** (adbhutarasānubandhin) *adj.* causing the sentiment of wonder क एष शुकः ··· कोऽयमद्भुतरसानुबन्धी ··· मूर्धन्युद्गमः शिखायाः UdaySuKa. 22. 12.

**अद्भुतरसानुभाव** (adbhutarasānubhāva) *m.* ensuant of emotion relating to the sentiment called Marvellous अथाद्भुतरसानुभावाः RasTa. 56. 5.

**अद्भुतरसावेश** (adbhutarasāveśa) *m.* infusion or introduction of the sentiment called Marvellous वत्सराजस्यानङ्गरूपतयापह्नवादनङ्गस्य च प्रत्यक्षस्य पूजाग्रहणस्य लोकोत्तरत्वादद्भुतरसावेशः परिभावना Avalo. 10. 6 (*on* 1. 29); अद्भुतरसावेशतरलितो ब्रुवाण एव नातिदूरमग्रे निषसाद (वसन्तशीलः) UdaySuKa. 27. 14; 82. 22; (दमयन्ती) इत्यद्भुतरसावेशस्तिमितेन ··· चक्षुषा पुनः पुनर्नलमवलोक्य चिन्तयांचकार NalaCam. 7. 35 (17)

**अद्भुतरसाश्रय** (adbhutarasāśraya) *adj.* based on the sentiment called Marvellous रागः स्यादाम्रपञ्चमः । शार्ङ्गदेवेन गदितो हास्याद्भुतरसाश्रयः SaṃgīRa. ii. 118. 4 (*on* ii. 2. 169)

**अद्भुतरसैकभाजन** (adbhutarasaikabhājana) *n.* the only container of the sentiment called Marvellous ईदृगेवाद्भुतरसैकभाजनं भवानीभक्तिभासुरः ··· खल्वयं नक्तञ्चरचक्रवर्ती Dūtāṅg. 47 (1)

**अद्भुतराग** (adbhuta-rāga) *m.* wonderful attachment रणसंभ्रमलोलभक्तिषु न्यपतन्नद्भुतरागनिर्भराः । कबरीषु कुरङ्गचक्षुषामसिलेखासु च वीरदृष्टयः VikraDeC. 15. 4.

**अद्भुतराजहंसता** (adbhutarājahaṃsa-tā) *f.* i the state of being a wonderful royal swan करिमेघघटाश्च पाटयन्नतनोदद्भुतराजहंसताम् VikraDeC. 15. 59; ii the state of being a very wonderful noble king, VikraDeC. 15. 59.

**अद्भुतरीतिभीषण** (adbhutarīti-bhīṣaṇa) *adj.* terrifying in an unusual manner अयमद्भुतरीतिभीषणखिशिरस्तूर्यरवो निशम्यते RāmC. 33. 53.

**अद्भुतरुच्** (adbhuta-ruc) *adj.* of an unusual lustre त्वं दाता वरदस्त्वमद्भुतरुची लोकेश ते ज्योतिषी YaśasCam. ii. 166. 7.

**अद्भुतरूप** (adbhuta-rūpa) *adj.* [*f.* -ā] i of wonderful form or figure ददर्शाद्भुतरूपाणि विमानानि सहस्रशः MahāBhā. iii. 43. 28; सा तानद्भुतरूपान्वै दृष्ट्वा ··· ग्रहीतुम् ··· उपचक्रमे MahāBhā. iii. 50. 23; iii. 73. 17; बहून्यद्भुतरूपाणि द्रष्टव्यानीह मातले MahāBhā. v. 96. 25; ततः पाणिग्रहश्चक्रे तयोरद्भुतरूपयोः PadmP.(Ra.) 8. 371; बभूवाद्भुतरूपा च त्रिनेत्रा चन्द्रशेखरा SaurP. 49. 63; दृष्ट्वा चाद्भुतरूपां तां स कामवशगः शठः KathāSaSāg. iii. 1. 33; ix. 1. 118; वपुषाद्भुतरूपेण (? णा) दृष्टपूर्वेण संयुतम् । विलोक्यानिन्दिता कान्तं बाला KathāKau. 3. 97; ii having an unusually strange form तेन त्वद्भुतरूपेण... प्रमृष्टं प्रमदावनम् Rāmā. v. 40. 16; मां पिनष्टि कपिरद्भुतरूपः RāmC. 16. 21; ददर्श तत्राद्भुतरूपमुग्रं वालं सुधर्मा प्रथमा ज्वलन्तम् GaneP. i. 5. 25; iii of wonderful or marvellous nature or feature तस्मिन्यस्य कस्यचिदपूर्वस्यातिशयस्याद्भुतरूपस्य महिम्नः आरोपः VakroJī. 88. 10; (गङ्गा) अचिन्त्यशक्तिरनघाद्भुतरूपाघहारिणी SkaudP. iv. 29. 20; संविद्रूपमद्भुतरूपम् ··· गुरुमहं तं यमनियमादियुतः स्मरति ŚaṅkaVi.(Ā.) 104. 11; भागानद्भुतरूपान् रासाख्यानन्वभूत्कृष्णः HariC. 127; iv of the form of (the sentiment) called the Marvellous तेन चाद्भुतरूपेण मध्यनिवेशितेन शृङ्गाररौद्रयोर्नैरन्तर्यकृतविरोधपरिहारः Ekāva. 1. 1(27) (10. 2); v strange, unusual सिंहोन्नतं चाप्यभिगर्जतोऽस्य शुश्राव लोकोऽद्भुतरूपमग्र्यम् MahāBhā. iii. 18. 6; vi of the nature of a strange occurrence, portentious तस्य प्रयाणे यान्यासन्निमित्तानि महात्मनो बहून्यद्भुतरूपाणि MahāBhā. xiv. 52. 4; *n.* marvellous form or beauty इदं च तत्राद्भुतरूपमुत्तमं जगाद विप्रर्षिरतीतमानुषम् MahāBhā. i. 190. 14 = TantrVā. 135. 20 (*on* i. 3. 7); इन्द्रः सहस्रनयनोऽप्यद्भुतरूपं ते परिच्छेत्तुम् RasGaṅ. 180. 5.

**अद्भुतरूपकारिन्** (adbhutarūpakār-in) *adj.* taking a wonderful or marvellous form युगे युगे वासुदेवो बभूव कल्पे भवत्यद्भुतरूपकारी VarāP. 15. 17.

**अद्भुतरूपकीर्ति** (adbhutarūpa-kīrti) *adj.* possessing wonderful fame (*lit.* having fame of wonderful nature) आसीत् ततोऽपि जगदद्भुतरूपकीर्तिः तनयः EI. xviii. 132. 9.

**अद्भुतरूपत्व** (adbhutarūpa-tva) *n.* the state of having wonderful beauty अनयोर्वेङ्किप्रवेशादीनामद्भुतरूपत्वादीनां चाभिहितानामनुनिर्दिष्टश्च(? ष्ट चू) र्णादिभिर्नवमनोभवादिभिश्च क्रमेण संबन्धात् AlaṅkāRa. 92 (55)

**अद्भुतरूपदर्शन** (adbhutarūpa-darśana) *adj.* having a wonderful appearance इतीरिते तस्य सनातनः स्वयं पुरो बभूवाद्भुतरूपदर्शनः VarāP. 8. 50.

**अद्भुतरूपधृक्** (adbhutarūpa-dhṛk) *adj.* having a wonderful form अद्भुतरूपधृक्शिवनृपेणोच्चैर्भटैरुद्धतैः । छेदीकृत्य गृहस्थलेषु विविधान्नारीनरान्भूरिशः ParamāKā. 4. 29.

**अद्भुतरूपधेयश्री** (adbhutarūpadheya-śrī) *adj.* (*f.*) having the beauty of a wonderful appearance अद्भुतरूपधेयश्रिया ··· पुस्तकमूरूपरि न्यस्तम् ViviTiKa. 98. 17.

**अद्भुतरूपनिर्माण** (adbhutarūpa-nirmāṇa) *n.* creating a wonderfully beautiful form जनार्दन सकलजगद्रूपस कैयं भवतोऽद्भुतरूपनिर्माणनैपुणे श्लाघा SamudraMa. 2. 0(2)

**अद्भुतरूपभाज्** (adbhutarūpa-bhāj) *adj.* possessing a wonderful handsomeness ययेष तपसा क्षीणस्तथाप्यद्भुतरूपभाक् MalliC. 7. 385.

**अद्भुतरूपम्** (adbhuta-rūpam) *adv.* wonderfully तद्भूमिमासाद्य पुनः पुनश्च समुत्पतत्यद्भुतरूपमुच्चैः MahāBhā. iii. 112. 10.

**अद्भुतरूपराशि** (adbhutarūpa-rāśi) *m.* store of wonderful beauty शंभुः ···क्षणादभूदद्भुतरूपराशिर्नन्नतः कान्तिसुधावदातः DarpaDa. 7. 29.

**अद्भुतरूपरेखा** (adbhuta-rūparekhā) *adj.* (*f.*) having the limit of wonderful beauty ततः प्रभृत्यद्भुतरूपरेखा सा बालिकाभूत् NavaSāC. 9. 46.

**अद्भुतरूपलक्ष्मी** (adbhutarūpa-lakṣmī) *adj.* having an excellence of wonderful beauty आकल्पवानद्भुतरूपलक्ष्मीर्नलोऽपि तां राजसभां प्रपेदे Nalābhyu. 5. 9.

**अद्भुतरूपलोल** (adbhutarūpa-lola) *adj.* greatly covetous of wonderful beauty क्षीणां सहस्रम् ··· अरमयदद्भुतरूपलोलः श्रीहैहयः PadyaVe. 403.

**अद्भुतरूपसेव** (adbhutarūpa-seva) *adj.* rendering wonderful service, serving wonderfully अस्यानुजो विजयतां जयसिन्द (? सिंह) देवः सौमित्रिवत्प्रथमजेऽद्भुतरूपसेवः EI. ii. 12. 22.

**अद्भुतशब्द** (adbhuta-śabda) *m.* wonderful sound शुश्राव लोकोऽद्भुतरूपम् (v. l. अद्भुतशब्दम्) अग्र्यम् MahāBhā. iii. 18. 6.

**अद्भुतरूपसंपद्** (adbhuta-rūpasampad) *f.* abundance of wonderful beauty तामब्रवीदद्भुतरूपसंपत्संपन्नपूजः क्षणदाचरेन्द्रः DaśāvaC. 7. 53.

**अद्भुतरूपिन्** (adbhuta-rūpin) *adj.* [*f.* -iṇī] possessing wonderful appearance or form धन्याः स्थ देवाः ··· त्रिलोचनेनाद्भुतरूपिणा च। अनुगृहीताः VarāP. 23.24; कन्यायोनिं पशुक्रीडां नारीमद्भुतरूपिणीम्। नग्नां तथा रतं नैवाखेटकं च विलोकयेत् RatnacūKa. 113.

**अद्भुतरौद्रम्** (adbhutaraudram) *adv.* wonderfully and terribly or violently अनृत्यतेवाद्भुतरौद्रमुच्चैर्निशाचरेन्द्रं प्रति पश्चिमाशया। प्रदीर्घसंध्यारसनाग्ररोपितस्फुरत्प्रचण्डद्युतिमण्डलाग्रया RāmC. 18.4.

**अद्भुतलक्षण** (adbhuta-lakṣaṇa) *adj.* of a transcendental nature एकमात्रे तु जीवः स्यात् संस्कारोऽद्भुतलक्षणः LakṣmīT. 21.20; *n.* characteristics of the portent अद्भुतलक्षणम् ··· अभिधाय AdbhuSāg. 3.5.

**अद्भुतलताकन्द** (adbhuta-latākanda) *adj.* having a wonderful pericarp तत्साक्षादरविन्दमद्भुतलताकन्दं तु वन्देमहि AnyoMuLa. 28.

**अद्भुतलावण्य** (adbhuta-lāvaṇya) *n.* wonderful beauty येनैवाद्भुतलावण्ययुक्तं लोके कृतं वपुः KathāKau. 3.103.

**अद्भुतलिङ्ग** (adbhuta-liṅga) *n.* miraculous characteristic एतान्यद्भुतकल्पानि (v. l. लिङ्गानि) दृष्ट्वाहं द्रुतमागता MahāBhā. iii. 73.17.

**अद्भुतलील** (adbhuta-līla) *adj.* whose sports are wonderful हरेरद्भुतलीलस्य लीलाख्याने न सज्जते PadmP. i. 61.75; तद्वचः श्रुत्वाद्भुतलीलो महेश्वरः ··· गणानूचे SivaP. ii(4). 14.11 (209A.7); असौ बालः ··· अद्भुतलीलः ĀnandRa. 6.9(7)

**अद्भुतवंश** (adbhuta-vaṁśa) *adj.* belonging to a wonderful family राज्ञा चाद्भुतवीर्येण (v. l. °वंशेन) ···। लोड्यमानं महारण्यं तत्यजुश्च महामृगाः MahāBhā. i. 63.19.

**अद्भुतवत्** (adbhuta-vat) *adv.* like something wonderful न ते स्वशीलमद्भुतवत् प्रतिभाति DaśKuC. 50.9; किंच अस्य वक्तापि आश्चर्यः अद्भुतवदेव, अनेकेषु कश्चिदेव भवति KāṭhUBh. 125.14 (*on* 2.7); BṛĀraUBh. 152.8 (*on* i. 4.15)

**अद्भुतवपुस्** (adbhuta-vapus) *n.* wonderful or striking body ओं नमः ···। तुभ्यमद्भुतवपुर्ग्रहलीलाछिन्नविश्वजनघोरभयायै RāmC. 16.57.

**अद्भुतवर्चस्** (adbhuta-varcas) *adj.* of wonderful lustre सुरासुरास्तस्य सर्वे वक्त्रस्याद्भुततेजसा (v. l. अद्भुतवर्चसः)। सर्वशो न प्रकाशन्ते दीपाः सूर्योदये यथा PadmP. v. 14.97.

**अद्भुतवर्णक** (adbhutavarṇa-ka) *adj.* having wonderful colours अद्भुतवर्णकानि। ··· चीनांशुदुकूलकानि (उपादाय) MahāBhā. iv. 1035*(1)

**अद्भुतवर्णन** (adbhuta-varṇana) *n.* description of (the sentiment called) Marvellous अनुभावास्तु वक्ष्यन्ते परत्राद्भुतवर्णने BhāvPra.(Śā.) 61.22(3)

**अद्भुतवर्णिता** (adbhuta-varṇitā) *adj.* (*f.*) wonderfully told भवन्तोऽपि पठन्त्वेनां कथामद्भुतवर्णिताम् VetāPañ.(Jam.) 2.21.

**अद्भुतवस्तु** (adbhuta-vastu) *n.* wonderful or unusual thing अरे तपनवेग, त्वरितमस्याः काञ्चीनृपदुहितुः ··· अद्भुतवस्तुदर्शनेन कुरु सफलमिहत्यमागमनम् TilaMañ. 274.19; पूर्वप्रजासृज इवाद्भुतवस्तुतत्त्वव्यावर्णनेन कुतुकं जनयन्ति तज्ज्ञाः RājTa.(Ka.) 8.1611; MahāN. 6.70.

**अद्भुतवाग्मिन्** (adbhuta-vāgmin) *adj.* wonderfully eloquent (person) क्व नामाद्भुतवाग्मिविरहदुर्भगे कलियुगे तादृशी ··· भारतीसरित् यां न कलुषयति कुमुदचन्द्रकुञ्जरः MudriKu. 2.31(3)

**अद्भुतवादिन्** (adbhuta-vādin) *adj.* speaking wonderful things देशान्तरिणो भवन्त्यद्भुतवादिनः PrabhāC. 59.14.

**अद्भुतवार्ता** (adbhuta-vārtā) *f.* wonderful news इदानीं काचिदद्भुतवार्ता ··· श्रुता BhojPra. 61.9; Rāgh. 5.22.

**अद्भुतविक्रम** (adbhuta-vikrama) *adj.* of wonderful prowess or valour राजा युधिष्ठिरः। विप्रार्थमाराधितवान् सूर्यमद्भुतविक्रमम् MahāBhā. iii. 3.15; परामृशसि यत्क्रुद्धः खड्गमद्भुतविक्रम MahāBhā. viii. 49.7; xi. 27.16; xii. 1.21; ViṣṇuP. v. 7.22; PadmP.(Ra.) 9.157; प्रहस्तमर्थयांचक्रे योद्धुमद्भुतविक्रमम् Bhaṭṭi. 14.88; जलंधरो दृष्ट्वा रुद्रमद्भुतविक्रमम्। चकार मायया गौरीम् SkandP. ii(4). 22.1; LiṅgaP. ii. 16.13; GaṇeP. ii. 23.10; SivaP. ii(5). 43.28 (271A.1); RāmāMañ. 41.25; BhāgP. i. 11.16; BrahmP. 185.22; क्ष्मापालचूडामणेस्तस्मादद्भुतविक्रमः ··· कोकल्लनामाभवत् EI. xi. 143.14; तस्मादद्भुतविक्रमादथ जयचंद्राभिधानः पतिर्भूपानामवतीर्ण एषः EI. x. 97.10; समरकेसरिक्ष्मापतेः सुतः। ··· अभादद्भुतविक्रमः TriṣaŚaPuC. iv. 3.87; तस्मादद्भुतविक्रमः समभवच्छ्रीलक्ष्मदेवः सुधीः SūktiMu. 0.(Anu) 20; SārṅgaPa. 1085; शम्भोरद्भुतविक्रमस्य ··· विज्ञातं सकलैर्जनैः ··· माहात्म्यम् ParamāKā. 8.52.

**अद्भुतविक्रान्त** (adbhuta-vikrānta) *adj.* of wonderful valour गरुडाधिपतिश्चासौ जातः ख्यातो मरुत्वतः। सुन्दरोऽद्भुतविक्रान्तो महालोचनसंज्ञकः PadmP.(Ra.) 39.178.

**अद्भुतविग्रह** (adbhuta-vigraha) *adj.* having a wonderful body कृष्णम् ··· वयसाद्भुतविग्रहम् ··· ध्यायेत् PadmP. iv. 69.85; SivaP. ii(5). 23.3 (247B.2); TantrRā. 20.46.

**अद्भुतविजृम्भित** (adbhuta-vijṛmbhita) *n.* display of a miracle किमेतदद्भुतविजृम्भितमिदानीमेव मया स्फटिकशुक्लोऽयमागच्छता दृष्टः कथमियतैव क्षणे हरितमणिनिर्माणनीलतां प्रपन्नः UdaySuKa. 28.17.

**अद्भुतवितान** (adbhuta-vitāna) *adj.* of wonderful development or growth (*lit.* stretching out) प्रमुरेष सर्वविदहं कृपणो जगदेतदद्भुतवितानमिति। प्रतिपत्तयः SaṁkṣeŚā. 2.223 (ii. 132.8)

**अद्भुतविधि** (adbhuta-vidhi) *adj.* whose working is wonderful चिरं क्षात्रं तेजस्तदिह जयतादद्भुतविधि YaśasCam. i. 167.13; गतिः शक्या परिच्छेत्तुं न ह्यद्भुतविधेर्विधेः KathāSaSāg. iii. 4.267.

**अद्भुतविभाव** (adbhuta-vibhāva) *m.* exciting factor of the sentiment called Marvellous देवकुले च गमनम्। तस्याद्भुतविभावो येन तत्रत्यं सरस(? सरः सं)निवेशादि न कचित् दृष्टम् AbhinBhā. i. 329.17 (*on* 6.74(2); उपवने देवकुलादौ च गमनमद्भुतविभावो येन तत्रत्यं सरःसंनिवेशादि न कचिद् दृष्टम् Kāvyānu.(He.) comm. 95.19.

**अद्भुतविभ्रम** (adbhuta-vibhrama) *adj.* possessed of wonderful graces °कटाक्षनिरीक्षणेन ··· भुवनमद्भुतविभ्रमेण श्रीकृष्णचन्द्र शिशिरीकुरु लोचनं मे KṛṣṇaKa. 1.25; नयनाम्बुजाभ्याम्। आलोकयेदद्भुतविभ्रमाभ्यां काले कदा कारुणिकः किशोरः KṛṣṇaKa. 1.45 (comm. अद्भुतो विभ्रमो भूषास्थानविपर्ययो याभ्याम्)

**अद्भुतविलास** (adbhuta-vilāsa) *m.* wonderful sport ज्ञातुमद्भुतविलासनिधाने प्रेम्णि साम्यमिव जातगरिम्णि। केलिधामनि तयोः शतवारं क्षिप्तवान् मनसि मानमनङ्गः VikraDeC. 11.72; 5.23.

**अद्भुतविलासविधि** (adbhutavilāsa-vidhi) *m.* creator of marvellous manifestations तम् ··· आदित्यमद्भुतविलासविधिं नमामि Mānaso. i. 1.7.

**अद्भुतविषयविवेक** (adbhutaviṣaya-viveka) *m.* discrimination of supernatural events (in life) अद्भुतलक्षणमद्भुतविषयविवेकोत्पत्तिहेतुम्। अभिधाय AdbhuSāg. 3.5.

**अद्भुतविषादवत्** (adbhutaviṣāda-va(n)t) *adj.* filled with surprise and dejection ततः स दाहशमनं दापयामास हस्तयोः। तस्याश्चन्दनलेपादि राजाद्भुतविषादवान् KathāSaSāg. xii. 18.29.

**अद्भुतविस्तर** (adbhuta-vistara) *adj.* of wonderful (unusual) length तच्छ्रुत्वा राजसिंहस्य वाक्यमद्भुतविस्तरम् Rāmā. i. 18.1 = YogVā. i. 7.1.

**अद्भुतविहारतोषित** (adbhutavihāra-toṣita) *adj.* pleased or satisfied with extraordinary sports व्रजसद्भिरद्भुतविहारतोषितैः सुरसत्तमैरपि समं स तुष्टुवे Yādavā. 8.120.

**अद्भुतवीक्षित** (adbhuta-vīkṣita) *n.* wonderful glance अमृतसिक्तमिवाङ्गमिदं यदि भवति तन्वि तवाद्भुतवीक्षितैः SubhāRaK. 17.23.

**अद्भुतवीर** (adbhuta-vīra) *m.* marvellous hero रिगचक्रेशवीरेण शक्तिः क्षिप्ता च वैरिषु। प्रक्रुत्ताद्भुतवीरेण ताजमीरेण सत्वरम् RājTa.(Prā.) 279.

**अद्भुतवीरलाभ** (adbhutavīra-lābha) *m.* acquisition of a marvellous hero वक्षः ··· रोमाञ्चकञ्चुकितमद्भुतवीरलाभात् सत्यं ब्रवीमि परिरब्धुमिवेच्छति त्वाम् MahāvīC. 2.38.

**अद्भुतवीरगोष्ठी** (adbhutavīra-goṣṭhī) *f.* assembly of marvellous heroes तथा रणेष्वद्भुतवीरगोष्ठीभूषायमाणो दशकन्धरोऽपि MahāvīC. 6.43.

**अद्भुतवीर्य** (adbhuta-vīrya) *adj.* possessed of miraculous prowess or strength राज्ञा चाद्भुतवीर्येण योधैश्च समरप्रियैः। लोड्यमानं महारण्यं तत्यजुश्च महामृगाः MahāBhā. i. 63.19; शुश्राव लोकोऽद्भुतरूपमग्र्यम् (v. l. कोऽद्भुतवीर्यमग्र्यम्) MahāBhā. iii. 18.6; हरेरद्भुतवीर्यस्य कथा लोकसुमङ्गलाः BhāgP. ii. 8.2; जयन्त्यद्भुतवीर्यस्य कुटिलाः केलयो विधेः RāmāMañ. 347.12; माधवः प्रथमसूनुजनुर्नारायणोऽपि च तथाद्भुतवीर्यः AlaṅkāMañ. 3.10.

**अद्भुतवीर्यकर्मन्** (adbhutavīrya-karman) *adj.* whose deeds or feats are full of miraculous prowess ततस्तु भीमोऽद्भुतवीर्यकर्मा ···। उत्पाट्य दोर्भ्यां द्रुममेकवीरः MahāBhā. i. 180.15; गाण्डीवधन्वा ··· प्रादुश्चकारातिमनुष्यकर्म (v. l. चकाराद्भुतवीर्यकर्मा) MahāBhā. iv. App. i. 44(50); इति चरितमिदं महात्मना- मृषिकृतमद्भुतवीर्यकर्मणाम् HariVaṁ. 118.51; तथेति संपूज्य स पिप्पलादं वाक्यं चकाराद्भुतवीर्यकर्मा MatsyaP. 72.45; निशम्य तद्दुर्गविधानमुत्तमं कृतं मयेनाद्भुतवीर्यकर्मणा MatsyaP. 130.27; तथेति संपूज्य स भार्गवं तद्वाक्यं चकाराद्भुतवीर्यकर्मा PadmP. v. 24.63.

**अद्भुतवीर्यवत्** (adbhutavīrya-va(n)t) *adj.* possessing transcendental prowess पुत्रश्च त्वत्समः कामं भवेदद्भुतवीर्यवान् DevīBhāP. ii. 2.29.

**अद्भुतवीर्यसत्त्व** ( adbhuta-vīryasattva ) *adj.* possessed of wonderful prowess and vigour स तत्र प्राकारगतांश्च भूतान्छातनमहानद्भुतवीर्यसत्त्वः । विचचार MatsyaP. 138. 36.

**अद्भुतवीर्यौजस्** ( adbhuta-vīryaujas ) *adj.* whose power and vigour are wonderful क्रतुम् । जगाम मनसा सद्य आहरिष्यन् युधिष्ठिरः । भूयस्त्वद्भुतवीर्यौजा धर्ममेवानुपालयन् MahāBhā. ii. 147*(6)

**अद्भुतवृत्तकारा** ( adbhutavṛtta-kārā ) *adj.* (*f.*) who performs wonderful feats महेश उवाच । शुम्भन्धिके ह्यद्भुतवृत्तकारे उत्पन्न एषोऽद्भुतचण्डवीर्यः । निमीलिते चक्षुषि मे भवत्या SivaP. ii(5). 42. 25 (269A. 13)

**अद्भुतवृत्तान्त** ( adbhuta-vṛttānta ) *adj.* containing wonderful accounts पुराणम् । ... द्वैपायनः ... शिष्येभ्यः प्रददौ ... पञ्चभ्यः ... तेषां पञ्चमं लोमहर्षणम् । सूतमद्भुतवृत्तान्तम् BrahmāṇḍP. i. 1. 14.

**अद्भुतवृत्ति** ( adbhuta-vṛtti ) *adj.* having a wonderful nature or disposition अकूटात्मापि तुङ्गत्वमपत्याद्भुतवृत्ति यः HarVi. 43. 175; तस्येशितुः ... अद्भुतवृत्तिरेका । त्वमेकैव तिष्ठसि विमोऽजगतो नियन्त्री HarVi. 47. 127.

**अद्भुतवेग** ( adbhuta-vega ) *adj.* having a wonderful speed राज्ञा चाद्भुतवीर्येण ( v. l. अद्भुतवेगेन ) योधैश्च समरप्रियैः MahāBhā. i. 63. 19.

**अद्भुतवेदगर्भ** ( adbhutaveda-garbha ) *adj.* whose kernel is supernatural or miraculous knowledge शंकररूपमद्भुतम् । सुविस्तृतं चाद्भुतवेदगर्भं ज्ञानात्मकम् SkandP. i(1). 35. 63.

**अद्भुतवेष** ( adbhuta-veṣa ) *adj.* wonderfully or splendidly attired अथ स्वयंवरदिवसेऽद्भुतवेषाः सर्वे राजकुमारा मञ्चेषूपविष्टाः KathāK. 28. 13; *m.* wonderful dress सांयात्रिका वदन्त्येवं कोऽपि देवोऽथ मानवः । आगतोऽद्भुतवेषेण सर्वभूषणभूषितः UttaKuC. 164.

**अद्भुतवेषरूपा** ( adbhuta-veṣarūpā ) *adj.* (*f.*) having a wonderful dress and beauty गणाः पुरारेः । आपूपिकीमद्भुतवेषरूपां निन्युर्दिवम् SivLī. 21. 102.

**अद्भुतवैजयन्तजयिनी** ( adbhutavaijayanta-jayinī ) *adj.* (*f.*) surpassing the wonderful Vaijayanta ( the palace of Indra ) तेन विहारिका ... मित्रेभ्योऽद्भुतवैजयन्तजयिनी दत्तेयम् EI. xxi. 99. 11.

**अद्भुतवैदग्ध्यसौकुमार्य** ( adbhuta-vaidagdhysaukumārya ) *adj.* possessed of wonderful discernment and refinement प्रातश्चाद्भुतवैदग्ध्यसौकुमार्या अमी इति । तेभ्यस्त्रिभ्योऽपि चक्रेभ्यो हेमलक्षत्रयं ददौ KathāSaSāg. xii. 15. 46.

**अद्भुतवैभव** ( adbhuta-vaibhava ) *adj.* having wonderful riches or glory हर्म्याण्यद्भुतवैभवानि विपणि( ? णिः )पण्यैरगण्यैर्धना KaumuMi. 8. 2; अन्त्याक्षरषट्कम् सुन्दरदीधितिः अद्भुतवैभवः KavyaKaVr. 16. 6 ( 1. 3 )

**अद्भुतशंसिन्** ( adbhutaśaṃs-in ) *adj.* announcing or suggesting a portent शङ्खमुख्यमुखदुन्दुभिनादः ... अद्भुतशंसी । मानमन्युमदनानि मिथोऽन्तर्भुजां सममपप्रथदर्थ्यः Kapphiṇā. 17. 23.

**अद्भुतशक्ति** ( adbhuta-śakti ) *adj.* possessing miraculous power or strength साद्भुतशक्तिरस्तु भवतो भूत्यै चिरायाम्बिका YaśasCam. i. 597. 4; दक्षस्य पुत्र्यद्भुतशक्तिरेका BṛDharmaP. i. 37. 77; कुर्वतां यद्विपद्यन्ते फलन्ति यदकुर्वताम् । कर्माण्यद्भुतशक्तेस्तद्दैवस्येव विजृम्भितम् RāmāMañ. 69. 22; नमोऽस्तु सिंहगिरये प्रभवेऽद्भुतशक्तये BallāC. 40. 6; द्विज्ञिलानपि तिमिङ्गिलतुल्यान् ... आनिनाय वशमद्भुतशक्तेः प्रांशुदुष्णनृपतिः किल यस्य ĀnandRa. 6. 29; *f.* wonderful power प्राकृतरीवीनं हि जगति दधत्यद्भुतशक्तिविभवसमुपेताः NayaMañ. iv. 4. 8.

**अद्भुतशक्तियुक्त** ( adbhutaśakti-yukta ) *adj.* endowed with wonderful power आश्वास्य तानद्भुतशक्तियुक्तं न्ययुङ्क नक्तंचरचक्रवर्ती । कर्तुं कपीनां सपदि प्रकम्पमकम्पनं नाम निशाचरेन्द्रम् RāmC. 32. 41.

**अद्भुतशङ्कर** ( adbhutaśaṅ-kara ) *adj.* who gives wonderful delight or happiness ताश्चापि दृष्ट्वाद्भुतशङ्करं तं सन्तोषवत्यो ददुरुत्तरं स्म SaṅkaDigVi. (Mā.) 8. 5; *m.* (adbhuta-śaṅkara) marvellous Saṅkara (a deity) शक्यो न वर्णयितुमद्भुतशङ्करस्त्वम् SaṅkaDigVi.(Mā.) 7. 47.

**अद्भुतशरज्वाल** ( adbhutaśara-jvāla ) *adj.* having wonderful arrows as flames ततोऽद्भुतशरज्वालो धनुःशब्दानिलो महान् MahāBhā. ix. 13. 12.

**अद्भुतशरीर** ( adbhuta-śarīra ) *n.* wonderful body किं नेत्रयोरमृतवर्तिरियं विभातुराधा किमद्भुतशरीरविधानलेखा LaṭaMe. 2. 18.

**अद्भुतशाख्यग्र** ( adbhutaśākhy-agra ) *n.* top of the tree in the form of the sentiment called Marvellous इयमद्भुतशाख्यग्रकेलिकौतुकवानरी Candrā. 2. 5.

**अद्भुतशान्ति** ( adbhuta-śānti ) *f.* pacification of evil omens अथातोऽद्भुतशान्तिं व्याख्यास्यामः JaimiGS. 2. 7 ( 32. 4 ); अद्भुतशान्त्यादयश्च यजुर्वेदे NyāyMañ. i. 238. 28; चकाराद्भुतशान्तिं सः बालकाभ्युदयेच्छया GaṇeP. ii. 8. 9; ग्रहयुद्धाकृतियोगाथादित्याद्यब्दवत्सरक्षाणाम् । अद्भुतशान्तीर्वक्ष्यत्यावर्तैः पञ्चदशभिः सः AdbhuSāg. 3. 10.

**अद्भुतशान्तिक** ( adbhutaśānti-ka ) *adj.* the purpose of which is to pacify ( the effects of ) ill omens गोभिरध्युषिते तस्मिन् हुत्वा चाद्भुतशान्तिकम् IśānSiPa. ii. 35. 42(5).

**अद्भुतशालिनी** ( adbhuta-śālinī ) *adj.* (*f.*) resplendent with the element of the miraculous श्रुत्वेति राजतनया कथामद्भुतशालिनीम् । अमन्दानन्दनिस्पन्दशतधौतमुखी बभौ BṛKathāMañ. ii. 2. 132.

**अद्भुतशासन** ( adbhuta-śāsana ) *adj.* of wonderful rule भद्रायुः पृथिवीं सर्वां शशासाद्भुतविक्रमः ( v. l. अद्भुतशासनः ) SkandP. iii(3). 13. 84.

**अद्भुतशिखाजाल** ( adbhutaśikhā-jāla ) *n.* mass of wonderful flames सर्वाङ्गेषु हुताशनः । ... निश्चक्राम । ततोऽद्भुतशिखाजालैरावृताः सर्वतो दिशः SkandP. ii(1). 32. 33.

**अद्भुतशिल्पकर्मन्** ( adbhuta-śilpakarman ) *n.* wonderful production of art इयत्तया मुक्तमवैमि नैपुणं प्रजापतेरद्भुतशिल्पकर्मणि NavaSāC. 7. 7.

**अद्भुतशिल्पमाया** ( adbhutaśilpa-māyā ) *adj.* (*f.*) endowed with the magic of wonderful art लब्धा सभा मयकृताद्भुतशिल्पमाया BhāgP. i. 15. 8.

**अद्भुतशील** ( adbhuta-śīla ) *adj.* [ *f.* -ā ] of wonderful behaviour गायति भृङ्गघटाद्भुतशीला StavMā. 283. 9; सः ... गाश्चालयन् अद्भुतशीलः ... उर्वी धर्मतः पालयामास ĀnandRa. 1. 45(4)

**अद्भुतशूरमण्डल** ( adbhutaśūra-maṇḍala ) *n.* group of wonderful heroes ( ज्योतिषि ) यस्मिन्नद्भुतशूरमण्डलसमुद्भूतास्त्रिलोकीगृहक्रोडोद्दीपनदीपिकास्तृणलवायन्ते प्रतापोर्मयः HammīMaMa. 1. 1.

**अद्भुतशृङ्ग** ( adbhuta-śṛṅga ) *adj.* having a wonderful end or tip तव करकमलवरे नखमद्भुतशृङ्गम् GītGo. i. 1. 4.

**अद्भुतशृङ्गारिन्** ( adbhuta-śṛṅgārin ) *adj.* containing ( the sentiments of ) wonder and love बीभत्सोऽद्भुतशृङ्गारी बीभत्साभास उच्यते BhāvPra.(Sā.) 133. 1(6)

**अद्भुतशोभित** ( adbhuta-śobhita ) *adj.* decorated with wonderful things गतः कैलासशिखरं दैत्येन्द्राहं यदृच्छया । ... सर्वत्राद्भुतशोभितम् SivaP. ii(5). 18. 27 (241A. 13)

**अद्भुतश्यामा** ( adbhuta-śyāmā ) *adj.* (*f.*) marvellous and dark अद्भुतश्यामा सा तनुरच्युतस्य SrīKaC. 1. 45.

**अद्भुतश्री** ( adbhuta-śrī ) *adj.* possessing marvellous glory or splendour अद्भुतश्रीर्महेन्द्रः ।... पिप्रिये MahāP. 22. 315; यस्यैश्वर्यं प्रथयति विभोः कर्तृरित्यद्भुतश्रीर्भान्ति लोकस्थितिषु भजते भूयसीन्धर्म्मि( भूयसीं धर्म्म )कीर्तिः EI. ii. 335. 13; नागाद्रीमोऽथोदपाद्यद्भुतश्रीः DvyāśraKā. 8. 1; पातु पश्चिमजिनः स वोऽद्भुतश्रीः ChandaśCū. iii. 59.(22); स्वैरं जातप्रचारं सकलमपि जगत्कल्पयन्नद्भुतश्रीः । ... वन्धुरिन्दीवराणाम् Acyutarā. 8. 72; *f.* supernatural or marvellous glory or splendour सनाथायाद्भुतश्रिया ।...अर्हते नमः PariPar. 1. 1; 2. 77; 3. 45.

**अद्भुतश्रीक** ( adbhutaśrī-ka ) *adj.* having marvellous splendour, possessing amazing glory तेऽपि त्वामद्भुतश्रीकं दृष्ट्वा म्लायन्ति PāṇḍaC. 8. 112.

**अद्भुतश्रुतिविस्मित** ( adbhutaśruti-vismita ) *adj.* surprised by marvellous or wonderful musical note यत्सत्यमहमप्यासमद्भुतश्रुतिविस्मितः BṛKathāSloSaṃ. 24. 47.

**अद्भुतसंकथा** ( adbhuta-saṅkathā ) *f.* wonderful story आकर्ण्याद्भुतसंकथास्तव PrabhāC. 89. 3.

**अद्भुतसंकाश** ( adbhuta-saṅkāśa ) *adj.* resembling a wonder ( i. e. wonderful ) तत्र ह्यद्भुतसंकाशो भविता सुमहोत्सवः MahāBhā. i. 175. 6; स तत्र ...गृहम् । ददर्शाद्भुतसंकाशं धनदस्य गृहाद्वरम् MahāBhā. xiii. 20. 34; यज्ञं चाद्भुतसंकाशं तदा शक्रोऽभ्यपूजयत् Rāmā. vii. 86. 19.

**अद्भुतसंगत** ( adbhuta-saṅgata ) *adj.* wonderstruck, astonished तावन्नृपः परिप्राप्तः किंचिदद्भुतसंगतः PadmP.(Ra.) 98. 26.

**अद्भुतसंगमा** ( adbhuta-saṅgamā ) *adj.* (*f.*) having wonderful association आविवेश मुखे रात्रिः सुखमद्भुतसंगमा PadmP. v. 40. 92.

**अद्भुतसंगर** ( adbhuta-saṅgara ) *m.* wonderful or amazing battle नृप्या[-] चाद्भुतसङ्गरेषु च वसाद् ( ? रसाद् ) रोमोद्गमैर्वर्म्मिणः । वर्म्माणः EI. xii. 39. 8.

**अद्भुतसंगरसागर** ( adbhutasaṅgara-sāgara ) *m.* ocean ( in the form ) of wonderful fight अद्भुतसंगरसागरमन्थनसंभवं कलयन् श्रियम् ... कुमारपालमहीपते त्वम् ... पुरुषोत्तमः ChandaśCū. 2. 341 (9)

**अद्भुतसंचार** ( adbhuta-sañcāra ) *m.* miraculous power of locomotion ऐश्वर्यौदार्यशौर्यधैर्यसौन्दर्यवीर्यता( ? ताः ) । लो( ? ल )मेताद्भुतसंचारांश्चतुर्थेनव-

पूतथीः YaśasCam. ii. 360. 16.

अद्भुतसंजातकृप (adbhuta-sañjātakṛpa) *adj.* in whom a strange (unexpected) pity has arisen इत्यद्भुतसंजातकृपेण नृपेण धनुर्दाणभङ्गमङ्गीकृत्य PrabaCin. 37. 23.

अद्भुतसंज्ञ (adbhuta-sañjña) *adj.* (a sentiment) called Marvellous बीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः NāṭyaSa. 6. 16 = KāvyPra. 98. 6.

अद्भुतसंज्ञक (adbhutasañjña-ka) *adj.* (a sentiment) called Marvellous मङ्गलो मण्ठको ज्ञेयो रसे चाद्भुतसंज्ञके SārṅgaPa. 2003.

अद्भुतसत्त्वसिन्धु (adbhuta-sattvasindhu) *m.* I wonderful ocean of nobility (i. e. Viṣṇu) अहो महात्मा सुकृती जगत्सु जातस्त्वमेवाद्भुतसत्त्वसिन्धुः DaśāvaC. 5. 197; II (adbhutasattva-sindhu) an ocean (full) of wonderful creatures, DaśāvaC. 5. 197.

अद्भुतसंदर्श (adbhuta-sandarśa) *m.* wonderful or extraordinary sight संभ्रमाद्भुतसंदर्शे मुहुर्मुहुरवेक्षणे: NāṭyaSa. 12. 71 (p. 181)

अद्भुतसभा (adbhuta-sabhā) *f.* wonderful assembly विचित्रा सा दृष्टा नृपतितनयेनाद्भुतसभा ManoDū. 16.

अद्भुतसमाकार (adbhuta-samākāra) *adj.* having an astonishing form तत्राद्भुतसमाकारः राक्षसः प्रत्यदृश्यत AdhyāRā. iii. 9. 2.

अद्भुतसमारम्भ (adbhuta-samārambha) *adj.* full of astonishing activities बभूव महानद्भुतसमारम्भो मृगयासंरम्भः UdaySuKa. 44. 7.

अद्भुतसमृद्धि (adbhuta-samṛddhi) *adj.* having astonishing abundance किमत्यन्तमद्भुतसमृद्धिना सौन्दर्येण सारेयमित्यात्मनो रूपप्रसिद्धयपगमक्षयादपह्नवार्थमपसारिता विद्याधरीभिः UdaySuKa. 106. 5.

अद्भुतसंपद् (adbhuta-sampad) *adj.* having wonderful power अश्मा हेम जलं मुक्ता द्रुमो वह्निः क्षितिर्मणिः । तत्तद्धेतुतया भावा भवन्त्यद्भुतसंपदः YaśasCam. ii. 277. 22.

अद्भुतसंप्राप्ति (adbhuta-samprāpti) *f.* appearence of a wonder or miracle (a *sandhyaṅga* called *Upagūhana*) तद्भवेदुपगूहनं यत्स्यादद्भुतसंप्राप्तिः SāhiDa. 320. 16.

अद्भुतसंभव (adbhuta-sambhava) *adj.* I having a wonderful birth or origin भगवन् अद्भुतसंभव एष व्यासः पाराशर्योऽभिवादयते BālBhā. 1. 14 (4); II born of wonder स्तम्भो हर्षभयामर्षविषादाद्भुतसंभवः RasāSu. 89. 7 (1. 302)

अद्भुतसंभावना (adbhuta-sambhāvanā) *f.* consideration as a wonderful thing किं पुनरित्थमद्भुतसंभावनया सुकृती सुदृशा कृतार्थीक्रियते SamudraMa. 2. 3 (5)

अद्भुतसंभ्रम (adbhuta-sambhrama) *m.* wonderful confusion तेऽभिदधुरिहाद्भुतसंभ्रमेण तौ च PrabhāC. 67. 17.

अद्भुतसंमद (adbhuta-sammada) *adj.* one whose ecstasy is marvellous रक्षोनाथागमे भक्तैः पौरैरद्भुतसम्मदैः । अत्यन्तमधिकां कुर्वन् शोभाम् PadmP.(Ra.) 8. 513.

अद्भुतसरसी (adbhuta-sarasī) *f.* a miraculous lake कमलति वदनं यस्याम् ... अद्भुतसरसीव सा बाला RasGaṅ. 241. 8.

अद्भुतसर्ववेश (adbhuta-sarvaveśa) *adj.* whose entire dress is wonderful or curious गुहान्तरे ... कश्चिन्मुनिरत्र दृष्टः ... अद्भुतसर्ववेशः SivaP. ii. (5) 44. 41 (272B. 12)

अद्भुतसामर्थ्य (adbhuta-sāmarthya) *n.* wonderful power इत्यमद्भुतसामर्थ्यवर्णनात् तोषितो नृपः PrabhāC. 157. 27.

अद्भुतसाहस (adbhuta-sāhasa) *adj.* performing wonderful feats मुञ्च मुञ्चेति प्रोचुस्तं ते तदाद्भुतसाहसाः DeviBhāP. iv. 20. 73; द्वाभ्यामनेनाद्भुतसाहसेन द्वाभ्यां भुजाभ्यां बलिना निरस्तौ VikraDeC. 9. 142; 3. 68; *n.* a wonderful feat अद्भुतसाहसैकरसिकः कैर्न श्रुतो रावणः SaraKaṇṭhā. 362. 2; तवाद्भुतसाहसेनाहं परितुष्टोऽस्मि PrabaCin. 3. 7.

अद्भुतसिंह (adbhuta-siṁha) *m.* wonderful lion नमो भगवते तुभ्यम् ... हरयेऽद्भुतसिंहाय ब्रह्मणे परमात्मने BhāgP. vii. 10. 10.

अद्भुतसिद्धि (adbhuta-siddhi) *adj.* endowed with miraculous (magical) power त्वं चाद्भुतसिद्धिः श्रूयसे Pañcā. 264. 15; *f.* wonderful achievement विनयादिगुणा लोकेऽप्येवमद्भुतसिद्धये PārśvC. 3. 1032.

अद्भुतसुगन्धवत्त्व (adbhutasugandhavat-tva) *n.* the state of having a wonderful fragrance (देवताप्रसादलक्षणानि वक्ष्यामः) अद्भुतसुगन्धवत्त्वम् PārāSū. 85. 13.

अद्भुतसुन्दर (adbhuta-sundara) *adj.* wonderfully beautiful रूपमद्भुतसुन्दरं ददर्श ... विश्वपालकः SivaP. ii. (1) 8. 28 (46B. 13); सुनुरद्भुतसुन्दरोऽजनि ... तवायम् StavMā. 261. 22.

अद्भुतसूति (adbhuta-sūti) *adj.* of miraculous birth आर्ये सेयमद्भुतसूतिरायां MahāvīC. 1. 20 (2)

अद्भुतसेनान्युद्भव (adbhutasenāny-udbhava) *m.* birth of a wonderful general अद्भुतसेनान्युद्भवो जात इत्यैव Manmatho. 4. 27 (427. 4)

अद्भुतसोपान (adbhuta-sopāna) *adj.* having a wonderful stair-case तत्रास्ते मन्दिरं परम् । चित्रमद्भुतसोपानं वितानशयनाशनैः । विराजितम् ĀdiP. 13. 81.

अद्भुतसौन्दर्या (adbhuta-saundaryā) *adj.* (*f.*) of wonderful beauty तां दृष्ट्वाद्भुतसौन्दर्यां ... आदिलक्ष्मीमिति ख्याताम् ... अस्तौषीत्पूर्णभक्तिमान् Brahmāṇḍ P. iii. 39. 20.

अद्भुतसौभाग्य (adbhuta-saubhāgya) *adj.* of wonderful fortune भूपमद्भुतसौभाग्यं श्रीवंद्धरमसाभजत् RājTa.(Ka.) 3. 126.

अद्भुतसौरभ (adbhuta-saurabha) *n.* wonderful (divine) fragrance घ्रात्वाप्यद्भुतसौरभोरुलहरीः कल्पद्रुमानेव यद् वेगाद्धावति ... तत्कोऽयमिन्दिन्दिरः SaduktiKa. 246. 3.

अद्भुतस्थान (adbhuta-sthāna) *n.* matter of wonder or surprise आश्चर्यभूत इति । कथमेष निबद्ध इत्यद्भुतस्थानम् Loc. 86. 19 (*on* 2. 17)

अद्भुतस्थिति (adbhuta-sthiti) *adj.* possessing a wonderful state or nature द्वितयात्मतामुपगताद्भुतस्थितिः सकलां प्रबोधयति तां तु तावकी HarVi. 6. 129; तामद्भुतस्थितिमहं सदके: श्रयामि YaśasCam. ii. 401. 5; गोपिकामिरपि ... वद्ध एव यदि मुक्तिविधाता । अद्भुतस्थितिरनान्तरबाह्यः सन्नमस्तु समयोऽयमपूर्वः Yādavā. 21. 16.

अद्भुतस्थितिमत् (adbhutasthiti-ma(n)t) *adj.* whose condition or state is wonderful यत्साद्भुतस्थितिमतः सुरकुञ्जरस्य SrīKaC. 5. 13.

अद्भुतहेतु (adbhuta-hetu) *adj.* causing wonder (अगस्त्यः) चचाराद्भुतहेतूनि तीर्थान्यायतनानि च BrahmāṇḍP. iii. 5. 4; मुनिः ... भवान्तरितं समीक्ष्य पृथ्वीपतेः प्रसभमद्भुतहेतुवृत्तम् MatsyaP. 100. 11; नृणामद्भुतहेतूनां विभवानां समुद्भवम् PadmP.(Ra.) 14. 124.

अद्भुतस्रष्टृ (adbhuta-sraṣṭṛ) *adj.* creator of wonders (said of a poet) त्र(?त्र)ह्याद्वैतविदामुदाहरणभूरद्भुतविद्याद्भुतस्रष्टा ... (अ)यमवनौ सर्वज्ञलीलायते EI. vi. 206. 14.

अद्भुतस्वन (adbhuta-svana) *m.* epithet of Siva (*lit.* having a wonderful voice), Sārārtha. on TrikāSe. i. 1. 45.

अद्भुतस्वना (adbhuta-svanā) *adj.* (*f.*) having a wonderful sound अद्भुतस्वनाम् । स विरल्लालयन् घण्टाम् ... अवादयत् TriṣaSaPuC. i. 2. 341.

अद्भुतस्वपरीणाहसंपद् (adbhutasvaparīṇāha-sampad) *f.* wealth of one's wonderful circumference अद्भुतस्वपरीणाहसंपदा मुदितैरिव । ... पनसैरुपशोभितम् (गिरिम्) TriṣaSaPuC. i. 6. 406.

अद्भुतस्वर (adbhuta-svara) *adj.* of wonderful voice सातिमीतात्रवीत्कोऽसि कूपान्तःस्थोऽद्भुतस्वरः VāmaP. 91. 54.

अद्भुतहर्म्यक (adbhuta-harmyaka) *n.* a type of building called *adbhuta* शिखामानं सपादांशं कुर्यादद्भुतहर्म्यके SilpaRa. i. 37. 56.

अद्भुतहर्ष (adbhuta-harṣa) *m.* wonderful joy सर्वेश्वरस्याद्भुतहर्षहेतोर्योगो वियोगोऽपि बभूव यस्मात् HariVi. 4. 47; अद्भुतहर्षगद्गदगिरो गायन्ति यस्य ... विस्फूर्जितं गुर्जराः SaraKaṇṭhā. 695. 9.

अद्भुतहर्षवर्ष (adbhutaharṣa-varṣa) *m. n.* shower of wonderful delight तस्यानुजो विजयते ... सारस्वतामृतकृताद्भुतहर्षवर्षः EI. viii. 209. 7.

अद्भुता (adbhutā) *f.* I name of a particular glance (*dṛṣṭi* or *rasadṛṣṭi*) suitable for the creation of *adbhutarasa* कान्ता भयानका हास्या करुणा चाद्भुता तथा । रौद्री वीरा च बीभत्सा विज्ञेया रसदृष्टयः NāṭyaSa. 8. 41; या त्वाकुञ्चितपक्ष्माग्रा साश्चर्योद्वृत्ततारका । सौम्या विकसितान्ता च साद्भुता दृष्टिरुच्यते NāṭyaSa. 8. 51; ViṣṇuDhaP. iii. 25. 1; प्रसन्ना स्निग्धशुक्लांशान्तर्वहिर्गामितारका । ईषत्कुञ्चितपक्ष्माग्राद्भुतापाङ्गविकासिनी । इत्यद्भुता SaṁgiRa. iv. 139. 5 (7. 393); NṛtyaRa. 2. 30; रसमेदाद्दष्टया रसदृष्टिः । कान्ता हास्या ... बीभत्सा अद्भुता चेति RasTa. 166. 8 (8); BhāvPra.(Sa.) 125. 19 (5); Nṛtya. 426; 440; 442; अन्तर्बहिर्गामिकनीनिकेषन्मीलत्पुटापाङ्गविकाशिनी च । प्रसन्नशुक्लांशविशुद्धधिष्ण्याद्भुता स्मृता दृष्टिरियं पुराणैः NṛtyaK. i. 3. 30; i. 3. 7; 2 name of one of the eight Nāyikās or Tantric deities in the northern direction ऋद्धिर्लक्ष्मीस्तथा तुष्टिः पुष्टिः कीर्तिर्धनेश्वरी । अद्भुता च मदा चाष्टौ कौबेर्यो नायिकाः ĪśānSiPa. ii. 55. 82; 3 name of one of the three *gatis* or states of the goddess Tārikā in her gross (*sthūla*) aspect कालपावकतेजोभिः स्थूला स्थूलमयाद्भुता । कथिता गतयस्तिस्रः स्थूलया मम वासव LakṣmīT. 32. 11.

अद्भुतांशु (adbhutāṁśu) *adj.* having wonderful rays राज्ञाद्भुतांशौ स्वकीयरत्नराशौ तानि संकीर्य ... अभाणीत् YaśasCam. ii. 347. 26.

